# ŚRĪ-MAHĀ-BHĀRATA-
# TĀTPARYA-NIRṆAYA

Of ŚRĪ ĀNANDA-TĪRTHA-BHAGAVAT-PĀDA

[PART: TWO]

**Editor :**
**Vidyāratnākara**
**Bannanje Govindācārya**

**Publishers:**
**Tatva-Saṁśodhana-Saṁsat**
**Udupi (2009)**

श्रीमदानन्दतीर्थभगवत्पादविरचितः

# श्रीमहाभारततात्पर्य्यनिण्णयः

[श्रीहृषीकेशतीर्थलिखितमूलकोशानुसारेण पाठान्तरटिप्पण्यादिना परिशोधितः पाठः]

श्रीवेदाङ्गतीर्थभट्टारककृतया तात्पर्य्यदीपिकया

आचार्य्यगोविन्दकृतया निण्णयभावचन्द्रिकया च समलङ्कृतः

**द्वितीयो भागः**
**अद्ध्यायाः १९–३२**

**सम्पादकः**
आचार्य्यगोविन्दो बन्नञ्जेपदोपाह्वः

**प्रकाशनी**
तत्वसंशोधनसंसत्
विद्यामान्यप्रकाशनम्
श्रीहृषीकेशतीर्थसंस्थानम्, रजतपीठपुरम् (उडुपि)

ŚRĪ-MAHĀ-BHĀRATA-TĀTPARYA-NIRṆAYA of Śrī Ānanda-Tīrtha-Bhagavat-pāda
with Tātparya-dīpikā of Śrī Vedāṅga-Tīrtha-Bhaṭṭāraka and
Nirṇaya-Bhāva-Candrikā of Bannanje Govindācārya

Second part 19-32 Adhyāyas

Edited by : Vidyāratnākara Bannanje Govindācārya

Published by : Tatva-Saṁśodhana-Saṁsat
Śrī Vidyāmānya Prakāśana
Śrī Hṛṣīkeśa-Tīrtha-Saṁsthānam,
(Śrī Palimāru Maṭha) Udupi,
Karnataka, (India)
Tel. no: 0820-2523402



I Edition : 2009

Copies : 1000

Pages : 60+840

Price : Rs-750 $ 50

ISBN : 978-81-909776-1-6

Cover design : K.M. Sheshagiri

Typeset : Kaddi S. Badarinarayanachar
Poornaprajna vidyapeetha
E-Mail : bnkaddiGhgmail.com

Printed at : Rajprakash Prints
Chamarajapet, Bengaluru-18



प्रणतवान् प्राणिनां प्राणभूतं
प्रणतिभिः प्रीणये पूर्णबोधम् ॥

# भूमिका.....

अवसितं पूर्वार्धम् । धर्मराजस्य यौवराज्याभिषेकपर्यन्ता कथा गता । भारतभूमिभागे भीमार्जुनयोर्दिग्विजयकथा च । धर्मराजस्य स्वाराज्यम्, भीमार्जुनयोर्दशदिग्विजयश्चोत्तरार्धे निरूप्येते । साधकेशस्य प्राणस्य उपसाधकानां च गरुडशेषरुद्राणां मार्गदर्शनेन धर्मस्य पन्थानं पततां स्वर्गराज्यविजयोऽयम् । कालमानी जीवकलामानी च संवत्सरपुरुषः प्राणः । षोडशी हि कला जीवस्वरूपम् । युक्तं तस्य साधकेशत्वम् । गरुडो वेदमानी वेदपुरुषः । पञ्चरात्रमानी छन्दःपुरुषः शेषः । शरीरमानी शरीरपुरुषः शिवः । अन्नमय-प्राणमयमनोमयकोशमानिन इत्येतत् । तेन युक्तं तेषामुपसाधकत्वम् । युक्तं च साधकानामुपकारकत्वम् । एवमध्यात्मनिष्ठं हि सर्वमपि भारतम् ॥

अवसित आऽष्टादशाध्यायान्तो ग्रन्थभागः । अष्टादशेति भारतसङ्ख्या । भारतीयतत्वज्ञानसङ्ख्या । धर्मः, भक्त्यादिदशकम्, श्रवणादित्रिकम्, शीलं विनयश्चेति षोडश मननीयान् साधकस्यान्तरङ्गधर्मान् पाण्डवाः पञ्च प्रतिनिदधते । सप्तदशी वेदविद्या द्रौपदी । अष्टादशो वेदवेद्यो नारायणः । अत्रावसितं वक्तव्य-सर्वस्वम् । एतावानेव हि तत्ववादो नाम । अत एवाष्टादशपर्वकं भारतम् । अत एवाष्टादशाध्यायिनी भगवद्गीता । एतदनुसन्धानायैवात्रापि तात्पर्यनिर्णयस्याष्टादशाध्यायाः पूर्वार्धतया न्यबध्यन्त ॥

अथ चैकोनविंशादा द्वात्रिंशमध्यायं समग्रो ग्रन्थो द्वितीयभागेऽस्मिन् सम्पुटितः । संहत्य चतुर्दशा-ध्यायाः । चतुर्दशेति च सर्वग्रासिनी सङ्ख्या । चतुर्दश लोका भवन्ति । चतुर्दश विद्यास्थानानि भवन्ति । चतुर्मूर्तिर्भगवान् दशावतारवान् भवति । चत्वारो वेदा दशभिर्भक्त्यादिभिरनुगन्तव्या भवन्ति । वराहश्च चतुर्दशाक्षरमन्त्रोपास्यः । सङ्ख्यया सङ्ख्यावान् स्मर्यत इति सङ्ख्यावन्तो मन्यन्ते ॥

द्वात्रिंशदिति च मन्त्रसङ्ख्या । महाभारते द्वात्रिंशल्लक्षमितान्यक्षराणि भवन्तीति सम्प्रदायविद आम-नन्ति । तानि भगवतो द्वात्रिंशल्लक्षनामानि भवन्ति । तदिदमुपरिचरादित्वं भारतस्य । द्वात्रिंशदक्षराऽनुष्टुप्

भवति । नरसिंहमन्त्रश्चाऽनुष्टुभः । तेन नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः संस्मृतो भवति । अपिच चतुर्विंशत्यक्षरा गायत्री, नरायणाष्टाक्षरश्चानुसंहितौ भवतः । तदिदं साङ्ख्यविज्ञानम् ॥

## प्रतनमपि नूतनम्

मूलग्रन्थं तद्व्याख्याने चागूर्य यद् वक्तव्यं तत् प्रथमभागस्य भूमिकायामेव सविस्तरं प्रास्ताविष्महि । अथैतत्सम्पुटमागूर्य यत्किञ्चिद् विवक्षितं तदिह प्रस्तुवीमहे ॥

ग्रन्थान्ते काचनापूर्वा मीमांसा ग्रथिता– प्रत्नप्रयोगमीमांसेति । शृणुमः कर्ममीमांसाम्, शृणुमो देवमीमांसाम्, शृणुमो ब्रह्ममीमांसाम् । अथ केयमपूर्वा प्रत्नप्रयोगमीमांसा नाम? सेयं शब्दमीमांसा भवति । प्रयोगाः प्रतनाः । मीमांसा तु नूतना । कुतोऽयं नूतनोऽवतारः? प्रतनैरकृत इति । शब्दशुद्धिरनेनावधृता भवतीति । सत्यां हि शब्दशुद्धावर्थशुद्धिः पादं प्रसारयति ॥

अशुद्धमेव पाठं क्रियासमभिहारेणाऽम्रेडयन् शुद्धमर्थं कथमधीरधीरधिजिगमिषति? अधिजिगांसते वा? नूनं शोचनीयः स भवति योऽपपाठमेव स्वाद्विव स्वदते चुक्रुचुक्रुचुहूचूहू इति । पिप्पलादोऽयम् ॥

अहो, अपपाठगर्ते लुठन्तो दुराग्रहग्राहैर्गृहीतचरणाः कृतरणा अप्यशक्योत्तरणा अपारयन्तः किमपिकिमपि रटन्ति । सप्तमरसायितं तेषां परिशुद्धार्थावधारणम् ॥

परिशुद्धपाठावधारणे च पुनरेताः समस्या उद्भवन्ति– भगवत्पादप्रयोगाः प्रचलितेषु व्याकरणेष्वधीतिनामपि कृतिनामसंस्तुताः । तत्र केचित् समशेरत– किमयं लिपिकृतां प्रमादः, उताहो व्याकरणान्तरसिद्धः साधुः प्रयोग इति । अपरे व्यभ्राम्यन्– अपाणिनीयत्वादसाधव एवैवंविधाः प्रयोगा इति ॥

ते बोधितव्या भवन्ति– साधवः शब्दा द्विविधा भवन्ति पाणिनीया अपाणिनीयाश्चेतीति । पाणिनीयाः साधव इत्ययोगव्यवच्छेदः । नान्ययोगव्यवच्छेद इति ॥

अथ केचिदाक्षते– ऋषयः पुनराद्या वल्मीक्याद्याश्छान्दसानि पदानि प्रयुयुजिरे । तदर्थमेव पाणिनिरपि क्रियासमभिहारेण **'छन्दसि बहुलम्'** इति जुघोष । तेनेदृशाः प्रयोगाश्छान्दसा इत्यार्षा इत्येतेषां साधुत्वमनुमन्तव्यम् । नियोगपर्यनुयोगानर्हा हि ते वश्यवाचो महान्तः । तेषां प्रयोगानाक्षेप्तुं के वयमिति ॥

छान्दसानि पदानीति, आर्षाणि पदानीति किमुक्तं भवति? छन्दस्सु दृष्टप्रयोगाणि पदानि छान्दसानि । ऋषिभिः प्रयुक्तानि पदान्यार्षाणीति । ननु भोः, वस्तुस्थितिकथनमेतत् । न कारणकथनम् । वयं तु कारणपृच्छाः, केन कारणेनैतादृशानां पदानां साधुत्वमब्रूथा इति ॥

लौकिकैरप्रयुज्यमाना अथापि साधवः शब्दा इति किलोक्तं भवति । अथच प्रचलितैर्व्याकरणैरविहिता अपि प्रतनव्याकरणविहिता इति ते साधवः शब्दा इति किल निष्पिण्डितोऽर्थः । लौकिका अनधिगत-प्रतनव्याकरणास्तादृशानि पदानि प्रयोक्तुं न प्रभवन्तीति स्वरसम् ॥

वेदविदस्तु पूर्वे महर्षयः प्रतनं शब्दानुशासनमधिजगिरे । अधिगत्य च प्रायुञ्जत कुर्मीत्यादीनि पदानि । शब्दजलधिपारदृश्वनां परावरविदां सर्वमिदं शोभते । तदिदं हंसकाकीयम् ॥

प्रयोगादर्शनं नाम न दोषः । उक्तं किल यास्केन–**'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति'** इति । लौकिकैर्न प्रायोजीति लोके न दृश्यते । मा लौकिकैः प्रायोजि । मा च लोके दर्शि । परमवैदिको भगवत्पादः किमिति न प्रयुञ्जीत? किं तेनापि, शब्दाह्वये ज्योतिषि सदा जागृतेनापि, तमसि जङ्घन्यमानो लोकोऽनुसर्तव्यः?

अपिच वैयाकरणा अप्यपशब्दान् पठन्ति । यथा सङ्खचमिति, बाहुशालीति । कोशकारा अप्यपशब्दान् पठन्ति । ते हि वैयाकरणदर्शितेन पथा चरन्तः स्खलन्ति । यथा बालपत्त्रां गायत्रीं भ्रान्त्या बालपुत्रामाहामरसिंहः–**'गायत्री बालतनया'** इति । यथा वा रक्ताम्भोजं पुण्डरीकं सिताम्भोजमाह–**'पुण्डरीकं सिताम्भोजम्'** इति ॥

तदिदमिह पर्यवसीयते– नहि परिणतप्रज्ञाः शब्दब्रह्मविदः कवयः व्याकरणमादृत्य, कोशवचनानि वाऽऽधृत्य साधूनि पदान्यन्विष्यान्विष्य प्रयुञ्जते । किन्तु यैस्तानि प्रयुक्तानि, यानि च तन्मुखोद्गीर्णानि तानि साधुपदानि भवन्ति । तेन साधुत्वं महत्प्रयोगव्याप्यं च व्यापकं च । तेनेदमनुमीयते–साधवोऽमी शब्दाः, महद्भिः प्रयुक्तत्वादिति ॥

अपिच येषां गीर्वाणवाणी परकीया ते व्याकरणमधीत्य महता प्रयत्नेनाम्लेच्छितमनपशब्दितं भाषितु-मीहन्ते । येषां पुनरियं स्वभाषा ते न व्याकरणकोशपुच्छावलम्बिनः । किन्तु तत्पृष्ठगामिनो वैयाकरणा नैघण्टुकाश्च भवन्ति । नहि कस्तूरी स्वामोदाय गन्धद्रव्यान्तरं श्रयते ॥

नहि कोऽपि कोशव्याकरणादीन्यधीत्यानुसृत्य वा स्वमातृभाषां भाषते । माता वदति । श्रावंश्रावं बालोऽपि वदति । ततः पण्डिता मा तावदुच्छृङ्खलं भाषा वृधदिति तां व्याकरणेन बध्नन्ति ॥

अतः प्रतनैः प्रयुक्तानां पदरूपाणां समुद्राङ्कनं साधुताबोधाय जिज्ञासूनां किमपि शब्दरूपानुशासन-मपेक्षितमासीत् । तेन बहोः कालान्मम मनस्यासीत्– किमपि नूतनं प्रतनप्रयोगपरिचायकं शब्दानुशासनं रचनीयमिति । महाभारततात्पर्यनिर्णयस्य टीकाया निर्णयभावचन्द्रिकाया रचनावसरे सा स्पृहा निरन्तरमिव मां बबाधे ॥

तेन स्वान्तर्मोदाय सूत्रप्रणयनसाहसे प्रावर्तिषि । साशङ्कं प्रवृत्तम् । सविस्मयमहो समापितम् । व्युत्पित्समानानां किञ्चिदिवोपयुक्तं स्यादित्याशया तदपि ग्रन्थान्ते परिशिष्टाङ्गतया न्यवेश्यत ॥

अन्यच्चेदं कारणमिहाऽविष्करणीयम् । केचिदज्ञातवैदिकव्याकरणप्रक्रियाः पण्डितास्तत्ववादप्रद्वेषमूलयाऽसूयया भगवत्पादप्रयोगान् परिहसन्ति स्म– किंव्याकरणो भवदाचार्य इति । एवमपलपतामलपनमेवोत्तरमासीत् प्रियतत्ववादानां तरुणपण्डितानाम् । तेन बहवो बुभुत्समानाः मामन्वरुत्सत– एवमपलपतां लपनमुद्रणाय कश्चन प्रबन्धो विरच्यतामिति ॥

एवं विनेयवशंवदतया मया प्राणायिषतेमानि सूत्राणि । एवमेषा बहूनां प्रीतिवर्षिणी वाञ्छा मम साहसदहनस्य हैयङ्गवीनमहौषीत् । तत्फलतया प्रत्नप्रयोगमीमांसा प्रादुर्बभूव ॥

ननु सत्यं सूत्राणि प्रणीतानि । तावता न किमपि साधितं भवति, सूत्राणि प्राणैषमित्यात्मसम्भावना-मृते । यतो यस्यकस्याप्यपशब्दस्य शक्यं सूत्राणि प्रणीय साधुता साधयितुम् । अयि विशयविषविदूषितस्वान्त पूर्वपक्षिन्, स्मर पूर्वमुक्तस्य । तदा नैवमनुयुक्षीष्ठाः । नह्यसिद्धानां पदानां सूत्रेण साधुता साध्यते । किन्तु सिद्धानाम्, क्वचित् तत्समानयोगक्षेमाणां च केवलं व्याकरणप्रक्रियया रूपनिष्पत्तिप्रकारः प्रदर्श्यत इत्यलम् ॥



तत उपरि चावतारमीमांसा भवति । येये देवा येनयेन रूपेण भुवमलञ्चक्रुरिति । येये यत्राऽविष्टा इति । अथच येये पुनरसुरा भुवोऽभारायन्तेति । तन्निरूपणाय चेयं श्लोकमयी मीमांसा ॥

## उपलब्धमसङ्गतम्

अत्र चेदं वक्तव्यं भवति । सम्प्रत्युपलभ्यते कश्चन ग्रन्थः–अंशावतारनिर्णय इति । यं बहवो मोहाद् बभ्रमुः–लिकुचान्वयस्य नारायणपण्डितस्य कृतिरिति । प्रमाद एवायम् । नेयं लिकुचान्वयकृतिः । कस्यचिदप्रबुद्धस्य नारायणाख्यस्य निबन्धोऽयम् ॥

अत्र सन्ति पददोषाः, सन्त्यर्थदोषाः, अस्ति च्छन्दोभङ्गः, अस्ति पुनरुक्तिः, अस्ति च व्यर्थपदता ॥

तथाहि शृङ्गग्राहिकया निदर्शनार्थं केचन दोषाः प्रस्तूयन्ते । तत्र तावत् पददोषाः–**'अभिमन्युर्बुधः प्रोक्तो चन्द्रशक्राश्विनोंऽशकः'** इति । नैवं पदज्ञाः प्रयुञ्जते । **'प्रोक्तश्चन्द्रशक्राश्विनामंशकाः'** इति वक्तव्यम् । कथञ्चिन्मध्यमपदलोपेऽपि–**'अश्विनोरंशकः'** इति वक्तव्यम् ॥

एवमिन्द्रसेना निरूप्यते–**'श्यामलोषाशचीयुक्ता भारती सा प्रकीर्तिता'** इति । अश्विभार्या उषाः । उषा त्वनिरुद्धभार्या । कथमिन्द्रसेना उषायुक्ता स्यात्? **'उषःशचीयुक्ता'** इति वक्तव्यम् । एतेन **'द्रौपदी भारती प्रोक्ता श्यामलोषादिभिर्युता'** इत्युपरितनवचनं च व्याख्यातम् ॥

अन्यच्च–**'उत्तमौजार्यमावेशयुक्तः'** इति । **'उत्तमौजा अर्यमावेशयुक्तः'** इति वक्तव्यम् । **'शैब्यश्च ऋभुदेवता'** इति च नातीव स्वरसम् । **'शैब्यश्चर्भुदेवता'** इति तु युक्तम् । **'सम्पातिश्चैव श्वेतश्च'** इत्यत्रापि **'सम्पाती चैव श्वेतश्च'** इति साधुः पाठः । स्यादपि लिपिकृत्प्रमादः । सम्पादकप्रमादो वा । छन्दस्तु कुप्यति ॥

अन्येच्चेदं पठ्यते–**'चित्रसेनो धार्तराष्ट्रो स पूर्वं खरराक्षसः'** इति । नूनमयं संशोधकदोष इत्यवज्ञायेत । नहि हठादाकृष्टानां कतिपयपदानां रचयिता कविरप्येवं सन्धिज्ञानविधुरो भवति । एवं **'द्रुपदस्य पुरा प्रोक्तो स हुहूर्नाम गायकः'** इति चोक्तसमानयोगक्षेमम् ॥

अथार्थदोषाः केचन–**'आरुणी विदुरस्त्री तु शूराच्छूद्रयामिहाभवत्'** इति वचनमंशावतारे पठ्यते । अत्रावतारप्रस्ताव एव नास्तीत्यवक्तव्यमेतत् । तत उपरि–**'कृतवर्मा च हार्दिक्यो हृदिकस्य च पौत्रकः'** इति पठ्यते । कृतवर्मा हि हृदिकस्य पुत्रः । कथं स **'हृदिकस्य च पौत्रकः'**? अथोच्येत–प्रमादपतितमिदम् । **'हृदिकस्य तु पुत्रकः'** इत्येव मौलः पाठ इति । तदपि दुराशामात्रम् । हार्दिक्य इति च स एवार्थः । किमिति वृथा पुनराम्रेड्यते?

अन्यच्चेदं पठ्यते–**'चन्द्रिका भीमभार्या या भारती सा प्रकीर्तिता'** इति । अयि तत्रभवन्, केयं चन्द्रिका? या चन्द्रा नाम भारती पठ्यते सा न भीमभार्या । या भीमभार्याः श्रुतास्तासु काऽपि न चन्द्रिका । अद्भुतमिदमाविष्करणम् ॥

अपरं चेदमर्थदुष्टं पद्यम्–**'द्रुपदश्च पुरा प्रोक्तो (?क्तः) स हुहूर्नाम गायकः । विरिश्चेरावहाख्यस्य मरुदंशयुतो बली'** इति । अत्र पदसन्धिदोषः पूर्वमुक्तः । अर्थदोषोऽपि भवति । विरिश्चगायकस्य नाम 'हहू' इति । न हुहूरिति । आस्तां तत् । इदमपि प्राचीनं पाठान्तरमिति यथाकथा च सङ्गम्येत । गायक इति पूर्वार्धे, **'विरिश्चेरावहाख्यस्य'** इत्यपार्थप्रतीतिजनकं पदद्वयमुत्तरार्ध इति बालिशयस्य परा काष्ठा । न हि पदविदामीदृशी भणितिभङ्गी भवति । असह्यमिदं काव्यमर्यादाविदां विदुषाम् । अपरं चेदं पश्यत– **'आवहाख्यस्य मरुदंशयुतः'** अद्भुतं पदबन्धनम् । **'मरुतोंऽशयुतः'** इति पाठः स्यादिति भाति ॥

अन्यच्चेदम्–**'दन्तवक्त्रो जयाविष्टो विडूरथ इति स्मृतः'** इति । असङ्गतमनन्वितं पद्यम् । दन्तवक्त्र इति चापपाठः । मुद्रणदोषः स्यात् । अन्वयस्तु दुरन्वयः । मध्ये पङ्क्तिपातः स्यादिति सम्भाव्यते । दन्तवक्रो न विडूरथः । किन्तु विडूरथाग्रजः ॥

अपरं च–**'नीलो नाम कपिर्हरिः'** इति । किमुक्तं भवति? **'कपिर्नीलस्तु पावकः'** इति वक्तव्यम् । हरिरिति तु न वह्न्यर्थं पदम्–

**'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु ।**
**सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च'** इति ।

एष्वर्थेषु नैकोऽप्यग्निः । तस्मादयुक्तमेवेदं व्याहरणम्–**'नीलो हरिः'** इति ॥

इदमन्यदसङ्गतम्–**'भीष्मकस्तु शुचिर्नाम वह्निपुत्रः प्रकीर्तितः'** इति । न भीष्मकः शुचिः । किन्तु मित्रांशः । शुचिनाम्नोऽग्निपुत्रस्याऽवेशो रुग्मिणि । तथाह्याचार्यवचनम्–

**'यः पूर्वमास दितिजो नरहेल्वलाख्यो**
**रुग्मीति नाम च बभूव स कुण्डिनेशः ।**
**भागेत एव तनयस्य स एव वह्ने-**
**र्नाम्ना शुचेः स तु पिताऽस्य हि मित्रभागः ।**
**राह्वंशयुक्–'** (१४.९०-१) इति ।

भगवत्पादवचनस्यान्वयमप्यजानन्नयं किमप्यसङ्गतं जजल्प ॥

इदं चान्यत्–**'सत्यभामासुतो भानुः सविता नाम भास्करः'** इति । नहि सविता भास्करः । किन्त्वदिति-पुत्रत्वादादित्यः । नहि द्वादशाप्यादित्या भास्कराः सूर्या वा भवन्ति । द्वादशस्वेको हि भास्करः, यं विवस्वन्तं सूर्यमाहुः । तस्मादसङ्गतमिदम् ॥

इदमपरमद्भुतम्–**'युधामन्युः पार्षतस्तु ब्रह्मावेशयुतो बली'** । अत्र भगवत्पादवचनम्–**'युधामन्यूत्तमोजसौ । धात्रर्यमावेशयुतौ विश्वावसुपरावसू'** इति । अत्र धातृशब्देन द्वादशस्वादित्येष्वेको धातृनामा निर्दिष्टः । न तु ब्रह्मा । भ्रान्तेः परा काष्ठेयम् ॥

इदमन्यत्–**'विष्वक्सेनो वायुजस्तु खेन तुल्यः प्रकीर्तितः'** इति । **'विष्वक्सेनो वायुजः खेन तुल्यः'** इत्यनुव्याख्यावचनमक्षरशोऽनुसरताऽनेन किमुक्तं भवति? नात्र तारतम्यप्रसङ्गः । किन्त्ववतारनिरूपणमिदमिति च विसस्मारायं नारायणाख्यः कविः । अन्येऽप्येतादृशाः प्रमादास्तत्रतत्र दृश्यन्ते । कियदित्युच्येत?

अन्ते पुनरिदमेकमवधानीयम् । द्रौपदेयानां नामधेयानीह पठ्यन्ते–**‘प्रतिविन्ध्यः श्रुतसेनः श्रुतकीर्तिः श्रुतायुधः । श्रुतानीकस्तु पश्चैते विश्वेदेवाः प्रकीर्तिताः’** इति । भीमात्मजः सुतसोमः । न श्रुतसेनः । नकुलात्मजः शतानीकः । न श्रुतायुधः । सहदेवजः श्रुतकर्मा । न श्रुतानीकः । अहो किमीदृशान्यप्यसङ्गतानि लिकुचान्वयः कोऽपि वदेत्? सन्त्यन्येऽपि । पर्याप्तमेतावता ॥

दृष्टा अर्थदोषाः कतिचन । छन्दोभङ्गश्च दृश्यते– **‘पाण्डुः परावहो मरुत्’** इति, **‘शतबलिः पनसश्चैव’** इति । वर्णानुक्रमभङ्गश्च द्वितीये । **‘नवा एकेनाक्षरेण’** इति च्छान्दसं समाधानं न प्रायः कवयोऽनुसरन्ति ॥

पुनरुक्तयश्चात्र भवन्ति । **‘डिभकः कैटभः प्रोक्तः’** इति प्रथममुक्त्वाऽन्ते पुनरुच्यते–**‘हंसश्च डिभकश्चैव विख्यातौ मधुकैटभौ’** इति । **‘उदानो वृष उच्यते’** इति प्रथममुक्त्वा पुनरुच्यते–**‘वृषो नाम कपिः पूर्वमुदानो मरुदुच्यते’** इति । **‘विदुरो यम उच्यते’** इति पूर्वमुक्त्वा पुनरुपसंहारे पठ्यते–**‘क्षत्ता तु विदुरः प्रोक्तः स तु पूर्वं यमः स्मृतः’** इति । क्षादिनामसङ्ग्रहचापलमिदमिति स्फुटम् । यथाकथाच गतिकल्पनाऽन्या । सर्वथा प्रबन्धुरकौशलमिदम् ॥

व्यर्थपदता च बहुला कर्तुरपाटवं प्रकटयति–**‘स वै तु हरिपार्षदः’** इत्यादिः । शैली चेयमस्य चवैतुहिकवितामावेदयति ॥

अस्य द्विविधं मुद्रणमुपलभ्यते– एकं प्रतनम्, नूतनमपरम् । उभयमप्यपपाठतुन्दिलमसङ्गतिभिराविलं च । तेन नायं लिकुचान्वयो नारायणपण्डित इति स्फुटम् । तौळवमण्डले क्वाप्यस्याः कृतेरनुपलम्भश्चैतमर्थमवधारयति ॥

✲

तस्मादन्यैव काचित् स्फुटार्था स्फुटपदा चाऽवतारमीमांसा बहोः कालादपेक्षिताऽऽसीत् । बहवश्च जिज्ञासवस्तदर्थमन्वरुध्यन्त नः । ततोऽस्माभिर्नूतनैवावतारमीमांसा निबध्यात्र निवेशिता ॥

ततस्तारतम्यमीमांसा भवति । भगवत्पादेन मूले विक्षिप्य सङ्क्षिप्य च कथितं देवतातारतम्यम् । तत्पुनरत्रैकत्रैव सङ्गृह्य निरूपितम्, जिज्ञासूनां त्वरितं सुकरबोधं स्यादिति ॥

तत उपरि नाममीमांसा भवति । अस्मिन् ग्रन्थे कृतोल्लेखानां स्त्रीपुंसानामक्षरानुक्रमेणात्र निर्देशो भवति । ततश्च देशानां नदीपर्वतानां च नाममीमांसा । यत्र मूले तत्रतत्रोल्लिखितानां स्थलानां नदीनां पर्वतानां च मातृकानुक्रमेणोल्लेखो भवति । सूक्ष्मस्तत्परिचयश्चेति ॥

अथ च भारतखण्डस्य रेखाचित्रम्, तत्र देशविशेषाणां नदीनां च प्राचीननामानि निरदिश्यन्त । तेन महाभारतकालीनस्य भारतदेशस्य किञ्चिदिव परिचयः स्यात् । परिचयेन च प्रतनमितिहासाध्ययनं जिज्ञासूनां सुकरं स्यादिति ॥

अन्ते श्लोकार्धानुक्रमणिका भवतीति परिशिष्टविभागक्रमः । तदिदं पञ्चविभागं परिशिष्टं संशोधकानां विमर्शकानां जिज्ञासूनां चोपकारकं स्यादित्याशास्महे ॥

**–बन्नञ्जेपदोपाह्व आचार्यगोविन्दः**

यो विप्रलम्भविपरीतमतिप्रभूत-
वादान्निरस्य कृतवान् भुवि तत्ववादम् ।
सर्वेश्वरो हरिरिति प्रतिपादयन्त-
मानन्दतीर्थमुनिवर्य्यमहं नमामि ॥



कृष्णं वन्दे मन्थपाशधरं दिव्यार्भकाकृतिम् ।
शिखाबन्धत्रयोपेतं भैष्मीमध्वकरार्चितम् ॥

# एकोनविंशोऽध्यायः

**[पाण्डवराज्यलाभः]**

ॐ ॥ एवं शुभोच्चगुणवत्सु जनार्द्दनेन युक्तेषु पाण्डुषु चरत्स्वधिकं शुभानि ।
नास्तिक्यनीतिमखिलां[1] गुरुदेवतादिसत्स्वञ्जसैव जगृहुर्द्धृतराष्ट्रपुत्राः ॥ १ ॥

नाम्ना कणिङ्क[2] इति चाऽसुरको द्विजोऽभूच्छिष्यः सुरेतरगुरोः शकुनेर्गुरुः सः ।
नीतिं स कुत्सिततमां[3] धृतराष्ट्रपुत्रेष्वाधाद् रहो वचनतः शकुनेः समस्ताम् ॥ २ ॥

**ॐ ॥ गुरुदेवतादिसत्सु गुर्वादिविषये ॥ १ ॥ तेषां नास्तिक्यनीतौ को गुरुरित्यत आह– नाम्नेति । यः आसुरकः, नाम्ना कळिङ्ग इति द्विजः, सुरेतरगुरोः शिष्यः, शकुनेः गुरुः, सः शकुनेर्वचनतः रहः समस्तां सुकुत्सिततमां नीतिं धृतराष्ट्रपुत्रेषु आधात् ॥ २ ॥**

---

ॐ ॥ शुभाः स्वरूपसुखाभिव्यञ्जकाः । शु सुखं भासयन्तीति । दोषविपरीता वा । स्वरूपत उच्चाः । इतरापेक्षया उच्चाश्च पाण्डवेषु । गुणा विष्णुभक्त्त्यादयः । शुभानि लोकक्षेमकराणि स्वाभ्युदयकराणि च कर्माणि । यस्य नास्ति मतिः स नास्तिक इत्याह पाणिनिः–**'अस्ति-नास्ति-दिष्टं मतिः'** [अ.सू.४.४.६०] इति । तेन नास्तिका वैयाकरणेषु कुप्यासुरिति परस्तान्मतिं परलोकेन विशिशिषुः । तथाहि जयादित्यः–**'नहि मतिसत्तामात्रेण प्रत्यय इष्यते । किं तर्हि? परलोकोऽस्तीति यस्य मतिरस्ति स आस्तिकः । तद्विपरीतो नास्तिकः'** इति । तेन परलोकभयवैधुर्यं तन्मूलं च स्वाच्छन्द्यमिह स्वार्थैक-परता नाम नास्तिक्यमुच्यते । अञ्जसैव द्रुततरम् ॥ १ ॥ क्षुद्र आसुर आसुरकः, कुत्सितोऽसुरो वा । शुक्रस्य शिष्यः । शकुनेर्गुरुः । **'कणिकः'** इत्यौत्तराहभारतपाठः । **'कळिङ्गः'** इति दाक्षिणात्याः । उभयमप्यसाधु । **'कणिङ्कः'** इति प्रतनः पाठः । कणयति गमयतीति कणिङ्कः । कण गतौ । कणतीति वा । कण शब्दे । वाचाट इत्यर्थः । कुत्सिततमा-मिति । गुरुदेवतादिसतां निराकरणेन कुत्सिता । धर्माधर्मनिराकरणेन कुत्सिततरा । स्वार्थमात्रपरतया परदैवतद्वेषेण च कुत्सिततमा । रह आधात् एकान्ते पाठनेन निधापयामास शकुनेर्वचनत इति । भारते–**'दुर्योधनोऽथ शकुनिः**

---

१. **'–मतुलाम्'**

२. **'कलिङ्ग इति'** । **'कळिङ्ग इति'** इति कचित् । वे.ती. पाठोऽपि तथा पठ्यत उपलब्धादर्शे । प्रायो लिपिकरप्रमादः ।

३. **'सुकुत्सिततमाम्'** इति कचित् । वे.ती. पाठोऽपि तथा ।

**छद्मैव यत्र परमं न सुराश्च पूज्याः स्वार्थेन वञ्चनकृते जगतोऽखिलं च ।**
**धर्म्मादि कार्य्यमपि यस्य महोपधिः स्याच्छ्रेष्ठः स एव निखिलासुरदैत्यसङ्घात्[१] ॥ ३ ॥**

**इत्यादि कुत्सिततमां जगृहुः स्म विद्यामज्ञात एव धृतराष्ट्रमुखैः समस्तैः ।**
**तेषां स्वभावबलतो रुचिता च सैव विस्तारिता च निजबुद्धिबलादतोऽपि ॥ ४ ॥**

**दुर्नीतिस्वरूपं लेशतो दर्शयति– (छद्मेति ।) यत्र यस्यां नीतौ छद्मैव परमं परमतात्पर्यगोचरम् । सर्वप्रकारेण छद्मैव प्रतिपाद्यमिति भावः । स्वार्थेन स्वप्रयोजनत्वेन सुराश्च न पूज्याः । जगतः वञ्चनकृते अखिलं धर्मादि कार्यम् कर्त(व्यम् । यस्य) वञ्चकस्य पुंसः महोपधिः स्यात्, सः महाच्छद्मवानेव पुरुषः निखिलात् सुरदैत्यसङ्घात् श्रेष्ठ इति योजना ॥ ३ ॥ अतोऽपि गुरूक्तादपि ॥ ४–५ ॥**

---

**कर्णदुःशासनावपि'** [आ.प.१५३.४] इति पठ्यते । तेन शकुनिरपि कणिङ्कात् तदानीं पाठं जग्राहेति प्रतीयते । वस्तुतस्तु एते चत्वारो मिलित्वा कणिङ्कं निवेदयामासुः–'यया नीत्या पाण्डवानां पराजयः सुलभः स्यात् तथा धार्तराष्ट्रान् बोधय' इतीति भारतवचनार्थ इत्याशयः । शकुनिः पूर्वमेवानेन गृहीतदुर्नीतिस्तमानाययामास केवलम्, स्वाधीतं कूटनीतिशास्त्रं दुर्योधनमपि रहो ग्राहयितुम् । तमिमं भारतभावं स्फुटयितुम्–शकुनेर्वचनत इत्युक्तम् । कर्णोऽपि शकुनिमतमन्वमोदत, न स्वयं शिष्यो भूत्वा पाठं जग्राह । तदेतत्–'धृतराष्ट्रपुत्रेष्वाधात्' इति सूचितम् ॥ २ ॥ छद्मैव यत्र परमं कर्तव्यम् । परमा नीतिः । स्वार्थेन हेतुना न सुराश्च पूज्याः । केवलं जगतो वञ्चनार्थं तेन स्वलाभसाधनार्थं च अखिलमपि कार्यम् । न क्वापि कथमपि धर्मेऽधर्मे वा विश्वसेत् । केवलं धार्मिकं जगद् विश्वासयितुम्, तस्याक्ष्णि मृदं निक्षेप्तुं धर्मादिकं कार्यम् । एवं यस्य सर्वमपि कार्यं महोपधिः महत् कपटनाटकम्, स एव श्रेष्ठः पुमान् । अस्मिन् राजनीतिशास्त्रे देवेभ्यः सहजतया असुरा दैत्याश्च उत्तमाः । असुरदैत्यसङ्घादप्ययं महोपधिशीलः सर्वश्रेष्ठ इति । अथच न सुराश्च पुज्याः स्वार्थेन । जगतो वञ्चनकृते तु सुराश्च पूज्याः । अथच न सुराश्च पूज्याः स्वार्थे न । स्वार्थे स्वलाभाय सुराश्च न पूज्या इति न । किन्तु जगद्वञ्चनेन स्वार्थसाधनाय पूज्या एवेति ॥ ३ ॥ सम्प्रति भारते पठ्यते–**'कणिङ्कं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद् वचः । उत्सिक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम । तत्र मे निश्चिततमं सन्धिविग्रहकारणम् । कणिङ्क त्वं ममाऽचक्ष्व करिष्ये वचनं तव'** [आ.प.१५३.१–३] इति धृतराष्ट्रपरिप्रश्नेन प्रसन्नमनाः कणिङ्कस्तस्मा एव स्वां दुर्नीतिमुपदिदेशेति । अपपाठोऽयम् । नायं वृद्धस्य राजनीतिपाठः । किन्तु यूनः प्रवृद्धद्वेषस्य दुर्योधनस्येति साम्प्रतम् । तदनुगुणश्च प्राचीनपाठ आदर्शेषु भवति । उपरिपठितश्लोकयोः स्थाने तत्रैते श्लोका भवन्ति– **'दुर्योधनोऽथ शकुनिः कर्णो दुःशासनस्तथा । कणिङ्कमुपसङ्क्रम्य मन्त्रिणं सौबलस्य च । पप्रच्छ भरतश्रेष्ठ पाण्डवान् प्रति नैकधा । प्रवृद्धाः पाण्डवा ह्येते नित्यं तेभ्यस्त्वसाम्यहम् । तत्र मेऽपि सपक्षस्य यद् भवेत् क्षेमकारकम् । कणिङ्क तत् त्वमाचक्ष्व करिष्यामः कथं वयम् । वैशम्पायनः । सम्प्रसन्नाय तस्मै स परामृश्यार्थचिन्तया । उवाच वचनं**

---

१. **'निखिलात् सुरदैत्यसङ्घात्'** इति क्वचित् । वे.ती. पाठोऽपि तथेति भाति । **'निखिलासुरसिद्धसङ्घात्'** इति क्वचित् ।

**सम्पूर्णदुर्म्मतिरथो धृतराष्ट्रसूनुस्तातप्यमानहृदयो निखिलान्यहानि ।**
**दृष्ट्वा श्रियं परमिकां विजयं च पार्थेष्वाहेदमेत्य पितरं सह सौबलेन ॥ ५ ॥**

**ज्येष्ठस्य तेऽपि हि वयं हृदयप्रजाता[1] नार्हत्वमेव गमिता भवतैव राज्ये ।**
**भ्रातुः कनीयस उतापि हि दारजाता अन्यैश्च राज्यपदवीं भवतैव नीताः ॥ ६ ॥**

**हृदयप्रजाताः औरसाः । अन्यैः कनीयस उत कनीयसश्च भ्रातुर्दारजाताः ॥ ६ ॥**

---

**तीक्ष्णं राज्यशास्त्रनिदर्शनम्'** इति । अत आह– अज्ञात एव धृतराष्ट्रमुखैः समस्तैरिति । एतेन नीतिपाठमध्ये धृतराष्ट्रवचनत्वेन पठ्यमानम्–**'कथं सान्त्वेन दानेन भेदैर्दण्डेन वा पुनः । अमित्रः शक्यते हन्तुं तन्मे ब्रूहि यथातथम्'** [आ.प.१५३.३४] इति वचनमपि न धृतराष्ट्रवचनम् । किन्तु धार्तराष्ट्रस्येति सूचितम् । अज्ञात एव । जसः सुः । **'सुपां सु–'** [७.१.३९[ इति हि पाणिनिः । उपरि चैतादृशः प्रयोगो भवति–**'समस्त एव....चोपविविशुः सहिताः'** [१५३] इति । आचक्षते च शास्त्रविदः–**'सुप्तिङुपग्रहलिङ्गनराणाम्–'** इत्यादि । कुत्सितनीतिग्रहणे तेषामैकमत्यमेकवचनार्थः । अज्ञाते विविक्ते देश इति वा । विद्याग्रहणे समस्तैरज्ञाते सतीति वा । अतो गुरोः कणिङ्कादप्यधिकं शिष्यैर्धार्तराष्ट्रैर्विस्तारिता । ये कपटनीतौ गुरुमप्यहो अत्यशयिषत । गुरुणा यावतीं विद्यां जगृहुः, अतोऽप्यधिकमिति वा ॥ ४ ॥ अथो कणिङ्केन दुर्नीतिशिक्षणानन्तरम् । पूर्वमेव पूर्णदुर्मतिस्तदा सम्पूर्णदुर्मतिर्बभूव । सम्पूर्णता नाम पूर्णतायाः प्राकट्यम्, दुर्मतावतुलो मरणान्तो दुरभिनिवेशः, तत्रैवाऽत्मसम्भावना च । अथो इति कथान्तरारम्भे । धृतराष्ट्रसूनुरिति दुर्योधन एवोच्यते । प्रथमप्राप्तत्वात् परित्यागे कारणाभावाच्च । प्राधान्येन च व्यपदेशा भवन्ति । प्रकरणाच्चैतदवगम्यते । तावत्पर्यन्तं हृदये तातप्यमान आसीत् । तदानीं स तापोऽन्तरमिमानो बहिः पुस्फोट । निखिलान्यहानि । अत्यन्तसंयोगे द्वितीया । नक्तन्दिवमित्येतत् । परमां श्रियं विजयं च परमम् । अथच, इकारो ज्ञानवचनः । ककारश्चाऽनन्दवचनः । इकां ज्ञानानन्दमयीं श्रियम् । परं च विजयम् । पराजयासमानाधिकरणो जयो विजयः । दृष्ट्वा तातप्यमानहृदयः । एतत्कुतन्त्रसूत्रधारेण सुबलात्मजेन शकुनिना सह । वक्ष्यति हि–'आश्रित्य सौबलमतम्' इति ॥ ५ ॥ त्वं ज्येष्ठो भ्राता । पाण्डुः कनीयान् । वयं तव हृदयप्रजाताः औरसाः पुत्राः । अनेन **'अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे'** इति श्रुतिं स्मारयति । प्रजाताः दम्पत्योः प्रेमसंश्रयाज्जाताः । हृदयमिति च प्रीतिरुच्यते । हृदयेन भवतोः प्रीत्या प्रजाताः । विधिना जाताः । नत्वपुत्रस्य गतिर्नास्तीति यथाकथाच जनिताः, पाण्डुनेव पाण्डवाः । तेन ते पाण्डवा इति व्याहारमात्रम् । वयं त्वर्थतोऽपि धार्तराष्ट्राः । ते केवलं स्वदारेषु अन्यैर्जाता नत्वौरसाः । अथापि एवं ज्येष्ठसुतत्वेनौरसत्वेन चार्हतमत्वेऽपि अनर्हत्वमेव गमिता हि । तदप्यहो भवतैव साक्षाज्जनकेन । अस्माकमाधिकारिकत्वं पित्रैव वञ्चिताधिकारत्वं च जनजनितमिति हीत्यनेनाऽह । तेन लोकविरुद्धमाचरन्नाक्रोशपात्रं भवसीति पितरं कुत्सयते । अपिच ज्येष्ठस्य ज्येष्ठः पुत्रो राज्यमर्हति । ते तव भ्रातुः कनीयसः पुत्राः । अहं तु ज्येष्ठस्य ज्येष्ठः पुत्र इति स्वाशयं वयमिति

---

१. **'वयं जठरे प्रजाताः'** इति क्वचित् ।

**राज्यं महच्च समवाप्स्यति धर्म्मसूनुस्त्वत्तोऽथवाऽनुजबलात् प्रसभं वयं तु[1] ।**
**दासा भवेम निजतन्तुभिरेव साकं कुन्तीसुतस्य परतोऽपि तदन्वयस्य ॥ ७ ॥**

**नाऽत्मार्त्थमस्ति मम दुःखमथातिशुद्धलोकप्रसिद्धयशसस्तव कीर्त्तिनाशः ।**
**अस्मन्निमित्त[2] इति दुःखमतो हि सर्वेऽपीच्छाम मर्त्तुमथ नः कुरु चाप्यनुज्ञाम् ॥ ८ ॥**

**धर्मसूनुः त्वत्तः त्वत्प्रसादाद् वा, अथ अनुजबलात् प्रसभं वा, महद् राज्यं च, साम्राज्यं च समवाप्स्यति । परतोऽपि अस्मदनन्तरमपि तदन्वयस्य मदन्वयो दासो भवेत् ॥ ७ ॥ तव अस्मन्निमित्तं कीर्तिनाश इत्येव दुःखम् ॥ ८ ॥**

---

बहुवचनेन निगूह्याऽह । वस्तुतस्तु **'अस्मदो द्वयोश्च'** [अ.सू.१.२.५९] इति स्मरणात् स्वात्मानमेवाऽह वयमिति । शतं च वयं तव हृदयप्रजाताः । अस्मासु नैकमपि राज्यपदवीयोग्यं भवानमंस्तेत्यवक्षेपार्थं च बहुवचनम् । उतापि अथापि । यद्यपि ते अनर्हतमाः अथापि राज्यपदवीं नीताः । तदपि भवतैवेति पुनरुक्त्या पितुरविमृश्यकारितामवधारयति । अन्यैर्दारजाता हीति तेषामनीतिजातत्वं जानन्नपि राज्यमदा इत्यदम्यामसूयामाविष्करोति । न केवलं वयमनर्हत्वं गमिताः । ते राज्यपदवीं नीताश्चेति समुच्चये गर्हायां च चकारः ॥ ६ ॥ त्वत्तः समवाप्स्यति । योग्यतायामवमत्वेऽपि कुलवृद्धसम्मत्याऽऽप्तिः समवाप्तिः । न चेदपि अनुजबलात् प्रसभं समवाप्स्यति धर्मसूनुः । कपटोक्तिरियम् । वस्तुतस्तु हृदयप्रजाता वयमेव धर्मसूनवः । स त्वधर्मसूनुरिति दुर्योधनाशयः । अथच स धर्मसूनुः, न पाण्डुसूनुः । वयं तु, तुना शोचनीयत्वमाह, अथच वयं तु, तवौरसाः पुत्राः, नान्यजाता अपि वयमिति राजानमाक्षिपतीव । निजसन्तानैः सहैव कुन्तीसुतस्य दासा भवेम । अस्मत्परतः कुन्तीसुतात् परतश्च ॥ ७ ॥ कणिङ्कादधीतां कपटनीतिं पितर्य्येव प्रयुङ्क्ते– नाऽत्मार्थमिति । अथापि । अतिशुद्धं निरपवादं निष्कळङ्कं लोकप्रसिद्धं च यशो यस्य तव । कीर्तनात् कीर्तिः । श्रुतिपथं यातीति यशः । अस्मन्निमित्तं तव गुणान् न कीर्तयन्ति । तेन लोके विततं ते यशो विनश्यति । न ह्यकीर्तितं श्रूयते । अथ तस्मात् मर्तुमनुमतिं देहि । इच्छाम । लडर्थे लोट् । इच्छामः । तथाहि **'छन्दसि लुङ्लङ्लिटः'** [अ.सू.३.४.६] इति सूत्रव्याख्याने जयादित्यः–**'छन्दसि विषये धातुसम्बन्धे सर्वेषु कालेषु लुङ् लङ् लिटः प्रत्यया भवन्ति । अन्यतरस्यामिति वर्तते । तेनान्येऽपि लकारा यथायथं भवन्ति'** इति । अथवा, अर्थविशेषलाभाय क्वचिदविद्यमानो विसर्गः संसृज्यते । यथा शुश्रुमेति वक्तव्ये **'पश्चमं नानुशुश्रुमः'** इति प्रयुज्यते । क्वचिद् विद्यमानोऽपि लुप्यते । यथाऽत्र **'इच्छामः'** इति वक्तव्ये इच्छामेति । ननु कोऽत्रार्थविशेषोऽलाभि यस्य कृते विसर्गो व्यलोपि । शृणु । विसर्गलोपेन तस्येच्छालोपमाह । न वास्तुवीयमिच्छा । किन्तु नटनमात्रमिति । अथवा, अधीष्टार्थे लोट् । सत्कारपूर्वको व्यापारो ह्यधीष्ट उच्यते । तेन **'सामोदं मर्तुमिच्छामः'** इति लोटाऽऽह । पूर्वस्मिन्नर्थे दुर्योधनस्य दुराशयं प्रयोगविशेषेणाऽविश्चकार भगवत्पाद इत्यर्थः । अस्मिन्नर्थे दुर्योधन एव स्वकुटिलतामेवमाविश्चकारेति । यद्यपि वयं मुमूर्षवः । अथाप्यृते भवदनुज्ञाया नास्माकं जीवनं मरणं वा । अतश्च कुरु मर्तुमनुज्ञामिति वा । अत्र कुरु चेति चकारो हेत्वर्थे । अपिरन्ववसर्गे वर्तते ।

---

१. **'–स्त्वत्तोऽथचानुज–'** २. **'अस्मन्निमित्तमतिदुःख –'** । **'अस्मन्निमित्तमिति'** इति च । वे.ती. पाठोऽपि तथेति भाति ।

एवं स्वपुत्रवचनं स निशम्य राजा प्रोवाच नानुगुणमेतदहो मनस्ते ।
को नाम पाण्डुतनयेषु गुणोत्तमेषु प्रीतिं न याति निजवीर्य्यभवोच्चयेषु ॥ ९ ॥

ते हि स्वबाहुबलतोऽखिलभूपभूतिं मय्याकृषन्ति नच वः प्रतिषेधकास्ते ।
तस्माच्छमं व्रज शुभाय कुलस्य तात क्षेमाय नो भवति वो बलवद्विरोधः ॥ १० ॥

एवं ब्रुवत्यपि नृपे पुनराह पाप आश्रित्य सौबलमतं यदि नैव पार्त्थान् ।
अन्यत्र यापयसि नागपुरात् परेतान् दृष्ट्वाऽखिलानपि हि नो मुदमेहि पार्त्थैः ॥ ११ ॥

एवं निशम्य गदितं सुतहार्दपाशैराकृष्यताऽशु स नृपोऽरिधरेच्छयैव ।
प्रोवाच पुत्रमपि ते बलिनो न पार्त्थाः शक्याः पुरात् तनय यापयितुं[1] कथञ्चित् ॥ १२ ॥

**ते एतन्मनः अनुगुणं श्रेयसेऽनुकूलं न ॥९–११॥ गदितं पुत्रवचनम् । सुतहार्दपाशैः पुत्रस्नेहपाशैः ॥१२॥**

---

यथेच्छसि तथा कुर्विति कामचारा-भ्यनुज्ञानमन्ववसर्गः । सेयमस्माकमभ्यर्थना । चरमनिर्णयस्तु भवदधीन इत्यर्थः । सेयं कूटनीतेः परा काष्ठा ॥ ८ ॥ स्वपुत्रेति तस्य पुत्रे ममतातिशयमाह । स्वाभिमतं प्रकटमुवाच । त एतन्मनः तवायमाशयः न मत्पुत्रस्य तवानुगुणः । न कुलानुगुणः । नापि सतामनुगुणः । अहो कथमीदृशी बुद्धिस्ते जातेति विस्मयते । न याति न करोति । उच्चय उन्नतिः सम्पदामुपचयश्च ॥ ९ ॥ आकृषन्ति । कृषिं भ्वादावपि पठन्ति, तुदादावपि । समानोऽर्थः **'कृष विलेखने'** इति । अथापि भ्वादिमाकर्षणे प्रयुञ्जते कर्षतीति । तुदादिं कृषिकर्मणि भुवं हलेन कृष-तीति । अथाप्याङ्पूर्वः कृषतिरप्याकर्षणार्थ इति सुप्रयुक्तमाकृषन्तीति । बलवद्भिर्विरोधः वः क्षेमाय नैव भवति । अबलवद्विरोधश्च बलवद्विरोधाभावश्च नः क्षेमाय भवति । क्षेमायनः क्षेमकर इति वा । कुलस्य शुभाय उत्तरोत्तरम-भिवृद्धये, क्षेमाय विद्यमानसमृद्धिरक्षणाय च शमं व्रज । यतः बलवद्भिर्विरोधः कथञ्चिदपि ना सम्भवति इति वा ॥ १० ॥ नः परेतान् दृष्ट्वा मुदमेहि पार्थैः सह । मर्तुमनुज्ञां दत्स्व, मा च वा दिथाः । वयं तु मरिष्याम एवेत्यर्थः । विभीषिकामात्रमेतत् । जानाति किल स जाल्मः, भेष्यत्यनेन जनक इति । अथच विभीषिकान्तरं ध्वनयति–यदि पार्थानन्यत्र न यापयसि ते तर्हि बद्धमूला भवन्त्यत्रैव । ततश्च तैरेव निमित्तभूतैरस्मान् परेतान् पश्यसि । त एवास्मान् मारयेयुरित्यर्थः । ततो वरमिदानीमेव तेषामितो निर्वासनमिति । हीति निश्चितमेतदित्याह ॥ ११ ॥ प्रोवाच पुत्रमपि । अपिः समुच्चये । पुत्रं पुरोधाय शकुनिमपि प्रोवाच । पार्थास्ते बलिनः । अतो यापयितुं न शक्याः । अथ च ते अबलिनो न, येन सुकरं याप्येरन् । अथ बलिनोऽपि यापयितुं कथङ्कारं शक्या भवेयुस्तथोपायश्चिन्त्यतामिति पुत्रस्नेहेनोल्लाघयतीव । अथ च पुरा आत्तनय इति प्रतृण्णम् । पूर्वमपि तेषां

---

१. **'बलिनो हि पार्थाः शक्याः पुरात् तु नच यापयितुम्'**

इत्युक्त आह पितरं शकुनिं निरीक्ष्य सृष्टो मया विधिरिहाद्य शृणुष्व तं च ।
आसंस्त्रयोदश समा नगरं[१] प्रविष्टेष्वेतेषु तावदयमेव विधिर्म्मयेष्टः ॥ १३ ॥

द्रौणेर्हि नास्ति सदृशो बलवान् प्रतापी सोऽयं मया बहुविधैः परमैरुपायैः ।
नीतो वशं वशगतोऽस्य च मातुलेन साकं पिता तमनु चैष नदीप्रसूतः ॥ १४ ॥

एवं हि सैनिकगणा अपि दानमानैः प्रायो वशं मम गता अपि चैष कर्ण्णः ।
अस्त्रे बलेऽप्यधिक एव सुरेन्द्रसूनोर्ज्जेष्ये च मन्त्रबलतस्त्वहमेव भीमम् ॥ १५ ॥

**इह तेषां पुरान्निर्यापणविषये विधिः उपायः सृष्टः निरूपितः ॥ १३ ॥ पिता द्रोणश्च अस्य द्रौणेः मातुलेन कृपेण साकं वशं नीतः । एषः नदीप्रसूतश्च तमनु द्रोणमनु, वर्तत इति शेषः । द्रोणमनुसरतीति भावः ॥ १४ ॥ अस्त्रे बलेऽपि सुरेन्द्रसूनोरधिक एव सन् एष कर्णोऽपि वशं गतः । स पार्थं हनिष्यतीति भावः ॥ १५–१६ ॥**

---

निर्यातनार्थमात्तदुर्नय, किं शक्या आसन् यापयितुम्? न ते त्वत्तोऽबलिनः । येन त्वं तान् निर्यातयेः । अतस्ते सदा अनपार्थाः । अनपगतपरमार्थाः, अनपगतसम्पदः, अनेन पालितार्थाश्च ॥ १२ ॥ त्वया प्रणीतं प्रकरणमिदं पश्य कथमभिनेष्यामीति नेत्रान्तवीक्षणेन सूचयन्निव साकूतं शकुनिं निरीक्ष्य । गर्वनिर्भरमीक्षणं निरीक्षणम् । अथापि शकुनेः प्रतिक्रिया कीदृशी स्यादिति निरीक्षापूर्वमीक्षणं निरीक्षणम् । इह तेषां पुरादन्यत्र यापनविषये । विधिः सृष्टः चिन्तितः । तमिहाद्य त्वमपि शृणुष्व । नास्माकं केवलम् । तवाप्ययं महान् लाभः इत्यात्मनेभाषा । मयेष्टः अभिलषितः । त्वयाऽपीष्यतामिति च । तावत् सम्प्रति ॥ १३ ॥ बलं सहजम् । परावस्कन्दनचातुरी प्रतापः । परन्तपत्वमित्येतत् । अस्य पिता च अस्य वशगतः । अत एव मम वशगतश्च । अथ मातुलश्च कृपः भगिनीपतेर्भागिनेयस्य च स्नेहवशगतः । नदीप्रसूतश्च सदा तं द्रोणं तं च कृपमनुगत इति सोऽपि वशगत एव ॥ १४ ॥ दानैश्च मानैः प्रशंसनादिसत्कारैश्च । प्रायो बहुलम् । येकेच सम्प्रत्यपि पाण्डवपक्षपातिनस्तेऽपि बहुजनपतितं पन्थानमनुपतेयुरचिरादिति भावः । तेऽपि दानमानैर्वशीकरिष्यन्ते । यदि केचिद् विरळा अधिकारोत्तुङ्गनादिनाऽपि न वशगा भविष्यन्ति, किं कुर्युरङ्गुलिगणनीयाः क्षुद्रास्ते । तप्स्यन्ते पश्चात्तापेनेति च दुर्योधनदुराशयः । तदेतत् सर्वमन्धाय पित्रे 'प्रायः' इति द्वाभ्यामक्षराभ्यामावेदितम् । अपिचेति वक्ष्यमाणं मुख्यतो विवक्षितं विशिष्य गमनीयं त्वयेत्यावर्जयति । एष मेऽन्तरङ्गसुहृत् । सुरेन्द्रसूनुरस्त्रे बलेऽप्यधिक इति लोकप्रसिद्धः । अयं तु सुरेन्द्रसूनोरप्यधिकः । अस्त्रेऽपि बाहुबलेऽपि अधिक एवेति मा ते संशयोऽत्र भूदित्यवधारयति । तेन गतं पार्थाद् भयम् । अथावशिष्टो भीम एकः । तं भीमं तु, अन्यैर्जेतुमशक्यत्वं तुनाऽऽह, अहमेव विजेष्ये । 'मन्त्रबलतस्तु' इति पुनर्मन्त्राणाममोघतामाह । मा नाम बाहुबलेन जैषम् । किन्तु मन्त्रबलत एव विजेष्य इत्यवधारणे च तुः । सोऽयं

---

१. **'समा हि पुरम्'**

**त्रिंशच्छतं परमकाः सुरदुर्लभाश्च दुर्वाससो हि मनवोऽद्य मया गृहीताः ।**
**अन्यत्र ते प्रविहिता नहि वीर्य्यवन्तः स्युर्भीम इत्यहममून् न नियोजयामि[1] ॥ १६ ॥**

**ते वीर्य्यदा विजयदा अपि [2]वह्निवारिस्तम्भादिदाः सकलदेवनिकायरोधाः ।**
**वृष्ट्याद्यभीप्सितसमस्तकरा अमूभिर्जेष्यामि भीमममुमेकमयातयामैः ॥ १७ ॥**

**सौहार्दमेषु यदिवाऽतितरां[3] करोषि तत्रापि नैव हि मया क्रियते विरोधः ।**
**वत्स्यन्तु वारणवते भवतु स्म राष्ट्रं तेषां तदेव मम नागपुरं त्वदर्थे ॥ १८ ॥**

**अयातयामैः अगतसारैः ॥ १७ ॥ त्वदर्थे त्वद्वचनकारणेन तव प्रियार्थे ॥ १८–२१ ॥**

---

स्वस्य महान् स्वार्थ इत्यात्मनेभाषयाऽह ॥ १५ ॥ त्रिंशच्छतं त्रीणि सहस्राणि । त्रिंशदधिकं शतमित्यपि व्याचक्षते । तदा तु 'त्रिंशं शतम्' इति स्वरसम् । **'शदन्तविंशतेश्च'** [अ.सू.५.२.४६] इति पाणिनिस्मरणात् । **'शदन्तात् प्रातिपदिकाद् विंशतेश्च डः प्रत्ययो भवति तदस्मिन्नधिकमित्येतस्मिन् विषये । त्रिंशदधिका अस्मिञ् छते त्रिंशं शतम्'** इति जयादित्यः । परमकाः राज्यलाभादिना परमसुखप्रदाश्च । अद्य सम्प्रति । अन्यत्र प्रथमं विहिताः प्रयुक्ताः । भीमे न वीर्यवन्तः स्युः । अन्यत्र न प्रविहिताश्चेत् भीमे वीर्यवन्तः स्युरित्याशया । अन्यत्र न नियोजयामि न सम्पर्चयामि । नोपयुञ्जे । युज सम्पर्चने । स्वार्थे णिचि युजिर् योगे वा ॥ १६ ॥ आदिना भूस्तम्भः शस्त्रास्त्र-स्तम्भः शत्रुस्तम्भो वायुस्तम्भश्च । भूमावधःशयितस्यापि श्वासस्यानायासता भूस्तम्भः । शस्त्रास्त्रैरप्रतिहतिः शस्त्रास्त्र-स्तम्भः । पुरः स्थितस्य शत्रोरस्पन्दः शत्रुस्तम्भः । वात्याशैत्यादिस्तम्भो वायुस्तम्भः । तदपि कुतः? तदभिमानिदेवनिका-यरोधात् । वृष्ट्यादि यद्यदभीप्सितं तत् समस्तं कुर्वन्ति तच्छीला इति ताच्छील्ये टः । **'कृञो हेतुताच्छील्यानुलोम्येषु'** [अ.सू.३.२.२०] इति हि पाणिनिः । **'कर्मण्युपपदे करोतेर्धातोष्टप्रत्ययो भवति हेतौ, ताच्छील्ये, आनुलोम्ये च गम्यमाने । हेतुरैकान्तिकं कारणम् । ताच्छील्यं तत्स्वभावता । आनुलोम्यमनुकूलता'** इति जयादित्यः । अमूभिः अमीभिः । दुर्योधनगतानां मनूनामबलताद्योतनाय स्त्रीलिङ्गप्रयोगः । अन्यत्राप्येतादृशः प्रयोग आचार्यकृत उपलभ्यते । **'दाशोदिताभिर्वचोभिः'** [४४] इत्युपरिष्टात् । **'सुप्तिङुपग्रहलिङ्गनराणाम्–'** इति लिङ्गव्यत्ययमिच्छन्ति शास्त्रकृतः । यथा–**'दह्नं गगनं विशोकः'** इति । यथा वा–**'औदुम्बराः कुशाः'** इति शाट्यायनीयश्रुतिः । उदुम्बरमयी शलाका हि कुशा । तेनौदुम्बर्यः कुशा इति वक्तव्यम् । अथापि **'औदुम्बराः कुशाः'** इत्याह । **'कुशा वानस्पत्याः स्थ ता मा पात'** इति च भाल्लवेयश्रुतिः । अथच तुष्यतु वैयाकरण इत्यर्थान्तरमुच्यते । न मवन्ते न बध्नन्ति पराजयेन प्रयोक्तारमि-त्यमुवः । मूङ् बन्धने । ऊदन्तोऽयं शब्दः, अमूः अमुवौ अमुव इति । स यथा स्वयम्भूः । तैरमूभिः । कुतोऽमुवः । यतोऽयात-यामाः । गतसाराः कालातीताश्च यातयामा उच्यन्ते ॥१७॥ वत्स्यन्तु । लृटः स्यो लोट उश्च सङ्गत्यैतद्रूपं निष्पादयतः ।

---

१. **'न हि योजयामि'** इति क्वचित् । २. **'अपि वारिवह्निस्तम्भा–'** इति क्वचित् । ३. **'यदि चातितराम्'**

**एवं स्वपुत्रपरिपालनतो यशस्ते भूयाद् विनश्यति परप्रसवातिपुष्टौ ।**
**जाते बले तव विरोधकृतश्च ते स्युः स्वार्थं हि तावदनुयान्त्यपि[१] केवलं त्वाम् ॥ १९ ॥**

**क्षत्तैक एव सततं परिपोषकोऽलं तेषां मम द्विडथ मन्त्रबलादमुष्य ।**
**पौराश्च जानपदकाः[२] सततं द्विषन्ति मां तेष्वतीव दृढसौहृदचेतसश्च ॥ २० ॥**

इतः परं तत्रैव वसन्तु इत्यर्थः । ननु को लकारः? लोलृडिति गृहाण । भवन्ति चैतादृशा आचार्यप्रयोगा अन्यत्रापि । **'अनेन प्रसविष्यध्वम्'** इति च गीतासु । **'सुप्तिङुपग्रहलिङ्गनराणाम्'** इति वचनादेवैतत् सिद्धम् । त्वदर्थे । यथा तव पुत्रोऽहं त्वन्निकटे सदा स्याम् । यथा वा त्वदुत्तराधिकारी स्याम् ॥ १८ ॥ परिभवात् पालनं परिपालनम् । शोक-स्थानं परीक्ष्यपरीक्ष्य पालनं परिपालनम् । परितः सर्वत्र सर्वात्मना पालनं च परिपालनम् । परप्रसवाः । यस्मात् ते नाऽस्माकीनाः । परकीयाः । अथच शत्रुप्रसवाश्च ते । देवांशसम्भवा हि ते । स्वयं च दैत्यः कलिः । अथच परैः धर्मादिभिः, न तु पित्रा प्रसवो येषां तेषां परप्रसवानाम्, अनीतिजातानाम्, अतिपुष्टौ अतिप्रीत्या पालने कृते, तेन च तेषामतिशयेन पुष्टौ बलवृद्धौ यशस्ते विनश्यति । यतस्ते जाते बले त्वया पुषिता अपि कृतघ्नतया तव विरोधकृत एव स्युः । स्वार्थं स्वप्रयोजनमुद्दिश्य । केवलं स्वलाभार्थम् । नतु कुलज्येष्ठ इति प्रीत्या । अनुयान्त्यपि अनुसरन्त्यपि । गर्हायामपिः । नेदं वास्तवम् । केवलमनुसरन्त इव नाटयन्तीत्यर्थः ॥ १९ ॥ क्षत्ता विदुरः । क्षत्तेति दासीपुत्र उच्यते । क्षत्ता कर्मसु नियुक्त इति दण्डनाथः । क्षत्ता प्रतीहार इति दुर्गसिंहः । उभावप्येकदेशस्पृशौ । **'क्षत्ता शूद्रक्षत्रियाजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्यात्'** इति मेदिनी । **'भुजिष्यातनये क्षत्ता'** इति विश्वः । **'तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ'** [२.१] इति दशपादिका । **'क्षद गतौ । क्षदतीति क्षत्ता विदुरः'** इति वृत्तिकारः । **'क्षद स्थैर्ये'** इति स्कन्दस्वामी । **'क्षद गतिहिंसनयोः'** इत्यपरे । विदुरं पितृव्यं कदाऽपि नामन्यत सुयोधनः । तं दासीपुत्र इत्येव व्याजहार । तमेतं तिर-स्कारं ध्वनयन्नेव क्षत्तैक एवेत्याह । अयमेको दासीपुत्रो मां विरुणद्धि । नान्ये केऽपि कुलीना इति । परितः पोषकः, स्वीयत्वेन परिगृह्य पोषकः, परिज्ञाय पोषकः, आपत्स्थानं परीक्ष्यपरीक्ष्य च पोषकः, अलं सर्वत्र सर्वात्मना । न केवलं तेषां पोषकः । अथ तस्मात् तेषु पक्षपातादेव मम द्विट् च । अमुष्य क्षत्तुर्विदुरस्य मद्विरोधिमन्त्रबलात् पौरा अपि मां द्विषन्ति । गुप्तवचनं मन्त्रः । अत्र तु गूढं क्रियमाणः क्रियाकलापो मन्त्रपदार्थः । पुरवासिनः पौराः । देशवासिनो जन-पदाः । **'भवेज्जनपदो जानपदोऽपि जनदेशयोः'** इत्यभिधानम् । विदुरदुर्मन्त्रबलान्मां द्विषतस्तान् धिगस्त्विति कुत्सया-मास जानपदका इति । तेषु पाण्डवेषु । सुहृदो भावः कर्म वा सौहृदम् । **'तत्सौहृदं यत् क्रियते परोक्षम्'** [म.पु.११५.५१] इति पुराणप्रयोगः । दृढसौहृदा इति पर्याप्तम् । अथापि दृढसौहृदचेतस इत्याह । तेनेदमाह–चेतन्त्यनेनेति चेतः । चिती सञ्ज्ञाने । अविस्मरणं समित्युपसर्गार्थः । तेन चेत इति स्मरणकारणं चित्तमुच्यते । जनानां सौहृदं न केवलं मनोगतम्, येन सद्यो विस्मरेयुरपि । किन्तु चेतोगतम् । तेन दूरगमनेऽपि न क्षिप्रं विस्मरेयुरिति दुर्योधनस्य गाढां चिन्ताम्, तेन च विदुरे क्रोधातिशयं च द्योतयन् दृढसौहृदचेतस इत्याह ॥ २० ॥

१. **'–यान्ति हि केवलम्'** इति क्वचित् । २. **'जानपदिकाः'**

ते तेषु[१] दूरगमितेषु निराश्रयत्वान्मामेव दुर्बलतया परितः श्रयन्ते ।
भीष्मादयश्च नहि तन्निकटे विरोधं कुर्य्युर्विनश्यति गतेषु हि सौहृदं तत् ॥ २१ ॥

भेदः कुलस्य भविता कुलनाशहेतुरस्माभिरेषु सहितेषु पुरे वसत्सु ।
तस्मादुपायबलतः [२]प्रतियातनीयास्ते वारणावतमितो विहितोऽप्युपायः ॥ २२ ॥

विष्णुर्ज्जयन्त इति शम्भुसहाय आस्ते देवोत्सवश्च सुमहान् भविताऽत्र सुष्ठु ।
भक्ताश्च ते हि नितरामरिशङ्खपाणौ त्वच्चोदिताः समुपयान्ति तमुत्सवं द्राक् ॥ २३ ॥

अज्ञाप्य मत्पुरुषतां पुरुषैर्म्मदीयैर्म्मद्ध्यस्थवद् बहुगुणा उदिताश्च तत्र ।
तेषां पुरोऽत्र गमनाभिरुचिश्च जाता द्रष्टुं पुरं बहुगुणं ननु पाण्डवानाम् ॥ २४ ॥

**भेदः (कलहः) ॥२२॥ अत्र वारणावते ॥२३॥ तेषां पुरः तेषामग्रे । तत्र वारणावते बहुगुणा उदिताः । अत्र तेषां गमनाभिरुचिश्च जाता । तद्गुणान् श्रुत्वेति भावः ॥ २४ ॥**

---

अत एव– तेषु दूरगमितेषु न तेषां विस्मृत्या, नापि स्वेच्छया, किन्तु निराश्रयत्वात्, स्वतो दुर्बलतया मदाश्रयस्यानिवार्यत्वाच्च मामेव परितः श्रयन्त इत्याह । दूरं गमितेषु, दूरगं वा देशमितेषु गतेषु । तन्निकटे पाण्डवानां समीपे । ते निकटा यत्र तादृशे वाऽवस्थाने । तेषु दूरं गतेषु स्वयमेव विनश्यति ॥ २१ ॥ भेदो विदारणं विघटनमित्येतत् । न देहबलतः शक्यं प्रतियातनम् । तस्मादुपायबलतः प्रतियातनीयाः । क उपायः? सामवचनेन प्रीतिप्रदर्शनम्, राज्यदानेन प्रलोभनं च । वारणैः शत्रुवारणेन वाऽवितं पुरं वारणावतमाहुः । वारणप्रचुरं वनं वारणवदुच्यते । तेन वनेन परिगतो देशो वारणवानुच्यते । वारणवत इदं नगरं वारणवतं वारणावतमिति वा । सञ्ज्ञायां दीर्घः । 'या प्रापणे' इत्यस्यादादेर्णिचि रूपं यापयतीति । 'यत निकारोपस्कारयोः' इत्यस्य चुरादे रूपं यातयतीति । तथाच प्रतियातनीयाः स्वेषां प्रतिष्ठायै, प्रत्ययमुत्पाद्य त इत उच्चाटनीया इत्यर्थः । प्रतियत्नेन वा यातनीयाः । किमुक्तं भवति । **'सतो गुणान्तराधानं प्रतियत्नः'** इति वैयाकरणाः । राजपुत्राणां सतां वारणावतराज्यदानेन राजत्वाख्यं गुणान्तरमाधायेत उच्चाटनीया इत्यर्थः । अथायमपि स्यादन्यः पन्थाः–यातेर्ण्यन्तस्यैव रूपद्वयम्–यापयति यातयतीति । अर्थविशेषस्तु भवति । इच्छन्तं यापयति । अनिच्छन्तमपि बलाद् यातयति ॥ २२ ॥ शम्भुसहाय इति । जयन्तेश्वर इत्यर्थः । जयं तनोतीति जयन्तः । **'जयन्तः सर्वविज्जयी'** इति विष्णुसहस्रनामसु । अत्र जयन्तेश्वरमन्दिरे । सुष्ठु विधिपूर्वकम् । सुमहान् नयनमनोहरतया शोभनः, जनसम्मर्देन महांश्च । सम्यगुपस्थानाय यान्ति ॥ २३ ॥ अज्ञापयित्वा । तत्र वारणावते उत्सवे च । तेषां पुरस्तात् उदिताः । तेन तेषां पुरः पूर्वमेव अत्र नगरे गमनाभिरुचिश्च जाता ननु ॥ २४ ॥

---

१. 'एतेषु' २. **'प्रतियापनीया–'**

इत्युक्तवत्यथ सुते स तथेत्युवाच प्राप्तेषु पाण्डुतनयेषु तथैव चोचे[१] ।
ज्ञात्वैव तेऽपि नृपतेर्हृदयं समस्तं जग्मुः पितेति पृथया सह नीतिहेतोः ॥ २५ ॥

भीमस्तदा ह भविताऽत्र हि[२] भैक्षचार
इत्येव सम्यगनुविद्य निजं न कर्म्म ।
त्याज्यं त्विति प्रतिजगाद निजाग्रजाय
यामो वयं नतु गृहात् स हि न स्वधर्म्मः ॥ २६ ॥

निष्काळयन्ति[३] यदि नो निजधर्म्मसंस्थान्
योत्स्यामहेऽत्र नहि दस्युवधोऽप्यधर्म्मः ।

**पितेति पितृवचनमनुवर्तनीयमिति नीतिहेतोः न्यायार्थम् ॥ २५ ॥ तदा भीमः अत्र गमने सति भैक्षचारः भविता, क्षत्रियायोग्यो भैक्षचारो भविष्यति, निजं कर्म न त्याज्यं तु इति सम्यगनुविद्यैव ज्ञात्वैव निजाग्रजाय इति प्रतिजगाद ह । कथम्? वयं गृहात् नतु यामः, सः स्वधर्मो नहि इति ॥ २६–७ ॥**

इत्युक्तवत्यथ । सप्तम्यैवाऽनन्तर्यमवगम्यते । अथाप्यथेत्याह । तेनेदमवगम्यते– पुत्रवचः श्रवणानन्तरं तद्विरोद्धुमप्रभवन्नाह । अथ पुत्रवचःश्रवणसमनन्तरमेव विलम्बमसहमानः सपद्याहेति । उवाचेति परस्मैभाषयेदमाह– परप्रत्ययनेयबुद्धिरुवाच । परं दुर्योधनं शकुनिं च प्रीणयितुमुवाच । न तु सामस्त्येन स्वेच्छया । ततः प्राप्तेषु पाण्डुतनयेषु पुत्रस्नेहपाशसमेधितासुरावेशः स्वयमिच्छन्नूचे, स्वात्मनश्चेदं हितमिति भ्रान्त्या मन्वान इत्यात्मनेभाषा । यथा सुत ऊचे, तथैव अयं चानूचे । हृदयं मनोगतं सर्वं ज्ञात्वैव । पितेति गौरवात् । तीर्थभूतैर्न विरोद्धव्यमिति नीतिहेतोः ॥ २५ ॥ अहेति आहेति वा स्वादार्थेऽव्ययम् । तदा ह इति वा प्रतृण्णम् । प्रतिजगाद ह । हेति भीमस्य दूरदृष्टिं स्वदते । यद्वा तदा भीम आह । किमिति? इतो गतानां नोऽत्र भैक्षचारो भविष्यति हि निश्चितमिति । भाविनमज्ञातवासं साक्षात्कुर्वन्निवाऽह– अत्र । एतेन भीमज्ञानस्य आलोचने सर्वविषयत्वमाह । अन्यथा 'तत्र' इत्यवक्ष्यत् । कुत एवमाह? दुर्योधनदुर्मन्त्रितं सम्यगनुविद्यैव । शत्रुस्वभावानुगुणं वेदनमनुवेदनम् । निजं क्षात्रं कर्म तु विशेषतः न त्याज्यमिति निश्चित्य पुनः प्रतिजगाद । क्षात्रं कर्म त्यक्त्वाऽपि पितृवचनं कार्यमिति धर्मराजमनोगतं बुद्ध्वा तं प्रतिबोधयितुं जगाद । किमिति? वयं गृहं त्यक्त्वा नैव यामः । स गृहत्यागो नहि स्वधर्मः । सः वृद्धवचनमुल्लङ्घ्यापि लोकहितेच्छया गृह एव वासः नः स्वधर्मो हीति वा । न स्वधर्म इति द्वेधा प्रतृण्णं सम्भवति । नेति न इति । यथा **'सर्वगतस्थाणुः'** इति । सर्वगतः स्थाणुरिति सर्वगतस्थः अणुरिति च तत्रार्थवर्णनात् ॥ २६ ॥ निष्काळयन्ति । रेफात् परस्य लस्य ळो भवति बहुलम् । यथा–कराळम्, विरळम्, गरळम् । क्वचिन्न भवति । यथा– निर्मलम् । एवं षकारात् परस्य च । यथा–

१. **'तदेव चोचे'** इति क्वचित् । २ **'–त्र च भैक्ष–'** इति क्वचित् । ३. **'निष्कालयन्ति'** । **'निष्कासयन्ति'** इति क्वचित् ।

इत्यूचिवांसममुमाह च धर्म्मसूनुः
कीर्त्तिर्विनश्यति हि नो गुरुभिर्विरोधे ॥ २७ ॥

इत्युक्तवाक्यममुमग्रजमन्वगात् स भीमः प्रदर्श्य निजधर्म्ममथानुवृत्यै[1] ।
दोषो भवेदुभयतो यत एव तेन वाच्यः स्वधर्म्म उत न स्थितिरत्र कार्य्या ॥ २८ ॥

कीर्त्त्यर्थमेव निजधर्म्मपरिप्रहाणे प्राप्तेऽग्रजस्य वचनात् प्रविहातुमेव ।
भीमस्य दोषमुभयं [2]प्रतिहन्तुमीशो ज्येष्ठं चकार हरिरत्र सुतं वृषस्य ॥ २९ ॥

हन्तव्यतामुपगतेषु सुयोधनादिष्वन्योपधान्नहि[3] भवेन्निजधर्म्म एव ।
पूर्वं वधे नहि समस्तश एव दोषास्तेषां प्रयान्ति विवृतिं च तदर्थतोऽपि ॥ ३० ॥

**स भीमः निजधर्मं प्रदर्श्य अथ इत्युक्तवाक्यं अमुमग्रजं अनुवृत्त्यै ज्येष्ठानुवृत्त्यै अन्वगात् । स्वधर्मनिरूपणं च ज्येष्ठानुवृत्तिं चोभयं किमर्थमकरोदित्यत आह– दोष इति । उभयतः, ज्ञात्वा स्वधर्मानिरूपणात् ज्येष्ठाननुवृत्तेः (चेति) उभयतः, दोषो भवेदेव यतस्तेन तस्मात् ज्ञात्वा (उ)क्तदोषपरिहारार्थं स्वधर्मो वाच्यः, ज्येष्ठाननुवृत्तेर्दोषसद्भावात् अत्र स्थितिरुत न कार्या ॥ २८ ॥ तर्हि ज्येष्ठानुवृत्त्या स्वधर्मत्यागदोषः प्राप्त इत्यत आह– कीर्त्यर्थमिति ॥ २९ ॥ वृषसुतं ज्येष्ठवत् कर्तुरभिप्रायान्तरमप्याह–हन्तव्यतामिति । वधयोग्यताम्, सुयोधनादिषु तद्योग्यतामुपगतेषु वधादन्यः वधाभावः निजधर्मो नैव भवेत् । निजधर्मार्थं**

निष्कळम् । क्वचिन्न भवति । यथा–वृषलः । निष्काळयन्ति निर्वासयन्ति पुरात् । कल क्षेपे । कालयति । कालयते । तदाऽत्रैव स्थित्वा योत्स्यामहे । नहि वधोऽधर्म इत्येतावता दस्युवधोऽप्यधर्मो भवति । दस्यवः लोकपीडकाः । आह च धर्मसूनुः । चकारेणाऽन्येऽपि भ्रातरस्तमनूचुः ॥ २७ ॥ अनुवृतिरनुवरणम् । अनुसरणमङ्गीकरणं वा । निजधर्मं प्रथमं दर्शयामास । प्रदर्श्य, अथ अनुवृत्यै अग्रजानुसरणाय । अथेत्यग्रजानुसरणं माङ्गलिकमित्याह । अकथनेऽपि दोषः, अग्रजाननुसरणेऽपि दोष इत्युभयतः । उत किन्तु । अप्यर्थे वा । स्वधर्मश्च वाच्यः । स्थितिरत्र स्वोक्तार्थे न कार्या च । उक्तार्थस्यानुष्ठानेन स्थिरीकरणं स्थितिः । उक्तार्थादचलनं वा ॥ २८ ॥ प्रभुणाऽपि हानं प्रहाणम् । दोषान्तरपरिहाराय प्रहाणं परिप्रहाणम् । प्रविहातुम् । प्रभुत्वं विरहय्यापि हातुम् । कीर्त्यर्थं धर्मत्यागे प्राप्तेऽग्रजवचनमनुसृत्य धर्मलोपजं दोषं प्रविहातुमेव । कीर्त्यर्थं धर्मत्यागो दोषः । ज्येष्ठानुसरणेन गुण एव हि स भवति । तेन च सर्वप्रसङ्गेष्वपि द्विविधं दोषं प्रतिवारं हन्तुमेव । तेन भीमस्य निष्कळङ्ककीर्त्यर्थमेव । वृषस्य धर्मस्य सुतम् ॥ २९ ॥ प्रतिहन्तुमित्युक्तं स्वयमेव विवृणोति– हन्तव्यताम् । अन्योपधात्, अन्यस्य कस्यचिदधर्मस्य व्याजेन, यथा सम्प्रति पुरान्निष्काळनम्,

१. **'–नुवृत्त्यै'** २. **'प्रविहन्तु–'** ३. **'–ष्वन्यो वधान्नहि'** । वे.ती. पाठोऽपि तथा ।

क्षत्ताऽथ चाऽह सुवचोऽन्त्यजभाषयैव धर्म्मात्मजं विषहुताशभयात् प्रतीताः ।
आध्वं त्विति स्म स तथेति वचोऽप्युदीर्य्य[१] प्रायाच्च वारणवतं पृथयाऽनुजैश्च ॥ ३१ ॥

तान् हन्तुमेव च तदा धृतराष्ट्रसूनुर्ल्लाक्षागृहं सपदि काञ्चनरत्नगूढम् ।
कृत्वाऽभ्ययातयदमुत्र हि विष्णुपद्या[२] स्वामात्यमेव च पुरोचननामधेयम् ॥ ३२ ॥

**वध्यतामिति चेत् तच्च न युक्तम् । कुतः? पूर्वं वधे, प्रथमापराधेनैव वधे, तेषां समस्तशो दोषाः करिष्यमाणदोषाः विवृतिं लोकप्रसिद्धतां न यान्ति । अतः पूर्वं न हन्तव्याः । वधयोग्यानां वधस्य स्वधर्मत्वात् (तदकरणे) स्वधर्महानिः स्यात् । अग्रजवचनाद् वधाभावे न स्वधर्महानिः स्यादिति तदर्थतो(ऽपि) हरिः ज्येष्ठं चकार इति सम्बन्धः ॥ ३०–१ ॥ अमुत्र वारणावते । विष्णुपद्या गङ्गाजलमार्गेण । पूर्वं यः सुपापः,**

युद्धे निर्वृत्ते तत्र च तेषु हन्तव्यतामुपगतेषु समग्रो निजधर्मः साधितो न भवेदेव । उपपन्नतया गताः उपगताः । यद्यपि हननमुपपन्नम् । अथापि न तेन समग्रधर्मलाभ इत्यभिप्रायः । निजधर्मे सत्यपि पूर्वं हननं नैव युक्तं भवेदिति । कुतो न भवेत्? आह– पूर्वं वधे । तेषां दोषाश्च न समस्तशः विवृतिं प्रयान्ति । समस्तशः सर्वे दोषा इति वा । निजधर्मश्च न समस्तशो विवृतिं प्रयातीति चकारेण कारणद्वयं समुच्चिनोति । तदर्थं च भीममनुजं चकार ॥ ३० ॥ अथ धृतराष्ट्रा-देशानन्तरम् । क्षत्ता चाऽह । चः प्राधान्ये च । क्षत्तेति ज्ञानितया धर्माधर्मविषये स्वयमसन्दिहानः स्थिरचित्त इत्यर्थः । **'क्षद स्थैर्ये'** इति हि पठन्ति । अथ च सुवचः । माङ्गलिकमतिमुख्यं च हितवचनमाह । समाधिभाषा दर्शनभाषा गुह्यभाषेति शास्त्रप्रथिते भाषात्रये याऽन्त्यजा भाषा तया गूढभाषयैवाऽह तामसमोहन्या, नैतत् तामसानां दुर्योधनादीनां विदितं भूदिति । यद्यपि अन्त्यजानां म्लेच्छानां भाषयेत्येवार्थो भारतवचनात् प्रतीयते । तथाहि–**'हितोपदेशश्च पथि धर्मराजस्य धीमतः । विदुरेण कृतो यत्र हितार्थे म्लेच्छभाषया'** [आ.प.२.१०४] इति पर्वसङ्ग्रहे । **'प्रच्छन्नं विदुरेणोक्तं प्रियं यन्म्लेच्छभाषया'** [आ.प.१५९.३] इति जतुगृहे । **'निषादस्तत्र कौन्तेयानभिज्ञानं न्यवेदयत् । विदुरस्य महाबुद्धेर्म्लेच्छभाषादि यत् तदा'** [१६१.१३] इति च । तत्रापि म्लेच्छ अव्यक्ते शब्द इति धातुपाठात् अव्यक्तार्थपदा गुह्यभाषैव म्लेच्छपदेनोच्यते इति न विरोधः । **'कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः । न दहेदिति चाऽत्मानं यो रक्षति स जीवति'** [१५७.२२] इत्याद्यया गूढार्थयैव भाषया विदुरेण व्याहरणादवश्यमेवं व्याख्येयम् । अथच म्लेच्छानां भाषयेत्यप्यर्थः सम्मत एव । विदुरो यन्म्लेच्छभाषया पौराणामपरिचितया रहस्यमाह तामेव गैर्वाण्या वाण्या भगवान् व्यासोऽनूवाद–**'कक्षघ्नः शिशिरघ्नश्च–'** इत्यादिनेति सुन्दरम् । इदमुक्तं भवति–भारतीयानामपरिचितया कस्यचिन्म्लेच्छदेशस्य भाषया विदुर उपदिदेश । यां केवलं विदुरसाहचर्येण पाण्डवा एव विविदुः । यदि कश्चिन्म्लेच्छभाषाभिज्ञः तत्रगतेषु पौरेषु भवेत् सोऽपि तन्माऽवगमदिति गूढभाषयाऽऽहेति । एवमुभयार्थसङ्ग्रहायाऽचार्योऽन्त्यजभाषयेत्याह । अन्यथा 'गुह्यभाषया' इत्येवावक्ष्यत् । प्रतीता आध्वं तु, विशेषतः जागरूका भवत । आध्वम् । आस उपवेशने । सोऽपि तथाऽस्त्वित्युदीर्य ॥ ३१ ॥ हन्तुमेव च । चकारः पक्षान्तरे । न राज्यदानेन दूरयापनमात्रं सिसाधयिषितम् । किन्तु हन्तुमेवायं दुर्व्यवसाय

१. 'वचोऽभ्युदीर्य्य' २. 'विष्णुपद्याम्'

**पूर्वं प्रहस्त इति यस्त्वभवत् सुपापः सोऽभ्येत्य पाण्डुतनयानभवच्च मन्त्री ।**
**दुर्य्योधनं प्रतिविहाय भवत्सकाशमायात इत्यवददेषु स कूटवाक्यम् ॥ ३३ ॥**

**दिव्यं गृहं च भवतां हि मयोपनीतं प्रीत्यैव पापमनुयातुमहं न शक्तः ।**
**युष्मासु धर्म्मधृतिमत्सु सदा निवत्स्य इत्यूचिवांसममुमाहुरहो सुभद्रम् ॥ ३४ ॥**

**दृष्ट्वैव जातुषगृहं वसया समेतं तद्गन्धतो वृषसुतः पवमानजातम् ।**
**तं चातिपापमवदत् सुमुखैष पापो हन्तुं न इच्छति सदा भव च प्रतीतः ॥ ३५ ॥**

**प्रहस्त इति, प्रहस्तनामा राक्षसः अभवत् तमेवात्र पुरोचननामधेयं स्वामात्यं चाभ्ययातयत् इति सम्बन्धः । भवत्सकाशं प्रति आयातः । (कूटवाक्यं) छद्मवाक्यं व्याजवचनम् ॥ ३२–४ ॥ वृषसुतः तद्गन्धतः, तद्गृहगतलाक्षावसागन्धतः, वसया समेतं जातुषगृहं दृष्ट्वा ज्ञात्वा तं चातिपापं ज्ञात्वा पवमानजातमवदत् ॥ ३५ ॥**

---

इति । **'चः पादपूरणे पक्षान्तरे हेतौ विनिश्चये'** इत्यभिधानम् । बहिः काञ्चनरत्नावरणेन गूढलाक्षम् । वस्तुतः लाक्षानिर्मितं गृहम् । अमुत्र लाक्षागृहे, पाण्डववञ्चनाय वस्तुम्, विष्णुपद्या अभ्ययातयत् । हस्तिनपुराद् वारणावतं प्रति जलमार्गेण प्रेषयामासेत्यर्थः । अभ्ययातयत्, पूर्वं स्वस्य प्रहस्तत्वे दृष्टहनुमत्पौरुषं सम्प्रति भीमभिया स्वतो यातुमनिच्छन्तमपि स्वयमभिलष्य यातयामासेत्यर्थः । स्वामात्यमेव च । अथापि दुर्योधनं विहायाऽगत इति मृषा वदन्तं नीचम् । पुरुरोचनं पुरोचनमाहुः ॥ ३२ ॥ पूर्वं । यः पूर्वं रावणामात्यः सम्प्रति दुर्योधनामात्य इति विशेषं तुनाऽह । पूर्वं सुपापः । सम्प्रत्यपि । पापो निरयं याति । सुपापस्तमः । अभिनयन् एत्य । अभवच्च मन्त्री, नीचः पाण्डवानां मन्त्री बभूव । अपिच अहं दुर्योधनस्य मन्त्री सन्नपि तस्य दौरात्म्यमसहमानस्तं प्रतिविहायाऽगत इत्यवदत् । प्रतिकर्तुं विहाय । अन्ततः भवत्सकाशं विहाय दुर्योधनं प्रतिगन्तुमायात इति वास्तवम् ॥ ३३ ॥ उपनीतं उपपन्नतया, उत्कृष्टतया निर्मितम्, मया उपायनीकृतं च । दिव्यं कमनीयम् । 'यदि न प्रीये कथमुपनीयेत' इति स्वस्य विश्वसनीयत्वमाश्वासयति प्रीत्यैवोपनीतं हीति । पापं दुर्योधनम् । सदा धर्मधृतिमत्सु । धर्मे धृतिः स्थिरमवस्थानम् । धृङ् अवस्थाने । प्रतिरोधेऽपि धर्मादचलनमित्येतत् । सदा निवत्स्ये निवत्स्यामि । स्वश्रेयसे निवत्स्यामीत्यादरातिशयं नाटयित्वा युधिष्ठिरं वञ्चयिष्यमाण इदमाह । तस्य छद्मवाक्यानुगुणतया पाण्डवा अपि 'अहो सुभद्रम्' इत्यूचुः । अहो महान् सन्तोषः । सुभद्रं कल्याणतमं चैतद् यद्भवानस्माभिः सह वसति । व्यङ्ग्यमर्यादया सुभद्रमित्यभद्रमित्येवार्थः । **'अहो पूर्णं सरो यत्र लुठन्तः स्नान्ति मानवाः'** इतिवत् ॥ ३४ ॥ जतु लाक्षा । 'ଜଉଘର' इति भाषायाम् । जतुनो विकारो जातुषं गृहम् । जतुशब्दाद् विकारेऽर्थेऽण् प्रत्ययः । तत्सन्नियोगेन तस्य षुगागमश्च–**'त्रपुजतुनोः षुक्'** [अ.सू.४.३.१३८] इति । वसा मांसस्य स्नेहभागः । 'ଚର୍ବି' इति भाषायाम् । पवमानस्य जातस्तनयः । यतः पवमानेन जातः । अथापि पवमान एव जातस्तं पवमानजातं भीमं

**क्षत्ताऽथ नीतिबलतोऽखिललोकवृत्तं जानन्स्वचारमुखतः खनकाय चोचे ।**
**उक्त्वैव धर्म्मतनयाय मदीयवाक्यं पूर्वोक्तमाशु कुरु तत्र बिलं सुदूरम् ॥ ३६ ॥**

**चक्रे स चैवमथ वर्त्म वृतिच्छलेन द्वारं च तस्य स पिधाय ययौ गृहं स्वम् ।**
**भीमः पुरोचन उभावपि तौ वधाय च्छिद्रार्त्थिनौ मिथ उतोषतुरब्दकार्द्धम् ॥ ३७ ॥**

**तस्याग्रजा च सहिता सुतपञ्चकेन**
**तत्राऽगमत् तदनु मारुतिरेष कालः ।**
**इत्थं विचिन्त्य स निशाम्य च तान् प्रसुप्तान्**
**भ्रातृंश्च मातरमथाऽशु बिले न्यधात् प्राक् ॥ ३८ ॥**

**नीतिबलतः अखिललोकवृत्तं ज्ञात्वा स्थातव्यमिति शास्त्रबलात् । स्वचारमुखतः (अखिललोकवृत्तं जानन्) । त्वदीयवचने विश्वासमुत्पादयितुं पूर्वोक्तं मदीयवाक्यमुक्त्वैव ॥ ३६ ॥ स खनकः एवं विदुरोक्त-प्रकारेण उक्त्वा, वृतिच्छलेन, प्राकारं करोमीति व्याजेन, सुदूरं वर्त्म बिलमार्गं चक्रे ॥ ३७ ॥ प्राक् गृ(हदा)हात् प्राक् ॥ ३८ ॥**

---

प्रति तं पुरोचनमतिपापमवदत् । सदा प्रतीतो जागरूको भव इति चावदत् । अतिपापेष्वप्यग्रण्यमित्यतिपापं चेत्याह । **'समुच्चये तथाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यते'** इत्यभिधानम् । दुर्योधनमिव तदमात्यं तं चेति समुच्चये च । अपि च रीत्यन्तरमत्रोत्पश्यामः । भीममवदत्; तं पुरोचनं चावदत् । किम्? सुमुखेत्यादि । भीमं प्रति वास्तवमाह– एष पापः पुरोचनः नः हन्तुमिच्छतीति । पुरोचनस्य कूटवचनेन जातविश्वासमिवाऽत्मानं मृषा दर्शयित्वा पुरोचनं वञ्चयन्नाह– सुमुख, प्रियवादिन्, एष त्वया त्यक्तः पापो दुर्योधनः नः हन्तुमिच्छति । ततो भवास्मद्रक्षणे जागरूक इति । अद्भुतेयमाचार्यवाक्सरणिः ॥ ३५ ॥ चारमुखतो लोकवृत्तं जानन् । खनकः, यो भूमिं खनति । खनित्वा बिलादिकं निर्मिमीते । गुह्यभाषया पूर्वोक्तमुक्त्वा विश्वासजननाय । बिलं गुहामार्गम् । सुदूरं राज्यान्तरगामि ॥ ३६ ॥ गृहावरणप्राकारच्छलेन बिलवर्त्म चक्रे । छिनत्तीति छिद्रं रन्ध्रम् । अवकाश इत्येतत् । उत अथापि निर्वासनक्लेश-दुष्टो दिष्टोऽयमिति कना कुत्सयामासाब्दक इति ॥ ३७ ॥ तस्याग्रजा । **'पुरोचनप्रणिहिता पृथां या सेवते सदा । निषादी दुष्टहृदया नित्यमन्तरचारिणी'** [आ.प. १६०.९] इति जतुगृहदाहे । पुरोचनप्रणिहिता । केन सम्बन्धेन? अथच दुष्टहृदया । किं तद् दुष्टचिन्तनं तस्याः? अथच किं कर्तुमन्तरचारिणी? तदेतत् सर्वं भारते स्फुटमनुक्तमाचार्य आविश्चकारात्र । एतेन पुरोचनोऽपि जात्या निषाद इत्युक्तं भवति । तान् पुरोचनं तद्भगिनीं तस्याः पञ्च पुत्रांश्च गाढं सुप्तान् दृष्ट्वा । अथ दृष्टिसमनन्तरमेव, विलम्बे कार्यहानिः स्यादित्याशु ॥ ३८ ॥

तं भागिनेयसहितं भगिनीं च तस्य पापान् ददाह सगृहान्[१] पवमानसूनुः ।
साऽप्यागता हि गरळेन[२] निहन्तुमेतान् भीमस्य पूर्वभुजितो न शशाक चैतत् ॥ ३९ ॥

तप्तं तया ससुतया च तपो नितान्तं स्यां सूनुभिः सह बलाददितिस्तथाऽब्दात् ।
तस्या[३] अदाच्च गिरिशो यदि पुत्रकैस्त्वं युक्ता न यासि मृतिमेष वरस्तवेति ॥ ४० ॥

जानन्निदं सकलमेव स[४] भीमसेनो हत्वा सुतैः सह कुबुद्धिमिमां हि तं च ।
भ्रातॄंश्च मातरमुदूह्य ययौ बिलात् स निर्गत्य भीतिवशतोऽबलतां प्रयातान् ॥ ४१ ॥

**एतान् गरळेन निहन्तुमागता सा, भीमस्य पूर्वभुजितः भ्रातृभोजनात् पूर्वं विषमिश्रसर्वान्नभोजनात्, (तस्य ) जीर्णत्वात्, एतत्, विषेण हननं कर्तुं, न शशाक हि ॥ ३९–४० ॥ स भीमसेनः सपुत्रायास्तस्या हननकारणं इदं सकलं जानन्नेव सुतैः सह कुबुद्धिमिमां (तं) पुरोचनं च जघान (इति) योज्यम् । स हत्वा इत्याद्युत्तरवाक्ययोजना ॥ ४१ ॥**

---

पुरोचनः, तस्य भगिनी, भागिनेयाश्चेत्येतान् सर्वान् पापान् सगृहान् ददाह । भीमस्य पूर्वभुजितः । अयमर्थः । अन्ने गरळमिश्रणशङ्कया सदा भीमः पूर्वमभुङ्क्त । ततः कुन्ती धर्मराजादयश्च । भीमस्य पूर्वभुजितः पूर्वं कौरवदत्तगरळान्नभोजनात् । स किल परिचितगरळान्नः जीर्णगरळश्च । स निरपायो जानीयादेव गरळान्नमिति तत्प्रभावज्ञा कुन्ती भ्रातरश्च तस्य पूर्वभोजनमन्वमोदन्त । तस्मात् वारणावतेऽपि भीमस्य पूर्वं भोजनात्, सा पुनर्भीमात् पूर्वं धर्मजादीनां भोजनं कदा स्यादिति प्रतीक्षमाणा, तं चावकाशमलभमाना, एतत् गरळेन हननं कर्तुं न शशाकेति ॥ ३९ ॥ अदितिर्देवमाता स्याम् । अत एव देवत्वं गमितैः सूनुभिः सह । बलादिति । सम्प्रति याऽदितिस्तां बलात् प्रच्याव्य । तदप्यब्दादर्वाक् । तस्यै गिरिशो वरमदाच्च । पुत्रकैः तस्याः प्रियपुत्रैः, वस्तुतस्तु कुत्सितैः पुत्रैः, यदि मृतिं न यासि तदा एष त्वया वृतो वरः, अब्दादर्वागदितित्वम्, तव स्यादिति ॥ ४० ॥ स हि सर्वज्ञप्राणावतारत्वेन प्रसिद्धो भीमसेनः । कुबुद्धिभिः सुतैः सह कुबुद्धिमिमाम्, कुबुद्धिं तं च पुरोचनं । कुबुद्धित्वादेव हत्वा । हीति तेषां कुबुद्धित्वं जगति विततमित्याह । जानन् हि । प्रसिद्धं हि भीमस्य ज्ञानाधिक्यम् । जानन् हि जानन्नेवेति वा । **'हि पादपूरणे हेतौ विशेषेऽप्यवधारणे'** इत्यभिधानम् । उदूह्य । उत्थाप्य, जननीं स्कन्धे, युधिष्ठिरार्जुनौ प्रवेष्टयोः कूर्परतळे, यमौ प्रोथपार्श्वयोः, अनायासेनोल्लसित ऊढ्वा– **'स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान् । पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलः । उरसा पादपान् भञ्जन् महीं पद्भ्यां विदारयन् । स जगामाऽशु तेजस्वी वातरंहा वृकोदरः'** [आ.प.१६०.२७–८] इति च । यद्यपि ऊह्येति ऊहतेर्ल्यपि रूपम् । न वहतेः । प्रयुञ्जते च प्रतना वहनेऽर्थे । अतः **'युप्लुवोर्दीर्घश्छन्दसि'** [अ.सू.६.४.५८] इत्यत्र वहतेरपीति वक्तव्यम् ॥ ४१ ॥

---

१. **'पापां ददाह सगृहां पव–'** २. **'गरलेन'** ३. **'अस्या–'** इति क्वचित् । ४. **'–मेव च भीम–'**

**ज्ञात्वा पुरोचनवधं यदि भीष्ममुख्यैर्वैचित्रवीर्य्यतनया अभियोधयेयुः ।**
**किं नो भवेदिति भयं सुमहद् विवेश भीमं त्वृते च तनयान् सकलान् पृथायाः॥ ४२ ॥**

**भीमोऽभयोऽपि गुरुभिः स्वमुखेन युद्धमप्रीयमाण उत धर्म्मजवाक्यहेतोः ।**
**ऊह्यैव तानपि ययौ द्युनदीं च तीर्त्त्वा क्षत्त्राऽतिसृष्टमधिरुह्य जलप्रयाणम् ॥ ४३ ॥**

**विश्वासिता विदुरपूर्ववचोभिरेव दाशोदिताभिरधिरुह्यँ च भीमपृष्ठम् ।**
**सर्वे ययुर्वनमथाभ्युदिते च सूर्य्ये दृष्ट्वैव सप्त मृतकानरुदंश्च[१] पौराः ॥ ४४ ॥**

**हा पाण्डवानदहदेष हि धार्त्तराष्ट्रो धर्म्मस्थितान् कुमतिरेव पुरोचनेन ।**
**सोऽप्येष दग्ध इह दैववशात् सुपापः को नाम सत्सु विषमः प्रभवेत् सुखाय ॥ ४५ ॥**

**कुतस्तेषां भीतिरित्यत आह–ज्ञात्वेति ॥ ४२ ॥ जलप्रयाणं नावम् ॥ ४३ ॥ दाशोदिताभिः दाशोदितैः ॥ ४४ ॥ एषः धार्तराष्ट्रः पुरोचनेन पाण्डवानदहत् । हा कष्टमभूत् । एष धार्तराष्ट्रः कुमतिरिति सम्बन्धः । विषमः प्रतिकूलः ॥ ४५–६ ॥**

---

ससहाया असहायानभिद्रुत्य योधयेयुः तदा नः किं भवेत्, किं वा नो भवेदिति सुमहद् भयम् । वैचित्रवीर्यो न प्रीयेतेति भयम् । अथच भीष्मद्रोणादयोऽपि न प्रीयेरन्निति महद् भयम् । तैः साकं मृधे स्ववधोऽपि स्यादिति सुमहद् भयम् । माद्रीतनयावपि सम्प्रति पृथातनयौ । तनयानिति पर्याप्तम् । अथापि सकलानित्याह । तेन चतुर्षु भयस्य निर्विशेषतामाह ॥ ४२ ॥ हेतोरुत हेतोश्च । अतिसृष्टं प्रेषितम् । जलरये प्रसह्य यातीति जलप्रयाणं महान् प्लवः ॥ ४३ ॥ विदुरेण पूर्वोक्तैर्वचोभिरेव दाशैरनूदितैः । दाशैर्मार्दवपूर्वमुदितमिति द्योतयन् लिङ्गं व्यत्यस्य दाशोदिताभिरित्याह । विदुरेण पूर्वं हस्तिनपुरान्निर्गमनसमये उक्तैर्हितवचोभिरेव विश्वासिताः । अथेदानीं विदुरप्रहितैर्दाशैरुदिताभिर्वाग्भिः पुनरतितमां विश्वासिता इति वा । अधिरुह्य आरुह्य । इयांस्तु विशेषः । आङ् केवलमुपरि गमनमाह । अधिः पुनरुपरि गमनम्, गत्वा तत्रावस्थानं चाऽह । अधिगत्य सुरक्षिता वयमत्रेति विश्वस्य चाऽरोहणमधिरोहणम् । पृष्ठं पश्चात्कायः । भुजशिर इत्येतत् । स्वेषां सर्वेषां भारं तस्य भुजशिरसि निक्षिप्येत्यालङ्कारिकं वचः । अथेति कथान्तरारम्भे । मृतकान् । कः कस्य काय इति निर्णेतुमप्यशक्यतया दग्धानङ्गारनिभान् मृतानां कायान् । अरुदन् । रुदिर् अश्रुविमोचने, लुङ् ॥ ४४ ॥ असंशयं धार्तराष्ट्र एवादहत् । तदपि धर्मस्थितानेवादहत् । स्वातन्त्र्येऽन्तर्णीतणिच् । अदाहयदित्यर्थः । एवेति एवमित्यर्थे च । एवं कूटनीत्या, धर्मस्थितानधर्मेण विधानेनादहत् । पुरोचनेन करणेन । सोऽपि पाण्डवदहने करणभूतोऽपि । उक्तेऽर्थेऽर्थान्तरं न्यस्यति–को नाम । विषमः विप्रतीपः ॥ ४५ ॥

---

१. **'–कान् रुरुदुश्च'**

पौरेभ्य एव निखिलेन च[1] भीष्ममुख्या वैचित्रवीर्य्यसहितास्तु निशम्य हेति ।
ऊचुः सुदुःखितधियोऽथ सुयोधनाद्याः क्षत्ता मृषैव रुरुदुर्य्युयुजुश्च[2] कर्म्म ॥ ४६ ॥

भीमोऽप्युदूह्य वनमाप हिडिम्बकस्य भ्रातॄन् पृथां च तृषितैरभियाचितश्च ।
पानीयमुत्तरपटेऽम्बुजपत्रनद्धं दूरादुदूह्य ददृशे स्वपतोऽथ तांश्च ॥ ४७ ॥

रक्षार्थमेव परि जाग्रति भीमसेने रक्षः स्वसारमभियापयते हिडिम्बीम् ।
सा रूपमेत्य शुभमेव ददर्श भीमं साक्षात् समस्तशुभलक्षणसारभूतम् ॥ ४८ ॥

**पानीयं उदुह्य, आनयन्निति शेषः । स्वपतः तांश्च दूरात् ददृशे । हिडिम्बकवने स्थितान् तान् हिडिम्बो बाधते किं वेत्यभिप्रायवानिति भावः ॥ ४७ ॥ अभियापयते अभ्यययापयत् ॥ ४८ ॥**

---

निखिलेन सामस्त्येन । हा कष्टमित्यूचुः । निर्वासनेन पूर्वमेव दुःखिताः । सम्प्रति मृतिवार्तया सुदुःखितधियः । सुयोधनाद्याः, पाण्डवा दग्धा इत्यन्तः सन्तुष्टा बहिर्मृषैव रुरुदुः । क्षत्ता तु न दग्धा इति जानन् सत्यस्य निगूहनार्थं मृषा रुरोद । मृषैव युयुजुश्च । भीष्ममुख्याः पाण्डवदाहं सत्यं मत्वा दुःखादेव युयुजुः । अन्तर्णीतणिच् । संस्कारोपयुक्तं कर्म योजयामासुः, व्यवस्थापयामासुरित्येतत् । सप्तम्यर्थे वा प्रथमा । संस्कारकर्मणि युक्ता बभूवुरित्यर्थः ॥ ४६ ॥ हिडिम्बकस्य हिडिम्बाख्यस्य कुत्सितस्यासुरस्य । इतः पूर्वमज्ञातो हिडिम्बो हिडिम्बक इति वा । **'अज्ञाते'** [अ.सू.५.३.७३] इति, **'कुत्सिते'** [७४] इति च । उदूह्य दीर्घकालं सुदूरं चोढ्वा । अभिनन्द्य याचितः । पानीयमभिलष्य याचितः । अम्बुजपत्रनद्धं पानीयम् । नद्धमम्बुजपत्रमुत्तरपटे उत्तरीये निधाय तत्र नद्धं निक्षिप्तं पानीयमित्यर्थः । अयं स्वापः भीममहिमाभिव्यञ्जकः कथान्तरारम्भ इत्यथपदेनाऽऽह– स्वपतोऽथ दूरादेव ददृशे ॥ ४७ ॥ परितः रक्षार्थं जाग्रति । अभिज्ञातुं यापयते । मनुष्यमांसमभिलषन् यापयते । स्वस्य तज्जिघत्सालौल्येन यापयति । हिडिम्बस्य स्वसा हिडिम्बी हिडिम्बा वा । वक्ष्यति हि– **'नत आशु हिडिम्बया च'** [६०] इति । तथाहि प्रयोगः–**'न बिभेति हिडिम्बी च प्रेषिता किमनागता'** [आ.प.१६५.४] इति, **'हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः'** [५] इति च । अद्यापि किल नामधेयानीदृशानि श्रूयन्ते 'आफ्रिका'खण्डे । राक्षसभाषापदमिति न देवभाषायां निर्वचनमिष्यते । अथापि यद्यागृह्यते शृणु तर्हि देवभाषायामपि तस्य साधुत्वम्– डिम्ब इति डिम्भोऽप्युच्यते, उत्तानशयः शिशुः । डिम्ब इतीतिबाधाऽप्युच्यते । हिनस्ति डिम्बान् शिशूनपीति हिडिम्बः । डिम्बं डामरमुत्पाद्य हिनस्ति वा । **'पोतश्च पृथुकः शिशुः शाबो डिम्बश्च विज्ञेयः'** इति, **'डिम्बश्च विप्लवः कथितः'** इति चाभिधानम् । राक्षसजन्मनि तस्या वास्तवं नाम सालकटङ्कटीति । सालस्य प्राकारस्य सालानां वृक्षाणां वा, कटमावरणमपि कटति भित्त्वा यातीति सालकटङ्कटी । कटे आवरणे । कटी गतौ । **'ईशा**

---

१. **'निखिलं ननु भीष्म–'** । **'निखिला अपि भीष्म–'** इति क्वचित् । **'निखिलं त्वथ भीष्म–'** इति च ।

२. मूलादर्शे– **'रुरुदुः युयुजुश्च कर्म'** इत्यसंहिततया पठ्यते ।

सा राक्षसीतनुमवाप सुरेन्द्रलोकश्रीरेव शक्रदयिता त्वपरैव शच्याः ।
शापात् स्पृधा पतिमवाप्य च मारुतं[1] सा प्राप्तुं निजां तनुमयाचत भीमसेनम् ॥ ४९ ॥

तां भीम आह कमनीयतनुं न पूर्वं ज्येष्ठादुपैमि वनितां नहि धर्म्म एषः ।
सा चाऽह कामवशगा पुनरेतदेव स्वावेशयुग्धि मरुदग्र्यपरिग्रहस्य ॥ ५० ॥

सा भारती वरमिमं प्रददावमुष्यै स्वावेशमात्मदयितस्य च सङ्गमेन ।
शापाद् विमुक्तिमतितीव्रतपः[2]प्रसन्ना तेनाऽह[3] सा निजतनुं पवमानसूनोः ॥ ५१ ॥

**सा पूर्वं शच्याः अपरा शक्रदयितैव सुरेन्द्रलोकालङ्कारभूतैव सती, स्पृधा शचीस्पर्धया, पतिं शक्रमवाप्य शच्याः शापात् राक्षसीतनुमवाप । सा एवं राक्षसीभूता सा, भीमसेनं मारुतं मरुदवतारमवगम्य निजां तनुं प्राप्तुमयाचत । त्वदङ्गसङ्गं देहीत्ययाचत ॥ ४९–५० ॥ तेन भारत्यावेशयुक्तत्वेन मरुदङ्गसङ्गाच्छापमोक्षस्य च भावित्वेन सा पवमानसूनोः भीमस्य निजतनुं स्वस्वरूपं आह । पवमानसूनोः सकाशात् निजतनुं आप्तुं आह पतिर्भवेत्याहेति वा ॥ ५१–७ ॥**

---

**रक्षःस्वसा चास्मि राज्ञि सालकटङ्कटी'** [आ.प.१६७.१७] इति हिडिम्बवधे । साक्षात् स्वभावतः । नतु वरादिना । शुभलक्षणैः सारभूतं श्रेष्ठम् । शुभलक्षणवत्सु वा सारभूतम् ॥ ४८ ॥ शच्या अपरा शक्रदयिता सा शच्याः शापात् राक्षसीतनुमवाप । कुतः शची शशाप? शच्याः पतिं स्वयमपि स्पृधा पतित्वेनावाप्य, तेन सञ्जातया स्त्रीसहजया सपत्नी-स्पर्धया, असूययेति यावत् । अथचास्मिन् शापग्रस्ते राक्षसजन्मनि तन्मोक्षार्थं गन्तव्यं पतिं भीमसेनमयाचत । किमर्थम्? मारुतं पतिमवाप्य शापमोक्षेण निजां तनुं प्राप्तुम् । तथाचायमत्रान्वयभेदः– शच्या अपरैव सा शक्रदयिता शक्रं पतिमवाप्य स्पृधा शच्याः शापात् राक्षसीतनुमवाप । सा सम्प्रति मारुतं पतिमवाप्य निजां तनुं प्राप्तुम्, मारुतं भीमसेनमवाप्यायाचतेति । अथच निजां तनुं प्राप्तुम्, भोगायाऽप्तुम्, सम्भोक्तुम्, भीमसेनमयाचत । अद्भुतमिदं पद-कदम्बानामनेकधाऽन्वयेनैकवाक्यता नाम ॥ ४९ ॥ कमनीयतनुमित्यनेन यस्यां सुलभं शलभा इव निमज्जन्ति युवानस्ता-मप्ययं निराचकारेति भीमस्य निष्ठातिशयमाह । पूर्वां राक्षसीं तनुं विसृज्य धृतकमनीयतनुम् । उपैमि उद्वहामि । मरुद्गणा-ग्रण्यः प्रधानवायोः, परिग्रहस्य भार्याया भारत्याः स्वावेशः । मरुतः अग्र्यो नारीगणोत्तमः परिग्रहो वा । विशेषावेशः स्वावेशः । सौन्दर्यविशेषाधायक आवेशः ॥ ५० ॥ प्रीत्या दानं प्रदानम् । निजतनुं पवमानसूनोः तवेयं तनुरित्याह । अहं तव भार्या भवितुमर्हा । त्वं च भर्ता भवितुमिति । अथच निजतनुं स्वशरीरं पवमानसूनोः निजामात्मीयां भोग-योग्यां तनुमाह । अथच पवमानसूनोर्निजतनुम्, सहजावतारं भारतीवरात् स्वभोगयोग्यं भीमरूपमाह ॥ ५१ ॥

---

१. **'मारुतिं सा'** २. **'–मपि तीव्र–'** इति क्वचित् । ३. **'तेनाऽप सा'**

**ज्ञानं च नैजमभि दर्शयितुं पुनश्च प्राहेश्वरोऽखिलजगद्गुरुरिन्दिरेशः ।**
**व्यासस्वरूप इह चेत्य परश्व एव मां ते प्रदास्यति तदा प्रकरोषि मेऽत्थ्यर्म् ॥ ५२ ॥**

**काले तदैव कुपितः प्रययौ हिडिम्बो भीमं निहन्तुमपि तां च निजस्वसारम् ।**
**भक्षार्थमेव हि पुरा स तु तां न्ययुङ्क्त नेतुं च तानथ समासददाशु भीमम् ॥ ५३ ॥**

**सा भीममेव शरणं प्रजगाम तां च भ्रातॄंश्च मातरमथावितुमभ्ययात् तम् ।**
**भीमः सुदूरमपकृष्य सहोदराणां निद्राप्रभङ्गभयतो युयुधेऽमुना च ॥ ५४ ॥**

**तौ मुष्टिभिस्तरुभिरश्मभिरद्रिभिश्च[१] युध्वा नितान्तरवतः प्रतिबोधितांस्तान् ।**
**सञ्चक्रतुस्तदनु सोदरसम्भ्रमं तं दृष्ट्वैव मारुतिरहन्नुरसि स्म रक्षः ॥ ५५ ॥**

---

भीमस्याप्यभिमतं नैजं ज्ञानं दर्शयितुम् । प्रकटमाह । यथा कुन्त्यादयोऽपि शृणुयुः । किं प्राह? ईश्वर इत्यादि । अखिल-जगतः गुरुरीश्वरश्च । इह च एत्य । पररूपमित्युक्तम् । ते प्रदास्यति पत्नीत्वेन दास्यति । तदा निर्विचारं करोषि ममेष्टम् । त्वत्सङ्गमसुखं दास्यसीत्यर्थः । वर्तमानसामीप्यादेष्यतो निश्चितत्वाच्च वर्तमानव्यपदेशः । करोषि कृतवन्तमेव विद्धीत्यर्थः । **'दिव्यज्ञानेन जानामि व्यतीतानागतानहम् । श्वः प्रभाते महद् भूतं प्रादुर्भूतं जगत्पतिम् । व्यासं कमलपत्राक्षं दृष्ट्वा शोकं विहास्यथ'** [आ.प.१६७.२७–९] इति च । महद् भूतमिति विष्णोरवतारभूतमित्यर्थः । **'एको विष्णुर्महद् भूतम्–'** इति स्मरणात् ॥ ५२ ॥ प्रययौ दूरस्थात् स्वावासप्रदेशादाययौ । नियुद्धय हन्तुम् । निगृह्य हन्तुम् । तां च निकृतामवज्ञातस्वाज्ञां निजस्वसारमपि निहन्तुम् । न्यक्कृत्य हन्तुम् । पुरा न्ययुङ्क्त । **'पुरि लुङ् चास्मे'** [अ.सू.३.२.१२२] इत्यत्र त्रिविधः लट्लङ्लुङ्भिः प्रयोगो विहितः–पुरा नियुङ्क्ते । पुरा न्ययुङ्क्त । पुरा न्ययुक्त । स तु भक्षणार्थमेव तानानेतुं तां पुरा न्ययुङ्क्त हि । स तु नरमांसलोलः स इत्यर्थः । आदौ के त इति ज्ञातुम्, ज्ञात्वा नेतुं च । अथ, अनागतायां स्वसरि । समासदत् । भीमं समासदत्, भीमसमीपमासददित्यर्थः । भीमं समापयितुमासदिति च ॥ ५३ ॥ नान्यः पन्था विद्यत इति भीममेव प्राणप्रेप्सुः शरणं जगाम । तां च भ्रातॄंश्च अथ मातरं च कात्स्न्र्येनावितुं भीमस्तं हिडिम्बमभियोद्धुमयात् । युयुधे च । निद्राया अस्थाने बलाद् भङ्गः प्रभङ्गः । मैषां निद्राभङ्गोऽनेन जाल्मेन भूदित्युत्कटेच्छैव भयं नाम । अपकृष्य पाशबद्धमिव पशुं सतिरस्कारं कृष्ट्वा । निर्दयं च कर्षणमपकर्षणमुच्यते । सुदूरम्, यावति दूरे निद्राभङ्गो न भवेत् ॥ ५४ ॥ अथापि बभूवैव निद्राभङ्ग इत्याह– तौ मुष्टिभिः । प्रतिबोधो निद्रातः समुत्थितिः । प्रतिबोधितान् जागरितानित्यर्थः । नितान्तः अतिवेलः । येन दूरगता अपि गाढसुप्ता अपि जागर्यन्ते । अश्मभिः शिलाखण्डैः । अद्रिभिर्गिरिशृङ्गैः । सम्भूय चक्रतुः । सोदराणां सम्भ्रमं भीतिं व्यग्रतां वा ॥ ५५ ॥

---

१. **'–रुभिरद्रिभिरश्मभिश्च'**

**तद् भीमबाहुबलताडितमीशवाक्यात् सर्वैरजेयमपि भूमितळे[१] पपात ।**
**वक्त्रस्रवद्बहुलशोणितमाप मृत्युं प्रायात् तमोऽन्धमपि नित्यमथ क्रमेण ॥ ५६ ॥**

**हत्वैव शर्ववररक्षितराक्षसं तं सर्वैरवद्ध्यमपि सोदरमातृयुक्तः ।**
**भीमो ययौ तमनु सा प्रययौ हिडिम्बी कुन्तीं युधिष्ठिरमथास्य कृते ययाचे ॥ ५७ ॥**

**ताभ्यामनूक्तमपि यन्न करोति भीमः प्रादुर्बभूव निखिलोरुगुणभिपूर्णः ।**
**व्यासात्मको हरिरनन्तसुखाम्बुराशिर्विद्यामरीचिविततः सकलोत्तमोऽलम् ॥ ५८ ॥**

**दृष्ट्वैव तं परममोदिन आशु पार्त्था मात्रा सहैव परिपूज्य गुरुं विरिञ्चेः ।**
**उल्लाळिताश्च[२] हरिणा परमातिहार्द्दप्रोत्फुल्लपद्मनयनेन तदोपविष्टाः ॥ ५९ ॥**

**अनूक्तं अन्वनूक्तमपि । यद् यदा ॥ ५८–६२ ॥**

---

भीमस्य भीमं बाहुबलम् । अथच भीमस्य बाहुरेव बा कमनीया लता । ब कामने । तयाऽडितं किञ्चित् प्रहृतम् । अड उद्यमने । प्रहर्तुमुद्यमनमात्रेण ममारेति परिहसतीव । वहतेरलुचि न ळत्वम् । बहुलमित्येव, न क्वापि बहुळमिति । अलचि तु नियतं ळत्वम् । बहळमित्येव, न क्वापि बहलमिति । नित्यं पुनरावृत्तिरहितम् । अथ भीमपातितत्वादेव । भीमेन पातनानन्तरं प्रारब्धभोगानन्तरं वा । कालक्रमेण । न तु तदैव ॥ ५६ ॥ हत्वैव, हननसमनन्तरमेव, अविलम्बेनेत्येवकारार्थः । तं भीमेनैवायं हन्तव्य इति कृष्णेनापि हंसडिभकीये स्वयमहत्वा परित्यक्तम्, निरस्तसमस्तसैन्यं भगिनीमात्रावशेषम् । प्रययौ प्रीत्या ययौ । प्रसादयितुं ययौ । अथ भीमेन स्वोद्वाहनिराकरणानन्तरम् । अस्य भीमस्य कृते । स्वोद्वाहाय भीममङ्गीकारयितुम् । ययाचे । शापमोचनं हि फलमात्मगामि ॥ ५७ ॥ अनूक्तमपि अनुमत्य उक्तमपि, अन्वनु क्रियासमभिहारेणोक्तमपि । यत् यस्मान्न करोति न चकार तस्मात् प्रादुर्बभूव । यदा न चकार तदा वा प्रादुर्बभूव । अभितः अनन्ततया पूर्णः । अलं निरवधिकम् ॥ ५८ ॥ मात्रा सहैव । न केवलं साह्यम् । किन्तु तां पुरस्कृत्येत्येवकारेणाह । भक्तिश्रद्धाभ्यां परिपूर्णं पूजनं परिपूजनम् । विरिञ्चेः साक्षाद् गुरुम् । तेन भीमस्यापि । उल्लाळिताः प्रीत्या सान्त्वपूर्वं सम्भाविताः । लड उपसेवायाम् । डस्य ळः । लाडयति लाडयते । लाळयति लाळयते । अथवा लल ईप्सायाम् । लळ ईप्सायामिति च पठनीयम् । लालयते लाळयते । मानुषसम्बन्धेन पौत्रा इति हार्देन फुल्लम् । पौत्रत्वेऽपि न धार्तराष्ट्रा इव धूर्ताः । किन्तु धर्मनिरता इत्यतिहार्देनोत्फुल्लम् । दुष्टनिधनाङ्गतयाऽवतीर्णा इति परमातिहार्देन प्रोत्फुल्लम् ॥ ५९ ॥

---

१. **'–तले'**

२. **'विरिञ्चेः । सँल्लालिताश्च'**

**तान् भक्तिनम्रशिरसः समुदीक्ष्य कृष्णो भीमं जगाद नत आशु हिडिम्बया च ।**
**एतां गृहाण युवतीं सुरसद्मशोभां जाते सुते सहसुता प्रति यातु चैषा ॥ ६० ॥**

**एवं ब्रुवत्यगणितोरुगुणे रमेश ओमित्युदीर्य्य कृतवांश्च तथैव भीमः ।**
**स्कन्धेन चोह्य विबुधाचरितप्रदेशान् भीमं प्रयात्युदय एव रवेर्हिडिम्बी ॥ ६१ ॥**

**सा नन्दनादिषु वनेषु विहृत्य तेन सायं प्रयाति पृथया सहितांश्च पार्त्थान् ।**
**एवं ययावपि तयोरिह वत्सरार्द्धो जातश्च सूनुरतिवीर्य्यबलोपपन्नः ॥ ६२ ॥**

**देवोऽपि राक्षसतनुर्न्निरृतिः पुरा य आवेशयुक् च गिरिशस्य घटोत्कचाख्यः ।**
**पूर्वं घटोपममुष्य शिरो बभूव केशा निमेषत उदासुरतो हि नाम ॥ ६३ ॥**

**यः पुरा देवोऽपि राक्षसतनुः निरृतिः घटोत्कचाख्यः सूनुः जातः । तस्मिन् घटोत्कचे शब्दप्रवृत्तिनिमित्तमाह–पूर्वमिति । पूर्वं उत्पत्तिसमय एव । अतो हि अत एव नाम घटोत्कच इति नाम तस्य ॥६३–६५॥**

---

भक्त्या नम्रं नमनशीलं शिरः । ताच्छीलिको रः । प्रीत्या सङ्गतमनुग्रहोन्मुखं चेक्षणं समुदीक्षणम् । भीमेन हिडिम्बया च नतः, भीमं जगाद । युवतीमिति । वैयाकरणाः **'यूनस्तिः'** [अ.सू.४.१.७७] इति युवतिपदमिदन्तं मन्यन्ते । तेन **'एतां गृहाण युवतिम्'** इति वक्तव्यम् । शक्यं च वक्तुम् । न च्छन्दः कुप्यति । अथापि युवतीमित्याह । तेनेदं विनेयानामवगमयति– इदमिदन्तमित्ययोगव्यवच्छेद एव । नान्ययोगव्यवच्छेद इति स्वमतमिति । तेन इदन्तमीदन्तमपि भवतीति । अभिमतमेतद् वैयाकरणानामपि । तथाहि गणसूत्रम्–**'सर्वतोऽक्तिन्नर्थादित्येके'** इति [अ.सू.४.१.४५] । **'सिद्धासनस्थं युवतीसहायं क्रीडन्तमक्षैर्गिरिराजमूर्ध्नि'** [आ.प.२१४.१४] इति भारते । सुरसद्मशोभामिति । देवजन्मनि तस्याः कमलपालिकेति नाम । **'स्नुषा कमलपत्राक्षी नाम्ना कमलपालिका । वशवर्तिनी तु भीमस्य पुत्रमेषा जनिष्यति'** [आ.प.१६८.४९] इति च । यत आगता तं सुरलोकं प्रति यातु शापमुक्ता ॥ ६०॥ भीमं स्कन्धेनोढ्वा देवलोकभागान् प्रणयाद् याति । प्रणयविहाराय याति । उदयसमनन्तरमेवाविलम्बेन ॥ ६१ ॥ प्रयाति प्रसादयितुमायाति । वत्सरार्ध इति सप्त मासाः । **'अतृप्ता भीमसेनेन सप्तमासोपसङ्गता । प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलात्'** [१६९.६] इति च ॥ ६२ ॥ राक्षसतनुरपि देवस्वभावः । स्वभावतो देवोऽप्याकारेण राक्षसः । देवानामिव निश्चिता ऋतिर्गतिरवगतिर्वाऽस्येति निरृतिः कोणपः । घटोपमे शिरसि ऊर्ध्वमुद्गतः कचोऽस्येति घटोत्कच इति नाम । उदासुः उद्गता बभूवुः । अस्तेर्लिटि आसुरिति रूपं केचिन्न मन्यन्ते । तेषां पक्षे आसुरिति विभक्तिप्रतिरूपकमव्ययम् । भ्वादेरसतेर्वा लिटि रूपम् । अस गतिदीप्त्यादानेषु । अतः कारणात् । एतेन **'घटो हास्योत्कच इति माता तं प्रत्यभाषत । अभवत् तेन नामास्य घटोत्कच इति स्म ह'** [आ.प.१६९.१३] इति भारतवचनं विवृतम् ॥ ६३ ॥

जाते सुते समयतो भगवत्कृतात् स भीमो जगाद ससुतां गमनाय तां च ।
स्मृत्याऽभियान उभयोरपि सा प्रतिज्ञां तेषां विधाय च ययौ सुरलोकमेव ॥ ६४ ॥

व्यासोऽपि पाण्डुतनयैः सहितो बकस्य रौद्राद् वराज्जयवधापगतस्य नित्यम् ।
यातो वधाय परमागणितोरुधामा पूर्णाक्षयोरुसुख आशु तदैकचक्राम् ॥ ६५ ॥

तान् ब्राह्मणस्य च गृहे प्रणिधाय कृष्णः शिष्या ममैत इति विप्रकुमाररूपान् ।
आयामि काल इतिताननुशास्य चायात् ते तत्र वासमथ चक्रुरनूच्य वेदान् ॥ ६६ ॥

भिक्षामटत्सु सततं प्रतिहुङ्कृतेन [1]भीमे विशां सदन एव गृह्यप्रमाणम् ।
भाण्डं कुलालविहितं प्रतिगृह्य गच्छत्याशङ्कयाऽवगमनस्य तमाह धार्म्मः[2] ॥ ६७ ॥

स्थूलं हि सद्म पृथिवीसहितं त्वरक्ष उद्धृत्य वह्निमुखतस्तदु चैकदोष्णा[3] ।
भाण्डं तदर्थमुरु कुम्भकरेण दत्तं भिक्षां च तेन चरसि प्रतिहुङ्कृतेन ॥ ६८ ॥

**काले इतो निर्गमनकाले ॥ ६६ ॥ अवगमनस्य भीम इति ज्ञानस्य आशङ्कया ॥ ६७ ॥ पृथिवीसहितं**

समयो नियमबन्धः । **'जाते सुते सहसुता प्रतियातु चैषा'** इति भगवत्कृतात् समयतः । **'सह वासो मया जीर्णस्त्वया कमलपालिके । पुनर्द्रक्ष्यसि राज्यस्थानित्यभाषत तां तदा'** [आ.प.१६९.२१] इति च । अभियानं भूलोकाभिमुखं यानम् । उभयोरपि स्वस्य घटोत्कचस्य च । सनिर्धारोऽभ्युपगमः प्रतिज्ञा । तेषां समातृकाणां पाण्डवानाम् ॥ ६४ ॥ रौद्रात् रुद्रदत्तात् उग्राच्च वरात्, जयवधाभ्यामपगतस्य वधाय । जय इति जय्यत्वम् । परममप्राकृतमगणितमत एवोरु उत्कृष्टं, अभक्तानां दाहकं भक्तानां शीतलं च धाम तेजोऽस्य । दुःखासम्भिन्नं सुखमुरुसुखम् ॥ ६५ ॥ ब्राह्मणस्य च गृहे । आधिक्यार्थे चः । ब्राह्मणोत्तमस्य गृहे । उत्तमे च गृहे । कथमन्यथा तस्य व्यासदर्शनभाग्यम्? तद्गृहे पाण्डवानां च वासः? निगूह्य निधानं प्रणिधानम् । अत एव **'शिष्या ममैते'** इति गुह्यसमाधिभाषयाऽऽह । आयामि काले यदाऽऽगन्तव्यमापतति । अनुवर्तनाय शासनमनुशासनम् । अथ व्यासनिर्गमनानन्तरम् । उपदेशानुगुणं वचनमनुवचनम् । यथोपदेशमनुवदन्त अधीयाना ऊषुरित्यर्थः ॥ ६६ ॥ कुलालविहितमिति । **'कुम्भकारोऽददात् पात्रं महत् कृत्वाऽतिमात्रकम् । प्रहसन् भीमसेनाय विस्मितस्तस्य कर्मणा'** [आ.प.१७१.१९] इति बकवधे । उपायनतया दत्तस्य स्वीकरणं प्रतिग्रहः । प्रतिगृहं हुङ्कृतेन पाण्डवेषु भिक्षामटत्सु । भिक्षाप्रतिग्रहार्थं च हुङ्कृतं प्रतिहुङ्कृतम् । **'मौनव्रतेन संयुक्ता भैक्षं गृह्णन्ति पाण्डवाः'** [आ.प.१७१.९] इति च । भीमे च भिक्षार्थं गच्छति सति स भीम इति तेन वयं पाण्डवा इति जनो जानीयादित्याहितया शङ्कया । अनिष्टसम्भावना ह्याशङ्का । धार्मो धर्मसूनुः ॥ ६७ ॥ **'तस्याद्भुतं कर्म कृत्वा**

१. **'भीमो विशाम्'** २. **'धर्मः–'** ३. **'–मुखतस्तु तदेकदोष्णा'** । **'–स्तदुतैकदोष्णा'** इति क्वचित् ।

**धर्म्मस्य ते सुनियतेर्बलतश्च बोधो भूयात् सुयोधनजनस्य ततो भयं मे ।**
**मात्रा सहैव वस फल्गुनपूर्वकैस्त्वमानीतमेव परिभुङ्क्ष्व नतु व्रजेथाः ॥ ६९ ॥**

**इत्युक्त आशु स चकार तथैव भीमस्तेऽपि स्वधर्म्मपरिरक्षणहेतुमौनाः ।**
**भिक्षां चरन्त्यथ चतुर्ष्वपि तेषु यातेष्वेकत्र मातृसहितः स कदाचिदास्ते ॥ ७० ॥**

**तत्काल एव रुदितं निजवासहेतोर्विप्रस्य दारसहितस्य निशम्य भीमः ।**
**स्त्रीबालसंयुतगृहे शिशुलाळनादौ[१] लज्जेदिति स्म जननीमवदन्नचागात् ॥ ७१ ॥**

**यथा भवति तथा सद्म उद्धृत्य । तदु उद्धरणमपि एकदोष्णा । उरु भाण्डम् । प्रतिहुङ्कृतेन प्रतिमन्दिरं हुङ्कारेण हेतुना । भिक्षां देहीति वचनरहितः ॥ ६८–७० ॥ निशम्य जननीमित्यवदत् । स्त्रीबालसंयुतगृहे स्थातुं**

---

**महान्तं भारमाददे'** [१७१.२०] इति भगवता व्यासेन किञ्चिदिव सूचितं स्वपूर्वावतारस्याद्भुतं कर्म स्वयमाचार्योऽत्र स्फुटं विववार– स्थूलं हि । दह्यमानं कुम्भकरस्य सद्म । वैयाकरणास्तु कुम्भकारं मन्यन्ते । यः कुम्भं करोति । **'कर्मण्यण्'** [अ.सू.३.२.१] इति । ननु ताच्छील्ये टप्रत्यये कुम्भकर इत्यपि स्यात्, **'कृञो हेतुताच्छील्यानुलोम्येषु'** [३.२.२०] इति स्मरणादिति? न स्यात् । ताच्छील्यं हि स्वाभाविकी फलानपेक्षा प्रवृत्तिः । नहि कुम्भकारः फलमनपेक्ष्य कुम्भं करोति । तर्हि कथम्? **'अन्येभ्योऽपि दृश्यन्ते'** [३.२.५५] इत्युपसंहारादिति गृहाण । **'अन्येभ्योऽपि धातुभ्योऽन्येऽपि प्रत्यया भवन्ति, ये प्रयोगेषु दृश्यन्ते'** इति सूत्रार्थः । अथवा **'कुम्भकरेण'** इति संहितापाठः । **'कुम्भकारेण'** इति पदपाठः । **'इन्द्रावरुण नू नु वाम्'** इतिवत् संहितायां ह्रस्वता । **'सगिरिवरधरतळवह'** इतिवच्च । तदिदं सर्वं परमवैदिकस्याऽचार्यस्य शोभते भाषारिङ्गणम् । **'छन्दसि विभाषा ह्रस्वदीर्घत्वे'** इति पठनीयम् । छन्दसि दीर्घमक्षरं ह्रस्वं भवति । ह्रस्वं वा दीर्घम् । छन्दसीति वृत्तवचनम् । न श्रुतिवचनम् । तेन संहितापाठः प्रतृण्णपाठ इति भवति भेदः । संहितायां ह्रस्वत्वमर्थह्रासमाह । दैर्घ्यमर्थाधिक्यम् । अत्र दैर्घ्यलोपो भृतिलोपमाह– भृत्यर्थं कुम्भान् कुर्वन् कुम्भकारो भवति । नात्र भृत्यर्थं कुम्भं चकार । किन्तु कृतज्ञतया भीमसेवार्थं चकारेति ॥ ६८ ॥ स्वानन्दाय भगवदिच्छया च नित्यबद्धता सुनियतिः । ते धर्मस्य सुनियतत्वात् । निरपवादत्वादिति यावत् । अथच सुनियतेः भगवदेकनियम्याद् बलतश्च । ते बोधः परिचयो भूयात् । अतस्त्वं मात्रा सह गृह एव वस । फल्गुनपूर्वकैरानीतमेव । भ्रातृभिः परिगतं भोजनं परिभोजनम् । नतु व्रजेथाः । नैव व्रजेः । अक्षराधिक्येन सर्वथा न व्रजेरित्याह । अपरिचयेन तवैव च महान् लाभ इत्यात्मनेभाषा ॥ ६९ ॥ स्वधर्मपरिरक्षणमेव हेतुर्यस्य । तादृशं मौनं येषाम् । अयाचनं हि राज्ञां स्वधर्मः । तेन भिक्षां देहीति याचनमधर्मः । अतो मौनेनाभिक्षन्त । स्वधर्मपरिरक्षणस्य हेतुर्वा मौनम् । आपद्यपि किं कृतं धर्माय स्यात् किम-धर्मायेति परीक्षम्परीक्षं चरणं परिरक्षणम् । अथेति कथान्तरारम्भे । एकत्र एकान्ते ॥ ७० ॥ गृहस्थो जनः परपुरुष-

---

१. '–लालनादौ'

जानीहि विप्ररुदितं कुत इत्यतश्च योग्यं विधास्य इति सा प्रययौ च शीघ्रम् ।
सा संवृतैव सकलं वचनं गृहेऽस्य शुश्राव विप्रवर आह तदा[1] प्रियां सः ॥ ७२ ॥

दातव्य एव हि करोऽद्य च रक्षसोऽस्य[2] साक्षाद् बकस्य गिरिसन्निभभक्ष्यभोज्यः ।
पुंसाऽनसा च सहितानडुहा[3] पुमांस्तु नैवास्ति नोऽप्रददतां च समस्तनाशः ॥ ७३ ॥

अन्यत्र याम इति पूर्वमुदाहृतं मे नैतत् प्रिये तव मनोगतमास तेन ।
यास्यामि राक्षसमुखं स्वयमेव मर्त्तुं भार्य्यैनमाह न भवानहमत्र यामि ॥ ७४ ॥

**शिशुलाळनादौ प्रवर्तितुं च लज्जेत् । अत्र च भीमेन (शिशु)लाळनादिना[4] भवेत् । तच्चायुक्तम् । इति स्म इत्यभिप्रायवान् स्वयं नागात् ॥ ७१–२ ॥ साक्षाद् गिरिसन्निभभक्ष्यभोज्यः । अनुपचरितपर्वत-समानभक्ष्यभोज्योपेतः । पुंसा, सहितानडुहा अनडुद्भ्यां सहितेन, अनसा शकटेन च युक्तः ॥ ७३ ॥ भवान् न यातु ॥ ७४ ॥**

---

सन्निधाने शिशुलाळनादौ, आदिना स्त्रीसमाधानकरणे च, लज्जेदिति जननीं गच्छेत्यवदत् । लज्जेत् लज्जेत । ओ लस्जी व्रीडे । लज्जयाऽपेक्षितानाविष्करणेन प्रष्टुरिष्टहानिः स्यादिति परस्मैभाषा । अथच बालसंयुतगृहे परपुरुषगमने शिशु-लाळनादौ गृहिणी च लज्जेदिति जननीं प्रेषयामासेत्यर्थः । आदिना गृहसमस्याचर्चायां पत्युः प्रत्यायने च । संयुतगृह इत्यनेन चेदं सूचयाम्बभूव – स्त्रीबालैः संश्लेषेण प्रेमबन्धेन युतम्, सम्प्रति समस्यया सङ्कटेन च युतं गृहम् ॥ ७१ ॥ कुतः कारणात् । अतश्च रुदितकारणे विदिते सति च । अतः कारणस्य वेदनादिति वा । अतः परमिति वा । यद् विधातुं योग्यं तद् विधास्ये । इत्युदिता सा । भीमवचनश्रवणेन प्रसन्ना ययौ ॥ ७२ ॥ बकतीति बक इत्यन्वर्थं नाम । बक अदने । गिरिसन्निभानि भक्ष्याणि भोज्यानि च यत्र स करः । गिरिसन्निभानीति नेयमालङ्कारिकी भणिति-भङ्गी । वस्तुस्थितिकथनमेतदिति द्योतनाय गिरिसन्निभेत्याह । सपरिवारस्याऽद्यूनस्य बकस्योदरपूरणाय प्रत्यहं महान्तमाद्यराशिमूढ्वा चलन्तं शकटं प्रकटं पर्वतमिव पुरजना ददृशुरित्यर्थः । वक्ष्यति च–**'शैलनिभमाद्यराशिम्'** [८८] इति । साक्षात् दातव्यः । न तु परैर्दापयित्वा वारणीयः । सहितौ सयुजाविति यावत्, अनड्वाहौ यत्र तेनानसा शकटेन, यन्त्रा पुंसा च सह । अप्रददतां प्रयत्यापि दातुमप्रभवताम् ॥ ७३ ॥ उदाहृतं उदाहरणपूर्वमुदीरितम्, प्रस्तावितं वा । भाविकार्यानुगुणं हि पूर्ववचनमुदाहारमाचक्षते । राक्षसमुखं राक्षसप्रमुखम्, तस्य मुखमास्यं च यास्यामि । इच्छार्थेऽपि लृट् प्रयुज्यते । यातुमिच्छामि । तदा साऽह–न भवान् यातु । इयमहं यामि यातुमुद्युक्तैवेति । अत्र अस्मिन् विषये । यत्र बकस्तं देशमिति वा ॥ ७४ ॥

---

१. **'ततः प्रियाम्'** इति क्वचित् । २. **'राक्षसस्य'** ३. **'सहितोऽनुडुहा'** इत्यपि क्वचित् ।

४. गलिताक्षरं वाक्यम् । **'अत्र च भीमे गते शिशुलाळनादि न भवेत्'** इति स्यात् ।

**अर्थे तवाद्य तनुसन्त्यजनादहं स्यां लोके सतीप्रचरिते तद्दते त्वधश्च ।**
**कन्याऽऽह चैनमहमेव[1] न कन्ययाऽर्थ इत्युक्त आह धिगिति स्म स विप्रवर्य्यः ॥ ७५ ॥**

**कन्योदिता बत कुलद्वयतारिणीति जाया सखेति वचनं श्रुतिगं सुतश्च ।**
**आत्मैव तेन नतु जीवनहेतुतोऽहं धीपूर्वकं नृशनके[2] प्रतिपादयामि ॥ ७६ ॥**

**एवं रुदत्सु सहितेषु कुमारकोऽस्य प्राह स्वहस्तगतृणं प्रतिदर्श्य चैषाम् ।**
**एतेन राक्षसमहं निहनिष्य एवेत्युक्ते सुवाक्यमनु सा प्रविवेश कुन्ती ॥ ७७ ॥**

**पृष्टस्तयाऽऽह स तु विप्रवरो बकस्य वीर्य्यं बलं च दितिजारिभिरप्यसह्यम् ।**
**संवत्सरत्रययुते दशके करं च प्रातिस्विकं दशमुखस्य च मातुलस्य ॥ ७८ ॥**

**सतीप्रचरिते पतिव्रताभिः प्राप्ये लोके । अहमेव यामि ॥ ७५ ॥ 'सखा ह जाया' इति श्रुत्यनुवादेन जाया (सखेति वचनमित्युक्तम् । न्रशन एव न्रशनकः । स्वार्थे) कप्रत्ययः ॥ ७६–७ ॥ दशके अतीते । प्रातिस्विकं प्रतिप्रति दातव्यं करं चाऽह ॥ ७८ ॥**

---

तवार्थे प्रयोजनाय । सन्तोषेण तनुत्यजनात् । सतीभिः प्रेत्य चरिते गते, अनुभूते च । चर गतौ भक्षणे च । तद्दते च अधः नरके स्याम् । अहमेव, यामीति वर्तते ॥ ७५ ॥ जाया सखेतीति । **'सखा ह जाया कृपणं ह दुहिता'** [ऐ.ब्रा. ७.१३.८] इत्यैतरेयी श्रुतिः । आत्मैव सुत इति । **'आत्मा वै पुत्रनामाऽसि'** [बृ.उ.६.४.२६] इति बृहच्छ्रुतिः । नूनश्नातीति न्रशन एवाल्लोपेन नृशन उच्यते । तेन तस्य गुणहीनतामाह । अत एव कुत्सितश्चेति नृशनक इत्याह । नृणां शमपनयतीति च नृशनकः सः । नृणां शं न करोतीति वा । **'न्रशनके'** इति पाठे तु स्फुटोऽर्थः । कन्यां वा जायां वा सुतं वा नतु नैव प्रतिपादयामि । स्वेच्छया विश्राणनं प्रतिपादनम् । **'प्रतिपादनं तु दाने च प्रतिपत्तौ प्रबोधने'** इत्यभिधानम् ॥ ७६ ॥ अस्य प्रियः कुमारः । एषां एकैकं प्रति दर्शयित्वा । प्रत्ययाय दर्शनं च प्रतिदर्शनम् । तृणेन निगृह्य हनिष्ये । अकर्मकक्रियावचनादाङ्पूर्वाद्धन्तेरात्मनेपदं भवतीति वैयाकरणाः वदन्ति–**'आङो यामहनः'** [अ.सू.१.३.२८] इति । नायमत्राकर्मकक्रियावचनः । नाप्याङ्पूर्वः । तत् कथं निहनिष्य इति? उभयपदिनस्तत्ववादिन इति दत्तमुत्तरम् । **'आजघ्ने विषमविलोचनस्य वक्षः'** इति भारविप्रयोगादकर्मकक्रियावाचित्वं गतम् । आचार्यप्रयोगादाङ्-पूर्वत्वं च गतम् । तेनायोगव्यवच्छेद एवायम्, नान्ययोगव्यवच्छेद इति विज्ञायते । अकर्मकादाङ्पूर्वकान्नियतमात्मनेपदम्, अन्यत्र तु विभाषेति । तेनान्यत्रापि स्याद् यत्र फलमात्मगामि । अत्र शिशुकेन हतं रक्ष इति महद् यशआख्यं फलं बालगामि । दुःखप्रसङ्गेऽपि सुखकरं वाक्यं सुवाक्यम् ॥ ७७ ॥ परक्षपणहेतुर्वीर्यम् । परैरधृष्यताहेतुर्बलम् । करं च दातव्यमाह । दशमुखस्यापि मातुल इत्यनेकयुगजीवित्वमाह । रामायणेऽनुक्तोऽयं कैकसीभ्राता ॥ ७८ ॥

---

१. **'–महमेमि न'**

२. **'न्रशनके'** । प्राचीनकोशेषु सर्वत्रापि नृशनके इत्येव पठ्यते ।

श्रुत्वा तमुग्रबलमत्युरुवीर्य्यमेव रामायणे रघुवरोरुशरातिभीतम् ।
विष्टं बिलेष्वथ नृपान् वशमाशु कृत्वा भीत्यैव तैस्तदनु दत्तकरं ननन्द ॥ ७९ ॥

एवं बलाढ्यममुमाशु निहत्य भीमः कीर्त्तिं च धर्म्ममधिकं प्रतियास्यतीह ।
सर्वे वयं च तमनु प्रगृहीतधर्म्मा यास्याम इत्यवददाशु धरासुरं तम् ॥ ८० ॥

सन्ति स्म विप्रवर पञ्च सुता ममाद्य तेष्वेक एव [१]नरवैरिमुखाय यातु ।
इत्युक्त आह स न ते सुतवद्ध्ययाऽहं पापो भवानि[२] तव हन्त मनोऽतिधीरम् ॥ ८१ ॥

उक्तैवमाह[३] च पृथा तनये मदीये विद्याऽस्ति दिक्पतिभिरप्यविषह्यरूपा ।
उक्तोऽपि नो गुरुभिरेष नियुङ्क्त एतां वद्ध्यस्तथाऽपि न सुरासुरपालकैश्च ॥ ८२ ॥

उक्त्वैवमेत्य निखिलं च जगाद [४]भीम उद्धर्ष आस स निशाम्य महास्वधर्म्मम् ।
प्राप्तं विलोक्य तमतीव विघूर्णनेत्रं दृष्ट्वा जगाद यमसूनुरुपेत्य चान्यैः ॥ ८३ ॥

**रामायणे श्रीरामविक्रान्तिकाले । अथ रामतिरोधनानन्तरम् । श्रुत्वा ननन्देति सम्बन्धः ॥ ७९ ॥ किमिति ननन्देत्यत आह– एवमिति । यास्यामः कीर्तिं च इति मत्वा ननन्द ॥ ८०–२ ॥ एत्य निखिलं च भीमे**

रामस्य भूमावयनं यत्र काले । अथ रामावतारसमास्यनन्तरम् । तदनुकूलतया जीवद्भिः, तदनुगुणतया दत्तकरं श्रुत्वा कुन्ती ननन्द ॥ ७९ ॥ किमिति ननन्द? आह–एवं बलाढ्यम् । धर्ममधिकम्, कीर्तिं चाधिकां प्रतिष्ठापूर्वं यास्यति । अथच प्रतियास्यति, इह ब्राह्मणगृहे वासस्य प्रतियातनां च प्राप्स्यतीत्यर्थः । तमनुसृत्य वयं च प्रकृष्टधर्मवन्तः सन्त इतो यास्याम इति ननन्द । प्रगृहीतधर्माः कीर्तिं यास्याम इति वा । अतश्च धरासुरमवदद् वक्ष्यमाणम् ॥ ८० ॥ मुखाय मुख्याय, तं शिक्षयितुम् । मुखाय भक्ष्यत्वेन यात्विति प्रातीतिकोऽर्थः । अद्य यातु । वध्या वधः । हनो वधादेशो भावे च क्यपि रूपम् । हनो वा वधः क्यपीति वक्तव्यम् । तेन रूपद्वयम्–वध्या, हत्या । हन्तेति विस्मये विषादेऽनुकम्पायां च ॥ ८१ ॥ आह च । उक्त्वा तं विप्रवरमाश्वास्याङ्गीकारयामास चेति चकारेण ध्वनयति । न विद्यादेवतायाः शक्तिप्रदर्शनमप्यपेक्षितम् । यतो रूपदर्शनमेव परेषामविषह्यमित्याह– अविषह्यरूपेति । यदा मन्त्रदेवता स्वयमुग्ररूपा शत्रूणां पुर आविर्भवति तदा तदुग्ररूपं दृष्ट्वैव दिक्पाला अपि पलायन्त इति । तथाऽपि अविषह्याया विद्याया अप्रयोगेऽपि न वद्ध्यः स्वरूपशक्त्यैव । सुरैरसुरैस्तेषां पालकैश्च ॥ ८२ ॥ भीमे जगाद । अन्तरमित्वा हासलास्यादिरूपेण बहिरुद्गतो

१. **'एव पुरुषादमु–'** इति क्वचित् । २. **'भवामि तव'**
३. **'उक्तैनमाह'** ४. **'भीममुद्धर्ष–'** इति क्वचित् ।

मातः किमेष [१]मुदितोऽतितरामिति स्म तस्मै च सा निखिलमाह स चाब्रवीत् ताम् ।
कष्टं त्वया कृतमहो बलमेव यस्य सर्वे श्रिता वयममुं च निहन्सि भीमम् ॥ ८४ ॥

यद्बाहुवीर्य्यपरमाश्रयतो हि राज्यमिच्छाम एव निखिलारिवधं स्वधर्म्मम् ।
सोऽयं त्वयाऽद्य निशिचारिमुखाय[२] मातः प्रस्थाप्यते वद ममाऽशु कयैव बुद्ध्या ॥ ८५ ॥

इत्युक्तवन्तममुमाह सुधीरबुद्धिः कुन्ती न पुत्रक निहन्तुमयं हि शक्यः ।
सर्वैः सुरैरसुरयोगिभिरै[३]प्यनेन चूर्णीकृतो हि शतशृङ्गगिरिः प्रसूत्याम् ॥ ८६ ॥

एष स्वयं हि मरुदेव नरात्मकोऽभूत् को नाम हन्तुमिममाप्तबलो जगत्सु ।
इत्येवमस्त्विति स तामवदत् परेद्युर्भीमो जगाम शकटेन कृतोरुभोगः ॥ ८७ ॥

**जगाद । स निशम्य महास्वधर्मं महान्तं नारायणशत्रुनिग्रहरूपं स्वधर्मं प्राप्तं विलोक्य उद्धर्ष आस । विघूर्णनेत्रं हर्षाद् विकसितनेत्रम् । अन्यैः सह ॥ ८३ ॥ अमुं च एतादृशं (च) भीमं निहन्सि ॥ ८४–९ ॥ प्रसूत्यां प्रसूतिसमये ॥ ८६ ॥ मरुत् स्वयमेव नरात्मकः एषोऽभूद्धि । आप्तबलः (समर्थः) । कृतोरुभोगः शकटेन जगाम ॥ ८७–९१ ॥**

---

हर्ष उद्धर्षः । प्राप्तम् । प्रेति विष्णुवचनम् । **'अकयप्र–'** इत्यादिस्मरणात् । विष्णुना तदनुग्रहेणाऽप्तम् । अयाचितमुपगतं महास्वधर्मम् । नराशनत्वाल्लोकद्विषो निग्रह इति धर्मः । तत्रापि विष्णुद्विषो निग्रह इति महानयं धर्मः । लोकरक्षणाद् भगवद्धर्मरक्षणाच्च । न केवलं क्षत्रकुले जात इति भीमस्यायं महाधर्मः । किन्तु तस्य स्वरूपभूतोऽयं धर्म इत्याह– महास्वधर्म इति । इतरैरसाध्यत्वाच्च, स्वेनैव साध्यत्वाच्चायं महान् स्वधर्मः । वक्ष्यति हि–**'न वश आस जरा-सुतस्य । भौमस्य पूर्वमपि नो भरतस्य राज्ञः–'** [९२] इति । विलोक्य विचार्य विमृश्य । विघूर्णं हर्षातिशयेन नृत्यदिवोत्फुल्लम् । मातरमुपेत्य, अन्यैश्च भिक्षार्थं स्वेन सह गतैस्त्रिभिर्भ्रातृभिश्च सह ॥ ८३ ॥ स्मेति विस्मये कौतुके च । निहन्सि राक्षसमुखे निपात्य जिघांससि ॥ ८४ ॥ परमाश्रयत एव ॥ ८५ ॥ अतिधीरमनाः । सुधीराणां पुरुषाणामिव सर्वसहाऽस्या व्यवसायात्मिका बुद्धिरिति च । अथ च सुधीः पण्डिता च, अबुद्धिः भगवति निहितमतिश्च । सुधीरथाप्यबुद्धिरिति विरोधाभासश्च । पुत्रकेति प्रीत्या कन् । असुरसहितैः सुरैरपि ॥ ८६ ॥ इत्याह कुन्ती । सोऽपि मातृवचनेन जातविश्रम्भः एवमस्त्विति अवदत् । शकटेन सह । कृतोरुभोगः । शकटनिहितोरुभोगद्रव्यः । प्रस्थानात् पूर्वं पूर्वेद्युर्नक्तं स्वयं कृतोरुभोजनो वा । तथाहि भारते ॥ ८७ ॥

---

१. 'मुदितो नितरा–' २. '–चारमुखाय' ३. '–योनिभिरप्यनेन'

**गत्वा त्वरन् बकवनस्य सकाश आशु[१] भीमः स [२]पायससुभक्ष्यपयोघटाद्यैः ।**
**युक्तं च शैलनिभमुत्तममाद्यराशिं[३] स्पर्शात् पुरैव नरभक्षितुरत्तुमैच्छत् ॥ ८८ ॥**

**तेनैव चान्नसमितौ परिभुज्यमान उत्पाट्य वृक्षममुमाद्रवदाशु रक्षः ।**
**वामेन मारुतिरपोह्य तदा प्रहारान् हस्तेन भोज्यमखिलं सहभक्ष्यमादत्[४] ॥ ८९ ॥**

**पीत्वा पयो त्वरित [५]एनमवीक्षमाण आचम्य तेन युयुधे गुरुवृक्षशैलैः ।**
**तेनाऽहतोऽथ बहुभिर्गिरिभिर्बलेन[६] जग्राह चैनमथ भूमितळे[७] पिपेष ॥ ९० ॥**

**आक्रम्य पादमपि पादतळेन[८] तस्य दोर्भ्यां प्रगृह्य च परं विददार भीमः[९] ।**
**मृत्वा स चोरु तम एव जगाम पापो विष्णुद्विडेव हि शनैरनिवृत्ति चोग्रम् ॥ ९१ ॥**

**हत्वा तमक्षतबलो जगदन्तकं स यो राक्षसो न वश आस जरासुतस्य ।**
**भौमस्य पूर्वमपि नो भरतस्य राज्ञो भीमो न्यधापयदमुष्य शरीरमग्रे ॥ ९२ ॥**

**अग्रे पुरस्याग्रे न्यधापयत् न्यदधात् । स्वार्थे णिच् ॥ ९२ ॥**

---

त्वरन् एकचक्रानगरगानामुपकाराय त्वरमाणो गत्वा, बकवनस्य सकाशे स्थित्वा आशु अत्तुमैच्छत् । पायसघटैः । मधुरभक्ष्याणां लड्डुकादीनां घटैः । पयोघटैश्च । आद्यपदेन दधिघृततैलानां घटैः । उपसेचनपूर्णैश्च घटैः । आद्यमदनीयमन्नम् ॥ ८८ ॥ अन्नसमितौ पूर्णतया भुज्यमानायाम् । विशेष्यविशेषणयोर्लिङ्गव्यत्ययनमन्यत्राप्युपलभ्यते भगवत्पादप्रयोगेषु– **'अमूभिरयातयामैः'** [१७], **'दाशोदिताभिर्वचोभिः'** [४४] इति चात्रैव । अथवा अन्नस्य समितिः यत्र तस्मिन् आद्यराशौ परिभुज्यमाने । अथवा समाना इतिः स्थितिर्यत्र स समितिः । राशिरित्यर्थः । अन्नस्य समितौ राशौ, तेनैव भीमेनैव, बकस्य परिपश्यतः, तं परिहृत्य, परिहस्य च भुज्यमाने । वामेन हस्तेन प्रहारानपोह्य । भोज्यमन्नम् । भक्ष्यमपूपादि । आदत् जघास । अद भक्षणे लङ् ॥ ८९ ॥ गुरुभिर्वृक्षैः शैलैश्च । गुरवो वृक्षा यत्र तैर्वा शैलैः । अथ गुरुवृक्षशैलैराहननानन्तरम्, तेन भीमाहतेन बकेनापि बलेनाऽहतः । बलेन जग्राह । भूमितळे निपात्य, अथ पिपेष निःशेषं पिपेष । लोकमङ्गलाय चेदमस्य कर्मेत्याह–अथेति ॥ ९० ॥ परमन्यं पादम् । स च विष्णुद्विडेव हि । तेन हिडिम्ब इव स चोरु तम एव जगाम । उरुत्वमेव विवृणोति– अनिवृत्ति चोग्रं चेति । तदपि न सद्यः । कालक्रमेण शनैः तमःसाधनपूर्त्यनन्तरम् । तदेवं यत् प्राणेन प्रथमावतारेऽवशेषितं रक्षोहननम्, तद् द्वितीयावतारे सम्पूरितम् ॥ ९१ ॥ जरासुतस्य न वश आस । नापि

---

१. **'सकाशमाशु'** २. **'भीमः सुपायस–'** इति क्वचित् । ३. **'–ममन्नराशिम्'**
४. **'–भक्षमादत्'** इति क्वचित् । ५ **'एनमवेक्ष–'** ६ **'–थ गिरिभिर्बहुभिर्बलेन'** इति क्वचित् ।
७ **'–तले'** ८. **'–तलेन'** ९. **'–दार वीरः ।'** इति क्वचित् ।

द्वार्येव तत् प्रति निधाय पुनः[१] स भीमः स्नात्वा जगाम निजसोदरपार्श्वमेव ।
श्रुत्वाऽस्य कर्म्म परमं तुतुषुः समेता मात्रा च ते तदनु वव्रुरतः[२] पुरस्थाः ॥ ९३ ॥

दृष्ट्वैव राक्षसशरीरमुरु प्रभीता ज्ञात्वैव हेतुभिरथ क्रमशो मृतं च ।
विप्रस्य तस्य वचनादपि भीमसेनभग्नं निशम्य परमं तुतुषुश्च तस्मै ॥ ९४ ॥

अन्नात्मकं करममुष्य च सम्प्रचक्रुः सोऽप्येतमाशु[३] नरसिंहवपुर्द्धरस्य ।
चक्रे हरेस्तदनु सत्यवतीसुतस्य विष्णोर्हि वाक्प्रचुदिताः[४] प्रययुस्ततश्च ॥ ९५ ॥

**पूर्वं भीतियुतास्ते भ्रातरः तदनु तदागमनानन्तरं अस्य परमं कर्म श्रुत्वा मात्रा समेतास्तुतुषुः ॥ ९३–४ ॥वाक्प्रचुदिताः तत्राऽगतस्य विष्णोः वाचा प्रेरिताः । (केवलं) नान्तर्यामिणा विष्णुना प्रेरिता इति भावः ॥ ९५–६ ॥**

---

भौमस्य धरासुतस्य नरकस्य । पूर्वमपि भरतस्य दुष्षन्ततनयस्य राज्ञः । येन पौरवो वंशो भारतवंशो बभूव । न्यधापयत् न्यदधात् । स्वातन्त्र्ये व्यत्ययः । यद्वा निधापनं स्थापनम् । न्यधापयत् स्थापयामासेत्यर्थः । नगरस्याग्रे पुरद्वारि । शकटस्याग्रे इति केचित् । न स्वरसोऽर्थः ॥ ९२ ॥ पौराणां प्रत्ययार्थं द्वार्येव निधाय । मात्रा समेताः सोदरास्ते परमं तुतुषुः । अतस्तस्मात् पुरद्वारि कुणपदर्शनात्, भीमेन हतो बक इति वार्ताश्रवणाच्च । पुरस्थाः पौराः तत् रक्षःशरीरमनुगताः वव्रुः वृन्दशः परिवृत्य स्थिताः, अघटनीयं घटितं दृष्ट्वा मूकविस्मिताः ॥ ९३ ॥ अवध्यस्य वधमविश्वसन्तः पूर्वं परमभीताः पौराश्च सम्प्रति परमं तुतुषुः ॥ ९४ ॥ सम्प्रदायं चक्रुः । सम्भ्रमेण प्रहर्षेण च चक्रुः । नतु बकस्येव बलात्कारेण । सोऽपि एतदन्नात्मकं करं एतन्नगराधिदैवतस्य नरसिंहस्यैव करं चक्रे । इदमस्तु तस्मै बलिहरणमित्यनुसन्दधे । न केवलम् । इतः परमस्मिन् दिने प्रतिहायनमेवं नरसिंहस्य बलिहरणमस्त्विति सम्प्रदायं च चक्रे । नरसिंह इति न केवलं गौणं नाम, किन्तु वापुषं चेति सूचयितुं वपुःपदमादत्त । तेन सहस्रनाम्नः पुरुषस्यैकविंशं च रूपमर्चितं भवतीति महान् लाभः । नरसिंहवपुष इति पर्याप्तम् । अथापि नरसिंहवपुर्धरस्येत्याह । तेनेदमाह– यद्यपि वपुरेव सः । अथापि स्वरूपमेव स्वयं धरति । **'स्वे महिम्नि प्रतिष्ठितः'** इति श्रवणादिति । बहूनि च नरसिंहरूपाणि भवन्ति– तेन नरसिंहवपूंषि धरतीति च । वपुषा वपुषि वा नरान् हिंसन्ति सिंहन्तीति वा, षिहि हिंसायाम्, जगत्संहारकान् रुद्रादीन् धरतीति च । सत्यवतीसुतस्य विष्णोर्वाचा प्रचोदिताः । चुद सञ्चोदने इत्यतः तुलयतीत्यादिवद् गुणाभावे रूपम् । यद्वा भ्वादिष्वप्ययं पठनीयः । तथाहि प्रयोगः श्रुतौ– **'वृष्णे चोदस्व सुष्टुतिम्'** [ऋ.सं.८.७५.६] इति । व्यासेन चोदिता एकचक्रामाययुः । तेनैव प्रेम्णा चोदितास्ततः प्रययुश्च । बकवधानन्तरम्, अत्र न स्थातव्यम्, इतः क्वापि गन्तव्यमिति पूर्वमेव तेषां मनसि चोदनाऽऽसीत् । सम्प्रति

---

१. **'पुरः स–'**
२. **'तदनु भीतियुताः पुरस्थाः'** । वे.ती. पाठोऽपि तथा ।
३. **'–प्येनमाशु'**
४ **'वाक्प्रमुदिताः'**

उत्पत्तिपूर्वककथां द्रुपदात्मजाया व्यासो ह्यनूच्य जगतां गुरुरीश्वरेशः[१] ।
यातेत्यचोदयदथाप्यपरे द्विजाग्र्यास्तान् ब्राह्मणा इति भुजिर्भवतीति[२] चोचुः ॥ ९६ ॥

पूर्वं हि पार्षत इमान् जतुगेहदग्धान् श्रुत्वाऽतिदुःखितमनाः पुनरेव मन्त्रः ।
याजोपयाजमुखनिस्सृत एवमेष नासत्यतार्ह इति जीवनमेषु मेने ॥ ९७ ॥

यत्रक्वचित् प्रतिवसन्ति निलीनरूपाः पार्त्था इति स्म स तु फल्गुनकारणेन ।
चक्रे [३]स्वयम्बरविघोषणमाशु [४]राजस्वन्यैरधार्य्यधनुरीशवराच्च चक्रे ॥ ९८ ॥

**द्रौपदीस्वयंवरं वक्ष्यन् तत्कर्तुर्द्रुपदस्याभिप्रायमाह– पूर्वमित्यादिना । श्रुत्वा अतिदुःखितमनाः सन् पुनः, एवं पार्थाय दातुं कन्या भूयादित्यभिप्रायेण, याजोपयाजमुखनिःसृत एष मन्त्रः असत्यतार्हः नेति निरूप्य एषु जीवनं मेने ॥ ९७ ॥ स राजा, ईशवरात्, अन्यैः पार्थादिति शेषः । सु इति पृथक्पदम् । अधार्यमित्यनेन योज्यम् । अधार्यमिति अनारोप्यमिति भावः । शिशुपालादिभिर्धृतत्वात् । सर्वथाऽनारोप्यं धनुश्चक्रे सम्पादयामास ॥ ९८ ॥**

---

व्यासस्य वाचाऽपि प्रकटं चोदिता इति प्रसन्नाः प्रमुदिताश्च ययुः ॥ ९५ ॥ उत्पत्तेः पूर्वका पूर्वकालीना विप्रकन्यानाळायन्यादिकथा । ततः पाश्चाल्या उत्पत्तिकथा । तत उत्पत्तिः पूर्वकालीना यस्याः सा उत्पत्त्युत्तरकालीना कथा पार्थनिरीक्षया स्वयम्बरघोषणान्ता । अनूच्य प्रवृत्त्यनुसारं विवृत्य । ईशा रुद्रेन्द्रादयः । तेषां वरौ ब्रह्मवायू । तयोरपीशः । अथ ये विवाहदर्शनार्थं प्रस्थितास्तेऽपि यातेत्यूचुः । तान् पाण्डवान् ब्राह्मणा इति मत्वा, न केवलं अपूर्वविवाहदर्शनम्, भुजिश्च भवतीति चोचुः ॥ ९६ ॥ श्रुत्वा पार्थो मे जामाता भूयादित्याशाया भङ्गेन निराशो भूत्वाऽतिदुःखितमना बभूव । पार्था मृता इति दुःखम् । पार्थः स्वजामाता न बभूवेत्यतिदुःखम् । पुनरेव साशो भूत्वा रीत्यन्तरेण चिन्तयामास । चिन्तयित्वा जीवनमेषु मेने । किं चिन्तयित्वा? एषः मन्त्रः एवं पार्थानां दुर्मरणेन नार्हत्यसत्यतामिति चिन्तयित्वा । कुतः? महातपस्विनोर्याजोपयाजयोर्मुखेन निस्सृतत्वात् । नहि तपस्विमुखनिःसृतः शापो वरो वा वितथो भवति ॥ ९७ ॥ प्राकट्याय समयं प्रतीक्षमाणा वसन्ति इति मत्वा । निलीनरूपाः । ली श्लेषणे क्र्यादिः । लीङ् श्लेषणे वा दिवादिः । स्वं रूपं निगूह्य रूपान्तरश्लेषेण स्थिताः । निकट एव च लीनरूपाः । समीप एव क्वापि रूपान्तरेण सञ्चरन्तः सन्तीत्यर्थः । स्मेति तन्निर्धारदार्ढ्यमाह । अर्जुनो मे जामाता स्यादित्यदम्यं तस्य मनोरथविशेषं तुनाऽऽह– स त्विति । विशिष्य राजसु मध्ये स्वयम्बरविघोषणं चक्रे । कथञ्चित् पार्थस्य श्रुतिपथं यात्विति विशेषापेक्षया कृतं घोषणं विघोषणम् । राजसु क्षत्रियेषु अर्जुनादन्यैरधार्यमनारोप्यम् । कुतः? ईशवरात् । तादृशं धनुः चक्रे सम्पादयामास । **'सोऽन्वेषमाणः कौन्तेयान् पाश्चालो**

---

१. **'गुरुरीश्वरश्च'** । **'गुरुरिन्दिरेशः'** इति क्वचित् ।
२. **'भुजिर्भवितेति'**
३. **'स्वयंवर–'**
४. **'राजा स्वन्यै–'** इति क्वचित् । वे.ती. पाठोऽपि तथा ।

तत्काल एव वसुदेवसुतोऽपि कृष्णः सम्पूर्णनैजपरिबोधत एव सर्वम् ।
जानन्नपि स्म हलिना सहितो जगाम पार्थान् निशम्य च मृतानथ कुल्यहेतोः ॥ ९९ ॥

स प्राप्य[1] हस्तिनपुरं धृतराष्ट्रपुत्रान् संवञ्चयंस्तदनुसारिकथाश्च कृत्वा ।
भीष्मादिभिः [2]परिगताप्रियवज्जगाम द्वारावतीमुदितपूर्णसुनित्यसौख्यः ॥ १०० ॥

तस्यान्तरे हृदिकसूनुरनन्तरं स्वं श्वाफल्किबुद्धिबलमाश्रित इत्युवाच ।
सत्राजिदेष हि पुरा प्रतिजज्ञ एनामस्मत्कृते स्वतनयां मणिना सहैव ॥ १०१ ॥

**कृष्णः पार्थान् मृतान् निशम्य । सर्वं पार्थानां जीवनादिकं जानन्नपि । अथ कतिपयकालानन्तरमेव स्वयंवरविघोषणकाल एव, कुल्यहेतोः जगाम स्म, हस्तिनपुरमिति शेषः । मृतस्य बन्धूनां सान्त्वनं कुल्यम् ॥ ९९ ॥ हस्तिनपुरं प्राप्य भीष्मादिभिः परिगतः । धृतराष्ट्रपुत्रान् संवञ्चयन् । अप्रियवत् । प्रियं सुखम् । सुदुःखित इवेति भावः ॥ १०० ॥ तस्य हस्तिनानगरद्वारावत्योर्गमनस्याऽगमनस्य च, अन्तरे मध्ये ॥ १०१ ॥**

---

**जनमेजय । दृढं धनुरथानम्यं कारयामास भारत'** [आ.प.२००.१२] इति, **'तद्धनुः किन्धुरं नाम देवदत्तमुपानयत् । ज्यायसी तस्य च ज्याऽऽसीत् प्रतिबद्धा महाबला । नतु ज्यां प्रसहेदन्यस्तद्धनुःप्रवरं महत् । शङ्करेण वरं दत्तं प्रीतेन च महात्मना । तन्निष्फलं स्यान्नतु मे इति प्रामाण्यमागतः'** [१३–५] इति च । तदारोपणेन लक्षवेधं पणं च चक्रे ॥ ९८ ॥ सत्यवतीसुतोऽपि कृष्ण इति तद्व्यावृत्त्यर्थं वसुदेवसुत इत्याह । स्वयमपि पूर्णबोध इति तं सम्पूर्णबोधमाह । रमाऽपि जगति सम्पूर्णबोधेति ततोऽपि परिस्फुटः, अनन्तः स्वतन्त्रश्चास्य बोध इति नैजः परिबोध इत्याह । कुल्यं कुलोचितं कर्म दुःखितानां सान्त्वनादि । **'विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान् । कुन्तीं च कुल्यकरणे सहरामो ययौ कुरून्'** [१०.६१.१] इति श्रीभागवते ॥ ९९ ॥ संवादेन सम्पूर्णं वञ्चयन् । धृतराष्ट्रपुत्रैः सह, पाण्डवा मृता इति, तेषां श्रद्धानुसारिणीः कथाः कथयित्वा । भीष्मधृतराष्ट्रादिभिश्च तदनुसारिकथाः कृत्वा । उदितं नित्याभिव्यक्तम् । सु दुःखासम्भिन्नं नित्यं च सौख्यम् । **'परिगताप्रियवत्'** इति मूलकोशपाठः । अप्रियेण दुःखेन परिगतः परिगताप्रियः । नित्यसौख्योऽपि दुःखपरीत इवात्मानं दर्शयन् जगाम । **'परिगतोऽप्रियवत्'** इति पाठे भीष्मादिभिः परिज्ञातः, अप्रियवत् अप्रीयमाण इवेत्यर्थः ॥ १०० ॥ हृदिकसूनुः कृतवर्मा । अनन्तरमनुजं शतधन्वानम् । ननु शतधन्वाऽपि हृदिकसूनुः? सत्यम् । अत एव भवादृशानां बोधाय व्याख्यायते हृदिकसूनुः कृतवर्मेति । अनुजस्य पृथगुल्लेखादेव ज्ञायते यदयमग्रजो हृदिकसूनुरत्र विवक्षित इति । उभयोर्हृदिकसूनुत्वसाम्येऽपि कृतवर्मण एव हार्दिक्यनाम्ना प्रथितत्वाच्च । प्रथितं हि प्रथमं स्फुरति । यथा वासुदेव इति कृष्णः । पार्थ इत्यर्जुनः । श्वफल्कजोऽक्रूरः । सत्राजित् सत्यभामाजनकः ।

---

१. **'सम्प्राप्य'** २. **'परिगतोऽप्रियवत्'** । स एव वे.ती.पाठः । **'परिवृतोऽप्रियवत्'** इति क्वचित् ।

सर्वांश्च नः पुनरसाववमत्य कृष्णायादात् सुतां जहि च तं निशि पापबुद्धिम् ।
आदाय रत्नमुपयाहि च नौ विरोधे कृष्णस्य दानपतिना सह साह्यमेमि ॥ १०२ ॥

इत्युक्त आशु कुमतिः स हि पूर्वदेहे दैत्यो यतस्तदकरोदथ सत्यभामा ।
आनन्दसंविदपि लोकविडम्बनाय तद्देहमस्य तिलजे पतिमभ्युपागात्[१] ॥ १०३ ॥

श्रुत्वा तदीयवचनं भगवान् पुरीं स्वामायात एव तु निशम्य महोत्सवं तम् ।
पाश्चालराजपुरुषोदितमाशु वृष्णिवर्य्यैरगान्मुसलिना सह तत्पुरीं[२] च ॥ १०४ ॥

भीमोऽपि रुद्रवररक्षितराक्षसं तं हत्वा तृणोपमतया हरिभक्तवन्द्यः ।
उष्याथ तत्र कतिचिद्दिनमच्युतस्य व्यासात्मनो वचनतः प्रययौ निजैश्च ॥ १०५ ॥

[३]मङ्गल्यमेतदतुलं[४] प्रति यात शीघ्रं पाश्चालकान् परमभोजनमत्र सिद्ध्येत् ।
विप्रैरितस्तत इतीरितवाक्यमेते शृण्वन्त एव परि चक्रमुरुत्तराशाम् ॥ १०६ ॥

**सह भावः साह्यम् । साहाय्यमित्यर्थः ॥ १०२ ॥ तिलजे तैले अस्य निक्षिप्य ॥ १०३–५ ॥ एतत् मङ्गल्यमतुलम् । सिद्ध्येत् सिद्ध्यति । परिचक्रमुः जग्मुः । शृण्वन्त एव परिचक्रमुरित्यवधारणेन ‘एतन्मङ्गल्यमतुलम्’,‘पाश्चालकान् (प्रति) शीघ्रं यात’, ‘परमभोजनमत्र सिद्ध्येत्’ इत्युपश्रुतिरूपं वाक्यत्रयं श्रुत्वा हृष्टा अविलम्बितं जग्मुरित्युक्तं भवति ॥ १०६ ॥**

---

अस्मत्कृते प्रतिजज्ञे । ‘कन्येयं वः प्रदीयते । युष्मासु कश्चिदस्या भर्ता भवतु’ इति प्रतिजज्ञे प्रदातुमभ्युपजगाम । मणिना स्यमन्तकेन ॥ १०१ ॥ आवयोः कृष्णस्य विरोधे । दानपतिना अक्रूरेण सह साह्यं ऐकमत्यम्, समानप्रयोजनतया एककार्योन्मुखत्वमित्येतत्, प्राप्नोमि । एवं वयं त्रयः सहैव कृष्णं विरुद्ध्यास्म । साह्यमेमीत्युवाचेति पूर्वश्लोकेनान्वयः । दानपतिरित्यक्रूरस्य पुराणेषु प्रथितं नामान्तरम् ॥१०२॥ तत् सत्राजितो हननं रत्नस्य हरणं च । तस्य देहं तद् वा देहं तैले अस्य निक्षिप्य । क्लीबोऽपि देहशब्दो भवति । **‘चन्दनपद्मधर्मकोलाहलकिसलयदेहदोहदाः पुन्नपुंसकयोः’** इति पुरुषोत्तमः । पितृहन्तुः प्रतीकारमभिलषन्ती उपागात् ॥ १०३ ॥ राजप्रेषितः पुरुषो वार्ताघोषकः । वृष्णिवर्यैः मुसलिना च सह । तस्य पाश्चालराजस्य, तां वा पुरीम् ॥ १०४ ॥ रुद्रवरेण रक्षितमपि हत्वा । हरिभक्तप्रवरेण हरेणापि वन्द्यः । तत्र एकचक्रायां ब्राह्मणगृहे । कतीनाश्चिद् दिनानां समाहारः कचिचिद्दिनम् । निजैश्च सह प्रहृष्टो ययौ ॥ १०५ ॥ मङ्गल्यम् । मङ्गले साधु । शुभावहमित्यर्थः । **‘तत्र साधुः’** [अ.सू.४.४.९८] इति यत् । एतन्मङ्गल्यं प्रति,

---

१. **‘–मभ्युपायात्’** इति क्वचित् । २. **‘तां पुरीं च’** इति क्वचित् ।
३. **‘माङ्गल्य –’** ४. **‘–दखिलम्’** इति क्वचित् ।

**षण्णां च मद्ध्यगमुदीर्ण्णभुजं विशालवक्षस्थलं [1]बहळपौरुषलक्षणं च ।**
**दृष्ट्वैव मारुतिमसावुपलप्स्यतीह कृष्णामिति स्म च वचः प्रवदन्ति विप्राः ॥ १०७ ॥**

**रात्रौ दिवा च सततं पथि[2] गच्छमानाः प्रापुः कदाचिदथ विष्णुपदीं निशायाम् ।**
**सर्वस्य[3] रक्षितुमगादिह पृष्ठतस्तु[4] भीमोऽग्र एव शतमन्युसुतोऽन्तराऽन्ये[5] ॥ १०८ ॥**

**प्राप्ते तदोल्मुकधरेऽर्ज्जुन एव गङ्गां गन्धर्वराज इह चित्ररथोऽर्द्धरात्रे ।**
**दृष्ट्वैव विप्ररहितानुदकान्तरस्थः क्षत्रात्मजा इति ह[6] धर्षयितुं स चाऽगात् ॥ १०९ ॥**

**इह स्वयंवरे ॥ १०७–८ ॥ अर्धरात्रे अर्जुने गङ्गां प्राप्ते सत्येव । सः गन्धर्वराजः क्षत्रात्मजा इति ज्ञात्वा विप्ररहितान् दृष्ट्वा धर्षयितुमागाद्धि । विप्ररहितान् दृष्ट्वेत्यनेन विप्रेषु सत्सु गन्धर्वयक्षादीनां बाधनसामर्थ्याभाव उक्तः ॥ १०९–११ ॥**

---

मङ्गलोत्सवमनुभवितुं पाञ्चलकान् यात । अदृष्टोऽयं देश इत्यपूर्वदर्शनं च भवतीति पाञ्चालकानिति कप्रत्ययेनाऽह । **‘अज्ञाते’** [अ.सू.५.३.७३] इति हि पाणिनिः । विप्रैः स्यादयमदृष्टो देशः । कथं पाण्डवैः? ददृशुर्हि ते द्रुपदग्रहणे । नैतद् विप्रा जानन्ति । नतरामेषां पाण्डवत्वम् । एतेऽपि चरका विप्रा इति मत्वा ते जगदुः । पाञ्चालकान् यातेति । वस्तुतस्तु पाण्डवैरपि सामान्यतो ज्ञातः । नतु राजगृहादिदर्शनेन विशेषतः । **‘स्वेन रूपेण ज्ञाते पदार्थविशेषरूपेणाज्ञाते प्रत्ययविधानमेतत्’** इति हि जयादित्यः । इति विप्रैरीरितं वाक्यं परितः शृण्वन्तः विप्रैः परिगताश्चक्रमुः ॥ १०६ ॥ उदीर्णभुजमाजानु लम्बमानबाहुम् । उपपन्नतया लप्स्यति । परस्परं वदन्ति । तदपि न रहः । किन्तु प्रवदन्ति प्रकटं वदन्ति यथा भीमादयोऽपि शृणुयुः । **‘अयमेकश्च वो भ्राता दर्शनीयो महाभुजः । नियुध्यमानो विजयेत् सङ्गत्य द्रविणं महत्’** [आ.प. १८५.२०] इति चैत्ररथे । मध्यगमिति । नात्र मध्यशब्दो मध्यभागवचनः । **‘पृष्ठतस्तु भीमः–’**[१०८] इत्युत्तरवचनात् । किन्त्वन्तरवचनः । तेन समूहान्तर्गतो मध्यग उच्यते ॥ १०७ ॥ गमनफलं स्वेषामन्ततो द्रौपदीलाभ इति गच्छमाना इत्याह । सर्वस्य पृष्ठतस्तु भीमः । पृष्ठतो रक्षा हि कष्टतरा । पार्श्वयोर्द्वयोः पृष्ठे च, अग्रगामिनि क्वचिद्रक्षितुमप्रभवति पुरतश्चेति सर्वतोदिशं रक्षणं पृष्ठगामिना हि करणीयम् । तदेतत् ‘पृष्ठतस्तु’ इति तुनाऽऽह । सर्वस्याग्रे शतमन्युसुतः ॥ १०८ ॥ अर्जुने प्राप्त एव । ईषदासन्न इत्यर्थः । **‘एवौपम्ये परिभव ईषदर्थेऽवधारणे’** इत्यभिधानम् । उल्मुकं ज्वलदग्रं काष्ठम्, रात्रौ सञ्चरणसमये मार्गप्रकाशार्थं गृह्यमाणम् । ‘ಪಂಜು’ इति भाषायाम् । **‘उल्मुकं तु समुद्यम्य तेषामग्रे धनञ्जयः । प्रकाशार्थं ययौ तत्र रक्षार्थं च महारथः’** [आ.प.१८६.४] इति । दृष्ट्वैव । सापद्यं नामाव्यवधानमेवकारार्थः । उदकान्तरस्थ इति । जलक्रीडारत इत्यर्थः । **‘तत्र गङ्गाजले रम्ये विविक्ते क्रीडयन् स्त्रियः । ईर्ष्युर्गन्धर्वराजो वै जलक्रीडामुपागतः’** [५] इति च । धर्षयितुं पराभाव्य भीषयितुम् । हेति प्रसङ्गं स्मरन्निव स्वदते ॥ १०९ ॥

---

१. **‘बहुलपौ–’** २. **‘परिगच्छ–’** इति क्वचित् । ३. **‘सर्वांश्च’** । **‘सर्वस्य रक्षितुमगादथ’** इति क्वचित् पठ्यते ।
४. **‘पृष्ठतश्च भीमो–’** ५. **‘–ऽन्तरेऽन्ये’** ६. **‘इति हि’** । वे.ती. पाठोऽपि तथेति भाति ।

**हन्तास्मि वो ह्युपगतानुदकान्तमस्या नद्याश्च मर्त्यचरणाय निषिद्धकाले ।**
**इत्थं वदन्तममुमाह सुरेन्द्रसूनुर्गन्धर्व नास्त्रविदुषां भयमस्ति तेऽद्य ॥ ११० ॥**

**सर्वं हि फेनवदिदं बहुलं बलं ते नार्थप्रदं भवति चास्त्रविदि प्रयुक्तम् ।**
**इत्युक्तवन्तममुमुत्तमयानसंस्थो बाणान् क्षिपन्नभि ससार सुरेशभृत्यः[1] ॥ १११ ॥**

**आग्नेयमस्त्रमभिमन्त्र्य तदोल्मुके स चिक्षेप शक्रतनयोऽस्य रथश्च दग्धः ।**
**तं चाग्निना परिगृहीतमभिप्रगृह्य केशेषु सञ्चकर्षाऽशु[2] सुरेन्द्रसूनुः ॥ ११२ ॥**

**अस्य रथः दग्धः । चशब्दात् स्वयं च दग्ध इत्याह । अग्निना परिगृहीतं तप्ततनुमेव सञ्चकर्ष । रथस्तु दग्ध एवेति भावः ॥ ११२–३ ॥**

---

हन्तास्मि हनिष्यामि । हन हिंसागत्योः, लुट् । उदकान्तं उदकप्रदेशम् । अस्याश्च नद्या इति चः प्राधान्ये । गङ्गा हि देवपूज्या नदी । हरिपादनखनिर्गता, हरशिरसि धृता च । अस्त्रविदुषां नस्तव सकाशाद् भयं नास्ति । अद्य अर्धरात्रेऽपि ॥ ११० ॥ फेनो डिण्डीरः । 'ನೊರೆ' इति भाषायाम् । विशिष्य चात्र फेन इति बुद्बुदो वा । 'ನೀರಗುಳ್ಳೆ' इति भाषायाम् । **'बिभीषिका वै गन्धर्व नास्त्रज्ञेषु प्रयुज्यते । अस्त्रज्ञेषु प्रयुक्तेयं फेनवत् प्रविलीयते'** [१८६.२७] इति च । अर्थप्रदं न भवति । अनर्थप्रदं भवति च । आधिक्यार्थश्च चकारः । अधिकास्त्रविदि । उत्तमं दिव्यं यानम् । यद् भूमाविव नभसि च याति । स्थल इव जलेऽपि । यद् यन्तुरिच्छया दृश्यमदृश्यं वा भवति । बाणान्, अथच अप्स्वप्याणन्तीत्यबाणान् । सुरेशभृत्यः सुरेशसूनुमभितः बाणान् क्षिपन्नभिससार ॥ १११ ॥ उल्मुके अस्त्रमभिमन्त्र्य । तेनास्त्रेण, न केवलमयम्, अस्य रथश्च दग्धः । रथस्तु दग्ध एव । अग्निना दह्यमानं चित्ररथं त्वर्जुन उज्जीवयामासेत्याह– तं चाग्निना । परितः संवृतमभ्येत्य प्रसभं केशेषु गृहीत्वा सञ्चकर्ष कृपया चकर्षेत्यर्थः । यथा कर्षणकृता वेदना न स्यात् । अग्निश्च न दहेत् । शक्रतनय इत्युक्तम् । पुनः सुरेन्द्रसूनुरित्याह । तेनैतदाह– सुरेन्द्र आत्मानमेव सुषावेति सुरेन्द्रसूनुः । तेन न केवलं सुरेशभृत्यश्चित्रसेनः । पार्थस्यापि भृत्य एव । तद्युक्तं भृत्यवात्सल्यं भर्तुरिति । यद्यपि इन्द्रसूनुरिति पर्याप्तम् । अथापि सुरेन्द्रसूनुरित्याह । तेनेदमाह–यथा कर्णः सूर्यसूनुरपि स्वगतं सुरत्वमपोह्यासुराविष्टो बभूव न तथाऽर्जुनः केवलमिन्द्रसूनुः । किन्तु सुरश्च । सदाऽभिव्यक्तदेवत्व इत्यर्थः । **'प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथं तु तत् । विरथं विप्लुतं तं तु स गन्धर्वं महाबलः । अस्त्रतेजःप्रमूढं च प्रपतन्तमवाङ्मुखम् । शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः । भ्रातॄन् प्रति चकर्षाथ सोऽस्त्रपातादचेतसम्'** [३१–३] इति च ॥ ११२ ॥

---

१. **'सुरेन्द्रभृत्यः'**

२. **'सम्प्रविचकर्षाऽशु'** । क्वचित् **'सम्प्रविचकर्ष'** इति पठ्यते । **'सञ्चकर्षाऽशु'** इति विश्लिष्य पठनीयमिति वैदिकं सम्प्रदायमविजानतामयं पाठभ्रमः ।

**पार्त्थेन सन्धर्षितः[१] शरणं जगाम धर्म्मात्मजं तमपि सोऽथ निजास्त्रमुग्रम् ।**
**सञ्जह्न एव तत आस च नामतोऽसावङ्गारवर्ण्ण इति वर्ण्णविपर्य्ययेण ॥ ११३ ॥**

**गन्धर्व उल्बणसुरक्ततनुः स भूत्वा स्वर्ण्णावदात उत पूर्वमुपेत्य सख्यम् ।**
**पार्त्थेन दुर्ल्लभमहास्त्रमिदं ययाचे जानन्नपि स्म नहि तादृशमेष वेद ॥ ११४ ॥**

**विद्या सुशिक्षिततमा हि सुरेशसूनौ[२] तामस्य चावददसावपि कालतोऽस्मै ।**
**गन्धर्वगामवददन्वगदृश्यविद्यां पश्चादिति स्म पुरुहूतसुतस्य वाक्यात् ॥ ११५ ॥**

**तदा अर्जुनं जानन्नपि[३] ॥ ११४ ॥ असौ अर्जुनः । तां स्वविद्यां अस्य गन्धर्वस्य अवदत् । असावपि गन्धर्वोऽपि, गन्धर्वगामदृश्यविद्याम्, अस्मै अर्जुनाय, कालतः कालान्तरे, अन्वक् अनुकूलतया, अर्जुनेच्छा-नुसारेणेत्यर्थः, अवदत् । तदानीमेव कस्मान्नावददित्यत आह– पश्चादिति ॥ ११५ ॥**

---

सन्धर्षितः । सदयं श्लक्ष्णमेव धर्षणमिति विश्लिष्य पपाठ । तमपि अर्जुनमपि । शरणं जगाम । प्रथमं पत्नीमुखेन । पश्चात् स्वयं च । तथाहि भारते–**'युधिष्ठिरं तस्य भार्या प्रपेदे शरणार्थिनी । नाम्ना कुम्भीनसी नाम परित्राणमभीप्सती'** [३४] इति । अथ अनन्तरमेव, शरणागतत्वादेव सोऽर्जुनोऽस्त्रं सञ्जह्ने उपसञ्जह्ने । तत एव नामतोऽङ्गारवर्ण आस । वर्णविपर्ययेणेति । पूर्वं गौराङ्ग आस । अर्जुनप्रहितेनाऽग्नेयास्त्रेण दग्धतनू रक्ताङ्गो बभूव । एवं देहे जातेन वर्णव्यत्ययेन, अङ्गारवद् रक्तवर्णो बभूवेत्यङ्गारवर्णनामा बभूव । अथच पूर्वं तस्याङ्गारपर्ण इति च नामाऽसीत् । योऽङ्गारपर्णः पूर्वं स इदानीमङ्गारवर्णो बभूव, पवयोर्वर्णयोर्विपर्ययेण । तथाहि भारते–**'जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम् । यशोहीनं नच श्लाघ्यं स्वं नाम जनसंसदि'** [३८] इति । **'अङ्गारपर्णं गन्धर्वं वित्त मां स्वबलाश्रयम् । अहं हि मानी चेर्ष्युश्च कुबेरस्य प्रियः सखा । अङ्गारपर्णमित्येवं ख्यातं चेदं वनं मम । अनुगङ्गं चरन् कामांश्चित्रं यत्र रमाम्यहम्'** [१३–४] इति च ॥ ११३ ॥ स्वर्णवद् अवदातः विमलः, मनोज्ञः, पीतप्रचुरः श्वेतवर्णश्च । **'अवदातं तु विमले मनोज्ञे सितपीतयोः'** इत्यभिधानम् । उल्बणमुत्कटमतिस्फुटम्, दूरादपि चक्षुराहत्य परिदृश्यमानम्, अत एव सुरक्तमतिरक्तं ज्वलदङ्गारवत् । नतु प्रोद्यदादित्यवदीषद्रक्तम् । 'ಕಡುಕೆಂಪು' इति भाषायाम् । एष चित्ररथः आग्नेयमस्त्रं जानन्नपि यादृशशक्तियुतमर्जुनो वेद तादृशं न वेद ॥ ११४ ॥ विद्या आग्नेयास्त्रप्रयोगे विहिता मन्त्रविद्या । मानुषेषु क्षत्रियेषु शिक्षिता । गन्धर्वेषु शिक्षिततरा । सुरेषु शिक्षिततमा । अर्जुने तु सुरेशसूनुत्वात् सुशिक्षिततमा । अवदत् उपदिदेश । **'अन्वक् अनुकूलमित्यर्थेऽव्ययम्'** इति क्षीरस्वामी । कालतोऽन्वक् । कस्माच्चित् कालादनन्तरम् । अनुकूले काले वा । गन्धर्वगामदृश्यविद्यां गन्धर्वोऽवदत् ॥ ११५ ॥

---

१. अत्रापि 'सन्धर्षितः' इति विश्लिष्य पठनीयम् । २. **'सुरेन्द्रसूनौ'** ३. न स्वरसमिदम् । अक्षरपातः सम्भाव्यते ।

आधिक्यतः स्वगतसंविद एव साम्ये नैवेच्छति स्म निमयं स धनञ्जयोऽत्र ।
धर्मार्त्थमेव स तु तां परिदाय तस्मै कालेन संविदममुष्य च धर्म्मतोऽयात् ॥ ११६ ॥

पार्त्थेन सोऽपि बहुलाश्च कथाः कथित्वा धौम्यस्य सङ्गहणमाह पुरोहितत्वे ।
दास्यामि दिव्यतुरगानिति सोऽर्ज्जुनाय वाचं निगद्य दिवमारुहदप्यगुस्ते ॥ ११७ ॥

ते धौम्यमाप्य च पुरोधसमुत्तमज्ञं विप्रात्मजोपमतया विविशुः पुरं च ।
पाञ्चालकस्य निखिलां ददृशुश्च तत्र [१]मूर्द्धावसिक्तसमितं समलङ्कृतां च ॥ ११८ ॥

**(पश्चादिति) कुतोऽवददित्यत आह– आधिक्यत इति । स्वगतसंविदः स्वगतविद्यायाः आधिक्यत एव । साम्ये निमयं दानादानरूपं व्यत्यासं नैवेच्छति स्म । (स्वगत)विद्यां दत्त्वा तदानीमेव गन्धर्वविद्यापरिग्रहे उभयविद्ययोः साम्यं स्यात् । तच्च न (युक्तम्) । स्वविद्याया आधिक्यात् । तस्मात्तदानीमेव गन्धर्वविद्यां नाग्रहीदिति भावः । अमुष्य गन्धर्वस्य संविदम् ॥ ११६–७ ॥ पाञ्चालकस्य पुरं विविशुः । मूर्धाभिषिक्तसमितिं राजन्यमण्डलम् ॥ ११८ ॥**

---

कुतः पश्चादित्याह? किमिति तदैव न जग्राह? आह– स्वगतसंविद आधिक्यत एव हेतोरिति । न ह्यधिकविद्योऽल्पविद्येन विद्यां विनिमयते । तदपि कुतः? यतः साम्येनैव परस्परं विनिमयमिच्छति विद्वज्जनः । स धनञ्जयोऽपि तथैवेच्छति । नह्युत्तमेनाधमस्य, अधमेन वोत्तमस्य विद्या निमीयते । समावेव हि परस्परं विद्यां विनिमीयेते । अर्जुनस्तु साम्य एव सत्यपि न निमयमिच्छति । नहि विद्या विक्रीयते । किन्तु धर्मतो दीयते, धर्मतः स्वीक्रियते च । अतः अत्र गन्धर्वप्रसङ्गे । धर्मसम्पादनार्थमेव । नतु विनिमयार्थम् । परिदाय योग्यतापरीक्षापूर्वकं दत्वा । कालेन अनुकूलेन निमित्तेन । युक्ते काल इत्येतत् । संविदमदृश्यताविद्याम् । अयात् अध्यगच्छत् ॥ ११६ ॥ कथित्वा कथयित्वा । अक्षरलोपेन बहुलानामपि कथानां क्षिप्रकथनमाह । अथवा भ्यादिष्वपि कथतिः पठनीयः । तेन 'कथति' इत्यादि साधु रूपम् । कथमन्यथा **'अचीकथत्'** इति लुङि रूपमिति वैयाकरणाः प्रष्टव्याः । चुरादेस्तु **'अचकथत्'** इति हि रूपम् । श्रद्धेयवचनः क्षीरस्वामी चैवमेवाभिप्रेयाय–**'कथमचीकथत्? प्रकृत्यन्तरमन्वेष्टव्यम्'** इति । अन्ये त्वेवमाचक्षते–**'ई च गणः'** [अ.सू.७.४.९७] इति सूत्रे चकारेण कथयतेरपि ग्रहणम् । तेनाचीकथदित्यपि साधु रूपमिति । तथाहि प्रक्रियाकौमुदीकारः–**'कथ वाक्यप्रबन्धे । कथयति । कथोऽभ्यासस्य ईत्वं वेति केचित् । अचीकथत्, अचकथत्'** इति । यावज्जीवं ग्रहणमिह सङ्गहणम् । योग्यं ग्रहणं च सङ्गहणम् । धूम्या होमधूमस्तोमो नित्यं यस्य वेश्मनि स धौम्यः । दास्यामि दिव्यतुरगानिति । **'गन्धर्वजानामश्वानामहं पुरुषसत्तम । भ्रातृभ्यस्तव तुभ्यं च पृथग् दाता शतंशतम्'** [१८६.४८] इति च । **'मयि सन्ति हयश्रेष्ठास्तव दास्यामि वै सखे । उपकारकृतं मित्रं प्रतिकारेण योजये'** [१९९.४] इति च ॥ ११७ ॥ उत्तमः ज्ञश्च । ज्ञेषूत्तमश्च । उत्तमं भगवन्तं जानाति च । पुरं विविशुश्च ददृशुश्च । कथं विविशुः? विप्रात्मजोप-

---

१. **'मूर्धाभिषिक्तसमितिम्–'** । वे.ती. पाठोऽपि तथेति भाति ।

**राजन्यमण्डलमुदीक्ष्य सुपूर्ण्णमत्र कृष्णां प्रगृह्य सहजः प्रगृहीतमालाम् ।**
**तेषां च मद्ध्यमगमत् कुलवीर्य्यसम्पद्युक्तां विभूतिमथ चाऽह समस्तराज्ञाम् ॥ ११९ ॥**

**तांश्च प्रदर्श्य सकलान् स हुताशनांशश्चापं च तत् प्रतिनिधाय सपञ्चबाणम् ।**
**आहाभिभाष्य सकलान् [1]नृपतीनथोच्चैर्दीप्यद्धुताशनवपुर्घनतुल्यघोषः ॥ १२० ॥**

**समस्तराज्ञां विभूतिम् । कृष्णां प्रति ॥ ११९ ॥ तान् पाण्डवांश्च[2] प्रदर्श्य कृष्णायै ॥ १२० ॥**

---

मतया । ब्राह्मणवटुवेषं गृहीत्वा स्वक्षत्रियत्वं निगूह्य वयं ब्राह्मणवटव इति ब्रुवाणाः । पाञ्चालकस्य । कन्यापितृत्वेन, जामातृत्वेन स्वापेक्षितस्य पार्थस्यादर्शनेन चानुकम्पनीयस्य पञ्चालराजस्य । पाञ्चालानां पौराणां कं सुखं येनेति जन-प्रियस्य वा राज्ञो द्रुपदस्य । पुरं चेति चकारेणान्यदप्याचष्ट– पुरं च विविशुः । प्रविश्य तत्र कस्यचित् कुम्भकारस्य गेहे वासं च चक्रुरिति । ततः पाञ्चालकस्य भवनं विविशुः । ततो लक्षवेधपरीक्षायै सज्जीकृतं रङ्गमण्डपं च विविशुः । तत्र राजसमितिं ददृशुरिति । **'आनुपूर्व्येण सम्प्राप्ताः पाञ्चालान् पाण्डुनन्दनाः । ते तु दृष्ट्वा पुरं तच्च स्कन्धावारं च पाण्डवाः । कुम्भकारस्य शालायां निवासं चक्रिरे तदा'** [२००.६] इति च । मूर्धावसिक्तसमितम् । अवशब्दो मध्यवचनः । मूर्धनि अव मध्ये, विभक्तयोः केशपाशयोर्मध्य इत्यर्थः, '[illegible]' इति भाषायाम्, सिक्तः अभिषिक्तः । यद्यप्यत्र क्षत्रियसामान्यं मूर्धावसिक्तपदार्थः । नहि मूर्धाभिषिक्त एव सिस्पर्धयिषुराजगामेति वक्तुं साम्प्रतम् । तदर्थं च मूर्धावसिक्त इत्याह । अवशब्दोऽत्र पश्चाद्वचनः । मूर्धनि अव पश्चाद् योऽभिषिक्तो भविष्यति सोऽपि मूर्धावसिक्त उच्यते । एतमर्थविशेषं सूचयन्निवोपरि राजन्यमण्डलमित्याह । मूर्धावसिक्तानां समित् समितिः, मण्डलमित्यर्थः । समिदिति मण्डलम् । समिदिति सङ्ग्रामः । द्रौपद्या अलाभे सङ्ग्रामायापि सन्नद्धेयमिति समित्पदेन परिहसतीव । अहमेव पाञ्चालीमाप्नवानीति भ्रमेण सम्भ्रमेण च वधूजनासेचनकेन वेषेण सम्यगलङ्कृतां च ॥ ११८ ॥ अथ मूर्धावसिक्तसमितमिति स्वपदं स्वयमेव करुणया व्याचख्यौ– राजन्यमण्डलमिति । एतेन समित्पदं मण्डलवचनमिति च स्फुटम् । राज्ञोऽपत्यं क्षत्रियो राजन्यः । **'राजश्वशुराद् यत्'** [अ.सू.४.१.१३७] इति हि पाणिनिः । **'राज्ञोऽपत्ये जातिग्रहणम्'** इति च वार्तिकम् । केचिदुणादिसूत्रपरतन्त्रा राजेरन्यः प्रत्यय इति मन्यन्ते । साभिमानमीक्षणमुदीक्षणम् । सहर्षं च । स्विति वरत्वेन वरणयोग्यम् । निरीक्षितानां निखिलानां निःशेषतया समागमेन सुष्ठु पूर्णं च । सहजः कृष्णायाः । धृष्टद्युम्नः । प्रगृह्य प्रीत्या स्वसारं हस्तयोर्गृहीत्वा । प्रश्रयेण गृहीतदिव्यमालाम् । विजयघोषणाय च ग्रहणमत्र प्रग्रहणम् । प्रसङ्गानुगुणमुपसर्गो ह्यर्थमभिव्यनक्ति । समस्तराज्ञां पुरः पाञ्चालानां कुलवीर्यसम्पद्युक्तां विभूतिमाह । अथ राज्ञां च कुलवीर्यसम्पद्युक्तां विभूतिं कृष्णाया आह ॥ ११९ ॥ तांश्चाऽगतान् सकलानपि राज्ञः प्रातिस्विकं परिचयपूर्वकं पाञ्चाल्यै दर्शयित्वा । **'तान् पाण्डवांश्च प्रदर्श्य'** इति व्याख्यानं नातिस्वरसम् । नहि धृष्टद्युम्नस्तदा तान् व्यज्ञासीत् 'एते पाण्डवाः' इति । पूर्वोत्तरयोः समस्तराजन्यानामेव प्रस्तावाच्च । **'सकलान् नृपतीन्'** इत्युत्तरत्र स्वयमेव व्याचख्यौ च । बलप्रतीकतया, बलप्रतीक्षया च निधाय । आमन्त्र्य

---

१. **'–भाष्य नृपतीन् त्सकलानथो–'** २. नेदं मूलानुगुणम् ।

**एतेन कार्म्मुकवरेण तरूपरिस्थं[1] मत्स्यावभासमुदके प्रतिवीक्ष्य येन ।**
**एतैः शरैः प्रतिहतो भवतीह मत्स्यः कृष्णाऽनुयास्यति तमद्य नरेन्द्रवीराः ॥ १२१ ॥**

**इत्यस्य वाक्यमनु सर्वनरेन्द्रपुत्रा उत्तस्थुरुद्धतमदाश्चलकुण्डलास्याः ।**
**अस्त्रं बलं च बहु नैजमभीक्षमाणाः स्पर्द्धन्त एव च मिथः समलङ्कृताङ्गाः ॥ १२२ ॥**

**केचिन्निरीक्ष्य धनुरेत्य न मे सुशक्यमित्येव चापययुरन्य उत प्रचाल्य ।**
**तत्राऽससाद शिशुपाल उरुप्रतापः सङ्गृह्य तत् [2]समनुरोपणयत्न आसीत् ॥ १२३ ॥**

**माषान्तराय स चकर्ष यदैव कोट्या उन्नम्य तत् प्रतिजघान तमेव चाऽशु ।**
**अन्यत्र फल्गुनत एतदशक्यमेवेत्यञ्जो गिरीशवरतः स ययौ च भग्नः ॥ १२४ ॥**

**तरूपरिस्थमत्स्यावभासं वृक्षोपरि तिष्ठतः मत्स्यस्य प्रतिबिम्बम् ॥ १२१–२३ ॥ कोट्याः माषान्तराय ॥ १२४ ॥**

---

भाषणमभिभाषणम् । हुताशनस्येव दीप्यद् दीप्यमानं वपुरस्य । **‘रङ्गमध्यं गतस्तत्र मेघगम्भीरया गिरा । वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम्’** [२००. ५९] इति च ॥ १२० ॥ मत्स्यावभासं मत्स्याकारं काञ्चनं लक्ष्म् । **‘यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् । तेन यन्त्रेण सहितं राजन् लक्षं च काञ्चनम्’** [२००.१७] इति । उदके प्रतिफलितं वीक्ष्य प्रत्येकं पञ्चभिरपि शरैर्हतः । **‘तरूपरिस्थमत्स्यावभासम्’** इति पाठेऽप्ययमेवार्थः । मत्स्यः कनकमयः । नरेन्द्रवीरा इति तत्रगतान् वीरान् नरेन्द्रान् सम्बोध्याऽह । अथाप्यजानन्नेव दैवयोगेन पाण्डवानेव प्रत्याहेव–नरत्वेनावतीर्णो नराविष्टश्चेन्द्र इत्यर्जुनो नरेन्द्रः । नरेन्द्रश्च अन्ये च वीराश्चत्वारः पाण्डवा इति ॥ १२१ ॥ चलाभ्यां कुण्डलाभ्यां आस्यमेव द्रौपदीसमक्षं जिगमिषयेव चलं येषां ते । अथ चलकुण्डलमास्यं येषाम् । अथच चलकुण्डललास्याः । लोपः समाने । केवलम-भिमानेनेक्षमाणाः मन्यमानाः । द्रौपदी मामेवाभिलषेदितीच्छया स्पर्धया समलङ्कृताङ्गाः । स्पर्धन्त एव । केवलं स्पर्धन्ते, जेतुमप्रभवन्तः ॥ १२२ ॥ केचिन्निरीक्ष्यैव भग्नाभिमाना अपययुः । सु सर्वात्मना न शक्यमिति पूर्वमेव निश्चित्य । अन्ये धनुःसविधमेत्य । अन्ये पुनः प्रचाल्य चालयितुं प्रयत्य व्यर्थप्रयत्ना अपययुः । बलादवनम्य ग्रहणं सङ्ग्रहणम् । ततः दृढं बाणसन्धानानुगुणतया ज्यारोपणं समनुरोपणम् ॥ १२३ ॥ माषान्तराय । धनुष्कोट्या ज्यायाश्च मध्ये माषामात्रव्यवधानाय । सप्तम्यर्थे चतुर्थी । माषमात्रेऽन्तरे सति । माषमात्रमन्तरमवशेषयितुमेव चकर्षेति । महता रंहसा प्रयत्य कर्षणेऽपि माषमात्रमन्तरमन्तेऽप्यवाशिष्यतैवेत्यर्थः । अहो महानयं तस्य कन्यारत्नलाभान्तराय एव बभूव । उन्नम्य हस्तात् प्रच्युतं सदुत्पत्य । तद् धनुः । प्रतिजघान । धनुषोऽवनमनाय तेन प्रायत्यत । तत् पुनस्तत्प्रतीकारायेव तमेवोन्नम्य

---

१. **‘–परिस्थमत्स्याव–’** । वे.ती. पाठोऽपि तथा । २. **‘समधिरोपण–’**

**मद्रेश एत्य चकृषे स्थविरोऽपि वीर्य्याच्चेदीशतोऽप्यधिकमेव स मुद्गमात्रे ।**
**शिष्टेऽमुना प्रतिहतः स ययावशक्यं मत्वाऽऽत्मनस्तदनु भूपतयो विषण्णाः ॥ १२५ ॥**

**सन्नेषु भूपतिषु मागध आससाद सोऽवज्ञयैव बलवीर्य्यमदेन दृप्तः ।**
**चापं चकर्ष चलपादतळो[1] बलेन शिष्टे स सर्षपमितेऽभिहतोऽमुनैव ॥ १२६ ॥**

**जानुन्यमुष्य धरणीं ययतुस्तदैव**
**दर्प्पेण चास्थिरपदस्थितिमात्रहेतोः ।**

**मद्रेशः चेदीशतोऽप्यधिकमेव वीर्यात् (चकृषे) ॥ १२५ ॥ सर्षपमिते अवकाशे ॥ १२६ ॥ अस्थिरपदस्थितिमात्रहेतोः । अस्थिराभ्यां पदाभ्यां स्थितिरवस्थानं तावन्मात्रादेव निमित्तात् । अमुष्य जानुनी धरणीं ययतुः । स्वयं निपपातेति भावः ॥ १२७ ॥**

---

जघानेति भावः । एतद् धनुरारोपणम् । अञ्जः निश्चयेन । इति मत्वा सोऽपि ययौ । **'तदध्यारोप्यमाणं तु माषमात्रेऽभ्यताडयत् । धनुषा पीड्यमानस्तु जानुभ्यामगमन्महीम्'** [२०२.२३] इति च । 'अर्जुनतुल्यपराक्रमादन्यैर्धार्यमेतद् भवतु' इति गिरीशवरतः, फल्गुनतः अन्यपुरुषविषये एतदशक्यमिति निश्चित्य । गिरीशवरत एव स्वयं धनुषा भग्नो भग्नाशो ययौ ॥ १२४ ॥ स तदात्वेऽतुलबलवीर्यतया विख्यातः, मद्रेशो ज्याया धनुष्कोट्याश्चान्तरा मुद्गमात्रेऽवकाशे शिष्टे अमुना धनुषा प्रतिहतो बभूव । ततः सोऽपि ययौ । यद्वा एवं व्याख्येयम् । ततो मद्रेश एत्य चकृषे । स्थविरोऽपि स वीर्यात् चेदीशतोऽप्यधिकमेव चकृषे । अथ मुद्गमात्रशिष्टे धनुषा प्रतिहतः स धनुरारोपणमशक्यं मत्वा ययौ । तेन तच्छब्दद्वयस्य न वैयर्थ्यम् । आनमनप्रतीपं हननमुत्पत्य हननम् । **'ततः शल्यो महावीर्यो मद्रराजो महाबलः । धनुरारोप्यमाणं तु मुद्गमात्रेऽभ्यताडयत्'** [२५] इति च । चकर्षेति भ्वादेस्तुदादेर्वा कृषते रूपम् । चकृष इति तु तुदादेरेव कृषतेः । उभयत्रापि **'कृष विलेखने'** इत्येव धातुपाठः ॥ १२५ ॥ शिष्टे सत्येवाभिहतः अवनमयितुरभिमुखमुद्गत्य हननमभिहननम् । **'ततो राजा जरासन्धो महावीर्यो महाबलः । कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः । मत्तवारणताम्राक्षो मत्तवारणवेगवान् । धनुषोऽभ्याशमागत्य तस्थौ गिरिरिवाचलः । धनुरारोप्यमाणं तु सर्षमात्रेऽभ्यताडयत्'** [२४–६] इति च । सर्षः सर्षपः । सरतेः षुगागमे सर्ष इति रूपम् । पुनरपप्रत्यये सर्षप इति । तथाहि दशपादिका–**'सर्तेरपः षुक् च'** [७.८] इति । **'सर्पेर्धातोरपः प्रत्ययो भवति । षुक् चाऽगमः । सृ गतौ । [सरति] धावति, धावन्ति तस्माद् रक्षांसीति वा सर्षपः, रक्षोघ्नं द्रव्यम्'** इति वृत्तिकारः ॥ १२६ ॥ **'जानुभ्यामगमन्महीम्'** [२०२–२३] इति पूर्वोक्तमत्राप्यनुसन्धेयमित्याह– जानुनी अमुष्य । तस्यानवस्थानमप्रग्रहेण द्योतयति । **'अस्थिरपदस्थितिमात्रहेतोः'** इत्येकं पदमिति प्राचीनम् । अस्थिरपदाभ्यामवस्थानमात्रात् हेतोः अपतन् केवलं

---

१. '–तलो बलेन'

**रौद्राद् वरात् स जळतां[१] गमितोऽथ राजा**
**राज्ञां मुखान्यनभिवीक्ष्य ययौ स्वराष्ट्रम् ॥ १२७ ॥**

**प्रायो गतास्तमनु[२] भूपतयोऽथ कर्ण्णो दुर्य्योधनार्त्थमनुगृह्य धनुश्चकर्ष ।**
**रामादुपात्तशुभशिक्षितमात्रतोऽसौ रोमावशिष्टमकरोद् धनुषोऽन्तमाशु ॥ १२८ ॥**

**तस्मिंश्च तेन विहते प्रतिसन्निवृत्ते भीमार्ज्जुनौ द्विजसदस्युपसन्निविष्टौ ।**
**उत्तस्थतू रविशशिप्रतिमानरूपौ विप्रेषु तत्र च भिया विनिवारयत्सु ॥ १२९ ॥**

**दुर्योधनार्थं नतु स्वार्थम् । स्वस्य सूतत्वात् । अन्तं अग्रकोटिम् ॥ १२८ ॥ भिया धनुरारोपणाशक्तौ मानहानिभिया ॥ १२९ ॥**

---

जानुभ्यां धरणीं गत इति । अथापि गमनिकान्तरं भवति । हेतोरिति तृतीयार्थे पञ्चमी । **'तेनैव हेतोः'** इति यथा । अस्थिरपदाभ्यां कथञ्चित् स्थितिमात्रहेतुना दर्पेण कथञ्चिदपततोऽमुष्य । अथच **'अस्थिरपदः+स्थितिमात्रहेतोः'** इति च शक्यं पदं विभक्तुम् । अस्थिरपदः अमुष्य दर्पेण कथञ्चिदात्मानमवष्टभ्य स्थितिमात्राद्धेतोः जानुनी धरणीं ययतुः । पद्भ्यां स्थातुमप्रभवन् जानुभ्यामात्मानं स्थापयामास, सर्वात्मना न पपात । 'अर्जुनतुल्यादन्यैरनारोप्यमेतद् धनुर्भवतु' इति रौद्राद् वरात् । जळतां जडतां स्तब्धताम् । रुद्रदत्तात् स्वस्याजेयत्ववरात् 'मम पुरः कियदिदं धनुः' इति सदर्पमागतः सम्प्रति जळतां गमितो गळितगर्वो बभूवेति च । **'तदैवागात् स्वयं राज्यं पश्चादनवलोकयन्'** [२०२.२८] इति शल्यप्रसङ्गेऽभिहितं भारतवचनमप्यत्रानुगन्तव्यमित्याह– राज्ञां मुखान्यनभिवीक्ष्य ययौ स्वराष्ट्रमिति ॥ १२७ ॥ अनुगृह्य ज्याबन्धानुगुणमवनम्य । दुर्योधनार्थम् । राजन्यमण्डले किल स्वयम्बरघोषणा कृता । मूर्धावसिक्तसमितिरेव वरणार्थमागता । तस्माद् परस्तात् सम्भावितामवमाननां वारयितुं कर्णः पूर्वमेव दुर्योधनार्थोऽयं प्रयत्न इति निश्चित्यैव जगामेत्यर्थः । 'सूतोऽयम् । नास्मै कन्या देया' इति मा कश्चित् पश्चात् परिहसीदिति । दुर्योधनमनोनुगुणं धनुर्गृहीत्वा वा । चकर्ष ज्यां बन्द्धुं धनुष्कोटिं नमयामासेत्यर्थः । उपात्तमुपसदनेन प्राप्तम् । शुभशिक्षितमात्रतः । न सहजसामर्थ्यबलात् । भगवदुपसदनफलमेवेदमिति भावः । **'ततो वैकर्तनः कर्णो वृषा वै सूतनन्दनः । धनुरभ्याशमागम्य तोलयामास तद्धनुः । तं चाप्यारोप्यमाणं तद् रोममात्रेऽभ्यताडयत्'** [२०२.३६] इति च । एतेन **'दृष्ट्वैव तं द्रौपदी वाक्यमुच्चैर्जगाद नाहं वरयामि सूतम्'** इत्यौत्तरैः पठ्यमानं द्रौपदीवचनं प्रक्षिप्तमिति स्फुटम् । अत एव न पठन्ति दाक्षिणात्याः । अत्र पूर्वोत्तरार्धयोरपूर्वः कर्णाटानां प्रियो द्वितीयाक्षरप्रासः ॥ १२८ ॥ तेन धनुषोऽन्तेन । पराभवजनितेन सङ्कोचेनावनतशिरसि प्रतिनिवृत्ते सति । भीमार्जुनौ रविशशिप्रतिमानरूपौ । एतेन–**'भीमसेनधनञ्जयौ ।....पौर्णमास्यां घनैर्मुक्तौ चन्द्रसूर्याविवोदितौ'** [२०५.६३–५] इति भारतवचनं व्याख्यातम्– नात्र यथापाठमन्वयः । किन्तु धनञ्जयभीमसेनौ

---

१. **'जडताम्'** २. **'–स्तदनु'**

**विप्राश्च केचिदतियुक्तमिमौ हि[1] वीरौ देवोपमाविति वचो जगदुस्ततस्तौ ।**
**दृष्ट्वैव कृष्णमुखपङ्कजमाशु चापसान्निद्ध्यमाययतुरुत्तमवीर्य्यसारौ ॥ १३० ॥**

**तत्रार्ज्जुनः पवनजात् प्रियतोऽप्यनुज्ञामादाय केशवमजं मनसा प्रणम्य ।**
**कृत्वा गुणान्वितमदो धनुरश्रमेण यन्त्रान्तरेण स शरैरधुनोच्च लक्षम्[2] ॥ १३१ ॥**

**कृष्णा तदाऽस्य विदधे नवकञ्जमालां मद्ध्ये च तां प्रतिविधाय[3] नरेन्द्रपुत्रौ ।**
**भीमार्ज्जुनौ ययतुरच्युतमाभिनम्य [4]क्षुब्धं तदा नृपवराब्धिरिमावधावत् ॥ १३२ ॥**

**द्रष्टुं हि केवलगतिर्न्नतु कन्यकाया अर्त्थे न चापमिह वृष्णिवराः स्पृशन्तु ।**
**इत्याज्ञयैव वरचक्रधरस्य लिप्सामप्यत्र चक्रुरिह नैव यदुप्रवीराः ॥ १३३ ॥**

**अतियुक्तम्, एतयोरुत्थानमिति शेषः ॥ १३० ॥ अधुनोत् विन्याध ॥ १३१–४ ॥**

---

चन्द्रसूर्याविवेति यथायोग्यमन्वय इति । पाठक्रमादर्थक्रमो हि बलीयान् । उप द्विजानां निकटे, द्विजैः सङ्गत्य स्थितौ । परस्परं चोपसंहततया स्थितौ । द्विजानां समुचितया भङ्ग्या उपविष्टौ । ब्राह्मणैः साकमुपवेशनादेव क्षत्रिये-भ्योऽप्युपरि उन्नतासन उपविष्टौ । 'मा यातमाशु निवर्तेथाम्' इति, 'अब्रह्मण्यमब्रह्मण्यम्' इति, 'मा ब्राह्मण-कुलस्य मानभङ्गं कृषाथाम्' इति, 'अलं साहसेन' इति विविधं निरुध्य वारयत्सु ॥ १२९ ॥ दृष्ट्वैव, ततोऽनुज्ञासङ्केतं लब्ध्वैव । सन्निधिरेव सान्निध्यम् । उत्तमेन वीर्येण सारौ सर्वश्रेष्ठौ । उत्तमं वीर्यं उत्तमः सारो बलं चानयोः ॥१३०॥ प्रियतः प्रीतिपात्रात् । **'प्रीतिपूर्वम्'** इत्येके । पवनजादप्यनुज्ञामादाय । प्रियतोऽपि प्रियत इत्यावृत्त्या वा योजना । कस्य पवनस्यापि ईशं प्रवर्तकं च मनसा प्रणम्य सभक्तिश्रद्धं नत्वा । **'कृष्णं च मनसा कृत्वा जगृहे चार्जुनो धनुः'** [आ.प.२०३.२२] इति भारते । गुणान्वितं आरोपितज्यम् । अश्रमेण कृत्वा । मत्स्ययन्त्रस्य मध्ये चलाचलं मत्स्यावभासरूपं लक्षं पञ्चभिरपि शरैरश्रमेणाधुनोच्च । क्रियामालासमुच्चये चः ॥ १३१ ॥ अस्य कण्ठे विजयसङ्केततया निदधे । तत्प्रतिक्रियात्वेन तौ च तां मध्ये विधाय । आ दूरादेव भक्तिपूर्वकं नत्वा । क्षत्रियाणामिदं स्वयम्बरणम् । कथं ब्राह्मणकुमारयोरवकाश इति क्षुब्धतयाऽधावत् । क्षत्रियाणामस्थाने क्षोभं दृष्ट्वा स्वयमपि क्षुब्धं क्रुद्धमच्युतं प्रसादयितुमाभिनम्येति वा ॥ १३२ ॥ चापारोपं द्रष्टुम् । नतु चापमारोपयितुम् । आरोपितचापं पार्थं पाण्डवांश्च द्रष्टुमिति कृष्णस्यान्तरङ्गम् । इह स्वयम्बरे । वरं सर्वशस्त्रोत्तमं चक्रम् । भक्तानां वरमुद्रां, अभयाख्यं वरं वा, चक्रं च धरतीति वा । भक्तानामभीष्टवराणां चक्रं समुदायं धरतीति च । येये वधूभिर्वरणीया वरास्तेषां चक्रमयमेव धरतीति च । कस्याः को वर इति तन्निर्धार एव फलति, न वधूवरयोर्न तन्मातापित्रोर्नाप्यन्येषां बन्धूनां सुहृदां वेति । तादृशस्य तस्याऽज्ञा-

---

१. **'–मिमौ च वीरौ'** २. **'लक्ष्यम् ।'** ३. **'प्रतिनिधाय'** ४. **'क्षुब्धस्तदा'**

भीमस्तु राजसमितिं प्रतिसम्प्रयातां दृष्ट्वैव [१]योजनदशोच्छ्रयमाशु वृक्षम् ।
आरुज्य सर्वनृपतीनभितोऽप्यतिष्ठद्[२] दृष्ट्वा पलायनपराश्च बभूवुरेते ॥ १३४ ॥

भीमोऽयमेष पुरुहूतसुतोऽन्य एते पार्त्था इति स्म हलिने हरिरभ्यवोचत् ।
दृष्ट्वैव सोऽपि मुदमाप शिनेश्च पौत्रः खड्गं प्रगृह्य हर्षात्[३] परिपुप्लुवेऽत्र ॥ १३५ ॥

प्रीतेषु सर्वयदुषु प्रपलायितेषु दुर्योधनादिनृपतिष्वखिलेषु भीमात् ।
कर्ण्णोऽभ्ययाद्धरिहयात्मजमाशु मद्रराजो जगाम पवनात्मजमेव वीरः ॥ १३६ ॥

विप्रेषु दण्डपटदर्भमहाजिनानि कोपात् क्षिपत्सु न विनाशनमत्र भूयात् ।
क्षत्रस्य वैरत इति द्रुपदे च कृष्णं विप्रांश्च याचति स मारुतिरार शल्यम् ॥ १३७ ॥

वृक्षं त्वसौ प्रतिनिधाय च मद्रराजं दोर्भ्यां प्रगृह्य जवतो गगने निधाय ।
बन्धुत्वतो भुवि शनैरदधात् स तस्य विज्ञाय वीर्य्यमगमन्निजराजधानीम् ॥ १३८ ॥

**एते त्रयः अन्ये पार्थाः । शिनेः पौत्रश्च मुदमाप ॥ १३५–६ ॥ अत्र मङ्गल्यकर्मणि वैरतः विप्रवैरतः क्षत्रस्य विनाशनं न भूयात् ॥ १३७–८ ॥**

---

मुल्लङ्घ्य कथं वा यदुप्रवीरा लिप्सामपि कुर्युः । आज्ञयैवेत्येवकारेण कृष्णस्याप्रतिहताज्ञत्वमाह । अत्र द्रौपद्याम् । इह स्वयम्बरे ॥ १३३ ॥ प्रतिरोद्धुं समेत्याऽगताम् । योजनदशोच्छ्रयम् । यथासम्भवं योजनीयानि योजनानि भवन्ति । यत्रौन्नत्यं परिमीयते तत्र व्यायतयोर्भुजयोरन्तरं प्रायो योजनमित्युच्यते । आरुज्य उत्पाट्य । अभितोऽपि, अग्रतश्च पृष्ठतश्च, पार्श्वयोश्च । यत्रयत्र गच्छन्ति तत्रतत्र भीममेव ददृशुरित्यर्थः ॥ १३४ ॥ अन्य एते अन्ये पार्थाः । छत्रिन्यायेन माद्रीपुत्रावपि पार्थावुच्येते । पृथैव च तौ मातृवत् पालयामास । अभ्यवोचत् । स्वयमभिज्ञाय यदूनामभिज्ञानायावोचत् । शिनेः पौत्रः सात्यकिश्च हर्षगद्गदतया परिपुप्लुवे परितो नृत्यन्निव धावति स्म । अत्र स्वयम्बरमण्टपे ॥ १३५ ॥ भीमात् भीमं वीक्ष्य सर्वयदुषु प्रीतेषु । भीमाद् भीतान् दृष्ट्वा प्रीतेषु वा । भीमोऽयमित्यजानत्स्वपि भीमकर्मणोऽस्य पौरुषं वीक्ष्य भीतेषु दुर्योधनादिषु प्रद्रुत्य पलायितेषु । पवनात्मजमेव । एवकारेण 'उभावप्यसमानवीरौ । उभावपि गदायुद्धे परिणतौ । तस्माद् योग्योऽयं समावेशः' इत्याह । स वीरः, अयं समीर इति ॥ १३६ ॥ अजिनं प्राणिनां चर्म । यद् विप्राणामनुष्ठानोपयोगि, परिधानीयं च, तन्महाजिनम् । कृष्णाजिनमित्येतत् । याचति सति । मारुतिः आर जगाम । ऋच्छतेर्वा इयर्तेर्वा लिट् । ऋ गतिप्रापणयोः, ऋच्छति । ऋ गतौ, इयर्ति ॥१३७॥ पूर्ववत् भूमौ प्रतिष्ठितं निधाय ।

---

१. **'योजनशतोच्छ्रय–'** इति क्वचित् । २. **'–नभितो ह्यतिष्ठद्–'** ३. **'हर्षात्'** इति विश्लिष्य पठनीयम् ।

**पार्त्थोऽपि तेन धनुषा युयुधे स्म कर्ण्णं [1]सोऽप्यस्त्रबाहुबलमाविरमुत्र चक्रे ।**
**तौ धन्विनामनुपमौ[2] चिरमस्यतां च सूर्य्यात्मजोऽत्र वचनं व्यथितो बभाषे ॥ १३९ ॥**

**त्वं फल्गुनो हरिहयो द्विजसत्तपो[3] वा**
**मूर्त्तं न मे प्रमुखतः स्थितिमन्य ईष्टे ।**
**यो वाऽस्मि कोऽपि यदि ते क्षममद्य बाणान्**
**मुञ्चान्यथेहि[4] रणतस्त्विवति पार्त्थ आह ॥ १४० ॥**

**कार्य्यं न मे द्विजवरैः प्रतियोधनेनेत्युक्त्वा ययौ रविसुतः स सुयोधनाद्यैः ।**
**नागाह्वयं पुरमथ द्रुपदात्मजां तामादाय चार्ज्जुनयुतः प्रययौ स भीमः ॥ १४१ ॥**

**तेन धनुषा, स्वयंवरे स्वयमारोपितेन धनुषा । अस्यतां बाणानाक्षिपताम् ॥ १३९ ॥ यो वा कोऽपि, तेषु यो वा कश्चन, अस्मि । क्षमं शक्यम् । अन्यथा अक्षमं चेत् रणतः इहि गच्छ ॥ १४०–१ ॥**

---

बाहुभ्यां समुत्क्षिप्य । **'ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे । अपातयत् कुरुश्रेष्ठो ब्राह्मणा जहसुस्तदा । तत्राऽश्चर्यं भीमसेनश्चकार पुरुषर्षभः । यच्छल्यं पतितं भूमौ नावधीद् बलिनं बली'** [२०५.३५] इति च ॥१३८॥ ननु वटुवेषोऽर्जुनो निरायुध आगतः । कथं युयुधे? आह–तेन धनुषा । येन मत्स्यभेदनपणं जित्वा द्रौपदीमवाप तेन धनुषा । अमुत्र अर्जुने आविश्चक्रे । देहतः सन्निकृष्टोऽपि बलेन विप्रकृष्ट इत्यदसः प्रयोगः । अस्यतां आस्यताम् । असु क्षेपणे, लङि अडभावः । बाणानक्षिपताम् । यद्वा अस्यतां अयुद्ध्यताम् । स्यतेर्लङि रूपम् । षो अन्तकर्मणि । अत्र युद्धे पार्थबाणैर्व्यथितः ॥ १३९ ॥ **'किं त्वं साक्षाद् धनुर्वेदो रामो वा विप्रसत्तमः । अथ साक्षाद् हरिहयः साक्षाद् वा विष्णुरच्युतः'** [२०५.१७] इति च । अत्र **'विप्रसत्तपः'** इति भारतपाठो भगवत्पादसम्मत इति स्फुटम् । मूर्तं तपो वा । स्थितिमीष्टे स्थातुं प्रभवति । **'अधीगर्थदयेशां कर्मणि'** [अ.सू.२.३.५२] इति षष्ठी विभाषा भवति । तद् यथा– मातुः स्मरति, मातरं स्मरति । यो वा को वा भवामि । यः कश्चित् अपरिचितोऽस्मि । अपि वा त्वदुल्लिखितेषु त्रिषु यो वा कोऽपि भवामि । नवा भवामि । किं तेन ते? शक्तिचिन्ता क्रियताम्, न व्यक्तिचिन्तेत्यर्थः । रणतस्तु रणत एव, इहि अपगच्छ । किमयुध्यतो रणे वृथा प्रलापेन ॥ १४० ॥ प्रतिकाराय योधनं प्रतियोधनम् । नहि द्विजेषु वरा विप्राः प्रतीकारमर्हन्ति । तेन न कार्यम्, न किमपि प्रयोजनम् । अथ प्रायः पलायिते राजन्यवृन्दे पराजितयोश्च शल्यकर्णयोः, नागाह्वयं पुरं गते च सधार्तराष्ट्रे कर्णे । स शल्यजेता भीमः प्रहृष्टो ययौ ॥ १४१ ॥

---

१. **'सोऽप्यत्र बाहु–'** २. **'धन्विनावनु–'**
३. **'द्विजसत्तमो वा'** इति पाठः प्रामादिकः । ४. **'–न्यथैहि'**

**अग्रेऽश्विपुत्रसहितः स तु धर्म्मसूनुः प्रायात् कुलालगृहमन्वपि भीमपार्त्थौ ।**
**भिक्षेति तैरभिहिते प्रजगाद कुन्ती भुङ्ग्ध्वं समस्तश इति प्र ददर्श कन्याम् ॥ १४२ ॥**

**प्रामादिकं च वचनं न मृषा तयोक्तं प्रायो हि तेन कथमेतदिति स्म चिन्ता ।**
**तेषां बभूव वसुदेवसुतो हरिश्च[१] तत्राऽजगाम परमेण हि सौहृदेन ॥ १४३ ॥**

**सम्भाष्य तैः स भगवानमितात्मशक्तिः**
**प्रायान्निजां[२] पुरममा यदुभिः समस्तैः ।**
**ज्ञातुं च तान् निशि स तु द्रुपदः स्वपुत्रं**
**[३]प्रास्थापयत् स च विलीन[४] इमानपश्यत् ॥ १४४ ॥**

**भिक्षान्नभोजिन उतो भगिनीं निजां च तत्रातितृप्तहृदयामथ युद्धवार्त्ताम् ।**
**तेषां निशम्य नदतां घनवद् गभीरां[५] क्षत्रोत्तमा इति मतिं स चकार वीरः ॥ १४५ ॥**

**प्रातस्तु तस्य जनितुर्वचसा पुरोधास्तान् प्राप्य मन्त्रविधिना मरुदात्मजेन ।**
**सम्पूजितोऽतिविदुषा प्रतिगृह्यँ तांश्च प्रावेशयन्नृपतिगेहममैव मात्रा ॥ १४६ ॥**

**भीमपार्थावपि अनुययतुः ॥ १४२–४ ॥ उतो अनन्तरम् ॥ १४५ ॥ जनितुः जनयितुः ॥ १४६ ॥**

---

अग्रे पूर्वमेव । भीमपार्थावपि तमनुप्रायाताम् । यद्यपि भीमोऽपि पार्थः । अथापि विशिष्य पृथगुल्लिलेख । बलदेव-वासुदेवावितिवत् । प्रजगाद दैवेनान्तः प्रेरितेव प्रसभमनालोच्यैव जगाद । समस्तशः सर्वे । समस्तां च भिक्षाम् । प्रकृष्टां कन्यां ददर्श । भीमार्जुनाभ्यां भिक्षात्वेन प्रदर्शितां कन्यां ददर्श । प्रकामं विस्मिता विकसितनयना ददर्श ॥ १४२ ॥ प्रामादिकमनवधानमूलम् । हरिश्च । चकारेण चिन्तासमकालं चिन्तां दूरीकर्तुमिवाऽजगामेति गम्यते । वसुदेवसुत इति । मातुर्वचनेन चिन्ताकुलानां मातुलसुतसमागम आसीदित्यनेनाऽह । सर्वामपि चिन्तां हरतीति किल हरिरित्युच्यते ॥ १४३ ॥ समानं भाषणं सम्भाषणम् । सह भाषणं च । परस्परं कुशलप्रश्नः । समाधातुं भाषणं च सम्भाषणम् । अमा सह । स तु द्रुपदः । गूढवेषाणां पार्थानां यथार्थजिज्ञासाकातर्य्यं नाम विशेषं तुनाऽऽह । स्वपुत्रं धृष्टद्युम्नमम् ॥ १४४ ॥ उतो अथापि । अथ भिक्षान्नभोजनानन्तरं घनवत् नदतां गभीरां युद्धवार्तां निशम्य । 'गभीरम्' इति पाठे स्फुटोऽर्थः । मतिं चकार निश्चिकायेत्यर्थः ॥ १४५ ॥ प्रातस्तु प्रातरेव, विलम्बमकृत्वा । तस्य धृष्टद्युम्नस्य जनितुः

---

१. **'वसुदेवसुतश्च कृष्णस्तत्रा–'** इति क्वचित् । २. **'–न्निजं पुर–'** इति क्वचित् । ३. **'प्रस्थापयत्'** इति क्वचित् ।
४. **'च निलीन–'** ३. **'गभीरम्'**

तानागतान् समभिपूज्य निजात्मजां च विप्रादियोग्यपृथगुक्तपदार्थजातैः ।
पूर्ण्णान् गृहांश्चतुर एव दिदेश राजा तत्राऽयुधादिपरिपूर्ण्णगृहं च तेऽगुः ॥ १४७ ॥

चेष्टास्वराकृतिविवक्षितवीर्य्यशौर्य्यप्रागल्भ्यपूर्वकगुणैः क्षितिभर्त्तृपुत्रान् ।
विज्ञाय तान् द्रुपद एत्य च धर्म्मसूनुं पप्रच्छ कोऽसि नरवर्य्य वदस्व सत्यम्॥ १४८ ॥

स प्राह मन्दहसितः किमिहाद्य राजन् पूर्वं हि वर्ण्णविषये न विशेष उक्तः ।
पुत्रीकृते तव सुतेन तु लक्षवेध[१] उक्तो नरेन्द्रसमितौ स कृतोऽप्यनेन ॥ १४९ ॥

एवं ब्रुवाणमथ तं पृथया सहैव राजा वदेति पुनरेव ययाच एषः ।
सर्वं पृथाऽप्यवदतां स च तेन तुष्टो वाचं जगाद कृतकृत्य इहाऽसमद्य ॥ १५० ॥

**विप्रादियोग्यपृथगुक्तपदार्थजातैः । विप्रादयो ब्राह्मणाद्याश्चत्वारो वर्णाः । तेषां योग्याः तत्कर्माङ्गभूताः, पृथगुक्ताः एते ब्राह्मणस्य एते क्षत्रियस्येत्यादिपृथगुदिताः, ये पदार्थाः तेषां समूहैः । आयुधादिभिः परिपूर्णगृहं क्षत्रिययोग्यमिति यावत् ॥ १४७ ॥ चेष्टा क्षत्रिययोग्यव्यापारविशेषः । स्वरः गम्भीरत्वादि-विशेषयुक्तः । आकृतिः क्षत्रियत्वज्ञापकविशेषयुक्ता । विवक्षितं वक्तुमिष्टं वचनम्, अभिप्रायविशेषः । वीर्यशौर्ये । प्रागल्भ्यं प्रौढभावः । एतत्पूर्वकगुणैः । धर्मसूनुमेत्य ॥ १४८–९ ॥**

---

जनयितुः । **'यो नः पिता जनिता'** इति श्रुतिः । जनयित्री जनित्री च भवति । जनयिता च जनिता । तत्रान्तर्भावितो हि ण्यर्थः । तस्य धृष्टद्युम्नेन विदितोदन्तस्य जनितुर्द्रुपदस्येति वा । मन्त्रपूर्वको विधिर्मन्त्रविधिः । तां पूजां प्रतिगृह्य, तांश्च प्रतिगृह्य यथायोग्यं प्रतिपूज्य ॥ १४६ ॥ निजात्मजां च समभिपूज्य । प्रीत्या स्वागतमभिव्याहृत्य, आलिङ्गनादिना यथोचितं सत्करणं समभिपूजनम् । दिदेश यथेष्टमुष्यतामिति ददौ । आयुधादिक्षत्रयोग्यपदार्थपरिपूर्णगृहमेव तेऽगच्छन् ॥ १४७ ॥ अभिभवनशक्तिर्वीर्यम् । अनभिभाव्यत्वं शौर्यम् । येन परे भवन्त्यानतमस्तकाः । शत्रुभिः परीतस्यापि निश्चिन्ततयाऽवस्थानं प्रागल्भ्यम् । अपरिचितेऽपि निर्भयं वर्तनम्, स्वाभिमते दृढता च । एतादृशा गुणाः तेषां चेष्टादिना विज्ञायन्ते । अङ्गचेष्टा दैहिकी । स्वरभेदो वाचिकः । मुखे आकृतिविशेषः मनसो भावाभिव्यञ्जकः । वक्तुमुद्दिष्टं वचनं च निगूढं मनोऽभि-व्यनक्ति । सत्यं वदस्व ममाऽनन्दाय । स्वेषां यत् सत्यम् तद् वदेति वा । वस्तुस्थितिं कथयेत्येतत् ॥ १४८ ॥ अद्य लक्षवेधानन्तरम्, इहैकान्ते वर्णादिजिज्ञासया किं फलम्? पूर्वं लक्षवेधसमये, नरेन्द्रसमितौ सर्वसमक्षम्, ब्राह्मणादीनां नात्रावकाशः, क्षत्रिया एवात्राधिकृता इति कन्यार्थिषु विशेषो नोक्तः । अत एव कर्णोऽपि लक्षवेधाय प्रायतिष्ट । नापि व्यरुद्ध धृष्टद्युम्नः ॥ १४९ ॥ पृथया सह एवं ब्रुवाणं तं पृथया सहैव ययाचे । पृथां ययाचे । तं च ययाचे । एष युधिष्ठिरः,

---

१. 'लक्ष्यवेध–'

पार्त्थार्त्थमेव हि मयैष कृतः प्रयत्नस्त्वं फल्गुनोऽन्य उतवाऽद्य करं सुतायाः ।
गृह्णात्वितीरित इमं स तु धर्म्मसूनुराह स्म सर्व इति मे मनसि प्ररूढम् ॥ १५१ ॥

नात्र प्रमा मम हृदि प्रतिभात्यथापि धर्म्माचला मम मतिर्हि तदेव मानम् ।
इत्युक्तवत्यपि सहैव सुतेन[१] राजा नैवैच्छदत्र भगवानगमच्च कृष्णः ॥ १५२ ॥

व्यासं तमीक्ष्य भगवन्तमगण्यपूर्ण्णनित्याव्ययात्मगुणमाशु समस्त एव ।
नत्वाऽभिपूज्य वरपीठगतस्य चाऽऽज्ञामादाय चोपविविशुः सहितास्तदन्ते ॥ १५३ ॥

कृष्णस्तदाऽऽह नृपतिं प्रति देहि कन्यां सर्वेभ्य एव वृषवायुपुरन्दरा हि ।
नासत्यदस्रसहिता इम एव इन्द्राः पूर्वे च सम्प्रतितनश्च हरेर्हि पश्चात् ॥ १५४ ॥

**एषः युधिष्ठिरः, पृथाऽपि सर्वमवदताम् । पृथया सह तं वदेति ययाचे । (अतोऽवदतां) इति भावः ॥१५०॥ एषः प्रयत्नः । त्वं वा गृहाण । फल्गुनो वा गृह्णातु । सर्वे गृह्णीम इति ॥ १५१ ॥ सर्वैः ग्रहणे (प्रमा) प्रमाणं न उपलभ्यते । अथापि प्रमाणाभावेऽपि मम हृदि मनसि प्रतिभाति । सर्वे गृह्णीम इति मनसि प्रतीतोऽप्यधर्मः किं न स्यादित्यत आह–धर्माचलेति । मम मतिः धर्माचला हि यस्मात् तस्मात् तदेव मम प्रतिभानमेव मानम् । नैतद्विधायकागम इति भावः ॥ १५२ ॥ समस्तः सर्वे ॥ १५३ ॥ तव सुतायाः पञ्चदेव्यात्मकत्वात् तत्पतिभूतेभ्यः पञ्चभ्यो दानं नाधर्म इति वक्तुं युधिष्ठिरादीनां स्वरूपमाह–वृषेति । हरेः पश्चात् यज्ञनाम्नो हरेरनन्तरं ते नासत्यदस्रसहिता वृषवायुपुरन्दराः पूर्वे इन्द्राः यश्च सम्प्रतितन इन्द्रः त एव इमे हि पाण्डवा हि ॥ १५४ ॥**

---

पृथाऽपि सर्वमवदताम् । 'इहाद्य किम्' इति धर्मराजप्रश्नस्योत्तरमाह– 'इहाद्य कृतकृत्य आसम्' इति । अस्मिन् क्षणे इह भूमण्डले अहमेव कृतकृत्यः ॥ १५० ॥ उतवा अन्यः भीमः । लक्षवेधेन फल्गुनोऽधिकारी । ममाभिलषितश्च । यदि ज्येष्ठयोः सतोः स न परिणिनीषति तदा त्वं वा तस्या भर्ता भव, भीमो वेति तदाशयः । सर्वे करं गृह्णीम इति मे मनसि प्ररूढं प्रगाढतया लग्नम् ॥ १५१ ॥ अत्र विषये प्रमाणं तु मम मनसि न स्फुरति । मम मतिरन्तःकरणप्रवृत्तिः धर्मे अचला । तस्मात् तदन्तःस्फुरणमेव मानम् । अत्र अस्मिन् सङ्कटप्रसङ्गे ॥ १५२ ॥ अगण्याः, एकैकशोऽपि पूर्णाः, नित्याः, अव्यया वृद्धिह्रासवर्जिताश्च स्वरूपगुणा यस्य तम् । समस्तः समस्ताः । **'सुपां सु–'** [अ.सू.७.१.३९] इति जसः सुः । ऐकमत्यसूचनायोपग्रहव्यत्ययः । वैवक्षिके सर्वनामत्वे **'समस्ते'** इति साधु रूपमिति प्राचीनटीका । अभिपूज्य च, आज्ञामादाय च । तदन्ते तन्निकटे ॥ १५३ ॥ नृपतिं प्रत्याह । सर्वेभ्य एव प्रत्येकं देहीति वा । इतरविलक्षणताद्योतनाय

---

१. ' –त्यपि सुतेन सहैव राजा' इति क्वचित् ।

एषां श्रियश्च[१] निखिला अपिचैकदेहाः[२] पुत्री तवैव न ततोऽत्र विरुद्धता हि ।
इत्युक्तवत्यपि यदा द्रुपदश्चकार संवादिनीं न धियमेनमथाऽह कृष्णः ॥ १५५ ॥

दिव्यं हि दर्शनमिदं तव दत्तमद्य पश्याऽशु पाण्डुतनयान् दिवि संस्थितांस्त्वम् ।
एतां च ते दुहितरं सह तैः पृथक्स्थां तल्लक्षणैः सह ततः कुरु ते यथेष्टम् ॥ १५६ ॥

इत्युक्तवाक्यमनु तान् स ददर्श राजा कृष्णप्रसादबलतो दिवि तादृशांश्च ।
एतान् निशाम्य चरणौ जगदीशितुश्च भीतो जगाम शरणं तदनादरेण ॥ १५७ ॥

दत्वाऽभयं स भगवान् द्रुपदस्य कार्य्ये तेनोमिति स्म कथिते स्वयमेव सर्वाम् ।
वैवाहिकीं कृतिमथ व्यदधाच्च धौम्ययुक्तः क्रमेण जगृहुर्निखिलाश्च पाणिम्[३] ॥ १५८ ॥

**अत्र पञ्चभ्यो दाने । विरुद्धता धर्मविरुद्धता (नहि) । एते देवाः, एषा पञ्चदेव्यात्मका इत्येतत् कथमहं जानीयामिति द्रुपदशङ्कां परिहर्तुं कृष्णः किमाहेत्यत आह– इत्युक्तवतीत्यादिना ॥ १५५ ॥ दिव्यं दर्शनं दिव्यदृष्टिः । अद्य तव दत्तं हि यस्मात् तस्मात् । (एतां) ते दुहितरं च तल्लक्षणैः भारत्या(दीनां) लक्षणैः सह, तदुक्तलक्षणवत्तयेति भावः, तैः मरुदादिरूपैः पाण्डुतनयैः सह पृथक्स्थां पञ्चरूपां पश्य ॥ १५६ ॥ तदुक्तं (वाक्यमनु) । तदनादरेण तद्वाक्याविश्वासेन भीतः ॥ १५७ ॥ स भगवान् द्रुपदस्य अभयं दत्त्वा, तेन कार्ये स्वोक्तकार्ये, ओमिति कुर्यामिति कथिते सति ॥ १५८ ॥**

---

'इम एव इन्द्राः' इति विसंहिततया प्रयोगः । तद् यथा श्रुतौ– **'तमेवैकं जानथ आत्मानम्'** इति । तेन दारसङ्ग्रहोऽपीतरविलक्षण इत्यर्थः । प्रथममन्वतरेन्द्रात् यज्ञनामकाद्धरेः पश्चात् वायू रोचननामा द्वितीयः इन्द्रः । ततो वृषः सत्यजिन्नाम । ततो नासत्यदस्रौ त्रिशिखविभुनामानौ । षष्ठश्च मन्द्रद्युम्न इति पूर्वे इन्द्राः । यश्चात्र षष्ठः मन्द्रद्युम्नः स एव सम्प्रतितनः पुरन्दरनामा च ॥ १५४ ॥ एषां श्रियो भार्याः । स्वस्वभर्तृश्रयणात् । श्यामळा भारती शची उषाश्चेति चतस्रोऽपि एकदेहगताः तव पुत्रीत्वेन बभूवुः ॥ १५५ ॥ दिव्यं चक्षुस्तव मया दत्तम् । तत्तद्देवतालक्षणैस्तैः सह । तत्तद्देवीलक्षणलक्षितां ते दुहितरं पश्य ॥ १५६ ॥ दिव्यदर्शनात् पूर्वं व्यासवचनेऽनाश्वासेन भीतः शरणं जगाम ॥ १५७ ॥ कृतिमथ । माङ्गलिकीं कृतिम् । अथ व्यदधात् कार्त्स्न्येन व्यदधात् । अथ पञ्चपाणिग्रहणे निर्भयतया द्रुपदेन स्वीकृते सतीति च । क्रमेण शास्त्रविधिक्रमेण, अथ क्रमेण ज्यैष्ठ्यक्रमेण, निखिलाश्च पार्थाः ॥ १५८ ॥

---

१. **'एषां स्त्रियश्च'** २. **'–देहा पुत्री'**

३. **'क्रमेण निखिला जगृहुश्च पाणिम्'** इति क्वचित् ।

पाश्चालकेषु च महोत्सव आस राजा तुष्टोऽभवत् सह सुतैः स्वजनैश्च सर्वैः[१] ।
पौरैश्च जानपदिकैश्च यथैव रामे दत्वा सुतां जनक आप मुदं ततोऽनु ॥ १५९ ॥

उद्वाह्य तत्र निवसत्सु च[२] पाण्डवेषु श्रुत्वैव रामसहितः सह यादवैश्च ।
आदाय पारिबर्हं[३] बहुलं स कृष्ण आयान्मुदैव पृथया सहितांश्च पार्थान् ॥ १६० ॥

दृष्ट्वैव तं मुमुदुराशु कुरुप्रवीरा आश्लिष्य कृष्णमथ नेमुरसौ च कृष्णाम् ।
दृष्ट्वा प्रदाय गृहयोग्यसमस्तभाण्डं सौवर्ण्णमेभ्य उरुभूषणमच्युतोऽदात् ॥ १६१ ॥

देवाङ्गयोग्यशुभकुण्डलहारमौलिकेयूरवस्त्रसहितान्युरुभूषणानि ।
षण्णां पृथक्पृथगदात् पृथगेव योग्यान्यन्यद् ददावथ पितृष्वसुरात्मयोग्यम् ॥ १६२ ॥

**यथैवेत्युक्त्या जनकद्रुपदयोरन्योन्यसाम्यं प्रतीतं निवारयति– ततोऽनु इति । ततः जनकात् अनु ॥ १५९–६० ॥ सौवर्णं गृहयोग्यसमस्तभाण्डं प्रदाय कृष्णायै, एभ्यः कृष्णायै च उरुभूषणमदात् ॥ १६१ ॥ तदेव विवृणोति– देवेत्यादिना । पृथगेव योग्यानि, प्रत्येकं योग्यान्येव भूषणानि, तदङ्गपरिमाणतयेति भावः । अथ पितृष्वसुः कुन्त्याः आत्मयोग्यं मृतभर्तृकायास्तस्या योग्यं अन्यद् भूषणं ददौ ॥ १६२ ॥**

---

पाश्चालकेषु पाण्डवानामनुकम्पाविषयेषु पाश्चालेषु । ततोऽनु जनकात् किञ्चिदूनम् । जनकानन्दाद्वा ॥ १५९ ॥ उद्वाह्य उद्वाहं निर्वर्त्येत्यर्थः । यद्वा बलीवर्दः शकटं वाहयतीत्यादिवत् स्वार्थे णिच् । उद्वाहयति उद्वहतीत्यर्थः । पारतन्त्र्यं च णिजर्थः । भगवता व्यासेन मात्रा च, तयोराज्ञयेत्येतत्, उद्वाहिता इत्यर्थः । तत्र च तत्रैव । हस्तिनपुरमगत्वा । पाण्डवेषु च । चकारात् तन्मातरि च । वक्ष्यति हि–**'पृथया सहितांश्च'** इति । परिबर्ह एव पारिबर्हः । राजोचितमुपायनं परिबर्हः । **'परिबर्हस्तु राजार्हवस्तुन्यपि परिच्छदे'** इत्यभिधानम् । पारिबर्हमिति रेफव्यूहेन बाहुल्यमभिनीय दर्शयतीव ॥ १६० ॥ कुरुप्रवीराः पाण्डवाः । धर्मवायुतनयावाश्लिष्य मनसा नेमतुः । अर्जुनादयः प्रकटं नेमुः । एभ्यः सर्वेभ्यः । भाण्डं भाजनजातम् । उरूणां भूषणानां समुदाय उरुभूषणम् ॥ १६१ ॥ शुभानि शोभमानानि । उरूणि उत्कृष्टानि । षण्णां द्रौपदीसहितानां पाण्डवानाम् । पृथक्पृथक् योग्यानि पृथगेवादात् । अथ पितृष्वसुः कुन्त्या अन्यदेव तद्योग्यं वस्त्रादिकं ददौ ॥ १६२ ॥

---

१. **'सुतैश्च निजैश्च सर्वैः'** । **'सुतैः स्वजनैः समस्तैः'** इति कचित् । २. **'निवसत्स्वथ पा–'**

३. **'पारिबर्हम्'** इति विश्लिष्य पठनीयम् ।

रत्नानि गा [१]गजतुरङ्गरथान् सुवर्ण्णभारान् बहूनपि ददावथ चाशिषोऽग्र्याः ।
व्यासोऽप्यदादिह परत्र च पार्षतोऽपि भूषारथाश्वगजरत्नसुकाश्चनानि ॥ १६३ ॥

दासीश्च दाससहिताः शुभरूपवेषाः साहस्रशो ददतुरत्र हरिर्नृपश्च ।
तासां विचित्रवसनान्युरुरत्नमालाः प्रत्येकशो ददतुरप्युरुभूषणानाम् ॥ १६४ ॥

मासान् बहूनपि[२] विहृत्य सहैव पार्त्थैः कृष्णो ययौ यदुपुरीं सहितोऽग्रजेन ।
अन्तर्हिते भगवति प्रततोरुशक्तौ व्यासे च वत्सरमिहोषुरिमे तु[३] पार्त्थाः ॥ १६५ ॥

वैचित्रवीर्य्यतनयाः सह सौबलेन कर्ण्णेन सिन्धुपतिना रथहस्तियौधैः[४] ।
भूरिश्रवःप्रभृतिभिश्च सहैव हन्तुं पाश्चालराजमगुरेत्य पुरीं पुनस्ते ॥ १६६ ॥

**सुवर्णभारान् । विंशतितुलापरिमितं भार इत्युच्यते । 'भारस्तु विंशतितुलः' इत्यभिधानम् । अच्युतो ददौ । व्यासोऽपि इह परत्र च अग्र्या आशिषः अदात् । पार्षतोऽपि भूषणादीनि अदात् ॥ १६३ ॥ वेषो नाम वस्त्राद्यैः सम्पन्नं सौन्दर्यम् । पूर्वमप्युरुभूषणानाम् । तासां दासीनाम् ॥ १६४ ॥ इह पाश्चालनगरे विहृत्य । पार्थाश्च वत्सरमिह पाश्चालनगरे ऊषुः ॥ १६५ ॥ सिन्धुपतिः सैन्धवः । योधाः पदातयः । तैः**

---

अथ व्यासोऽप्याशिषोऽदात् । इह परत्र चोन्नतिदत्वादग्र्याः । पार्षतोऽपि भूषादीन्यदात् । भूषा इति भिन्नं वा पदम् । देहालङ्करणानि भूषाः । गेहालङ्करणानि रथादीनि पश्च । रथाश्वगजा वाहनानि । रत्नान्यनर्घाणि दुर्लभानि वस्तूनि । सुकाश्चनानि स्फुटितकनकानि यैः क्रियन्तेऽलङ्करणानि । शृङ्गीकनकानि वा ॥ १६३ ॥ शुभरूपवेषाः शोभनाकाराः शोभनालङ्काराः । सहस्रमेव साहस्रम् । सहस्राणां समूहो वा साहस्रम् । अनेकानि सहस्राणीत्यर्थः । **'भिक्षादिभ्योऽण्'** [अ.सू.४.२.३८] इति समूहार्थेऽण् । यद्यपि भिक्षादिगणे सहस्रशब्दो न पठ्यते । अथाप्याकृतिगणत्वादपठितमपि पठिष्यत इति वैयाकरणाः । अत्र पाश्चालनगरे । साहस्रशः सहस्राणि दासीदासाः । अत्र विवाहमहोत्सवे । तन्निमित्तमिति यावत् । अत्र पाण्डवेषु । तदर्थमिति यावत् । तासां दाससहितानां दासीनामपि । ददतुरपि पुनरपि ददतुः । पूर्वमेव धृतोरुभूषणानामपि । अथवा अपिः पदार्थे वर्तते । **'पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः । सर्पिषोऽपि स्यात् । मधुनोऽपि स्यात् । मात्रा बिन्दुः स्तोकमित्यस्यार्थेऽपिशब्दो वर्तते'** इति जयादित्यः [अ.सू.१.४.९६] । तथाच भूषणानामपि ददतुः, भूषणानां राशिं ददतुरित्यर्थः ॥ १६४ ॥ सहितोऽग्रजेन यादवैश्च । इमे तु । कृष्णबादरायणाभ्यां रक्षाविशेषं तुनाऽऽह ॥ १६५ ॥ सौबलेन शकुनिना । सिन्धुपतिना जयद्रथेन । भूरिश्रवाः प्रभृतिः प्रधानो येषां भूरिशलयोरन्येषां

---

१. **'गोगज–'**

२. **'बहूनिह विहृत्य'** इति वे.ती. पाठः ।

३. **'–रिमे च पार्थाः'** । वे.ती.पाठोऽपि तथा ।

४. **'–योधैः'**। वे.ती. पाठोऽपि तथेति भाति ।

तैरर्दिते स्वपुर आशु स सोमकानां राजा सुतैः सह ससैनिक उद्गतोऽभूत् ।
तेषां च तस्य च बभूव महान् विमर्दः पुत्रौ च तस्य निहतौ विधुताश्च सेनाः ॥ १६७ ॥

चित्रे हते समर आशु सचित्रकेतौ[1] धावत्सु सैनिकवरेषु च पार्षतस्य ।
पार्त्था रथैरभिययुर्द्धृतचापबाणा वैचित्रवीर्य्यतनयान् रविसूनुयुक्तान् ॥ १६८ ॥

तैस्तेषु पश्चसु समं प्रतियोधयत्सु भूरिश्रवाः सरविजो विरथं चकार ।
शक्रात्मजं तदनु पर्वतसन्निकाशं दोर्भ्यां तु मारुतिरुरुं तरुमुद्बबर्ह ॥ १६९ ॥

आयान्तमीक्ष्य तरुहस्तमिमं समीरसूनुं सुयोधनमुखा निखिलाः[2] सकर्ण्णाः ।
भूरिश्रवाः शकुनिभूरिजयद्रथाश्च सर्वेऽपि दुद्रुवुरथो विविशुः पुरं स्वम् ॥ १७० ॥

**सह ते स्वयंवरात् स्वपुरीमेत्य पाश्चालराजं हन्तुं पुनरगुः ॥ १६६ ॥ विमर्दः सङ्गरः ॥ १६७–८ ॥ तैः दुर्योधनादिभिः समं सह तेषु पाण्डवेषु ॥ १६९–७० ॥**

---

बाह्लीकवीराणां च, तैः । विवाहानन्तरं पुरीमेत्य रथहस्तियौधैः सन्नद्धाः पुनरगुः पाश्चालराजं हन्तुम्, सति सम्भवे सपाण्डवम् । योध एव यौधः । प्रज्ञादिषु पाठात् स्वार्थेऽण् । सिन्धुपतिनेत्यनेनैव सैन्धवा अप्युदितप्राया इत्यवशिष्टानि त्रीण्यङ्गान्येवाऽह– रथहस्तियौधैः ॥ १६६ ॥ सोमकानां राजा । सोमक इति महानमांसादो राजाऽसीत् । तेन पालितः पाश्चालदेश इति ततः परं पाश्चालाः सोमका इत्यप्रथिषत । ततः पृषतो जज्ञे । पृषताद् यज्ञसेनो नाम द्रुपदः सोमकानां राजा बभूवेति । धृष्टद्युम्नः, शिखण्डी, सुचित्रापरनामा चित्रः, प्रियदर्शनापरनामा चित्रकेतुः, सुकेतुः, ध्वजकेतुश्चेति षड्भिः सुतैः सह । विमर्दो विग्रहः । षट्सु द्वौ पुत्रौ च निहतौ मृताविति । विधुता भीताः पलायिताः कृताः । धू विधूनने ॥ १६७ ॥ चित्रः चित्रकेतुश्च हतौ सुतौ । सम्प्रति भारते सुमित्रः प्रियदर्शनश्च हतौ द्रुपदसुताविति पठ्यते । तथाहि– **'धृष्टद्युम्नः शिखण्डी च सुमित्रः प्रियदर्शनः । चित्रकेतुः सुकेतुश्च ध्वजकेतुश्च वीर्यवान् । पुत्रा द्रुपद-राजस्य–'** [आ.प.२१८.१९–२०] इति, **'जघ्नतुः समरे तस्मिन् सुमित्रप्रियदर्शनौ । जयद्रथश्च कर्णश्च पश्यतः सव्यसाचिनः । अर्जुनः प्रेक्ष्य निहतौ सौमित्रप्रियदर्शनौ । जयद्रथसुतं तत्र जघान पितुरन्तिके'** [३०–१] इति च । लिपिकृतः प्रामाद्यन् । अयं सम्भावितः प्राचीनपाठः–**'धृष्टद्युम्नः शिखण्डी च सचित्रः प्रियदर्शनः । चित्रकेतुः सुकेतुश्च ध्वजकेतुश्च वीर्यवान्'** इति, **'जघ्नतुः समरे तस्मिन् सुचित्रप्रियदर्शनौ'** इति, **'अर्जुनः प्रेक्ष्य निहतौ तौ चित्रप्रियदर्शनौ'** इति च । पार्षतः पृषतात्मजः । अनेनाऽचार्यवचनेनेदमपि स्फुटीकृतम्– यत् प्रियदर्शन इति चित्रकेतोरेव विशेषणम्, नामान्तरं वा, नत्वन्यः पुत्र इति । एवं चित्र एव क्वचित् सुचित्र उच्यत इति च । अभियोद्धुं ययुः ॥ १६८ ॥ तैः सकर्णैर्धार्तराष्ट्रैः । समं समेत्य । दोर्भ्यां तु । तुना निरायुध एकलोऽप्ययं शत्रुगणभीषण इत्याह ॥ १६९ ॥ निखिला

---

१. **'आशु च चित्रकेतौ'** इति क्वचित् । २. **'–मुखा अखिलाः'** इति क्वचित् ।

**'धृष्टद्युम्नः शिखण्डी च सुमित्रः प्रियदर्शनः । चित्रकेतुः सुकेतुश्च ध्वजकेतुश्च वीर्यवान् । पुत्रा द्रुपद-राजस्य–'** [आ.प.१९४.१९–२०] ???????????????????????????????????????????????????

ज्ञात्वा समस्तमपि तद् विदुरोऽग्रजं स्वं वर्द्धन्त एव तनया भवतो नरेन्द्र ।
इत्याह सोऽपि मुदितः स्वसुतेन कृष्णा प्राप्तेति भूषणवराण्यदिशच्च वासः ॥ १७१ ॥

पार्त्था इति स्म विदुरोऽवददाशु सोऽपि स्वाकारगूहनपरो यदि तर्ह्यतीव ।
भद्रं मृता नहि पृथासहिताः स्म पार्त्थास्तेषां प्रवृत्तिमपि मे वद सर्वशस्त्वम् ॥ १७२ ॥

इत्युक्त आह विदुरः स हिडिम्बवद्ध्यापूर्वां[1] प्रवृत्तिमखिलामपि लक्षवेधम्[2] ।
उद्वाहमप्यथ नदीजमुखाश्च सर्वे तुष्टा बभूवुरपि वत्सरमूषुरेवम् ॥ १७३ ॥

श्रुत्वाऽथ कृष्णमुपयातमुरु[3] प्रदाय रत्नं च पाण्डुतनयेषु गतं पुनश्च ।
तातप्यमानहृदयास्तु सुयोधनाद्या मन्त्रं प्रचक्रुरथ कर्ण्णमुखा ययुश्च ॥ १७४ ॥

**स्वसुतेन कृष्णा प्राप्तेति मुदितः ॥ १७१ ॥ तनया वर्धन्त इत्युक्त्या दुर्योधनादयो वर्धमाना उच्यन्त इत्यभिप्रायेण मुदितमग्रजं प्रति विदुरः पार्था इत्यवदत् । सोऽपि स्वाकारगूहनपरः दुर्योधना(दयो) वर्धन्ते कृष्णां लब्ध्वेत्यभिप्रायेण हृष्टः सन् पार्था इति श्रुत्वा स्वाभिप्रायगूहनपरः यदि पृथासहिताः पार्थाः न मृतास्तर्ह्यतीव भद्रं (इत्यवदत्) ॥ १७२ ॥ (हिडिम्बवध्यापूर्वां) हिडिम्बवधपूर्वाम् । नदीजमुखाः, एवमपि पाण्डवाः सन्तीति ज्ञात्वाऽपि, पाण्डवानविचार्येति भावः ॥ १७३ ॥ उरु भूषणं प्रदाय ॥१७४–५॥**

---

धार्तराष्ट्राः । शकुनिभूरिजयद्रथाश्च । **'अल्पाच्तरम्'** [अ.सू. २.२.३४] इति द्विपदसमास एव न बहुपदसमास इति वैयाकरणाः ॥ १७० ॥ वासश्चादिशत् । **'ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशाम्पते । उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः । वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत् । अब्रवीत् परमप्रीतो दिष्ट्यादिष्ट्येति भारत । मन्यते स वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया । दुर्योधनमविज्ञानात् प्रज्ञाचक्षुर्नरेश्वरः । अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु । आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा'** [आ.प.२१९.१५–८] इति च ॥ १७१ ॥ स्वाकारगूहनपरः । **'आकारच्छादनार्थाय दिष्ट्यादिष्ट्येति चाब्रवीत्'** [आ.प.२१९.२२] इति भारते । सर्वशः सर्वां प्रवृत्तिं वृत्तान्तम् ॥ १७२ ॥ अथ पाण्डवाः पाञ्चालनगरे वत्सरमूषुः । भीष्ममुखाश्च पाण्डवानां वार्तां श्रुत्वाऽपि एवमेव तूष्णीं वत्सरमूषुः पाण्डवान् हस्तिनपुरं प्रत्यनाहूयैव ॥ १७३ ॥ अथेति विषयान्तरं प्रस्तौति । अथ धृतराष्ट्रस्यापि पाण्डवविवाहाधिगमनानन्तरं च । उरु रत्नादिकमुपायनमुपादाय पुनश्च यातं गतं च श्रुत्वा । पाण्डुतनयार्थम् । पाण्डुतनयेषु प्रीत्या च । तातप्यमान-

---

१. **'–वद्धचपूर्वाम्'** इति प्राचीनकोशे पठ्यते । स्खलनं सम्भाव्यते । २. **'लक्ष्यवेधम्'**

३. **'कृष्णमुपयान्तमुरु'** इति पाठः प्रामादिकः । गतं पुनश्चेति श्रवणात् ।

युद्धाय तेषु पुनरेव रथैः प्रयातेष्वाहाग्रजं स विदुरोऽपि नदीजमुख्यान् ।
एते हि पापतमचेतस एत्य पार्थान् युद्धाय मृत्युमुपयान्ति न संशयोऽत्र ॥ १७५ ॥

भीमार्ज्जुनौ विषहितुं नहि कश्चनास्ति सामर्थ्ययुक् सुरवरेष्वपि वर्द्धितास्ते ।
ज्ञात्वैव वत्सरत एव महानधर्म्मस्तेषामुपेक्षणकृतस्तदलं नियुङ्क्ष्व ॥ १७६ ॥

आनीतये च विनियुज्य सुसान्त्वपूर्वमानीय योजय नृपैषु[1] तथाऽर्द्धराज्यम् ।
एवं कृतं[2] तव भवेत् कुलवृद्धये हि[3] धर्म्माय चोभयविनाशकरोऽन्यथा स्याः॥ १७७ ॥

इत्युक्तवत्यनु तथेत्यवदन्नदीजो द्रोणः कृपश्च विदुरं स नृपोऽप्युवाच ।
याह्यानयेति स च वेगवता रथेन तत्रागमत् तदनु तैरभिपूजितश्च ॥ १७८ ॥

**विषहितुं सोढुम् । ते वर्धिताः बलेनाभिवृद्धाः । ज्ञात्वैव वत्सरतः वत्सरमारभ्य तेषामुपेक्षणकृतः उदासीन-(ता)कर्तुस्तव महानधर्मो जातः । तत् उपेक्षणं अलम् । आनीतये नियुङ्क्ष्व प्रेषय ॥ १७६ ॥ किं कार्यमित्यत आह– आनीतये च विनियुज्येति । एवं कृते अकृते वा किं फलमित्यत आह– एवमिति ॥१७७–८०॥**

हृदयास्तु । तुना स्वभावसहजमेतदित्याह । कर्णमुखाः कर्णमग्रतः कृत्वा । मन्त्रं प्रचक्रुः । भीष्माद्या यथा न प्रस्थानात् पूर्वं जानीयुस्तथा मन्त्रयामासुः । अथ दुर्मन्त्रणेन कृतयुद्धनिश्चयाः कर्णं सेनामुखे कृत्वा ययुश्च ॥ १७४ ॥ नदीजमुख्या-नपि ॥ १७५ ॥ विषहितुं विसोढुम् । बहुज्ञाः सेटमप्यनिटमिच्छन्ति । अनिटमपि सेटम् । यथा विसोढुमिति प्रयोक्तव्ये विषहितुमिति प्रयुञ्जते । नद्धुमिति प्रयोक्तव्ये **'नहि नहुषोऽलं नहितुम्'** इति प्रयुञ्जते । एतेनाक्षराधिक्येन क्रियायाः स्वेच्छा-पूर्वकत्वमाह । स्वेच्छया सोढुं नद्धुं वा न कश्चित् समर्थ इति । समर्थ इति वक्तव्ये सामर्थ्ययुगित्याह । एवमक्षरा-धिक्येनासामर्थ्यातिशयमाह । सुरवरेष्वपि सामर्थ्ययुक् नास्ति । यद्यपि ते त्वया राज्यान्निष्कास्य वर्धिता नाशिताः । अथापि भगवदनुग्रहविशेषवर्धितास्ते । ज्ञात्वैव ज्ञानसमनन्तरमेव, विलम्बमकृत्वा, आनेतव्याः । अथापि नानीताः । वत्सरात् पूर्वमेव आनेतव्याः । अथापि नाऽनीताः । इत्याक्षेपमेवकारद्वयेनाह । अथच वत्सरत इति सप्तम्यास्तसिः । एवस्त्व-प्यर्थे । वत्सरेऽतीतेऽपि इह नाऽनीताः, तदपि तेषां प्रवृत्तिमखिलां ज्ञात्वैव, सोऽयमुपेक्षणकृतः महानधर्मः सम्प्रत्येव सञ्जातः । अथचोपेक्षणकृत इति षष्ठी । उपेक्षणकृतस्तव महानधर्म एवेति वा । उप समीप एव स्वपुरत एव पुत्रैः क्रियमाणस्यानयस्य तूष्णीमीक्षणकृत इति च । तस्मादलमुपेक्षणेन । एतावदेव चालमधर्मसञ्चयनम् । तदानयनार्थं सपदि दूतान् प्रेषय ॥ १७६ ॥ तेषामानीतये दूतान् विनियुज्य सम्प्रेष्य, कृतापराधपरिमार्जनार्थं सान्त्ववचनैरानीय, आनीतेष्वपि पुनरतिशयसान्त्ववचनैस्तान् समाधाय, हे नृप, तेष्वर्धराज्यं योजय स्थापय । एवं कृतं कुलवृद्धये धर्मवृद्धये च भवेद्धि । अन्यथा एवं न कृतं चेत् कुलस्य धर्मस्य च विनाशकरः स्याः ॥१७७॥ तदेवान्ववदत् । तदनुगुणमवदत् ।

१. **'नृपेषु'** २. **'एवं कृते'** । वे.ती. पाठोऽपि तथा स्यात् । ३. **'ह'** इति क्वचित् ।

**तत्काल एव वसुदेवसुतश्च कृष्णो व्यासश्च तानुपसमेत्य दुरन्तशक्ती ।**
**आदाय कुन्तिसहितान् विदुरेण युक्तौ नागाह्वयं पुरमितां सह भार्य्ययैव ॥ १७९ ॥**

**तेष्वागतेषु सुमहानभवत् प्रहर्षः पौरस्य जानपदिकस्य जनस्य चोच्चैः ।**
**भीष्मादिकाश्च मुदिताः प्रतिपूज्य[1] गेहमावेशयन् सह नृपेण महोत्सवेन ॥ १८० ॥**

**कृष्णामपूजयदतीव च सौबली सा दुर्य्योधनस्य दयितासहिताऽत्र तेऽपि ।**
**ऊषुस्ततश्च निजपुत्रकदुर्विनीत्या कृष्णानिमित्तमुरुभीतित आह भीमात् ॥ १८१ ॥**

**कुन्ति प्रयाहि सहिता स्नुषया गृहं स्वं भीमाद् बिभेमि निजपुत्रकदुर्विनीत्या ।**
**कृष्णा त्रिलोकवनिताधिकरूपसारा यस्मादिति स्म ससुता प्रययौ गृहं सा ॥ १८२ ॥**

**(भीमात्) कृष्णासौन्दर्येण मोहितं मत्सुतं भीमो हन्यादिति उरुभीतित इति भावः ॥ १८१ ॥ कृष्णा**

---

अनुमतमवदत् । नदीजः द्रोणः कृपश्च अवदन्निति वा । याह्यानय पाण्डवानिति । तैः पाण्डवैः पाञ्चालैर्द्रुपदादिभिश्च । अभिमानपूर्वकं पूजितः ॥ १७८ ॥ उपसमेत्य प्रीत्या संवासाय आगत्य । पाण्डवानां यदुपपन्नं तत्सम्पादयितुं चाऽ-गत्य । कुन्तिसहितान् पाण्डवान् तेषां भार्यया सहैव आदाय । कुन्तिसहितानिति **'ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलम्'** [अ.सू.६.३.६३] इति ह्रस्वः । इतामिति लङर्थे लोट् । ऐताम् ॥ १७९ ॥ नृपेण सह भीष्मादिकाश्च मुदिताः प्रत्येकं पूजयित्वा महोत्सवेन गेहमावेशयन् । उच्चैः सुमहान् प्रहर्ष इति जनानां हर्षस्यापरिमेयतामाह । अपूर्वसन्दर्शनजो हर्षः प्रहर्षः । तत्राप्यनिरीक्षितत्वान्महान् । मृता इति ज्ञातानां पुनर्जीवतां दर्शनमिति सुमहान् । पाण्डवैः सह रूपद्वयेन भगवानप्यागत इत्युच्चैः सुमहान् प्रहर्षः । अथवा पाण्डवा जीवन्तीति विज्ञाय हर्षः । आगता इति प्रहर्षः । सभार्या इति महान् प्रहर्षः । सह भगवन्तौ कृष्णव्यासावप्यागताविति सुमहान् । सम्प्रति दर्शनपथं गता इत्युच्चैः ॥ १८० ॥ दुर्योधनस्य दयितया सहिता सौबली । साकाङ्क्षत्वाद् युक्त एकदेशान्वयः । यद्वा दुर्योधनस्यदयितासहितेत्येकं पदम् । आक्रोशे षष्ठ्या अलुक् । यद्वा यदा सौबली अपूजयत् सच्चकार तदा श्वश्र्वा सहिता दुर्योधनस्य दयिता च अपूज-यत् । अथच दुर्योधनस्य दयिता दुःशासनादीनां भार्याभिः स्वयातृभिश्च सहिता । तथाहि भारते–**'दुर्योधनस्य महिषी काशिराजसुता तदा । धृतराष्ट्रस्य पुत्राणां वधूभिः सहिता तथा । पाञ्चालीं प्रतिजग्राह साध्वीं श्रियमिवापराम्'** [आ.प.२२७.१] इति विदुरागमने । अत्र धृतराष्ट्रनिवेशने । तेऽपि पाण्डवा अपि । नीचः पुत्रः पुत्रकः । नीचाः पुत्रा वा । दुष्टा, विपरीता च नीतिः । दुष्टेषु दुष्टाऽपि नीतिः क्वचिदनुसर्तव्या भवति । सद्भिरपि । अतः सज्जनविपरीते-त्याह । **'परिष्वज्यैव गान्धारी कृष्णां कमललोचनाम् । पुत्राणां मम पाञ्चाली मृत्युरेवेत्यमन्यत'** [२२७.४] इति च ॥ १८१ ॥ गृहं स्वं पाण्डुनाऽधिष्ठितम् । त्रिषु लोकेषु या वनितास्ताभ्यः सर्वाभ्योऽधिकेन रूपेण सारा सर्वश्रेष्ठा

---

१. **'परिपूज्य'** इति क्वचित् ।

ऊषुस्तथैव परिवत्सरपञ्चकं ते पाण्डोर्गृहे सुसुखिनोऽखिलभोगयुक्ताः ।
कृष्णा च तेषु पृथगेव चतुःस्वरूपा रेमे तथैकतनुरप्यभिमानिभेदात् ॥ १८३ ॥

कन्यैव साऽभवदतः प्रतिवासरं च जन्माभवद्ध्यभिमतेः पृथगेव नाशात् ।
प्रायो हि नाभिमतिनाशमवाप वाणी तस्मान्मरुच्च सकलेष्वभिविष्ट[1] आसीत् ॥ १८४ ॥

**त्रिलोकवनिताधिकरूपसारा यस्मात् तस्मात् कारणात् निजपुत्रकदुर्विनीत्या भीमाद् बिभेमि इति उक्ता ॥ १८२ ॥ बृहस्पतेरेकैकराशिषु सञ्चारेण यः संवत्सरस्तत्परिमितः कालः परिवत्सर इत्युच्यते । तादृशवत्सरपञ्चकम् । कृष्णाया रमणप्रकारमाह– कृष्णेत्यादिना । कृष्णा च अभिमानिभेदात् अभिमानि-चेनतभेदात् निमित्तात् चतुःस्वरूपा । नतु देहभेदात् । तेषु पाण्डवेषु पृथगेव रेमे । एकैकस्मिन् दिन एकैकेन रेम इति भावः ॥ १८३ ॥ नन्वेवं तर्हि इतरासामिव भारत्या अप्यभिमाननाशः सर्वात्मना किम्? नेत्याह– प्राय इति । प्रायः सर्वात्मना अभिमतिनाशं नावाप हि यस्मात् तस्मात् प्रायः प्रतिदिनं भारत्या अभिमाननाशाभावात् मरुत् सकलेषु च युधिष्ठिरादिषु चतुर्षु च अनुविष्ट आसीत् ॥ १८४ ॥**

---

यस्मात् तस्माद् बिभेमीत्याह । यस्मादित्याह तस्मात् स्वं गृहं प्रययौ ॥ १८२ ॥ वत्सरपञ्चकं तथैव धृतराष्ट्रपरिवारतया ऊषुः । भोगैः परिगतं परिवृढं च वत्सरपञ्चकं निरातङ्कमूषुः । तदेवाऽह–सुसुखिनः । योगक्षेमचिन्तकेषु वृद्धेषु धुरं निधाय निश्चिन्तं जीवनात् सुसुखिनः । तद्धि सुखे सुष्ठुत्वं नाम यद् धूर्वहनविरहः । यद्वा बार्हस्पत्यो वत्सरः परिवत्सर उच्यते । तावन्तमनेहसमूषुरित्यर्थः । एकतनुरपि चतुःस्वरूपा । अभिमानिजीवानां चतुष्ट्वेन भेदात् । एकस्मिन् वासरे श्यामळा, परस्मिन् भारती, अपरस्मिन् शची, अन्यस्मिन्नुषा इति ॥ १८३ ॥ अतः सा प्रतिवासरं कन्यैवाभवत् । कुतः? यतः प्रतिवासरं पृथगेव जन्माभवत् । तदपि कुतः? परस्मिन् दिने पूर्वचेतनस्याभिमतेः नाशात् । पूर्वाभिमाननाश एव नाशः । अपराभिमानजननमेव जननमिति । देहे स्वत्वाभिमान एव हि लोकेऽपि देहित्वं नाम । ननु तर्हि चतुर्णां चेतनानां समानोऽभिमानः । कथमथ विशिष्य द्रौपदी भारतीति व्यपदिश्यते? अस्ति कारणमित्याह– प्रायो हीति । वाणी भारती प्रायो बाहुल्येन नाभिमतिनाशमाप । श्यामळादीनां पञ्चमेपञ्चमे दिने, उषसश्च तुरीये पञ्चमे चाभिमानजननम् । अन्येषु दिनेषु सर्वात्मनाऽभिमाननाशः । नैवं भारत्याः । तस्याः प्रतिदिनमभिमानस्यानुवृत्तेः । तस्मान्न सा प्रतिवासरं जायते । अतः सा विशिष्य भारतीत्युच्यते । तथाहि– प्रथमदिने श्यामळोपेता भारती । द्वितीये केवला भारती । तृतीये शचीयुता भारती । तुरीयपञ्चमयोरुषोयुता भारतीति सा सर्वदा भारत्येव । कादाचित्कमन्यदेवीत्वम् । तदेतदाह–प्रायः भारत्या अभिमानबाहुल्येन । अपिच इतरासामितरदिनेषु अभिमाननाशः । तेन बहुलोऽभिमाननाशः । कादाचित्कोऽभिमानः । भारती त्वेवं प्रायः बाहुल्येनाभिमतिनाशं नावाप हि । यस्माद् भारती नित्यमभिमेने श्यामळादिभिः सह । तस्मान्मरुदपि धर्मात्मजादिषु सर्वेष्वप्यभिविष्ट आसीत् । अभिमानेन विष्टोऽभिविष्टः ॥ १८४ ॥

---

१. '**–ष्वनुविष्ट–**' इति वे.ती. पाठ इति भाति ।

धर्म्मात्मजादिषु मरुत् प्रतिविष्ट एषां बुद्धिं विमोह्य रमते सततं तया यत् ।
शुद्धैव सा हि तत एव दिनेदिने च सम्मोहतो मरणवद् भवतीह कन्या ॥ १८५ ॥

नो सुप्तिवत्[1] त्विदमतोऽन्यवशत्वतो हि देहस्य संस्मृतित एव हरेर्न्न मोहः ।
नाऽवेशवच्च तत एव मृतेः [2]स्वरूपमेतत् त्वतः प्रतिदिनं जननाद्धि कन्या ॥ १८६ ॥

**तेष्वाविष्टस्य मरुतो रमणप्रकारमाह– धर्मात्मजादिष्विति । धर्मात्मजादिषु प्रतिविष्टः मरुत् एषां युधिष्ठिरादीनां बुद्धिं विमोह्य तया सततं प्रतिदिनं रमते इति (यत्) यस्मात् तस्मात् । तत एव धर्मात्मजादिभिः (सङ्गाभावादेव) । तत् सदृष्टान्तमुपपादयति– दिनेदिने चेति । दिनेदिने प्रतिदिनं इह देहे एकैकस्याः मरणवत् मरणं यथा तथा सम्मोहतः कन्या भवति ॥ १८५ ॥ हेतुं विवृणोति– देहस्यान्यवशत्वतो हीति । सुप्तौ देहस्यान्यवशत्वाभावात् अत्र तत्सद्भावात् सुप्तिवन्नेति भावः । हरेः संस्मृतितः देहाभिमानरहितानामितरासां हरिस्मृतिसद्भावात् मोहो नैव । मूर्छितानां हरिस्मृत्यसद्भावात् मोहोऽयं नैवेति भावः । तत एव हि स्मृतिसद्भावात् इतरावेशवत् ग्रहाद्यावेशवच्च (न) । ततः उक्तप्रकारेण सुप्ताद्यवस्थात्रयवैलक्षण्यात् एतद् देहाभिमानवर्जनं मृतेः स्वरूपं [2]मृतिसदृशम् । अनेन मरणवद् भवतीत्येतत् परिशेषप्रमाणसिद्धमित्युपपादितं भवति । प्रतिदिनं कन्यैवाभवदित्येतदुपपाद्योपसंहरति– अत इति । अतः पूर्वाभिमानराहित्यस्य मरणसादृश्यात् उत्तराभिमानस्य प्रतिदिनं जननात् प्रतिदिनं कन्या हि कन्यैव ॥ १८६ ॥**

---

एवं प्रत्येकं प्रविष्टः । एषां धर्मात्मजादीनाम् । ममताविस्मरणेन अपोह्य तया भारत्या सततं रमते । सम्मोहतः ममेदं शरीरमित्यभिमाननाशेन दिनेदिने मरणतुल्या साऽवस्था भवति । तेन सा दिनेदिने कन्या भवति ॥ १८५ ॥ ननु चतुर्धाऽभिमाननाशः सम्भवी । सुप्तौ, मोहे, ग्रहाद्यावेशे, मरणे च । तत्कथं मरणतुल्यता? अन्यप्रकारत्रयासम्भवादिति गृहाण । न तावत् प्रथमः कल्पः सम्भवीत्याह–नो सुप्तिवत् । सुप्तौ सुप्तादन्यजीववशत्वाभावाद्देहस्य इदमभिमानप्रहाणं नो सुप्तिवत् । न द्वितीयः । कुतः? हरेः संस्मृतितः । मोहे हरिसंस्मरणासम्भवात् । अत्र तु ताः सर्वा अपि सम्यग्घरिं स्मरन्ति । अत एव न तृतीयः पक्षोऽपि । तत एव हरिसंस्मरणादेव । नहि ग्रहाद्याक्रान्तदेहाभिमाना हरिसंस्मरणस्येशते । अतः परिशेषादिदं मरणतुल्यमिति स्थितम् । अस्त्यत्र वक्तव्यविशेषः–देहस्यान्यवशत्वात् नो सुप्तिवदित्येकं कारणम् । एवं अन्यवशत्वेन देहस्य संस्मृतितश्च नो सुप्तिवत् । नहि सुप्तानां स्वदेहः परदेह इति विवेकस्मृतिः सम्भवति । अस्ति चासां देवीनाम् **'सम्प्रत्ययं श्मामळयाऽभिमन्यमानः, सम्प्रति शच्या'** इत्यादिस्मृतिः । तस्माच्च नेदं सुप्तिवत् । एवं तासां हरेः संस्मृतितश्च नो सुप्तिवत् । नहि सुप्तौ काचित् स्मृतिः । एवं देहस्य संस्मृतित एव न मोहः । किमुत हरेः संस्मृतितः । भक्तिपूर्वा स्मृतिः संस्मृतिः । तेन हेत्वन्तरं च द्योतयति । तदा तासां हरिभक्तिभावाच्च तन्न सुप्तिमोहवदिति । तत एव नाऽवेशवच्च । हरिसंस्मृतित एव । आविष्टोऽपि ग्रहादिभिः कारितः सन् कथञ्चित् हरि-

---

१. **'सुप्तवत्'** इति क्वचित् ।    २. **'मृतेः सरूप–'** इति वे.ती. सम्मतः पाठ स्यादिति भाति ।

**एवं स वायुरनुविष्टयुधिष्ठिरादि-**
**भीमात्मनैव रमते सततं तयैकः ।**
**अन्यादृशा[१] हि सुरभुक्तिरतोऽन्यरूपा**
**मानुष्यभुक्तिरिति नात्र विचार्य्यमस्ति ॥ १८७ ॥**

**धर्मात्मजादिषु मरुत् प्र(ति)विष्ट इत्युक्त(मुपपादयति– एवमिति । अनुविष्टयुधिष्ठिरादिभीमा)त्मना । अनुविष्टाः युधिष्ठिरादयो येन सः अनुविष्टयुधिष्ठिरादिः । स चासौ भीमात्मा चेति । अनुविष्टयुधिष्ठिरादिभीमात्मा, तेन, अनुविष्टयुधिष्ठिरादिचतुःस्वरूपैर्भीमरूपेण चेति भावः । ननु यदि युधिष्ठिरः तदनुविष्टो मरुच्चेति द्वौ तिष्ठतः, एवमर्जुनादिदेहेष्वपि, (कृष्णादेहे च) भारती स्वयमन्याश्च देव्यस्तिष्ठन्ति, तत्र युधिष्ठिरादयस्तु कृष्णादेहगतस्वस्वभार्याभिरेव रमन्ते, तेष्वाविष्टो वायुस्तु भारत्या अन्याभिश्च रमत इत्येतत् कथं घटत इत्यत आह– अन्यादृशी हीति । सुरभुक्तिः सुरभोगः अन्यादृशी मनुष्यभोगविलक्षणा इति हेतोः, अत्र उक्तार्थे, विचार्यं घटते नवेति विचारविषयः, नास्ति । निश्चित एवेति भावः ॥ १८७ ॥**

---

स्मृतिं कुर्यादपि । नतु स्वेच्छयेति संस्मृतितः । स्वतन्त्रा स्मृतिः संस्मृतिः । सुप्त्याद्यन्यत्वे सति देहाभिमानविरहो मृति-रिति विवक्षयेदमपि मृतेः स्वरूपभेदेऽन्तर्भवति । तेन प्रतिदिनं म्रियते । प्रतिदिनं कन्या जायते । उभयमपि शास्त्र-सिद्धं लोकानुभवसिद्धं चेति ह्रिर्हीत्याह । नन्वनेनैव नयेन नो मृत्युवदित्यपि शक्यं वक्तुम् । तथाहि वयं ब्रूमः– **'नो मृत्युवत् त्विदमतोऽन्यवशत्वतो देहस्य'** इति । नहि मृत्यौ मृतादन्यवशत्वं देहस्य सम्भवति । हरेः संस्मृतितोऽपि न मृत्युवत् । अतो नैतद् युक्तमुक्तम्–**'मृतेः स्वरूपमेतत्'** इति । न भोः । नेयं विभीषिका नो भीषयति मश्वारूढा चश्चेव । तदिदं परकीयेऽन्तरीययुतके शिङ्घाणकलेपो नाम । सम्भवति मृतशरीरस्यान्ववशत्वम् । यथा क्वचित् प्रारब्धवशाद् गर्भस्थो जीवः प्रसवकाले म्रियते । तदैवान्यस्तच्छरीरमनुविश्य जीवति । आयातं तर्हि तच्छरीरस्यान्यवशत्वम् । चरमशरीरविरहे हरेः संस्मृतिरपि भवति । आह हि हरिरेव–**'यंयं वाऽपि स्मरन् भावं त्यजत्यन्ते कळेबरम्'** इति । तेन युक्ततरमुक्तं **'नो मृत्युवत्–'** इत्यादीति सर्वं चतुरश्रम् ॥ १८६ ॥ युधिष्ठिरादिष्वनुविष्टैश्चतूरूपैर्भीमरूपेण च वायुरेक एव तया भारत्या रमते । अन्तःस्थितचेतनानां प्रत्येकं नियन्त्रणेन विवक्षितमात्रभोगः शक्यमनुभवितुं देवानाम् । न मानुषाणामित्याह–अन्यादृशा हीति । मनुष्यसम्बन्धिनी भुक्तिः । ननु कथमन्यादृशा? **'समानान्ययोश्चेति वक्तव्यम्'** इति वार्तिकेन [३.२.६०] अन्यशब्दे उपपदे दृशेर्धातोः कञ्प्रत्यये सत्यन्यादृश इति हि निष्पादयन्ति । अन्य इव पश्यति अन्यादृश इति वैयाकरणाः । नहि पश्यतिरत्र दर्शनक्रियामाह । अन्य इव वर्तत इत्येवाऽहेति ते मन्यन्ते । अन्य इव दृश्यत इत्यन्यादृश इति तत्ववादिनः । अथ च स्त्रियाम्–**'टिड्-ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरप्-ख्युनाम्'** [अ.सू.४.१.१५] इति ङीपि **'अन्यादृशी'** इति भवति । सत्यं भवति पाणिनीयानां नये । तत्ववादिनः पुनः कञि ङीपं वैकल्पिकं मन्यन्ते । अन्यत्रापि भगवत्पादः प्रयुयोज–**'उद्यच्छतार्कसदृशां परमाङ्कसंस्थाम्'** इति । एवं ठञि

---

१. **'अन्यादृशी'** । वे.ती. पाठोऽपि तथेति भाति ।

वासिष्ठयादववृषावपि केशवौ तौ तत्रोषतुः परमसौहृदतो हि तेषु ।
ताभ्यामनन्तगुणपूर्ण[1]सुखात्मकाभ्यां पार्थाश्च ते मुमुदिरे युतसत्कथाभिः ॥ १८८ ॥

पूर्वं हि तेषु वनगेषु बभूव काशिराज्ञः सुताकृत उरुक्षितिपालयोगः ।
तत्र [2]स्वयम्बरगतां धृतराष्ट्रपुत्रः कन्यां बलाज्जगृह आत्मबलातिदृप्तः ॥ १८९ ॥

पूर्वं हि राजगणने मगधाधिराजः सङ्ख्यात इत्यतिरुषा प्रगृहीतकन्ये ।
दुर्य्योधने नृपतयो युयुधुः स्म तेन भग्नाश्च कर्ण्णसहितेन सहानुजेन ॥ १९० ॥

भग्नेषु तेषु पुनरात्तशरासनेषु कर्ण्णो जगाद धृतराष्ट्रसुतं प्रयाहि ।
युक्तः सहोदरजनैर्ग्गुरुभीष्ममुख्य[3]युक्तस्य ते न पुरमेत्य हि धर्षणेशाः ॥ १९१ ॥

**तत्र पाण्डवगेहे । युतसत्कथाभिः । अन्योन्यवचनमिश्रोत्तमकथाभिः । युतत्वं नाम परस्परप्रश्नपरिहाररूपत्वम् ॥ १८८ ॥ पाण्डवविवाहमुक्त्वा दुर्योधनादीनामुद्वाहं वक्तुमतीतकथामाह—पूर्वमित्यादिना ॥ १८९ ॥ राजगणने राजसङ्ख्याने मगधाधिराजः पूर्वं प्रथमतः सङ्ख्यात इति हेतोः अतिरुषा ॥ १९० ॥ पुरगतेऽपि पुरमेत्य धर्षयेयुरित्यत आह—गुरुभीष्मेति ॥ १९१ ॥**

---

च ङीब् वैकल्पिको भवति । अत एव **'विद्युद्वृढिर्वैदिका स्यात्'** इति प्रायुङ्क्ताऽचार्यः । अधिकं प्रतनप्रयोगमीमांसायाम् ॥ १८७ ॥ भगवन्महिमयुताभिः अनेकापूर्वप्रमेययुताभिः, जिज्ञासुशङ्कानां सूक्तपरिहारयुताभिश्च युक्ताभिश्च सत्कथाभिः । अयुतसत्कथाभिरिति वा प्रतृण्णम् । अकारवाच्यभगवद्गुणगानयुताभिः कथाभिः । अयुतसत्कथाभिः बहुकथाभिरित्येके ॥ १८८ ॥ वनगेषु । हिडिम्बवने शालिहोत्रस्य मुनेराश्रमे हिडिम्बया निर्मितायां पर्णशालायामज्ञाततया निवसत्सु तेषु पार्थेषु । षण्मासान् हि ते तत्रोषुः । **'एतद् वै शालिहोत्रस्य तपसा निर्मितं सरः । रमणीयमिदं तोयं क्षुत्पिपासाश्रमापहम् । कार्यार्थिनस्तु षण्मासान् विहरध्वं यथासुखम्'** [आ.प.१६८.४०] इति भारते । क्षितिपालानामुरुयोगः । धृतराष्ट्रपुत्रः दुर्योधनः । आत्मबले विषये अतिदृप्तः । यावदात्मबलं ततोऽप्यतिशयेन दृप्तः ॥ १८९ ॥ तत्र राज्ञां योग्यतानुक्रमेण गणने जरासन्धः पूर्वं प्रथमं सङ्ख्यातः परिगणित इत्यतिरुषा । भग्नाश्च । न स्वशक्त्या । किन्तु? कर्णसाहित्यादनुजानां सहकाराच्च ॥ १९० ॥ धृतराष्ट्रसुतं जगाद 'प्रयाहि–' इत्यादि 'विरोध आसीत्' [१९४] इत्यन्तम् । सहोदरजनैर्युक्तः पुरं प्रयाहि ॥ १९१ ॥

---

१. **'–नन्तपरिपूर्ण–'** इति कचित् । २. **'स्वयंवर–'**

३. **'–मुख्यैर्युक्तस्य'**

एकान्ततो जयमवीक्ष्य च नानुयाति बार्हद्रथः पुरगतस्य जये न निष्ठा ।
द्रौणिं च[1] रुद्रतनुमेष सदा विजानन् नो तेन युद्धमभिवाञ्छति रुद्रभक्तः ॥ १९२ ॥

एकोऽहमेव नृपतीन् प्रतियोधयिष्य एतैर्म्मयि प्रतिजितेऽपि[2] न तेऽस्त्यकीर्त्तिः ।
एकं च तेऽनुजमिमे यदि पौरुषेण गृह्णीयुरत्र तव कीर्त्तिरुपैति नाशम् ॥ १९३ ॥

भीष्मादयोऽपि नहि योधयितुं समर्त्था
राज्ञा ह्यनेन तत एव हि[3] बाह्लिकोऽस्य ।
भृत्यो बभूव नतु[4] भीष्ममयं युधेऽगाद्
राजा नहीति नच तेन विरोध आसीत् ॥ १९४ ॥

इत्युक्त आशु स विमृश्य ययौ पुरं स्वं
कर्ण्णोऽपि तैः प्रतियुयोध जिगाय चैनान्[5] ।
कर्ण्णस्य वीर्य्यमगणय्य जरासुतोऽपि
ह्येकैकमेव नृपतिं स दिदेश योद्धुम् ॥ १९५ ॥

**एकान्ततः नियमेन, निश्चयेनेति यावत् । जयमवीक्ष्य नानुयाति, शत्रूनिति शेषः । तर्हि जये निश्चित्य अस्मत्पुरमागमिष्यतीत्यत आह– पुरगतस्येति । पुरगतस्य ते जये पुरगतं त्वां जेष्यामीति निष्ठा निश्चयो नास्ति । इतश्च त्वां जेतुं नाऽगमिष्यतीत्यभिप्रायवानाह– द्रौणिमिति ॥ १९२ ॥ मयि गते इदानीमेव मामनुगच्छेयुरित्यत आह– एकोऽहमिति । प्रतियोधयिष्ये प्रतिप्रति योधयिष्ये ॥ १९३ ॥ मद्ग्रहणेऽसमर्थोऽसावित्यत आह– भीष्मादयोऽपीति । योधयितुं योद्धुं समर्था न । किमु तवानुजा इति भावः ॥ १९४ ॥ एकैकं (एकदा एकम्) ॥ १९५ ॥**

---

परिहासार्थमभिनेतुमपि नैव वाञ्छति ॥ १९२ ॥ एकैकं प्रतिप्रति योधयिष्ये । प्रत्येकशः जितेऽपि । एकमपि इमे सर्वे मिलित्वा गृह्णीयुश्चेदपि ॥ १९३ ॥ ननु भीष्मादिषु योधयत्सु कथमत्र मां वा मदनुजं वा गृह्णीयुरिति दुर्योधनदर्पं वारयति– भीष्मादयोऽपि । अनेन जरासन्धेन । पूर्वं नायं राजेति न भीष्मं युधेऽगात् । ननु कृष्णो न राजा बभूव । अथापि तेन युयुधे । सत्यं युयुधे । यतस्तेन विरोध आसीत् । नच तथा भीष्मेण विरोध आसीत् । यद्यत्र त्वन्निमित्तं विरोधः स्यात् । तदा भीष्मादिभिरपि युद्ध्येतैव । युध्वा च तान् प्रायो जयेदेव ॥ १९४ ॥ अगणयित्वा । एकस्मादनन्तरमेक

---

१. ‘द्रौणिं हि रुद्र–’ २. ‘प्रविजितेऽपि’ ३. ‘एव च बा–’
४. ‘नहि भी–’ ५. ‘चैतान्’

**सर्वेषु तेषु विजितेष्वभिजग्मिवान् स योद्धुं बृहद्रथसुतोऽप्यमुना रथेन ।**
**तं चैव रामवरतो विरथं विशस्त्रं चक्रे स चैनमथ मुष्टिभिरभ्युपेतौ ॥ १९६ ॥**

**सन्धौ यदैव जरया प्रतिसन्धितस्य कर्ण्णो जघान न परत्र तुतोष राजा ।**
**न ज्ञातमेतदपि हो हलिना तदेतज्ज्ञातं त्वया भव ततो मम भृत्य एव ॥ १९७ ॥**

**एवंविधं सुकुशलं बहुयुद्धशौण्डं न त्वां हनिष्य उत ते पितुरेव पूर्वम् ।**
**बाह्वोर्बलादभिहृतं हि मयाऽङ्गराज्यं तत् त्वं गृहाण युधि कर्म्मकरश्च मे स्याः॥ १९८ ॥**

**इत्युक्त आशु स तथैव चकार[1] कर्ण्णः पूर्वं हि तस्य निजराज्यपदैकदेशः ।**
**दुर्य्योधनेन विहितो मगधाधिराजं जित्वा वृकोदरहृतः पितुरेव दत्तः ॥ १९९ ॥**

**स जरासुतश्च एनं कर्णं विरथं विशस्त्रं चक्रे ॥ १९६–८ ॥ अङ्गराज्यस्य दुर्योधनेन दत्तत्वात् जरासन्धः कथं पुनरदादित्यत आह– पूर्वमिति ॥ १९९–२०२ ॥**

---

इत्येकैकः । एकस्मिन् युद्ध एक एवेत्येकैकः । प्रथममेकः, तत एक इति क्रमेण सर्वोऽपीत्येकैकः ॥ १९५ ॥ सः राजसु प्रथमं गणितो बृहद्रथसुतः जरासन्धोऽप्यमुना कर्णेन कर्त्रा । रथेन करणेन । तं च जरासन्धमपि । रामवरत एव । स च जरासन्धोऽपि एनं विरथं विशस्त्रं चक्रे । अथ उभयोरपि रथशस्त्रप्रणाशे सति । मुष्टिभिरभियोद्धुमुपगतौ ॥ १९६॥ प्रतिसन्धितस्य पुनः सन्धितस्य कायस्य सन्धौ । संहितस्येति वक्तव्ये सन्धितस्येति प्रयुञ्जते प्रतनाः । तेन **'दधातेर्हिः'** [अ.सू.७.४.४२] सम्पूर्वस्य विभाषेति वक्तव्यम् । अथवा **'धि धारणे'** इत्यस्येदं रूपम् । हो इत्यहोवत् विस्मये ॥ १९७ ॥ कुशलो दक्षः । भवान् बहून् दक्षानपि जिगायेति सुकुशलः । बहुषु युद्धेष्वशौण्डदिति बहुयुद्धशौण्डः । जयगर्वितः । **'शौण्डृ गर्वे'** इति काशकृत्स्नः । **'शुण्डायां पानागारे भवः'** इति पाणिनीयधातुपाठशरणाः । **'शौण्डः समर्थे'** इति मङ्खः । न हनिष्ये । तवाहननं ममैव महान् लाभस्त्वादृशभृत्यलाभेन । मगधस्य वङ्गस्य च निकषाऽङ्ग-राज्यमासीत् । यस्य वेनपिताऽङ्गो राजाऽसीत् । असहायतया पश्यतः शत्रोः पुरत एव हरणमभिहरणम् ॥ १९८ ॥ तथैव चकार । अङ्गराज्यं मागधस्नेहं च स्वीचकार । ननु पुराऽवादि–रङ्गप्रवेशे दुर्योधनोऽङ्गराज्ये कर्णमभिषिषेचेति । सम्प्रत्युच्यते जरासुतोऽङ्गराज्यं कर्णाय ददाविति । कथमेतत्? आह– पूर्वं हि । पूर्वं दिग्विजये भीमसेनेन जरासन्धो व्यजीयत । जित्वा च जयसङ्केततया अङ्गदेशस्यैकदेशस्ततः स्वायत्तीकृतः । तं च जितं राज्यभागं भीमो धृतराष्ट्राय ददौ । तमेव भूभागं दुर्योधनः कर्णाय ददाविति पूर्वमुक्तम् । सम्प्रत्यवशिष्टो राज्यभागः कर्णाय जरासुतेन दत्त इत्युच्यते । तेनाधिरथादाच्छिन्नं समग्रमङ्गराज्यं पुनः कर्णाधीनमासीदिति न कोऽपि विरोध इति । पितुरेव धृतराष्ट्रस्य ।

---

१. **'स चकार तथैव कर्णः'** इति क्वचित् ।

**अङ्गाधिराज्यमुपलभ्य जरासुतस्य स्नेहं च सूर्य्यसुत आशु कुरून् जगाम ।**
**दृष्ट्वैव तं मुमुदिरे धृतराष्ट्रपुत्रा नानेन तुल्यमधिजग्मुरतो हरिं च ॥ २०० ॥**

**उद्वाह्य काशितनयां गिरिजाधिविष्टां[1] साक्षान्नरेषु जनितां प्रथमामलक्ष्मीम् ।**
**तस्यां सुतं त्वजनयत् पुर आस योऽक्षः कन्यां पुरा प्रियतमां च षडाननस्य ॥ २०१ ॥**

**पुत्रो बभूव स तु लक्षणनामधेयः सा लक्षणेत्यधिकरूपगुणाऽऽस कन्या[2] ।**
**तस्यानुजाश्च निजयोग्यगुणा अवापुर्भार्य्याः पुनश्च स सुयोधन आप भार्य्याः ॥ २०२ ॥**

**पूर्वं सुरान्तक इति प्रथितः सुतोऽभूद् दुःशासनस्य तदनु प्रतितप्यमानाः ।**
**दृष्ट्वैव पार्त्थबलवीर्य्यगुणान् समृद्धिं तां चैव ते प्रति ययुः स्म कलिङ्गदेशम् ॥ २०३ ॥**

**तदनु पाण्डवागमनानन्तरम् । समृद्धिं कृष्णां च ॥ २०३–७ ॥**

---

रजकस्य वस्त्रं ददातीतिवदिदं दानमिति सूचयितुं पितुरित्याह, न पित्र इति ॥ १९९ ॥ उपलभ्य । स्वकीयमेव परगतं सम्प्रत्युपपन्नतया लब्ध्वा राज्यम् । अपूर्वविजयेनोपपन्नमुपनतं च स्नेहं लब्ध्वा । तुल्यं नाधिजग्मुः । न मेनिरे, किन्तु हीनबलं मेनिरे ॥ २० ०॥ प्रथमां ज्येष्ठामलक्ष्मीम् । या पूर्वं रामावतारे मन्थराऽऽसीत् । साक्षादिति स्वरूपतः । न त्वावेशतः । सुतं त्विति तुना तस्याऽसुरत्वात् स्वभगिनीतो विलक्षणोऽयं दुष्टः सुत इत्याह । तदेव स्फुटमाह– पुर आस योऽक्षः । पुरः पूर्वम्, योऽक्षः रावणात्मजः हनुमता पोथितः । षडाननभार्याजननाधिकारसिद्ध्यर्थं षडानन-जनन्या गिरिजयाऽऽविष्टाम् ॥ २०१ ॥ लक्षणवान् लक्षणः । लक्षणलक्षिता लक्षणा । तदेवाऽह–अधिकरूपगुणा । रूपं बाह्यम् । गुणा आन्तराः । अनुजा दुःशासनादयश्च शतमेकोनम् । दुर्योधनः अनुजेषूढेषु स्वयं पुनरपि भार्याः आप । **'श्यामानां वरवर्णानां गौरीणामेकवाससाम् । दुर्योधनवरस्त्रीणां पश्य वृन्दानि केशव'** [स्त्री.प.१६.४६] इति स्त्रीविलापे गान्धारीवचनम् । श्यामा अप्रसूताः । वरवर्णानामित्यस्यैव विवरणं गौरीणाम् । वैधव्यसूचनार्थमेकवाससाम् ॥ २०२ ॥ सुरान्तक इति । देवान्तको नाम रावणतनयः । एतावती पूर्वकथा । ततः पाण्डवा द्रौपद्या सह हस्तिन-पुरमागताः । तां मनुष्यलोकदुर्लभां समृद्धिं च । प्रतिक्षणं तप्यमानाः, शतमपि भ्रातरः प्रत्येकं तप्यमानाः, कलिङ्गदेशं प्रतिययुः । कन्यां प्रतीक्ष्य च ययुः । अङ्गवङ्गयोर्निकषैव कलिङ्गराज्यम् । यत्राशोकश्चक्रवर्ती बभूव । यं देशमधुना **'ओडिस्सा'** इति कथयन्ति । कलयतीति कलिङ्गो राजा देशो वा । **'मङ्गेः कधः'** [६.५२], **'कलेरिङ्गः'** [५४] इति कातन्त्रीयमुणादिसूत्रम् । मङ्गेरधकुप्रत्ययो नलोपश्चेति भोजदेवः [स.कं.२.२.१७६] । कलेरिङ्गक् इति च [२.२. ६३] । शत्रुभिः कलिं कलहं गच्छतीति कलिङ्ग इति तात्त्विकाः । महान्तं भोगम्, महान्तं गणं धत्त इति वा मगध इति च । अक्षरलोपेन मगं मङ्गलं धत्त इति वा ॥ २०३ ॥

---

१. **'–जाभिविष्टाम्'** २. **'–गुणा सुकन्या'**

**आसीत् स्वयम्बर[1] उतात्र कलिङ्गराजपुत्र्याः सुवज्र इति यं प्रवदन्ति भूपाः ।**
**रौद्राद् वरादविजितस्य च तस्य कन्यां दृप्तो बलात् स जगृहे धृतराष्ट्रसूनुः ॥ २०४ ॥**

**तत्राथ रुद्रवरतः स जरासुतेन युक्तो बबन्ध च सुयोधनमाशु जित्वा ।**
**कर्ण्णः पराद्रवदिह स्म सुतेषु पाण्डोर्य्यस्मात् स्पृधाऽगमदतः स पराजितोऽभूत्॥ २०५ ॥**

**दुर्य्योधनेऽनुजजनैः सह तैर्ग्गृहीते[2] भीष्माम्बिकेयविदुराग्रजवाक्यनुन्नः ।**
**भीमो विजित्य नृपतीन् सजरासुतांस्तान् हत्वा सुवज्रममुचद् धृतराष्ट्रपुत्रान् ॥ २०६ ॥**

**तेऽपि स्म कर्ण्णसहिता मृतकप्रतीका[3] नागाह्वयं पुरमथाऽययुरप्यमीषाम् ।**
**दृष्ट्वा विरोधमवदन्नृपतिश्च धर्म्मपुत्रं पुरन्दरकृतस्थलमाशु याहि ॥ २०७ ॥**

---

**‘पुनश्च स सुयोधन आप भार्याः’** इत्युक्तां कथां किञ्चिदिव विवृणोति– आसीत् स्वयम्बर इति । यथा काश्यां काशि-राजपुत्र्याः तथा उतात्र, अत्र कलिङ्गदेशेऽपि कलिङ्गराजपुत्र्याः स्वयम्बर आसीत् । यं कलिङ्गराजं तदातना भूपाः वज्रादपि कठोर इति सुवज्र इति नाम्ना प्रवदन्ति । प्रथितं वदन्ति । अवदन्नित्यर्थः । अन्यैर्विरुध्य विग्रहे न कदाऽपि जितो भवतीत्यविजितः । स सुयोधनः ॥ २०४ ॥ तत्र कन्याया बलाद् ग्रहणनिमित्तं प्रवृत्ते युद्धे । इह स्वयम्बरे । पाण्डोः सुतेषु स्पर्धयाऽगमत् ॥२०५॥ अग्रजो युधिष्ठिरः । विक्रमेण जरासुतादीन् जित्वा, सुवज्रं हत्वा अमुचत् मोचयामास । अत्र कश्चन कथाव्यत्ययो दृश्यते । काशिराजसुतास्वयम्बरकथा भारते न पठ्यते । द्रौपदीस्वयंवरात् पूर्वं काशिराजसुतां सुयोधन उदुवाहेतीयदेव केवलं भारतादवगम्यते–**‘दुर्योधनस्य महिषी काशिराजसुता तदा । धृतराष्ट्रस्य पुत्राणां वधूभिः सहिता तथा । पाञ्चालीं प्रतिजग्राह साध्वीं श्रियमिवापराम् । पूजयामास पूजार्हां शचीदेवीमिवाऽगताम्’** [आ.प.२२७.१–२] इति । याऽत्र कर्णविजयकथा भगवत्पादोदिता सा कलिङ्गराजसुताविवाहप्रसङ्गे पठ्यते [शां.प. ४.१–२१;५.१–७] । कलिङ्गराजस्य नामापि चित्राङ्गद इतीति भारते पठ्यते–**‘ततः कदाचिद् राजानः समाजग्मुः स्वयंवरे । कलिङ्गविषये राजन् राज्ञश्चित्राङ्गदस्य च । श्रीमद्राजपुरं नाम नगरं तत्र भारत । राजानः शतशस्तत्र कन्यार्थे समुपागमन् । श्रुत्वा दुर्योधनस्तत्र समेतान् सर्वपार्थिवान् । रथेन काञ्चनाङ्गेन कर्णेन सहितो ययौ’** [शां.प.४.२–४] इति । नामान्तरं वा स्यात्, पाठान्तरं वा स्यात् । स्वयम्बरकथा तु **‘व्यत्यासः प्रातिलोम्यं च’** इत्युक्तनयेन व्यत्यस्य पठिता वा स्यात्, **‘कुर्युः क्वचिच्च व्यत्यासम्’** इति वचनविषयो वा स्यात् ॥ २०६ ॥ अथापि स्थानैक्येऽपि

---

१. **‘स्वयंवर–’** २. **‘सहिते गृहीते’**

३. प्राचीनादर्शे **‘मृतकप्रतीपा–’** इति पठ्यते । स्खलनं स्यात् ।

तत्रार्द्धराज्यमनुभुङ्क्ष्व सहानुजैस्त्वं कोशार्द्धमेव च[१] गृहाण पुरा हि शक्रः ।
तत्राभिषिक्त उत कञ्जभवादिदेवैस्तत्रस्थ एव स चकार चिरं च राज्यम् ॥ २०८ ॥

त्वं वीर शक्रसम एव ततस्तवैव योग्यं पुरं तदत आश्वभिषेचयामि ।
इत्युक्त आह स युधिष्ठिर ओमिति स्म चक्रेऽभिषेकमपि तस्य स आम्बिकेयः॥ २०९ ॥

तस्याभिषेकमकरोत् प्रथमं हि कृष्णो[२] वासिष्ठनन्दन उरुर्भव चक्रवर्ती ।
यष्टाऽश्वमेधनिखिलात्मकराजसूयपूर्वैर्म्मखैः सततमेव च धर्म्मशीलः ॥ २१० ॥

इत्येव पार्षतसुतासहितेऽभिषिक्ते कृष्णोऽपि वृष्णिवृषभः स तथाऽभ्यषिञ्चत् ।
एवं च मारुतिशिरस्यभिषेकमेतौ सञ्चक्रतुः स्म युवराजपदे सभार्य्यम् ॥ २११ ॥

भीमे च पार्षतसुतासहितेऽभिषिक्ते ताभ्यामनन्तसुखशक्तिचिदात्मकाभ्याम् ।
अन्यैश्च विप्रवृषभैः सुकृतेऽभिषेके धर्म्मात्मजानु मुमुदुर्न्निखिलाश्च सन्तः ॥ २१२ ॥

तस्मिन् महोत्सववरे दिनसप्तकानुवृत्ते वसिष्ठवृषभेण च वृष्णिपेन ।
कृष्णेन ते ययुरमा पृथया तया च पाञ्चालराजसुतया स्थलमिन्द्रवासम् ॥ २१३ ॥

**तत्र स्थित्वा अर्धराज्यं मद्राज्यार्धम् । पुरन्दरकृतस्थलमित्येतद् विवृणोति–पुरा हीति ॥ २०८–९ ॥ अश्वमेधनिखिलात्मकराजसूयपूर्वैः । अश्वमेधश्च निखिलात्मकराजसूयश्च । तत्पूर्वैः ॥ २१०–११ ॥ पार्षतसुतासहिते भीमे च धर्मात्मजानु अभिषिक्ते ॥२१२॥ दिनसप्तकानुवृत्ते दिनसप्तकमनुवृत्ते ॥ २१३–५ ॥**

---

विरोधं मत्यैक्यविरहं दृष्ट्वा । पुरन्दरकृतस्थलमिन्द्रप्रस्थम् । यं प्रदेशमधुना **'देहली'** इति कथयन्ति ॥ २०७ ॥ इच्छानुगुणं भुङ्क्ष्व । धर्मानुगुणं भुङ्क्ष्व । कथमिन्द्रप्रस्थता तस्य? पुरा हि शक्रः तत्राभिषिक्तः । तत्रस्थ एव राज्यं च चकार ॥ २०८–९ ॥ **'राजा राजसूयेन यजेत'** इति राजसूयस्य निखिलयागात्मकत्वात् यागोत्तमत्वम् । यद्यप्यश्वमेधोऽपि राजसूयात्मक एव । तथाऽपि **'अश्वमेधः क्रतुश्रेष्ठः'** इति तस्यापि श्रैष्ठ्यद्योतनाय पृथग् ग्रहणम् । सततमेवेति सातत्यस्यानुपचरिततामाह । धर्मशीलश्च भव ॥ २१० ॥ इत्याशिषा सहैव युधिष्ठिरेऽभिषिक्ते । एवं च एवमेव सञ्चक्रतुः । प्रीतिपूर्वं सानुग्रहं चक्रतुः । अभिषेकं सञ्चक्रतुः । तेन सभार्यं भीमं युवराजपदे सञ्चक्रतुरित्यर्थः ॥ २११ ॥ धर्मात्मजानु तदभिषेकादनन्तरम् । सुकृते सुवचनैराशीःपूर्वं कृते ॥ २१२ ॥ अमा सह । वसिष्ठवृषभेण कृष्णेन, वृष्णिपेन कृष्णेन,

---

१. '–मेव हि गृ–' २. 'प्रथमं स कृष्णो–'

कोशस्य चार्द्धसहितास्तु यदैव पार्त्था गच्छन्तिताननुययुर्न्निखिलाश्च पौराः ।
ऊचुश्च हा बत सुयोधन एष पापो दूरे चकार ननु पाण्डुसुतान् गुणाढ्यान् ॥ २१४ ॥

भीमप्रतापमवलम्ब्य कलिङ्गबन्धान्मुक्तः सुतामपि हि तस्य पुरं निनाय ।
द्वेष्ट्येवमप्यतिबलान् हि सदैव पार्त्थान् यामो वयं गुणिभिरद्य सहैव पार्त्थैः ॥ २१५ ॥

आज्ञापयत्यपि स भेरिरवेण पार्त्थान् नैवानुगच्छत यदि व्रजथानु वोऽद्य ।
वित्तं हरिष्य इह सर्वमपीति तच्च पापः करोतु न वयं विजहाम पार्त्थान् ॥ २१६ ॥

सद्भिर्हि सङ्गतिरिहैव सुखस्य हेतुर्[१]म्मोक्षैकहेतुरथ[२] तद्विपरीतमन्यत् ।
तस्माद् व्रजेम सह पाण्डुसुतैर्हि शक्रप्रस्थं त्विति स्म धृतचेतस आह धार्म्मः[३] ॥ २१७ ॥

प्रीतिर्य्यदि स्म भवतां मयि सानुजेऽस्ति तिष्ठध्वमत्र पितुरेव हि शासने मे ।
कीर्त्तिर्हि वोऽनुगमनात् पितुरत्ययेन नश्येन्न इत्यनुसरध्वमिहाऽम्बिकेयम् ॥ २१८ ॥

इत्येव तैः पुरजना [४]निखिलैर्न्निषिद्धाः कृच्छ्रेण तस्थुरपि तान् मनसाऽन्वगच्छन्[५] ।
प्राप्याथ शक्रपुरमस्मरतां च कृष्णौ देवेशवर्द्धकिमथाऽगमदत्र सोऽपि ॥ २१९ ॥

**सः दुर्योधनः भेरिरवेण पार्थान् नैवानु(गच्छत इति आज्ञापयति) आज्ञां कुर्वन् वर्तते । अपि तथाऽपि वयं पार्थान् न (वि)जहाम । अनुगमने सर्वमपि वित्तं हरिष्यतीति चेत् पापः तच्च करोतु इति स्म धृतचेतसः धर्म आह ॥ २१६–२१८ ॥ देवेशवर्धकिं विश्वकर्माणम् ॥ २१९ ॥**

---

पृथया पाञ्चालराजसुतया च सह ॥ २१३–५ ॥ यद्यनुव्रजथ, तर्हि इहस्थं वः सर्वमपि वित्तं हरिष्ये । तेन ममैव महान् लाभः । विजहाम । ओ हाक् त्यागे । विहाय यानं विहानम् ॥ २१६ ॥ पुण्यकर्माणि परत्र लोके जन्मनि वा प्रायः सुखदानि भवन्ति । सद्भिः सङ्गतिः पुनरस्मिन्नेव लोके जन्मनि च सुखस्य हेतुर्हि । न केवलं तथा । अथ परत्र मोक्षैक-हेतुश्च । शक्रप्रस्थं तु शक्रप्रस्थमेव । धार्मः धर्मतनयः, अथापि धर्म एव धार्मः ॥ २१७ ॥ किमाह?– प्रीतिर्यदि । मे पितुः शासन एव तिष्ठध्वम् । एष मदाशय इति स्वाभिप्रायमाहाऽत्मनेभाषया । **'प्रकाशनस्थेयाख्ययोश्च'** [अ.सू.१.३.२३] इति हि स्मरन्ति । **'स्वाभिप्रायकथनं प्रकाशनम्'** इति जयादित्यः । पितुः शासनात्ययेन । नोऽनुगमनात् नः कीर्ति-र्नश्येत् । पितुश्च । इत्यतः कारणात् आम्बिकेयमनुसरध्वम् । तेन भवतामेवायं महानात्मलाभः ॥ २१८ ॥ इत्येव

---

१. **'सुखैकहेतु–'** २. **'–हेतुरुत तद्वि–'** ३. **'धर्मः'** । वे.ती. पाठोऽपि तथैवेति भाति ।
४. **'निखिला निषिद्धाः'** इति क्वचित् । ५. **'मनसा त्वगच्छन्'**

वासिष्ठपेन यदुपेन च पाण्डवानां रत्नोत्करं कुरु पुरं पुरुहूतपुर्य्याः ।
सादृश्यतस्त्विति नियुक्त उभौ प्रणम्य सर्वेश्वरौ स कृतवांश्च पुरं तथैव ॥ २२० ॥

देशं च नातिजनसंवृतमन्यदेशसंस्थैर्ज्जनैरभिपुपूरिर आशु पार्त्थाः ।
तेषां गुणैर्हरिपदानतिहेतुतश्च राष्ट्रान्तरा इह शुभा वसतिं[1] स्म चक्रुः ॥ २२१ ॥

प्रस्थाप्य दूरमनुजस्य सुतान् स राजा चक्रेऽभिषेकमपि तत्र सुयोधनस्य ।
दुःशासनं च युवराजमसौ विधाय मेने कृतार्त्थमिव च स्वमशान्तकामः ॥ २२२ ॥

पार्त्थाश्च ते मुमुदुरत्र वसिष्ठवृष्णिवर्य्योदितानखिलतत्वविनिर्ण्णयांस्तु ।
शृण्वन्त एव हि सदा पृथिवीं च धर्म्माद् भुञ्जन्त आश्रितरमापतिपादयुग्माः॥ २२३ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**पाण्डवराज्यलाभो नाम**
**एकोनविंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **२२८६**+२२३=**२५०९**]

**(तथैव) रत्नमयम् ॥ २२० ॥ नातिजनसंवृतं अतिजनसङ्कीर्णतारहितम्, अल्पजनमिति यावत् । राष्ट्रान्तराः अन्यराष्ट्रस्थाः । शुभाः सज्जनाः । वसतीः निवासान् ॥ २२१ ॥ तत्र हस्तिनानगरे । अभिषेकं साम्राज्याभिषेकम् । अशान्तकामः अनुपरतविषयेच्छः । अन्यथा वनं (गच्छे)दिति भावः ॥ २२२ ॥ भुञ्जन्तः (पालयन्तः) ॥ २२३ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायामेकोनविंशोऽध्यायः

—०—

इत्येवम् । अपि तथाऽपि । अथ कृच्छ्रेण प्रजानां स्थापनानन्तरम् । शक्रपुरमिन्द्रप्रस्थम् । सोऽप्यागमत्, कृष्णाभ्यां स्मरणमात्रेण ॥ २१९ ॥ रत्नानामुत्करो यत्र तत् । सादृश्यतस्तु । तुना नरलोकगैरदृष्टाश्रुतपूर्वतामाह । तथैव यथोक्तं

१. **‘वसतीः स्म’** । वे.ती. पाठोऽपि तथा ।

वासिष्ठपेन यदुपेन च ॥ २२० ॥ निकटं सङ्गततया वृतं संवृतम् । अन्यदेशेषु कलिलतया सम्बन्धस्थैः । अभितः सर्वतो-दिशं पुपूरिरे । **'पूरी आप्यायने', 'आप्यायनं वृद्धिः'** इति क्षीरस्वामी । हरिपदस्य दर्शनं तेन स्तुतिप्रणती चात्र भवत इति कारणाच्च । राष्ट्रान्तरस्थाः सज्जना इहाऽगत्य वसतिं चक्रुः ॥ २२१ ॥ तत्र हस्तिनपुरे । अशान्तकामः । विषयभोगेष्वलम्बुद्धिरहितः ॥ २२२ ॥ अत्र इन्द्रप्रस्थे । पूर्वावतारे स्वस्य तत्र स्थितिं स्मरन्निव 'अत्र' इत्याह । अन्यथा पूर्वश्लोक इवात्रापि 'तत्र' इत्यवक्ष्यत् । तुना भगवतः रूपद्वयमुखात् तत्वश्रवणेन तेषां भाग्यातिशयमाह । भुञ्जन्त इति रक्षन्तः । **'भुजोऽनवने'** [अ.सू. १.३.६६] । धर्माविरुद्धान् भोगान् लोकहितार्थं भगवत्प्रीत्यर्थं च भुञ्जानाश्चेति ध्वनितम् ॥ २२३ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतमेकोनविंशाध्यायविवरणं सतां हृदाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायामेकोनविंशोऽध्यायः**

—०—

# विंशोऽध्यायः

[खाण्डवदाहः]

ॐ ।। यज्ञोरुदाननरदेववन्द्यताप्रश्नर्षिपूजासु युधिष्ठिरोऽभूत् ।
धर्म्मानुशास्तिहरितत्वशंसनस्वराष्ट्ररक्षादिषु भीम आसीत् ।। १ ।।

स्त्रीधर्म्मसंशासनभृत्यकोशरक्षाव्ययादौ गुणदोषचिन्तने ।
अन्तःपुरस्थस्य जनस्य कृष्णा [1]त्वासीद्धरेर्द्धर्म्मनिदर्शनी च ।। २ ।।

**ॐ ।। लब्धराज्यानां पाण्डवानां व्यापारानाह– यज्ञेत्यादिना । उरुदानानि ([2]पुरुषादि)महादानानि । प्रश्नः सभायामृषीन् प्रति धर्मादिविचारः । अभूत् यज्ञादिषु । धर्मानुशास्तिः वर्णाश्रमाणाम्, हरितत्त्वशंसनं स्वप्रजानाम् ।। १ ।। कृष्णा तु स्त्रीधर्मसंशासनभृत्यकोशरक्षाव्ययादौ । अन्तःपुरगतस्त्रीणां धर्मशिक्षणे, अन्तःपुरगभृत्यानां रक्षायां वेतनदानादियोगक्षेमचिन्तायाम्, कोशस्य रक्षायां व्यये, आदिशब्दाद् गृहरक्षणादौ च । अन्तःपुरस्थस्य जनस्य च गुणदोषचिन्तने । अयमपराधी अयमनपराधी अ(यं) धर्मस्थः (अयमधर्मस्थः) इत्यादिगुणदोषविवेकेऽधिकृता । अन्तःपुरस्थस्य सर्वस्यापि जनस्य हरेर्धर्मनिदर्शनी चाऽसीत् ।। २–३ ।।**

---

ॐ ।। यज्ञदीक्षायाम्, महादानानां प्रभूतभूसुवर्णादीनां वितरणे, नरदेवैः राजभिः स्तुतिवन्दनस्वीकारे, धर्माधर्मादिप्रश्नाधिकारे सभायां प्राश्निकत्वे च, ऋषीणां सत्कारकर्मणि चाधिकृतो युधिष्ठिरोऽभूत् । प्रजानां धर्मानुशासने हरितत्वबोधने राष्ट्ररक्षादिषु च भीमः । आदिना असुरदमने, अवैष्णवदमने, अन्यैरनियम्यानां राष्ट्रकण्टकानां दमने च ।। १ ।। स्त्रीधर्माणां संशासने । इदमदो वा करणीयमिति, इदमेव नाद इति च सम्भ्रान्तानां किं समीचीनं किं नेति शासनं संशासनम्, स्वयमाचरणेन शासनं च । भृत्यकोशयोः रक्षायाम् । भृत्यानां रक्षा भरणं क्षेमचिन्तनं च । कोशस्य रक्षा वृथा व्ययस्य अविधानेन व्ययस्य च वारणम् । व्ययः प्रजाभिः करत्वेन सङ्गृहीतस्यार्थस्य न्यायतो विनियोगः, अर्हेषु विश्राणनं च । आदिना कर्मकराणां कार्याकार्यचिन्तने कृताकृतचिन्तने च । अन्तःपुरस्थस्य दासदासीजनस्य गुणदोषचिन्तने च कृष्णा । तथाहि भारते– **'क्षेत्राद् वनाद् वा ग्रामाद् वा भर्तारं गृहमागतम् । अभ्युत्थायाभिनन्दामि आसनेनोदकेन च । प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदायिनी'** [व.प.२३४.३६], **'यच्च भर्ता न पिबति यच्च भर्ता न सेवते । यच्च नाश्नाति मे भर्ता तत् सर्वं**

---

१. **'कृष्णा ह्यासीद्ध–'**

२. अस्फुटार्थमेतत् । **'वृषादिमहादानानि'** इति स्यात् । परिचर्यार्थं पुरुषादिदानानि वा ।

बीभत्सुरासीत् परराष्ट्रमर्द्दने तेनानियम्यांस्तु जरासुतादीन् ।
स कीचकादींश्च ममर्द भीमस्तस्यैव ते बलतो नित्यभीताः ॥ ३ ॥

राष्ट्रेषु भीमेन विमर्द्दितेषु जिताश्च युद्धेषु निरुद्यमास्ते ।
बभूवुरासीद्धरिधर्म्मनिष्ठः प्रायेण लोकश्च तदीयशासनात् ॥ ४ ॥

आजीविनां वेतनदस्तदाऽऽसीन्माद्रीसुतः प्रथमोऽथ द्वितीयः ।
सन्धानभेदादिषु धर्मराजपश्चाच्च[1] खड्गी स बभूव रक्षन् ॥ ५ ॥

**राष्ट्रेषु भीमेन विमर्दितेषु, जितास्ते निरुद्यमाः भीमं प्रत्युद्यमरहिता बभूवुः । प्रायेणेति अयोग्यजनव्यावृत्त्यर्थम् ॥ ४ ॥ आजीविनां वेतनार्थमाजीविनाम् । सन्धानभेदादिषु । विप्रतिपन्नानां सन्धानम् । अन्योन्यसङ्गतानां**

---

**वर्जयाम्यहम्'** [३३] इत्यादि द्रौपदीसत्यभामासंवादे । **'शतं दासीसहस्राणि कौन्तेयस्य महात्मनः'** [४८], **'तासां नाम च रूपं च भोजनाच्छादनानि च । सर्वासामेव वेदाहं कर्म चैव कृताकृतम्'** [५०] इति च । **'अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः । आगोपलाविपालेभ्यः सर्वं वेद कृताकृतम् । सर्वं राज्ञः समुदयमायं च व्ययमेवच । एकाऽहं वेद्मि कल्याणि पाण्डवानां यशस्विनि । मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः । उपासनरताः सर्वे घटयन्ति वरानने'** [५५–६] इति च । **'अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् । एकाऽहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् । अनिशायां निशायां च विहाय क्षुत्पिपासयोः । आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे'** [५८–९] इति च । स्वतः हरिधर्ममनुष्ठायान्येषां निदर्शनभूता चाऽसीत् । तुना शुद्धसत्वात्मकत्वं नाम तस्या विशेषमाह ॥ २ ॥ जरासुतादीन् कीचकादींश्च स भीमः । स इति यो जरासुतस्यापि न वश आस तस्य बकस्यापि वधेन विदितवीर्य इत्यर्थः । सकीचकादीनित्येकं वा पदम् । जरासुतादीनित्यादिपदेन क्षत्रिया राजान उच्यन्ते । अक्षत्रिया लोककण्टकाः कीचकादीनित्यादिपदेन । ममर्द चुक्षोद । मृद क्षोदे । क्षोदनं सञ्चूर्णनम् । तस्य बलत एव नित्यभीताः, बभूवुरिति वक्ष्यमाणमत्रापि सम्बध्यते ॥ ३ ॥ परराष्ट्रेषु । ते पर-राष्ट्रगता दुष्टक्षत्रियाः शात्रवाः । विशिष्य जरासुतकीचकादयः । वस्तुतस्तु **'राजा राष्ट्रम्'** इतिवत् राष्ट्रेषु दुष्टराजस्वित्यर्थः । तद्यथा गृहिणी गृहमुच्यते तथा राजानो राष्ट्राण्युच्यन्ते । निरुद्यमाश्च बभूवुः । प्रतिरोद्धुमक्षमा विधेया बभूवुरित्यर्थः । युद्धेषु जिताः । पुनर्युद्धेषु निरुद्यमा इति च । सात्विको लोकः प्रजावर्गः स्वभावतो हरिधर्मनिष्ठोऽपि तदीयशासनाच्च निरन्तरायं निरन्तरं च विशिष्य हरिधर्मनिष्ठ आसीत् । तेन मोक्षसाधने शैघ्र्यम् । राजसोऽपि लोकः स्वभावतः ससंशयोऽपि तदीयशासनात् हरिधर्मे निष्ठावानासीत् । तेन निरयगेभ्योऽपि त्रिदिवगामिनोऽधिका आसन् । अथापि तामसो लोकस्तामस एवाऽसीत् । अतः प्रायेणेत्याह । तदप्यन्तःस्थितस्य तस्यैव शासनात् । स हि योग्यतानुगुणं प्रेरयति । अथच तदीयशासनात् तामसो लोकः सात्विकान् विरोद्धुमप्रभवन् हरिधर्मनिष्ठेष्वनिच्छन्नपि निष्ठां दर्शयामास । स्मर्यते च–**'ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत । नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः'** [आ.प.१७८.७] इति बकवधे ॥ ४ ॥ प्रथमः जननक्रमेण नकुलः । नतु

---

१. **'धर्मराजः पश्चाच्च'** इति क्वचित् । तत्पक्षे राज इति षष्ठी ।

धृष्टद्युम्नस्तत्र सेनाप्रणेता शक्रप्रस्थे नित्यमास्तेऽतिहार्दात् ।
विशेषतो भीमसखा स आसीद् राष्ट्रं चैषां सर्वकामैः सुपूर्ण्णम् ॥ ६ ॥

नावैष्णवो न दरिद्रो बभूव न धर्म्महानिश्च बभूव कस्यचित् ।
तेषां राष्ट्रे शासति भीमसेने न व्याधितो नापि विपर्य्ययान्मृतिः ॥ ७ ॥

युधिष्ठिरं यान्ति हि[1] दर्शनोत्सुकाः प्रतिग्रहायाप्यथ याजनाय ।
कार्य्यार्त्थतो नैव[2] वृकोदरेण कार्य्याणि सिद्धानि[3] यतोऽखिलानि ॥ ८ ॥

**द्विषां भेदः द्वैधीभावः । आदिशब्देन विग्रहाद्युच्यते । तेषु आसीत् । धर्मराजं रक्षन् खड्गी धर्मराजपश्चाच्च बभूव ॥ ५–७ ॥ दर्शनोत्सुकाः (यान्ति कार्यार्थतो नैव यान्ति) ॥ ८–९ ॥**

---

ज्यायान् । यमयोः पूर्वजातस्य कनीयस्त्वात् । अथ द्वितीयो ज्यायान् सहदेवः सन्धानभेदादिव्यवहारेषु अधिकृत आसीत् । सन्धानं साम । आदिना दानदण्डौ । यद्यपि दाने दण्डे च युधिष्ठिरोऽधिकृतः । अथापि कस्यकस्य किञ्चिं देयमिति को दण्ड्यः कीदृशश्च दण्ड इति च निवेदने सहदेवोऽधिकृतः । अत एव दानदण्डयोर्मुखतोऽग्रहणम् । चौर्यादिना दण्ड्य एव प्रायो नाऽसीदिति दण्डोऽपि विरळ एवेति च मुखतो न जगाद । सात्विकेषु राजसु च सन्धानं दानं च । तामसेषु भेदश्च दण्डश्च । राजसेषु यथायोग्यम् । अथवा सन्धानं सन्धिः । भेदो द्वैधीभावः । आदिना विग्रहासनयानसंश्रयाः । तथाहि– **‘सन्धिविग्रहासनयानसंश्रयद्वैधीभावाः षाड्गुण्यम्’** इति । **‘पणबन्धः सन्धिः । अपकारो विग्रहः । उपेक्षणमासनम् । अभ्युच्चयो यानम् । परार्पणं संश्रयः । सन्धिविग्रहोपादानं द्वैधीभावः । परस्माद् हीयमानः सन्दधीत । अभ्युच्चीयमानो विगृह्णीयात् । न मां परो नाहं परमुपहन्तुं शक्त इत्यासीत । गुणातिशययुक्तो यायात् । शक्तिहीनः संश्रयेत । सहायसाध्ये कार्ये द्वैधीभावं गच्छेत्’** इति च । आद्यन्तयोः सन्धानभेदयोर्ग्रहणेन मध्यग्रहणं सूचयामास । धर्मराजस्य पृष्ठतो भवन्नङ्ग-रक्षकश्च बभूव । यं पृष्ठगोपमाहुः ॥ ५ ॥ पाण्डवेष्वतिहार्दात् । तत्रापि विशेषतो भीमसखा । समासान्तो विधिरनित्य इति न टच् । यत्र टच् न प्रयुज्यते तमर्थविशेषं चात्रोपसञ्जग्राह । भीमस्य सुसखेत्यर्थः । सुपूर्णं सदा पूर्णम् ॥ ६ ॥ कस्य-चिद्धेतोः । कस्यचिन्नरस्य । व्याधिः सञ्जातोऽस्येति व्याधितः । तारकादित्वादितच्–**‘तदस्य सञ्जातं तारकादिभ्य इतच्’** [अ.सू.५.२.३६] इति । यतः कोऽपि व्याधियुतो न बभूव अत एव व्याधितो निमित्तान्मृतिश्च कस्यचिन्न बभूव । विपर्यया-दिति । स्थविरेषु जीवत्सु बालानां मृतिरित्यर्थः ॥ ७ ॥ प्रतिग्रहाय याजनाय च तेनाऽमन्त्रिता यान्ति । तदेतदथेत्यने-नोक्तम्, आमन्त्रणानन्तरमिति । अथेति विकल्पार्थे वा । प्रतिग्रहाय अथवा याजनायेति । अनामन्त्रिता अपि दर्शनोत्सुका यान्ति । कार्यार्थतस्तु न केऽपि यान्ति ॥ ८ ॥

---

१ ‘यान्त्यथ दर्श–’　　२. ‘कार्यार्त्थिनो नैव’　　३. ‘सिद्ध्यन्ति यतो–’

गन्धर्वविद्याधरचारणाश्च सेवन्त एतान्त्सततं समस्ताः ।
यथा सुरेन्द्रं मुनयश्च सर्व आयान्ति देवा अपि कृष्णमर्च्चितुम् ॥ ९ ॥

तेषां राष्ट्रे कार्त्तयुगा हि धर्म्माः प्रवर्त्तिता एव ततोऽधिकाश्च ।
ऋद्धिश्च[1] तस्मादधिका सुवर्ण्णरत्नाम्बरादेरपि सस्यसम्पदाम् ॥ १० ॥

अथोपयेमे शिशुपालपुत्रीं युधिष्ठिरो देवकीं नाम पूर्वम्[2] ।
स्वीयां भार्य्यां यत्सहजो धृष्टकेतुरनुह्लादः सवितुश्चांशयुक्तः ॥ ११ ॥

तस्यां सुहोत्रो नामतः पुत्र आसीद् यश्चित्रगुप्तो नाम पूर्वं सुलेखः ।
कृष्णा सैवाप्यन्यरूपेण जाता काशीशपुत्री यां प्रवदन्ति काळीम्[3] ॥ १२ ॥

**कार्तयुगाः कृतयुगसम्बन्धिनः । ततः कृतयुगधर्मेभ्यः ॥ १० ॥ युधिष्ठिरस्य विवाहान्तरमाह– अथेति । यत्सहजः धृष्टकेतुः पूर्वमनुह्लादः ॥ ११ ॥ पूर्वं यः सुलेखश्चित्रगुप्तो नाम स तस्यां नामतः सुहोत्रः पुत्र आसीत् । सा कृष्णा अन्यरूपेणापि जाता ॥ १२ ॥**

---

यथा सुरेन्द्रं तथा एतान् सेवन्ते । प्रायो मनुष्यलोके दुर्लभदर्शना देवा अपि कृष्णमर्चितुमत्राऽयान्ति । **'मुनयो धर्मविद्वांसो धृतात्मानो जितेन्द्रियाः । उपासते महात्मानं सभायामृषिसत्तमाः'** [स.प.४.२५] इति, **'चित्रसेनः सहामात्यो गन्धर्वाप्सरसस्तथा'** [४३] , **'पाण्डुपुत्रानृषींश्चैव रमयन्त उपासते । तस्यां सभायामासीनाः सुव्रताः सत्यसङ्गराः । दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते'** [४६–७] इति च ॥ ९ ॥ कार्तयुगा धर्मा एव । एवकारेणान्यूनतामाह । कार्तयुगा एव धर्मा इति च । एवकारेण सर्वथा कलिप्रभावाभावमाह । ततः कृतयुगादप्यधिकाश्च । तस्मात् कार्तयुगस्यैव धर्मस्य प्रवर्तनात् तस्मात् कृतयुगादधिका समृद्धिश्च । अम्बरादेराभूषणसाधनस्य । सस्यसम्पदामपि ॥ १० ॥ अथ द्रौपदीपरिणयानन्तरम्, इन्द्रप्रस्थे स्वराज्यस्थापनानन्तरं च । पूर्वं मूलरूपेऽपि स्वीयां भार्यां श्यामलाम् । यथा काळी केवला भारती तथेयं केवला श्यामला । **'धृष्टकेतुश्चेकितानः'** इति गीतोक्तः शिशुपालपुत्रः । सम्प्रति भारते पठन्ति–**'शैब्यस्य कन्यां देवकीं नामोपयेमे युधिष्ठिरः । तस्यां पुत्रं जनयामास यौधेयं नाम'** [आ.प.६३.७५] इति । **'चैद्यस्य कन्यां देवकीं नाम'** इति पठितव्यम् । **'तस्यां पुत्रं जनयामास सुहोत्रं नाम'** इति च । लिपिकृतः प्रामाद्यन् । **'युधिष्ठिरात्तु पौरव्यां देवकः–'** [९.१९.३०] इति तु भागवते । पौरवीति देवक्या एव नामान्तरम् । देवक इति च सुहोत्रस्य । यथा देवकस्य पुत्री देवकीनाम्नाऽऽहूयत, एवं पौरव्या देवक्याः पुत्रो देवक इति । तेन न विरोधः ॥ ११ ॥ पापपुण्ययोः सुलेखः । पापं पापमित्येव लिखति । पुण्यं पुण्यमिति । नतु राजकीयाधिकृताः कायस्था इव विपर्येण । अतः

---

१. 'वृद्धिश्च' २. 'पूर्वाम् ।' ३. 'कालीम् ।'

सा केवला भारती नान्यदेव्यस्तत्राऽविष्टास्तत्कृते काशिराजः ।
स्वयम्बरार्थं[1] नृपतीनाजुहाव सर्वांस्तेऽपि ह्यत्र हर्षात् समेताः ॥ १३ ॥

तेषां मद्ध्ये भीमसेनांस एषा मालामाधात्[2] तत्र जरासुताद्याः ।
क्रुद्धा विष्णोराश्रितानाक्षिपन्त आसेदुरुच्चैः शिवमास्तुवन्तः[3] ॥ १४ ॥

पूर्वं वाक्यैर्वैदिकैस्तान्त्स भीमो जिग्ये तर्कैः साधुभिः सम्प्रयुक्तैः ।
वेदा ह्यदोषा इति पूर्वमेव संसाधयित्वैव सदागमैश्च ॥ १५ ॥

**सा काळी केवला भारती । केवलेत्युक्तं विवृणोति–नेति । तत्र काळ्याम् ॥ १३ ॥ तत्र तस्मिन्नवसरे । क्रुद्धाः वैष्णवो भीमोऽनया वृत इति क्रुद्धाः । अत एव विष्णोराश्रितान् वैष्णवान्, उपलक्षणमेतत्, विष्णुमपि उच्चैराक्षिपन्तः, निन्दन्तः, शिवं शैवांश्च आस्तुवन्तः ॥ १४ ॥ स भीमः पूर्वमेव आदावेव वेदाः अदोषाः अप्रामाण्यकारणदोषरहिताः इति (सं)साधयित्वा, अपौरुषेयत्वादियुक्तिभिः सम्यक् साधयित्वा । वैदिकैर्वाक्यैः वेदगतवाक्यैः । साधुभिः प्रमाणबाधादिदोषरहितैः तर्कैः अनुमानैः । सदागमैः पञ्चरात्रेतिहासादिभिः । चशब्दोऽन्योन्यसमुच्चयार्थः । तान् जरासुतादीन् पूर्वं वक्ष्यमाणबाहुयुद्धापेक्षया पूर्वं प्रथमतः जिग्य इति सम्बन्धः ॥ १५ ॥**

---

सुलेखः । या कृष्णा द्रौपदी सैव अन्यरूपेणापि जाता । वर्णतः काळी । काडयति नाशयति दुष्टानिति काळी । कलितसद्गुणत्वात् काली ॥ १२ ॥ अथापि विशेषोऽस्तीत्याह– सा केवला देहमानिचेतनान्तरसमावेशाभावः कैवल्यम् । तदेव स्फुटमाह– नान्यदेव्यः । तत्कृते यः स्वयम्बरस्तदर्थम् । अत्र काश्याम्, काशिराजमन्दिरे, तत्रापि स्वयम्बरमण्डपे समेताः सङ्गताः । त्रिभुवनसुन्दरी काशिराजतनया मम भार्या भूयादिति भ्रमजनितात् हर्षात् ॥ १३ ॥ आधात् निचिक्षेप । तत्र भीमसेनांसे मालाधाने विषये उच्चैरक्षिपन्तः दूषयन्तः, शिवमा समन्ततात्, तदाश्रितैः सह, उच्चैः स्तुवन्तः ॥ १४ ॥ पूर्वं वैदिकैर्वाक्यैस्तान् जिग्ये विजिग्ये । ततोऽपि पूर्वमेव वादारम्भ एव साधुभिः स्वपक्षरक्षणे परपक्षक्षपणे च दक्षैः, निग्रहस्थानाद्यनुपहततया सम्यक् प्रयुक्तैः, तर्कैः । तथा साधुभिः, सम्प्रयुक्तैः व्याहारादिदोषविरहेण यथास्थानं सम्यगुच्चारितैः, समाख्यात्वेन वा प्रयुक्तैः, सदागमैश्च वेदा अदोषा हि, तदेतत् प्रमेयं भवतां शैवानामपि सम्मतं हि, इति निरवकाशतया साधयित्वैव । अयमर्थः– विवदमानयोर्वैदिकयोः प्रथमं वादिनाऽऽगाम एव वक्तव्यः । उक्तं चान्यत्र भगवत्पादेन–'**पृष्टेनाऽगम एवाऽदौ वक्तव्यः**' [वा.ल.श्लो.८] इति । ततः प्रतिवादिनाऽऽगमवचनानां स्वानुकूलतयाऽर्थान्तरे चोदिते तन्निरासेन स्वपक्षस्थिरीकरणायोपक्रमादिरूपस्तर्कः प्रयोक्तव्य इति । उक्तं हि–' **पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् । इत्याद्यमूहनं तर्कः**' इति । तेनाशुष्कस्तर्कः सत्तर्को भवति । स एवात्र 'साधुभिस्तर्कैः' इत्यभिहितः ॥ १५ ॥

---

४. 'स्वयंवरार्थे' २. 'मालामधात्' ३. 'शिवमेव स्तुवन्तः'

**वेदाधिक्यं शैवशास्त्राणि चाऽहुर्वेदोज्झितानां बहुलां च निन्दाम् ।**
**तथा शाक्तेयस्कान्दसौरादिकानां तत्रैवोक्तं छन्दसां वैष्णवत्वम् ॥ १६ ॥**

**विष्णोराधिक्यं तानि शास्त्राणि चाऽहुः शिवादिभ्यः कुत्रचिन्नैव वेदे ।**
**विष्णूत्कृष्टः[1] कथितो बौद्धपूर्वाश्चाऽहुर्विष्णुं परमं सर्वतोऽपि[2] ॥ १७ ॥**

**वेदाधिक्यं वेदानां प्रामाण्यलक्षणमाधिक्यम् । वेदोज्झितानां वेदप्रामाण्यमनङ्गीकुर्वताम् । शाक्तेयादि-शास्त्राणि[3] तथा वेदाधिक्यं आहुः । तत्रैव प्रमाणतयाऽङ्गीकृत(शैवादिशास्त्रेष्वेव) वैष्णवत्वं विष्णूत्कर्षपरत्वम् ॥ १६ ॥ न केवलं विष्णूत्कर्षो वेदैरेवोच्यते । किन्तु शैवादिशास्त्राण्यप्याहुरित्याह— विष्णोरिति । तानि शास्त्राणि कुत्रचित् शिवादिभ्यः विष्णोराधिक्यमाहुः । शैवशास्त्रे(ष्विव) वेदेऽन्योत्कर्षः (न कथित इत्याह—) कुत्रचिदिति । वेदे कुत्रचित् विष्णूत्कृष्टः विष्णोरुत्तमः अन्यः न कथितः । न केवलं वैदिका विष्णुं परमाहुः । किन्तु अवैदिकाश्च तथाऽहुरित्याह—बौद्धपूर्वाश्चेति । विष्णुं बुद्धरूपिणम् ॥ १७ ॥**

---

पूर्वश्लोके हीति सूचितमेवोत्तरपद्ये स्फुटमाह— वेदाधिक्यम् । अपौरुषेयत्वेन निर्दोषत्वेन च वेदाधिक्यम् । शैवादयोऽपि हि वेदमपौरुषेयं मन्यन्ते । वेदैरुज्झितानां हेयत्वेनोक्तनाम्, उज्झितवेदानां च । निन्दां चाऽहुः । शाक्तेयादीनां च तथा निन्दामाहुः । यत्र वेदाधिक्यमुक्तं तत्रैव शैवशास्त्रेषु वेदानां वैष्णवत्वमुक्तम् । तेन विष्णोराधिक्यं चार्थादुक्तं भवति । अथापि क्वचित् च्छन्दं छादयन्ति मुखतोऽन्यवचनानीवेति छन्दांसीत्याह । सम्पुटोद्धाटने वैष्णवान्येव । तथा शक्त्यादिपारम्यप्रतिपादकानां शाक्तेयादीनामपि शास्त्राणां शैवशास्त्राणि च निन्दां निन्द्यत्वमाहुः । वेदोज्झितत्वादेव । न केवलं वैष्णवशास्त्राणीति चकारार्थः । शक्तेर्ढक् गणपतेश्च ण्यो वक्तव्यः । तेन शाक्तेयं गाणपत्यमिति च भवति । प्रयोगशरणा हि वैयाकरणाः । तत्र शिवशक्त्यादिपारम्यवादिष्वेव शास्त्रेषु छन्दसां वैष्णवत्वं स्वसिद्धान्तप्रतिकूलमपि क्वचित्क्वचिदुक्तम् । तेन तत्र महत् तात्पर्य-मवगम्यते । यथा दुर्योधनकृता भीमप्रशंसा ॥ १६ ॥ क्वचिन्मुखतो विष्ण्वाधिक्यं तान्येव शास्त्राण्याहुः । तेन तान्यप्यन्ततो विष्ण्वाधिक्यमेव विवक्षन्तीति ज्ञायते । ननु वेदेऽपि समानमेतत् । तत्रापि **'विश्वस्मादिन्द्र उत्तरः'** , **'विश्वाधिको रुद्रः'** इत्यन्याधिक्यमुक्तमिति समानयोगक्षेमतया न शैवादयः पर्यनुयोगमर्हन्ति । न भोः । वेदे कुत्रचिदपि विष्णूत्कृष्टः नैव कथितः । ननु कथितः । निदर्शितश्चास्माभिः । भ्रान्तोऽसि । ननु शिवपरायण, ब्रूहि तर्हि विश्वस्मादिन्द्र उत्तर इति कोऽर्थस्तव मतेऽपि । ननु यौगिकानि वैदिकानि पदानि भवन्ति । तेनेन्दतीतीन्द्रः सर्वसमर्थः शिव इत्यर्थः । आगतोऽसि पथि । तर्हीन्द्र इति सर्वसमर्थो विष्णुरपि स्यात् । वेदानां वैष्णवत्वात्, पूर्वोत्तराविरोधेन च विष्णुरेवेति निश्चीयते । एवं रुद्र इत्यपि न रूढवचनम्, किन्तु योगवचनमिति त्वमेवाजल्पः । दर्शितं च पुराणेषु निर्वचनं भगवता व्यासेन—**'रुजं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्दनः'** इति । **'रुद्रो बहुशिरा बभ्रुः'** इति च । अतः सुष्ठूक्तम्—'विष्णूत्कृष्टः कोऽपि कुत्रचिदपि वेदे

---

१. **'विष्णूत्कर्षः'** २. **'परमं सदैव ।'**

२. एतदनुसारेण—**'शाक्तेयस्कान्दसौरादिकानि'** इति वे.ती.सम्मतः पाठ इति भाति ।

**लोकायताश्च क्वचिदाहुरग्र्यं विष्णुं गुरुं सर्ववरं बृहस्पतेः ।**
**सर्वागमेषु प्रथितोऽत एव विष्णुः समस्ताधिक एव मुक्तिदः ॥ १८ ॥**

**लोकायताः चार्वाकाः । सर्ववरं च बृहस्पतेर्गुरुं विष्णुं क्वचिदग्र्यमाहुः । अत एव शैवादिभिरपि विष्णोराधिक्यस्याङ्गीकृतत्वादेव । मुक्तिदो विष्णुः सर्वागमेषु प्रथितः(समस्ताधिक) एव ॥ १८ ॥**

---

नैव कथितः' इति । एवं बौद्धा जैनाश्च विष्णुं परममाहुः । बुद्धं बौद्धाः परमं वदन्ति । विष्णुर्हि बुद्धो बभूव । तेनान्ततस्तैरपि विष्णुपारम्यमभ्युपगतमिव । जैना अप्यृषभमादितीर्थङ्करमाहुः । विष्णुर्हि ऋषभो बभूव । तेनान्ततस्तैरप्यभ्युपगतं विष्णुपारम्यम् । नन्वत्र किञ्चिदसङ्गतमिव । बुद्धः पश्चाद् बभूव । कथं पूर्वतनो भीमस्तन्मतमुल्लिलेख? भ्रान्तोऽसि । न भीमो बुद्धमतमुल्लिलेख निराचकार वा? किन्तु बौद्धमतम् । ननु बुद्धाभावे कथं बौद्धाः? पुनर्भ्रान्तोऽसि । तदाऽपि शून्यवाद आसीत् । तदाऽपि तस्य नामाऽसीत् बौद्धमतमित्येव । द्वाभ्यां कारणाभ्याम्–ज्ञानिनां पक्षे पूर्वकल्पीयबुद्धोपदिष्टमिति । बुद्धिमतां मतमित्यज्ञानिनां पक्षे । आर्हतं तु मतमृषभावतारकाल एवार्हता भ्रान्त्या प्रवर्तितमिति द्वापरे प्रथितमेवाऽसीत् ॥ १७ ॥ लोकायताश्च । स्वगुरोर्बृहस्पतेरपि गुरुम् । अत एव बृहस्पतेरप्यग्र्यं श्रेष्ठम्, विष्णुं सर्ववरं सर्वोत्तममाहुः । यतः सर्ववरेण विष्णुना बृहस्पतय उपदिष्टम् । बृहस्पतिना चास्मदाचार्याय चार्वाकाय । तेन लोकायतमतमेव सर्ववरम् । अत एव च वयं सर्वलोकेष्वायताः, सर्वलोकप्रथिता इत्याहुरित्यर्थः । मा स्म सर्वेऽपि चार्वाका एतदङ्गीकुर्वन्, किन्तु क्वचित्क्वचित् प्राचीनप्रबन्धेष्वेतदेवमुदलेखि । एतेन ज्ञायते प्रथमं स्वप्रथितताये तेऽपि बृहस्पतिं स्वगुरुं नारायणं च मूलगुरुमङ्गचकुर्वन्निति । एवं कृतलोकवञ्चना यदा लोकेष्वायता बभूवुस्तदा कृतघ्ना व्यस्मरन् स्वमूलपरम्परामिति । तथाहि पाद्मे दैत्यानां वञ्चनाय शुक्ररूपमास्थाय गुरुणा बोधितः सिद्धान्तः–**'ये त्वमी वैष्णवा धर्मा ये च रुद्रकृतास्तथा । कुधर्मा दारसहितैर्हिंसाप्रायाः कृता हि तैः । अर्धनारीश्वरो रुद्रः कथं मोक्षं गमिष्यति । वृतो भूतगणैर्भूरि भूषितश्चास्थिभिस्तथा । न स्वर्गो नैव मोक्षोऽत्र लोकाः क्लिश्यन्ति वै वृथा । हिंसायामास्थितो विष्णुः कथं मोक्षं गमिष्यति । रजोगुणात्मको ब्रह्मा स्वां सृष्टिमुपजीवति । देवर्षयोऽथ ये चान्ये वैदिकं पक्षमाश्रिताः । हिंसाप्रायाः सदा क्रूरा मांसादाः पापकारिणः । सुरास्तु मद्यपानेन मांसादा ब्राह्मणास्त्वमी । धर्मेणानेन कः स्वर्गं कथं मोक्षं गमिष्यति । यच्च यज्ञादिकं कर्म स्मार्तं श्राद्धादिकं तथा । तत्र नैवापवर्गोऽस्ति यत्रैषा श्रूयते श्रुतिः । यज्ञं कृत्वा पशुं हत्वा कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गो नरकः केन गम्यते । यदि भुक्तमिहान्येन तृप्तिरन्यस्य जायते । दद्यात् प्रवसतः श्राद्धं न स भोजनमाहरेत् । आकाशगामिनो विप्राः पतिता मांसभक्षणात् । तेषां न विद्यते स्वर्गो मोक्षो नैवेह दानवाः । जातस्य जीवितं जन्तोरिष्टं सर्वस्य जायते । आत्ममांसोपमं मांसं कथं खादेत पण्डितः । योनिजास्तु कथं योनिं सेवन्ते जन्तवस्त्वमी । मैथुनेन कथं स्वर्गं यास्यन्ते दानवेश्वर । मृद्भस्मना यत्र शुद्धिस्तत्र शुद्धिस्तु का भवेत् । विपरीततमं लोकं पश्य दानव यादृशम्'** ,**'तारां बृहस्पतेर्भार्यां हृत्वा सोमः पुरा गतः । तस्यां जातो बुधः पुत्रो गुरुर्जग्राह तां पुनः । गौतमस्य मुनेः पत्नीमहल्यां नाम नामतः । अगृह्णात् तां स्वयं शक्रः पश्य धर्मो यथाविधः'** [सृ.खं.१३.२३१–३२] इत्यादि । **'इत्युक्त्वा धिषणो राजंश्चिन्तयामास केशवम् । तस्य तच्चिन्तितं ज्ञात्वा मायामोहं**

तेष्वागमेष्वेव परस्परं च विरुद्धता ह्यन्यपक्षेषु भूपाः ।
प्रत्यक्षतश्चात्र पश्यध्वमाशु बलं बाह्वोर्म्मे[1] विष्णुपदाश्रयस्य ॥ १९ ॥

**अन्यपक्षेषु शिवादेरुत्तमत्वसिद्धान्तेषु, तेष्वागमेष्वेव, शैवाद्यागमेष्वेव परस्परं च विरुद्धता हि । आगमानामन्योन्यविरोधः एकस्मिन्नन्यागमेन पूर्वोत्तरं च विरुद्धता हि । एवमागमैर्विष्णोराधिक्यं प्रसाध्य प्रत्यक्षेणापि साधयति– प्रत्यक्षतश्चेति ॥ १९ ॥**

---

जनार्दनः । समुत्पाद्य ददौ तस्य प्राह चेदं बृहस्पतिम् । मायामोहोऽयमखिलांस्तान् दैत्यान् मोहयिष्यति । भवता सहितः सर्वान् वेदमार्गबहिष्कृतान् । एवमादिश्य भगवानन्तर्धानं जगाम ह । तपस्यभिरतान् सोऽथ मायामोहो गतोऽसुरान् । तेषां समीपमागत्य बृहस्पतिरुवाच ह । अनुग्रहार्थं युष्माकं भक्त्या प्रीतस्त्विहाऽगतः । योगी दिगम्बरो मुण्डो बर्हि-पत्रधरो ह्ययम् । इत्युक्ते गुरुणा पश्चान्मायामोहोऽब्रवीद् वचः' [३४२–७], 'कुरुध्वं मम वाक्यानि यदि मुक्तिम-भीप्सथ । आर्हतं सर्वमेतच्च मुक्तिद्वारमसंवृतम् । धर्माद् विमुक्तेरर्होऽयं नैतस्मादपरः परः । अत्रैवावस्थिताः स्वर्गं मुक्तिं वाऽपि गमिष्यथ' [३४९–५०], 'पुनश्च रक्ताम्बरधृन्मायामोहो जितेक्षणः । सोऽन्यानप्यसुरान् गत्वा ऊचेऽन्यन्मधुरा-क्षरम् । स्वर्गार्थं यदि वा वाञ्छा निर्वाणार्थाय वा पुनः । तदलं पशुघातादिदुष्टधर्मैर्निबोधत । विज्ञानमयमेतद्वै त्वशेष-मधिगच्छत । बुध्यध्वं मे वचः सम्यग् बुधैरेवमिहोदितम्' [३५९–६२], 'नैतद् युक्तिसहं वाक्यं हिंसा धर्माय जायते । हवींष्यनलदग्धानि फलान्यर्हन्ति कोविदाः । निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते । स्वपिता यजमानेन किंवा तत्र न हन्यते । तृप्तये जायते पुंसो भुक्तमन्येन चेद् यदि । दद्याच्छ्राद्धं प्रवसतो न वहेयुः प्रवासिनः । यज्ञैरनेकैर्देवत्वमवाप्येन्द्रेण भुज्यते । शम्यादि यदि चेत् काष्ठं तद्वरं पत्रभुक् पशुः । जनाश्रद्धेयमित्येतदवगम्य तु तद्वचः । उपेक्ष्य श्रेयसे वाक्यं रोचतां यन्मयेरितम् । नह्याप्तवादा नभसो निपतन्ति महासुराः । युक्तिमद्वचनं ग्राह्यं मयाऽन्यैश्च भवद्विधैः' [३६५.७], इत्यादि च । विष्णुपुराणे चैतत् पठ्यते तृतीयेंऽशेऽष्टादशेऽध्याये । एतं धर्ममर्हतेत्युक्ताः केचिदार्हता बभूवुः । '**बुध्यध्वं मे वचः सर्वं बुधैरेवमिहोदितम्**' [वि.पु.३.१८.१८] इत्युक्तं श्रद्धधाना अपरे बौद्धा बभूवुः । केचिच्च बुद्धिविकलाः पण्डितं मन्यमाना लोकायता बभूवुः । एवमेतेषां मतानां मूलगुरुर्देवगुरुः । तस्यापि प्रेरको मायामोहकरो भगवान्नारायण इति । यत एवं सर्वागमेषु प्रथितो विष्णुरेक एव, अतः स एव समस्ताधिकः स एव मुक्तिदश्चेति युक्तम् ॥ १८ ॥ तेष्व-वैदिकेषु अन्यपक्षेषु, तेषु तैस्तैः स्वीयत्वेनाङ्गीकृतेष्वागमेष्वेव परस्परं विरुद्धता दृश्यते । एकः शिवं परमाह । अपरश्चाऽगमः शक्तिम् । अपरो गणपतिम् । अन्य आदित्यम् । जैना बौद्धाश्चार्वाकाश्च निर्देवं जगदाहुः । नैकत्राऽपि सहमतिः । अस्य प्रामाण्यं स विरुणद्धि । तस्यायमिति न कस्यापि प्रामाण्यं सेत्स्यतीत्यर्थः । '**धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा । बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम्**' [उ.खं.२३५.५–६] इत्यादि पाद्मे । एकस्याऽगमस्याऽगमान्तरेण विरुद्धता न केवलम् । एकस्मिन्नेवाऽगमे स्ववचनानामेव परस्परं विरुद्धता च । अत एवोक्तम्– '**विष्णोराधिक्यं तानि शास्त्राणि चाऽहुः**' इति । अथ किमागमपर्यन्तचिन्तया? प्रत्यक्षतश्चात्र पश्यध्वम् । अत्र विष्ण्वाधिक्ये

---

१. 'बाह्वोर्विष्णु–'

पूर्वं हि गङ्गा मम विष्णुपूजाविघ्नार्थमायाद् वामकरेण सा मे ।
नुन्ना परस्ताद् बहुयोजनं गता पुरे कुरूणां शिव आगतस्तदा ॥ २० ॥

स व्याघ्ररूपी कपिलात्मकामुमां[१] परीक्षयन् मां[२] हन्तुमिवाऽद्रवद् द्रुतम् ।
स मे युद्धे विजितो मूर्च्छितश्च गदाप्रहारादास लिङ्गान्तरस्थः ॥ २१ ॥

व्याघ्रेश्वरं नाम लिङ्गं पृथिव्यां ख्यातं तदास्ते[३] तद्वदन्यत्र युद्धे ।
तीरे गोमत्या हैमवते गिरौ हि जितस्तत्राप्यास शार्दूललिङ्गम् ॥ २२ ॥

**पूर्वं गङ्गा कुरूणां पुरे मम विष्णुपूजाविघ्नार्थं आगता (मे) वामकरेण (नुन्ना) ॥ २० ॥ कपिलात्मकामुमां हन्तुमिव प्रावर्तत ॥ २१ ॥ तद्वत् (अन्यत्र) युद्धे व्याघ्ररूपिणा रुद्रेण[४] ॥ २२ ॥**

---

साक्षिभूतं मे बलम् । प्रत्यक्षस्याऽगमसहकृतत्वं चकारेणाऽह । प्रत्यक्षत एव पश्यध्वमित्यवधारणे च । तेषां दर्शनं स्वविजयफलकमित्यात्मनेभाषा । विष्णुपदाश्रयस्य मे बलं पश्यध्वम् । तेन विष्णोर्बलमनुमिनुध्वम् ॥ १९ ॥ अथ काशी-वाहिन्या गङ्गायाः परिसरप्रदेशेषु यद् वृत्तं तत् स्मारयति– पूर्वं हीति । वामकरेण सावज्ञं नुन्ना । वा+मकरेण इति च प्रतृण्णम् । मकरेणोपलक्षिता गङ्गा । मकरवाहिनी हि सा । विष्णुपूजाया विघ्नार्थं विघ्नार्थमिवाऽयादित्यर्थः । वस्तुतस्तु न विघ्नार्थमायात् । किन्तु विष्णुभक्तस्य मम, तेन च विष्णुभक्तेः, महिमाविष्करणार्थमायादित्यर्थः । अथच विष्णु-पूजायां शुद्धजलादिविरहेण विघ्नो मा भूदित्यविघ्नार्थमेवाऽयात् । मे मम वामकरेण । तृतीयार्थे च । मे मया नुन्ना मम विष्णु-पूजेति स्वस्य विष्णुपूजायां ममताभरमाह । सा मे वामेन करेण नुन्नेति पुनरपि म इत्याहार्थविशेषद्योतनाय । गङ्गाजनकस्य विष्णोर्भक्ताग्रण्यो ममेति । 'गङ्गा+अमम' इति वा प्रतृण्णम् । अममेति पूर्वस्मरणेन तां घटनां स्वदते विस्मयते वा । अत्र पूर्वार्धे त्रिष्टुप् । उत्तरार्धे जगती । अथापि द्वितीयचरण एकाक्षराधिक्यात् भुरिक् त्रिष्टुप् । तेनाक्षराधिक्येन भीमबलस्याऽधिक्यम्, अधिकं दूरनयनं च ध्वनयति । कुरूणां पुरे हस्तिनपुरे । यदा गङ्गा नुन्ना प्रेरिता, णुद प्रेरणे, क्षिप्तेति यावत्, दूरं गता तदा गङ्गाधरः शिवः आगतः । स्वेन शिरसि धारितां मया चावधीरितामसहमान इव ॥ २० ॥ न शिवरूपेणाऽगतः । मां परीक्षयन्निव मत्सामर्थ्यं परितो गतानां देवानामृषीणां चेक्षयन् दर्शयन्निव च । व्याघ्ररूपी आगतः । आगत्य च कपिला-त्मकामुमां हन्तुमिव द्रुतमधावत् ॥ २१ ॥ तत् तस्मादेव, तत् लिङ्गं व्याघ्रः सन् ईश्वरोऽत्रेति व्याघ्रेश्वरं नाम व्याघ्रेश्व-रमिति ख्यातम् । सकृच्चेदाकस्मिकं स्यात् । अत आह– तद्वदिति । तद्वत् हस्तिनपुर इवान्यत्र गोमत्यास्तीरे च व्याघ्ररूपी जितः । **'तत्र तस्येव'** [अ.सू.५.१.११५] इति सप्तम्यर्थे वतिः । तेन तत् लिङ्गं शार्दूलेश्वरमिति ख्यातमास । **'व्याघ्रः स्यात् पुंसि शार्दूले'** इत्यभिधानम् ॥ २२ ॥

---

१. **'–लात्मिकामुमाम्'**
२. **'–यन् हन्तु–'**
३. **'तदा तद्व–'**
४. शार्दूल इति व्याघ्र इति चानर्थान्तरम् ।

एवं प्रत्यक्षे विष्णुपदाश्रयस्य बलाधिक्ये किमु वक्तव्यमत्र ।
विष्णोराधिक्ये क्षत्रियाणां प्रमाणं बलं विप्रे ज्ञानमेवेति[१] चाऽहुः ॥ २३ ॥

मया केदारे विप्ररूपी जितश्च रुद्रोऽविशल्लिङ्गमेवाऽशु भीतः ।
ततः परं वेदविदामगम्यताशापं प्रादाच्छङ्करो व्रीळितोऽत्र[२] ॥ २४ ॥

एवं प्रत्यक्षे विष्णुबले प्रतीपं मनो यस्य ह्युत्तरं स ब्रवीतु ।
क्रोधोऽधिकश्चेत्[३] क्षिप्रमायातु योद्धुमित्युक्तास्तेऽभ्याययुरात्तशस्त्राः ॥ २५ ॥

विद्राप्य[४] तान् बाणसङ्घैः समस्तान् जरासुतं गदया योधयित्वा[५] ।
बाहुभ्यां चैनं परिगृह्याऽशु विष्णोःपादोत्थायां[६] प्राक्षिपद् देवनद्याम् ॥ २६ ॥

स व्रीळितः[७] प्रययौ मागधांश्च भूपैः समेतो भीमसेनो रथं स्वम् ।
आरुह्य काशीश्वरपूजितश्च ययौ काळ्या[८] शक्रसनामकं पुरम् ॥ २७ ॥

**बलाधिक्ये सिद्धेऽपि स्वरूपाधिक्ये किमायातमित्यत आह– क्षत्रियाणामिति । प्रमाणं ज्ञापकम् ॥ २३ ॥ जितः, वाग्युद्ध इति शेषः । अत्र केदारे ॥ २४ ॥ एवं विष्णुबले प्रत्यक्षे, आधिक्ये प्रत्यक्षसिद्धे सति । यस्य मनः प्रतीपम्, आधिक्ये विप्रतिपन्नम् । स्वबलमुक्त्वा विष्णुबल इति कथमुच्यत इति चेत् सत्यम् । स्वबलस्यापि विष्णुबलप्रतिबिम्बत्वात् तथेति युज्यते ॥ २५–७ ॥**

---

अत्र अस्मिन् प्रसक्ते विवादे, किमपरं प्रमाणं वक्तव्यं विष्णोर्बलाधिक्ये । ननु बलप्रदर्शनमेतत् । न प्रमाणप्रदर्शनमिति शङ्कमानमाह–क्षत्रियाणामिति । क्षत्रियाणामाधिक्ये बलं प्रमाणम् । विप्रविषये तु ज्ञानमेवाऽधिक्ये प्रमाणमिति च वेदविद आहुः ॥ २३ ॥ विप्ररूपी च ज्ञानबलेन जितः । मा वेदविदो मां द्राक्षिषुरिति शापम् । केदारमाहात्म्ये प्रथितेयं कथा ॥ २४ ॥ विष्णुपदाश्रयस्य प्रत्यक्षसिद्धे बले कैमुत्यन्यायेन विष्णुबलमपि प्रत्यक्षसिद्धमिव । उत्तरदानेऽक्षमा द्वितीयमेव पक्षम-वलम्बिरे । अवलम्ब्य चाभियोद्धुमाययुः ॥ २५ ॥ विद्राप्य दूरं द्रावयित्वा । द्रु गतौ । द्रवति । सर्वशो घातयित्वा वा । द्रूञ् हिंसायाम् । द्रूणाति द्रूणीते । उभयोरपि क्त्वायोगे णौ द्रावयित्वा । ल्यपि त्वन्यतरस्यां पुक् । विद्राव्य, विद्राप्य । पुग् द्रवणे परवशतां ध्वनयति । द्रावणे दक्षतां च । विष्णोः पादोत्थायामित्युलग् वा । विष्णोः पाद इत्याकाशश्च । अत एव तामाकाशगङ्गेति स्वर्गङ्गेति देवनदीति च निगदन्ति ॥२६॥ भूपैः समेतः स जरासन्धः । शक्रसनामकमिन्द्रप्रस्थम् ॥२७॥

---

१. 'ज्ञानमित्येव चा–' २. 'व्रीडितोऽत्र' ३. 'क्रोधाधिक–' ४. 'विद्राव्य तान्'
५. '–या पोथयित्वा' ६. 'पदोत्थायाम्' ७. 'व्रीडितः' ८. 'काल्या'

**तस्यां त्रिलोकाधिकरूपसद्गुणैरा सम्मतायां[१] रममाणः सुतं च ।**
**शर्वत्रातं नामाजनयत्[२] पुरा यः समानवायुर्बलवीर्य्ययुक्तः ॥ २८ ॥**

**कृष्णोऽपि गत्वा द्वारवतीं सरामः सत्यापितुर्वधकर्त्तारमेव ।**
**शतधन्वानं हन्तुमैच्छत् स चैव ययाचेऽक्रूरं कृतवर्म्मानुयुक्तम् ॥ २९ ॥**

**तावब्रूतां सर्वलोकैककर्त्तुर्न्नावां विरोधं मनसाऽपि कुर्वः ।**
**कृष्णस्य सर्वेशितुरित्यनूक्त आरुह्य चाश्वीं भयतः पराद्रवत् ॥ ३० ॥**

**अन्वेव तं कृष्णरामौ रथेन यातौ शतं योजनानां दिनेन ।**
**गत्वा मृतायां बडबायां[३] पदैव[४] स प्राद्रवत्[५] कृष्ण एनं पदाऽगात् ॥ ३१ ॥**

**आसम्मतायां सम्यक् प्रसिद्धायाम् ॥ २८–३२ ॥**

---

आ समन्तात् सर्वेषां सम्मतायाम्। रूपेण सद्गुणैश्च पत्युः। सद्गुणैः श्वश्र्वोः, श्वशुरस्य, देवराणाम्, यातॄणाम्, परिजननिकुरम्बस्य च सम्मतायाम्। सम्मतायामा रममाण इति च। आनन्दाय रमणमारमणम्। न व्यसनितया, नापि दुःखोपरमाय। पुत्रस्य आधानाय रमणमारमणम्। आविवाहसमयात् आ स्वधामगमनं रमणमारमणम्। **'जरसा यस्मिन्नहार्यो रसः'** [उ.रा.च.१.३९] इति हि भवभूतिः। शर्वत्रातं नाम। यं महाभारतसङ्ग्रामसमये कैलासमानीय शर्वोऽत्रायत। काशीशनप्तारमहो काशीश्वरो ररक्ष। **'भीमसेनस्तु वारणस्यां काशिराजकन्यां जलन्धरां नामोपयेमे स्वयम्बरस्थाम्। तस्यामस्य जज्ञे शर्वत्रातः'** [आ.प.६३.७६] इत्यंशावतरणे। जलन्धरेति च काळ्या नामान्तरम्। प्रळयजलं धरतीति जलन्धरा प्रकृतिमानिनी भारती। पुरुषसिक्तं जलं गर्भे धरतीति प्रजननसमर्था भोगक्षमा जलन्धरेति लौकिकोऽर्थः। शर्वगत इति च शर्वत्रातस्य। **'काळी शर्वगतं ततः'** [९.१९.३१] इति भागवते। **'काळी च भीमसेनादेव शर्वत्रातं पुत्रमवाप'** [४.२०.११] इति श्रीविष्णु-पुराणे। अर्वाचीनास्तु **'काशी च भीमसेनादेव सर्वत्रगं पुत्रमवाप'** इति पाठं पठन्ति। लिपिकृतः प्रमाद्यन्ति, न प्रबन्धारः ॥ २८ ॥ कृष्णोऽपि इन्द्रप्रस्थे पाण्डवस्थापनानन्तरं द्वारवतीं गत्वा। एवकारेण शतधन्वनो हन्तव्यतामवधारयति। एतावन्तमनेहसमुपेक्षितं सम्प्रति हन्तुमेव मनो दध इत्यर्थः। सोऽपि कथञ्चिज्जीवनमेवेच्छन् आत्मानं रक्षितुमक्रूरं ययाचे। कृतवर्मणा च स्वकृतकर्मणामनुमोदकेन युक्तम् ॥ २९ ॥ यद्यपि पूर्वमासुरावेशवशात् कृतवर्मा शतधन्वानं कृष्णविरोधाय प्रचोदयामास। **'नौ विरोधे कृष्णस्य दानपतिना साह्यमेमि'** इत्याश्वासयामास च। अक्रूरेण च निराकृते कृष्णविरोधे स्वयमपि गलितासुरावेशोऽक्रूरेण सहोवाच– सर्वलोकैककर्तुः। सर्वेषां लोकानामेकः प्रधानः कर्ता। करोतीति कर्ता स्रष्टा। कृणोतीति कर्ता संहर्ता। कृञ् हिंसायाम्। स्रष्टुः संहर्तुश्च सर्वेशितुः कृष्णस्य मनसाऽपि न विरोधं कुर्व इति अनूक्तः एकरूपतयोक्तः। अनुशिष्य चोक्तः। इत्युक्तः, अनु तदुक्तिश्रवणसमनन्तरमेव सपदि पराद्रवदिति च ॥ ३० ॥ एकेनैव

---

१. **'-रासम्मितायाम्'** २. **'नाम्नाऽजनयत्'** ३. **'बडवायाम्'**
४. **'तदैव'** इति, **'स्वयं च'** इति च क्वचित्। ५. **'सम्प्राद्रवत्'**

छित्वा शिरस्तस्य चक्रेण कृष्णो जानन्नक्रूरे मणिमेनेन[१] दत्तम् ।
अप्यज्ञवल्लोकविडम्बनाय परीक्ष्य वासोऽत्र नेत्याह रामम् ॥ ३२ ॥

अविश्वासात् स तु सक्रोध एव ययौ विदेहानवसत् पञ्च चाब्दान् ।
जानन् पार्थेभ्योऽहार्य्यतां केशवस्य वशीकर्त्तुं धार्त्तराष्ट्रो बलं गात् ॥ ३३ ॥

बभूव शिष्योऽस्य तथा गदायामसन्निधानं केशवस्य प्रतीक्षन् ।
तदा ययाचे भगिनीं च तस्य स च प्रतिज्ञामकरोत् प्रदाने ॥ ३४ ॥

**पार्थेभ्यः केशवस्य अहार्यतां हर्तुमशक्यतां जानन् । गात् अगात् ॥ ३३ ॥ असन्निधानं असामीप्यम् ॥ ३४ ॥**

---

दिनेन, त्रिंशता घटिकाभिः, योजनानां शतं यातौ । **'कालाध्वनोरत्यन्तसंयोगे'** [अ.सू.२.३.५] इति द्वितीया । क्रियया साकल्येन कालसम्बन्धः कालात्यन्तसंयोगो नाम । हस्तचतुष्टयं धनुः । 'ಮಾರು ' इति भाषायाम् । धन्वन्तरसहस्रं क्रोशः । 'ಹಾಗಳಿಡ ' इति भाषायाम् । चतुर्विंशत्यङ्गुलो हस्तः । षण्णवत्यङ्गुलो धनुः । तावत्सहस्राङ्गुलः क्रोश इत्यायातम् । क्रोशद्वयं गव्यूतं गव्यूतिर्गोरुतं गोमतं च । गोरुतद्वयं योजनमुच्यते । स च शतधन्वा तावन्तमध्वानमश्वीमारुह्य गत्वा वेगधावनजनितेन श्रमेण तस्यां बडबायां मृतायां पदैव प्राद्रवत् द्रुततरमधावत् । **'विख्याता हृदया नाम शतयोजनगामिनी । भोजस्य बडबा दिव्या यया कृष्णमयोधयत्'** [उपो.पा. ७१.७२] इति ब्रह्माण्डे । हृदया मनोजवेत्यर्थः । कृष्णस्य पुरतस्तस्य द्रुतगतिरपि एकपदः कुण्ठा गतिरिव समजनीति पदेत्याह । कृष्णोऽपि रथादवतीर्णः पदैवैनमन्वगात् सबलः । समग्रा पृथिवी यस्यैकपादमिता तस्य शतधन्वानुगमनं कियदिति सूचनाय पदाऽगादित्याह ॥ ३१ ॥ जानन्नपि । अत्र शतधन्वनि ॥ ३२ ॥ मिथिलापरिसरे शतधन्वनो हननात् सामीप्याद् विदेहान् ययौ । अहार्यतां अविघटनीयताम् । दूरीकर्तुमशक्यतामित्येतत् । बलं वशीकर्तुं बलद्वारा केशवं वशीकर्तुम् । गात् । **'बहुलं छन्दस्यमाङ्योगेऽपि'** [अ.सू. ६.४.७५] इति हि पाणिनिः । प्रयोगश्च–**'शतयुषा हविषेमं पुनर्दुः'** इत्यादिः । **'पद्भ्यामेव ततो गत्वा शतधन्वानमच्युतः । मिथिलामभितो राजन् जघान परमास्त्रवित् । स्यमन्तकं च नापश्यद्धत्वा भोजं महाबलम् । निवृत्तं चाब्रवीत् कृष्णं रत्नं देहीति लाङ्गली । नास्तीति कृष्णश्चोवाच ततो रामो रुषाऽन्वितः । धिक्शब्दमसकृत् कृत्वा प्रत्युवाच जनार्दनम् । भ्रातृत्वान्मर्षयाम्येष स्वस्ति तेऽस्तु व्रजाम्यहम् । कृत्यं न मे द्वारकया न त्वया नच वृष्णिभिः । प्रविवेश ततो रामो मिथिलामरिमर्दनः'** [ह.वं.प.३९.२३] इति । **'अथ दुर्योधनो राजा गत्वा तु मिथिलां प्रभुः । गदाशिक्षां ततो दिव्यां बलभद्रादवाप्तवान्'**[३९.२८] इत्यादि च हरिवंशे ॥ ३३ ॥ **'यावच्च जनकराजगृहे बलभद्रोऽवतस्थे तावद् धार्तराष्ट्रो दुर्योधनस्तत्सकाशाद् गदाशिक्षामशिक्षत'** [वि.पु.४.१३.४७] इति वैष्णवे । **'उवास तस्यां कतिचिन्मिथिलायां समा**

---

१. **'मणिमेतेन'**

ज्येष्ठं ह्येनं केशवो नातिवर्त्तेदित्येव मेने धार्त्तराष्ट्रः स तस्मात् ।
जग्राह हस्तं दक्षिणं सत्यहेतोर्ददौ च रामः करमस्मै हलाङ्कम् ॥ ३५ ॥

रूपेण तस्या मोहितो धार्त्तराष्ट्रो विशेषतः कृष्णरामौ भगिन्याः ।
स्नेहाद् वशं यास्यत इत्यगृह्णाद्धस्तं हलाङ्कं हलिनो रिपुघ्नम् ॥ ३६ ॥

जाता देवक्यां सा सुभद्रेति नाम्ना भद्रा रूपेणानकदुन्दुभेस्ताम् ।
कृत्वा पुत्रीं रोहिणी स्वामरक्षत् पूर्वं तु याऽसीत् त्रिजटैव नाम्ना ॥ ३७ ॥

**(हस्तम्), बलस्येति शेषः ॥ ३५ ॥ भगिन्याः स्नेहात् कृष्णरामौ तु मे वशं यास्यत इति विशेषतः मुख्याभिप्रायेण हलिनो हस्तमगृह्णात् ॥ ३६ ॥ पूर्वं या नाम्ना त्रिजटा सैव देवक्यां जाता ॥ ३७ ॥**

---

**विभुः । ततोऽशिक्षद् गदां काले धार्तराष्ट्रः सुयोधनः'** [भाग.१०.६१.३२] इति च श्रीशुकोक्तिः । असन्निधानं प्रतीक्षमाणः । प्रतीक्षा स्वार्थसाधनाय विफला बभूवेति परस्मैभाषा । यदाऽसन्निधानं बभूव तदा शिष्यो बभूव । यदा शिष्यो बभूव तदा बलस्य भगिनीं ययाचे । स्वार्थमयाचतेत्यात्मनेभाषा । शिष्यवात्सल्यादेव केवलं प्रतिज्ञामकरोदिति परस्मैभाषा ॥ ३४ ॥ नातिवर्तेत् । तेन तद्विपक्षीयाणामस्माकमेव महान् लाभ इति दुर्योधनविभ्रमविलासं परस्मैभाषयाऽह । ततः तस्यैव प्रतिकूलमर्जुनस्य चानुकूलमासेति । इत्येवं मेने । इति एव निश्चयेन मेन इति वा । सत्यहेतोः शपथहेतोः । येनैव हलेन परस्तात् हस्तिनपुरमाचकर्ष तेन हलेनाङ्कितं हस्तमिति साकूतमाह ॥ ३५ ॥ सोऽयं प्रियशिष्यो यदा रिपुरिव विरुरोध साम्बस्वयम्बरे तदा तमनेनैव हलाङ्केन शिक्षयामासेति ध्वनयन् रिपुघ्नमित्याह ॥ ३६ ॥ त्रिजटा विभीषणतनया रामावतारे । याऽशोकवनिकायां सीतां शुश्रूषमाणा सान्त्वयामास । रूपेण भद्रा शोभना । अत एव नाम्ना सुभद्रा । सा देवक्यां जातेति भागवते पठ्यते । तथाहि – **'वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् । कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः । ऋजुं सम्मर्दनं भद्रं सङ्कर्षणमहीश्वरम् । अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल । सुभद्रा च महाभागा तव राजन् पितामही'** [९.२१.५४–६] इति । रोहिणीतनयेति चान्यत्र । तथाहि स्मरन्ति–**'पौरवी रोहिणी नाम बाह्लीकस्याऽत्मजाऽभवत् । ज्येष्ठा पत्नी महाभाग दयिताऽऽनकदुन्दुभेः । ज्येष्ठं लेभे सुतं रामं सारणं च गदं तथा । दुर्दमं दमनं शुभ्रं पिण्डारकमुशीनरम् । चित्रा नाम कुमारी च रोहिणीतनया नव'** इति हरिवंशे [ह.वं.प.३५.४–६] , ब्रह्माण्डे च [उपो.प.७१.१६३–५] । अत्र **'बाह्लीकस्याऽनुजाऽभवत्'** इति ब्रह्माण्डे साम्प्रतः पाठः प्रामादिकः । उभयत्रापि–**'सारणं शठमेव च'** इति प्रचलितः पाठोऽपि भ्रममूलः । शठो हि बलभद्रात्मजः, नानुजः । **'बलं गदं सारणं च दुर्दमं विमलं ध्रुवम्'** [९.४७] इति हि भागवते । भागवतेऽपि नवीना दुर्दमं दुर्मदं पठन्ति । विमलं च विपुलम् । भ्रान्तिमूलोऽयं पाठः । विमलस्यैव नामान्तरं शुभ्र इति । दमनस्य ध्रुव इति । एवं **'रोहिणीतनया दश'** इति सम्प्रति हरिवंशे पठ्यते । अगणितः पाठः । अष्टौ पुत्रा एका कुमारी च पूर्वं कथिता । कथमथ संहत्य दश स्युः । ब्रह्माण्डे च सम्प्रति **'रोहिण्यष्टौ व्यजायत'** इति पाठो दृश्यते । तदा

सीतायाः प्राङ् नित्यशुश्रूषणात् सा बभूव विष्णोर्भगिनी प्रिया च ।
उमावेशाद् रूपगुणोपपन्ना पद्मेक्षणा चम्पकदामगौरी ॥ ३८ ॥

एतत् कृत्वा धृतराष्ट्रात्मजः स ययौ कुरून् निवसत्यत्र रामे ।
कृष्णोऽक्रूरं विवसन्तं भयेन सहार्दिक्यं चाऽनयित्वा जगाद ॥ ३९ ॥

आनीय रामं च समस्तसात्त्वतां यदाऽवादीत् केशवः सन्निधाने ।
मणिस्त्वय्यास्ते दर्शयेत्येव भीतस्तदाऽक्रूरोऽदर्शयद् रत्नमस्मै ॥ ४० ॥

अव्याजतामात्मनो दर्शयित्वा हलायुधे केशवस्तस्य जानन् ।
रत्नाकाङ्क्षामुग्रसेनस्य चैव मातुश्च साम्बस्य पुनर्बभाषे ॥ ४१ ॥

**चम्पकदामगौरी चम्पकमालावत् पीतवर्णा ॥ ३८ ॥ अत्र विदेहपुर्याम् । विवसन्तं द्वारवत्या अन्यत्र वसन्तं अक्रूरमानयित्वा मणिस्त्वय्यास्ते इति जगाद ॥ ३९–४६ ॥**

---

**'अष्टौ कुमारान् जनयामास, चित्रा नाम कुमारी च बभूव'** इत्यर्थः । चित्रेति सुभद्राया एव नामान्तरम् । **'चित्रा सुभद्रेति पुनर्विख्याता कुरुनन्दन'** [६] इत्युत्तरवचनाद्धरिवंशे । **'सारणस्य सहोदरी'** [आ.प.२३९.१८] इति भारते । सारणो हि रोहिणीतनयः । तेन सुभद्रा रोहिणीतनयेत्यायातम् । अत उभयं सङ्गमय्य बादरायणभावमाविष्करोति– रोहिणी स्वां पुत्रीं कृत्वाऽरक्षत् । यथा कृष्णः देवकीतनयोऽपि यशोदातनयो बभूव । एवं सुभद्राऽपि रोहिणीतनया बभूवेत्यर्थः ॥ ३७ ॥ रावणहृतायाः सीतायाः अशोकवनिकायां नित्यशुश्रूषणाद् विष्णो रामरूपस्य प्रिया प्रीतिपात्रं बभूव । अत एव विष्णोः कृष्णरूपस्य भगिनी च बभूव ॥ ३८ ॥ विप्रकृष्टे देशे वसन्तम् । भयात् कृष्णं विहाय दूरे वसन्तम् । अथाप्यन्तर्मनसि सर्वविलक्षणे कृष्ण एव वसन्तम् । **'अकयप्रवि–'** इत्यादि स्मरणात् । **'विः पक्षिपरमात्मनोः'** इति च । आनयित्वा आनाययित्वा । आनाय्येति यावत् । नयतेः सेट्त्वं च पुराणेषु पठ्यते– **'यच्छक्तिप्रेरितमतिर्वसुदेवो नयिष्यति'** [वि.पु.५.१.७८] इति वैष्णवे । **'स्वर्गास्पदादानयित्वा पारिजातं द्रुमेश्वरम्'** [वि.प.६७.३२] इति हरिवंशे । स्वातन्त्र्ये व्यत्ययः ॥ ३९ ॥ आनीय आनाय्य । **'इति दूतैः समानीय रामं चैव जनार्दनः'** [१०.६१.१४] इति भागवते । समस्तसात्वतां सन्निधाने । सत्वतस्य वंशे जाताः सात्वताः । त एव सात्वन्त उच्यन्ते परोक्षेण । **'ननु दानपते न्यस्तस्त्वय्यसौ शतधन्वना । स्यमन्तकमणिः श्रीमान् विदितः पूर्वमेव नः'** [१०.६१.४३] इति भागवते । तस्य हलायुधस्य, उग्रसेनस्य च, साम्बस्य मातुर्जाम्बवत्याश्च रत्नाकाङ्क्षाम् । यदनर्घं तद्राजनि परिणमतीति ममैवायं मणिरित्युग्रसेनस्य महतीमाशाम्– **'उग्रसेनस्य चैव'** इत्येवकारेणावधारयति । साम्बस्य मातुश्च सहाऽनीतत्वात् सहजा मणावाकाङ्क्षा ॥ ४१ ॥

**आस्तामक्रूरे मणिरन्यैरधार्य्यः सदा यज्ञाद् दानपतेः स धार्य्यः ।**
**न सत्या कृष्णावाञ्छितं किञ्चिदिच्छेत् तथाऽपि तस्या योग्य इत्याह कृष्णः ॥ ४२ ॥**

**लब्ध्वा रत्नं दानपतिः सदैव सन्दीक्षितोऽभूद् यज्ञकर्म्मण्यतन्द्रः ।**
**प्रदर्श्य कृष्णो हलिने रत्नमेतच्छक्रप्रस्थं पाण्डवस्नेहतोऽगात् ॥ ४३ ॥**

---

सदा यज्ञकारणात्, तल्लब्धपुण्यविशेषात् दानपतेरक्रूरस्यैव स धारणयोग्यः । अन्यैरधार्य इति । **'एतच्च सर्वकालं शुचिना ब्रह्मचर्यगुणवता ध्रियमाणमशेषराष्ट्रस्योपकारकम् । अशुचिना ध्रियमाणमाधारमेव हन्ति । अतोऽहमस्य षोडशस्त्रीसहस्रपरिग्रहादसमर्थो धारणे । कथं चैतत् सत्यभामा स्वीकरोतु? आर्येण बलभद्रेणापि मदिरापानाद्यशेषभोगपरित्यागः कथं कार्यः । तदयं यदुलोकोऽयं बलभद्रोऽहं सत्या च त्वां दानपते, प्रार्थयामः । एतद् भवानेव धारयितुं समर्थः'** [वि.पु.४.१३.६८–७०] इत्यादि वैष्णवे । यद्यपि षोडशस्त्रीसहस्रपरिग्रहादसमर्थ इति स्वयमपि लीलया लोकवार्तामनुसरति । कालव्यत्यासश्चायं शैलीभेदः । उत्तरकालभावित्वात् षोडशस्त्रीसहस्रपरिग्रहस्य । षोडशस्त्रीसहस्रस्य परिग्रहिष्यमाणत्वादिति हृदयम् । अब्रह्मचर्यं वाक्यार्थः । तदपि मन्दलोकदृष्ट्या । ननु मूलतः सत्राजितोऽयं मणिः । तेन च सत्यभामया सह कृष्णाय दत्ता । तस्मात् सैव मणिमर्हति । सत्यम्, सत्या मणिमर्हति । अथापि सा नाऽचकाङ्क्षेति न कृष्णस्तस्यै ददावित्याह– न सत्या । कृष्णेनावाञ्छितं सत्या न वाञ्छेदेव । तथाऽपि तत्पित्रा सत्राजिता विवाहकाल उपायनीकृत इति तस्या योग्योऽयं मणिरिति वस्तुतत्वं प्रकाश्य, तस्यै मणिमदत्वाऽक्रूरायैव ददौ । एतेन– **'दृष्ट्वा मणिं हलधरस्तदर्थं प्रोष्य चाऽगतः । योग्योऽहमिति मन्वानश्चकमे कुरुपुङ्गव । सत्यभामा पितृधनं मन्वाना स्वात्मनोचितम् । ग्रहीतुमैच्छद् विस्रब्धा हरेश्चित्तमजानती । जाम्बवत्यपि शुल्कार्थं पित्रा दत्तो ममेति ह । स्पृहां चक्रे मणौ तस्मिन् सर्वं विज्ञाय माधवः । अक्रूरस्य करे भूयो मणिं प्रत्यर्पयद् विभुः'** [१०.६१.४८–५१] इति भागवतवचनं गदिताभिप्रायम् । भगवन्नाटकानुगुणं भगवत्या नटनमेतत् यदात्मानं हरेश्चित्तमजानन्तीमिव, मणिं स्पृहयन्तीमिव दर्शयामासेति । अत एव स्वात्मन उचितमिति भिन्नं पदमिति मुखतो वचनम् । स्वात्मनः नोचितमिति समस्तं पदमिति हृदयम् । एवमजानतीत्येकं पदमिति मुखतो वचनम् । **'अ'** इति प्रतिषेधवचनं भिन्नं पदमिति हृदयम् । हरेश्चित्तं जानती मणिं नैच्छदित्यर्थः । सेयं पुराणस्यर्षेर्गुह्यभाषाचातुरी । ननु तथापि वैष्णवं कुप्यति । तथाहि तद्वचनम्–**'तमालोक्य ममायमच्युतेनैव सामान्यः समन्विच्छित इति बलभद्रः सस्पृहोऽभवत् । ममैवेदं पितृधनमित्यतीव च सत्यभामाऽपि स्पृहयाश्चकार । बलसत्याननावलोकनात् कृष्णोऽप्यात्मानं चक्रान्तरावस्थितमिव मेने'** [वि.पु.४.१३.६५–६] इति । न भोः, न कुप्यति विष्णुपुराणम् । आचार्येणास्यान्यथा व्याख्यानात् **'मातुश्च साम्बस्य'** [४१] इति । तथाच नात्र पुराणे सत्यभामापदेन सत्यभामोच्यते । किन्तु साम्बस्य माता जाम्बवतीति । सत्यस्य भगवत इयं भामा भार्येति । भातीति भामा सुन्दरीत्यर्थः । भातेर्मप्रत्यय इति कातन्त्रीयाः, मन्निति भोजः । अथ च पुराणे यत् कृष्णवचनम्–**'पितृधनं चैतत् सत्यभामाया नान्यस्य'** [६७] इति तत्र बाधकाभावाद् योगरूढिभ्यामुभे अपि गृह्येते सत्यभामा च रोहिणीनामा जाम्बवतीति च । इदमप्याचार्यवचनादेव स्फुटम्–**'तथाऽपि तस्या योग्य इत्याह कृष्णः'** [४२] इति ॥ ४२ ॥ 'सदा यज्ञात्' इत्युक्तेः पूर्वमपि सदैव दीक्षितः । सम्प्रति कृष्णवचनेन मणिलाभेन

**वसन्नजस्तत्र बहूंश्च मासान् सफल्गुनोऽयान्मृगयां कदाचित् ।**
**हत्वा मृगान् यमुनातीरसंस्थः[1] सोऽन्यां काळिन्दीं[2] ददृशे तत्स्वसारम् ॥ ४४ ॥**

**सा सूर्य्यपुत्री यमुनाऽनुजाता तपश्चरन्ती कृष्णपत्नीत्वकामा ।**
**पृष्टाऽर्ज्जुनेनाऽह समस्तमेतत् पत्नीं च तां जगृहे वासुदेवः ॥ ४५ ॥**

**ततो गत्वा नग्नजितो गृहं च स्वयम्बरे[3] सप्त वृषानगृह्णात् ।**
**सर्वैरग्राह्यानसुरान् वरेण शिवस्य यैर्न्निर्ज्जिता भूमिपालाः ॥ ४६ ॥**

**ततो नीलां तस्य सुतां च लेभे पूर्वं नीला गोपकन्याऽपि याऽऽसीत् ।**
**सा देहेऽस्याः प्राविशत् पूर्वमेषा यस्मादेका द्विविधा सम्प्रजाता ॥ ४७ ॥**

**पूर्वं गोपकन्या या नीला कुम्भकसुता सा तद्देहं परित्यज्य अस्याः नग्नजितः सुताया देहे प्राविशत् । एषा नीला पूर्वमेका द्विविधा द्विरूपा सम्प्रजाता यस्मात् ॥ ४७–८ ॥**

---

च श्रद्धातिशयो बभूवेति सन्दीक्षितः । पूर्वं कर्तव्यमिति दिदीक्षे । सम्प्रति सन्तुष्य दिदीक्षे । प्रदश्र्य सर्वजनसमक्षं दर्शयित्वा । **'स्यमन्तकं दर्शयित्वा ज्ञातिभ्यो रज आत्मनः । मार्जयामास लोकेश अभिभाष्य हलायुधम्'** [१०.६१.४७] इति च ॥ ४३ ॥ यमुनैव काळिन्दीति बहवो बभ्रमुः । अत आह–यमुनातोऽन्यां काळिन्दीम् । तर्हि का सा? तत्स्वसारम् । कळिन्दगिरेर्जातेति काळिन्दी । कडि भेदने । कडिं मनोभेदं कलहं वा द्यतीति कळिन्दः । मनःप्रसादनो गिरिरित्यर्थः । कलयतेः किन्दन्प्रत्यये कलयतीति कलिन्द इति वैयाकरणाः । **'अलि-पुलि-कलिभ्यः किन्दन्'** [स.कं.२.२.१६८] इति हि भोजः । **'अहं देवस्य सवितुर्दुहिता पतिमिच्छती । विष्णुं वरेण्यं वरदं तपः परममास्थिता'** [१०.६२.२५] इति । **'काळिन्दीति समाख्याता वसामि यमुनाजले । निर्मिते भवने पित्रा यावदच्युतदर्शनम्'** [२७] इति च ॥४४॥ तां च पत्नीं जगृहे । चतुर्थोऽयं भगवतः परिग्रहः ॥ ४५ ॥ जयति कामिनीकदम्बं यदि भवति नग्न इति नग्नजित् । अथच नगेनं गिरीशम्, नग्नं वा दिगम्बरं शिवमाराध्य जिगायेति नग्नजित् । कोसलभवो राजा गान्धारविषयं शशास । यथा पुरा कोसलभवो भरतो गान्धारान् जित्वा राज्यं स्थापयामास । अयमपि तद्वंशीयः सम्भाव्यते । तेन नीलां क्वचिद् गान्धारीमाहुः, कौसल्यां च । सर्वैरग्राह्यान् । तथाहि त्र्यक्षस्य वरः– तवेमे सप्तोक्षाणो विपक्षक्षपणदक्षाणामपि क्षत्रियाणामनिग्राह्या भूयासुरिति । अथचासुरत्वदशायां वृषाणामपि वरं ददौ शिवः–'भाविन्यपि भवे भवेत सर्वैरनिग्राह्याः' इति । विषाणकोटय्या निर्भिद्य निर्दयं निरायासं जिताः ॥ ४६ ॥ नीलाया एव सत्येति च नामान्तरम् । **'नग्नजिन्नाम कौसल्य आसीद् राजाऽतिधार्मिकः । तस्य सत्याऽभवत् कन्या राजन् नीलेतिचाह्वया'** [१०.६३.३६] इति च । **'सत्यां नाग्नजितीमपि'** [वि.प.६०.४१]

---

१. **'-संस्थान्'** इति क्वचित् । २. **'कालिन्दीम्'** ३. **'स्वयंवरे'**

पितृष्वसुर्म्मित्रविन्दा सुता च कृष्णे मालामासजद् राजमद्ध्ये ।
विन्दानुविन्दौ भ्रातरावेव तस्या न्यषेधतां धार्त्तराष्ट्रार्त्थमुग्रौ ॥ ४८ ॥

जित्वाऽऽवन्त्यौ तौ [1]नृपतींश्चैव सर्वानादाय तां प्रययौ वासुदेवः ।
पितृष्वसुस्तनयां च द्वितीयां भद्रां दत्तामग्रहीद् भ्रातृभिः सः ॥ ४९ ॥

विश्वेषां देवानामवतारा हि पञ्च ते कैकेया[2] भ्रातरोऽस्या हरेश्च ।
भक्ता नित्यं पाण्डवानां च तातोऽप्येषां वशे [3]शैब्यनामर्भुरग्रे ॥ ५० ॥

स्वयम्बरो[4] लक्षणायास्तथाऽऽसीद् यथा द्रौपद्या [5]लक्षवेधात्मकः सः ।
मद्रेषु तस्याश्च पिता पिनाकं [6]स्वयम्बरार्थं जगृहे गिरीशात् ॥ ५१ ॥

**द्वितीयां पितृष्वसुस्तनयाम् ॥ ४९ ॥ हरेश्च भक्ताः पाण्डवानां (च) भक्ताः । अग्रे पूर्वं ऋभुः कश्चिद् देवः अत्र शैब्यनामा । तातोऽपि कैकयानां तातोऽपि एषां कैकयानां वशे, तिष्ठतीति शेषः । अत एव सत्यपि ताते 'भ्रातृभिर्दत्ताम्' इत्युक्तम् ॥५०॥ मद्रेषु लक्षणायाः स्वयंवरः आसीत् । सः स्वयंवरः द्रौपद्याः स्वयंवरो यथा तथा लक्षवेधात्मकः ॥ ५१ ॥**

---

इति हरिवंशे । पूर्वमेका पश्चाद् द्विविधा कुम्भकसुता नीला, नाग्नजिती नीलेति कृष्णसङ्गमप्रकर्षाय जाता ॥ ४७ ॥ पितृष्वसू राजाधिदेव्याः जयत्सेनजायायाः । सौहृदेन मित्राणि विन्दतीति मित्रविन्दा । राज्याधिकारं ज्येष्ठतया विन्दतीति विन्दः । तमनुजातोऽनुविन्दः । भ्रातरावेव सन्तौ भ्रतृव्याविवावर्तेतामित्येवकारेण विस्मयते । धार्तराष्ट्राय दातुमुद्यतौ । **'विन्दानुविन्दावावन्त्यौ दुर्योधनवशानुगौ । स्वयंवरे स्वभगिनीं कृष्णकामां न्यषेधताम्'** [१०.६१.३४] इति च ॥४८॥ पितृष्वसुः श्रुतकीर्तेश्च तनयां भद्राम् । भ्रातृभिः पञ्चभिः केकयराजस्य शैब्यस्य तनयैः सन्तर्जनादिभिः ॥ ४९ ॥ हरेश्च भक्ताः, पाण्डवानां च भक्ताः । अथच, पाण्डवानां भक्ताश्च भ्रातरश्च । तातोऽप्येषां वशे अनुकूल इत्यर्थः । सोऽपि हि हरेर्भक्तः पाण्डवानां च । यः अग्रे पूर्वं ऋभुर्विभ्वा वाज इति त्रिषु अयमेकः ऋभुनामा । सम्प्रति च शैब्यनामा केकयानां राजा । यो गीतायामुदलिख्यत– **'शैब्यश्च नरपुङ्गवः'** इति । **'शैब्यस्य च सुतां तन्वीं रूपेणाप्सरसोपमाम्'** [वि.प.६०.४३] इति हरिवंशे । अतः क्वचिद् भद्रां शैब्यामाहुः । केकयराजतनयेति कैकेयीम् ॥ ५० ॥ केकयसमीपे मद्रदेशः । मदि हर्षे ।

---

१. **'–वन्त्यौ नृप–'** २ **'कैकया–'** । वे.ती.पाठोऽपि तथेति भाति । **'केकया–'** इति क्वचित् ।
३. **'तातो ह्येषां वशे शैब्य-'** । **'तातोऽप्येषां वशे शैब्य–'** इति वे.ती. पाठ इति भाति ।
४. **'स्वयंवरो–'** ५. **'लक्ष्यवेधा–'** ६. **'स्वयंवरार्थम्'**

लक्षं[1] च तत् सर्वतश्छन्नमेव [2]द्वारं शरस्याप्युपरि स्म लक्षात् ।
छिन्नेषुणा पातनीयं च तद्धि द्रौपद्यर्थात् तदशक्यं ततोऽलम् ॥ ५२ ॥

तत्राऽजग्मुर्म्मागधाद्याश्च सर्वे पार्त्था अपि द्रष्टुमिहाभ्युपाययुः ।
दुर्य्योधनाद्याश्च ससूतपुत्रा सज्यीकर्त्तुं[3] धनुरप्युत्सहन्ते ॥ ५३ ॥

केचिन्निपेतुर्द्धनुषैव ताडिता न वै केचिच्चालयितुं च शेकुः ।
दुर्य्योधनो मागधः सूतपुत्रः सज्यं कृत्वा लक्षवीक्षां[4] न शेकुः ॥ ५४ ॥

**तत् तस्मात्, लक्षस्य सर्वतश्छन्नत्वादेव कारणात्, द्रौपद्यर्थात् ततः लक्षपातनसकाशात् (अलं) अशक्यं दुष्करं हि ॥ ५२ ॥ तत्र मागधाद्याः दुर्योधनाद्याश्च आजग्मुः । सर्वे धनुः सज्यीकर्तुमुत्सहन्ते प्रयत्नमकुर्वन् ॥ ५३–५ ॥**

---

माद्यतीति मद्रो जनपदः क्षत्रियो वा । मदेन रमते वा । मदं राति वा । मद्राणां राजा लक्षणायाः पिता बृहत्सेनः । अतो लक्षणां माद्रीमाचक्षते । लक्षणाया एव नामान्तरं चारुहासिनीति । **'सात्राजितीं सत्यभामां लक्षणां चारुहासिनीम्'** [वि.प.६०.४२] इति हरिवंशे । **'भगवतोऽप्यत्र मर्त्यलोकेऽवतीर्णस्य षोडशसहस्राण्यष्टोत्तरशताधिकानि स्त्रीणामभवन् । तासां च रुग्मिणीसत्यभामाजाम्बवतीचारुहासिनीप्रमुखा अष्टौ पत्न्यः प्रधानाः'** [४.१५.१९] इति विष्णुपुराणे । द्रौपद्याः स्वयम्बरो यथा ॥ ५१ ॥ अथापि महद् वैलक्षण्यं चाऽसीदित्याह– लक्षं च तदित्यादि । **'यथा मम मतं साध्वि पिता दुहितृवत्सलः । बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् । यथा स्वयम्बरे राज्ञि मत्स्यः पार्थेच्छया कृतः । अयं तु बहिराच्छन्नो दृश्यते स जले परम्'** [१०.७१.१८–९] इति लक्षणावचनं भागवते । द्रौपद्यर्थाल्लक्षादप्यलमशक्यवेधम् ॥ ५२ ॥ पार्था अप्याययुः । न धनुः सज्यीकर्तुम् । किन्तु स्वैरभिलषितं कृष्णेन करिष्यमाणं लक्षवेधं ततो लक्षणास्वयम्बरं च उपद्रष्टुमाययुः । समीपे दर्शनमिहोपदर्शनं नाम । साक्षीभूय दर्शनमित्येतत् ॥ ५३ ॥ केचिन्निपेतुः, निहताः पेतुः, नीचैः पेतुः, अवाङ्मुखाः पेतुः । **'आदाय व्यसृजन् केचित् सज्यीकर्तुमनीश्वराः । आ कोट्या ज्यां समाकृष्य पेतुरेकेऽमुना हताः'** [भाग.१०.७१.२२] इति च । दुर्योधनः पूर्वं द्रौपदीस्वयम्बरे यथाकथाच सा परिणेतव्यैवेति धृतचित्तः, स्वसामर्थ्ये स्वस्यैवाविश्वासात् कर्णं विश्वस्य प्रेषयामास मत्स्यभेदनाय । अत्र तु तादृशो भरो नाऽस । लभतां मा च लब्ध वा कन्येत्यनिश्चितमनसैव धनुः सज्यं कर्तुं स्वयमेव प्रथमं ययौ । ततः कर्णः । तदेतदाह–दुयोर्धनो मागधः सूतपुत्रः । जले मत्स्यावभासमीक्षित्वाऽपि, सर्वतो बहिराच्छन्नस्य मत्स्यस्यावस्थितिं विशिष्य स्फुटमवगन्तुं न शेकुः । उपरिगतं वेधस्थानं न विशिष्य निश्चेतुम् ॥ ५४ ॥

---

१. 'लक्ष्यम्' २. 'द्वारं च तस्याप्युपरि स्म लक्ष्यात्' ३. 'सज्यं कर्तुम्' ४. 'सज्जं कृत्वा लक्ष्यवीक्षाम्'

**धनञ्जयः स्वात्मबलं[१] प्रकाशयन् [२]सज्यं कृत्वा धनुरैक्षच्च लक्षम्[३] ।**
**नैवाऽददे बाणमनिच्छयैव तत्[४] प्राप्यां जानन् केशवेनैव तां च ॥ ५५ ॥**

**भीमश्चापं [५]लक्षमप्येतदत्र द्रष्टुं च नैवैच्छदरीन्द्रधारिणः ।**
**योग्ये कर्म्मण्यायतंश्चापराधी [६]स्यादित्यज्ञः पश्यमानो महात्मा ॥ ५६ ॥**

**कृष्णस्ततश्चाप[१]मधिज्यमाशु कृत्वाऽचिन्त्यश्छिन्नबाणेन लक्षम्[८] ।**
**अपातयद् दुन्दुभयश्च दिव्या नेदुः प्रसूनं ववृषुः सुराश्च ॥ ५७ ॥**

**भीमः चापं आरोपबुद्ध्या, लक्षं पातनबुद्ध्या द्रष्टुं च नैच्छत् । आयतन् प्रयत्नं कुर्वन् पुरु(षः) ॥५६–७॥**

---

स्वात्मनः बलं लक्षवेधे सामर्थ्यं प्रकाशयन् धनुः सज्यं चकार । लक्षं चैक्षत् । जले तदवभासं दृष्ट्वा तदवस्थितिं निर्दधार । तदपि परेषां स्वात्मबलप्रकाशनायेति परस्मैभाषा । अथ स्वात्मनः स्वमनसः परनारीवैमुख्यं नाम बलं प्रकाशयन् नाऽऽददे बाणम् । न त्वशक्त्या । अथ स्वात्मनः स्वस्वामिनः कृष्णस्य लोकोत्तरं बलं प्रचिकाशयिषन्, तां च लक्षणां माद्रीं केशवेनैव प्राप्यां जानन्, कृष्ण एव लीलया स्वबलं प्रकाश्य लक्षवेधं करोत्विति न बाणं सन्दधे । अनिच्छया स्वस्य भगवतश्च । तत् छिन्नं बाणम् । **'बाणकाण्डौ नपुंसके च'** इति हि स्मरन्ति । एतेन– **'मत्स्याभासं जले दृष्ट्वा ज्ञात्वा च तदवस्थितिम् । पार्थो यत्तोऽसृजद् बाणान् नाच्छिनत् पस्पृशे परम्'** [१०.७१.२४] इति भागवतवचनं च गदिताभिप्रायम् । यत्तोऽपि पार्थो बाणान् नासृजत्, नाच्छिनच्च लक्षम् । नाप्याददे । केवलं पस्पृशे । वस्तुतस्तु –**'पार्थो यत्तोऽसृजद् बाणान् नानिच्छन् पस्पृशे परम्'** इत्येवाऽचार्यसम्मतः प्राचीनः पाठः स्यादिति भाति ॥ ५५ ॥ **'भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम्'** [२३] इति भागवतवचनाशयं स्पष्टयति– भीमस्तु । अयं पुराणवचने निहितः पिहितोऽर्थः – दुर्योधनः कर्णो मागधाद्याश्च प्रयतमाना अपि तदवस्थितिं नाऽप्नुवन् । न व्यजानन्नित्येतत् । भीमस्तु अनिच्छया लक्षवेधार्थमप्रयतनादेव तदवस्थितिं प्रति, तज्ज्ञातुमित्येतत्, न धनुरविन्दत्, न धनुः समीपमापेति । अत एवाविदन्नित्यनुक्त्वा अविन्दन्नित्याह । सहोक्तिस्तु तामसजनमोहनाय सत्यगोपनाय चेत्यलं पुराणचिन्तया । अरीन्द्रधारिणः योग्ये । आयतन् परेषां प्रेरणया, परार्थं च यतमानोऽपि । ईषदपि यतमानः । अज्ञः अतितरामपराधी स्यादित्यज्ञः स्फुटं पश्यमानः । अपिच पश्यो जीवः । **'यदा पश्यः पश्यते–'** इति श्रुतेः । पश्ये जीवस्वरूपे अभिमानोऽस्येति च पश्यमानो जीवकलामानी । अत एव महानयमात्मसु ॥ ५६ ॥ कृष्ण इति । **'भगवान् धनुरादाय सज्यं कृत्वाऽथ लीलया । तस्मिन् सन्धाय विशिखं मत्स्यं वीक्ष्य सकृज्जले । छिन्नेषुणाऽपातयत् तं सूर्ये चाभिजिति स्थिते । दिवि दुन्दुभयो नेदुर्जयशब्दोऽपतद् भुवि । देवाश्च**

---

१. 'धनञ्जयस्त्वात्म–' २. 'सज्जं कृत्वा' ३. 'लक्ष्यम् ।' ४. '–मनिच्छयैव प्राप्याम्'
५. 'लक्ष्यम–' ६ 'स्यामित्यज्ञः' ७. 'कृष्णश्च तच्चाप-' ८. 'लक्ष्यम् ।'

**कृष्णे ब्रह्माद्यैः स्तूयमाने नरेन्द्रकन्या मालां केशवांसे निधाय ।**
**तस्थावुपास्याथ सर्वे नरेन्द्रा युद्धायागुः केशवं स्वात्तशस्त्राः[1] ॥ ५८ ॥**

**विद्राप्य[2] तान् मागधादीन् स कृष्णो भीमार्ज्जुनाभ्यां सहितः पुरीं स्वाम् ।**
**ययावेता अष्ट महामहिष्यः कृष्णस्य दिव्या लोकसुन्दर्य्य इष्टाः ॥ ५९ ॥**

**भैष्मी सत्या चैकतनुर्द्विधैव जाता भूमौ प्रकृतिर्म्मूलभूता ।**
**तयैवान्याः सर्वदाऽनुप्रविष्टास्तासां मद्ध्ये जाम्बवती प्रधाना ॥ ६० ॥**

**रामेण तुल्या जाम्बवती प्रियत्वे कृष्णस्यान्याः किञ्चिदूनाश्च तस्याः ।**
**यदाऽऽवेशो बहुलः स्याद् रमायास्तदा तासु प्रीयते केशवोऽलम् ॥ ६१ ॥**

**अस्य उप समीपे तस्थौ ॥ ५८ ॥ एताः रुग्मिण्याद्या अष्ट महामहिष्यः इत्युक्त्या रुग्मिणीसत्यभामयोरितरावत् स्वरूपभेदः, ताभिः साम्यं च प्रतीयते । ततस्तन्निवारयति– भैष्मी(ति) । मूलभूता सर्वस्य जननीत्वेन कारणभूता प्रकृतिः लक्ष्मीः । अन्या जाम्बवत्या(द्याः) । प्रधाना स्वभावतः ॥ ५९–६० ॥ एवं स्वरूप-मुक्त्वा तासां रमावेशनिमित्ततात्कालिकविशेषमाह– यदेति ॥ ६१–४ ॥**

---

**कुसुमासारान् मुमुचुर्हर्षविह्वलाः'** [१०.७१.२५–७] इति च ॥ ५७ ॥ तं मनसा उपास्य, अस्य उप समीपे तस्थौ । सु सम्यक्, यथा प्रत्यर्थिनः प्रतियोद्धुमवकाशो न भवेत् ॥ ५८ ॥ अथापि कृष्णस्ताननायासेन विजित्य द्रावयामास । रुग्मिणीसत्यभामे जाम्बवतीति तिस्रः पाण्डवोद्वाहात् पूर्वमुदूढाः, पश्चात् काळिन्दी नीला मित्रविन्दा भद्रा लक्षणा चेत्येता अष्टमहामहिष्यः । एतासां नामानि भारते पुनरेवं पठ्यन्ते–**'रुग्मिणी च पतिव्रता । सत्या जाम्बवती चोभे गान्धारी शिशुमाऽपि च । विशोका लक्षणा चापि सुमित्रा केतुमा तथा'** [स.प.५९.२] इति । अत्र रुग्मिणी सत्या जाम्बवती लक्षणा चेति चतस्रः प्रथिता एव । गान्धारी नीलेत्युक्तम् । सा शिशुत्वेऽपि कृष्णप्रियाऽऽसीदिति शिशुमेत्युच्यते । शिशुभाव एव कृष्णं मिमायेति । एवं मित्रविन्दाया एव सुमित्रेति नामान्तरम् । भद्रैव विशोका । केतुमा काळिन्दी । कथं काळिन्दी केतुमा? स्नानपानादिना भगवद्विषयं केतुं ज्ञानं माति निर्मातीति । सर्वास्वपि जन्मस्वनन्ययोग एव महिषीषु महत्त्वं नाम । वक्ष्यति हि–**'अनादितस्ताः केशवान्नान्यसंस्थाः'** [६२] इति ॥ ५९ ॥ अन्याः षट् सर्वदा मूलप्रकृत्या कृष्णप्रीत्यनुगुणं प्रविष्टाः । पञ्चभ्यः किञ्चिदाधिक्यात् प्रधाना ॥ ६० ॥ यदा रमाया आवेशो बहुलः स्यात् तासु षट्सु तदा केशवस्तासु अलमधिकं प्रीयते । कियदधिकम्? यदा आवेशो बहुलो जाम्बवत्यास्तदा कृष्णस्य प्रियत्वे बलरामेण तुल्या ।

---

१. '–वं ह्यात्तशस्त्राः' २. 'विद्राव्य तान्'

यदाऽऽवेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युः ।
अनादितस्ताः केशवान्नान्यसंस्था रेमे ताभिः केशवो द्वारवत्याम् ॥ ६२ ॥

एवं कृष्णे द्वारकामद्ध्यसंस्थे गिरिं भूपा रैवतकं समाययुः ।
दुर्य्योधनाद्याः पाण्डवाश्चैव सर्वे[१] नानादेश्या ये च भूपालसङ्घाः ॥ ६३ ॥

आत्मानं तान् द्रष्टुमभ्यागतान् स कृष्णो गिरौ रैवतके ददर्श ।
नमस्कृते सर्वनरेन्द्रमुख्यैः कृष्णे वैदर्भ्या सह दिव्यासनस्थे ॥ ६४ ॥

एत्याऽकाशान्नारदः कृष्णमाह सर्वोत्तमस्त्वं त्वादृशो नास्ति कश्चित् ।
इत्याश्चर्य्यो धन्य इत्येव शब्दद्वये तूक्ते वासुदेवस्तमाह ॥ ६५ ॥

दक्षिणाभिः साकमित्येव कृष्णं पप्रच्छुरेतत् किमिति स्म भूपाः ।
नारायणो मुनिमूचे वदेति शृणुध्वमित्याह स नारदोऽपि ॥ ६६ ॥

**आकाशान्नारदः कृष्णमेत्य सर्वोत्तमस्त्वादृशः कश्चिन्नास्तीत्येतमर्थमभिप्रेत्य त्वं धन्यः, त्वमाश्चर्य इत्याह । नारदेन धन्य आश्चर्य इति शब्दद्वय एवमुक्ते सत्येव वासुदेवस्तं दक्षिणाभिः साकमेवेत्याह । भूपाः धन्य आश्चर्य इति ऋषिणोक्तं, किम्? दक्षिणाभिः साकमिति भवतोक्तं किमिति कृष्णं पप्रच्छुः । स नारायणः**

---

पञ्चमकक्ष्यागतैर्गरुडशेषरुद्रैस्तुल्येति यावत् । तदन्याः पञ्च किञ्चिदूना इति । यत् यस्मादावेशो बहुलः तदा तस्मादेव अलं प्रीयत इति ॥ ६१ ॥ तत्र तासु यदाऽऽवेशो ह्रासमुपैति, केवलं स्वरूपत एवावतिष्ठन्ते तदा प्रद्युम्नतः अष्टमकक्ष्यागताभ्यामिन्द्रकामाभ्याम्, विंशतिगुणाधिकाः, सप्तमकक्ष्यागताभिः पार्वत्यादिभिर्द्विगुणाधिका इति ॥ ६२ ॥ विजिहीर्षूणां प्रियो रैवत इति रैवतकं तमाह । अत एव विहारार्थं कृष्णाह्वानेन सर्वे समेत्य आययुरिति विज्ञायते । कृष्णजयन्त्यां कृष्णमभिनन्दितुं वा । सर्वे च भूपालसङ्घाः ॥ ६३ ॥ आत्मानं द्रष्टुमभिलष्याऽगतान् । अथ चाऽमन्त्रिता आगता अभ्यागता उच्यन्ते । **‘तां श्रुत्वा माधवीं लक्ष्मीं सपुत्रं च जनार्दनम् । पुरीं द्वारावतीं चैव निविष्टां सागरान्तरे । दूतैस्तैः कृतसन्धानाः पृथिव्यां सर्वपार्थिवाः । द्रष्टुं श्रियं हृषीकेशमाजग्मुः कृष्णमन्दिरम् । दुर्योधनमुखाः सर्वे धृतराष्ट्रवशानुगाः । पाण्डवप्रमुखाश्चैव धृष्टद्युम्नादयो नृपाः’** [वि.प.११०.७–८] इति हरिवंशे ॥ ६४ ॥ **‘आश्चर्यः खलु देवानामेकस्त्वं पुरुषोत्तमः । धन्यश्चासि महाबाहो लोके नान्योऽस्ति कश्चन’** [२२] इति च । सर्वोत्तमत्वादाश्चर्यः । त्वादृशोऽन्यो नास्तीति धन्यस्त्वम् । इत्येवं

---

१. **‘–श्चैव तत्र नाना–’** इति क्वचित् ।

**कूर्म्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो नास्ति समस्तवेति[१] ।**
**ऊचे गङ्गामुत्तमां सा जलेशमुमामूचे पृथिवीनामिकां सः ॥ ६७ ॥**

**वदेति त्वदुक्तस्य (मदुक्तस्य) चार्थं वदेति मुनिमूचे । स नारदोऽपि मदुक्तस्य भगवदुक्तस्य चार्थं शृणुध्वमिति भूपान् आह ॥ ६५–६ ॥ तत्राऽदौ स्वोक्तशब्दद्वयार्थमाह– कूर्म इत्यादिना । मया विष्णुपद्यां दृष्टः, त्वमुत्तमः, तव समो नास्ति इत्यभिप्रायेण त्वं धन्यस्त्वमाश्चर्य इत्युक्तः कूर्मः, गङ्गामुत्तमाम्, उपलक्षणमेतत्, धन्यामाश्चर्याम्, ऊचे । मम सा जलेशं धन्यमाश्चर्यमूचे । स जलेशः, उमां धन्यामाश्चर्यामूचे । जलेशः पृथिवीं धन्यामाश्चर्यामूच इति ग्रन्थान्तरोक्तेरभिप्रायमाह– पृथिवीनामिकामिति ॥ ६७ ॥**

---

शब्दद्वये उक्ते तु, साकूतमुक्ते ॥ ६५ ॥ साकमित्येवं वासुदेवस्तमाह । **'एवमुक्तः स्मितं कृत्वा प्रत्युवाच मुनिं प्रभुः । आश्चर्यश्चैव धन्यश्च दक्षिणाभिः सहेत्यहम्'** [२३] इति च ॥ ६६ ॥ कूर्म इति पुष्कर उच्यत इति प्राचीनटीका । **'कूर्म इति बुधः । मातृशापात् कूर्मो जातः'** इत्यन्ये । पुष्कर इति स्वरसम् । निर्वचनं चानुगुणं भवति । तथाहि भोजः–**'ग्रीष्म-धर्म-कूर्म-सूर्म-सुह्म-जाल्मादयः'** [स.कं.२.२.२४७] इति । **'ग्रीष्मादयः शब्दा मक्प्रत्ययान्ता निपात्यन्ते । करोतेरुः दीर्घश्च'** इति दण्डनाथः । तथाच करोति कारयति वा कर्माणीति कूर्मः । पुष्करश्च कर्मदेवता । तेन सार्थकं च तस्य कूर्म-नाम । वरुणपुत्रो हि सः । पिता वरुणो मण्डूको भूत्वा माण्डूकैर्मन्त्रैर्विष्णुं तुष्टाव । पुत्रश्च कूर्मो भूत्वा भगवतः कूर्मरूपस्य महिमानमनुसन्दधे, विजहार च गङ्गायाः स्वमातुरुत्सङ्ग इति युक्ततरम् । गङ्गा विंश्यां कक्ष्यायां भवति । ततोऽवमाऽग्निजाया स्वाहा । ततो बुधः । ततोऽश्विनोर्भार्या उषाः । ततः पुष्करः कर्मप इति स कूर्मः स्वमातरं गङ्गामुत्तमामूचे । गङ्गा स्वभर्तारं त्रयोदशकक्ष्यागतं वरुणमुत्तममूचे । स चोमां सप्तमकक्ष्यागतामुत्तमामूचे । इन्द्रान्तान् सर्वान् देवान् दधती प्रथत इति उमा पृथिवी । न केवलं पृथिवी । यानि पृथिवीनामानि तानि सर्वाण्यप्युमानामानि । धारणाद् धरा च धरित्री च धरणी च धरिणी च । भक्तापराधं क्षमत इति क्षमा च । भूतिमतीति भूः । जगदाश्रयत्वात् क्षितिः । तथाहि हरिवंशे–**'सोऽहं सागरवाक्येन क्षितिं क्षितितळे स्थितः । कौतूहलसमाविष्टो ह्यब्रुवं जगतो गतिम् । धरित्रि देहिनां योने धन्या खल्वसि शोभने । आश्चर्यं चापि भूतेषु महत्या क्षमया युते । तेन खल्वसि भूतानां धरणी मनुजारणिः । क्षमा त्वत्तः प्रभूतं हि कर्म चाम्बरचारिणाम् । ततो भूः स्तुतिवाक्येन सा मयोक्तेन तेजिता । विहाय सहजं धैर्यं प्रत्यक्षा मामभाषत'** [४९–५३] इत्यादि । साऽपि पार्वती स्वाश्रयं पर्वतानुत्तमानाह । कान् पर्वतान्? शिवं शेषं गरुडं च । कथम्? परवानात् । परं ब्रह्म वान्ति वनन्ति वा पर्वताः । वा गतौ । वन सम्भक्तौ । **'सोऽहं धरणिवाक्येन पर्वतान् समुपस्थितः । धन्या भवन्तो दृश्यन्ते बह्वाश्चर्याश्च भूधराः । काञ्चनस्याग्ररत्नस्य धातूनां च विशेषतः'** [५५–७] इति च । भूतिमत्य इति भुवः पार्व-त्याद्याः । तासां धारकाः शिवाद्याः भूधराः । धातूनां जगद्धातॄणां तत्वदेवानां च धारकाः । तेष्वप्यग्ररत्नस्य काञ्चनस्येन्द्रस्य च धारकः । एतेन न केवलं पर्वतस्येयं पुत्री पार्वती । किन्तु पर्वतस्येयं भार्या पार्वतीति च निर्वचनान्तरं सूचितम् । सामान्यतः

---

१. **'नास्त्यधिकस्तवेति'**

या मादृशा देवताः सर्वशस्ता धृतास्तया प्रथितत्वात् पृथिव्या ।
शिवं शेषं गरुडं चाऽह साऽपि [१]परवानात् पर्वतनामधेयान् ॥ ६८ ॥

तैरेवाहं मत्समाश्चैव देव्यो ध्रियन्त इत्येव त ऊचिरेऽथ ।
ब्रह्माणमेवोत्तममाह सोऽपि वेदात्मिकां प्रकृतिं विष्णुपत्नीम् ॥ ६९ ॥

**सा त्वत्तः कथ(मुत्तमे)त्यत आह– या इति । या मादृशा देवतास्ताः सर्वशः तया उमया धृताः । तस्मात् सा मत्त उत्तमेति भावः । उमायां पृथिवीशब्दप्रवृत्तिनिमित्तमाह– प्रथितत्वादिति । प्रसिद्धत्वात् पृथिव्या पृथिवीनाम्न्या तया इति सम्बन्धः । साऽपि, त्वं धन्येत्यादि मयोक्ताऽप्युमा, शिवं शेषं गरुडं च धन्यानाश्रर्यानाह । पृथिवी स्वाश्रयान् पर्वतान् धन्या(श्रर्या)नाहेति ग्रन्थान्तरवचनाभिप्रायं पर्वत-शब्दनिरुक्तिपूर्वकमाह– परावानादिति । परस्य भगवतः आ सम्यक् वानात् ज्ञानात् । वा गतिगन्धनयोरिति धातुः, ल्युडन्तः । गत्यर्थानां ज्ञानार्थत्वाद् वानं ज्ञानम् । परेषामन्येषामुमादिस्वावराणामा सम्यक् अवनात् रक्षणादिति वा । अव रक्षण इति धातुः । पर्वतशब्द(स्तु परशब्दोप)पदाभ्यां वा गतिगन्धनयोः अव रक्षणे इत्याभ्यां धातुभ्यां क्तप्रत्ययान्तः । वर्णागमो वर्णविपर्ययश्चेत्यनुशासनात् पर्वत इति रूपसिद्धेः ॥ ६८ ॥ शेषादयः कथं त्वत्त उत्तमा इत्यत आह– (तैरेवेति । अहं म)त्समा देव्यः वारुण्यादयश्च तैः शेषादिभिरेव**

---

शिवशेषगरुडानां त्रयाणामपि भार्याः पार्वत्यः । निर्वचनद्वययोगाद् विशिष्य भवान्येव पार्वत्युच्यते । विद्वद्रूढेश्च ॥ ६७–८ ॥ अहं पार्वती, मत्समाः पार्वतीपदयोग्याः देव्यः, वारुणीसुपर्ण्यौ वारुणीपदयोग्याः सुपर्णीपदयोग्याश्च देव्यः । अथ च इन्द्रा-

---

१. **'परावनात्'** । स एव वे.ती. सम्मतः पाठ इति प्रतीयते । यद्यपि **'आ सम्यग् वानाज्ज्ञानात्'** इति पूर्ववाक्यपर्यालोचनया **'परावानात्'** इत्येव टीकासम्मतः पाठः इति भाति । अथ **'परेषामा सम्यगवनात्'** इत्युत्तरवाक्यानुगुणः पाठस्तु **'परावनात्'** इति । तत् कतरः पाठष्टीकाभिमतः? एतन्निर्णयार्थं शुद्धष्टीकापाठोऽन्वेष्टव्यो भवति । एकतरः पाठष्टीकाभिमत इति तु निश्चप्रचम् । अन्यथा पक्षान्तरवाचि किमपि पदं प्रायोक्ष्यत् । यतरः स एकतरः स्यात्? प्रायोऽस्माभिरुपयुक्ते हस्तलिखित आदर्शे दृश्यमानः पाठ एव लिपिकृत्प्रमादव्याकीर्णः । जनार्दनभट्टीयं व्याख्यानं तावदेतमेव नः संशयं द्रढयति । भट्टोऽयं बहुलं वेदाङ्गतीर्थीयमेवाक्षरशश्चक्षुषी निमील्यानुसरतीति स्फुटं चक्षुष्मताम् । एतच्छ्लोकव्याख्यानेऽपि स केवलं वेदाङ्गतीर्थीयमनुलिलेख । तेन तद्व्याख्यानपाठावलोकनेन शक्यं निर्णेतुं वेदाङ्गतीर्थीयपाठोऽपि । तथाह्यत्र जनार्दनभट्टीयम्–**'पृथिवी स्वाश्रयान् पर्वतान् धन्याश्चर्थानाहेति ग्रन्थान्तरवचनाभिप्रायं पर्वतशब्दनिरुक्तिपूर्वकमाह– परावनादिति । परः परमात्मा । तस्य आ वनात् ज्ञानात् । वा गतिगन्धनयोरिति धातुर्ल्युडन्तः । गत्यर्थानां ज्ञानार्थत्वात् वनं ज्ञानम् । परेषामन्येषामुमादिस्वावराणामा सम्यगवनाद् रक्षणादिति वा'** इति । अहो अक्षरशः प्राचीनटीकामनुलिखताऽपि भट्टेन महदुपाकारि, यत् प्राचीनपाठनिर्णयाय सहाकारि । तथाच **'परावनात्'** इत्येव प्राचीनटीकापाठ इत्यायातम् । अथापि न निस्तारः । वाधातोर्ल्युटि वानमित्येव रूपम् । न वनमिति । तेन जनार्दन-भट्टीयमप्यसङ्गतं न कस्यापि निर्धारस्येष्टे । तेन वेदाङ्गतीर्थीय एवमुपरिष्टादपि **'आ सम्यगवनाद् रक्षणात्'** इति टीकावाक्यं पठ्यते । भट्टेनापि तथैवानुलिखितम् । वस्तुतस्तु–**'परेषामवनाद् रक्षणात्'** इत्येव पर्याप्तम् । नात्राऽङः प्रश्लेषे किमपि प्रयोजनं पश्यामः । प्रायोऽयमपि लिपिकृत्प्रमादः । तेन **'परावनात्'** इति **'परावानात्'** इति वा वे.ती.सम्मतः पाठः स्यात् । ये प्रथमं व्याख्यानं **'परावानात्'** इति **'परवानात्'** इति वा पाठमाश्रित्य प्रवृत्तम् । **'परावनात्'** इति पाठमाश्रित्य द्वितीयं व्याख्यानमिति ।

**सैका देवी बहुरूपा बभाषे युक्ता यदाऽहं ज्ञेन नारायणेन ।**
**यज्ञक्रियामानिनी यज्ञनाम्नी तदोत्तमा तत्प्रवेशात् तदाख्या ॥ ७० ॥**

**विष्ण्वाविष्टा यज्ञनाम्नी तदङ्कस्थिता सोचे केशवो ह्युत्तमोऽलम् ।**
**न तत्समश्चाधिकोऽतः कुतः[१] स्याद्दषे सत्यं नान्यथेति स्म भूयः[२] ॥ ७१ ॥**

**ध्रियन्त इत्येव हेतोः । मत्त उत्तमाः । अथ तानपि प्राप्य यूयं धन्या इत्यादि मदुक्ताः (ते) शेषादयः ब्रह्माणमेवोत्तमं धन्यमाश्चर्यं चोचिरे । (सोऽ)पि वेदात्मिकां वेदाभिमानिनीम्, अत एव वेदनाम्नीं विष्णुपत्नीं प्रकृतिं धन्यामाश्चर्यामूचे । वेदात्मिकामित्यनेन ब्रह्मा वेदानाहेत्यस्य गतिरुक्ता भवति ॥ ६९ ॥ त्वं धन्येत्यादि मयोक्ता देवी एका स्वरूपत एका बहुरूपा बहुवेदाभिमानित्वात् बहुरूपा सती । अनेन वेदा उचुरिति बहुवचनाभिप्राय उक्तः । अत एवमुत्तरत्राप्यभिप्रायोऽवगन्तव्यः ॥ ७०–१ ॥**

---

दुत्तमत्वे शिवादवरत्वे च मत्समा इति विष्णोः षण्महिष्यो जाम्बवत्याद्याश्च । तैरेवेत्येवकारेण शिवादधमैर्धारणं निराचकार । मत्समा एव तैरेव ध्रियन्ते । मत्तोऽवरा इन्द्रादिभिरपि । इत्येवमाह । अथ यूयमुत्तमा इत्युक्तास्ते शिवशेषगरुडाः ब्रह्माणमेव स्वेभ्योऽप्युत्तममूचिरे । सोऽपि विष्णुपत्नीमुत्तमामाह । सा वेदात्मिका बहुरूपा, अत एव वेदा इत्युक्ता, वेदेभ्यो यज्ञमुत्तमं बभाषे । कोऽभिप्रायः? आह–यज्ञमानित्वाद् यज्ञनाम्नी, ज्ञं नारायणं यातीति, ज्ञेन नारायणेन वा सहयोगं यातीति च यज्ञनाम्नी स्वयमेव केवलवेदमानिन्याः स्वतो नारायणसन्निधानविशेषपात्रत्वादुत्तमा । यथा जाम्बवती रमासन्निधानविशेषे सति स्वत एवोत्तमा बलरामसमाना भवति । यथा वा वेदमानिनी भारती प्राणयोगवियोगाभ्यां स्वापेक्षया स्वयमेवोत्तमा भवति । यज्ञमानिन्या रमाया अपि केशव उत्तम इति स यज्ञादुत्तम उच्यते ॥ ६९–७० ॥ यज्ञनाम्नी तदङ्कस्थितेति । ननु भागवततात्पर्येऽन्यथोच्यते–**'यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता'** इति । तदिदानीं सन्दिह्यते–किमङ्कं श्रिता यज्ञनाम्नी, उत वक्षसि लक्षणभूता? मा सन्देहि । सन्धेहि चित्तं श्लोकार्थे । सत्त्वमानिन्याः श्रिय एव हि रूपद्वयम्–श्रीरिति, लक्ष्मीरिति । सैव च यज्ञमानिनी । तेन यज्ञमानिन्या अपि रूपद्वयम्– अङ्कस्थमेकम्, वक्षःस्थं चैकमिति । यज्ञोऽपि द्विविधो भवति– काम्योऽकाम्यश्चेति । काम्ययज्ञमानिन्यङ्कस्था । अकाम्ययज्ञमानिन्युरःस्थेति । अतोऽकाम्यमेव कर्म भगवतो हृदयङ्गमम् । सन्निधानवैशेष्याच्च सुखवैशेष्यम्–**'वेदाभिमानिनी साक्षात् सा विष्णोर्दूरवत् स्थिता । यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता । हरिणा रतियोगस्था दक्षिणाख्याऽपि सैव तु । उत्तरोत्तरतः साऽपि विशिष्टा दक्षिणा सुखे'** [भा.ता.११.१६.१२] इति स्मरणात् । **'आश्चर्यशब्दो नास्मासु धन्यशब्दोऽपि वा मुने । आश्चर्यं परमं विष्णुः स ह्यस्माकं परा गतिः'** [७९] इति च ॥ ७१ ॥

---

१. **'–श्चाभ्यधिकः कुतः'** । मूलादर्शे–**'न तत्समः चाधिकोऽतः'** इति पठ्यते । प्रतिपादं तुरीयाक्षरे विश्लेषकरणे मृग्यं भवति कारणम् ।
२. **'भूपाः ।'** इति क्वचित् ।

तयोक्तोऽहं नावतारेषु कश्चिद् विशेष इत्येव यदुप्रवीरम् ।
सर्वोत्तमोऽसीत्यवदं स चाऽह न केवलं मेऽङ्गगायाः श्रियोऽहम् ॥ ७२ ॥

सदोत्तमः किन्तु यदा तु सा मे वामार्द्धरूपा दक्षिणानामधेया ।
यस्मात् तस्या दक्षिणतः स्थितोऽहं तस्मान्नाम्ना दक्षिणेत्येव सा स्यात् ॥ ७३ ॥

सा दक्षिणामानिनी देवता च सा च स्थिता बहुरूपा मदर्द्धा ।
वामार्द्धो मे तत्प्रविष्टो यतो हि ततोऽहं स्यामर्द्धनारायणाख्यः ॥ ७४ ॥

तदाऽप्यस्या उत्तमोऽहं सुपूर्ण्णो न मादृशः कश्चिदस्त्युत्तमो वा ।
इत्येवावादीद् दक्षिणाभिः सहेति सर्वोत्तमत्वं दक्षिणानां स्मरन्त्सः ॥ ७५ ॥

**एवं स्ववचनाभिप्रायमुक्त्वा दक्षिणाभिः साकमिति कृष्णवचनाभिप्रायमाह– स चेत्यादिना । सः कृष्णः इत्येव इत्यभिप्रायवानेव हि दक्षिणाभिः साकमित्याह । कोऽभिप्राय इत्यतो दक्षिणाभिः साकमिति वक्तुर-भिप्रायमाह– न केवलमित्यादिना । न केवलं मे अङ्गगायाः श्रियः यज्ञनाम्न्याः प्रकृतेः सदा उत्तमः । तर्हि कुतस्त्वमुत्तम इति पृच्छति– किन्त्विति । उत्तरमाह– यदेति । सा श्रीरेव यदा यस्मिन्नवसरे मे वामार्धरूपा वामार्धे प्रविष्टस्वरूपा तत एव दक्षिणानामधेया दक्षिणानाम्नी तदाऽपि अस्या एवं दक्षिणानाम्न्या अस्याः सकाशात् अहं उत्तमः धन्यः सुपूर्ण आश्चर्यः । दक्षिणानामधेयत्वे कारणमाह– यस्मादिति । इनः पतिः अहं तस्याः दक्षिणतः यस्मात् दक्षिणभागे स्थितः तस्मादेव (सा) नाम्ना दक्षिणेति स्यात् । प्रकारान्तरेणापि दक्षिणानामवत्त्वमाह– सेति । सा दक्षिणामानिनी देवता यज्ञादौ दीयमानाया दक्षिणाया अभिमानिदेवता च । तस्माच्च दक्षिणेत्यर्थः । दक्षिणाभिः साकमिति बहुवचनाभिप्रायमाह–सा चेति । मयि अर्धः यस्याः सा मदर्धा । मम अर्धः यस्यां सा मदर्धा इति वा । स्वार्द्धस्य तस्यां प्रविष्टत्वात् स्वस्यापि नामान्तर-माह–वामार्द्ध इति । मे वामार्द्धः तत्प्रविष्टः तस्यां प्रविष्टः यतस्ततो हि तत एव अहमर्द्धनारायणाख्यः । स कृष्णः दक्षिणानां च शश्वत् सर्वोत्तमत्वं सर्वस्माज्जगत उत्तमत्वं स्मरन् दक्षिणाभिः साकम् इत्यवादीत् ॥ ७२–५ ॥**

---

नावतारेषु कश्चिद् विशेष इति ज्ञापयितुमेव यदुप्रवीरमवदम्– 'सर्वोत्तमोऽसि' इति ॥ ७२ ॥ दक्षे स्थितः इनः यस्याः सा दक्षिणा ॥ ७३ ॥ ममार्धं यस्यां सा मदर्धा । बहुरूपतया दक्षिणामानिनीति दक्षिणा इति बहुवचनगोचरा । वामः समोऽर्धभागो वामार्धः ॥ ७४ ॥ सुपूर्णः । उत्तरकाष्ठाविरह एव सुष्ठुता पूर्णतायाम् । इत्येवमभिप्रायेण दक्षिणाभिः सहेत्यवादीत् । समस्ताज्जगतः दक्षिणाभिः सहाहमुत्तमः । दक्षिणा चाहं च सवोत्तमावित्यर्थः । तदेतदाह– सर्वोमत्तमत्वं दक्षिणानां स्मरन् स इति ॥७५॥

ताभिश्चैताभिर्दक्षिणाभिः समेताद् वरिष्ठोऽहं जगतः सर्वदैव ।
मत्सामर्थ्यान्नैव चानन्तभागो दक्षिणानां विद्यते नारदेति ॥ ७६ ॥

उक्तं कृष्णेनाप्रतिमेन भूपा अन्योत्तमत्वं दक्षिणानां च शश्वत् ।
सेयं भैष्मी दक्षिणा केशवोऽयं तस्याः श्रेष्ठः पश्यत राजसङ्घाः ॥ ७७ ॥

प्रत्यक्षं वो वीर्य्यमस्यापि कुन्त्या [1]युधेऽर्त्थितः केशवो वीर्य्यमस्यै ।
अदर्शयत् पाण्डवान् धार्त्तराष्ट्रान् भीष्मद्रोणद्रौणिकृपान् सकर्ण्णान् ।
निरायुधांश्चक्र एकः क्षणेन[2] लोकश्रेष्ठान् दैवतैरप्यजेयान् ॥ ७८ ॥

**दक्षिणाभिः (समेतात्) साकं स्थितात् जगतः । (स्वस्मात्) जगतः अप्राधान्यं च सिद्धमिति भावः । उक्तमर्थं विशदयन् स्वस्य सर्वोत्तमत्वमाह– ताभिरित्यादिना । स्वस्य दक्षिणोत्तमत्वमुपपादयति– मत्सामर्थ्यादिति । अनन्तभागः सामर्थ्यानन्तभागादेकभागः । दक्षिणाभिः साकमिति भगवद्वाक्यार्थमुक्त्वोपसंहरति–इतीति ॥ ७६ ॥ हे भूपाः, इति अभिप्रायेण अप्रतिमेन कृष्णेन 'दक्षिणाभिः साकम्' इत्युक्तम् । दक्षिणाभिः साकमिति वदतः कृष्णस्य दक्षिणानां च जगदुत्तमत्वमभिप्राय इत्याह– (अन्येति) । अन्योत्तमत्वं च, (शश्वत्) अन्यस्माज्जगत उत्तमत्वं (चा)भिप्रेतमिति । तस्याः केशवस्य श्रैष्ठ्यं वयं कथं स्फुटं जानीम इत्यत आह– सेति । सा दक्षिणा ॥ ७७ ॥ एवं श्रीकृष्णस्य सर्वोत्तमत्वमुक्त्वा प्रत्यक्षेणापि तत् साधयति– प्रत्यक्षमिति ॥ ७८ ॥**

---

अथ दक्षिणाभिः सहितात् सकलजगतोऽहमुत्तमः । ब्रह्मादिजीवजातान्न केवलम्, दक्षिणादेवतायाश्चाहं निरवधिकमुत्तम इत्यर्थः । तदेतदाह– ताभिश्चैताभिरिति । ताभिः सर्वोत्तमाभिरप्येताभिर्मम वामार्धरूपाभिरपि दक्षिणाभिः । मत्सामर्थ्यमपेक्ष्य । अनन्तधा विभक्तस्यैको भागः ॥ ७६ ॥ इत्युक्तं कृष्णेन । अप्रतिमेन सर्वोत्तमेन । अप्रतिमानं मानं यस्य तेन अप्रतिमेन सर्वज्ञेनेति चार्थः । अप्रतिरसदृशी मा वेदवाक् यत्र प्रमाणं सोऽप्यप्रतिमः । स्वस्मादन्येभ्यः सर्वेभ्य उत्तमत्वं च शश्वत् सर्वदा । भूपा इत्युक्त्वा पुना राजसङ्घा इत्याह । तेनेदमाह–न केवलं भुवः पालनाद् यूयं भूपाः । किन्तु भुवा सर्वाश्रयेण हरिणा, भूमानिन्या लक्ष्म्या च पालिता इति ॥ ७७ ॥ न केवलं मद्वचनेन सिद्धम् । किन्त्वस्य वीर्यं वः प्रत्यक्षमपि । अक्षिभ्यां प्रतीतम्, साक्षाद् दर्शनसिद्धमित्यर्थः । कथम्? यतः कुन्त्याऽर्थितः केशवः स्ववीर्यमस्यै कुन्त्यै, तदर्थं युष्माकं च, प्रत्यक्षमदर्शयत् । वीरलोके श्रेष्ठान् कांश्चित् । ज्ञाने बले च श्रेष्ठान् कांश्चित् । इन्द्रादिभिरप्यजेयान् कांश्चित् । **'अथ गाण्डीवधन्वानं क्रीडार्थं मधुसूदनः । जिगाय भरतश्रेष्ठ कुन्त्याश्च प्रमुखे विभुः । द्रौणिं कृपं च कर्णं च भीमसेनं सुयोधनम्'** [स.प.६१.१४–५] इति भारते ॥ ७८ ॥

---

१. 'युद्धेऽर्थितः' २. 'एकक्षणेन'

व्रतं भीमस्यास्ति नैवाभि कृष्णमियामिति स्माऽज्ञया तस्य विष्णोः ।
चक्रं रथस्याग्रहीत् सः प्रणम्य[1] कृष्णं स तं केशवोऽपाहरच्च ॥ ७९ ॥

एवं क्रीडन्तोऽप्यात्मशक्त्या प्रयत्नं कुर्वन्तस्ते विजिताः केशवेन ।
ततः सर्वे नेमुरस्मै पृथा च सविस्मया वासुदेवं ननाम ॥ ८० ॥

एवंविधान्यद्भुतानीह कृष्णे दृष्टानि वः शतसाहस्रशश्च ।
तस्मादेष ह्यद्भुतोऽत्युत्तमश्चेत्युक्ता नेमुस्तेऽखिला वासुदेवम् ॥ ८१ ॥

वाय्वाज्ञया वायुशिष्यः स सत्यमित्याद्युक्त्वा नारदो रुग्मिणीं[2] च ।
स्तुत्वा पुष्पं पारिजातस्य दत्वा ययौ लोकं क्षिप्रमब्जोद्भवस्य ॥ ८२ ॥

साक्षात् सत्या [3]रुग्मिणीत्येकसंविद् द्विधाभूता नात्र भेदोऽस्ति कश्चित् ।
तथाऽपि सा प्रमदानां स्वभावप्रकाशनार्थं[4] कुपितेवाऽस सत्या ॥ ८३ ॥

**अपाहरत् पश्चादनयत् ॥ ७९–८० ॥ एष हि एष एव अद्भुतः आश्चर्यः, अत्युत्तमः धन्यः ॥ ८१ ॥ सत्यं यथार्थम् । 'कूर्मो दृष्टः' इत्यादि ॥ ८२ ॥ साक्षादेकसंवित् (एकैव संविद्रूपा) ॥ ८३ ॥**

---

कृष्णमभियोद्धुम् । अथापि विष्णुस्वरूपस्य तस्य कृष्णस्याऽज्ञया तस्य रथस्य चक्रमग्रहीत् स भीमः । तदपि कायेन वाचा मनसा च कृष्णं नत्वा । स च केशवस्तमपाहरत् अपक्रान्तमकरोच्च । अत एव हरिवंशे न भीमसेनः सहपठितः–**'तथा गाण्डीवधन्वानं क्रीडन्तं मधुसूदनः । जिगाय भरतश्रेष्ठं कुन्त्याः प्रमुखतो विभुः । द्रोणं द्रौणिं कृपं कर्णं भीष्मं चैव सुयोधनम् । चक्रानुयाने प्रस्रवणे जिगाय पुरुषोत्तमः'** [वि.प.१०२.१७–८] इति ॥ ७९ ॥ वसुदेवतनयमसुदेवस्यापि ज्ञानदं परवासुदेवं ज्ञात्वा ॥ ८० ॥ शतसाहस्रश इत्यसङ्ख्यवचनम् । कैश्चित् शतानि, कैश्चित् सहस्राणि, कैश्चित् शत-सहस्राणीत्यादि ॥ ८१ ॥ कृष्णं रुग्मिणीं च स्तुत्वा । पुष्पं दत्वा । **'वसतस्तस्य कृष्णस्य सदारस्यामितौजसः । सहाऽसीनस्य रुग्मिण्या नारदोऽभ्याययौ मुनिः । आगतं चाप्रमेयात्मा मुनिमिन्द्रानुजस्तदा । शास्त्रदृष्टेन विधिना ह्यर्चयामास केशवः । सोऽर्चितो वासुदेवेन मुनिरर्च्यतमः सताम् । पारिजाततरोः पुष्पं ददौ कृष्णाय भारत । तद् वृक्षराजकुसुमं रुग्मिण्याः प्रददौ हरिः'** [वि.प.६५.१२–५] इति च ॥ ८२ ॥ एका च सा संविच्च । अत्यन्ताभिन्ना ज्ञानरूपा च । एका

---

१. **'स प्रणम्य'** । **'सम्प्रणम्य'** इति क्वचित् ।
२. **'रुक्मिणीम्'**
३. **'रुक्मिणी–'**
४. **'–प्रदर्शनार्थम्'** इति क्वचित् ।

**साकं रुग्मिण्या[१] राजमद्ध्ये प्रवेशात् स्तवाद्दषेः पुष्पदानाच्च देवीम् ।**
**कोपाननं दर्शयन्तीमुवाच [२]विडम्बार्त्थं कामिजनस्य कृष्णः ॥ ८४ ॥**

**दातास्म्यहं पारिजातं तरुं त इत्येव तत्राथाऽगमद् वासवोऽपि ।**
**सर्वैर्द्देवैर्भौमजितोऽप्यदित्यास्तेनैवाथो कुण्डलाभ्यां हृताभ्याम् ॥ ८५ ॥**

**तदै[३]वाऽगुर्म्मुनयस्तेन तुन्ना[४] बदर्यास्ते सर्व एवाऽशु[५] कृष्णम् ।**
**ययाचिरे भौमवधाय नत्वा स्तुत्वा स्तोत्रैर्वैदिकैस्तान्त्रिकैश्च ॥ ८६ ॥**

**कामिजनस्य स्त्रैणजनस्य । इत्येवं उवाच । भौमजितोऽपि इत्यपिशब्देनाऽगमने भौमजितत्वमेकं कारणमुक्तम् । कारणान्तरं चाऽह–(अथो इति ।) तत् किमित्यत (आह)–तेनैवेति । तेनैव भौमेनैव ॥ ८४–५ ॥ तेन नुन्नाः कृष्णं गच्छतेति प्रेरिताः ते सर्वे मुनयः । सेन्द्रा देवाश्च ॥ ८६–९ ॥**

---

संविद् यस्याः सा एकाभिप्राया च । परस्परं रूपद्वये, भगवता च । कुपितेवाऽस । **'ममृषे न सपत्न्यास्तु तत् सौभाग्य-गुणोदयम् । सत्यभामा प्रिया नित्यं विष्णोरतुलतेजसः'** [वि.प.६५.४९] इति वचनाशयोऽनेन विशदीकृतः ॥ ८३ ॥ ऋषेः ऋषिकृतात् रुग्मिणीस्तवात् । तस्यै कृष्णेन पुष्पदानाच्च । देवीं सत्यभामाम् । विडम्बार्थं लीलानुकारार्थम् । कामिनीजनस्य विडम्बार्थं कोपाननं दर्शयन्तीं स्वयमपि कामिजनस्य विडम्बार्थमुवाच । कोपयुक्तमाननं कोपाननम् । मुखेन हि कोपो व्यज्यते । कोपनिदर्शकमननं चेष्टाविशेषं च । **'विचूर्णयामास कुशेशयं सा निःश्वस्यनिःश्वस्य नखैर्नतभ्रूः'** [५५] इत्यादि च । **'तास्ताश्चेष्टाः प्रियायाश्च तथाऽन्या ददृशे हरिः'** [६६.११] इति च । **'तस्याः सुस्राव नेत्राभ्यां वारि प्रणयकोपजम् । कुशेशयपलाशाभ्यामवश्यायजलं यथा'** [६६.२४] इति च ॥ ८४ ॥ इत्येव इत्येवं उवाच । **'पारिजातक-पुष्पाणि यदीच्छस्यतिकोपने । तदा दातास्मि सुश्रोणि सत्यमेतद् ब्रवीमि ते । स्वर्गास्पदादानयित्वा पारिजातं द्रुमेश्वरम् । गृहे ते स्थापयिष्यामि यावत्कालं त्वमिच्छसि'** [वि.प.६७.३१–२] इति च । कथं पारिजातः? एतदप्युक्तं तत्रैव–**'परि जातो विष्णुपद्याः पारिजातेति शब्दितः'** [६७.७०] इति च । विष्णुपद्या उपरि तटे जात इत्यर्थः । तरुं नेतुं कृष्णो यं मनसा जगाम स वासवोऽपि । सर्वैर्देवैः सह भौमजितः, सर्वैरपि देवैः सहाऽगमत् । तत्र तस्मिन्नेवावसरे । तत्र द्वारकायामिति च । अथो देवविजयानन्तरम्, अथो एव जितत्वादेव तेन भौमेन अदित्याः कुण्डलाभ्यां च हृताभ्याम् ॥ ८५ ॥ तेन भौमेन तुन्नाः व्यथिताः । तुद व्यथने । पुरुषसूक्तादीनि वैदिकानि । त्रिवृत्स्तोमादीनि च । तान्त्रिकाणि पुराणेतिहासादिगतानि विष्णुसहस्रनामादीनि ॥ ८६ ॥

---

१. **'रुक्मिण्या'** २. **'विडम्बनार्त्थम्'** ३. **'तत्रैवा–'** इति क्वचित् ।
४. **'–स्तेन नुन्नाः'** । वे.ती. पाठोऽपि तथेति भाति । ५. **'एत्याऽशु'**

**इन्द्रेण देवैः सहितेन याचितो विप्रैश्च सस्मार विहङ्गराजम् ।**
**आगम्य नत्वा पुरतः स्थितं तमारुह्य सत्यासहितो ययौ हरिः ॥ ८७ ॥**

**नित्यैव या प्रकृतिः स्वेच्छयैव जगच्छिक्षार्थं द्वादशीं भीमसञ्ज्ञाम् ।**
**उपोष्य बभ्रे कोटिधाराजलस्य विष्णोः प्रीत्यर्थं सैव हि सत्यभामा ॥ ८८ ॥**

---

प्राग्ज्योतिषं ययौ हरिः ॥ ८७ ॥ नित्या भगवतो नियतभार्या । प्रकृती रजोमानिनी भूः । द्वादशीं भीमसञ्ज्ञाम् । भीमेन जाता सञ्ज्ञा यस्याः, भीमद्वादशीति । भीमा चेयं द्वादशी । यस्याः पातकानि बिभ्यति । भीत्वा च व्रतिनं जनं हित्वा दूरं द्रवन्ति । भीमप्रिया च द्वादशी । भीमेनानुष्ठिता प्रवर्तिता च । **'माघशुक्ले तु द्वादश्यां भीमद्वादशिकव्रती । नमो नारायणायेति व्रजेद् विष्णुं स सर्वभाक्'** [अ.पु.१८८.३] इत्याग्नेये । पाद्मे च–**'भविता स तदा ब्रह्मन् कर्ता चैव वृकोदरः । प्रवर्तकोऽस्य धर्मस्य पाण्डुसूनुर्महाबलः'** [सृ.खं.२३.१४], **'तस्मात् त्वं सत्वमालम्ब्य भीमसेन विमत्सरः । कुरु व्रतमिदं सम्यक् स्नेहाद् गुह्यं मयोदितम् । त्वया कृतमिदं वीर त्वन्नाम्ना च भविष्यति । सा भीमद्वादशी ह्येषा सर्वपापहरा शुभा । या तु कल्याणिनी नाम पूर्वकल्पेषु पठ्यते'** [२३.६२–४] इति । मात्स्ये चैत एव श्लोकाः पठ्यन्ते [म.पु.६९.१३;५६–७] । भीमपदपूर्वा द्वादशी वा । **'ततस्त्वग्रामिमां भीमतिथिं पापप्रणाशिनीम् । उपोष्य विधिनाऽनेन गच्छ विष्णोः परं पदम्'** [२३.२१] इति च । द्वादशीपदेनैकादशी चोपलक्ष्यते । द्वादशीमुपोष्य । द्वादशीव्रताङ्गत्वेनैकादशीमुपोष्येत्यर्थः । कोटिधाराजलस्य बभ्रे । द्वितीयार्थे षष्ठी । जलं बभ्रे । जलस्य कोटिधारा बभ्र इति वा । पाद्मे त्वन्यादृशं व्रतं पठ्यते–**'मध्ये च कलशं तत्र माषमात्रेण संयुतम् । छिद्रेण जलसम्पूर्णामधःकृष्णाजिने स्थितः । तस्य धारां च शिरसा धारयेत् सकलां निशाम् । धाराभिर्भूरिभिर्भूरि फलं वेदविदो विदुः'** [२३.३९–४०] इति च । मात्स्ये चैवमेव [६९.३७–८] । इदमत्रावधेयम्– भिन्ने एते व्रते, भीमद्वादशीव्रतं कोटिधाराजलव्रतमिति । पाद्ममात्स्ययोरुक्तं भीमद्वादशीव्रतम् । सत्यभामया भीमद्वादशीदिनेऽनुष्ठितं कोटिधाराजलव्रतमत्रोक्तम् । भीमद्वादशीव्रते केवलं कलशच्छिद्रनिर्गता निरन्तरा जलधारा भवति । न कोटिधारा । यद्यत्र भीमद्वादशीव्रतं विवक्षितम्, तर्हि भगवत्पादो धाराजलस्येत्येवावक्ष्यत् । न कोटिधाराजलस्येति । उक्तं च कोटिधाराजलव्रतविधानं हरिवंशे–**'स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती । उपवासार्थमथ वा व्रतकार्यं धृतव्रते । श्वशुराभ्यां च चरणौ सततं सत्तमस्य च । गृहीत्वौदुम्बरं पात्रं सकुशं साक्षतं तथा । गोशृङ्गं दक्षिणं सिच्य प्रतिगृह्णीत तज्जलम् । ततो भर्तुः सती दद्यात् स्नातस्य प्रयतस्य च । आत्मनोऽपि निषेक्तव्यं ततः शिरसि तज्जलम् । त्रैलोक्ये सर्वतीर्थेषु स्नानमेतदुदाहृतम्'** [वि.प.७८.१९–२२] इति । गोर्दक्षिणशृङ्गस्य कोट्या यद् धाराजलं तेन शिरस्यभिषेचनं कोटिधाराजलव्रतमित्यर्थः । सङ्गच्छते चेदमाचार्यवचनेन । तथाच द्वादशीमित्येकादशीम् । एकादश्यां दशमीवेधे द्वादश्येवोपोष्येति द्वादशीमित्युक्तम् । एकादश्यां नक्तमेव कोटिधाराजलव्रतम् । तदिदं भीमद्वादश्यामेवाऽचरणीयमिति न नियमः । तथाहि हरिवंशवचनम्–**'उपवासेषु कर्तव्यमेतद्धि व्रतकेषु च । स्नानमेतद्धि सामान्यं स्त्रीणां पुंसां च भामिनि'** [वि.प.७९.२३] इति । अथापि सत्यभामा भीमेऽनुग्रहविशेषमाधातुं भीमद्वादश्यामाचचार । अथच सत्यभामया भीम-

**तया युक्तो गरुडस्कन्धसंस्थो दूरानुयातो वज्रभृताऽप्यनुज्ञाम् ।**
**दत्वाऽमुष्मै प्रययौ वायुजुष्टामाशां कृष्णो भौमवधे धृतात्मा ॥ ८९ ॥**

**भौमो ह्यासीद् ब्रह्मवरादवद्ध्यो न शस्त्रभृज्जीयस इत्यमुष्मै ।**
**दत्तो वरो ब्रह्मणा तद्वदेव तस्यामात्यानां तद्वदवद्ध्यता च ॥ ९० ॥**

**तस्यामात्यानां तद्वदेव भौमवदेव अजेयता, तद्वत् भौमवत् अवध्यता च ब्रह्मणा दत्ता ॥ ९० ॥**

---

द्वादश्यामेव चीर्णत्वात् स्यादपि विधान्तरं तदपि भीमद्वादशीव्रतस्य । भीमोऽपि न प्रायश्चित्तार्थमिदं चकार । किन्तु विष्णुप्रीत्यर्थं विष्णुप्रेरणया चकारेति सूचयितुं स्वयमपि तथा चकारेत्याह– विष्णोः प्रीत्यर्थमिति । पुराणेषु प्रायश्चित्तता-वचनं त्वर्थवाद इत्यर्थः । नन्विदं काम्यं कर्म । व्रतचारिणी च स्त्री देवमेवं प्रार्थयते–**'सपत्नीनामधि नित्यं भवेयं सपुत्रा स्यां सुभगा चारुरूपा । सम्पन्नहस्ता गुणवादिनी च सर्वात्मना स्यां मा दरिद्रा भवेयम्'** [वि.प.७९.१२] । तत् किं सत्यभामाऽप्येवं सपत्नीदमनादिकामनया व्रतं चचार? नेत्याह– विष्णोः प्रीत्यर्थमिति । जगच्छिक्षार्थमिति । द्विविधं हि कर्म भवति । विष्णुप्रीतिः स्वप्रयोजनम् । न सपत्नीदमनादिकम् । जगच्छिक्षा च परप्रयोजनमिति । क्रियतामिति विष्णोराज्ञा-पालनेन विष्णुप्रीतिश्च स्वप्रयोजनम् । तदाह– स्वेच्छयैवेति । स्वतन्त्रस्य विष्णोरिच्छयैव । न कस्यापि स्वाच्छन्द्यं नाम । तदनुगुणया स्वस्येच्छया च । जगच्छिशिक्षयिषा च सहजा जगज्जनन्याः ॥ ८८ ॥ वज्रभृताऽपि दूरानुयातः । अमुष्मै वज्रभृते स्वलोकं गन्तुमनुज्ञां दत्वा । भौमो भूमितनयो नरकः । धृतात्मा निश्चितात्मा ॥ ८९ ॥ यथा न वध्यस इति वरो दत्तस्तद्वदेव न जीयस इत्यपि वरोऽपरो दत्तः । अमुष्मै भौमाय । एवं यद्वद् भौमस्य तद्वदेव तस्यामात्यानां च **'न जीयध्वे'** इति ब्रह्मणा वरो दत्तः । यथाऽजय्यत्वं दत्तं तद्वदवध्यता च दत्ता । यथा नरकस्य दत्ता तद्वदमात्यानां च दत्ता । एतेन **'नैरृतो नरको नाम ब्रह्मणो वरदर्पितः'** [वि.प.६३.३४] इति हरिवंशवचने **'वरदर्पितः'** इत्येतत् 'वराभ्यां दर्पितः' इति विवृतं भवति । **'अवध्यः सर्वभूतानां भौमः स नरकोऽसुरः'** [३७] इत्युत्तरवचने च 'अजय्यः' इत्युपस्कर्तव्यमित्याशयः । तदिदमर्थाल्लब्धम् । यतस्तमिन्द्रादयोऽपि न जेतुं प्रभवोऽभवन् । तस्यामात्यानां पञ्चानामपि वरदानं च हरिवंशादेवावगम्यते–**'हयग्रीवो निसुम्भश्च पीठः पञ्चजनस्तथा । मुरः पुत्रसहस्रैश्च वरमत्तोऽसुरो महान्'** [वि.प.६३.१८] इति । वरमत्त इति पञ्चस्वप्यमात्येषु प्रत्येकमन्वयः । पुत्रसहस्रैश्च युत इत्यपि, न केवलं मुरस्य विशेषणम् । समानं पञ्चानाममात्यानामपि । सहस्रमिति च न सङ्ख्यावचनम् । भागवते मुरस्य सप्तपुत्रत्ववचनात्–**'ध्रुवश्चरिष्णुः श्रवणो विभावसुर्नभो वसुश्चानरणश्च सप्तमः'** [भाग.१०.६३.१६] इति । तर्हि पुत्रसहस्रैरिति कोऽर्थः? सङ्ख्यया वयसा मनसा च सह सरन्तीति सहस्रा उच्यन्ते । सहस्राश्च ते पुत्राश्च पुत्रसहस्राः । सेयं समाधिगुह्यभाषा । तेष्वेकैकोऽपि पुत्रसहस्रायत इति ध्वनिः । एतेन **'मुरोश्च तनयान् सप्त सहस्रांस्तांस्ततो हरिः'** [वि.पु.५. २९.१८] इति विष्णुपुराणवचनमपि गदिताभिप्रायम् । ननु निर्णयकारस्तमसुरं मुर-माह । विष्णुपुराणं तु मुरुम् । सत्यम् । भागवतसंवादात् तस्य मुर इति निर्विवादं नाम–**'पपात विष्णोः शिरसि प्रमोदिनी प्रसूनवृष्टिर्निहते मुरेऽसुरे'** [भाग.१०.६३.१५] इति । **'चकर्त मौरवं पाशम्–'** [१०.६३.७] इति प्रयोगान्मुरुरिति च

भौमेन जय्यत्वमपि[1] ह्यमीषां दत्तं भौमाय ब्रह्मणा क्रोडरूपात् ।
विष्णोर्ज्जातायास्य दुर्ग्गं च दत्तं प्राग्ज्योतिषं नाम पुरं समस्तैः ॥ ९१ ॥

आसीद् बाह्ये गिरिदुर्ग्गं तदन्तः पानीयदुर्ग्गं मौरवं पाशदुर्ग्गम् ।
तस्याप्यन्तः क्षुरधारोपमं तत्पाशाश्च ते षट्सहस्राश्च घोराः[2] ॥ ९२ ॥

अभेद्यत्वमरिभिरतार्य्यता च दत्ता दुर्ग्गाणां ब्रह्मणाऽऽराधितेन ।
तस्यामात्याः पीठमुरौ [3]निसुम्भहयग्रीवौ पञ्चजनश्च शूराः[4] ॥ ९३ ॥

सङ्कल्प्य तान् लोकपालानहं च ब्रह्मेत्यद्धा भाषमाणः स आस्ते ।
हन्तुं कृष्णो नरकं तत्र गत्वा [5]गिरिदुर्ग्गं गदया निर्बिभेद ॥ ९४ ॥

**अमीषां अमात्यानां भौमेन जय्यत्वं जेतुं शक्यत्वं भौमाय दत्तम् । समस्तैः दुर्गम् ॥ ९१ ॥ पुरस्य बाह्ये । मौरवं मुरस्वामिकं क्षुरधारोपमं पाशदुर्गं पाशभूतं (दुर्गम्) । तत्पाशाः मुरस्य पाशाः ॥ ९२–३ ॥ ब्रह्मेति चतुर्मुखः ॥ ९४–५ ॥**

---

तस्य नामान्तरमित्यवगम्यते । अन्यथा **'मौरं पाशम्'** इत्यवक्ष्यत् । **'मौरवं पाशदुर्गम्'** [९२] इति प्रयुञ्जानेनाऽचार्येण नामान्तरमेतदित्यभ्यनुज्ञातम् । तद्यथा तुर्वशः, तुर्वशुरपि । अतो न विरोधः ॥ ९० ॥ अजय्यत्वे कश्चन विशेषमाह– भौमेन जय्यत्वमपि । क्रोडरूपाद् विष्णोर्जाताय भौमाय । अस्य ब्रह्मणा समस्तैः दुर्गं दुर्गमं पुरं च दत्तम् । प्राचीनं ज्योतिर्वराहाख्य-मस्यास्तीति प्राग्ज्योतिषम् । प्राग्ज्योतिरित्यपि नामान्तरम् । **'प्राग्ज्योतिर्मगधेश्वरौ'** [भाग.१०.७१.२३] इति पुराण-प्रयोगात् । सम्प्रति चैतत् पुरम् **'असाम्'** प्रान्ते कामरूपमाहुः । कामाख्यां वा पुरीम् । समस्तैर्भोगैः पुरं पूर्णं वा दुर्गम् ॥ ९१ ॥ मुरनिर्मितत्वान्मौरवम् । मुरादणि व आदेशः । मुरुनिर्मितमिति वा । तस्य पानीयदुर्गस्याप्यन्तः । तत् दुर्गं क्षुरधारोपमम् । तस्य दुर्गस्य पाशाः । ते वा पाशाः । षट् सहस्राणि येषां सङ्ख्या ते षट्सहस्राः । **'क्षुरान्तान् मौरवान् पाशान् षट्सहस्रं ददर्श सः'** [स.प.५५.२८] इति भारते ॥ ९२ ॥ भौमाराधितेन ब्रह्मणा तस्यामात्यानामप्यवध्यत्वमजय्यत्वं दत्तमित्युक्तम् । के ते कति च त इत्याह– तस्यामात्याः । शत्रून् पेठतीति पीठः । पिठ हिंसाक्लेशनयोः । सदा पीठमिव नरकस्याधश्चर इति वा । पाशैः मुरति संवेष्टयतीति मुरः । मुर संवेष्टने । मुखरो वा मुरः । मुर एव मुरुः । उस्ताच्छील्ये । नितरां सुम्भतीति निसुम्भः । षुम्भ हिंसायाम् । हयस्येव दीर्घाऽस्य ग्रीवेति हयग्रीवः । हयस्तृणमिवारिगणं ग्रसतीति वा । ग्रसेरीवः । पञ्चताजननः पञ्चजनः ॥ ९३ ॥ भूमिसुतत्वाद् भौमं नाम्ना नरकम् । नराणां कं यद्वशे स नरकः ॥ ९४ ॥

---

१. **'जेयत्वमपि'**
१. **'–सहस्राः सुघोराः'** । **'–सहस्रं सुघोराः'** इति कचित् ।
३ **'निशुम्भ–'**
४. **'–श्च दैत्याः ।'** इति कचित्
५. **'गिरिं दुर्ग्गम्'**

**वायव्यास्त्रेणोदकं शोषयित्वा चकर्त्त खड्गेन मुरस्य पाशान् ।**
**अथाभिपेतुर्म्मुरपीठौ [१]निसुम्भहयग्रीवौ पञ्चजनश्च दैत्याः[२] ॥ ९५ ॥**

**ताञ्छैलशस्त्रास्त्रशिलाभिवर्षिणश्चक्रे व्यसूंश्चक्रनिकृत्तकन्धरान् ।**
**तेषां सुताः सप्तसप्तोरुवीर्य्या वरादवद्ध्या गिरिशस्याभिपेतुः ॥ ९६ ॥**

**तानस्त्रशस्त्राभिमुचः शरोत्तमैः समर्प्पयामास[३] स मृत्यवेऽच्युतः ।**
**हत्वा पञ्चत्रिंशतो मन्त्रिपुत्रान् जगाम भौमस्य सकाशमाशु ॥ ९७ ॥**

**श्रुत्वा भौमः कृष्णमायातमा[४]रादक्षोहिणीत्रिंशकेनाभ्ययात् तम् ।**
**जघ्ने सेनां गरुडः पक्षपातैः पादं शेषां[५] केशवः सायकौघैः ॥ ९८ ॥**

**अथाऽससादाऽशु भौमोऽच्युतं तं [६]मुञ्चञ्छरानस्त्रसम्मन्त्रितान् द्राक् ।**
**विव्याध तं केशवः सायकौघैर्भौमः शतघ्नीं ब्रह्मदत्ताममुञ्चत् ॥ ९९ ॥**

**प्रत्येकं सप्तसप्त सुताः ॥ ९६–१०० ॥**

---

मुरपाशेषु कृत्तेषु तदसहमानः प्रथमं मुर  आगतः, पीठादयस्तमनुजग्मुरित्याह– मुरपीठावित्यादि ॥ ९५ ॥ **'सञ्छिद्य पाशाञ्छरेण मुरं हत्वा सहान्वयम् । शैलसङ्घानतिक्रम्य निसुम्भं च व्यपोथयत् । यः सहस्रसहस्त्वेकः सर्वान् देवानपोथयत् । तं जघान महावीर्यं हयग्रीवं महाबलम् । अपारतेजा दुर्धर्षः सर्वयादवनन्दनः । मध्ये लोहितगङ्गायां भगवान् देवकीसुतः । औदकायां विरूपाक्षं जघान मधुसूदनः'** [स.प.५५.२९–३२] इत्यर्घाहरणे । एत एव श्लोकाः किञ्चित् पाठभेदेन हरिवंशेऽपि पठ्यन्ते । **'औदकायां विरूपाक्षम्'** इत्यत्र औदकायां उदकदुर्गरूपायां गङ्गायामित्यर्थः । विरूपाक्ष इति च पञ्चजनस्यैव नामान्तरम् । अध्यायोपक्रमे पञ्चजनस्य पाठादपाठाच्च विरूपाक्षस्य । उत्तराध्याये तथैवोपसंहाराच्च ॥ ९६ ॥ अभितः सर्वतोदिशं मुञ्चन्तः । समर्पयामास सहैव गमयामास । पञ्चसहिता त्रिंशत् येषां सङ्ख्या ते पञ्चत्रिंशतः ॥ ९७ ॥ अक्षोहिणीनां त्रिंशी यत्र तदक्षोहिणीत्रिंशकं बलम् । अक्षोहिणीनां त्रिंशता इत्यर्थाल्लब्धम् । त्रिंशत् त्रिंशामिति समानार्थतया च प्राञ्चः प्रयुञ्जते । विनेयानां व्युत्पत्तिवैशद्याय स्वच्छन्दं बहुधा प्रयुञ्जते बहुज्ञा महान्तः । सेनायाः पादं चतुर्थ-भागम् । सार्धमक्षोहिणीसप्तकमित्यर्थः ॥ ९८ ॥ अस्त्रदेवताः सम्मुखीकृत्य, सन्तोष्य, मन्त्रितान् शरान् । सर्वथाऽप्यमोघा-

---

१. **'निशुम्भ–'** २. **'–श्च शूराः ।'** ३. **'-मास च मृत्यवे'**
४. **'–मायान्तमारादक्षौहिणी–'** ५. **'शेषम्'** ६. **'मुञ्चन् बाणानस्त्र–'**

**अच्छेद्योऽभेद्यो नित्यसंवित्सुखात्मा नित्याव्ययः पूर्णशक्तिः स कृष्णः ।**
**निगीर्य्य तां देववरः शतघ्नीं नित्याश्रान्तोऽदर्शयच्छ्रान्तवच्च ॥ १०० ॥**

**बहून् वरान् ब्रह्मणोऽन्येष्वमोघान् मोघीकृतान् वीक्ष्य परात्परेशः ।**
**भवेत् कथञ्चिद् बहुमानेन युक्त[1] इत्येव कृष्णोऽदर्शयच्छ्रान्तवत् स्वम् ॥ १०१ ॥**

**तदा दृप्तं नरकं वीक्ष्य देवी सत्याऽऽददे कार्म्मुकं शार्ङ्गसञ्ज्ञम् ।**
**चकार तं यतमानं च भौमं निरायुधं विरथं च क्षणेन ॥ १०२ ॥**

**आलिङ्ग्य कृष्णः सत्यभामां पुनश्च रथान्तरे संस्थितं भौममुग्रम् ।**
**सृजन्तमस्त्राण्यरिणा निकृत्तकन्धं[2] मृत्योरर्प्पयामास शीघ्रम् ॥ १०३ ॥**

**स मन्त्रिभिर्म्मन्त्रिपुत्रैः समेतो जगाम कृष्णावज्ञयाऽन्धं तमश्च ।**
**तदाविष्टो वायुरगाच्च कृष्णमन्तःपुरं प्राविशत् सत्ययेशः ॥ १०४ ॥**

**तदा भूमिः पञ्चभूतावरा या यस्यां जज्ञे नरकः श्रीवराहात् ।**
**मूलप्रकृत्यैव भूम्या नितान्तमाविष्टा या[3] साऽगमत् कृष्णपादौ ॥ १०५ ॥**

**बहुमानयुक्तः ब्रह्मा मया सम्भावितो भवेदिति ॥१०१–२॥ निकृत्तकन्धरं निकृत्तग्रीवम् ॥१०३–४॥ तदा सा भूमिः कृष्णपादावगमत् इति सम्बन्धः ॥ १०५–१० ॥**

---

नन्यत्र । कृष्णस्तु तानलक्षयित्वा केवलममन्त्रितैः सायकौघैर्विव्याध । का सा मन्त्रदेवता या कृष्णमुपहन्ति? सकृत्प्रयुक्ता या शतं शूरान् हन्ति सा शतघ्नी ॥ ९९ ॥ निगीर्य मधुरं खण्डखाद्यमिव गिलित्वा ॥ १०० ॥ ब्रह्मणो वरबलात् कृष्णस्यापि श्रमो जात इति कथञ्चित् ब्रह्मवरोऽपि बहुमानेन गौरवेण युक्तः स्यादिति च वीक्ष्यैव ॥ १०१–२ ॥ मर्तुं सन्नह्य स्थितम् । कं शिरो धत्त इति कन्धा कन्धरा । कन्धो वा ॥ १०३ ॥ भौमस्यान्तःपुरम् ॥ १०४ ॥ पञ्चभूतावरा, अष्टादश्यां कक्ष्यायां पठिता । यद्यप्याकाशमानी गणपतिरप्यष्टादश्यां कक्ष्यायामेव पठ्यते । तथाऽपि पृथिवीमानिन्याः किञ्चिदुत्तम इति युक्तं भूमेः पञ्चभूतावरत्वम् । तदभिमन्यमाना भूमिश्च पञ्चानामन्ते सृष्टा स्थूलतमा । रजोमानिन्या लक्ष्मीरूपया भूम्या, याऽत्र सत्यभामा कृष्णेन सहाऽगता । शरणमगमत् ॥ १०५ ॥

---

१. **'बहुमानयुक्तः'** इति वे.ती. सम्मतः पाठ इति भाति ।

२ **'निकृत्तस्कन्धम्'** । **'निकृत्तकन्धरम्'** इति क्वचित् । वे.ती. पाठोऽपि तथेति भाति ।

३. **'–माविष्टायां सा–'**

**साऽदित्यास्ते कुण्डले पादयोश्च निधाय पौत्रं भगदत्तसञ्ज्ञम् ।**
**समर्प्पयामास तस्याभिषेकं प्राग्ज्योतिषे कारयामास कृष्णः ॥ १०६ ॥**

**संस्थाप्य[1] तं सर्वकिरातराज्ये भौमाहृतं वैश्रवणाद् बलेन ।**
**शिवेन दत्तं धनदायातिसत्त्वं [2]भगदत्ते न्यदधात् सुप्रतीकम् ॥ १०७ ॥**

**करीन्द्रमेकं तं निधायैव तस्मिन्[3] कृत्वा प्रसादं च वसुन्धरायाः ।**
**चतुर्दन्तान् षट्सहस्रान्[4] करीन्द्रान् पयोब्धिजान् प्राहिणोद् द्वारवत्यै[5] ॥ १०८ ॥**

**नराधिपान् देवगन्धर्वनागान् जित्वाऽऽनीतं हेमरत्नोच्चराशिम् ।**
**शतद्वयं योजनानां समृद्धं समन्ततः प्राहिणोत् स्वां पुरीं सः[6] ॥ १०९ ॥**

**महावीर्य्यैर्न्नैरृतै राक्षसेन्द्रैर्भौमानीतैर्न्निरृतिं योधयित्वा ।**
**स प्राहिणोत् सर्वरत्नोच्चराशिं गजांश्च नारायण आदिदेवः ॥ ११० ॥**

**तत्रापश्यत् कन्यका भूमिपानां भौमानीताः समरे तान् विजित्य ।**
**द्व्यष्टौ सहस्राणि शतं च रूपशीलोदारा अक्षताः सद्व्रतस्थाः ॥ १११ ॥**

**तत्र नरकगृहे । अक्षताः अदृष्टरजसः । सद्व्रतस्थाः (वैष्णवव्रतस्थाः) ॥ १११ ॥**

---

ते भौमेनापहृते कुण्डले । सर्वसम्पदा सहार्पयामास ॥ १०६ ॥ समस्तराज्यसम्पदा सह स्थापयित्वा ॥ १०७ ॥ तं सुप्रतीकमेकम् । **'चतुर्दन्तान् गजांश्चाग्र्यान् षट्सहस्रान् स दृष्टवान्'** [वि.पु.५.२९.३२] इति वैष्णवे । **'ऐरावतकुलेभांश्च चतुर्दन्तान् मदोत्कटान् । भगदत्ताय दत्वैकं सुप्रतीकं ततोऽपरान् । पाण्डुराभांश्चतुःषष्टिं प्रेषयामास केशवः'** [भाग.१०.६४.३२–३] इत्यत्र चतुर्दन्तेषु षट्सहस्रेषु चतुःषष्टिर्गजाः पाण्डुराभा इत्यर्थः । तेन न विरोधः । महाभारते विंशतिसाहस्रा इत्युक्तम्–**'भीमरूपाश्च मातङ्गाः प्रवाळविकृताः कुथाः । ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः'** [स.प.५६.९ ] इति । हरिवंशेऽपि तथा । द्विरदानामियं गणना । तथाच चत्वारिंशत्सहस्रमिताः करेणवः । विंशतिसहस्रमिता द्विदन्ता दन्तावलाः । षट्सहस्रमिताश्चतुर्दन्ताः । चतुःषष्टिर्धवळदन्तिन इति सर्वमवदातम् ॥ १०८–१० ॥ दृष्टरजसोऽपि

---

१. **'संस्थापयामास किरात-'** इति क्वचित् । २. **'भगदत्तेऽधात् सुप्रतीकं रमेशः ।', 'भगदत्ते न्यदधात् सुप्रतीकं रमेशः'** इति क्वचित् । ३. **'निधायैव कृष्णः कृत्वा'** इति क्वचित् । ४. **'षट्सहस्रम्'** इति क्वचित् । ५. **'प्राहिणोत् स्वां पुरीं सः ।'** इति क्वचित् । ६. **'प्राहिणोद् द्वारवत्यै ।'** इति क्वचित् ।

काश्चित् तत्राऽसन् देवगन्धर्वकन्यास्तासां प्रधाना त्वष्टृपुत्री कशेरुः ।
पुत्रा अग्नेः पूर्वमासंश्च तेऽथ स्त्रीत्वप्राप्त्यै चक्रुरुग्रं[1] तपश्च ॥ ११२ ॥

भार्य्यात्वार्थे वासुदेवस्य योषित्तनुं तासामिच्छतीनां समीरः ।
अदाद् वरं तपसाऽऽराधितः सन् स्त्रीभूतास्ते बदरीं सम्प्रजग्मुः[2] ॥ ११३ ॥

नारायणं तत्र शुश्रूषमाणाः प्राप्याप्सरस्त्वं राजकुलेषु जाताः ।
काश्चित् स्वर्ग्गे ता निशाम्यैव[3] कृष्णं वव्रुः पतिं सर्वगुणाभिरामम् ॥ ११४ ॥

आजानदेवैः सर्वगुणैः समास्ताः स्वभावतोऽथेन्दिरावेशतोऽतः ।
गुणाधिकास्ताः शिबिकासु कृष्ण आरोपयित्वा प्राहिणोद् द्वारवत्यै ॥ ११५ ॥

**भूमिपानां कन्यका अपश्यदिति सामान्योक्तेरपवादमाह– काश्चिदित्यादिना । तत्र तासां कन्यकानां मध्ये । पूर्वमग्नेः पुत्रा आसन् । अथ कालान्तरे (स्त्रीत्वप्राप्त्यै) तपश्चक्रुः ॥ ११२ ॥ इच्छतीनां तासामिति भाविस्त्रीत्वापेक्षया स्त्रीलिङ्गव्यपदेशः । स्त्रीभूताः स्त्रीरूपं प्राप्ताः ॥ ११३ ॥ काश्चित् राजकुलेषु जाताः । काश्चित् स्वर्गे जाताः ॥ ११४ ॥ ताः स्वभावतः सर्वगुणैः आजानदेवैः समाः । आजानदेवाः जयन्तादयः । अथेन्दिरावेशतः (अतः) आजानदेवेभ्यः गुणाधिकाः ॥ ११५–१७ ॥**

---

सद्व्रतस्थतया अक्षतयोनयः । आ परिणयमसम्भोगो हि सद्व्रतम् । विष्णुप्रीतिकरेष्वन्येष्वपि सद्व्रतेषु स्थिताः । **'सर्वाः काषायधारिण्यः सर्वाश्च नियतेन्द्रियाः'** [स.प.५६.१७; वि.प.६४.२७] इति च ॥ १११ ॥ सुखं शेत इति कशेरुः । स्त्रीत्वप्राप्त्या इति । **'एताः पुरा स्त्रीत्वमवाप्तये समं निरस्तशोकं बत साधु कुर्वते'** [१.१०.३१] इति हि भागवते । एतेन **'हुताशनसुताः सर्वा भवत्योऽप्सरसः पुरा'** [म.पु.७०.२१] इति मात्स्यवचनाशयः स्फुटीकृतः– सुता इति पुत्रा उच्यन्ते न पुत्र्य इति । साम्प्रतं **'भवन्त्योऽप्सरसः पुरा'** इत्यशुद्धं पठ्यते । **'भवन्तः'** इति वा **'भवत्यः'** इति वा प्राचीनपाठः स्यात् । न 'भवन्त्यः' इति ॥ ११२ ॥ तासां सम्प्रति कृष्णभार्यात्वाय योषित्तनुं प्राप्तानाम्, पूर्वमग्निपुत्रत्वदशायां योषित्तनुमिच्छतीनाम् । न पुंसां कदाऽपि स्त्रीत्वं भवति । किन्तु कथञ्चित् स्तनभगादिमती तनुरेव स्यादिति योषित्तनुमिच्छतीनामित्याह । अस्त्रियः स्त्रिय इव भूताः स्त्रीभूताः, स्त्रीतनुं प्राप्तास्ते अग्निपुत्राः । सं विष्णुं प्रसादयितुं जग्मुः । **'अकयप्रविसम्–'** इत्यादेः ॥ ११३ ॥ काश्चित् स्वर्गे जाताः । **'स्वर्गेताः'** इत्येकं वा पदम् । अप्सरस्तया स्वर्गमिता गता इति । निशाम्यैव दर्शनमात्रेण जातहृच्छ्रयाः ॥ ११४ ॥ स्वभावत आजानदेवैः समाः । आदावेव देवत्वेन जाता आजानदेवाः, अथापि विशिष्यानाख्याताः । तत्वमानित्वेनोक्तेभ्योऽन्ये नवकोट्यन्तर्गताः । इन्दिरावेशे सति, इन्दिरावेशेन वा, अथ भगवतः

---

१. **'चक्रुरग्रम्'** २. 'प्राचीनकोशे तु **'स प्रजग्मुः'** इति पठ्यते । स्खलितं सम्भाव्यते । ३. **'निशम्यैव'**

समन्ततो योजनानां शते द्वे प्रवृद्धमिन्द्रस्य स रत्नपर्वतम् ।
नित्यामृतस्राविं जलेश्वरस्य च्छत्रं च दोर्भ्यां गरुडे न्यधाद्धरिः ॥ ११६ ॥

स्वयं च सत्यासहितः समारुहत् स चाश्रमेणैव ययौ त्रिविष्टपम् ।
अभिप्रयातोऽखिललोकपालैर्ज्जनार्दनः शक्रगृहं विवेश ॥ ११७ ॥

सम्पूजितः[1] सत्यभामासहायः शक्रेण शच्या सहितेन सादरम् ।
ददावदित्या अपि कुण्डले शुभे समस्तदेवैर्म्मुनिभिश्च वन्दितः ॥ ११८ ॥

तमासुरावेशवशादजानती सत्यां च सर्वप्रभवौ जगत्प्रभू[2] ।
निर्द्दोषसौख्यैकतनू शुभाशिषस्ताभ्यां ददौ साऽदितिरात्मपुत्रवत् ॥ ११९ ॥

अथो सदानन्दचिदात्मदेहः स नन्दनोद्यानमजोऽनुरूपया ।
अनन्तशक्तिः सह सत्यभामया विवेश रन्तुं प्रिययाऽखिलेश्वरः ॥ १२० ॥

**वन्दितश्च अभूत् ॥ ११८ ॥ आसुरावेशवशात् तं च कृष्णं सत्यां च सर्वप्रभवौ जगत्प्रभू निर्दोषसौख्यैकतनू अजानती साऽदितिः आत्मपुत्रवत् आत्मपुत्राभ्यामिव ॥ ११९–२४ ॥**

---

प्रीत्यतिशये व्यक्ते । आरोपयित्वा । **'रूप उपरिभावे'** इति प्रतनो धातुः । रुप वा । अर्वाचीनाः पदज्ञास्तु रुहधातोरेव पकारमादेशं मन्यन्ते ॥ ११५ ॥ दोर्भ्यामुद्धृत्य । गरुडे न्यधात् । निधाय त्रिविष्टपं ययौ । यात्वा रत्नपर्वतमिन्द्राय ददौ । अमृतस्रावि च्छत्रं च जलेश्वराय । **'तत्रापश्यद् यदुश्रेष्ठो विचित्रं मणिर्पतम् । छत्रं च वारुणं हृद्यं सलिलस्रावि भारत । शक्राय प्राहिणोत् भूयः केशवो मणिपर्वतम् । वरुणाय तथा च्छत्रं प्राहिणोद् दैत्यकिङ्करैः'** [१०.६४.१४–५] इति भागवते । दैत्यकिङ्करैरानाय्य स्वयमेव गरुडे स्थापयामासेत्यर्थः ॥ ११६ ॥ समारुहत् । **'कृमृदृरुहिभ्यश्छन्दसि'**[३.१.५९] इति स्मरणात् । **'सानुमारुहत्'** इत्यादिश्रुतिप्रयोगाच्च युक्तमेतत् । एवमन्यत्रापि । अभिप्रयातः । स्वागतमभिव्याहृत्य सत्कारपूर्वमानेतुमभिमुखमहमहमिकया यातः ॥ ११७ ॥ स्वप्रार्थनं कृष्णो मानयामासेति सम्भ्रमेण सन्तोषेण च पूजितः । अदित्यै कुण्डले अपि । अपिना इन्द्राय रत्नगिरिं वरुणाय छत्रं च ददाविति ध्वनयति ॥ ११८ ॥ सत्यां च तं च सर्वस्य प्रभवौ पितरौ जगत्प्रभू निर्दोषसौख्यैकतनू इत्यजानती । पुत्री च पुत्रश्च पुत्रौ, ताभ्यामिव शुभाशिषो ददौ । यद्यपि षष्ठीसप्तम्योरेव वतिर्विहितः–**'तत्र तस्येव'** [अ.सू.१.११६] इति । अथापि सम्प्रदानचतुर्थी च षष्ठीस्थानेयोगेति तत्रापि वतिं युक्तं मन्यत आचार्यः । किमिति?– **'न ते जरा न वैरूप्यं कान्तेन सह विप्रियम् । भूयात् कल्याणि सुव्यक्तं मत्प्रसादात् कदाचन'** [भाग.१०.६५.१०] इति । कथं निर्दोषसौख्यैकतनुं जरा वा वैरूप्यं वा बाधेत ॥ ११९ ॥ सदानन्द एव चिदस्येति सदानन्दचित् । आत्मैव

---

१. **'स पूजितः'** इति क्वचित् ।
२. **'जगद्गुरू ।'** इति क्वचित् ।

**तयाऽच्युतोऽसौ कनकावदातया सुकुङ्कुमादिग्धपिशङ्गवाससा ।**
**पूर्णेन्दुकोट्योघ[1]जयन्मुखाब्जया रेमेऽमितात्मा जगदेकसुन्दरः ॥ १२१ ॥**

**सर्वर्त्तुनित्योदितसर्ववैभवे सुरत्नचामीकरवृक्षसद्मने ।**
**सदैव पूर्णेन्दुविराजिते हरिश्चचार देव्या पवनानुसेविते ॥ १२२ ॥**

**[2]विदोषसंवित्तनुरत्र सत्तरुं ददर्श सत्याऽमृतमन्थनोद्भवम् ।**
**सा पारिजातं मणिकाञ्चनात्मकं समस्तकामप्रदमार्त्तिहारिणम् ॥ १२३ ॥**

**दृष्ट्वैव तं सुस्मितचन्द्रिकास्फुरन्मुखारविन्दाऽसितलोललोचना ।**
**कपोलनिर्भातचलत्सुकुण्डला जगाद देवाधिपतिं पतिं सती ॥ १२४ ॥**

**तरुर्जगज्जीवद मे गृहाङ्गणे[3] संस्थापनीयोऽयमचिन्त्यपौरुष ।**
**इतीरितस्तां कलशोपमस्तनीमालिङ्ग्य देवस्तरुमुद्बबर्ह ॥ १२५ ॥**

**तरुरुन्मूल्यान्यत्र(नीतः शुष्येदित्यत) उक्तम्– जगज्जीवदेति ॥ १२५–९ ॥**

---

देहोऽस्येत्यात्मदेहः । सदानन्दचितावेवाऽत्मा स्वरूपमस्य, तादृशो देहोऽस्येति वा । आनन्ददेहः रन्तुं विवेशेति लीलेयं भगवत इत्याह ॥ १२० ॥ सुगन्धेन सुखदरूपेण च कुङ्कुमेन घुसृणेन आदिग्धं मिश्रितमत एव पिशङ्गं पीतलोहितं वासः । पूर्णेन्दुकोटीनामोघः समुदायः ॥ १२१ ॥ सर्वेष्वप्यृतुषु सर्वाण्यपि वैभवानि नित्योदितानि । नतु तत्तदृतुषु तानि-तानि । सर्वेऽप्यृतवो नित्योदिताः, सर्वाणि च वैभवानि । स्विति सुखदानि सुभान्ति दिव्यानि रत्नानि च चामीकराणि च । **'मयं तु मानुषं स्वर्णं पीतं गान्धर्वमेव च । इन्द्रगोपनिभं नाम्ना जाम्बूनदमिति स्मृतम् । दैवं चामीकरं नाम प्रोद्यदादित्यसन्निभम्'** [बृ.भा.६.४.४] इत्यध्यात्मवचनं बृहद्भाष्ये । रत्नचामीकरमयास्तत्प्रसविनश्च वृक्षा यत्र तादृशं सद्मनम् । दोषविरहः सत्त्वम् । शोषः, अवकेशिता, नीरसफलता, असुमता, कुसुमता वृक्षादनी बाधा च प्रायो वन-दोषाः । नापि स्वर्गस्य भ्रमणेन नवा चन्द्रस्य भ्रमणेन तिरोधानं नाम । तेन सदैव सर्वास्वपि तिथिषु पूर्णेन्दुविराजिते । अनुकूलेन पवनेन सेविते ॥ १२२ ॥ सन् अम्लानसुरभिसुमस्तरुः ॥ १२३ ॥ सुस्मितमीषत्स्मितम् । मुखारविन्देति । अरविन्दमपि चन्द्रिकयोल्ललासेति अभूतोपमेयम् । निर्भाते प्रतिफलिते । तेन कपोलस्य मसृणता सुषमातिशयश्च । ये अदित्यै ददौ ततोऽपि सुन्दरे इमे कुण्डले । इति सुकुण्डलेत्याह ॥ १२४ ॥ अङ्गन्त्यत्रेत्यङ्गणम् । अगि गतौ । अङ्गेरणक्-प्रत्ययः । अर्वाचीनास्तु ल्युडन्तमङ्गनपदमेव चत्वरवचनं वदन्ति । समानीय स्थापनीयः । उद्बबर्ह । बृहू उद्यमने । उत्कर्तितुमुद्य-

---

१. **'–कोट्यौघ–'** इति क्वचित् । २. **'निर्दोष–'** ३. **'गृहाङ्कणे'** इति क्वचित् ।

स तेन वृक्षेण सहैव केशवस्तया च देव्याऽऽरुहदग्र्यपौरुषम् ।
खगेश्वरं तच्च निशम्य शच्या प्रचोदितो वासव आगमत् सुरैः ॥ १२६ ॥

तानासुरावेशयुतान्[1] हरेश्च बलप्रकाशाय समुद्यतान् सुरान् ।
न्यवारयच्छार्ङ्गशरासनच्युतैर्हरिप्रिया बाणवरैः समस्तशः ॥ १२७ ॥

निरायुधं वैश्रवणं चकार चिक्षेप चाब्धौ गरुडो जलेश्वरम्[2] ।
प्रधानवायोस्तनयं तु वायुं कोणाधिपं वह्नियमादिकानपि ॥ १२८ ॥

विबोध्य[3] शार्ङ्गोत्थरवैः स्वकां [4]तनुमावेशितानामसुरैरगाद्धरिः ।
ते बोधितास्तेन रणं विसृज्य ययुर्विदित्वा तमनादिपूरुषम् ॥ १२९ ॥

शिवं च शक्रार्थमुपागतं हरिर्व्यद्रावयच्छार्ङ्गविनिःसृतैः शरैः ।
सवाहनो दूरतरे निपातितो गरुत्मता शम्भुरगाच्छराहतः ॥ १३० ॥

विद्राविते बाणगणैश्च शौरिणा हरे हरौ वज्रमवासृजद् द्रुतम् ।
शक्रोऽग्रहीत् तं प्रहसन् जनार्दनः करेण वामेन स चापजग्मिवान् ॥ १३१ ॥

**भगवता शराहतः ॥ १३०–६ ॥**

---

यामेत्यर्थः ॥ १२५ ॥ सुरैः सह योद्धुमागमत् ॥ १२६ ॥ तत्र हेतुद्वयमाह– आसुरावेशयुतान्, हरेर्बलप्रकाशाय च समुद्यतान् । तेन येयं हरेर्लीला देवैर्युद्धं नाम, तेन स्वमहिमाविष्करणं नाम, तज्जं पुण्यं देवान् जगाम । भगवद्विरोधेन जनितं पापमसुरान् जगाम ॥ १२७ ॥ अब्धौ स्वस्थान एव चिक्षेप । प्रधानवायोस्तनयं मरीचिम् । **'प्रधानवायुजो भूत-वायुर्नाम्ना मरीचिकः'** इति गीतातात्पर्ये [१३.२७] । वायव्यकोणाधिपं प्रवहम् । एवमन्यान् दिगधिपान् वह्नियमादिकानपि ॥ १२८ ॥ विबोध्य विष्णुरिति बोधयित्वा । आवेशितानाम् । एतेनेदमाह– न स्वयमाविविशुरसुराः । स्वयं भगवानेव ताना-वेशयामास । तेन मोहितैस्तैर्योधयामास । तेन भगवदिच्छयैव देवा युयुधुरिति ॥ १२९ ॥ गरुत्मता शम्भुरगाच्छराहतः । एतेन समानकक्ष्यत्वेऽपि गरुत्मतः किञ्चिदाधिक्यमाह । विष्णुनाऽधिष्ठितत्वाच्च विशिष्टा शक्तिस्तस्य ॥ १३० ॥ स इन्द्रश्चाप-जग्मिवान् ॥ १३१ ॥

---

१. **'–वेशवशाद्धरेश्च '**
२. **'जलेशम् ।'**
३. **'निबोध्य'**
४. **'तनूमावे–'** इति क्वचित् ।

अपाहसत् तं जगदेकसुन्दरी हरिप्रियाऽथो जगदेकमातरम् ।
उवाच शक्रो जगतां जनित्रे प्रदर्शयामो वयमात्मशैशवम् ॥ १३२ ॥

जगाम चाथो शरणं जनार्दनं सुरैर्वृतो देवपतिः क्षमापयन् ।
शृङ्गं च दत्वा मणिपर्वतस्य प्रणम्य देव्या सहितं जगद्गुरुम् ॥ १३३ ॥

ययाच एनं परिरक्षणाय शचीपतिः केशवमर्ज्जुनस्य ।
जगाद कृष्णोऽपि धरातळस्थिते[1] न मय्यमुं कश्चन जेष्यतीति ॥ १३४ ॥

तमर्ज्जुनार्थं वरमाप्य वासवः पुनःपुनश्चक्रधरं प्रणम्य ।
प्रसन्नदृष्ट्या हरिणाऽभिवीक्षितो ययौ महाभागवतः स्वमालयम् ॥ १३५ ॥

कृष्णोऽप्यनुज्ञाप्य पुरन्दरं पुरीं निजां व्रजन्नभ्यधिकं व्यरोचत ।
किरीटधारी [2]वरकुण्डलोल्लसन्मुखाम्बुजः पीतपटः सकौस्तुभः ॥ १३६ ॥

विरोचमानस्य सदा जगत्प्रभोर्न्नवै विशेषः क्वचिदच्युतस्य ।
तथाऽपि तत् स्मारयितुं वचो भवेदपेक्ष्य चाल्पज्ञमतिं पुराणगम् ॥ १३७ ॥

**सदा विरोचमानत्वेऽपि पुराणगं तद् वचः भगवानरोचतेति वचः अल्पज्ञमतिमपेक्ष्य भवेत् । तत् सदा विरोचमानत्वं स्मारयितुं विक्षिप्तचेतसां मह(त्त्व)ज्ञानिनां स्मारयितुं च भवेत् ॥ १३७–९ ॥**

---

जगतां जनित्रे जनयितरि । जनित्रे जनयित्रे तदनुग्रहार्थमिति वा । प्रदर्शयामः पितुः पुरः शिशव इव । शैशवं बालिश्यम् । सदा शेत इति हि शिशुरुच्यते । ये भगवति विषये शेरते तेऽपि शिशवः । **'या निशा सर्वभूतानाम्'** इत्यादेः ॥ १३२ ॥ कृष्णेन प्राग्ज्योतिषादानीय दत्तस्य मणिपर्वतस्य ॥ १३३ ॥ एनं देवानामनुग्रहाय भूर्लोकात् स्वर्लोकमागतं केशयोः ब्रह्मरुद्रयोरपीशम् । अथच कौ ब्रह्मवायू ईशौ येषां ते देवाः केशाः । तेषामपि प्रवर्तकं विज्ञाय ययाचे । स एव किल तं विरोद्धुं मनः प्रवर्तयामास । परिभवेभ्यो रक्षणं परिरक्षणम् । न कश्चन जेष्यतीति । विजयफलकश्चायमिन्द्रस्य पराजय इति न दोषः । विभवान्तो हि परिभवः । अतस्तत्रापि परिरक्षैव ॥ १३४ ॥ अभिवीक्षितः स्वचापलं क्षममाणेनेव साभिमानमीक्षितः । यद्यपि हरिं विरुरोध । अथापि स्वभावतः महाभागवतः । देवा भागवताः । अयं महाभागवतः ॥ १३५ ॥ यद्यपि वरे सुन्दरीभिरपि मुखशोभार्थं वरणीये कुण्डले । ते अप्युल्लसती येन तादृशमस्य मुखाम्बुजम् । प्रातीतिकोऽप्यर्थो ग्राह्य

---

१. **'–तले स्थिते'** २. **'–धारी चलकुण्डलो–'**

**प्रविश्य चेशः स्वपुरीं स यादवैः [1]सुपूजितोऽन्तःपुरमेत्य चाङ्गणे[2] ।**
**तरुं प्रियाया न्यदधाद् गृहस्य सहैव शृङ्गेण च रत्नसद्गिरेः ॥ १३८ ॥**

**प्रदाय रत्नानि च सर्वसात्त्वतां यथेष्टतस्ता अपि कन्यकाः प्रभुः ।**
**उद्वाह्य रेमे पृथगेव रत्नप्रासादसंस्थाभिरनन्तरूपः ॥ १३९ ॥**

**पृथक्पृथक् तासु दशैव पुत्रकानधत्त[3] कन्यामपि सर्वशः प्रभुः ।**
**प्रद्युम्नसाम्बावपि भानुचारुदेष्णौ च तेषां नितरां गुणाधिकाः ॥ १४० ॥**

**विवस्वतो योऽवरजोऽदितेः सुतः ख्यातश्च नाम्ना सवितेति कृष्णात् ।**
**जातः स सत्याजठरेऽत्र नाम्ना भानुस्तु भैष्म्या अपि चारुदेष्णः ॥ १४१ ॥**

**स चारुदेष्णोऽपि हि विघ्नराजो येऽन्ये च कृष्णस्य सुताः समस्ताः ।**
**ते चैव[4] गीर्वाणगणास्तथाऽन्ये ये द्वारकायां निवसन्ति सर्वे ॥ १४२ ॥**

**तस्यां समस्तैरभिपूज्यमाने देवे[5] स्वपुर्यां निवसत्यनन्ते ।**
**ययौ कदाचित् स तु रौग्मिणेयः[6] साम्बेन सार्द्धं[7] भुजगेन्द्रलोकम् ॥ १४३ ॥**

**एकैकस्यां एकां कन्याम्, सर्वशः सर्वासु ॥ १४० ॥ प्रद्युम्नसाम्बयोः स्वरूपस्य पूर्वमुक्तत्वात् भानुचारुदेष्णयोः स्वरूपमाह– विवस्वत इत्यादिना । चारुदेष्णोऽपि भैष्मीजठरतः ॥ १४१–३ ॥**

---

एव । चतुर्मुखात्मकेन कौस्तुभेन सहितः । **‘चैत्यस्य तत्वममलं मणिमस्य कण्ठे’** [३.२९.२७] इति हि भागवते ॥ १३६–७ ॥ सुपूजितः साभिमानं सादरं पूजितः । प्रियाया गृहस्याङ्गणे । अङ्गणमजिरम्, ‘ಅಂಗಳ’ इति भाषायाम् । रत्नैः सन् लसन् गिरिः ॥ १३८ ॥ ताः भौमकाराया आनीताः । कथं पृथग् रेमे? अनन्तरूपत्वात् । पृथक्पृथग् रत्नप्रासादेषु कृष्णेन सहैव स्थिताभिः ॥ १३९ ॥ प्रद्युम्नसाम्बावित्येक एव द्विरूप इति सहोक्तिः । भानुचारुदेष्णावेककक्ष्यागताविति ॥ १४० ॥ यो विष्णोः पञ्चबाणो बभूव स एव शङ्करात् षडाननो बभूव अष्टमकक्ष्यागतः । तावेवात्र प्रद्युम्नसाम्बौ बभूवतुरित्युक्तम् । भानुचारुदेष्णौ कावित्याह–विवस्वत इत्यादि । सविताऽष्टादशकक्ष्यागतः । भातीति भानुः । भातेर्नुः प्रत्ययः । **‘दाभाभ्यां नुः’** [स.कं. २.१.७१] इति भोजः ॥ १४१ ॥ चारूणि ददातीति चारुदेष्णः । ददातेरेष्णक्प्रत्ययः **‘गादाभ्यामेष्णक्’** [स.कं.२.२.१२९] इति च । ते समस्ताश्च गीर्वाणगणा एव । ये निवसन्ति ते च सर्वे ॥ १४२ ॥ वयं

---

१. **‘सम्पूजितो–’** इति क्वचित् । २. **‘चाङ्कणे’** इति क्वचित् । ३. **‘पुत्रकान् न्यधत्त’** इति क्वचित् ।
४. **‘ते चापि गी–’** इति क्वचित् । ५. **‘देवैः’** ६. **‘रौक्मिणेयः’** ७. **‘साकं भु–’**

**अज्ञानतस्तैरभियोधितः स जिगाय सर्वानपि वासुकिं च ।**
**विद्राप्य[1] बाणैरथ रत्नसञ्चयान् समाददे नेमुरमुं ततस्ते ॥ १४४ ॥**

**तैः पूजितः साम्बसहाय आशु मयं च मायाविनमस्त्रवर्षैः ।**
**विजित्य रुन्धानमनेन पूजितो ययौ रथेनाम्बरगेन नाकम् ॥ १४५ ॥**

**तत्रैव कृष्णेन तु पारिजाते हृते जयन्तं प्रजिगाय चाऽजौ ।**
**संस्पर्द्धयाऽऽयातममुष्य चानुजं साम्बोऽजयद् वृषभं नाम शस्त्रैः ॥ १४६ ॥**

**अस्त्राणि तावस्त्रवरैर्निहत्य तयोश्च ताभ्यां प्रतिदग्धयानौ ।**
**विद्राप्य[1] तौ बाणवरैः सुरेन्द्रसम्पूजितौ ययतुर्वियया खे ॥ १४७ ॥**

**अज्ञानतः (कृष्णपुत्रावित्यज्ञानात्) ॥ १४४ ॥ मायाविनं रुन्धानं मयं च अस्त्रवर्षैः विजित्य अनेन मयेन पूजितः ॥ १४५ ॥ तत्र नाके कृष्णेन पारिजाते हृत एव । निमित्तसप्तमी । हृतत्वान्निमित्तादेव । संस्पर्धया तु संस्पर्धयैव । यातं जयन्तं प्रद्युम्नोऽजयत् । अमुष्य जयन्तस्य अनुजम् ॥ १४६ ॥ तौ प्रद्युम्नसाम्बौ । तयोः जयन्तवृषभयोः अस्त्राणि अस्त्रवरैः (निहत्य) निवार्य ताभ्यां जयन्तवृषभाभ्यां प्रतिदग्धयानौ ॥ १४७–९ ॥**

कृष्णबन्धव इति कृष्णेन सनाथा इत्यभिमानेन पूज्यमाने । रौग्मिणेयः प्रद्युम्नः । अर्वाचीनाः पण्डिताः प्रासमुग्धाः–**'साम्बेन साकं भुजगेन्द्रलोकम्'** इति पाठं पठन्ति । अचार्यस्तु **'साम्बेन सार्द्धम्'** इत्येव पपाठ, शब्दप्रासादर्थन्यासो महानिति नः सूचयन्, मा च शब्दालङ्कारहृतहृदयोऽन्तेवासी भूदिति, मा वा स तेन तत्वमार्गे दुरवगमार्थावगाहं विस्मार्षीदिति । अस्ति चात्रार्थविशेषः । आ समन्ताद्दद्धानि अर्द्धानि दिव्यमन्दिराणि । **'पितुरर्द्धमेयाय'** इति श्रवणात् । तैः सहितं भुजगेन्द्रलोकं रौग्मिणेयः साम्बेन सार्द्धं ययाविति । नागलोकश्रियं द्रष्टुं ययावित्यर्थः ॥ १४३ ॥ अस्मत्पुरतः कियन्ताविमौ कुमारावित्यभिमानेन गर्वेण सावज्ञं योधितः ॥ १४४–५ ॥ कृष्णेन पारिजाततरुर्हृत इति निमित्तं पुरस्कृत्य कृष्णपुत्रेण सह योद्धुमागतमिन्द्रपुत्रं जयन्तम् । प्रकटं जिगाय देवानां पश्यताम् । जेतुं पारयेयमिति सम्भावनया स्पर्धा संस्पर्धा । स्वर्गोद्यानलीलातरुः पारिजातः कृष्णेन नीतः । तेन हीनं विहारस्थानं नः शून्यमिव जातमिति जयन्तादयो व्यथिता आसन् । पारिजातापहर्तुः कृष्णस्य तनयौ दृष्ट्वा सा व्यथा पुनरुद्बुद्धा । पितुः सकाशे पराभवेऽपि पुत्रौ जित्वा तं तरुं प्रत्यानेतुं शक्नुयामिति भ्रान्त्या जयन्तः ससोदरो बालिश्यादेव युयुध इत्यर्थः । अमुष्यानुजं वृषभं प्रद्युम्नानुजः साम्बोऽजयत् । शम्भुरिति वृषभस्यैव नामान्तरम् । उभावपि पादमानिनौ ॥ १४६ ॥ ताभ्यामिन्द्रपुत्राभ्यां प्रत्यक्षं प्रतिकर्तुं च दग्धयानौ तौ कृष्णपुत्रौ तयोरिन्द्रपुत्रयोरस्त्राणि स्वकीयैरस्त्रवरैर्निहत्य, विद्राप्य च ताविन्द्रपुत्रौ । सुरैरिन्द्रेण चाऽदरेण पूजितौ विनाऽपि यानं खे वियया

१. 'विद्राव्य'

स विद्यया साम्बमुदूह्य रत्या प्रदत्तया रुग्मिणिनन्दनः[१] पुरीम् ।
ययौ ततो नारद आगमद् द्रुतं ज्ञातुं हरेर्बहुभार्य्यासु वृत्तिम् ॥ १४८ ॥

तं द्व्यष्टसाहस्रगृहेषु दृष्ट्वा तावत्स्वरूपैर्विहरन्तमेकम् ।
सुविस्मितः प्रययौ तं प्रणम्य शक्रप्रस्थं पूजितश्चात्र पार्थैः ॥ १४९ ॥

स आज्ञया ब्रह्मण आह कृष्णां क्रमात् कर्त्तुं भीम एवैकसंस्थाम् ।
अन्या देवीः स्वापयित्वा शरीरे तस्या भारत्याः पूर्णभोगार्त्थमेव ॥ १५० ॥

सुन्दोपसुन्दौ भ्रातरौ ब्रह्मवाक्यात् परस्परादन्यतो नैव वद्ध्यौ ।
तिलोत्तमार्त्थे निहतौ परस्परं तयोर्वधार्त्थे सृष्टया तेन दैत्यौ ॥ १५१ ॥

अतः पृथग् वत्सरतो भवत्सु क्रमात् कृष्णा तिष्ठतां योऽन्ययुक्ताम् ।
पश्येद् वोऽसौ वत्सरं तीर्त्थयात्रां [२]कुर्य्यादिति स्माथ चक्रुस्तथा ते ॥ १५२ ॥

ततः कदाचित् धर्म्मराजेन युक्तां शस्त्रागारे विप्रगोरक्षणार्त्थम् ।
शस्त्रादित्सुः फल्गुनोऽद्राक् स शस्त्रैर्दस्यून् हत्वा तीर्त्थयात्रोन्मुखोऽभूत्[३] ॥ १५३ ॥

**क्रमात् कालक्रमात् । कृष्णां भीम एव एक(सं)स्थां केवलमेकसंस्थां कर्तुम् ॥ १५० ॥ भ्रातरौ सुन्दोपसुन्दौ । तेन ब्रह्मणा ॥ १५१ ॥ वत्सरतः एकैकवत्सरम् । (वः) युष्माकं मध्ये ॥ १५२ ॥ अद्राक्**

---

ययतुः ॥ १४७ ॥ कया विद्यया? रत्या प्रदत्तया । प्रीतिपूर्वं दत्तं प्रदत्तम् ॥ १४८ ॥ द्व्यष्टसाहस्रगृहेषु साष्टोत्तरशतेषु । अचिन्त्याद्भुतदर्शनात् सुविस्मितः । दूरयानं प्रयाणम् । कार्यविशेषप्रकाशनाय यानं प्रयाणम् । परप्रेषणेन यानं प्रयाणम् ॥ १४९ ॥ एकस्मिन्नेव सम्पूर्णतया स्थिताम् ॥ १५० ॥ तिलोत्तमार्थे निहतौ । परस्परादन्यतो नैव वध्यौ कथं तिलोत्तमार्थे निहतौ? तेनानन्यवध्यत्वेन तयोर्वधार्थे तेन ब्रह्मणा सृष्टया तिलोत्तमया निमित्तभूतया परस्परं प्रयुद्ध्यैव निहतौ ॥ १५१ ॥ वत्सरतः वत्सरकाले कृष्णा भवत्सु क्रमात् पृथक् तिष्ठताम् । एकस्मिन् वत्सरे एकेन साकमिति क्रमात् । तेन कृष्णायाः क्रमाद् भीमनिष्ठातिशयः फलमिति तिष्ठतामित्यात्मनेभाषा । अथ नारदवचनस्य हितत्वादिष्टत्वाच्च ॥ १५२ ॥ कस्यचिद् विप्रस्य दस्युभिर्हृतानां गवां रक्षणार्थम् । अद्रागित्यक्षरलोपेन तस्य दर्शनजनितदोषलेपस्यापि लोपमाह । नारदपुरतः कृतसमयपालनार्थं तीर्थयात्रोन्मुखोऽभूत् ॥ १५३ ॥

---

१. **'रुक्मिणिनन्दनः' । 'रुग्मिणीनन्दनः'** इति क्वचित् ।
२. **'कुर्यात् तस्मादथ'** इति क्वचित् ।
३. **'–यात्रापरोऽभूत्'** इति क्वचित् ।

**युधिष्ठिराद्यैः सौहृदाद् वारितोऽपि ययौ सत्यार्थं स कदाचिद् द्युनद्याम् ।**
**कुर्वन् स्नानं मायया नागवध्वा हृतो लोकं भुजगानां क्षणेन ॥ १५४ ॥**

**तस्याः पिता गरुडेनाऽत्तपत्युः पुत्राकाङ्क्षी चोदयामास पार्त्थम् ।**
**संवत्सरब्रह्मचर्य्ये[1] तु पार्त्थैः कृष्णाहेतोः समये साधु बद्धम् ॥ १५५ ॥**

**पुनःपुनर्य्याच्यमानः स पार्त्थः पुत्रार्त्थमस्या[2] भुजगेन तस्याम् ।**
**उत्पादयामास सुतं कुजांशं नाम्नेरावन्तं[3] वरुणावेशयुक्तम् ॥ १५६ ॥**

**गुणाः पितुर्म्मातृजातिः सुतानां यस्मात् सतां प्रायशस्तेन नागः ।**
**बली च पार्त्थप्रथमोद्भवत्वान्मायाविदस्त्री च सुधार्म्मिकश्च ॥ १५७ ॥**

**ततो ययावर्ज्जुनस्तीर्त्थयात्राक्रमेण पाण्ड्यांस्तनयोऽस्य मात्रा ।**
**सह त्यक्तो भुजगैर्द्देवलोके सम्पूजितो न्यवसद् दैवतैश्च ॥ १५८ ॥**

**अद्राक्षीत् ॥ १५३–४ ॥ संवत्सरब्रह्मचर्ये समये सङ्केते ॥ १५५–८ ॥**

---

सत्यार्थं कृतस्य समयस्य सत्यत्वाय । सत्यार्थं शपथार्थम्, शपथपालनार्थमिति वा । नागवध्वा उलूप्या । कथमुलूपी? ऊरुभ्यामाप्याययतीति । ऊर्वोः पीनेति । विपुलनितम्बेत्यर्थः । नागाः स्वेच्छया बहुलं नराकारा इति नागवध्वेत्याह ॥१५४॥ कदाचित् स्वच्छन्दं सर्परूपेण चरन्तमुलूपीपतिं गरुडो जघासेत्याह–आत्तपत्युः । आत्तः भक्षितः पतिर्यस्याः । ननु समासान्तः स्त्रीलिङ्गोऽयं पतिशब्दः । तेन मतिशब्दवत् आत्तपतेरिति आत्तपत्या इति वा रूपं स्यात् । स्यादच्छन्दसि । छान्दसास्तु विविधं प्रयुञ्जाना विभाषन्ते । या यस्य भाषा तस्यां तस्य स्वाच्छन्द्यम् । न स तत्र वैयाकरणानां नासान्यासं सहत इति परमार्थः । अथापि विनेयानां बुद्धिवैशद्यार्थं क्वचित्क्वचिद् व्याकरणप्रक्रियामवादिष्म । नान्ततः पुनर्व्याकरणमेव शरणम् । अत एव वैयाकरणा अपि **'छन्दसि वा'** इति योगं विभज्य सर्वे विधयश्छन्दसि वैकल्पिका इत्याहुः । कृष्णाहेतोः पार्थैः कृते समये शपथे ॥ १५५ ॥ भुजगेन पित्रा धृतपुरुषरूपेण । इरावन्तम् । इरा इळा मातृत्वेनास्तीति कुज एवेरावा-नुच्यते । पुनःपुनर्याच्यमानः समयभङ्गेनापि याचकानामभीष्टपूरणं करणीयमिति मन्यमानः ॥ १५६ ॥ यस्मात् मातृजातिस्तस्मान्नागः । यस्मात् पितुर्गुणाः तस्मात् बली मायाविदस्त्री च सुधार्मिकश्च । मायावित् असुराणां मायां विदन् प्रतियोद्धुं प्रभुरित्यर्थः । मातृजातिः सुतानामिति बादरायणादिषु भग्नमिति प्रायश इत्याह ॥ १५७ ॥ पाण्ड्यान् द्रमिळानां

---

१. **'–त्सरं ब्रह्मचर्ये'** २. **'–मस्यां भु–'** इति क्वचित् ।

३. **'नाम्नैरावन्तम्'** इति प्राचीनादर्शे पठ्यते । प्रमादः सम्भाव्यते । **'आ+इरावन्तम्'**= एरावन्तमिति वा विच्छिद्य पठनीयम् । आ समन्ताद् रक्षार्थं वरुणावेशयुक्तमिति ।

सत्यात्ययान्नैव दोषोऽर्ज्जुनस्य तेजीयसश्चिन्तनीयः कथञ्चित् ।
श्रेष्ठापराधान्नान्यदोषस्य लेपस्तेजीयसां निर्ण्णयोऽयं हि शास्त्रे ॥ १५९ ॥

अतिस्नेहाच्चाग्रजाभ्यां तदस्य क्षान्तं सुता पाण्ड्यराजेन दत्ता ।
संवत्सरान्ते फल्गुनस्याभिरूपा[१] चित्राङ्गदा वीरसेनेन तोषात् ॥ १६० ॥

**एवं तर्ह्यर्जुनस्य सत्यात्ययदोष इत्यत आह— सत्यात्ययादिति । तेजीयसः महाज्ञानिनः अर्जुनस्य सत्यात्ययाद् दोषः कथञ्चित् सर्वात्मना नैव चिन्तनीयः । तेजीयसां दोषलेशो नास्तीत्युक्तस्यापवादमाह— श्रेष्ठेति । तेजीयसां श्रेष्ठापराधात् स्वोत्तमानामपराधात् अन्यदोषस्य लेपो न ॥ १५९ ॥ तर्ह्यर्जुनस्याप्यग्रजापराधः प्राप्त**

---

देशान् । यानद्य **'तमिळुनाडु'** इत्याहुः । अस्य तनय इरावान् मात्रा सह त्यक्तो विसर्जितो देवलोक एव न्यवसत् । भुजगैर्दैवतैश्च सम्पूजितः प्रीतिपूर्वं सत्कृतः ॥ १५८ ॥ श्रेष्ठापराधादिति । **'प्रशस्यस्य श्रः'** [अ.सू.५.३.६०] । प्रशस्यानामतिशयेन प्रशस्यः श्रेष्ठः । नात्रोलूपी तत्पिता वाऽर्जुनात् प्रशस्यतरौ । अग्रजौ च तं प्रीत्या चक्षमाते इति न ज्येष्ठापराधोऽपि । चन्द्रस्तु स्वरूपतः श्रेष्ठस्य गुरोर्दारांस्तारां परिजग्राहेति । तेन स्वयोग्यतातोऽधिकं पुण्यं सम्पादितमहीयत । यथा गौतम इन्द्रं शप्त्वा योग्यताधिकं तपःफलं विफलयामास । एवं सूर्योऽपि सुग्रीवत्वे स्वाग्रजस्येन्द्रावतारस्य वालिनो दाराणां तारायाः परिग्रहात् । तत्र न केवलं वाली श्रेष्ठः । तारा च । शची हि सा । तेन द्विधा श्रेष्ठापराधः । श्रेष्ठस्य श्रेष्ठायाश्च । विचित्रमेतत्, यदुभयत्रापि तारानामैव योषा प्राप्तहानिकारणं बभूवेति । तदेतदनुव्याख्याने स्फुटम्–**'चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् । प्राप्तहानिरभून्नैव क्लृप्तहानिः कथञ्चन'** [३.४.६] इति । एतेन उत्तराघस्याश्लेषो नाम क्लृप्तपुण्यहानिं प्रत्यकारणत्वं मोक्षं प्रत्यप्रतिबन्धकत्वं चेत्युक्तं भवति । तथाच द्वावपराधौ सुग्रीवकृतौ– ज्येष्ठभ्रातृमारणम्, तद्भार्याभोगश्च । ज्येष्ठभ्रातृमारणेन दोषेण कर्ण-जन्मनि स्वयमसुराविष्टो बभूव । तेन कृष्णं व्यरुणत् । पाण्डवपक्षं विहाय कौरवपक्षमाश्रयत । अथापि विशिष्य राम-सेवनात् हरिसन्निधानभाक् च बभूव । बहिः कृष्णविरहः । अन्तर्नित्यसन्निधानमिति । दोषस्तु असुरं सञ्चक्राम । अयं दोषमुक्तो बभूव । तद्भार्याभोगेन च न किमप्यनिष्टं बभूव । केवलं विशिष्य रामसेवनाल्लब्धमधिकं पुण्यं जहासेति । चन्द्रेऽप्येवम् । प्राप्तस्याधिकस्य पुण्यस्य हानिर्न क्लृप्तस्येति । यथा लक्ष्मणत्वेऽधिकसेवनात् प्राप्तमधिकपुण्यं बलभद्रत्वेऽहीयतेति । यदा यस्यात्ययो न दोषाय, किन्तु महते फलाय भवतीति जानन् हि तेजीयान् भवति । अल्पस्यापराधस्य महता तेजसा दहनक्षमो हि तेजीयान् भवति । अल्पमप्यपराधं न स्वानन्दाय, किन्तु परेषामुपकाराय कुर्वन्नुत्तीर्णापराधो हि तेजीयान् । अतिशयेन तेजस्वी तेजीयान् । नायमिह द्व्यर्थे भवतीयसुन्– द्वाविमौ तेजस्विनौ, अयमनयोरतिशयेन तेजस्वी तेजीयानिति । विभज्योपपदे ह्ययमीयसुन्– ये लोके सामान्यतस्तेजस्विन इति ख्यातास्तेभ्योऽयं तेजीयानिति । **'द्विवचनविभज्योपपदे तरबीयसुनौ'** [अ.सू.५.३.५७] इति हि पाणिनिः । तेजस्वीत्यस्य परत ईयसुनि विनो लुकि **'तेजीयान्'** इति रूपम् । **'विन्मतोर्लुक्'** [५.३.६५] इति च । **'परित्राणं च कर्तव्यमार्तानां पृथुलोचन । कृत्वा मम परित्राणं तव धर्मो न लुप्यते । यदिवाऽप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद् व्यतिक्रमः । स च ते धर्म एव स्याद् दत्वा प्राणान् ममार्जुन । भक्तां च भज मां पार्थ सतामेतन्मतं प्रभो'** [आ.प.२३४.३७–९] इत्युलूपीवचनं महाभारते ॥ १५९ ॥ संवत्सरान्ते । तेन नात्र ब्रह्मचर्यप्रतिज्ञाभङ्गः । अभिरूपा

---

१. **'–नस्यानुरूपा'**

**स वीरसेनस्त्वष्टुरंशो यमस्याप्यावेशयुक् सा च कन्या शची हि ।**
**तारादेहे सूर्य्यजस्याङ्गसङ्गात् स्वर्ग्गं नागादन्तरिक्षादिहाऽसीत् ॥ १६१ ॥**

**तेनैव हेतोर्न्नातिसामीप्यमासीत् तस्याः पार्त्थे पुत्रिकापुत्रधर्म्मा[1] ।**
**तस्यां जातो बभ्रुवाहोऽर्ज्जुनेन पूर्वं जयन्तः कामदेवांशयुक्तः ॥ १६२ ॥**

**पुत्रं वीरं जनयित्वाऽर्ज्जुनोऽतो गच्छन् प्रभासं शापतो ग्राहदेहाः ।**
**अमूमुचच्चाप्सरसः स पश्च ताभिर्ग्गृहीतः प्रविकृष्य तीरम् ॥ १६३ ॥**

**इत्यत आह– अतीति । अस्य अर्जुनस्य तत् स्त्रीपरिग्रहणम् ॥ १६०–६१ ॥ हेतोः हेतुना । तृतीयार्थे पञ्चमी ॥ १६२ ॥ अतः पाण्ड्यविषयात् ॥ १६३ ॥**

---

अनुरूपा । युवभिरभिलषितं रूपमस्या इति चाभिरूपा । विवाहयोग्या, यतः कन्या । रूपवती इन्द्रावतारस्यार्जुनस्य चानुरूपा । यतः शचीरूपा । पाण्ड्यराजेन दत्ता पत्नीत्वेन । नतूलूपीव नियुक्ता । **'पाण्डियन्'** इति द्रमिळभाषापदम् । नौः **'पाण्डी'** इत्युच्यते । नावा ये व्यवहरन्ति तेषां देशः पाण्ड्यदेशः । तेषां राजा पाण्ड्यराज इति । अथापि निर्वचनान्तरं भवति– पणायन्त इति पाण्ड्या इति । पण व्यवहारे । अस्यामनेन जातोऽपुत्रस्य म उत्तराधिकारी स्यात् पुत्रिकापुत्रधर्मेणेति तोषात् ॥ १६० ॥ त्वष्टुरादित्येष्वेकस्य । अष्टादश्यां कक्ष्यायां पठितस्य । त्वष्टुरग्रजः सूर्यः । तत्पुत्रो यमः । तेनाऽविष्टः । वीरा सेनाऽस्येति वीरसेनः । अस्यैव चित्रवाहन इति नामान्तरम् । तथाहि भारते–**'समुद्रतीरेण शनैर्मणलूरं जगाम ह । ततः सर्वाणि तीर्थानि पुण्यान्यायतनानि च । अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम् । मणलूरेश्वरं राजन् धर्मज्ञं चित्रवाहनम् । तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना'** [आ.प.२३५.१५–७] इति ॥ १६१ ॥ तेनैव हेतोः । तस्माद् हेतोः । तेन हेतुना वा । **'पञ्चसु तृतीया'** । तृतीयामारभ्य सप्तमीपर्यन्तं पञ्चस्वपि विभक्तिषु तृतीया भवतीति प्राचीनं सूत्रम् । ततस्तेनेति तृतीया तस्मादित्यर्थे भवति । प्राचीनसंस्कृतं पाणिनिव्याकरणमुग्धैर्विस्मृतप्रायं वैदिकवाङ्मयेष्वधीतिनां परिचिचाययिषुराचार्य एवंविधान् प्रयोगान् बहुलं करोति । साधवः शब्दा द्विविधाः पाणिनीया अपाणिनीयाश्चेति पण्डितानपि बोधयितुम् । **'व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन'** इति प्राचां वचनमनुसरन् पाणिनिरपि **'व्यत्ययो बहुलम्'** इति योगं प्रणिनाय । तद् यथा– **'वीणायै वाद्यमानायै'** । वीणाया वाद्यमानाया इति प्राप्ते । यथा वा– **'सहस्रनाम्ने पुरुषाय शाश्वते'** । सहस्रनाम्ने पुरुषाय शाश्वताय इति प्राप्ते । तस्याः पार्थे विषये, पार्थेन वा नातिसामीप्यमासीत् । पुत्रिकापुत्रधर्मा बभ्रुवाहस्तस्यामर्जुनेन जातः । पुत्रिकापुत्रधर्मेण पुत्रिकायां जातः पुत्रः स्वपुत्र इति समयेन जातः पुत्रिकापुत्रधर्मा बभ्रुवाहनः पिङ्गळाश्वः । तथाहि स्मरन्ति–**'अपुत्रेण मया कन्या दीयते तव भो वर । अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति'** इति । जयन्त इन्द्रपुत्र एकान्नविंश्यां कक्ष्यायां पठितः । इन्द्रसमकक्ष्येण कामदेवेन आविष्टः ॥ १६२ ॥ सामर्थ्यविशेषं प्रकटय्य कर्षणं प्रविकर्षणम् । तदेव च सम्प्रकर्षणम् । शापतो ग्राहदेहाः ।

---

१. '–धर्मात् ।'

एवं हि तासां शापमोक्षः प्रदत्तो यदाऽखिला वो युगपत् सम्प्रकर्षेत् ।
एकस्तदा निजरूपाप्तिरेवेत्यलं तुष्टेन ब्राह्मणेनाऽनतानाम् ॥ १६४ ॥

विप्रापहासात् कुत्सितयोनितस्ताः कन्यातीर्थे पाण्डवः सम्प्रमुच्य[१] ।
प्राप्तः प्रभासं वासुदेवानुजातां[२] शुश्राव रामेण सुयोधनोद्यताम् ॥ १६५ ॥

विचिन्त्य कार्य्यं यतिरूपं गृहीत्वा कुशस्थलीं प्रययौ तं समीपे ।
प्राप्तं कृष्णः प्राहसत् संविजानन् सत्यासहायः शयनीयाधिरूढः ॥ १६६ ॥

**कुतस्तासां शापः? केन वा दत्तः? कथं वा शापमोक्षः? कुत्र ताः स्थिता इत्यत आह– एवमित्यादिना ॥ १६४ ॥ सुयोधनोद्यतां दुर्योधनाय दातुमुद्यताम् ॥ १६५–७ ॥**

---

इयमत्र भारतगा कथा । आसन् धनपतेरिष्टाः कामगमाः पञ्चाप्सरसः–वर्गा, सौरभेयी, समीची, बुद्बुदा, लता चेति । वर्गा च वर्गमुख्या चतसृभिः सखीभिः साकं कदाचिच्चरन्ती कञ्चन विप्रतरुणं तपःशरणं ददर्श । अवततार च ताभिः सह तं देशं तस्य मुनेस्तपोविघ्नचिकीर्षया । ततः पञ्चापि तास्तं लिलोभयिषन्त्यो जगुश्च ननृतुश्च । अथापि नाकम्पत मुनिः । प्रत्युत ता एव कुपितः शशाप–**'ग्राहभूता जले यूयं चरिष्यथ शतं समाः'** इति । ततस्ता व्यथितास्तं तपोधनं शरणमगुः । प्रार्थयां च चक्रिरे–'रूपेण वयसा चैव कन्दर्पेण च दर्पिता वयमयुक्तमकुर्महि । तद्भवान् दयाघनः क्षन्तुमर्हति' इति । प्रसन्नस्तपोधन आह–'यदा च वो ग्राहभूता जलाद्युगपदेकः सम्प्रकर्षेत् तदा स्वं रूपं प्रतिपत्स्यथ' इति । तास्तमभिवाद्य प्रस्थिता देवर्षिदर्शितपद्यया दक्षिणे सागरानूपे पञ्चतीर्थेषु ग्राहभूता न्यूषुः । अथ यदृच्छया प्रभासं गच्छन्नर्जुनस्तं देशमाजगाम । तापसैर्वारितोऽपि स्नातुं तत् तीर्थमवततार । जगृहुश्च चरणे धनञ्जयं ग्राहभूतास्ताः कन्याः । सम्प्रकृष्टाश्च ताः सर्वाभरणभूषिता अप्सरसोऽभवन् शापमुक्ताः । ततस्तत् तीर्थपञ्चकं कन्यातीर्थमिति नारीतीर्थमिति च पप्रथ इति । तदधिष्ठानं क्षेत्रं सम्प्रति **'कन्याकुमारी'** इति व्यपदिश्यते । **'अगस्त्यतीर्थं सौभद्रं पौलोमं च सुपावनम् । कारन्धमं प्रसन्नं च हयमेधफलं च तत् । भारद्वाजस्य तीर्थं तु पापप्रशमनं महत् । एतानि पञ्च तीर्थानि ददर्श कुरुसत्तमः'** [आ.प.२३६.३–४] इत्यर्जुन-वनवासे । परस्परं सङ्गतेषु, यथा ग्राहाः पञ्चस्वपि सञ्चरेयुः, एषु तीर्थेषु पार्थः सौभद्रं तीर्थमाससाद । तत्रैव पञ्चापि ग्राहा एनमावव्रुः । **'ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम् । विगाह्य सहसा शूरः स्नानं चक्रे परन्तपः'** [२३६.९] इति । सुभद्रस्य महर्षेरिदं तीर्थमिति सौभद्रम् ॥ १६३ ॥ तदैव निजरूपाप्तिः ॥ १६४ ॥ सम्प्रमुच्य । सङ्कटात् सपदि मोक्षयित्वा । मुच्लृ मोक्षणे । आ गङ्गासागरसङ्गमात् सागरतीर एव सञ्चरन् प्रथमं द्रमिळानां देशमाप । तत्र द्रमिळकन्यां चित्राङ्गदामुवाह । ततः कन्यातीर्थे कन्या विप्रशापाच्च ग्राहदेहाच्च मुमोच । ततः केरळानामनन्तशयनक्षेत्रं स्यानन्दूरमाप । ततः क्रमशः कर्णाटे गोकर्णम्, तौळवदेशमपरान्तं च गत्वाऽन्ततः प्राप्तः प्रभासम् । प्रभास इति सम्प्रति गुर्जरदेशे सोमनाथक्षेत्रम् । रामेण तदाश्रयबलेन सुयोधनेनोद्वोढुमुद्यताम् । रामेण सुयोधनाय दातुमुद्यतां वा ॥ १६५ ॥ कुशस्थलीं द्वारकाम् । प्रययौ क्षिप्रं ययावित्यर्थः ।

---

१. **'सम्प्रमोच्य'** २. **'–नुजां ताम्'**

**सर्वज्ञा सा लीलया हासहेतुमपृच्छत् तं सोऽपि तस्यै बभाषे ।**
**लीलाभाजौ दर्शनार्त्थं पुनस्तावगच्छतां रैवतं शैलराजम्** ॥ १६७ ॥

**आक्रीडोऽसौ वृष्णिभोजान्धकानां[1] तत्रापश्यत् केशवः फल्गुनं तम् ।**
**स्वसुर्दाने सः प्रतिज्ञां[2] रहोऽस्मै चक्रे कृष्णोऽथाऽसदत् सर्ववृष्णीन्** ॥ १६८ ॥

**दृष्ट्वा गिरौ रौहिणेयो यतीन्द्रवेषं पार्त्थं ज्ञातियुक्तः प्रणम्य ।**
**चक्रे पूजां फल्गुनोऽपि प्रणामं गुणज्येष्ठोऽसीति चक्रे बलाय** ॥ १६९ ॥

**सर्वज्ञं तं वाग्ग्मिनं वीक्ष्य रामः कन्यागारे वर्षकाले निवासम् ।**
**सत्कारपूर्वं कारयेत्याह कृष्णं नैवेत्यूचे केशवो दोषवादी** ॥ १७० ॥

**युवा बली दर्शनीयोऽतिवाग्ग्मी नायं योग्यः कन्यकागारवासम् ।**
**इत्युक्तवन्तं राम आहाऽप्तविद्ये नास्मिञ्छङ्केत्येव लोकाधिनाथम्** ॥ १७१ ॥

**नास्मन्मते रोचते त्वन्मतं तु सर्वेषां नः पूज्यमेवास्तु तेन ।**
**इत्युक्त्वा तं केशवः सोदरायै शुश्रूषस्वेत्याह सन्तं यतीन्द्रम्** ॥ १७२ ॥

**असौ रैवतः ॥ १६८–७१ ॥ सन्तं स्थितम् ॥ १७२–३ ॥**

---

सदा सर्वं अशेषविशेषैः सह जानन् । तमर्जुनं समीपे प्राप्तं च संविजानन् । प्राप्स्युद्देशं च सर्वं जानन् ॥ १६६ ॥ अर्जुनस्य दर्शनार्थम् । तौ सत्याकृष्णौ । प्रभासे सोमनाथसमीपे विद्यमानं रैवतं नाम शैलराजम्, सम्प्रति 'गिर्नार्' इत्यभिधीयमानम् ॥ १६७ ॥ अथ कृष्णः सर्ववृष्णीनासदत् । अथार्जुनश्च वृष्णीनासदत् ॥ १६८ ॥ वत्सरद्वयमकृत्तकेशश्मश्रुतया सुकरं धृतयतीन्द्रवेषम् । अत एवाज्ञातपार्थभावं रौहिणेयः प्रणम्य ॥ १६९ ॥ स्वयमेव शुक्लकेशरूपः सन् बलरामस्थस्तं वर्तयन् केशवः कृष्णः कन्यागारे निवासो नैवोचित इत्यूचे । अपरिचितस्य कन्यागारनिवासे सम्भावितान् दोषान् वदन् ॥ १७० ॥ युवैव कन्यानां मनः कर्षेत् । यदि बली च, अतीवकर्षेत्, यदि दर्शनीयः अतितरां कर्षेत् । यदि पुनरतिवाग्ग्मी, अतितमां कर्षेत् । उपपश्चाशोऽपि युवैवायम् । दृढकायश्च दर्शनीयश्च । अल्पसम्भाषणेनैव वाग्ग्मिता चास्याऽविष्कृतेति सर्वे दोषाः समाहिता इति नायं योग्यः कन्यकागारवासं प्रतीत्यूचे । **'बलवान् दर्शनीयश्च वाग्ग्मी श्रीमान् बहुश्रुतः । कन्यागारसमीपे तु न युक्तमिति मे मतिः'** [आ.प.२४०.२६] इति सुभद्राहरणे । **'वाचो ग्मिनिः'** [अ.सू.५.२.१२४] । वाक्+ग्मिन्= वाग्ग्मिन् । मुग्धा कन्या कन्यका । इत्येव इत्येवं कृष्णमूचे । लोकाधिनाथस्याप्यात्मानं नाथं मन्यमानः ॥ १७१ ॥ अस्मदभिप्राये

---

१. **'–सौ भोजवृष्ण्यन्धकानाम्'** २. **'स प्रतिज्ञाम्'**

**नित्याप्रमत्ता साधु सन्तोषयेति प्रोक्ता तथा साऽकरोत् सोऽपि तत्र ।**
**चक्रे मासान् वार्षिकान् सत्कथाभिर्वासं वाक्यं श्रद्दधानो हरेस्तत् ॥ १७३ ॥**

**संयाचितः[1] फल्गुनेनाऽह वाक्यं यद् वासुदेवस्तन्न जानाति कश्चित् ।**
**ऋते पित्रोर्विपृथोः सात्यकेर्वा सुभद्रां ते प्रददानीति सत्यम् ॥ १७४ ॥**

**अस्त्रे शस्त्रे तत्वविद्यासु[2] चैव शिष्यः शैनेयो वासुदेवेन्द्रसून्वोः ।**
**तस्मादस्मै कथयामास कृष्णः स्वशिष्यत्वाद् विपृथोश्चापि सर्वम् ॥ १७५ ॥**

**अन्ये[3] सर्वे वासुदेवस्य पार्थान् प्रियान् नित्यं[4] जानमाना अपि स्म ।**
**रामेणाऽदिष्टा उद्धवोऽथाऽहुकाद्या हार्दिक्याद्या नैव दित्सन्ति जिष्णोः ॥ १७६ ॥**

**फल्गुनेन संयाचितः वासुदेवः सुभद्रां ते प्रददानीति यत् सत्यं वाक्यमाह तत् कश्चित् नैव जानाति ॥ १७४–८ ॥**

---

पृष्टे, अस्मदभिप्रायानुसारं वा, अस्मभ्यं न रोचते । किन्तु त्वन्मतं नः पूज्यमेव । तेन त्वदुक्तमेवास्तु । सोदरा सोदरी । दोषदूरत्वादुदरो भगवान् । **'उदरं ब्रह्म'** इति च श्रुतिः । तेन स्वपक्षगतेन कृष्णेन सहितेति च सोदरा । अत एव कृष्णः पतिं शुश्रूषस्वेति साकूतमाह चक्षुषी विस्फार्य । सन्तं साधुं यतीन्द्रमिति मुखतो वचनम् । त्वदर्थे यतीन्द्रं सन्तमिति ध्वनिः ॥ १७२ ॥ सन्तोषय । यथा सन्तुष्टो यतीन्द्रः सर्वमभीष्टं दद्यात् तथा तोषय । कृष्णेन बलदेवेन च प्रोक्ता । दुर्योधनभार्या भूयादिति बलदेवाभीष्टम् । पार्थपत्नी भूयादिति वासुदेवाभीष्टम् । सुभद्राभीष्टं च ॥ १७३ ॥ मा सुयोधनो सुभद्रां लब्धेति उभयसम्मतस्य याचनं संयाचनम् । विपृथुः श्वफल्कानुजस्य चित्रकस्य सुतः । किं तद् वाक्यं यद् वासुदेव आह?– **'सुभद्रां ते प्रददानि'** इति सत्यं शपथरूपं वाक्यम् । सत्यं निश्चितं प्रददानीति वा । सत्यं निश्चितं वाक्यमिति वा । **'सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति'** इत्यभिधानम् ॥ १७४ ॥ तत्वविद्यासु चैव । चकारः समुच्चये । एवकारेण तस्यान्तरङ्गशिष्यत्वमवधारयति । कथमन्तरङ्गत्वमवधार्यते? य एव शिष्यः स शैनेय इति । स्वस्यार्जुनस्य च शिष्य इति प्रथमं शैनेयाय कथयामास । ततः स्वशिष्य इति विपृथोः कथयामास । शिष्यौ न कदाऽपि गुरूक्तं रहस्यं स्फोटयेतामिति । अस्मै सात्यकये कथयामासेति चतुर्थीं प्रयुयोज । विपृथोरपि कथयामासेति षष्ठीम् । अनेन विभक्तिव्यत्ययेनापि सात्यकौ प्रीत्यतिशयमाह । तद् यथा– भृत्यं प्राह, पुत्राय च प्राहेति । प्रीतिपूर्वं प्राहेत्यर्थः । विपृथोश्चेति चकारेण तस्यापि विश्वसनीयत्वं नाम प्राधान्यमाह । **'मुख्यत्वे चः प्रयुज्यते'** । यादवेषु तावुभौ सुभद्रामर्जुनाय दित्सत इति चैतयोरन्येभ्यः प्राधान्यम् । सुभद्राहरणे च सात्यकिविपृथू महत् कार्यं निर्वक्ष्यत इति च तयोर्विशिष्य प्राधान्यम् । तदेतत् सर्वं विपृथोश्चेति चकारेणाऽह ॥ १७५ ॥ नित्यं प्रियान् । नित्यं जानमाना अपि । अक्षराधिक्येन तेषां ज्ञानस्य दार्ढ्यमाह । अथापि न दित्सन्तीति विस्मयते

---

१. **'स याचितः'** इति क्वचित् । २. **'–शस्त्रे सर्वविद्यासु'** ३. **'अन्येऽपि सर्वे'** ४. **'प्रियान् सदा'** इति क्वचित् ।

**दुर्य्योधने दातुमिच्छन्ति सर्वे रामप्रियार्त्थं जानमाना हरेस्तत् ।**
**अप्यप्रियं राक्षसावेशयुक्तास्तस्मात् सर्वान् वञ्चयामास कृष्णः ॥ १७७ ॥**

**प्रद्युम्नसाम्बप्रमुखाश्च वञ्चिता ययुस्तीर्त्थार्त्थं रामयुक्ताः समग्राः ।**
**पिण्डोद्धारं तत्र महोत्सवेष्वेवाऽवर्त्तयत्सु[1] क्वचिदूचे सुभद्रा ॥ १७८ ॥**

**यते तीर्त्थानाचरन्[2] बान्धवांस्त्वमद्राक्षीर्न्नः कच्चिदिष्टान्[3] स्म पार्त्थान् ।**
**कुन्तीं कृष्णां चेत्याह पृष्टः स पार्त्थ ओमित्येतेषामाह[4] चानामयं सः ॥ १७९ ॥**

**भूयः साऽवादीद् भगवन्निन्द्रसूनुर्ग्गतस्तीर्त्थार्त्थं ब्राह्मणेभ्यः श्रुतो मे ।**
**कच्चिद्[5] दृष्टो भवतेत्योमिति स्म पार्थोऽप्यूचे[6] क्वेति साऽपृच्छदेनम् ॥ १८० ॥**

**अनामयं क्षेमम् ॥ १७९–८४ ॥**

---

स्मेति । अतीते च स्मः । न दित्सन्ति स्म नादित्सन् । तत्रापि हेतुः जानमाना इति । बहुजनाभिप्रायं मानयन्तः । उद्धवः कृष्णभक्तेषु प्रवर इति तस्य नाम प्रथमं जग्राह । अन्ये कृष्णभक्तौ ततोऽनन्तरा इत्यथेत्याह । आहुकाद्या वृद्धाः । हार्दिक्याद्या सवयसः । अतः पृथगुक्तिः । जिष्णोः सुभद्रां नैव दित्सन्ति । षष्ठ्या दानेऽनादरमाह ॥ १७६ ॥ जानमाना अपि ॥ १७७ ॥ उक्ता वृद्धाः । उक्ताः सवयसः । अथेदानीं कनीयस आह– प्रद्युम्नसाम्बप्रमुखाश्च । आत्मनः प्रियपुत्रौ देवोत्तमौ द्वौ मुखत आह । कृष्णप्रियावपि पुत्रौ कृष्णप्रियमिदं नान्वमन्येतामिति । न केवलं बन्धवः । प्रद्युम्नसाम्बप्रमुखाः पुत्राश्चेति च । दत्तेन पिण्डेन पितॄनुद्धरतीति पिण्डोद्धारं पिण्डारकापरनामधेयं तीर्थम् । **'प्रभासं चोदधौ तीर्थं त्रिषु लोकेषु विश्रुतम् । तत्र पिण्डारकं नाम तापसाचरितं शिवम्'** [व.प.८६.२०] इति तीर्थयात्रायाम् । महोत्सवेष्वात्मानं प्रवर्तयत्सु प्रद्युम्नादिषु । स्वार्थे वा णिच् । महोत्सवेषु प्रवर्तमानेषु । क्वचिदेकान्ते ॥ १७८ ॥ तीर्थानाचरन् विधिपूर्वकं सञ्चरन् । तीर्थस्तीर्थमित्युभयलिङ्गम् । तथाहि पुरुषोत्तमदेवः पुन्नपुंसकाधिकारे– **'कान्तारकङ्कणतडागकिरीटराष्ट्रतीर्थव्रणस्तबकसङ्क्रम-पीठकानि'** इति । तीर्थान् पुण्यक्षेत्राणि पुण्यजलानि च । तीर्थान् तत्वशास्त्राणि च आचरन् आचरणपूर्वकमनुवर्तमानः । साधुपथादनपगत इत्यर्थः । आचरन् तत्रतत्र सञ्चरन्, तीर्थभूतान् पूज्यान् नो बान्धवान् पार्थान्, कुन्तीं कृष्णां च । इत्यूचे सुभद्रा । इति पृष्टः स यतिवेषः पार्थ ओमित्याह । एतेषामनामयं चाऽह ॥ १७९ ॥ गतः श्रुतो मया ॥ १८० ॥

---

१. **'–त्सवेषु स्वावर्तयत्सु'** । **'स्वावर्तत्सु'** इति क्वचित् । **'प्रवर्तत्सु'** इति च ।

२. **'तीर्थान्याचरन्'**

३. **'क्वचिदिष्टान्'** । **'क्वचिदिष्टांश्च पा–'** इति क्वचित् ।

४. **'ओमित्येषामाह'** । **'ओमित्येषामथ चा–'** इति क्वचित् ।

५. **'क्वचित्'**

६. **'पार्थो ह्यूचे'** इति क्वचित् ।

अत्रैवेति स्मयमानं च पार्थं पुनःपुनः पर्य्यपृच्छच्छुभाङ्गी ।
सोऽप्याहोन्मत्ते सोऽस्मि हीति स्मयंस्तां[१] फुल्लाक्षी तं सा ददर्शातिहृष्टा ॥ १८१ ॥

ततो हर्षाल्लज्जया चोत्पलाक्षी किञ्चिन्नोचे पार्थ एनामुवाच ।
कामाविष्टो मुख्यकालो ह्ययं नावुद्वाहार्थोक्तस्त्विति[२] सा चैनमाह ॥ १८२ ॥

नातिक्रमो वासुदेवस्य युक्तस्तस्मात् तेन स्वपितृभ्यां च दत्ताम् ।
युक्तो निजैर्बन्धुभिश्चोत्सवे मां समुद्वहेत्यथ कृष्णं स दध्यौ ॥ १८३ ॥

मातापितृभ्यां सहितोऽथ कृष्णस्तत्रैवाऽयाद् वासवश्चाथ शच्या ।
समं मुनीन्द्रैः फल्गुनेन स्मृतः [३]संस्तत्रैवाऽगात् प्रीतियुक्तो निशायाम् ॥ १८४ ॥

कृष्णस्ततः पुरुहूतेन साकं तयोर्विवाहं कारयामास सम्यक् ।
मातापितृभ्यां सात्यकिनाऽपि युक्तो महोत्सवेऽन्याविदितो[४] मुनीन्द्रैः ॥ १८५ ॥

ततः कृष्णः स्यन्दनं फल्गुनार्थे[५] निधाय स्वं प्रययौ तद्रजन्याम् ।
गते च शक्रे रथमारुरोह प्रातः पार्थः सहितो भार्य्ययैव[६] ॥ १८६ ॥

**मुनीन्द्रैः कारयामास ॥ १८५ ॥ तद्रजन्यां तस्यामेव रात्र्याम् ॥ १८६–७ ॥**

---

अत्रैवेति वदन्तं स्मयमानं च । स्मयन्, स्मितेन तां मोहयन्निति परस्मैभाषयाऽऽह ॥ १८१ ॥ कामाविष्टः पार्थः । उद्वाह-रूपाय प्रयोजनाय उक्तः शास्त्रविहितो मुख्यकालः । यादवानां बलराममुखानामसन्निधानादानुकूल्यं नाम विशेषं तुनाऽऽह । इत्येनामुवाच पार्थः ॥ १८२ ॥ तेन वासुदेवेन स्वपितृभ्यां च दत्तां मां स्वपितृभ्यां निजैर्बन्धुभिश्च युक्तो विवाहमहे मां समुद्वह इत्याह । अथ तस्मात् ॥ १८३ ॥ अथ ध्यानसमनन्तरमेव कृष्ण आयात् । तत्रैव यत्र सुभद्रार्जुनावास्ताम् । अथ कृष्णेन सह देवकीवसुदेवयोरागमनानन्तरम्, फल्गुनेन स्मृतः सन् वासवश्च शच्या सह अगात् आगाद्वा । तत्रैव यत्र कृष्णः स्वपितृभ्यां सहाऽयात् । 'निजबन्धुभिश्च युक्तः' इत्युक्तेः मुनीन्द्रैः सममागात्, वैष्णवा मम बान्धवा इति ज्ञापयन् ॥१८४॥ मुनीन्द्रैः मातापितृभ्यां कारयामास । मुनीन्द्रदेवेन्द्रसमागमेन महोत्सवे महति सन्तोषसमारम्भे ॥ १८५ ॥ तद्रजन्यामेव

---

१. **'सोऽहमिति स्वयं ताम्'** २. **'नावुद्वाहार्थेऽस्त्विति'** । **'नावुद्वाहार्थं त्विति'** इति, **'नावुद्वाहार्थोऽस्त्विति'** इति च क्वचित् ।
३. **'स्मृतः स तत्रैवा–'** ४. **'–न्याविदिते'** ५. **'फल्गुनार्थम्'** इति क्वचित् ।
६. **'पार्थः प्रययौ भार्य्यया च ।'** इति क्वचित् ।

सर्वायुधैर्युक्तरथं[१] समास्थिते गृहीतचापे फल्गुने द्वारवत्याम् ।
आसीद् रावः किङ्किमेतत् त्रिदण्डी कन्यां हरत्येष कोदण्डपाणिः ॥ १८७ ॥

ततस्तु तं सतनुत्रं महेन्द्रदत्ते दिव्ये कुण्डले वाससी च ।
दिव्यानि रत्नानि च भूषणानि[२] दृष्ट्वा बिभ्राणं रक्षिणोऽवारयन् स्म ॥ १८८ ॥

ततः स आबद्धतळाङ्गुलित्रः[३] सतूणीरश्चापमायम्य[४] बाणैः ।
चक्रेऽन्तरिक्षं प्रदिशो दिशश्च निरन्तरं शिक्षया विद्यया च ॥ १८९ ॥

चक्रे सारत्थ्यं केशवेनैतदर्त्थे[५] सुशिक्षिता तस्य सम्यक् सुभद्रा ।
तया पार्त्थो वारितो नैव कश्चिद् भिन्नत्वचं कृतवान् क्रीडमानः ॥ १९० ॥

स शिक्षया त्वद्भुतया[६] शरौघैर्विद्राप्य[७] तान् भीषयित्वैव सर्वान् ।
निर्गत्य पुर्य्या विपृथुं ददर्श रामेण पुर्य्यारक्षणे सन्नियुक्तम् ॥ १९१ ॥

**सतनुत्रं सकवचम् । रक्षिणः पुररक्षिणः ॥ १८८ ॥ आबद्धतळाङ्गुलित्र इति । (करतळाङ्गुलीस्त्रायत इति) तळाङ्गुलित्रम् । आबद्धं तळाङ्गुलित्रं येनासौ तथोक्तः । आनम्य आरोप्य ॥ १८९–९२ ॥**

---

कृष्णः प्रययौ दूरं ययौ रथान्तरेण, यथा स नक्तमत्राऽसीदिति संशयलेशोऽपि मा जनानां भूत् । तद्रजन्यामेव शक्रे च गते । भार्यया सहित एव रथमारुरोह ॥ १८६ ॥ समास्थिते समाधानेन निरातङ्कं रथमारुह्य प्रस्थिते । त्रिदण्डी कोदण्डपाणिर्बभूवेति विस्मयेन राव आसीत् । अथच यः कन्यां हरति एषकः अदण्डपाणिः । तर्हि कोऽसौ दण्डपाणिः, क्व च गतः स इति सम्भ्रमः समजनीति । त्रयाणां दण्डनाद् यमनात् त्रिदण्डी । कानि त्रीणि? त्रीणि करणानि कायवाङ्मनांसि । तत्सङ्केततया च त्रीन् दण्डान् संहतान् हस्ते धत्ते । नास्य यज्ञोपवीतत्यागः । शिक्यम्, कमण्डलुः, शिक्ये चाऽलाबवं [ಸೋರೆಬುರುಡೆ] भिक्षापात्रं चास्योपकरणानि ॥ १८७ ॥ तनुत्रमुरश्छादनं कवचम् । भूषणार्थानि रत्नानि कनकमयानि च भूषणानि । बिभ्राणं दृष्ट्वा ॥ १८८ ॥ तळाङ्गुलित्रं हस्तच्छादनं कवचम् । आयम्य ज्याबन्धेन संयम्य । शिक्षया अभ्यासपाटवेन । सुशिक्षिततयेत्येतत् । प्रदिशो दिशश्च निरन्तरा यथा स्युस्तथेति क्रियाविशेषणम् । अन्तरिक्षं निरन्तरं चक्रे । प्रदिशो दिशश्च निरन्तराश्चक्रे इति विपरिणामेनान्वयो वा ॥ १८९ ॥ एतदर्थमेव पूर्वं केशवेन सुशिक्षिता तस्यार्जुनस्य सम्यक् सारथ्यं चक्रे ॥ १९० ॥ पुर्याः निर्गत्य बाह्यद्वारे ददर्श । पुर्या आरक्षणे, पुरि आरक्षणे वा । सेनासमुदायेन

---

१. **‘–रथे समा–’** इति क्वचित् ।
२. **‘रत्नानि विभूषणानि’**
३. **‘–तलाङ्गुलित्रः’** । तळाङ्गुलित्रं पाश्चात्यैः glove इत्युच्यते
४. **‘–मानम्य’** इति वे.ती.सम्मतः पाठ इति भाति ।
५. **‘–नैतदर्त्थं सु–’**
६. **‘सुशिक्षयाऽत्यद्भुतया’**
७. **‘–विंद्राव्य तान्’**

प्रियं कुर्वन्निव रामस्य सोऽपि व्याजेन पार्त्थं सेनयैवाऽवृणोत् तम् ।
कृष्णादेशान्नैव पार्त्थस्य चक्रे सम्यग्रोधं युयुधे च च्छलेन ॥ १९२ ॥

एको ह्यसौ मरुतां सौम्यनामा शुश्रूषार्त्थं वासुदेवस्य जातः ।
तं यादवं शरवर्षैर्ववर्ष यथा क्षतं न भवेत् सव्यसाची ॥ १९३ ॥

निरायुधं विरथं चैव चक्रे[1] पार्त्थः सेनां तस्य नैवाहनच्च ।
दृष्ट्वा शरांस्तस्य तीक्ष्णांस्त्वचोऽपि नच्छेदकान् विपृथुः सन्तुतोष[2] ॥ १९४ ॥

शिक्षां पार्त्थस्याधिकं[3] मानयान उपेत्य पार्त्थं च शशंस सर्वम्[4] ।
आज्ञां विष्णोः सन्नियुद्ध्य[5]न्निवास्मै कृत्तायुधः फल्गुनेनैव पूर्वम् ॥ १९५ ॥

ततः पराजितवच्छीघ्रमेत्य शशंस सर्वं हलिनेऽथ सोऽपि ।
प्रद्युम्नसाम्बादियुतोऽथ कोपादायात् पुरीं हन्तुकामोऽर्ज्जुनं च ॥ १९६ ॥

कृष्णोऽपि सर्वं विपृथोर्न्निशम्य प्राप्तः सुधर्म्मां विमना इवाऽसीत् ।
अवाङ्मुखस्तत्र यदुप्रवीराः प्रद्युम्नाद्या आहुरुच्चैर्न्नदन्तः ॥ १९७ ॥

**असौ विपृथुः पूर्वं मरुतां मध्ये सौम्यनामा एकः मरुदिति शेषः ॥ १९३–४ ॥ पूर्वमेव फल्गुनेन कृत्तायुधः अत एव सन्नियुध्यन्निव मुष्टियुद्धं कुर्वन्निव ॥ १९५–७ ॥**

---

सह नियुक्तम् ॥ १९१ ॥ व्याजेनैव । ननु रामेण नियुक्तः कथं तस्मा एव दुद्रोह? कृष्णादेशात् । रामस्यापि हितं चिकीर्षुश्छलेन युयुध इत्यर्थः ॥ १९२ ॥ सव्येनापि पाणिना सचते शरानिति सव्यसाची पार्थः । षच समवाये । सव्यसाची च मुधैव युयुध इत्याह– यथा क्षतं न भवेत् तथेति ॥ १९३ ॥ तीक्ष्णानपि शरान् प्रयोगपाटवेन त्वचोऽपि नच्छेदकान् ॥ १९४ ॥ सर्वं वृत्तं शशंस अस्मै पार्थाय, विष्णोराज्ञां मानयानः सन्नियुध्यन्निव । पूर्वमेव कृत्तायुधतया फल्गुनेन सङ्गत्य नियुद्धं मुष्टियुद्धं कुर्वन्तमिवाऽत्मानं दर्शयन्, तद्व्याजेन पार्थसमीपमेत्य विष्णोराज्ञां च तस्मै कर्णे शशंस । तथा सर्व-मन्यच्च वृत्तं तस्मै शशंसेति वा ॥ १९५ ॥ अथार्जुनाय शंसनानन्तरं सर्वं हलिनेऽपि शशंस विपृथुः । अथ श्रवणसमनन्त-रमेव, अथ तस्मादविश्वसनीयवृत्तश्रवणादेव सोऽपि कोपादायात् । हन्तुकामोऽर्जुनं च । चकारेण तद्धस्तात् सुभद्रां रक्षितुकामश्च ॥ १९६ ॥ विमना इवावाङ्मुखः ॥ १९७ ॥

---

१. 'चैव पार्त्थः सेनां चक्रे तस्य' इति कचित् । २. 'विपृथुस्तं तुतोष' ३. '–स्याधिकां मा–'
४. 'सर्वाम्' ५. 'सन्निविध्यन्निवा–' इति कचित् ।

मायाव्रतं तं विनिहत्य शीघ्रं[1] वयं सुभद्रामानयामः क्षणेन ।
इत्युक्तवाक्यानवदद् बलस्तान् कृष्णाज्ञया यान्तु न स्वेच्छयैव ॥ १९८ ॥

ज्ञातव्यमेतस्य मतं पुरस्ताद्धरेर्विरोधे न जयो भवेद् वः ।
इत्युक्तवाक्ये हलिनि स्म सर्वे पप्रच्छुरानम्य जनार्दनं तम् ॥ १९९ ॥

अथाब्रवीद् वासुदेवोऽमितौजाः शृण्वन्तु सर्वे वचनं मदीयम् ।
पुरैवोक्तं तन्मया कन्यकाया मायाव्रतो नार्हति[2] सन्निधिस्थितिम् ॥ २०० ॥

तां मे वाचं नाग्रहीदग्रजोऽयं बहून् दोषान् व्याहरतोऽप्यतो मया ।
अनुल्लङ्घ्यत्वादग्रजोऽनुप्रवृत्तः कन्यागृहे वासने कूटबुद्धेः ॥ २०१ ॥

अतीतश्चायं कार्य्ययोगोऽसमक्षं हृता कन्याऽतो[3] नोऽत्र का मानहानिः ।
भूयस्तरां मानिनस्तस्य सा स्याज्ज्ञाता च वो विपृथोः पार्थताऽस्य ॥ २०२ ॥

देया च कन्या नास्ति पार्थेन तुल्यो वरोऽस्माकं कौरवेयश्च पार्थः ।
पौत्रश्च कृष्णस्य सुपूर्णशक्तेः पैतृष्वसेयो वीरतमो गुणाढ्यः ॥ २०३ ॥

**मायाव्रतम्, मा(य)या यतिव्रतं यस्यासौ तथोक्तः (तम्) ॥ १९८–९ ॥ मया तत् पुरैवोक्तम् । तदिति किमित्यत आह– कन्यकाया इत्यादिना ॥ २०० ॥ अतः मद्वाक्यस्यागृहीतत्वात् ॥ २०१ ॥ असमक्षं अस्माभिरविज्ञातं यथा भवति तथा । अतः असमक्षं कन्याहरणात् । कोऽयं भूयस्तरां मानीत्यतस्तत्स्वरूपं युष्माभिरविज्ञातं किमित्याह– ज्ञाता चेति ॥ २०२ ॥ अस्त्वयं पार्थोऽस्माभिर्ज्ञात इति । तथाऽपि**

---

मायामुनिव्रतम् । शीघ्रं विनिहत्य विद्राव्य वा निगृह्य वा, हत्वा वा ततः क्षणेन सुभद्रामानयामः । क्षणेन विजयोत्सवेन वा ॥ १९८ ॥ एतस्य हरेः प्राप्तव्यसनपरिहर्तुः कृष्णस्य मतम् पुरस्तात् प्रथमं ज्ञातव्यम् । आनम्य, कृष्णसमीपमागत्य नत्वा । दुष्टजनार्दनमर्जुनार्दनाय पप्रच्छुः ॥ १९९ ॥ मुग्धायाः कन्यायाः सन्निधाने एकान्तस्थितिम् ॥२००॥ अनुप्रवृत्तः अनुसृतः । कूटबुद्धेः कुटिलमतेः । कूटं विपरीतदर्शनम् ॥ २०१ ॥ कार्यस्य सुभद्राहरणरूपस्य योगः प्रयोगः, घटना वा । नोऽसमक्षमसन्निधाने । अतः असन्निधानादेव नः कन्या हृता । अत्र विषये नः का मानहानिः? यदि स्यात्, भूयस्तरां मानिनस्तस्यैव स्तेनवदसमक्षं कन्यापहरणान्मानहानिः स्यात् । विपृथोः सकाशात् । तद्वचनेनेति यावत् । **'मतिबुद्धि-पूजार्थेभ्यश्च'** [अ.सू.३.२.१८८] इति स्मरणात् व इति षष्ठी ॥ २०२ ॥ कौरवेयः कौरवेषु प्रधानः । पैतृष्वसेय इति

---

१. **'तं निहत्याथ शीघ्रम्'** इति क्वचित् । २. **'–व्रतोऽसौ नार्हति'** ३. **'कन्या नोऽत्र'**

अर्त्थ्योऽस्माभिः स्वयमेवाहरत् स शक्रात्मजो नात्र नः कार्य्यहानिः ।
अनुद्रुत्यैनं यदि च[1] स्यात् पराजयो [2]हानिर्दृढं यशसो वो भवेत ॥ २०४ ॥

जित्वा यद्येनं[3] कन्यका चाऽहृता चेत्[4] परामृष्टां नैव कश्चिद्धि लिप्सेत्[5] ।
अतो न मे रोचते वोऽनुयानमित्यूचिवानास तूर्ष्णीं परेशः ॥ २०५ ॥

श्रुत्वा हली कृष्णवाक्यं बभाषे मा यात चित्तं विदितं ममास्य[6] ।
अस्यानुवृत्तिर्विजयाय नः स्याच्छुभाय शान्त्यै परतश्च मुक्त्यै ॥ २०६ ॥

ततोऽर्ज्जुनो यत्र तिष्ठन् न कश्चित्[7] पराजयं[8] याति कृष्णाज्ञयैव[9] ।
रथेन तेनैव ययौ सभार्य्यः शक्रप्रस्थं चाविशद्[10] भ्रातृगुप्तम् ॥ २०७ ॥

सम्भावितो भ्रातृभिश्चातितुष्टैरूचेऽथ सर्वं तेषु यच्चाऽत्मवृत्तम् ।
शान्तेषु [11]वाक्यादात्मनो यादवेषु कृष्णो युक्तो हलिनाऽगाच्च पार्त्थान् ॥ २०८ ॥

**सुभद्रामानयाम इत्यतस्तदयुक्तमित्याह– देयेत्यादिना । कन्या च देया । दातुं प्राप्तकाल इति भावः । कौर(वेय)श्चेति कुलीनत्वमाह । पौत्रश्च इत्यादिना वरस्य गुणान्तराण्याह । पैतृष्वसेय इति सम्बन्धयोग्यतामाह ॥ २०३ ॥ नात्र मानहानिः स्यादित्युक्तेरभिप्रायमाह– अर्थ्योऽस्माभिरिति ॥ २०४ ॥ 'एनं यदि जित्वा' इत्यनेनार्जुनजयोऽशक्य इति (सूचयति) । कथञ्चिज्जित्वा आहृता चेत् ॥ २०५ ॥ शान्त्यै बुद्धे(र्हरि)निष्ठतायै ॥ २०६ ॥ ततोऽनन्तरम्, अर्जुनः सभार्यो ययौ ॥ २०७–१० ॥**

---

रूपनिष्पत्तिरुक्ता ॥ २०३ ॥ अनुद्रुत्य च अनुसृत्यापि, भवेत । स्वयङ्कृतोऽयमपराध इत्यात्मनेभाषयाऽह । अथच जननार्थे भूधातुमात्मनेभाषं च मन्यन्ते । पुत्रो भवते पुत्रो जायत इत्यर्थः । एवं 'हानिर्भवेत' हानिर्जायेतेत्यर्थः ॥२०४॥ यदीति पक्षान्तरे । कन्यका चाऽहृता चेत् । आहृता चेदपि ॥ २०५ ॥ अस्य कृष्णस्य चित्तं विदितम् । अस्य कृष्णस्य तच्चित्तस्य वाऽनुवृत्तिः । शान्त्यै अयुद्धाय । मनःप्रसन्नतायै वा । अथ च इह परतश्च शान्त्यै स्यात् । इह शान्तिर्मनसः कृष्णप्रवणता । परतश्च शान्त्या इत्येतत् स्वयमेव व्याख्याति– मुक्त्या इति । **'शान्तिर्मोक्षोऽथ निर्बाणम्'** इत्यभिधानम् ॥ २०६ ॥ यत्र रथे । भ्रात्रा युधिष्ठिरेण, विशेषतश्च भ्रात्रा भीमेन । भ्रातृभिर्वा गुप्तं रक्षितम् ॥ २०७ ॥ अथ शक्रप्रस्थप्रवेशानन्तरं भ्रातृभिः

---

१. **'यदि वः स्यात्'** २. **'हानिर्ध्रुवम्'** इति क्वचित् । ३. **'जित्वा चैनम्'**
४. **'चाऽहृता स्यात्'** इति क्वचित् । ५. **'कश्चिद् विलिप्सेत्'** ६. **'मयाऽस्य'** । **'मयाऽद्य'** इति क्वचित् ।
७. **'तिष्ठेन्न कश्चित्'** इत्यपि क्वचित् । ८. **'पराभवं याति'** ९. **विष्ण्वाज्ञयैव'** इति क्वचित् ।
१०. **'–प्रस्थं प्राविशत्'** ११. **'वाक्यैरात्मनः'** इति क्वचित् ।

**सार्द्धं ययौ शकटै रत्नपूर्णैः शक्रप्रस्थं पूजितस्तत्र पार्थैः ।**
**ददौ तेषां तानि रामेण युक्तस्तथा कृष्णायै भूषणानि स्वसुश्च ॥ २०९ ॥**

**मासानुषित्वा कतिचिद् रौहिणेयो ययौ पुरीं स्वां केशवोऽत्रावसच्च ।**
**बहून् वर्षान् पाण्डवैः पूज्यमानः प्रीतिं तेषामादधानोऽधिकां च[1] ॥ २१० ॥**

**आसन् कृष्णायाः[2] पञ्च सुता गुणाढ्या विश्वे देवाः पञ्च गन्धर्वमुख्यैः ।**
**आविष्टास्ते चित्ररथाभिताम्रकिशोरगोपालबलैः क्रमेण ॥ २११ ॥**

**प्रतिविन्ध्यः सुतसोमः[3] श्रुताख्यकीर्त्तिः शतानीक[4] उत श्रुतक्रियः ।**
**युधिष्ठिराद्यैः क्रमशः प्रजातास्तेषां द्वयोश्चावरजोऽभिमन्युः ॥ २१२ ॥**

**पूर्वं पञ्च विश्वे देवाः कृष्णाया गुणाढ्याः पञ्च सुता आसन् ॥ २११–३ ॥**

सम्भावितोऽर्जुनः, अथ भ्रातॄणामतितोषं निरीक्ष्य तेषु सर्वमात्मवृत्तमूचे । इह च द्वारावत्यां आत्मनो वाक्येन यादवेषु शान्तेषु कृष्णः पार्थानगात् ॥ २०८ ॥ तेषां तेभ्यः, स्वस्रे च । चतुर्थ्यर्थे षष्ठी । कृष्णाया इति संवादात् । यद्वा तेषां स्वसुश्चेति पूर्वोत्तरसंवादात् कृष्णाया इत्यपि षष्ठ्यर्थे चतुर्थी । प्रयुञ्जते च च्छान्दसा आबन्तस्य षष्ठीस्थाने चतुर्थीम् । यथा–**'वीणाया वाद्यमानायाः'** इति वक्तव्ये **'वीणायै वाद्यमानायै'** इत्येव प्रयुञ्जते । **'चतुर्षु चतुर्थी'** इति च प्राचीनम् ॥ २०९ ॥ वर्षान् पाण्डवाभीष्टवर्षणान् वत्सरान् । बहूनिति पञ्चषान् । **'पुन्नपुंसकयोर्वर्षम्'** इत्यभिदधति । **'वर्षस्तु समाद्वीपांशवृष्टिषु'** इति च ॥ २१० ॥ विश्वे देवाः पञ्चेति । अत्र प्रमेयविशेषः कश्चन मार्कण्डेये स्मर्यते । तथाहि–विश्वामित्रेण भ्रंशितराज्यो हरिश्चन्द्रो बभूव । भार्यया सह तस्मिन् राज्यान्निर्जिगमिषति श्रमातुरां तद्भार्यां सहसा दण्डकाष्ठेन कौशिकस्ताडयामास । **'अथ विश्वे तदा देवाः पञ्च प्राहुः कृपालवः । विश्वामित्रः सुपापोऽयं लोकान् कान् समवाप्स्यति । येनायं यज्वनां श्रेष्ठः स्वाराज्यादवरोपितः । कस्य च श्रद्धया पूतं सुतं सोमं महाध्वरे । पीत्वा वयं प्रयास्यामो मुदं मन्त्रपुरःसरम् । इति तेषां वचः श्रुत्वा कौशिकोऽतिरुषाऽन्वितः । शशाप तान् मनुष्यत्वं सर्वे यूयमवाप्स्यथ । प्रसादितश्च तैः प्राह पुनरेव महा-मुनिः । मानुषत्वेऽपि भवतां भवित्री नैव सन्ततिः । न दारसङ्ग्रहश्चैव भविता नच मत्सरः । कामक्रोधविनिर्मुक्ता भविष्यथ सुराः पुनः । ततोऽवतेरुरंशैः स्वैर्देवास्ते कुरुवेश्मनि । द्रौपदीगर्भसम्भूताः पञ्च वै पाण्डुनन्दनाः । एतस्मात् कारणात् पञ्च पाण्डवेया महारथाः । न दारसङ्ग्रहं प्राप्ताः शापात् तस्य महामुनेः'** [मा.पु.७.६२–८] इति । अभितस्ताम्यतीति अभि-ताम्रः । तमु अभिकाङ्क्षायाम् । ताम्रवर्णो वा ताम्रः । क्लिश्यतीति किशोरः । **'क्लिशेः कोरः प्रत्ययो भवति ललोपश्च'** [का.उ.सू.वृ.६.६२] इति दुर्गसिंहः । कशतीति किशोरः, **'कश शब्दे'** इत्यन्ये । **' कशेरोरप्रत्ययः, अकारस्य चेकारादेशः'** [स.कं.वृ.२.३.६३] इति दण्डनाथः । गानेन गां पालयतीति गोपालः । बलतीति बलः । बल प्राणने ॥ २११ ॥ शत्रुभिरचाल्यतायां

१. **'–धिकां स्वाम् ।'**

२. **'कृष्णायाम्'** इति क्वचित् । **'कृष्णायाः पञ्च पुत्रा गु–'** इति च ।

३. **'श्रुतसोमः'** इति भ्रान्तः पाठः ।

४. **'श्रुतानीक–'** इति च ।

**चन्द्रांशयुक्तोऽतितरां बुधोऽसौ जातः सुभद्राजठरेऽर्ज्जुनेन ।**
**धर्म्मेरशक्रांशयुतोऽश्विनोश्च तथैव कृष्णस्य [1]स सन्निधानयुक् ॥ २१३ ॥**

**सर्वेऽपि ते वीर्य्यवन्तः सुरूपा भक्ता विष्णोः सर्वशास्त्रेष्वभिज्ञाः ।**
**मोदं ययुः पाण्डवास्तैः सुतैश्च विशेषतः सात्त्वतीनन्दनेन ॥ २१४ ॥**

**अभिज्ञाः सम्यक् परिचयवन्तः ॥ २१४ ॥**

---

विन्ध्यप्रतिभटः। सोमस्य पवमानस्य सुतः। सुते सोमे जातः सुतः सुतसोमः। विश्रुता कीर्तिरस्येति श्रुतकीर्तिः। तदेव स्फुटं निरुच्याऽह– सर्वैः श्रुतेत्याख्यायमाना कीर्तिरस्येति। शतमनीकानि एकाकी युध्यमानः शतानीकः। श्रुतानीक इति भ्रान्तः पाठः। विराटभ्राता हि श्रुतानीकः। न पाण्डवेयः। श्रुतक्रियः श्रुतकर्मा। तथाहि भारते– **'प्रतिविन्ध्यं युधिष्ठिरः, सुतसोमं वृकोदरः, श्रुतकीर्तिमर्जुनः, शतानीकं नकुलः, श्रुतकर्माणं सहदेवः'** [आ.प.६३.७४] इति। **'श्रुतानीको नकुलात्'** इति विष्णुपुराणवचनमपि लिपिकृत्प्रमाद एव। एते विश्वेषां देवानामवतारा इति भारतेऽप्युक्तम्–**'द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ। विश्वान् देवगणान् विद्धि सञ्जातान् भरतर्षभान्'** [आ.प.६८.१२७] इति। पञ्च विश्वान् देवान् विद्धि, प्रायः क्रतु-सव-काम-धुरि-पुरूरवान्। पञ्च देवगणान् गन्धर्वांश्च सह जातान् विद्धि इति भारतवचनार्थः। विश्वे देवा अष्टादश्यां कक्ष्यायां पठिताः। अष्टौ गन्धर्वमुख्या एकान्नविंश्याम्। तेषु प्रतिविन्ध्यादिषु पञ्चसु क्रमेणाऽविष्टाः। प्रायोऽधमेषूत्तमा आविशन्ति तेषां बलदानाय। अत्र तु विपर्ययेणोत्तमेषु देवेष्ववरा गन्धर्वा आविष्टाः स्वेषां भगवदनुग्रहविशेषलाभाय। द्वयोः प्रतिविन्ध्यसुतसोमयोः। **'अभीश्च मन्युमांश्चैव ततस्तमरिमर्दनम्। अभिमन्युरिति प्राहुरार्जुनिं पुरुषर्षभम्'** [आ.प.२४७.६३] इति हरणाहरणे ॥ २१२ ॥ भारते **'यस्तु वर्चा इति ख्यातः सोमपुत्रः प्रतापवान्। सोऽभिमन्युर्बृहत्कीतिरर्जुनस्य सुतोऽभवत्'** [आ.प.६८.११२] इति सम्भवे पठ्यते। कोऽयं वर्चा नामाश्रुतपूर्वः सोमपुत्रः? आह– बुधोऽसौ। यो भारते वर्चा उक्तः, असौ बुध इति। एतेन–**'विरजाः सोमसूनुः स पुनस्तत्र प्रळीयते'** [द्रो.प.५४.५७] इति भारतवचनं च गदितार्थम्। अथ पुनर्भारते पठ्यते–**'दिनक्षये महाबाहुर्मया भूयः समेष्यति'** [६८.१२३] इति चन्द्रवचनम्। अवताररूपाणि हि मूलरूपेण समेष्यन्ति। मूलरूपेणाभेदमेष्यन्तीति च वाक्यार्थः। प्राप्तिमात्रविवक्षायां मां समेष्यतीति स्यात्, न मयेति। तेन चन्द्रोऽयमिति प्रतीयते। तच्च सोमपुत्र इति पूर्ववचनेन विरुद्ध्यते। अत आह–चन्द्रांशयुक्तः। चन्द्रस्यांशेन युक्त आविष्ट इत्यर्थः। तथाचाभिमन्युर्बुधस्य स्वरूपावतारः। चन्द्रस्याऽवेशावतार इत्युदितं भवति। ननु नाऽविष्टानामवतारत्वव्यपदेशः। अन्यथा धर्मसमीरादयोऽप्याविष्टा इति तदवतारत्वमस्य स्यात्। न स्यात्। यतश्चन्द्रस्यातितरामावेशः। विष्णुरतितरामाविष्ट इति पृथुर्यथा विष्णोरवतार उच्यते। न तथा धर्मादीनां विशेषावेशः। अवतारे पितृस्थानीयैर्धर्मादिभिः केवलमाविष्टः। मूलरूपपित्रा समाविष्टः। तदेतदाह–चन्द्रांशयुक्तोऽतितरामिति। अश्विनोश्चांशयुतः। सर्वेषु कृष्णः सन्निहितः। अयं तु विशेषतः सन्निधानयुक् ॥ २१३ ॥ सात्वतीनन्दनेन अभिमन्युना ॥ २१४ ॥

---

१. **'–स्य च सन्नि–'**। **'सुसन्निधान–'** इति क्वचित्।

ततः कदाचित् खाण्डवं कृष्णपार्थौ चिक्रीडिषू सत्यभामासुभद्रे ।
आदाय यातौ परिचारकैश्च रथेन गन्धर्ववरानुगीतौ ॥ २१५ ॥

स्वैरं तयोस्तत्र विक्रीडतोश्च स्त्रीरत्नाभ्यां मन्दवातानुजुष्टे ।
वने प्रसूनस्तबकोरुराजिते जले च तिग्मद्युतिकन्यकायाः ॥ २१६ ॥

भूत्वा विप्रस्तौ ययाचेऽन्नमेत्य कृशानुरूचे च मते[१] रमेशितुः ।
पार्थः कीदृक् तेऽन्नमिष्टं वदेति स चावादीद्[२] वह्निरहं वनार्थी ॥ २१७ ॥

प्रयाजान् देवाननुयाजांश्च शुल्कं हविर्दाने देवतानामयाचिषम् ।
बलह्रासस्तव भूयादिति स्म शस्त्वैव ते तांश्च ददुः पुरा मम ॥ २१८ ॥

**रथेन यातौ ॥ २१५ ॥ तत्र वने ॥ २१६ ॥ कृशानुः विप्रो भूत्वा तौ उपेत्य अन्नं ययाचे । (मते) मतेन ॥ २१७ ॥ प्रयाजाननुयाजांश्च आहुतिविशेषान् ॥ २१८–९ ॥**

---

सत्यभामासुभद्रे । **'अभ्यर्हितं पूर्वम्'** । यथासङ्ख्यं च । परिचारकैश्च सहितौ रथेन यातौ ॥ २१५ ॥ विविधं विचित्रं च क्रीडतोः । उरु अतितरां राजिते । सूर्यकन्यकाया यमुनायाः ॥ २१६ ॥ रमेशितुः मते मतं विज्ञाय पार्थः कृशानुमूचे ॥ २१७ ॥ देवतानां हविर्दानार्थं शुल्कं देवानयाचिषम् । किम्? प्रयाजाननुयाजांश्च । किमिदं शुल्कं प्रयाजा अनुयाजा इति? यज्ञाङ्गभूता यागविशेषाः प्रयाजा अनुयाजा उच्यन्ते । **'प्रयाजानुयाजौ यज्ञाङ्गे'** [अ.सू.७.३.६२] इति हि पाणिनिः । **'प्रयाज-अनुयाज इत्येतौ निपात्येते यज्ञाङ्गे'** इति वामनः । प्रपूर्वादनुपूर्वाच्च यजेः घञि अकुत्वं निपात्यते यज्ञाङ्गेऽर्थे गम्यमान इत्यर्थः । प्रयाजा नाम मन्त्रा आहुतयश्च । अनुयाजा इति च । तथा हि दर्शपूर्णमासेष्टिप्रस्ताव आश्वलायनः–**'प्रयाजैश्च-रन्ति । पञ्चैते भवन्ति'** [आ.श्रौ.सू.१.५.१–२] इति । पञ्चप्रयाजदेवाश्च वसन्तादिपञ्चर्तुदेवताः, पञ्चरूपी च नारायणः । ऋतुदेवा एव समिदभिमानिनश्च । इडाप्राशनानन्तरं च–**'मार्जयित्वाऽनुयाजैश्चरन्ति । परिस्तरणैरञ्जलिमन्तर्धायाप आसे-चयते तन्मार्जनम् । देवादयोऽनुयाजाः । वीतवत्पदान्ताः । त्रयः'** [१.८.१–५] इति च । अयमर्थः–प्रयाजैर्मन्त्रैश्चरन्ति यजन्ति । ते च मन्त्राः पञ्च भवन्ति–**'ये३यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तु३ वौ३षट्'** इत्याद्याः । देवादय इति देवशब्दादयः, वेतुवीहीति पदान्तास्त्रयोऽनुयाजामन्त्रा भवन्ति–**'देवं बर्हिर्वसुवने वसुधेयस्य वेतु'** इत्याद्याः । यद्यपि **'पञ्चानुयाजाः'** इति काशिकायां वामनः पठति । किन्तु न क्वापि पञ्चानुयाजा पठ्यन्ते । अतो लिपिकृत्प्रमाद एवायमिति स्वव्याख्यायां हरदत्तो निराचष्ट–**'दर्शपूर्णमासयोस्त्रयोऽनुयाजाः । चातुर्मास्येषु नव । पशुष्वेकादश । पञ्चत्वं न क्वापि दृष्टम् । तस्मात् त्रयोऽनुयाजा इत्येव साधुः पाठः'** [प.मं.७.३.६३] इति । पशुष्वेकादश । यत्तु **'प्रयाजाननुयाजान् चतुर**

---

१. **'–रूचेऽनुमते'**

२. **'स चाब्रवीद्–'** इति क्वचित् ।

पुनः पूर्त्तिः केन मे स्याद् बलस्येत्यब्जोद्भवं पृष्टवानस्मि नत्वा ।
यदा वनं खाण्डवं हि त्वमत्सि तदा बलं ते भवतीति सोऽब्रवीत् ॥ २१९ ॥

शक्रस्येदं खाण्डवं तेन विघ्नं करोत्यसौ तेन वां प्रार्थयामि ।
इत्युक्ते तं पार्त्थ ऊचे यदि स्याद् रथो धनुश्चाथ शक्रं निरोत्स्ये ॥ २२० ॥

नरावेशादन्नदानप्रतिश्रवात् स्वस्यापि शक्रस्य विरोधमैच्छत् ।
पार्त्थः कृष्णस्य[1] प्रेरणाच्चैव वह्निः पार्त्थं ययाचे शक्रविरोधशान्त्यै ॥ २२१ ॥

नहि स्वदत्तस्य पुनः स वैरं शक्रः कुर्य्यात् स्वयमिन्द्रो हि पार्त्थः ।
नाप्रेरितो विष्णुना तस्य रोधं पार्त्थः कुर्य्यादिति कृष्णं ययाचे ॥ २२२ ॥

नचायुक्तः केशवेनैष शक्त [2]इति कृष्णादाप भूयोऽप्यनुज्ञाम् ।
ययौ समीपं च हरेर्बदर्य्यामादाय चक्रं चामुतः केशवेऽदात् ॥ २२३ ॥

चक्रं गोमन्ते कृष्णमापापि[3] पूर्वं भक्त्या वह्निः केशवेऽदात् पुनस्तत् ।
चक्रं च विष्णोर्बहुधा व्यवस्थितं तदग्निदत्तं प्राक्तनं चैकधाऽऽसीत् ॥ २२४ ॥

**तर्हि वनं भक्षय, किमावयोः प्रार्थनं क्रियत इत्यत आह– शक्रस्येति ॥ २२०–१ ॥ अथ तर्हि श्रीकृष्णार्जुनयोरुभयोरपि प्रार्थने निमित्तमाह– नेति । स शक्रः स्वदत्तस्य पुनर्वैरं न कुर्यादिति पार्थं ययाच इत्यत्रापि योज्यम् । तस्य शक्रस्य रोधम् ॥ २२२ ॥ कृष्णप्रार्थने निमित्तान्तरं चाऽह–नचेति । एषः पार्थः कृष्णेन अयुक्तः तत्सहायरहितः । अर्जुनप्रेरणार्थं पूर्वं याचितत्वात् पुनः सहायकरणार्थं याचनाद् भूय इत्युक्तम् । वनदाहानुज्ञाम् ॥ २२३–४ ॥**

---

**आहुतिविशेषान्'** इति व्याख्यानम्, तदवैदिकं निर्मूलं चेत्युपेक्ष्यम् । अधिकशुल्कयाचनेन कुपितास्ते शस्त्वैव शुल्कं ददुः ॥ २१८–२० ॥ नरावेशादन्नदानप्रतिश्रवात् मुख्यतः कृष्णस्य प्रेरणाच्च पार्थः स्वस्यापि शक्रस्य विरोधमैच्छत् । एवकारेण तस्य मुख्यकारणत्वमाह ॥ २२१ ॥ शक्रविरोधशान्त्या इत्युक्तमेव स्पष्टयति– नहीत्यादिना । स्वदत्तस्यैव निराकरणेन पुनर्न वैरं साधयेत् । रोधं विरोधं प्रतिरोधं च ॥ २२२ ॥ शक्रं रोद्धुं न शक्तः । कानीन्द्रियाणि । तेषामीशान् तत्वमानिनो देवानपि वर्तयतीति केशवः कृष्णः । बदर्यां स्थितस्य हरेः समीपं ययौ । हरिरिति नारायणभ्राता धर्मतनयः । अमुतः हरिनाम्नः केशवात् केशवे कृष्णरूपाय केशवाय ॥ २२३ ॥ पूर्वमपि ॥ २२४ ॥

---

१. **'कृष्णप्रेरणा–'** २. **'इति स्म कृष्णा–'** ३. **'–मायाद्धि पूर्वम्'**

धनुश्च गाण्डीवमथाब्जजस्य करोति येनाखिलसंहृतिं[१] सः ।
अंशेन दत्तं तदुमापतेश्च शक्रस्य सोमस्य जलेशितुश्च ॥ २२५ ॥

तेनैव ते जिग्युरथो जगत्त्रयं प्रसादतस्ते क्रमशोऽब्जयोनेः ।
अनन्यधार्य्यं विजयावहं च[२] भारेण लक्षस्य समं शुभावहम् ॥ २२६ ॥

रथं च शुभ्राश्वयुतं जयावहं तूणौ [३]तथा चाक्षयसायकौ शुभौ ।
ध्वजं च रामस्य हनूमदङ्कमादाय सर्वं वरुणादर्ज्जुनेऽदात् ॥ २२७ ॥

**गाण्डीवस्वरूपमाह– करोतीत्यादिना । श्रीब्रह्मणा तद् गाण्डीवधनुः उमापत्यादीनां अंशेन दत्तमित्यनेन विष्णोश्चक्रस्यापि बाहुरूप्यमुक्तम् । क्रमश एभ्यो दत्तम् ॥ २२५ ॥ अथो तेनैव जगत्त्रयं जिग्युः । 'प्रसादतस्तु क्रमशोऽब्जयोनेः' इति च क्वचित् पाठः । भारो नाम विंशतितुलः । भारेण लक्षस्य समं लक्षभारसममिति यावत् । अत एव अनन्यधार्यं तद्धनुरिति सम्बन्धः ॥ २२६–७ ॥**

अथेति विषयान्तरे । विवृतं चक्रचरितम् । अथ धनुश्चरितमुच्यत इति ॥ २२५ ॥ अत्र **'ते'** इति द्विः पठ्यते–**'तेनैव ते'** इति, **'प्रसादतस्ते'** इति । एकः पूर्वपरामर्शी । अपरः प्रसिद्धार्थे । अब्जयोनेः प्रसादतो लब्धेन तेनैव गाण्डीवेन ते पूर्वश्लोकोक्ता उमापत्यादयश्चत्वारः, क्रमशः तेनैव श्लोकोक्तक्रमेण, तारतम्यक्रमेणेत्येतत्, ते अखिलसंहृतिकरा इति प्रसिद्धाः सन्तः जगत्त्रयं जिग्युरिति । अपि चार्थान्तरमत्र स्फुटं प्रतिभाति । तथाहि– **'ते'** इति, **'नैव ते'** इति च प्रतृण्णम् । तेन त्रयस्तेशब्दाः । अयमर्थः–ते शिवाद्याः स्वयं नैव ते, न स्वतः सकलसंहृतिशक्तिमन्तः । अथो अथापि जगत्त्रयं जिग्युः । यतः अब्जयोनेः प्रसादतस्ते ते बभूवुः । तादृशशक्तिमन्तो बभूवुः । धनुर्दानमेवाब्जयोनेः प्रसाद इति । यत्तु केचित् तेते जिग्युरिति वीप्सार्थे द्विःप्रयोग इति व्याचक्षते तन्न साधु । वीप्सायां सहप्रयोगनैयत्यात् । नहि गृहेगृहे बालाः पठन्तीति वक्तव्ये गृहे बाला गृहे पठन्तीति शक्यं वक्तुम् । वीप्साया ऐकपद्यनियमाल्लोके च वेदे च । नहि यो धूमवान् यः स वह्निमान् स इति वीप्सा भवति । धन्विनां शक्त्यनुगुणं धनुषोऽपि शक्तिरभिव्यज्यत इति क्रमश इत्याह । भारेण लक्षस्य समम् । विंशतिलक्षतुलामानम् । भार इति हि विंशतिस्तुलाः[४] । 'ಹೊರೆ' इति भाषायाम् । वीराणां विजयावहम् । लोकस्य शुभावहम् ॥ २२६ ॥ श्वेताश्वैश्चतुर्भिर्युतम् । रथं च, अक्षयसायकौ तूणौ च, हनूमदङ्कं रामस्य ध्वजं च धनुश्च वरुणादानीयार्जुनायादात् । रामरावणयोर्युद्धे रामस्य यो ध्वज आस हनूमदङ्कः, स रामावतारानन्तरं वरुणे निधापितः । तमेव वरुणादानीयाग्निरर्जुनाय ददावित्यर्थः । चकारैरीदृशां रथादीनां दौर्लभ्यं चाऽह ॥ २२७ ॥

१. **'–संयतिम्'** २. **'–वहं रणे भारेण–'** इति क्वचित् । ३. **'तथैवाक्षय–'** इति क्वचित् ।

४. तुला=१० grams; २० तुलाः=१ भारः; ५भाराः=1kilo gram; १०० भाराः=20 kilo grams; १,००,००० भाराः= 2,000 kilo grams. देवतासन्निधानेन धनुषस्तावान् भार आसीदित्यर्थः । यथा कृष्णप्रतिमा भगवत्सन्निधानातिशयेन त्रिंशद्युतनरैः सुदुर्धरा बभूव ।

विशेषतो ध्वजसंस्थे हनूमत्यजेयता स्याज्जयरूपो यतोऽसौ ।
सर्वं च तद् दिव्यमभेद्यमेव विद्युत्प्रभा ज्या च गाण्डीवसंस्था ॥ २२८ ॥

गाण्डीवमप्यास कृष्णप्रसादाच्छक्यं धर्त्तुं पाण्डवस्याप्यधार्य्यम् ।
देवैश्च तैर्ब्रह्मवराद् धृतं तद् ब्रह्मैव साक्षात् प्रभुरस्य धारणे ॥ २२९ ॥

इन्द्रस्य दत्तश्च वरः स्वयम्भुवा तेनापि[१] पार्थस्य बभूव धार्य्यम् ।
इन्द्रो ह्यसौ फल्गुनत्वेन जातस्ततः सोऽस्त्रैः शरशालां चकार ॥ २३० ॥

स[२] योजनद्वादशकाभिविस्तृतं पुरं चकाराऽशु पुरन्दरात्मजः ।
हुताशनोऽप्याशु वनं प्रगृह्य प्रभक्षयामास समुद्धतार्चिः ॥ २३१ ॥

**तत् धनुरादि । गाण्डीवस्था ज्या च विद्युत्प्रभा । अ(भे)द्यत्वं ज्यां वर्जयित्वेति ज्ञातव्यम् । ('गुरोः सुतः चिच्छेद च ज्यां युधि गाण्डिवस्य') इति वक्ष्यमाणत्वात् ॥ २२८ ॥ अनन्यधार्यमर्जुनः कथं धत्त इत्यत आह–गाण्डीवमिति । ब्रह्म(वरात् तैः शिवाद्यैः धृतम् । साक्षाद् धारणे ब्रह्मैव प्रभु)रिति भावः ॥ २२९ ॥ अर्जुनेनैकधार्यत्वे निमित्तान्तरमप्याह– इन्द्रस्येति । ततः धनुरादिप्राप्त्यनन्तरम् ॥ २३० ॥ पुरं मन्दिरम् ॥ २३१ ॥**

---

धनुः, रथः, तूणौ, सायकाः, ध्वजश्चेति सर्वं च तद् दिव्यं दिविभवम् । मनुष्यलोकदुर्लभम् । ज्या च दिव्याऽभेद्या च । नह्यस्या ज्याया भेदनेन निरासः केनापि कृतः । नाप्यन्यां ज्यां कदाऽपि धनुषि योजयामास पार्थः । ज्यायाश्छेदो नाम धनुष्कोटि-बन्धच्छेद एव । च्छिन्नः पुनर्बध्यते । नतु भिन्नः पुनर्युज्यते । अत एव गाण्डीवसंस्थेत्याह । अवियोगेन सदा स्थिता हि संस्था । ननु नैवं वक्तुं शक्यते । ज्याया अश्वत्थाम्ना द्विश्छेदस्य वक्ष्यमाणत्वात्–**'–गुरोः सुतश्चिच्छेद च ज्यां युधि गाण्डिवस्य'** [२७.५४] इति, **'पुनस्तस्य नुनोद ज्याम्'** [५८] इति च । तत् कथमभेद्या ज्या? इत्थम् । दिव्यत्वाद-भेद्यमेवेत्युक्तत्वाज्ज्याऽप्यभेद्यैव । तर्हि कथं द्रौणिश्चिच्छेद? तदर्थं गाण्डिवाधिकारिभ्यः शिवादिभ्योऽन्यैरभेद्येति वक्तव्यम् । अथवा केनाप्यभेद्यैव । तस्मिन् पक्षे भेद्यता नाम पुनरुपयोगानर्हतया विदीर्णता । अतः सा गुरुसुतेन च्छिन्नाऽपि नानुपयुक्ता बभूव । छिन्ना पुना रुरोह । सैवान्या अच्छिन्ना ज्याऽसीत् । तथाहि तत्र पठ्यते–**'अथान्या ज्याऽऽसीत् तया गाण्डिवं सोऽप्ययुङ्क्त'** [५४] इति । यद्येवं विवक्षा नाभविष्यत् तदा **'अथान्यया ज्यया पुनर्गाण्डिवं सोऽप्ययुङ्क्त'** इत्यवक्ष्यत् । उत्तरपद्येऽपि–**'सन्धाय चापराम्'** इत्येवावक्ष्यत् ॥ २२८ ॥ पाण्डवस्यार्जुनस्याप्यधार्यमपि कृष्णप्रसादाद् धर्तुं शक्यमास । देवैः शिवेनेन्द्रेण सोमेन वरुणेन च ॥ २२९ ॥ ततः इन्द्रस्यैव फल्गुनत्वेन जातत्वात्, इन्द्रस्य च स्वयम्भुवा दत्तवरत्वात्, कृष्णप्रसादाच्च पार्थस्यापि गाण्डीवधारणे शक्तत्वात् ॥ २३० ॥ योजनानां द्वादशकं अभितश्चतुर्दिशं विस्तृतं पुरमग्नेर्भोजन-

---

१. '–वा ततोऽपि' २. 'चकार आयोजन–'

**प्रभक्ष्यमाणं निजकक्षमीक्ष्य सन्धुक्षयामास तदाऽऽशुशुक्षणिम् ।**
**अक्षोपमाभिर्बहुलेक्षणोऽम्भसां धाराभिराक्षुब्धमनाः क्षयाय ॥ २३२ ॥**

**अस्त्रैस्तु वृष्टिं विनिवार्य्य कृष्णः पार्थश्च शक्रं सुरपूगयुक्तम् ।**
**अयुद्ध्यतां सोऽपि पराजितोऽभूत् प्रीतश्च दृष्ट्वा बलमात्मनस्तत्[1] ॥ २३३ ॥**

**सन्धुक्षयामास क्लेशयामास । निरोधमकरोदिति भावः । धुक्ष धिक्ष सन्दीपक्लेशनजीवनेष्विति धातुः ॥ २३२–४ ॥**

---

शालामाशु चकार । द्वादश परिमाणमस्येति द्वादशकम् । योजनानि द्वादशैव वा योजनद्वादशकानि । **'सञ्ज्ञायाः सञ्ज्ञासङ्घसूत्राध्ययनेषु'** [५.१.५८] इति हि पाणिनिः । पुरन्दरात्मजः पुरं चकारेति । पिता पुरा पुरं ददार । तदात्मजस्तु पुरं चकारेति परिहसतीव । प्रगृह्य बलादाक्रम्य प्रभक्षयामास पूर्णं भक्षयामास ॥ २३१ ॥ तदा, बहुलेक्षणः सहस्राक्षः पुरन्दरः । निजकक्षमात्मना रक्षितमरण्यम् । **'कक्षः स्मृतो भुजामुले कक्षोऽरण्ये च वीरुधि । कक्षः शुष्कतृणे प्रोक्तः कक्षः कच्छ उदाहृतः'** इत्यभिदधति । अग्निना प्रभक्ष्यमाणमीक्षित्वा आक्षुब्धमनाः । आक्षुब्धं आघूर्णितं विह्वलं विचलं च मनो यस्य । क्षयाय वनं दहतोऽग्निज्वालस्य शक्तिक्षयाय । अक्षोपमाभिः । [2]अक्षः शकटचक्रबन्धनः स्थाणुः । येन रथसम्बद्धं चक्रं शकटं वहति चलति च । तद्वत् स्थूलाभिः **'ततोऽक्षमात्रा व्यसृजन् धाराः शतसहस्रशः । चोदिता देवराजेन जलदाः खाण्डवं प्रति'** [आ.प.२५२.१९] इति खाण्डवदाहे । अथाक्ष इति पशुबन्धनी रज्जुरुच्यते । रज्जुवत् स्थूलाभिः । अक्षा इति शरा उच्यन्ते । शरधाराभिरिवारुन्तुदाभिरम्भसां धाराभिराशुशुक्षणिमग्निं सन्धुक्षयामास । स्वार्थे णिच् । सन्दुधुक्षे । उद्दीपयामास क्लेशयामास च । उद्दीपनं 'ಹೊತ್ತು' इति भाषायाम् । धुक्ष सन्दीपनक्लेशनयोः । कथमाशुशुक्षणिरग्निः? **'आशौ शुषेः सनिक्'** [का.उ.सू.५.२१५] इति तु भोजः । शुषेः सनि शुशुक्षतीति रूपम् । अनिश्च प्रत्ययः । आ सर्वतः शुशुक्षति शोषयितु-मिच्छतीत्याशुशुक्षणिरिति । क्षकारो नृसिंहवचनः । भक्तानभयदानेन क्षमत इत्यभक्तान् क्षपयत इति । तेनाग्निगो नृसिंहा-ग्निरेव तद्विपिनं क्षपयामासेति सूचयन् पद्येऽस्मिन् नव क्षकारान् निबबन्ध । तद्यथाऽनुव्याख्याने मायावादिनां नृसिंहाग्निना क्षपणमाह–**'प्रत्यक्षेक्षाक्षमः साक्षात् कं पक्षमवलम्बते । तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेऽभ्युपेक्षितः'** इति । उभयत्रापि नवैव क्षकाराः । तेनेदमाह–नवविधया भक्त्या क्षमते । नवविधेन च द्वेषेण क्षपयत इति ॥ २३२ ॥ अयुध्यतामयुध्येताम् । युद्धफलमग्नितृप्तिरिति परस्मैभाषा । स शक्रः । अपिना सुरपूगयुक्तोऽपीत्याह । अर्जुनरूपस्याऽत्मनः तत् तादृशम्, मूलरूपस्याप्यभिभावकं कृष्णानुग्रहफलं बलं दृष्ट्वा प्रीतश्चाभूत् । तदर्जुनगं बलमात्मनः अन्तर्यामिणः कृष्णस्यैव, अथच आत्मनः स्वस्यैव तत् स्वाभिभवदं बलं दृष्ट्वा । अर्जुनस्य स्वरूपत्वात् ॥ २३३ ॥

---

१. **'–मात्मजस्य ।'** इति क्वचित् ।

२. अयमक्ष एव पाश्चात्यैराङ्ग्लैः 'Axis' इति कथ्यते । अक्षस्यैवायमपभ्रंशः ।

स्नेहं च कृष्णस्य [१]तदाऽर्जुने धृतं विलोक्य पार्थस्य बलं च तादृशम् ।
निवर्त्य मेघानतितुष्टचित्तः प्रणम्य कृष्णं तनयं समाश्लिषत् ॥ २३४ ॥

विष्णुश्च शक्रेण सहेत्य[२] केशवं समाश्लिषन्निर्विशेषोऽप्यनन्तम्[३] ।
स केवलं क्रीडमानः सशक्रः स्थितो हि पूर्वं युयुधे न किञ्चित् ॥ २३५ ॥

ब्रह्मा च शर्वश्च समेत्य कृष्णं प्रणम्य पार्थस्य च कृष्णनाम ।
सञ्चक्रतुश्चापि शिक्षाप्रकर्षाच्चक्रुश्च सर्वे[४] स्वास्त्रदाने प्रतिज्ञाम् ॥ २३६ ॥

**विष्णुः उपेन्द्रः पूर्वं शक्रार्जुनयुद्धसमये केवलं क्रीडमानः स्थितः । केवलमित्यस्यार्थः— न किञ्चिदपि युयुध इति ॥ २३५ ॥ शिक्षाप्रकर्षात् कृष्णनाम सञ्चक्रतुः । शिक्षया प्रकृष्टत्वात् कृष्णनामानं चक्रतुरित्यर्थः ॥ २३६ ॥**

---

पार्थस्य पृथासुतत्वेन मनुष्यलोके जातस्याप्यात्मनो बलं विलोक्य तुष्टः । परिशुद्धतयाऽर्जुने तस्मिन् कृष्णस्य स्नेहं विलोक्यातितमां तुष्टः । समाश्लिषत् सप्रेमाश्लिक्षत् । अन्योऽन्यमालिङ्गति । तरुणस्तरुणीमालिङ्गति । नात्र व्यक्तिभेद इति क्सं विलोपयामास । एवमुत्तरत्रापि ॥ २३४ ॥ सहेत्य । एङि पररूपमुपसर्गादन्यत्रापीत्युक्तम् । केशवं समाश्लिषत् । भिन्नौ हि सङ्गम्य परस्परमाश्लिष्यतः । अयं निर्विशेषोऽपि समाश्लिषत् । परिच्छिन्नौ हि समेत्याऽश्लिष्यतः । अयमनन्तमपरिच्छिन्नं अन्तवन्तमिव समाश्लिषदिति विस्मयते । स्वयमेव चान्यत्रैतदाह–**'अनन्तमन्तवदिव भुजयोरन्तरं गतम्'** इति । विष्णुपदेन चैतदेव सूचयाम्बभूव । विष्लृ व्याप्ताविति धातुपारायणात् सर्वगतो हि विष्णुरुच्यते । केशवं केशिहन्तारं कृष्णम् । कौ ब्रह्मवायू ईशौ येषां ते केशाः रुद्रेन्द्राद्याः सर्वसुराः । तेषु वर्तते, तान् वर्तयति चायमिति च केशवः । कौ च तेषामीशावयमेव वर्तयति । पूर्वं धाराभिरम्भसामाशुशुक्षणौ सन्धुक्ष्यमाणे क्रीडमानः सशक्रः स्थितः । परस्ताच्छक्रार्जुनयोर्युद्धावसरेऽपि स्वयं न युयुधे । किञ्चिदीषदपि । किन्तु केवलं क्रीडमानः स्थितः । क्रीडाकैवल्यं हि तत्स्वभावः । **'देवस्यैष स्वभावोऽयम्'** इति श्रुतेः ॥ २३५ ॥ केशवपदेन सूचितमिदानीं मुखत आह– ब्रह्मा च शर्वश्च । प्रकृष्यत इति कृष्णः उपसर्गलोपेन । सञ्चक्रतुः, अन्वर्थतया सङ्गतमुपपन्नं चक्रतुः । शिक्षाप्रकर्षादपि । अपिना युद्धकौशलेनाऽकर्षणादपि । शत्रूणां शक्तिविकर्षणादपि । बहूनामुपसर्गाणामत्र योगो विवक्षित इत्यत एवोपसर्गं विलोपयामास । कृष्णस्येव पार्थस्य च कृष्णनामेति चकारेण प्रतीतां समानयोग्यतां सञ्चक्रतुश्चेति चकारेण निराह । हीनत्वे चः । यद्यपि पार्थोऽपि कृष्णः । तथाऽपि तस्य कृष्णत्वं वासुदेवकृष्णात् कृष्णद्वैपायनात् कृष्णायाश्च हीनमिति ॥ २३६ ॥

---

१. **'तदर्जुने'** इति मूलकोशे । अन्यत्र कोशेषु **'तदाऽर्जुने'** इति । तेन मूलकोशे दीर्घस्खलनं सम्भाव्यते । **'तमर्जुने'** क्वचित् ।
२. **'सहैत्य'** ३. **'ऽप्यनन्तः ।'** ४. **'–चक्रुः सर्वे'** इति क्वचित् ।

अनुज्ञातास्ते प्रययुः केशवेन क्रीडार्थमिन्द्रो युयुधे हि तत्र ।
प्रीत्या कीर्त्तिं दातुमप्यर्ज्जुनस्य ततस्तुष्टः सह देवैस्तयोः सः[1] ॥ २३७ ॥

दैत्याश्च नागाश्च पिशाचयक्षा [2]हताः सर्वे तद्वनस्था हि ताभ्याम् ।
ऋते [3]चतुष्पक्षिणश्चाश्वसेनं मयं च नान्यत् किञ्चिदासात्र मुक्तम् ॥ २३८ ॥

अयमग्नेजरितेत्यादिमन्त्रैः स्तुत्वा वह्निं पक्षिणो नोपदग्धाः[4] ।
अश्वसेनः पुत्रकस्तक्षकस्य [5]मात्रा ग्रस्तः प्रातिलोम्येन कण्ठे ॥ २३९ ॥

छिन्नेऽर्ज्जुनेनान्तरिक्षे पतन्त्यास्तस्याः शक्रेणावितश्छिन्नपुच्छः ।
वधान्मातुः पुच्छभङ्गाच्च रोषाद्धन्तुं पार्त्थं कर्ण्णतूणीरगोऽभूत् ॥ २४० ॥

**ते ब्रह्मेन्द्रादयः ॥ २३७–८ ॥ तेषां केनकेन प्रकारेण मोक्षोऽभूदित्यत आह–अयमग्ने इत्यादिना । प्रातिलोम्येन अवाक्शिरस्त्वेन ॥ २३९ ॥ कर्णतूणीरगः बाणान्तर्गतत्वेन । 'ययौ बाणगतश्च नागः' इति वक्ष्यति ॥ २४० ॥**

---

क्रीडार्थं प्रीत्या युयुधे । नतु वैरनिर्यातनाय । आह हि पूर्वमेव–**'नहि स्वदत्तस्य पुनः स वैरं शक्रः कुर्यात् स्वयमिन्द्रो हि पार्थः'** [२२२] इति । क्रीडा च किमर्था?–कीर्तिं दातुमप्यर्जुनस्य । अपिना भगवदिच्छानुरोधाय चेत्याह । उक्तं हि **'बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः'** इति । ततः क्रीडार्थं युद्धकरणात्, युद्धे स्वस्य पराजयाच्च स इन्द्रस्तयोर्वासुदेवार्जुनयोर्लीलेयमिति तुष्टो बभूवेति ॥ २३७ ॥ जरितारिः स्तम्बमित्रः सारिसृक्कः द्रोणः इति चतुष्पक्षिणः । अश्वसेनमिति । **'तक्षकस्तु न तत्राऽसीन्नागराजो महाबलः । दह्यमाने वने तस्मिन् कुरुक्षेत्रं गतो हि सः । अश्वसेनोऽभवत् तत्र तक्षकस्य सुतो बली'** [आ.प.२५३. ४–५] इति च । **'तस्मिन् वने दह्यमाने षडग्निर्न ददाह च । अश्वसेनं मयं चैव चतुरः शार्ङ्गकांस्तथा'** [२५४.४७] इति च ॥ २३८ ॥ ऋग्वेदे दशममण्डले १४२तमे सूक्ते पठितैः **'अयमग्ने–'** इत्यादिभिरष्टभिर्मन्त्रैः स्तुत्वा । एकः पक्षी द्वाभ्यामिति संहत्याष्टभिः । उपसृत्य दाह उपदाहः । समीपतो दाह इत्यर्थः । देहोपरि निपत्य वा दाह उपदाहः । पक्षिणो नोपदग्धाः । अयमत्र पतत्रिणामितिहासः–अस्ति पुरा मन्दपालो नामर्षिः । स तपसः पारं गत्वा कदाचिद् देहमुत्ससर्ज । तस्य तदा पुण्यलोका आवृता आसन् । स देवान् पप्रच्छ–किमिमे आवृता मे लोकाः? इति । तस्मै होचुर्देवाः–'प्रथमं प्रजायस्व । तत इमान् लोकान् भोक्ष्यसे' इति । स चिन्तयामास–'क नु मे शीघ्रमपत्यं स्यात्'

---

१. **'देवैर्ययौ स्वः'** २. **'हताश्च सर्वे'** ३. **'चतुःपक्षिण–'**
४. **'नैव दग्धाः । स चाश्वसेनः'** ५. **'मातृग्रस्तः'** इति क्वचित् ।

इति । सोऽध्यगच्छत्–बहुप्रसवाः खगा इति । स शार्ङ्गको नाम पक्षी भूत्वा जरितां नाम शार्ङ्गिकामुपेयिवान् । तस्यां चतुरः पुत्रान् जनयामास ब्रह्मवादिनः । त इमे चतुष्पक्षिणः– जरितारिः सारिसृक्कः स्तम्बमित्रो द्रोण इति । **'जरितारौ कुलं ह्येतज्ज्येष्ठत्वेन प्रतिष्ठितम् । सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः । स्तम्बमित्रस्तपः कुर्याद् द्रोणो ब्रह्मविदां वरः'** [आ.प.२५६.९–१०] इत्युक्त्वा पिताऽन्यत्र प्रययौ । ते मात्रा सह खाण्डव एवैकस्मिन् वृक्ष ऊषुः । अथ ज्वलनः खाण्डवं ददाह । अत आत्मरक्षार्थमृषित्वेन पूर्वसंस्कारोपेताश्चतुष्पक्षिणो ज्वलनं प्राणनारायाणौ च वेदमन्त्रैः स्तुत्वा दाहान्मुक्ता इति ॥ ✲ ॥

एभिर्दृष्टा अष्टावृच ऋक्संहितायां [१०.१४२.१–८] पठ्यन्ते । द्वयोर्द्वयोः क्रमेण जरितारिः, द्रोणः, सारिसृक्कः, स्तम्ब-मित्रश्चर्षयः । जरिता, द्रोणः सारिसृक्तः स्तम्बमित्रश्चर्षय इति वैदिकानां सम्प्रदायो भारतविरोधाच्चिन्त्यः । प्राणनारायणावग्निश्च देवताः । आद्ये द्वे जगत्यौ । ततश्चतस्रस्त्रिष्टुभः । अन्त्ये द्वे अनुष्टुभौ । अथ मन्त्रार्थः–

**अयमग्नेजरितात्वेअभूदपिसहसस्सूनोनह्य१न्यदस्त्याप्यम् ।**
**भद्रंहिशर्मत्रिवरूथमस्तितआरेहिंसानामपदिद्युमाकृधि ॥ १ ॥**

**अयम् । अग्ने । जरिता । त्वेइति । अभूत् । अपि । सहसः । सूनोइति । नहि । अन्यत् । अस्ति । आप्यम् ॥**
**भद्रम् । हि । शर्म । त्रि+वरूथम् । अस्ति । ते । आरे । हिंसानाम् । अप । दिद्युम् । आ । कृधि ॥ १ ॥**

अत्राग्निरिति प्राणनारायणयोः प्रतीकभूतः खाण्डवं दहन्नग्निः, प्राणाग्निर्नारायणश्च स्तूयते । हे अग्ने, अयमपि कृच्छ्रं गतोऽपि पक्षिजन्मनि जातोऽप्ययं जरितारिः प्राक्तनपुण्यपरिपाकवशात् त्वे तव जरिता स्वदृष्टमन्त्राभ्यां स्तोताऽभूदित्यपिना विस्मयते । अग्नेः कारुण्यातिशयं च स्वदते । कथं जरितारिः? जरित्वा स्तुत्वा तारयत्यात्मानमिति जरितारिः । जॄ स्तुतिनिन्दयोः । जरिताजठरमियर्ति पुत्रत्वायेति वा । सहो बलम् । सहसः बलरूपस्य वायोः पुत्र वीतिहोत्र । **'वायोरग्निः'** इति श्रुतेः । बलरूपस्य सङ्कर्षणस्य पुत्र पवमान । ज्ञानितमस्य पवमानस्य पुत्र नारायण । **'यस्ता विजानात् स पितुः पिताऽसत्'** इति श्रुतेः । सम्प्रति त्वत्तोऽन्यत् रक्षार्थमाप्यं नह्यस्ति । आप्यमम्मयं सर्वं त्वत्तोऽन्यन्नास्तीति च, जनकत्वात् तव । **'अग्नेरापः'** इति श्रुतेः । वरणाद् वरूथं स्थानम् । त्रिवरूथं भूर्भुवः सुवरिति त्रिस्थानकं भद्रं शर्म धाम तवाग्नेरस्ति हि । अग्निवाय्वादित्याख्यं शरणं प्राणस्य नारायणस्य च । अथच नारायणस्य तव त्रिषु स्थानेषु गुप्तं भद्रं कल्याणतमं सुखमयं धाम श्वेतद्वीपानन्तासनवैकुण्ठाख्यमस्ति हि । यच्च धाम हिंसकानामारे दूरे । दुरापमित्यर्थः । सम्प्रति च आरे समीपत एवास्मान् हिंसानां हिंसन्तीं दिद्युमर्चिषां प्रखरां दीप्तिमपाकुरु ॥ ✲ ॥

**प्रवत्तेअग्नेजनिमापितूयतस्साचीवविश्वाभुवनान्यृञ्जसे ।**
**प्रसप्तयःप्रसनिषन्तनोधियःपुरश्चरन्तिपशुपाइवत्मना ॥ २ ॥**

**प्रऽवत् । ते । अग्ने । जनिम । पितुऽयतः । साची+इव । विश्वा । भुवना । नि । ऋञ्जसे ॥**
**प्र । सप्तयः । प्र । सनिषन्त । नः । धियः । पुरः । चरन्ति । पशुपाः+इव । त्मना ॥ २ ॥**

हे अग्ने, पितूयतः, पितुरित्यन्नम्, सर्वं जगत्, सम्प्रति खाण्डवाख्यमन्नम्, जिग्रसिषोस्ते जनिम प्रादुर्भवनं प्रवत् प्रकृष्टम्, प्रकृष्टगतिमत्, प्रकृष्टग्रसनवद् वा । **'उपसर्गाच्छन्दसि धात्वर्थे'** [अ.सू.५.१.११८] इति हि पाणिनिः । साचीव समवेतः सखेव सचिव इव, विश्वानि भुवनानि, न्यृञ्जसे नितरां प्रेरयसि । क्वचिन्निगृह्य प्रेरयसि । क्वचिन्नियम्य नियन्त्र्य वा प्रेरयसि । तदपि न बहिः । अन्तर्निविश्यैव सर्वं प्रेरयसि । अन्तर्यामीत्येतत् । यद्यपि 'भुवनानि+ऋञ्जसे' इत्यपि शक्यं पदपाठः पठितुम् । अथाप्येवमर्थविशेषलाभायैव 'नि+ऋञ्जसे' इति प्रतृण्णं पपाठ । हे प्र विप्र सर्वज्ञ । पादादित्वान्नानुदात्तम् । अथवा प्रेति सप्तीनां विशेषणम्–प्रकृष्टाः सुशिक्षिताः सप्तय इति । 'एकः प्रशब्दः पूरकः' इति वदन् सायणो बभ्राम । एवं वेदपदानि व्यर्थानीति वदन्तोऽप्यहो वेदव्याख्यातारो भवन्ति । नो धियः धीवृत्तयः, इमाः स्तुतयो वा, प्र सप्तयः सुशिक्षिता अश्वा गम्यं स्थानमिव, त्वां प्र सनिषन्त प्रकर्षेण पथः स्खलनं विना, सर्वोत्तमत्वेन वा, सम्भजन्ते । यथा पशुपालाः त्मना आत्मना स्वतः पशूनां पुरः, पशून् वा पुरस्कृत्य परितश्चरन्ति तथा न इमाः धीवृत्तयः स्तुतयश्च वेदान् पुरस्कृत्यैव त्वयि चरन्ति । वेदमन्त्रैरेव त्वां स्तुम इत्यर्थः । पान्ति शंसाधनाश्चेति वेदा अपि पशवः । वेदज्ञाः पशुपा गोपा उच्यन्ते । **'यजमानस्य पशून् पाहि'** इति हि श्रुतिः । कृच्छ्रकालप्राप्तेः पुरतः पूर्वमेव त्वयि चरन्तीति च । **'पुरतः कृच्छ्रकालस्य धीमान् जागर्ति पूरुषः । स कृच्छ्रकालं सम्प्राप्य व्यथां नैवैति कर्हिचित् । यस्तु कृच्छ्रमनुप्राप्तं विचेता नावबुध्यते । स कृच्छ्रकाले व्यथितो न श्रेयो विन्दते महत्'** [आ.प.२५८.१–२] इति, **'आत्माऽसि वायोर्ज्वलन शरीरमसि वीरुधाम् । योनिरापश्च ते शुक्रं योनिस्त्वमसि चाम्भसः । ऊर्ध्वं चाधश्च सर्पन्ति पृष्ठतः पार्श्वतस्तथा । अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा'** [२५८.७–८] इति च जरितारिवचनं मयदर्शने ॥ ✻ ॥

**उ॒तवाउ॒परि॑वृणक्षि॒बप्स॑द्ब॒होर॑ग्न॒उल॑पस्यस्वधावः ।**
**उ॒तखि॒ल्याउ॒र्वरा॑णाम्भवन्ति॒माते॑हे॒तिन्तवि॑षीश्चुक्रुधाम ॥ ३ ॥**

**उ॒त । वै । ऊँ॑इति॑ । परि॑ । वृ॒ण॒क्षि॒ । बप्स॑त् । ब॒होः । अ॒ग्ने॒ । उल॑पस्य । स्व॒धा॒ऽव॒ः ॥**
**उ॒त । खि॒ल्या । उ॒र्वरा॑णाम् । भ॒व॒न्ति॒ । मा । ते॒ । हे॒तिम् । तवि॑षीम् । चु॒क्रु॒धा॒म ॥ ३ ॥**

गते अवगते च जरितारिदृष्टे ऋचौ द्वे । अथोपरितने द्वे द्रोणदृष्टे इति वैदिकानां सम्प्रदायः । महाभारतानुगुणतया सारिसृक्वदृष्टे इति तु सूक्तं वचः । सारिसृक्त इति वेदव्याख्यातारः । पाठभ्रमोऽयम् । नन्वनुक्रमणिकायामपि तथैव पठ्यते । सत्यं पठ्यते । लिपिकृतः प्रामाद्यन् । भारतेऽपि क्वचित् सारिसृक इति पाठः । कथं सारिसृक्वः? आस्योपान्तवाचि नान्तं पदद्वयम्–'सृक्वन् सृक्वन्' इति । अदन्तं चेदं पठ्यते । सृक्वं सृक्वमिति । सारो बलमदनशक्तिरस्त्यनयोरिति सारिणी सृक्वे सृक्वे वाऽस्य स्त इति सारिसृक्वः सारिसृक्वो वा । अयं मन्त्रार्थः– स्वे महिम्नि स्थितिः स्वधा । बलं स्वधा । दीप्तिः स्वधा । हे स्वधावः स्वधावन् । स्वे महिम्नि प्रतिष्ठित नारायण । बलवन् प्राण । दीप्तिमन्नग्ने । स्वद्यत इति स्वधा हविर्वा । हे हविष्मन्नग्ने । त्वं बप्सत् भक्षयन् । भस भक्षणे । बभस्ति बब्धः बप्सति इति रूपम् । तेन यो बप्स्यात् स बप्सद् भवति । बहोरुलपस्य तृणजातस्यापि जीवनं परिवृणक्षि परिवर्जयसि । वृजी वर्जने । इति वै उ? प्रथितं ननु । ऊँ इति प्रश्ने । कथमुलपः? ऋ गतौ । अपः प्रत्ययः । इयर्ति प्रसरतीत्युलप इति कातन्त्राः । वल संवरणे ।

वलतीत्युलपः लता तृणविशेषो वेत्यन्ये । उल आवरणे दाहे चेति सौत्रो धातुः । उल्यत इत्युलप इत्येके । तथाच अज्ञानेनाऽवृतस्य त्वत्पुरस्तृणतुल्यस्य जीवजीतस्य त्वमेकः संहर्तेत्यर्थः । किञ्च उर्वराणां सर्वसस्यसमृद्धानां भूभागानां खिल्या उत अकृष्टपच्याः प्रदेशविशेषा अपि भवत एव भवन्ति । यदा निनाशयिषसि तदा दाहनीं शक्तिमभिव्यनङ्क्षि । यदा जिजीवयिषसि तदा पाचनीं शक्तिमित्यर्थः । उरुष्वपि वरा महान्तो देवाः । खिलमर्हन्तीति खिल्या उत मुनयोऽपि भवदनुग्रहादेव भूतिमन्तो बभूवुरिति च मुख्यतः प्राणनारायणौ स्तूयेते । तस्मात् तव तविषीं प्रवृद्धां हन्तीति हेतिं ज्वालां न निन्दाजरणैः क्रोधयाम । किन्तु स्तुतिजरणैः प्रीणयाम इति ॥ ॐ ॥

**यदुद्वतोनिवतोयासिबप्सत्पृथगेषिप्रगर्धिनीवसेना ।**
**यदातेवातोअनुवातिशोचिर्वप्तेवश्मश्रुवपसिप्रभूम ॥ ४ ॥**

**यत् । उत्+वतः । निऽवतः । यासि । बप्सत् । पृथक् । एषि । प्रगर्धिनी+इव । सेना ॥**
**यदा । ते । वातः । अनु+वाति । शोचिः । वप्ता+इव । श्मश्रु । वपसि । प्र । भूम ॥ ४ ॥**

उद्वतः उन्नतान् महाद्रुमान् निबतः निनतानुलपांश्च । अथ चोच्चांश्च नीचांश्च जीवान् । प्रळये । बप्सत् भक्षयन् यत् यदा यासि । क्रमशः नाशयसीत्येतत् । उद्वतो निवत इति स्वार्थे वतिः । **'प्रवत्'** इति यथा । **''उपसर्गात् ससाधने धात्वर्थे वर्तमानात् स्वार्थे वतिः प्रत्ययो भवति छन्दसि विषये । 'यदुद्वतो निवतो यासि बप्सत्' उद्गतानि निगतानि च'** [का.५.१.११८] इति जयादित्यः । तदा पृथक्पृथग् एषि रूपविशेषैः कीलविशेषैर्वा । यथा प्रगर्धिनी प्रकृष्टं शत्रुविजयं काङ्क्षन्ती सेना उच्चान् नीचांश्च शत्रुपक्षीयान् यथाक्रमं अन्वेषमन्वेषमेति । यदा वायुस्ते ज्वालामनुकूलतयाऽनुसरन् वाति तदा त्वं भूम बहुलं भूभागं वृक्षजातं जीवजातं वा प्र वपसि निःशेषं नाशयसि पुनः प्ररोहाय नीरोमकरणं हि वपनं नाम । वनस्पतयो हि लोमानीव भूमेः । कथमिव? यथा वप्ता नापितः श्मश्रु मुखलोम वपति पुनःप्ररोहायैव । एतेन संहारः सर्वोऽपि सृष्टिगर्भ इत्याह । **'धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः । प्राज्ञः शूरो बहूनां हि भवत्येको न संशयः'** [आ.प.२५८.३] इति, **'माता प्रणष्टा पितरं न विद्मः पक्षा जाता नैव नो धूमकेतो । न नस्त्राता विद्यते वै त्वदन्यस्तस्मादस्मांस्त्राहि । बालांस्त्वमग्ने । यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः । तेन नः परिपाहि त्वमार्तान्नः शरणैषिणः । त्वमेवैकस्तपसे जातवेदो नान्यस्तप्ता विद्यते गोषु देव । ऋषीनस्मान् बालकान् पालयस्व परेणास्मान् प्रेहि वै हव्यवाह'** [९–११] इति च सारिसृक्कवचनं भारते ॥ ॐ ॥

**प्रत्यस्यश्रेणयोददृश्रएकंनियानम्बहवोरथासः ।**
**बाहूयदग्नेअनुमर्मृजानोन्यङ्ङुत्तानामन्वेषिभूमिम् ॥ ५ ॥**

**प्रति । अस्य । श्रेणयः । ददृश्रे । एकम् । नि+यानम् । बहवः । रथासः ॥**
**बाहू इति । यत् । अग्ने । अनु+मर्मृजानः । न्यङ् । उत्तानाम् । अनु+एषि । भूमिम् ॥ ५ ॥**

अथ द्वे ऋचौ स्तम्बमित्रदृष्टे । सारिसृक्तदृष्टे इति वैदिकः सम्प्रदायः । भारतानुगुण्यात् स्तम्बमित्रदृष्टे इति सूक्तं वचनम् । कथं स्तम्बमित्रः? स्तम्बः गुल्मः प्रियवासत्वान्मित्रमस्येति स्तम्बमित्रः । आब्रह्मस्तम्बपर्यन्तं भगवदधिष्ठानत्वेन

प्रियमस्येति च स्तम्बमित्रः । अयं मन्त्रार्थः– अग्ने, बाहू, तृतीयार्थे प्रथमा । सप्तसु हि प्रथमामुशन्ति । बाहुभ्यामिव द्विधा विभक्ताभ्यां तव कीलाभ्यामरण्यभूमिमनुमर्मृजानः । मृजू शुद्धौ । दाहन्दाहं तत्तदनुगुणं शोधयन् । अग्निस्पर्शेन हि सर्वम-शुद्धं शुद्धं भवति । नह्यग्निरन्यतः शुध्यति । न्यङ् प्रथमं नीचैश्चरन्, तत उत्तानामुपरिगतामरण्यभूमिम्, वृक्षजातमित्येतत्, अन्वेषि अनुसरन्नूर्ध्वमुखः सन् गच्छसि । तदाऽस्य दहतस्ते हेतीनां श्रेणयः प्रत्येकं दृश्यन्ते । कथम्? एकं प्रयाणं मार्गं वा प्रस्थिता बहवो रथा यथा । हव्यवाहनः किल त्वम्? अतस्ते कीला देवानां हविर्दातुं ऊर्ध्वं देवयानं प्रति प्रस्थिता रथा इव बभुरित्यर्थः ॥ ⁕ ॥

**उत्तेशुष्मांजिहतामुत्तेअर्चिरुत्तेअग्नेशशमानस्यवाजाः ।**
**उच्छ्वंश्चस्वनिनंमवर्धमानआत्वाद्यविश्वेवसवस्सदन्तु ॥ ६ ॥**

**उत् । ते । शुष्माः । जिहताम् । उत् । ते । अर्चिः । उत् । ते । अग्ने । शशमानस्य । वाजाः ॥**
**उत् । श्वञ्चस्व । नि । नम । वर्धमानः । आ । त्वा । अद्य । विश्वे । वसवः । सदन्तु ॥ ६ ॥**

अग्ने, शुष्यन्त्येभिरिति शुष्माः शोषकरास्तरस्विनो वा । शुष शोषणे । ते ज्वालाः, उत् उद्गत्य, मामपहाय जिहतां गच्छन्तु । ओहाङ् गतौ । लोटि जिहीताम्, जिहाताम्, जिहतामिति रूपम् । तवार्चिः अक्ष्णोः क्षपणी प्रभा उज्जिही-ताम् । शशमानस्य वेगेन परितो धावतस्ते वाजाः कर्णभेदिनश्चटत्काराः उज्जिहतां दूरं गच्छन्तु । **'वाजो निस्वन-पक्षयोः'** । बलानि वा वाजाः । वेगा वा । बलस्य वेगस्य चोद्गमनं नाम स्मस्मिंस्तत्प्रभावविरहः । तव बलं मयि मा प्रयोक्षीः, मा च मदभिमुखं धावीरिति । उत् श्वञ्चस्व ऊर्ध्वं गच्छ महतो वनस्पतीन् दग्धुम् । श्वचि गतौ । नि नम नीचैः प्रह्वः प्रसर, उलपान् दग्धुम् । एवमन्यत्र वर्धमानो भव । नास्मासु वर्धस्व । अद्य अस्मद्रक्षार्थं विश्वे वसवः रश्मयः त्वामा सदन्तु त्वय्येवोपसंहृता भवन्तु । विश्वे च वसवो देवाः त्वामासदन्तु त्वय्यासन्ना भवन्तु, अस्मान् रिरक्षिषव इति । **'ज्येष्ठस्तातो भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः । ज्येष्ठश्चेन्न प्रजानाति कनीयान् किं करिष्यति'** [आ.प.२५८.४] इति, **'सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च । त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः । मनीषिणस्त्वां जानन्ति बहुधा चैकधाऽपि च । सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह काले प्राप्ते पचसि पुनः समिद्धः । त्वं सर्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा'** [१२–४] इति च स्तम्बमित्रवचनं भारते ॥ ⁕ ॥

**अपामिदंन्ययनंसमुद्रस्यनिवेशनम् ।**
**अन्यङ्कृणुष्वेतः पन्थान्तेनयाहिवशाँअनु ॥ ७ ॥**

**अपाम् । इदम् । निऽअयनम् । समुद्रस्य । नि+वेशनम् ॥**
**अन्यम् । कृणुष्व । इतः । पन्थाम् । तेन । याहि । वशान् । अनु ॥ ७ ॥**

अन्त्ये द्वे ऋचौ द्रोणदृष्टे । स्तम्बमित्रदृष्टे इति वैदिकः सम्प्रदायः । भारतानुगुण्याद् द्रोणदृष्टे इति सूक्तं वचः । कथं द्रोणः? भगवन्तं प्रति द्रवतीति । द्रु गतौ । नः प्रत्यय इति कातन्त्राः पाणिनीयाश्च । अयं मन्त्रार्थः– इदमस्मन्निवेशनम्,

अस्मच्छरीरं वा, आ पालनादपां समस्तदेवानां निलयनम् । समुद्रिक्तस्य भगवतो निवेशनम् । अतोऽन्यमितः पन्थानं कुरु । तेन पथा याहि यथावशं यथेच्छम् ॥ ✲ ॥

**आयनेतेपरायणेदूर्वारोहन्तुपुष्पिणीः ।**
**ह्रदाश्चपुण्डरीकाणिसमुद्रस्यगृहाइमे ॥ ८ ॥**

**आऽअयने । ते । परा+अयने । दूर्वाः । रोहन्तु । पुष्पिणीः ॥**
**ह्रदाः । च । पुण्डरीकाणि । समुद्रस्य । गृहाः । इमे ॥ ८ ॥**

ते आयने यत्र त्वमागच्छसि तत्र, परायणे यतः परागच्छसि तत्र च । दूर्वा रोहन्तु । बहुवचनमाद्यर्थे । प्रकार-श्चाद्यर्थः । दूर्वाप्रकारा भगवत्पूजासाधनानि तृणविशेषाश्छिन्नाश्छिन्नाः पुना रोहन्तु । एतादृशगुणविशेषादेव दूर्वाणां मुखतो ग्रहणम् । पुष्पिण्यो लताश्च रोहन्तु । पुष्पवत्यो दूर्वा इति व्याख्यानं तु न श्लिष्यति । नहि दूर्वाः पुष्पवत्यो भवन्ति । तत्रतत्र यथेच्छं ह्रदाश्च भवन्तु । ह्रदेषु च पुण्डरीकाणि भवन्तु । इमे भूभागाः समुद्रिक्तस्य भगवतः सस्यश्यामलाः कुसुमशबला गृहा भवन्तु । इमेऽस्माकं देहा वा । अत्र सूक्तसमाप्तिरष्टमाष्टकस्य सप्तमाध्यायसमाप्तिश्च । **'हिरण्यरेता-स्त्वरितो ज्वलन्नायाति नः क्षयम् । सप्तजिह्वाननः क्रूरो लेलिहानो विसर्पति'** [आ.प.२५८.५] इति, **'त्वमन्नं प्राणिभिर्भुक्तमन्तर्भूतो जगत्पते । नित्यप्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् । सूर्यो भूत्वा रश्मिभिर्जातवेदो भूमेरम्भो भूमिजातान् रसांश्च । विश्वानादाय पुनरुत्सृज्य काले दृष्ट्वा वृष्ट्या भावयसीहि शुक्र । त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः । जायन्ते पुष्करिण्यश्च सुभद्रश्च महोदधिः । इदं वै सद्म तिग्मांशो वरुणस्य परायणम् । शिवस्त्राता भवास्माकं माऽस्मानद्य विनाशय । पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन । परेण प्रेहि मुञ्चास्मान् सागरस्य गृहानिव'** [१५–९] इति च द्रोणवचनं भारते ॥ ✲ ॥

नीचः पुत्रः पुत्रकः । प्रातिलोम्येन मातुराननस्य च परावृत्तदिङ्मुखतया पुच्छादारभ्य शिरःपर्यन्तम् । अर्जुनेन तस्याः कण्ठे च्छिन्ने । **'अश्वसेनोऽभवत् तत्र तक्षकस्य सुतो बली । स यत्नमकरोत् तीव्रं मोक्षार्थं जातवेदसः । न शशाक स निर्गन्तुं निरुद्धोऽर्जुनपत्रिभिः । मोक्षयामास तं माता निगीर्य भुजगात्मजा । तस्य पूर्वं शिरोऽग्रस्तं पुच्छमस्य निगीर्यते । निगीर्य सोर्ध्वमक्रामत् सुतं नागी मुमुक्षया । तस्याः शरेण तीक्ष्णेन पृथुधारेण पाण्डवः । शिरश्चिच्छेद गच्छन्त्यास्तामपश्यच्छचीपतिः । तं मुमोचयिषुर्वज्री वातवर्षेण पाण्डवम् । मोहयामास तत्कालमश्वसेनस्त्वमुच्यत'** [आ.प.२५३.६–९] इति च । कर्णतूणीरग इति । बाणरूपेण तूणीरगत इत्यर्थः । **'ततस्तु पाताळतळे शयानो नागोऽश्व-सेनः कृतवैरोऽर्जुनेन । राजंस्तदा खाण्डवदाहमुक्तो विवेश कोपाद् वसुधातळे यः । अथोत्पपातोर्ध्वगतिर्जवेन सन्दृश्य कर्णार्जुनयोर्विवादम् । अयं हि कालोऽस्य दुरात्मनो वै पार्थस्य वैरप्रतियातनाय । सञ्चिन्त्य तूर्णं प्रविवेश चैव कर्णस्य राजन् शररूपधारी'** [क.प.९७.१२–४] इति च । **'योऽसौ त्वया खाण्डवे चित्रभानुं सन्तर्पयाणेन धनुर्धरेण । वियद्गतो जननीगुप्तदेहो मत्वैकरूपं निहताऽस्य माता'** [९७.४५] इति चार्जुनं प्रति कृष्णवचनम् ॥२३९–४०॥

मयः कृष्णेनाऽऽत्तचक्रेण दृष्टो ययौ पार्थं शरणं जीवनार्थी[१] ।
पार्थार्थमेनं न जघान कृष्णः स्वभक्तश्चेत्यतिमायं परेशः[२] ॥ २४१ ॥

देवारिरित्येव मयि प्रकोपः कृष्णस्य तेनाहमिमं[३] पुरन्दरम् ।
पार्थात्मकं शरणं यामि तेन कृष्णप्रियः स्यामिति तस्य बुद्धिः ॥ २४२ ॥

प्राणोपकृत् प्रत्युपकारमाशु किं ते करोमीति स पार्थमाह ।
कृष्णप्रसादाद्धि भवान् विमुक्तस्तस्मै करोत्वित्यवदत् स पार्थः ॥ २४३ ॥

कृष्णोऽपि [४]राज्ञोऽतिविचित्ररूपसभाकृतावदिशत्[५] तां स चक्रे ।
अनिर्ग्गमं प्राणिनामर्थितौ तौ हुताशनेनाथ विधाय जग्मतुः ॥ २४४ ॥

दृष्ट्वा च तौ पाण्डवाः सर्व एव महामुदं प्रापुरेतन्निशम्य ।
कृष्णोऽपि पार्थैर्म्मुमुदेऽनन्तशक्ति[६]सुखज्ञानप्राभवौदार्य्यवीर्य्यः[७] ॥ २४५ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमहाभारततात्पर्य्यनिर्ण्णये
खाण्डवदाहो नाम
विंशोऽद्ध्यायः

—०—

[आदितः श्लोकाः– **२५२१**+२४५=**२७६६**]

**कृष्णे(न) आत्मानं हन्तुं (आत्तचक्रेण दृष्टः) ॥ २४१ ॥ पार्थं शरणं गच्छतस्तस्याभिप्रायमाह– देवारिरिति ॥ २४२–४ ॥ प्राभवं प्रभुत्वम् । औदार्यं दातृत्वम् ॥ २४५ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां विंशोऽध्यायः

—०—

१. 'जीवितार्थी' २. '–मान्यं रमेशः' ३. '–हममुं पु–' इति क्वचित् ।
४. 'राज्ञेऽति–' ५. '–कृतावादिशत्' ६. '–नन्तशक्तिः सु–'
७. '–प्रभवौदार्य–' । वे.ती.पाठोऽपि तथेति भाति ।

मयः कृष्णेन । **'तथाऽसुरं मयं नाम तक्षकस्य निवेशनात् । विप्रद्रवन्तं सहसा ददर्श मधुसूदनः'** [आ.प.२५४.३] इति च । **'जिघांसुर्वासुदेवस्तं चक्रमुद्यम्य धिष्ठितः । स चक्रमुद्यतं दृष्ट्वा दिधक्षन्तं च पावकम् । अभिधायार्जुनेत्येवं मयस्त्राहीति चाब्रवीत्'** [४२] इति च । **'तं पार्थेनाभये दत्ते नमुचेर्भ्रातरं मयम् । न हन्तुमैच्छद् दाशार्हः पावको न ददाह च । तद्वनं पावको धीमान् दिनानि दश पञ्च च । ददाह कृष्णपार्थाभ्यां रक्षितः पाकशासनात्'** [४५–६] इति च ॥ २४१ ॥ प्रकोपः प्रीतिपूर्वत्वात् प्रकृष्टः कोपः । स्वभक्त इति प्रीतिः । देवारिरितीषत् कोप इत्यर्थः ॥२४२॥ तस्मै कृष्णाय तदपेक्षितं किमपि करोतु । **'कृष्णाय क्रियतां किञ्चित् तथा प्रतिकृतं मयि'** [स.प.१.१९] इति च ॥ २४३ ॥ अतिविचित्ररूपायाः सभायाः कृतौ निर्माणे । अन्यैः कर्तुमशक्यत्वाद् विचित्रम् । अनुकर्तुमप्यशक्यत्वादतिविचित्रम् । **'यां क्रियां नानुकुर्युस्ते मानवाः प्रेक्ष्य विस्मिताः । मनुष्यलोके सकले तादृशीं कुरु वै सभाम्'** [१.२३] इति च । तौ कृष्णपार्थौ जग्मतुरिन्द्रप्रस्थम् ॥ २४४ ॥ दर्शनेन मुदं प्रापुः । एतदद्भुतं खाण्डवदाहमिन्द्रविजयं गाण्डिवादिलाभं च निशम्य महतीं मुदमापुः । पार्थैः सह । शक्तिः सृष्टिस्थितिसंहारेष्वप्रतिहतं सामर्थ्यम् । शक्नोत्यनया स्रष्टुं पातुं संहर्तुं चेति । प्राभवं प्रभुत्वम्, स्वच्छन्दानुगुणं सर्वनियमनम् । औदार्यं सर्वाभीष्टप्रदत्वम् । अथच, औदार्यमिति दाक्षिण्यम् । वीर्यं दुष्टनिग्रहचातुर्यम् । एतेन **'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि–'** इत्युदिता भगवच्छब्दवाच्याः षड्गुणा न्यरूपिषत । बलमित्यानन्दबलम् । बली हि विभीः सुखी भवति । दुर्बलो भीतो भवति दुःखी । ऐश्वर्यमेवौदार्यम् । तेजः प्राभवम् ॥ २४५ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतं विंशाध्यायविवरणं विदुषां हृदयाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**विंशोऽध्यायः**

—०—

# एकविंशोऽध्यायः

[पाण्डववनप्रवेशः]

ॐ ॥ जनार्दनाज्ञया मयः समस्तकौतुकोत्तराम् ।
सभां विधाय भूभृते ददौ गदां[1] वृकोदरे ॥ १ ॥

स वायुधारितां गदां हि यौवनाश्वभूभृता ।
प्रसादतोऽस्य लम्भितामवाप्य मोदमाप ह ॥ २ ॥

पुनश्च वत्सरद्वयं समुष्य केशवो ययौ ।
समर्चितश्च पाण्डवैर्वियोजनेऽस्य चाक्षमैः ॥ ३ ॥

**ॐ ॥ १ ॥ काऽसौ गदेत्यत आह– स वायुधारितामिति । अस्य वायोः प्रसादतः यौवनाश्वभूभृता मुचुकुन्देन लम्भितां प्राप्ताम् ॥ २–६ ॥**

---

ॐ ॥ अवसितमादिपर्वकथानिर्णयनम् । अथास्मिन्नध्याये सभापर्वसङ्क्षेपः । समस्तैर्विस्मयैरुत्तमा सभा । कौतुकमित्युत्सव उच्यते । कुतूहलमुच्यते । प्रमोद उच्यते । अन्ततः सर्वं विस्मयावहं कौतुकमुच्यते । सह भान्त्यत्रेति सभा सद्म सदो वा । गदा च समस्तानां कौतुकजननी श्रेष्ठा च । सभां भूभृते ददौ । गदां वृकोदराय ददौ ॥ १ ॥ हीति वायोर्गदायुधत्वम् **'ध्यायेद् गदाभयकरम्'** इति प्रसिद्धमाह । अस्य वायोः प्रसादतो यौवनाश्वभूभृता मान्धात्रा लब्धाम् । **'अस्ति बिन्दुसरस्युग्रा गदा च कुरुनन्दन । निहिता यौवनाश्वेन राज्ञा हत्वा रणे रिपून्'** [स.प.३.६] इति मन्त्रे । यौवनाश्वो मुचुकुन्द इत्यप्याहुः । युवनाश्वतनयो मान्धाता । मान्धातुस्तनयो मुचुकुन्दः । अस्य वायोः प्रसादतो यौवनाश्वभूभृता लम्भितां लब्धाम् । स्वार्थे णिच् । अथच, अकारवाच्यस्य विष्णोरेव प्रसादतः अस्य भीमस्य मयेन लम्भितां प्रापिताम् । भीमस्तां गदामापेति स्वयमपि मुमुदे हेति । आनन्दभरेण हकारवाच्यस्य विष्णोश्च स्मरणमेतद् भवति ॥ २ ॥ पुनश्च वत्सरद्वयम् । अर्जुनतीर्थयात्राप्रसङ्गे द्रौपदी प्रतिविन्ध्यं सुषुवे । ततोऽर्जुनेन बभ्रुवाहनं पाण्ड्यराजतनया

---

१. **'भूभृते गदां ददौ वृको–'** इति क्वचित् ।

ततो वसन् स्वपुर्य्यजः क्वचिद् रविग्रहे हरिः ।
सदारपुत्रबान्धवः [1]समन्तपञ्चकं ययौ ॥ ४ ॥

पृथासुताश्च सर्वशः सदारपुत्रमातृकाः ।
क्षितीश्वराश्च सर्वशः प्रियाप्रिया हरेश्च ये[2] ॥ ५ ॥

तथैव नन्दगोपकः सदारगोपगोपिकः ।
मुनीश्वराश्च सर्वतः[3] समीयुरत्र च प्रजाः ॥ ६ ॥

प्रियाश्च ये रमेशितुर्हरिं त्रिरूपमेत्य ते[4] ।
वसिष्ठवृष्णिनन्दनं[5] भृगूत्तमं तथाऽऽर्चयन् ॥ ७ ॥

कृतार्थतां च ते ययू रमेशपाददर्शनात् ।
रविग्रहे समाप्लुता भृगूद्वहोत्थतीर्थके ॥ ८ ॥

अनुग्रहं विधाय सस्स्वकेषु[6] केशवस्त्रिवृत् ।
अयाजयच्च शूरजं मखैः समाप्तदक्षिणैः ॥ ९ ॥

**वसिष्ठवृष्णिनन्दनौ तथा भृगूद्वह इति त्रिरूपं हरिमित्यर्थः ॥ ७–८ ॥ (स्वकेषु) जने(षु) । त्रिवृत् ।**

---

जनयामास, प्रायस्तदैव द्रौपदी भीमेन सुतसोमम् । द्वितीये वत्सरेऽर्जुनः सुभद्रया साकमिन्द्रप्रस्थमाजगाम । ततः क्रमेणाभिमन्योः श्रुतकीर्तेः शतानीकस्य श्रुतकर्मणश्च जननमास । एषु त्रिचतुरेषु वत्सरेषु कृष्णोऽपीन्द्रप्रस्थ एवोवास । पुनश्च वत्सरद्वयं पाण्डवैः समुष्य सममुषित्वा । वियोजनेऽक्षमैरपि कथञ्चिद् विसर्जितः समर्चितश्च ॥ ३ ॥ समन्ताद् भार्गवनिर्मितानां तीर्थानां पञ्चकं यत्र, पञ्च कानि तीर्थमयानि जलानि वा यत्र तत् समन्तपञ्चकम्, कुरुक्षेत्रम् ॥ ४ ॥ सर्वशः सर्वे पृथासुताः । सर्वशः परितः सर्वदिग्भागेभ्यः क्षितीश्वराश्च । ये हरेः प्रिया दैवसर्गाः । अप्रिया आसुरसर्गाः । द्वावेव हि भूतसर्गौ । क्षितीश्वराश्च प्रायः सदारपुत्रमातृकाः समीयुः ॥ ५ ॥ सर्वतः सर्वेभ्यो देशेभ्यः । प्रजाश्च पौरजानपदाः समीयुः । रविग्रहे तीर्थावगाहेन पुण्यसञ्चयार्थमीयुः । दूरस्था अत्र सङ्गता भवेमेतीयुः । कृष्णसन्दिदृक्षया चेयुः ॥ ६ ॥ वसिष्ठनन्दनं वृष्णिनन्दनं तथा भृगूत्तमम् ॥ ७ ॥ समाप्लुता सभक्तिश्रद्धं समेत्याऽऽप्लुताः । भृगूद्वहेन उत्थे उत्थिते निर्मिते तीर्थके पुण्यजले ॥ ८ ॥ स्वकेषु स्वकीयेषु प्रियेषु । ननु कोऽयं स्वः पर इति प्रियोऽप्रिय इति च विभागः? आह–

---

१. **'स्यमन्त–'** इति क्वचित् । अपपाठोऽयम् । २ **'प्रियाप्रियाश्च ये हरेः ।'** ३. **'सर्वशः समी–'** ४ **'–मेत्य वै ।'** इति क्वचित् ।
५. **'–नन्दनौ भृगू–'** । **'–नन्दनौ भृगूद्वहं तथा'** इति वे.ती. पाठ इति भाति । ६. **'स स्वकेषु'**

**समस्तलोकसंस्थितात्मभक्तिमज्जनस्य सः ।**
**सुकालदर्शनात् परं व्यधादनुग्रहं हरिः ॥ १० ॥**

**ततो ययौ स्वकां पुरीं पृथासुतैः सहाच्युतः ।**
**चकार तत्र चाऽह्निकं क्रतुं महाश्वमेधकम्[१] ॥ ११ ॥**

**हयं सभीमफल्गुना हरे रथं समास्थिताः ।**
**व्यचारयन् हरेः सुता दिनस्य पादमात्रतः ॥ १२ ॥**

**जिताः समस्तभूभृतो जरासुतादयः क्षणात् ।**
**वृकोदरादिभिस्तु[२] तैर्हयश्च दिव्य आययौ ॥ १३ ॥**

**त्रेधा वर्तत इति त्रिवृत् । समाप्तदक्षिणैः सम्पूर्णदक्षिणैः ॥ ९–१० ॥ आह्निकं एकाह्ना निर्वर्त्यम् ॥ ११–१३ ॥**

---

स्वकेषु । स्वरूपभूतं कमानन्दो येषां ते स्वकाः सात्विकाः । ये सात्विकाः ज्ञानमार्गान् पतन्ति ते प्रियाः । ये तामसा अविद्योपासकास्ते त्वप्रिया भगवत इत्युक्तं भवति । **'न मे द्वेष्योऽस्ति न प्रियः'** इति वदन्नेव, **'ज्ञानी प्रियतमः'** इति ह्याह । त्रीणि रूपाणि ववारेति त्रिवृत् । याजकैः समग्रतया आप्ता दक्षिणा येषु तैर्मखैः । सम्पूर्णदक्षिणैरित्येतत् ॥ ९ ॥ समस्तलोकसंस्थितः आत्मनि भक्तिमांश्च यो जनः । समस्तलोकसंस्थितेऽन्तर्बहिश्च व्याप्य स्थिते परमात्मनीति वा । एतेन भुवआदिलोकेभ्योऽपि मुनीश्वरा देवाश्चात्राऽगता इत्याह । सुकाले रविग्रहे आत्मनो दर्शनात्, आत्मानं दर्शयित्वा वा ॥ १० ॥ अह्ना निर्वृत्तमाह्निकम् । **'तेन निर्वृत्तम्'** [अ.सू.५.१.७९] इति ठञ् । ययौ चकार च । **'ततः कदाचिद् धर्मात्मा दीक्षितो मधुसूदनः । एकाहेन महाबाहुः शास्त्रे दृष्टेन कर्मणा'** [वि.प.१११.७] इति हरिवंशेषु । तच्च कर्माश्वमेध इति भागवते–**'कदाचिद् वाजिमेधेन यष्टुमुद्यम्य केशवः । महीं प्रदक्षिणं कर्तुं प्राहिणोत् प्रोक्षितं हयम्'** [भाग.१०.१००.१] इति । अन्येषां महानपि स्वस्यायमत्यल्प इत्याह–महाश्वमेधकम् ॥ ११ ॥ हरेः हयम् । हरेः रथं समास्थिताः हयसंरक्षणार्थं रथमाश्रित्य स्थिताः । विविधराज्येषु चारणं विचारणम् । दिनस्याह्नः पादः सार्धसप्तघटिकाः । स तु दिनेन लक्षयौजनिक इति वक्ष्यति ॥ १२ ॥ तैः हरेः सुतैः । वृकोदरो जरासुतं जिगायेति तयोर्नामतो ग्रहणम् । वृकोदर आदिर्मुख्यनेता येषां तैः हरेः सुतैः । हर्यनुग्रहेण समेधितैश्चेति तुनाऽऽह– तैस्तु । स्तुतैः वृकोदरादिभिरिति वा प्रतृण्णम् । पराजितैः शत्रुभिरपि स्तुतैरिति ॥ १३ ॥

---

१. **'–मेधिकम्'** २. **'–दिभिः सुतै–'** इति क्वचित् ।

हयः स[1] कृष्णनिर्म्मितो दिनेन लक्षयोजनम् ।
क्षमो हि गन्तुमञ्जसा दिनाश्वमेधसिद्धये ॥ १४ ॥

पराशरात्मजो हरिर्हरिं यदा त्वदीक्षयत् ।
तदाऽऽससाद ह द्विजस्तृणावहो रुराव च ॥ १५ ॥

ब्रजन्ति[2] जन्मनोऽनु मे सदा सुता अदृश्यताम् ।
इतीरिते[3]ऽर्ज्जुनोऽब्रवीदहं हि पामि ते सुतान् ॥ १६ ॥

न कृष्णरामकार्ष्णिभिः सुता नु[4] मेऽत्र पालिताः ।
क्व तेऽत्र शक्तिरित्यमुं जगाद सोऽर्ज्जुनं द्विजः ॥ १७ ॥

**दिनाश्वमेधसिद्धये कृष्णनिर्मितः स हयः ॥ १४–१७ ॥**

---

हयस्य दिव्यत्वं स्फुटमाह– हयः सः । अञ्जसा तत्वत एव क्षमः । नत्वालङ्कारिकीयमतिशयोक्तिः । अञ्जसा द्राग् दिनाश्वमेधसिद्धये च ॥ १४ ॥ पराशरात्मजो हरिः वसुदेवात्मजं हरिमदीक्षयत् । तुना लोकशिक्षारूपं विशेषमाह । हेति हरेर्लीलाविडम्बनं विस्मयते । अथ च हेति विष्णुवचनः । **'अकयप्रविसम्भूमसखहा विष्णुवाचकाः'** इति स्मरणात् । तेन ह हरिणा तदिच्छयैवऽससादेति चार्थः । आसाद्य च रुराव आचुक्रोश । तृणं हस्ते वहन् मत्पुत्ररक्षणेऽप्यदक्षान् क्षत्रियांस्तृणाय मन्ये इति सूचयन्निव । **'तृणमूलधरः कश्चिद् ब्राह्मणोऽभ्येत्य सत्वरः । चुक्रोश आर्त उद्बाहुर्यज्ञवाटमुखे स्थितः'** [भाग.१०.१००.१३] इति च ॥ १५ ॥ जन्मनोऽनु । जननानन्तरमव्यवधानेन । ब्रजन्ति । अकारादनोश्च परस्य रेफपूर्वस्य वस्य बः प्रायेण । अकाराद् यथा– अब्रणम् । अनोर्यथा अनुब्रजन्ति । **'जातोजातो महाबाहो पुत्रो मे ह्रियतेऽनघ । त्रयो हताश्चतुर्थं त्वं कृष्ण रक्षितुमर्हसि'** [वि.प.११.११ ]इति हरिवंशेषु । अहं हि पामि । मम सामर्थ्यं जगति विततं हि । त्वयाऽपि श्रुतं हि । पामीति वर्तमानसामीप्ये । पास्यामीत्यर्थः । तद् यथा– कदा गमिष्यसि? एष गच्छामि ॥ १६ ॥ अमुं एवमात्मानं श्लाघमानं अर्जुनं सः असञ्जातविश्रम्भः द्विज आह । अत्रेदं स्वारस्यमवधेयम् । स स्वहस्तगतमर्जुनं तृणं प्रत्याह । तद्व्याजेन अमुं अहं पामीति वदन्तमर्जुनं प्रत्याह । **'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । नपुंसकं तृणे–'** इत्यभिदधति । **'अर्जुनौ वृक्षभित्पार्थौ तृणे क्लीबेऽर्जुनी गवि'** इति मङ्खः । अत्र सङ्कटे कृष्णबलरामप्रद्युम्नैः न पालिता नु । तेऽपि पालयितुं नाशक्नुवन् किल । एवं सति क्व तेऽत्र मृतपुत्र-

---

१. 'हयश्च कृष्ण–' २. 'ब्रजन्ति'

३. 'इतीरितो–' ४. 'सकृष्णरामकार्ष्णिभिः सुता न मे'

**तदा जगाद फल्गुनोऽसुरैर्विदूषितात्मना ।**
**न विप्र तादृशोऽस्म्यहं यथैव केशवादयः ॥ १८ ॥**

**मया जिता हि खाण्डवे सुरास्तथाऽसुरानहम् ।**
**निवातवर्म्मनामकान् विजेष्य उत्तरत्र हि ॥ १९ ॥**

**उदीर्य्य चेति केशवं स ऊचिवान् व्रजाम्यहम् ।**
**इतीरितोऽवदद्धरिस्तवात्र शक्यते नु किम् ॥ २० ॥**

**असुरैः विदूषितात्मना विदूषितमनसा । करणे तृतीया ॥ १८–२१ ॥**

---

पालने शक्तिः । कार्ष्णिरिति कृष्णपौत्रोऽनिरुद्धोऽपि । स्फुटमेतदुत्तरत्र ॥ १७ ॥ असुरैर्विपर्यस्य दूषितेन मनसा । कथमन्यथा पार्थ एवमपार्थं वचो ब्रुवीत? **'नाहं सङ्कर्षणो ब्रह्मन् न कृष्णः कार्ष्णिरेव च । अहं धनञ्जयो नाम गाण्डीवं यस्य कार्मुकम्'** [भाग.१०.१००.२७] इति च । आचार्यवचनवदत्रापि कार्ष्णिरित्यनिरुद्धोऽपि ॥ १८ ॥ **'निवातकवचाश्चैव वासवेनापि दुर्जयाः । मयैव निहताः सङ्ख्ये हिरण्यपुरवासिनः'** [१०.१००.३३] इति दिनाश्वमेधप्रकरणेऽर्जुनवचनं भागवते पठ्यते । नन्वेतदनुपपन्नम् । दिनाश्वमेधात् पूर्वं नहि निहता निवातकवचा अर्जुनेन । अतः पुराणवचनं सङ्गमयन् भावमाह– विजेष्य उत्तरत्र हि । **'मयैव निहताः'** इति पुराणे कालव्यत्यासो नाम शैलीभेदोऽयम् । निहता भविष्यन्तीति वा व्याख्येयम् । तेन भविष्यदर्थकथनमिदम् । उत्तरत्र हीति । भविष्यन्नप्ययं विजयो निश्चितो हि । ननु पार्थस्यापि कः कार्तान्तिक एतां वार्तां श्रावयामास–निवातकवचनामकानसुरानुत्तरत्र विजेष्यस इति? न कोऽपि कार्तान्तिकः कर्णे जजाप । पार्थजननेऽशरीरभाषितं कुन्ती शुश्राव । सा पुत्रं परस्ताच्छ्रावयामास । तथाहि सम्भवे–**'सूतके वर्तमानां तां वागुवाचाशरीरिणी'** [आ.प.१३२.१२] इति, **'एतस्य भुजवीर्येण खाण्डवे हव्यवाहनः । मेदसा सर्वभूतानां तृप्तिं यास्यति वै पराम्'** [२३] इति, **'निवातकवचा नाम दैत्या विबुधविद्विषः । शक्राज्ञया महाबाहुस्तान् वधिष्यति ते सुतः'** [२७] इति च । न ह्यशरीरभाषितं क्वापि मृषा भवति । आसीच्चैकं तत्र सत्यम् । यतो मया जिता खाण्डवे सुराः । तद्यथा सत्यमासीत् तथाऽन्यदपि । तेन निश्चितं ते प्रतिजानामि–निवातकवचानपि विजेष्य एवेति । हीत्यवधारणे च ॥ १९ ॥ इति द्विजमुदीर्य केशवं चोचिवान्–व्रजाम्यहमिति । नु अनुनये । अत्र ब्राह्मणतनयरक्षाविषये । शक्यते किमिति पृच्छा । किं शक्यते इत्याक्षेपगर्भः परिहासः । किं नु शक्यते, न किमपीति निरासः । **'अहमेव गमिष्यामि न त्वया शक्यतेऽर्जुन'** [१०.१००.३१] इति च । **'रक्षसीत्येवमुक्तस्तु व्रीडितोऽस्मि नराधिप'** [वि.प.१११.१५] इति हरिवंशे धर्मराजं प्रत्यर्जुनवचनम् । अत्रापि रक्षसि? इति परिहासगर्भः प्रश्नः । रक्षसीति सान्त्वनं च । **'ततो मां व्रीडितं मत्वा पुनराह जनार्दनः । गम्यतां कौरवश्रेष्ठ शक्यते यदि रक्षितुम्'** [१६] इति च ॥ २० ॥

**विलज्जमानमीक्ष्य तं जगाद केशवोऽरिहा ।**
**ब्रजेति स प्रतिश्रवं चकार हाप्यरक्षणे ॥ २१ ॥**

**वह्निं प्रवेक्ष्येऽशक्तश्चेदित्युक्त्वा सर्वयादवैः ।**
**ययौ न रामप्रद्युम्नावनिरुद्धं च केशवः ॥ २२ ॥**

**न्ययोजयत् तत्सहाये[1] यशस्तेष्वभिरक्षितुम् ।**
**प्रियो हि नितरां रामः कृष्णस्यानु च तं सुतः ॥ २३ ॥**

**अनिरुद्धः कार्ष्णिमनु प्रद्युम्नाद् योऽजनिष्ट हि ।**
**रुग्मिपुत्र्यां रुग्मवत्यामाहृतायां स्वयम्बरे[2] ॥ २४ ॥**

**रतिरेव हि या तस्यां जातोऽसौ कामनन्दनः ।**
**पूर्वमप्यनिरुद्धाख्यो विष्णोस्तन्नाम्न एवच ॥ २५ ॥**

**(सर्वयादवैः) सह (ययौ) ॥ २२–३ ॥ (यः) अनिरुद्धः स्वयंवरे आहृतायां रुग्मवत्यां प्रद्युम्नादजनिष्ट, सः कार्ष्णिमनु प्रद्युम्नमनु कृष्णस्य प्रियः ॥ २४ ॥ रुग्मवती पूर्वं केत्यत आह– रतिरिति । तस्यां रुग्मवत्यां**

---

हेति प्रतिश्रवेऽर्जुनसाहसं विस्मयते । ह+अपि+अरक्षणे, इति ह+आप्य+रक्षणे इति च प्रतृण्णम् । रक्षणेऽशक्तश्चेत् अरक्षणे अरक्षणनिमित्तं वह्निं प्रवेक्ष्ये । ब्राह्मणगृहमाप्य मृतसुतरक्षणेऽशक्तश्चेदिति वा । प्रमुखैः सर्वयादवैः । **'त्वत्पुरोगाश्च रक्षन्तु वृष्ण्यन्धकमहारथाः । ऋते रामं महाबाहुं प्रद्युम्नं च महाबलम्'** [१७] इति । अत्र प्रद्युम्नं चेति चकारेणा-निरुद्धः समुच्चीयते । तमनु शेषरूपाद् रामादनन्तरं सुतः प्रद्युम्नः मूलरूपेऽपि यः सुतः प्रद्युम्ननामा च । प्रद्युम्नाख्यस्य विष्णोरावेशयुक्तश्च । अत एव बलवान् रूपवान् सर्वशास्त्रविच्च । अनिरुद्धे वक्ष्यमाणमिदं सर्वमत्राप्यनुवर्तनीयमिति चकारेण समुच्चिकाय ॥ २१–३ ॥ तं कार्ष्णिमनु अनिरुद्धः मूलरूपेऽप्यनिरुद्धः पौत्रश्च । यतस्तत्रापि प्रद्युम्नादजनिष्ट हि । अवतारे कथं पौत्रत्वमिति तां कथामाह–रुग्मिपुत्र्याम् । रुग्मवत्याः शुभाङ्गीति नामान्तरम् । **'शुभाङ्गी नाम वैदर्भी कान्तिद्युति-समन्विता । पृथिव्यामभवत् ख्याता रुग्मिणस्तनया तदा । उपविष्टेषु सर्वेषु पार्थिवेषु महात्मसु । वैदर्भी वरया-मास प्रद्युम्नमरिसूदनम्'** [वि.प.६१.४–५] इति हरिवंशेषु । ननु कृष्णद्विट् रुग्मी कथं कृष्णपुत्राय स्वपुत्रीं ददौ? न ददौ । किन्त्वाजहार प्रद्युम्न इत्याह– आहृतायाम् । भगिनीवात्सल्यात् कृष्णभयाच्च रुग्मी परस्तादनुमेन इत्यर्थः ॥ २४ ॥ तन्नाम्नः अनिरुद्धाख्यस्य विष्णोरावेशयुक्तः । तान् सङ्कर्षणप्रद्युम्नानिरुद्धाख्यांस्तन्नामभिस्त्रिभिः स्वरूपैराविष्टान्

---

१. **'तत्साहाय्ये'**

२. **'रुक्मिपुत्र्यां रुक्मवत्यामाहृतायां स्वयंवरे'**

**आवेशयुक्तो बलवान् रूपवान् सर्वशास्त्रवित् ।**
**तस्मात् तांस्त्रीनृते कृष्णः पार्त्थसाहाय्यकारणात्** ॥ २६ ॥

**न्ययोजयत् सूतिकाले ब्राह्मण्याः स च फल्गुनः ।**
**अस्त्रैश्चकार दिग्बन्धं कुमारोऽथापि तु[1] क्षणात्** ॥ २७ ॥

**अदर्शनं ययौ पार्त्थो विषण्णः सह यादवैः ।**
**अधिक्षिप्तो ब्राह्मणेन ययौ यत्र श्रियःपतिः** ॥ २८ ॥

**वह्निं[2] विविक्षन्तममुं निवार्य्य ययौ सविप्रः सहफल्गुनो हरिः ।**
**आशामुदीचीं बृहता रथेन क्षणेन तीर्त्त्वैव च सप्तवारिधीन्** ॥ २९ ॥

**ददृश्च मार्ग्गं गिरयोऽब्धयस्तथा विदार्य्य चक्रेण तमोऽन्धमीशः ।**
**घनोदकं चाप्यतितीर्य्य तत्र[3] ददर्श धाम स्वमनन्तवीर्य्यः[4]** ॥ ३० ॥

**जातोऽसौ पूर्वमप्यनिरुद्धाख्यः कामनन्दनः ॥ २५ ॥ (तस्मात्) प्रियत्वात् ॥ २६–३२ ॥**

---

त्रीनृतेऽन्यान् । **'प्रद्युम्नोऽथानिरुद्धो वा न रामो नच केशवः । यस्य शेकुः परित्रातुं कोऽन्यस्तदधिकेश्वरः'** [भाग.१०.१००.४८] इति ब्राह्मणवचनाद् भागवते । **'न प्रद्युम्नो नानिरुद्धो न रामो नच केशवः । यत्र शक्ताः परित्रातुं कोऽन्यस्तदवनेश्वरः'** [वि.प.११२.२१] इति च हरिवंशेषु ॥ २५–६ ॥ अर्जुनगर्वभेत्तारं भगवदिच्छाविशेषमाह– अथापि त्विति ॥ २७ ॥ कुमारः अदर्शनं ययौ । अधिक्षिप्तः आक्षेपपूर्वं भत्सितः पार्थो विषण्णः सन् यत्र श्रियःपतिः तां द्वारकां ययौ ॥ २८ ॥ **'ततः समास्थाय रथं कृष्णोऽहं ब्राह्मणः स च । प्रयाताः स्म दिशं सौम्यामुदीचीं कौरवर्षभ'** [वि.प.११२.३०] इति च । भागवते तु–**'सहैव रथमास्थाय प्राचीं दिशमवीविशत्'** [१०.१००.२४] इति पठ्यते । द्वारका हि भारतवर्षस्य प्रतीच्यां दिशि वर्तते । ततः प्राचीं दिशमाविश्य तत उदीचीमाशां ययावित्यर्थः । **'सहैव रथमास्थाय प्रतीचीं दिशमाविशत्'** इति क्वचिद् भागवतपाठः । तदा तु प्रतीचीमुदीचीमित्येकोऽर्थः । उत् ऊर्ध्वमश्नत्यनयेत्युदीची । प्रत्यगात्मानमश्नत्यनयेति प्रतीची । भागवतहरिवंशयोरापाततः प्रतीयमानस्य विरोधस्य परिहारदिदर्शयिषयैवाऽचार्यः आशामुदीचीमित्याह । सा किल परमाऽऽशा सतां यदुदीचीगमनम् । क्षणेनैव तीर्त्वा । क्षणेनेति न कालमानविशेष उच्यते । सापद्यं हि पदार्थः । निमेषोन्मेषविधुरेण, इयानिति निर्वक्तुमशक्येनाणुतरेण कालावच्छेदेनेत्यर्थः । सप्त वारिधींश्च । चकारेण द्वीपादींश्च । **'सप्त द्वीपान् स सिन्धूंश्च सप्त सप्त गिरीनथ'** [१०.१००.५५] इति च ॥ २९ ॥ ददृश्च मार्गम् । गिरयः सप्तद्वीपसंस्थाः । तथा सप्ताब्धयः ततः परस्ताद् विद्यमान-

---

१. **'–थापि तत्क्षणात्'** २. **'अग्निं विवि–'** ३. **'–तीर्य यत्र'** ४. **'स्वमनन्तपौरुषः'** इति क्वचित् ।

**संस्थाप्य दूरे सरथं सविप्रं पार्थं स्वरूपे द्विचतुष्कबाहौ ।**
**समस्तरत्नोज्ज्वलदिव्यभूषणे[1] विवेश नित्योरुगुणाण्णर्वे प्रभुः ॥ ३१ ॥**

**सहस्रमूर्द्धन्युरुशेषभोग आसीनरूपेऽमितसूर्य्यदीधितौ ।**
**रमासहाये तटिदुज्ज्वलाम्बरे मुक्तैर्विरिञ्चादिभिरर्च्चिते सदा ॥ ३२ ॥**

**स्थित्वैकरूपेण मुहूर्त्तमीश्वरो विनिर्य्ययौ विप्रसुतान् प्रगृह्य ।**
**सुनन्दनन्दादय एव पार्षदास्ते वैष्णवा भूमितळे[2] प्रजाताः ॥ ३३ ॥**

**एकरूपेण एकरूपत्वेन । भूमितळे विप्रसुतत्वेन जाताः ते सुन(न्दन)न्दादयः वैष्णवाः पार्षदाः ॥ ३३–४० ॥**

---

मन्धन्तमः । घनोदकं च । वक्ष्यति हि–**'एतस्माद् द्विगुणं तमः । अन्धं यत्र पतन्त्युग्रा मिथ्याज्ञानपरायणाः । घनोदकं तद्विगुणं तदन्ते धाम मामकम्'** [४४–५] इति । **'प्रददुः कामतो मार्गं गच्छतो भरतर्षभ । तत्रैवान्तर्हिताः सर्वे तदाश्चर्यतरं मम । असक्तं च रथो याति मेघजालेष्विवांशुमान्'** [वि.प.११३.१८–९] इति हरिवंशेषु । ददर्श दर्शयामास च । धाम स्वं तेजोमयं स्वरूपम् । स्वं धाम अप्राकृतं सदनं वा ॥ ३० ॥ द्विचतुष्कबाहौ । द्वे चतुष्के, अष्टाविति यावत्, बाहवो यस्य । **'प्रलम्बचार्वष्टभुजम्'** [१०.१००.६३] इति भागवते ॥ ३१ ॥ सहस्रमूर्धनि शेष-भोगे। नतु स्वरूपे। द्विचतुष्कबाहावित्युक्तत्वात्। **'सहस्रमूर्धन्यफणामणिद्युतिम्'** [१०.१००.६१] इति च। आसीनं रूपं यस्य तस्मिन् । स्वयं चलद्रूपः कृष्ण आसीनरूपे स्वस्मिन् विवेश । उक्तं हि–**'आसीनो दूरं व्रजति'** इति ॥३२॥ एकमेव रूपमेकरूपम् । मूलरूपावच्छेदेनैव दृश्यो भवन् स्थित्वा एकमेव रूपं द्विधा विश्लिष्य निर्ययौ । प्रगृह्य मूलरूपेणैकीभूतान् पृथक्कृत्य गृहीत्वेत्यर्थः । प्रजाताः प्रकृष्टे विप्रकुले जाताः । विष्णोरिच्छयैव च जाताः । **'स मुहूर्तात् ततः कृष्णो निश्चक्राम तदा प्रभुः । चतुरो बालकान् गृह्य ब्राह्मणस्याऽत्मजांस्तदा'** [वि.प.११३.२७] इति हरि-वंशेषु । सुनन्दनन्दादयः । आदिशब्दः प्रकारवचनः । तं प्रकारमाह– वैष्णवाः पार्षदा इति । परितः सीदन्त्यस्या-मिति परिषत् संसत् । **'सदिरप्रतेः'** [अ.सू.८.३.६६] इति सस्य षः । बाहुलकादुपसर्गान्त्यलोपे पर्षत् । तत्र साधवः पार्षदाः दौवारिकाः। **'परिषदो ण्यः'** [अ.सू.४.४.१०१] इत्यत्र जयादित्यः–**'णप्रत्ययोऽपीष्यते। तदर्थं योगविभागः क्रियते । परिषदो णो भवति । परिषदि साधुः पारिषदः'** इति । अनेनैव नयेन **'पर्षदोऽपि णो भवति'** इति वक्तव्यम् । नन्वष्टौ विष्णुपार्षदा भवन्ति । चत्वारश्च द्विजतनयाः । तत्र द्वौ नन्दसुनन्दावित्यवगतम् । कावपरौ द्वौ? साधु पृच्छसि । अवधत्स्व । जयविजयौ शिशुपालदन्तवक्रौ बभूवतुः । गदश्चण्ड इत्युक्तम् [१७.२५२] । प्रायः सारणः प्रचण्डः । तेनावशिष्टौ कुमुदकुमुदेक्षणौ द्विजसुताविति स्फुटम् ॥ ३३ ॥

---

१. **'समस्तदिव्योज्ज्वलरत्नभूषणे'** इति कचित् । २. **'भूमितले'**

**दर्प्पं निहन्तुं हरिरर्ज्जुनस्य समानयद् विप्रसुतान् परेशः ।**
**प्रीतिर्म्महत्येव यतोऽर्ज्जुने हरेः संशिक्षयामास ततः स एनम् ॥ ३४ ॥**

**अप्राकृतात् सदनाद् वासुदेवो निस्सृत्य सूर्य्याधिकलक्षदीधितेः ।**
**रथं समारुँह्य सपार्थविप्र आगात् सुतांश्चैव ददौ द्विजाय ॥ ३५ ॥**

**लोकशिक्षार्थमेवासौ प्रायश्चित्तं च चालने ।**
**चक्रे सार्द्धमुहूर्तेन समागम्य पुनर्म्मखम् ॥ ३६ ॥**

**ब्रह्मादीनागतांश्चैव सदा स्वपरिचारकान् ।**
**पूजयित्वाऽभ्यनुज्ञाय ब्राह्मणानप्यपूजयत् ॥ ३७ ॥**

**सस्नावबभृथं कृष्णः सदारः ससुहृज्जनः ।**
**आयान्तं द्वारकां कृष्णं दन्तवक्रो रुरोध ह ॥ ३८ ॥**

---

योग्यतायां महति अर्जुने महत्येव प्रीतिः । प्रात्यक्षिकं शिक्षणं संशिक्षणमितरदुर्लभम् ॥ ३४ ॥ सूर्यादप्यधिकाः, अथापि लक्षणीयाः, न सूर्यदीधितय इव चक्षुर्व्याघ्नन्ति पीडयन्ति वा, तादृश्यो दीधितयो यस्य सदनस्य । केचित् पाठक्रमादर्थ-क्रमो बलीयानिति व्यत्यस्य व्याख्यन् लक्षाधिकसूर्यदीधितेरिति । अधिकानि बहूनि च तानि लक्षाणि सूर्याणामधिक-लक्षाणीति वा । पार्षदैः सममारुह्य । स्वपार्षदान् द्विजं विहाय स्वपादमूलमागतानपि द्विजस्य सुतान् द्विजायैव ददौ च । एवमर्थे चायमेवशब्दः । स्वलोकादागात्, एवं स्वमहिमप्रदर्शनपूर्वकं द्विजाय सुतानदाच्च ॥ ३५ ॥ दीक्षित्वा यज्ञशालातः बहिश्चालने । चलन इति वक्तव्यम् । अथापि चालन इत्याह । तेनेदमाह– न कोऽप्यन्यस्तं बहिश्चालयामास । स एव स्वेच्छया स्वात्मानं यज्ञशरणादन्यत्र चालयामासेति तस्मिन् चलनं चालनं चैकमेवेति । नियमभ्रंशो वाऽत्र चालन-पदार्थः । स्वलोकादागम्य बन्धुभिः सङ्गम्य च । सार्धं मुहूर्तमिति घटिकात्रयम् ॥ ३६ ॥ आगमनमभिनन्द्य गन्तुमनुज्ञानं अभ्यनुज्ञानम् । ब्राह्मणानपि स्वपूजकानपि स्वयमपूजयत् ॥ ३७ ॥ सस्नौ यमुनायाम् । तथाहि भागवते–**'प्रायश्चित्तं तु चलने दीक्षायां य उदाहृतः । तं चकार यथान्यायं ब्राह्मणैरनुमोदितः । समाप्य यज्ञं विधिवत् तर्पयित्वाऽर्थिनो द्विजान् । ऋत्विजः पूजयित्वाऽन्यानृषींश्च कुरुसत्तम । यमुनायां महानद्यां कृत्वाऽवभृथमज्जनम् । विजहार यथाकामं महिषीभिर्यदूत्तमः'** [भाग. १०.१००.७२–५] इति । अवभृथो यज्ञावसानम् । दीक्षान्तं च स्नानम् । बिभर्तेरवे उपपदे कथन् प्रत्ययः । अवभृथं यज्ञावसानमुद्दिश्य सस्नौ । यज्ञान्तस्नानं वा सस्नौ चकार । पाकं पचतीतिवदयं प्रयोगः । दन्तवक्रो रुरोध ह । **'उद्यापनस्नानहेतोर्यमुनातीरमागतम् । श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्रः सहानुजः । महत्या सेनया युक्तो गजानीकसमन्वितः । गच्छन्तं द्वारकां कृष्णं पथि रोद्धुं समाययौ'** [भाग.१०. १०१.१] इति च । हेति दन्तवक्रस्य धाष्टर्यं विस्मयते, शापमोक्षं स्वदते । विष्णुवचनश्च हकारः । तेन स्वशापहापकं हरिं रुरोधेत्येवाऽह ॥ ३८ ॥

**जघान गदया कृष्णः तं क्षणात्[1] सविडूरथम् ।**
**विडूरथस्तमोऽगच्छद् दन्तवक्रे च योऽसुरः ॥ ३९ ॥**

**हरेः पार्षदः[2] क्षिप्रं हरिमेव समाश्रितः ।**
**कृष्णे प्राप्ते स्वलोकं च निस्सृत्यास्मात् स्वरूपतः ॥ ४० ॥**

**एकीभावं स्वरूपेण द्वारपेन[3] गमिष्यति ।**
**ततः कृष्णः पुरीमेत्य बोधयामास फल्गुनम् ॥ ४१ ॥**

**किमेतद् दृष्टमित्येव तेन पृष्टो रमापतिः ।**
**अयं द्वीपः सागरश्च लक्षयोजनविस्तृतौ ॥ ४२ ॥**

**ततः रमापतिः कृष्णः पुरीमेत्य दृष्टमेतत् किमिति तेन पृष्टः फल्गुनं बोधयामास । अयं द्वीपः जम्बूद्वीपः । अयं सागरश्च ॥ ४१–२ ॥**

---

क्षणादित्यनायासेन । दन्तवक्रानुजो विडूरथः । **'विडूर-सिन्दूर-पत्तूर-धुस्तूर-धुत्तूरादयः'** [स.कं.२.३.५९] ऊरप्रत्ययान्ता निपात्यन्त इति भोजः । विडूर इति वैडूर्ययोनिः पर्वतविशेषः । थकारः स्थितिवाची । विडूर इव सम्पदां पदमचलश्च शत्रूणां पुरस्तिष्ठतीति विडूरथः । अन्ते च विदूरे तमसि स्थितो बभूवेत्याह– विडूरथस्तमोऽगच्छदिति । तमेतं विदूरस्थं सन्तं विडूरथमाहुः । दन्तवक्रे योऽसुरः हिरण्याक्षः स च तमोऽगच्छत् ॥ ३९ ॥ हरेः पार्षद इति ळ्लथपाठेनाष्टाक्षरत्वम् । पार्षदो विजयः । स्वलोकं स्वं धाम तत्र स्वं मूलरूपं च । स्वरूपतः दन्तवक्रतया जातस्वरूपांशावच्छेदेन निःसृत्य द्वारपेन स्वमूलरूपेणैकीभावं गमिष्यति ॥ ४०–१ ॥ इत्येव इत्येवं पृष्टः । इत्येव तेन पृष्टः, नान्यत् किमपीति, जिज्ञासायां तस्य कुतूहलातिशयं चैवकारेणाऽह । रमापतिरेव च स्वयं बोधयामास । इदं च पूर्वमुक्तं संशिक्षयामासेति । सं भगवानेव स्वयं शिक्षयामासेति । परित आयाममानं विस्तारः । पारस्य अवारस्य च मध्यमानम् । **'नववर्षं तु मैत्रेय जम्बूद्वीपमिदं मया । लक्षयोजनविस्तारं सङ्क्षेपात् कथितं तव । जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः । मैत्रेय वलयाकारः स्थितः क्षारोदधिर्बहिः'** [वि.पु.२.३.२७–८] इति वैष्णवे ॥ ४२ ॥

---

१. **'कृष्णस्तत्क्षणात्'** । **'कृष्णः तं क्षणात्'** इति विश्लिष्यैव मूलादर्शे पठ्यते । **'भक्त्या त्वनन्यया शक्यः अहमेवंविधः'** इतिवत्, **'अः इति ब्रह्म'** इतिवच्च स्यादयं साकूतो विश्लेषः ।

२. **'हरेः पार्षदः'** इति क्षैप्रव्यूहेन ळ्लथपाठ इत्युक्तम् । एथं वैदिकं सम्प्रदायमजानन्तः **'हरेश्च पार्षदः'** इति मुधा पाठं पठन्ति ।

३. **'द्वारपेण'** इति कचित् ।

तदन्ये तु क्रमेणैव द्विगुणेनोत्तरोत्तराः ।
अन्त्याद्ध्यर्द्धस्थलं हैमं बाह्यतो वाज्रलेपिकम्[1] ॥ ४३ ॥

एतत् सर्वं लोकनाम ह्येतस्माद् द्विगुणं तमः ।
अन्धं यत्र पतन्त्युग्रा मिथ्याज्ञानपरायणाः ॥ ४४ ॥

घनोदकं तद्विगुणं तदन्ते धाम मामकम् ।
यत्तद् दृष्टं त्वया पार्थ तत्र मुक्तैरजादिभिः ॥ ४५ ॥

सेव्यमानः स्थितो नित्यं सर्वैः परमपूरुषः ।
लोकालोकप्रदेशस्तु पञ्चाशल्लक्षविस्तृतः ॥ ४६ ॥

सपञ्चाशत्सहस्रश्च तस्यापि गुणनं[2] तथा ।
योजनानां पञ्चविंशत्कोटयो मेरुपर्वतात् ॥ ४७ ॥

**अन्त्याध्यर्धस्थलम् । अन्त्यात् समुद्रात् परतः अध्यर्धस्थलम् । अर्धादपि पुनरधिकयुक्तं स्थलं हैमम् । बाह्यतः ततोऽर्वाक् स्थलं वज्रलेपसम्बन्धि । एतत्सर्वं तमसोऽर्वाक् अयं द्वीप इत्याद्युक्तं सकलं लोकनाम लोकसञ्ज्ञकं हि प्रसिद्धम् । पुराणादाविति शेषः । एतस्मात् उक्तद्वीपसमुदायात्, अन्धं तमः (द्विगुणम्) ॥ ४३–४ ॥ तद्विगुणम् (तमसो द्विगुणम्) । हे पार्थ, तदन्ते घनोदकात् परतः, त्वया यद् दृष्टं तत् मामकं धाम ॥ ४५ ॥ लोकालोकपर्वतप्रमाणमाह– लोकालोकेति । पञ्चाशल्लक्षविस्तृतः सपञ्चाशत्सहस्रश्च । अपि तथाऽपि पञ्चाशल्लक्षादुपरि पञ्चाशत्सहस्रयोजनपरिमितत्वेऽपि तस्य पर्वतस्य गणनं परिमाणगणनं तथा**

---

तदन्ये षड् द्वीपाः सागराश्च । द्विगुणेन मानेन विस्तृताः । **'जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलश्चापरो द्विज । कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः । एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः । लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम्'** [वि.पु.२.२.५–६] इति च । जम्बूद्वीपं प्रायो भूमेर्दृश्यभागः । अपराणि द्वीपानि जलधयश्च न स्थूलचक्षुर्गोचराः । तेषां बाह्यतः हैमं स्थलम् । तदपि बाह्यतो वज्रलेपयुक्तम् । कियन्मानम्? अन्त्याध्यर्धम् । अन्त्यात् स्वादूदकात्, अर्धाधिकमेकमध्यर्धम् । सार्धैकमानम् ॥ ४३ ॥ सप्तद्वीपानां सप्तसागराणां हैमस्थलस्य च संहत्य यावन्मानमेतस्माद् द्विगुणमानं अन्धन्तमः ॥ ४४ ॥ यत्तदिति समस्तं पूर्वपरामर्शो । तद् यथा— यत्तत् सास्नादिमत् सा गौः । यथा वा– यासा पद्मासनस्था ॥ ४५ ॥ पुरु सः, पुरुतरत्वात् पूरुषु ब्रह्मादिष्वपि सीदति नियन्तुमिति, स्यति च तानन्त इति पूरुषः ।

---

१. **'–लेपकम्'** २. **'तस्यापि गणनं तथा'** । वे.ती. पाठोऽपि तथा ।

**पञ्चाशल्लक्षपरिमितः, इति भागवतादौ श्रूयत इति शेषः । भागवतादौ अधिकपरिमाणस्य न्यूनपरिमाणतया गणनं कथं घटत इति चेत् दशयोजनाद्यधिकस्यापि ग्रामादेः दशयोजनादिव्यवहारस्य लोके दर्शनाद् युज्यते । अस्य तात्पर्यग्रन्थत्वाद् यथावस्तु कथनमेव कृतमिति भावः ॥ ४६–८ ॥**

---

पुरेषु, परमपुरि वा वैकुण्ठे शेत इति च । पुरं शरीरमुषति, ऊष्मोपेतं करोतीति च । उष दाहे । कृतसम्प्रसारणोऽप्युषधातुर्भवति । अथच नराः पुरुषाः । नरोत्तमः पूरुषः । नारायणः परमपूरुषः । अत्रापि नरोऽर्जुनः पुरुषः । नरोत्तमो भीमः पूरुषः । परमपूरुषस्त्वहमेवेत्याह कृष्णः । पञ्चाशल्लक्षयोजनविस्तृतः ॥ ४६ ॥ सपञ्चाशत्सहस्रयोजनश्च । पूर्वमनुक्त इति न स गणनावसरेऽन्यत्र क्वाप्यन्तर्भाव्य हातव्य इत्याह– तस्यापीति । तस्यापि लोकालोकप्रदेशस्य तथा लोकगणनवत् तदनन्तरं गुणनं गणनं करणीयमिति । यद्यपि गणनमित्याकलनमुच्यते । गुणनमित्याहननम् । अस्त्यत्रार्थविशेषविवक्षा । न सर्वमपि गणितं गुणितं भवति । किन्तु सर्वमपि गुणितं गणितं भवति । तेन गुणनमिति द्वयोरर्थयोः प्रयुज्यते– आकलने च, आहनने च । अर्थद्वयमप्यत्र विवक्षितमिति सूचनायैव गुणनमित्याह । **'गुण आमन्त्रणे'** इति हि धातुपारायणिकाः । आकलनाय वा मन्त्रणं स्यात् । आहननाय वा । आहननार्थत्वं चोपरि स्फुटम् । कथं लोकालोकपर्वतः? एकस्मिन् पार्श्वे सूर्यालोकस्य लोकोऽवलोकनम् । अपरत्रालोकोऽदर्शनमेवेति । **'प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते । आलोकस्तत्र चार्वाक् च निरालोकस्ततः परम्'** [म.पु. १२३.४७] इति मात्स्ये । अथच यत् क्वचित् लोकालोकमानस्यान्यथाकथनं तस्यापि गुणनं तथा करणीयम्, यथाऽत्रोक्तम् । तद्यथा वैष्णवे लोकालोकशैलोऽयुतयोजन उच्यते– **'लोकालोकस्तथा शैलो योजनायुतविस्तरः'** [वि.पु.२.४.९५] इति । अत्र योजनानामयुतमिति नार्थः । योजनानां बहून्ययुतानीत्यर्थः । ५०५ वारं गुणितान्ययुतानीति यावत् । एवमन्यत्रापि । पञ्चविंशत्कोटयः । विंशदिति विंशतिरिति, त्रिंशदिति त्रिंशतिरिति द्वेधाऽपि प्रयोगः पुराऽसीत् । पाश्चात्या वैयाकरणाः प्रयोगबाहुल्यमनुसरन्तो नियमयामासुः– विंशतिरित्येव प्रत्योक्तव्यं न विंशदिति, त्रिंशदित्येव प्रयोक्तव्यं न त्रिंशतिरितीति । मेरुपर्वतमारभ्य चतसृष्वपि दिक्षु, ऊर्ध्वमधश्चेति सर्वतः पञ्चविंशतिकोटियोजनानि ब्रह्माण्डमानमिति । तथाचैवं गणना– लक्षयोजनविशालस्य जम्बूद्वीपस्य मेरुकेन्द्रतया ततः परितः परिणाहः ५०,००० योजनानि । ततः लावणः सागरः–१,००,००० योजनानि । ततः प्लक्षद्वीपः २,००,००० योजनानि । ततः परित इक्षुसमुद्रः–२,००,००० योजनानि । ततः शाल्मलद्वीपः –४,००,००० योजनानि । तदनु सुरोदस्तावान् सागरः– ४,००,००० योजनानि । ततः कुशद्वीपः–८,००,००० योजनानि । सागरश्च सार्पिषस्तावान् – ८,००,००० योजनानि । तदनु क्रौञ्चद्वीपः– १६,००,००० योजनानि । सागरश्च दधिमण्डोदः– १६,००,००० योजनानि । तदनु शाकद्वीपः– ३२,००,००० योजनानि । क्षीरसागरश्च तावान्– ३२,००,००० योजनानि । ततः पुष्करद्वीपः– ६४,००,००० योजनानि । सागरश्च स्वादूदः– ६४,००,००० योजनानि । ततः अन्त्यात् स्वादूदादध्यर्द्धपरिमाणं वाज्रलेपिकं हैमं स्थलम् ९६,००,००० योजनानि । एतावत् लोकनामकम् । तथाच मेरुमध्यादान्तं संहत्य लोकमानम्–३,४९,५०,००० योजनानि । ततो लोकालोकपर्वतप्रदेशः–५०,५०,००० योजनानि । लोकमानाद् द्विगुणमन्धतमसम् (३,४९,५०,०००X२)= ६,९९,००,००० योजनानि । ततोऽपि द्विगुणं घनोदकम्

**चतसृष्वपि दिक्षूर्ध्वमधश्चाण्डं प्रकीर्त्तितम् ।**
**अबग्नीरनभोहङ्कृन्महत्तत्वगुणत्रयैः ॥ ४८ ॥**

**क्रमाद् दशोत्तरैरेतदावृतं[1] परतस्ततः ।**
**व्याप्तोऽहं सर्वगोऽनन्तोऽनन्तरूपो निरन्तरः ॥ ४९ ॥**

**अनन्तः देशतः कालतश्च गुणतश्च नाशरहित इति भावः । अनन्तरूपः असङ्ख्यातरूपः । निरन्तरः अनन्तरूपत्वेऽपि परस्परं भेदरहितः ॥ ४९ ॥**

---

(६,९९,००,०००x२)= १३,९८,००,००० योजनानि । सर्वाणि सङ्कलय्य आजम्बूद्वीपमध्यबिन्दोरा घनोदकान्तं विस्तारः– (३,४९,५०,०००+५०,५०,०००+६,९९,००,०००+१३,९८,००,०००)=२४,९७,००,००० योजनानि । तदन्ते धाम मामकम् । तदपि त्रिलक्षयोजनपरिमितमिति वदन्ति । एवञ्च केन्द्रबिन्दोः पञ्चविंशत्कोटियोजनमितमण्डं प्रकीर्तितमिति ॥ ४७ ॥ ततः भगवद्धाम्नः परतः, अबादिभिः सप्तभिः क्रमाद् दशगुणोत्तरैरावरणैरेतदण्डमावृतम् । अबग्निसमीरनभांसि चत्वारि भूतानि । ततो भूतादिरहङ्कारः पञ्चममावरणम् । महत्तत्वं षष्ठम् । गुणत्रयं सप्तमम् । दशोत्तरत्वमविवक्षित्वा गुणानां पृथग् गणन एतान्येव नवावरणानि । **'सनवावरणाण्डदर्शिनः–'** [म.वि.७.४७] इति पण्डिताचार्यवचनम् । **'अबग्नीरनभोऽहङ्कृन्महत्तत्वगुणत्रयाख्यनवावरणेनोपेतं ब्रह्माण्डं पश्यतः'** इति वेदाङ्गतीर्थाः । गुणत्रयमेकीकृत्य पृथिवीमुपसङ्गृह्य पञ्चभूतानां ग्रहणेऽष्टावावरणानि । तथाहि भागवततात्पर्ये वचनम् [भाग.३.१२.३९–४०]–**'पृथिवीं विशेष इत्याहुः शब्दादीनां बहुत्वतः । सा सूक्ष्मा त्वावृणोत्यण्डं द्विगुणा तु दशोत्तराः । अबादयः प्रकृत्यन्ता अष्ट प्रकृतयः स्मृताः'** इति । ननु तर्हि किमिति पार्थिवमावरणमत्र नोदलेखि? तस्य दशगुणत्वाभावात् । दशोत्तराणामेव चात्र ग्रहणात् । पृथिव्यावरणस्यैतदपेक्षया न्यूनत्वात् । ननु पृथिव्यावरणं द्विगुणमित्यवगतम् । कस्माद् द्विगुणमित्यनुसन्दधीमहि? अत्र द्वयी गतिः–लोकमानाद् द्विगुणेति, अण्डकोशमानाद् द्विगुणेति । तथाहि मात्स्ये स्मर्यते– **'लोकविस्तारमात्रं तु पृथिव्यर्धं च बाह्यतः । प्रतिच्छन्नं समन्तादप्युदकेनाऽवृतं महत् । भूमेर्दशगुणा आपः समन्तात् पालयन्ति गाम् । अद्भ्यो दशगुणश्चाग्निः सर्वतो धारयत्यपः । अग्नेर्दशगुणो वायुर्भूतान्यावेष्टय धारयन् । दशाधिकं तथाऽऽकाशं वायोर्भूतान्यधारयत् । भूतादिर्धारयन् व्योम तस्माद् दशगुणस्तु वै । भूतादितो दशगुणं महद् भूतान्यधारयत् । महत्तत्वमनन्तेन अव्यक्तेन तु धार्यते'** [म.पु.१२३.४८–५३] इति । अयमर्थः– पूर्वापरगतस्य लोकालोकप्रदेशस्य मध्यभागो लोकविस्तारः । उक्तं हि पूर्वम्–**'एतत् सर्वं लोकनाम–'** [४४] इति । तेन पूर्वोक्तदिशा [३,४९,५०,०००x२]= ६,९९,००,००० योजनानि लोकविस्तारः । तदिदमावरणभूतायाः अर्धं यथा स्यात् तथा, लोकाद् द्विगुणमानेन बाह्यतः पृथिव्यावरणं प्रतिच्छन्नमिति । तथाच प्रथमं लोकमानाद् द्विगुणं पार्थिवमावरणं

---

१. **'दशगुणैरेतदावृतम्'** । **'दशोत्तरैरेतैरावृतम्'** इति क्वचित् ।

**अनन्तशीर्षोऽनन्ताक्षोऽनन्तपादकरोरुकः ।**
**अनन्तगुणमाहात्म्यश्चिदानन्दशरीरकः ॥ ५० ॥**

**पुनश्च स्वरूपमाह–अनन्तशीर्ष इत्यादिना ॥ ५० ॥**

---

घनोदकसमानम्– [६९९०००००X२] =१३९८०००००० योजनानि । ततो दशगुणमबावरणम्–१३९८०००००० योजनानि । एवं दशोत्तरगणने गुणत्रयविस्तारः– १३९८०००००००००० योजनानि । अथ नवावरणतया गुणत्रयस्य पृथग् ग्रहणे एकैकस्य प्रातिस्विकं मानम्–४६६०००००००००००० योजनानि । इयमेका रीतिर्मत्स्यपुराणे मुखतः प्रतीयमाना । अथच भागवततात्पर्य उदाहृते–**'सा सूक्ष्मा त्वावृणोत्यण्डम्–'** इति प्रमाणवचने प्रतीयमाना रीतिरन्या-दृशीव । तदनुसारेण पृथिव्यावरणमण्डाद् द्विगुणम्, न लोकमानात् । तथाहि भागवतव्याख्यायामनन्ततीर्थाः–**'अण्ड-कोशोऽयं बहिः दशोत्तराधिकैः क्रमाद् दशगुणमुत्तरोत्तराधिकैः, विशेषादिभिः पृथिव्यादिभिः, पञ्चभूतान्यहं महत् प्रकृतिरित्यष्टावरणैः आवृतः, स्वयं पञ्चाशत्कोटिविस्तृतः । अष्टावरणानि पृथिवीं विनोत्तरोत्तरतो दशगुणाधि-कानि । पृथिवी त्वण्डकोशाद् द्विगुणाधिकेति'** इति । तथाचैतत्पक्षानुसारेण अण्डमानाद् द्विगुणं पृथिव्यावरणं शतकोटियोजनानि [१०००००००००] । ततोऽबावरणं सहस्रकोटियोजनानि । अग्न्यावरणं दशसहस्रकोटियोजनानि । वाय्वावरणं लक्षकोटियोजनानि । नभआवरणं दशलक्षकोटियोजनानि । अहङ्कारतत्वावरणं कोटिकोटियोजनानि । महत्तत्वावरणं दशकोटिकोटियोजनानि । गुणत्रयात्मकप्रकृत्यावरणं शतकोटिकोटियोजनानीति । अनयोरुभयोः कतरः श्रेयान्? आचार्योदाहृतप्रमाणेन स्फुटसंवादाद् द्वितीयः साधुरिति सूक्तम् । मात्स्येऽपि पृथिवीपदेनाण्डकोश एव गृह्यत इति युक्तम् । ततः ब्रह्माण्डावरणादपि परतः बहिः । एतत् सर्वमतीत्य स्थित इत्यर्थः । तथाऽपि अहमत्र सर्वत्र व्याप्तः । सर्वजीवेषु च गतः । अन्तर्यामीत्यर्थः । यद्वा व्याप्तः देशतः कालतो गुणतश्च । तदेव विवृणोति– सर्वगः सर्वत्र गतः । न विद्यतेऽन्तः नाशोऽस्येति अनन्तः । न विद्यते गुणानामन्तोऽस्येति च । अनन्तानि असङ्ख्यानि, देशतः कालतो गुणतश्चानन्तानि च रूपाण्यस्य । अथापि निरन्तरो निर्भेदः । अन्तान्निष्क्रान्ता निरन्ता मुक्तास्तानप्ययं रमयति ॥ ४८–९ ॥ अनन्तानि स्वरूपशीर्षाण्यस्य । अनन्तेषु जीवशीर्षेष्वस्य शीर्षमाहितमिति च । **'निपातनाच्छिरसः शीर्षभावः'** इति वैयाकरणाः । शीर्षमिति पदान्तरमिति तत्ववादिनः । एवमक्ष्यादिष्वप्यनुसन्धानक्रमः । अनन्तान्यक्षाणीन्द्रियाण्यस्य । **'अक्षं सौवर्चले तुत्थे हृषीके'** इत्यभिधानम् । अनन्तान्यक्षीण्यस्येति वा । समासान्तः षच् । **'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्'** [अ.सू.५.४.११३] इति हि स्मरन्ति । **'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्'** इति पौरुषं सूक्तमनेन समाख्यापयति । अनन्ताक्ष इति शीर्षण्यानीन्द्रियाणि । पादकरोर्विति आपातदळकन्धरं सर्वावयवसङ्ग्रहः । अनन्तानि पादकरादीन्यन्ङ्गान्यस्य उरुकानि पूर्णानन्दस्वरूपाणीति च । अनन्तगुणाभिव्यञ्जचं माहात्म्यमस्य । चिदानन्दावेव शरीरमस्य । अज्ञातं च सर्वभक्तस्य । अज्ञाते कः । **'स्वेन रूपेण ज्ञाते पदार्थे विशेष-रूपेणाज्ञाते प्रत्ययविधानमेतत्'** [अ.सू.५.३.७३] इति जयादित्यः । शरीरं कानि इन्द्रियाणि चेति वा ॥ ५० ॥

**मद्वशा एव सर्वेऽपि त्वं चान्ये च धनञ्जय ।**
**मत्प्रसादाद् बलं चैव विजयश्चाखिला गुणाः ।**
**तस्मान्न विस्मयः कार्य्यो न दर्प्पश्च त्वयाऽनघ ॥ ५१ ॥**

**'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे' ॥ ५२ ॥**

**इत्युक्तः प्रणिपत्यैनं क्षमस्वेत्याह फल्गुनः ।**
**उषित्वा कतिचिन्मासान् ययुः सर्वेऽपि पाण्डवाः ॥ ५३ ॥**

**अनुज्ञाताः केशवेन भक्तिनम्रधियोऽच्युते ।**
**सम्भाविताः केशवेन सौहार्देनाधिकेन च ॥ ५४ ॥**

**यदर्थमयं द्वीप इत्याद्युक्तं तदाह–मद्वशा एवेत्यादिना । सर्वे लोका लौकिकास्तद्धर्माश्च । तस्मात् सर्वस्य मदधीनत्वात् त्वया विस्मयः, त्वद्विषयेऽन्यत्र चाऽश्चर्यबुद्धिः, न कार्यः । दर्पश्च, अहं जितवानस्मि जेष्ये चेत्यहङ्कारश्च, न कार्यः ॥ ५१ ॥ पुनश्च तं शिक्षयति– मन्मना इत्यादिना ॥ ५२–४ ॥**

---

सर्वेऽपि के? त्वं चान्ये च । मत्प्रसादादेव । शत्रूणां दमनेन लब्धं बाह्यधनम्, ज्ञानाख्यं भगवदनुग्रहाख्यं मोक्षाख्यं च महाधनं जिगायेति धनञ्जयः । कुतः? स्वतोऽनघत्वात् । **'अहो सर्वङ्कषा मे प्रज्ञा । किमस्ति मदविज्ञातम्'** इत्यन्तः-श्मश्रु हासो विस्मयः । **'कोऽन्योऽस्ति सदृशो मया'** इति गर्वो दर्पः ॥ ५१ ॥ **'मन्मनाः–'** इति गीता-वचनेनैवोपदेशसारमुपसंहरति । **'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु'** इति द्विः पठ्यते नवमे च [३४], अष्टादशे च सर्वोपसंहारे [६६] । **'मामेवैष्यसि सत्यं ते–'** इत्यष्टादशे । एवमभ्यासोपसंहाराभ्यां भगवतस्तत्र महातात्पर्यम-वगम्यते । मद्याजी भव । यद्यत् करोषि सा सर्वा मत्पूजेति भावनया कुरु । सत्यं ते प्रतिजाने । सत्यमिति प्रतिज्ञापूर्वं ते ब्रवीमि ॥ ५२ ॥ प्रसादयितुं नितरां सर्वाङ्गकैः पादयोः पतनं प्रणिपतनम् । नम्यस्य प्रकर्षं नन्तुर्नीचतां च प्रकटयत् पतनं प्रणिपतनम् । प्रणेतरि प्रणेयस्य प्रणयनिदर्शनं पतनं प्रणिपतनम् । स्वात्मानं पादयोः प्रणीय पतनं प्रणिपतनम् ॥ ५३ ॥ केशयोः ब्रह्मरुद्रयोर्विषये यादृशं वर्तते सौहार्दं तादृशेन केशवेन सौहार्देन प्रसादेन । अत एव कर्मिषु मानुषेषु यः प्रसादस्ततोऽधिकेन, देवोत्तममात्रगोचरतया चाधिकेन । अनुज्ञाताः, सम्भाविताः प्रीत्या सत्कृताश्च । अथवा निर्वचनद्वयद्योतनाय द्विः केशवेनेत्याह । केशौ वर्तयतीति केशव इति प्रसिद्धम् । अत्र पुनः शुक्लकृष्णकेशात्मना वर्तत इति च केशवो विवक्षितः । तेनोभयात्मना केशवेन, कृष्णेन बलभद्रेण च सत्कृताः हस्तिनपुरं ययुरित्यति-पेशलम् । अनेनैतदप्याह– एकेनापि नाम्ना सकृत्प्रयुक्तेनापि बहवो गुणा अनुसन्धातव्या इति । केशवः प्रशस्तकेशपाशवानिति,

ततः कदाचित् प्रवरे सभातळे[1] धर्म्मात्मजो राजभिर्भ्रातृभिश्च ।
वृतो निशम्यैव सभाः सुराणां यथा स्थिता नारदमन्वपृच्छत् ॥ ५५ ॥

अन्तरिक्षं त्वया प्रोक्तं लक्षयोजनमुच्छ्रितम् ।
अर्द्धकोट्युच्छ्रितः स्वर्ग्गो विमानावलिसङ्कुलः ॥ ५६ ॥

भुवः स्वर्ग्गश्च कोट्यैव योजनानां प्रविस्तृतौ ।
महर्ज्जनस्तपश्चैव क्रमादद्ध्यर्द्धयोजनाः ॥ ५७ ॥

**राजसूयकरणं वक्ष्यन् तदुपयुक्तं प्रस्तावान्तरमुपक्रमते– तत इत्यादिना । यथा स्थिताः तथा नारदोक्ताः निशम्य उक्तानुवादपूर्वकं नारदं 'हरिश्चन्द्रो नृप ऐन्द्रं सभातळं कथं प्राप्तः? अस्मत्पिता पाण्डुः कथं न प्राप्तः'(७१) इति अपृच्छत् इत्युत्तरत्र सम्बन्धः ॥ ५५ ॥ उच्छ्रितम्, भुव इति शेषः । अर्धकोट्युच्छ्रितः । अत्रापि भुव इति योज्यम् ॥ ५६ ॥ भुवः भुवर्लोकः[2] अन्तरिक्षलोकः । महर्जनस्तप इत्यादि ये[3] लोकाः क्रमात् स्वर्गादिक्रमात् अध्यर्धयोजनाः पूर्वपूर्वलोकेभ्य उत्तरोत्तरलोकाः पूर्वलोकपरिमाणात् पुनश्च तदर्धपरिमाणोच्छ्रिताः ॥ ५७ ॥**

---

केशवः केशिनं हतवानित्यादि । **'केशी विषस्य पात्रेण'** इति प्रयोगात् केशी वायुरपि । तेन केशिनं भीमात्मानं वर्तयतीति च केशवः । अर्थविशेषा अस्मत्कृते श्रीविष्णुसहस्रनामव्याख्याने द्रष्टव्याः ॥ ५४ ॥ यथावत् स्थिताः । यथावत् निशम्यैवेति वा । यथा स्थितास्तथा निशम्य वा । निशम्यैवेत्येवकारेण पृच्छायां कुतूहलातिशयमाह । अत एवान्वपृच्छत् । कुतूहलं निग्रहीतुमप्रभवन् । विळम्बमसहमानः अनुपदमेवापृच्छत् । अनुगुणमेव चापृच्छत् ॥ ५५ ॥ ऊर्ध्वलोकानामुन्मानं पुराणेषु बहुधा पठ्यते । नैकत्रापि स्फुटम् । अतस्तन्निर्णयायोपक्रमते– अन्तरिक्षम् । ननु तदुपर्यप्यन्तरिक्षं वर्तते । सत्यमन्तरिक्षं वर्तते । नत्वन्तरिक्षलोकः । **'यक्षपिशाचभूतप्रेतगणानां विहाराजिरमन्तरिक्षं यावत् वायुर्वाति यावन्मेघा उपलभ्यन्ते'** [५.२३.५] इति भागवते । यं भुवोलोकमाहुः । **'भूर्लोकः प्रथमस्तेषां द्वितीयस्तु भुवः स्मृतः । स्वस्तृतीयस्तु विज्ञेयश्चतुर्थो वै महः स्मृतः । जनस्तु पञ्चमो लोकस्तपः षष्ठो विभाष्यते । सत्यस्तु सप्तमो लोको विष्णुलोकस्ततः परम्'** [उप.पा.२.१४–६] इति ब्रह्माण्डे । **'वायुर्भुवश्चाधिपतिस्तेन वायुर्भुवस्पतिः । दिवस्य सूर्योऽधिपतिस्तेन सूर्यो दिवस्पतिः'** [२०] इति च । **'भूम्यन्तरं यदादित्यादन्तरिक्षं भुवः स्मृतम् । सूर्यध्रुवान्तरं यच्च स्वर्गलोको दिवः स्मृतः'** [३९] इति च । लक्षयोजनमुच्छ्रितमित्यत्यन्तसंयोगे द्वितीया । पृथिव्या उपरि लक्षयोजनपर्यन्तमित्यर्थः । लक्षं योजनानि यस्य तदिति । लक्षयोजनमितमित्यर्थः । **'महीतलात् सहस्राणां शतादूर्ध्वं दिवाकरः'** [१२९] इति च । विमानानि देवरथाः । तेन देवलोकोऽयमित्याह ॥ ५६ ॥ भुव इति भुवोलोकः । अन्तरिक्षमित्येतत् । पूर्वपश्चिमयोर्दक्षिणोत्तरयोश्च

---

१. **'सभातले'** २. **'भुवोलोकः'** इति साधीयान् पाठः । ३. आदिवचनमनर्थकम् । **'इति ये लोकाः'** इति, पर्याप्तम् ।

**पञ्चाशत्कोटिविस्तारा योजनानां[१] समस्तशः ।**
**यावन्त एते मिळितास्[२]तत्प्रमाण उदीरितः ॥ ५८ ॥**

**सत्याख्यो ब्रह्मलोकस्तु यत्र ब्रह्मा वि राजते ।**
**ततश्च द्विगुणः प्रोक्तो विष्णुलोकः सनातनः ॥ ५९ ॥**

**समस्तशः महरादयः ॥ ५८ ॥ सनातनः शश्वदेकप्रकारः ॥ ५९ ॥**

---

परिणाहः प्रविस्तारः । चतसृष्वपि दिक्षु समाना विशालतेत्येतत् । द्वयोर्दिशोर्दैर्घ्यमपि विस्तारो भवतीति प्रविस्तृतावित्याह । क्रमादध्यर्धयोजनोच्छ्रयाः । अत्र विद्वांसो विवदन्ते । निर्णयवचनमनिर्णयान्धौ निक्षिपन्ति । स्फुटं मूलवचनसंवादी चायमर्थः– आदौ भूमेरधस्ताद् भूमध्यबिन्दुतस्तळपर्यन्तं पञ्चाशत्सहस्रयोजनानि योजनीयानि । ततो भूमेरूर्ध्वं लक्षयोजनपर्यन्तोऽन्तरिक्षलोकः । ततोऽर्धकोटियोजनानि [५०,०००००] स्वर्गलोकः । संहत्य ५१००००००योजनानि । ततो महर्जनस्तप इति त्रयो लोकाः क्रमादध्यर्धयोजनपरिमिताः । तथाहि महर्लोकः स्वर्गपर्यन्तादुन्नाहादध्यर्धाधिकः– [५१०००००+२५५००००= ७६५००००] योजनानि । ततोऽध्यर्धयोजनो जनोलोकः– [७६५००००+३८२५०००=११४७५०००] योजनानि । ततोऽध्यर्धयोजनस्तपोलोकः–[११४७५०००+ ५७३७५००=] १७२१२५०० योजनाानि । एते मिलिता लोकाः, आभूमध्यबिन्दोरा तपोलोकम्– [५००००+५१००००००+ ७६५००००+११४७५०००+१७२१२५००=] ४१४८७५०० योजनोन्नाहाः । सत्याख्यो ब्रह्मलोकः पुनस्तावत्प्रमाणः–[४१४८७५००x२=] ८२८७५००० योजनानि । ततो द्विगुणयोजनो विष्णुलोकः–[८२९७५०००x२=] १६५७५०००० योजनानि । तथाच मिलितानि योजनानि–[८२९७५०००+१६५९५००००=] २४८९२५००० योजनानि । ननु अधश्चोर्ध्वं च पञ्चाशत्कोटिविस्तारं ब्रह्माण्डमित्युक्तम् । तेन भूमध्यादधः २५कोटय उपरि च २५कोटय इत्यायातम् । उपरितनलोकानां सामस्त्येन गणनेऽपि न सङ्ख्यापूर्तिः । इतोऽपि १०७५०००[+२४८९२५०००=२५००००००००] योजनानि कटाहान्तरवशिष्यन्ते । सत्यं सर्वगणनान्तेऽप्यवशिष्यन्ते । अत एव भगवत्पादः– ततश्च द्विगुण इत्याह । द्विगुणश्च किञ्चिदधिकश्चेत्यर्थः । एतादृशेषु स्थलेष्वेव शतेपञ्चाशन्न्यायावसरः । नहि द्विगुणादीषदधिको द्विगुणो न भवतीति वक्तुं साम्प्रतम् । तदेवमिह सर्वं सुसङ्गतम् । ब्रह्मलोकस्तु इति तुना सृष्टेषु लोकेषु ब्रह्मलोकस्य सर्वाधिक्यमाह । ब्रह्मलोक इति न परब्रह्मलोक इत्याह– यत्र ब्रह्मा । पुरुषमानी पुँल्लिङ्गपदवाच्यश्चतुर्मुख इत्यर्थः । विना विष्णुना सह राजते । तदनुगृहीतो राजते । ब्रह्माण्डान्तर्गतोऽपि विष्णुलोको वैकुण्ठः सनातनः । यथा श्वेतद्वीपानन्तासनौ । अन्ये सत्यलोकान्ताः सर्वे लोकाः परकालावसाने परिसंह्रियन्त इत्यर्थः । उन्नाहकथनप्रस्तावे मध्ये स्वर्गादुपरितनलोकानां विस्तारमाह– पञ्चाशत्कोटिविस्ताराः । अन्तरिक्षद्युलोकाभ्यां परे महरादयः समस्तशः सर्वे योजनानां पञ्चाशत्कोटयो विस्तारो येषां ते । उदीरित इति । त्वयोदीरित इति नारदं प्रत्याह युधिष्ठिरः । विष्णुलोकः प्रोक्तः सर्वस्मात् प्रकृष्ट उक्त-

---

१. **'–विस्तारो योजनानाम्'** २. **'मिलिता–'** । **'यावन्तस्तेऽपि मिळिता–'** इति क्वचित् ।

उत्तरोत्तरतः सर्वे सुखे शतगुणोत्तराः ।
अनन्तजनसम्पूर्णा[१] अपि ते हीच्छया हरेः ॥ ६० ॥

अवकाशवन्तो दिव्यत्वात् पूर्य्यन्ते न कदाचन ।
सर्वकामसुखैः पूर्णा दिव्यस्त्रीपुरुषोज्ज्वलाः ॥ ६१ ॥

दिव्यरत्नसमाकीर्ण्णं तथा पाताळसप्तकम् ।
अधस्ताच्छेषदेवेन बलिना समधिष्ठितम् ॥ ६२ ॥

कामभोगसमायुक्ता बहुवर्षसहस्रिणः ।
सप्तद्वीपेषु पुरुषा नार्य्यश्चोक्ताः सुरूपिणः ॥ ६३ ॥

**ते लोकाः पूर्वमनन्तजनसङ्कीर्णा अपि अवकाशवन्तः । कदाचन न पूर्यन्ते । तत् कथमिति तत्र निमित्तमाह– हरेरिच्छया दिव्यत्वादिति ॥ ६०–१ ॥ भूमेरधस्तनलोकस्वरूपमाह– दिव्येति ॥ ६२–७० ॥**

---

स्त्वया । एवमुत्तरत्रापि ॥ ५७–९ ॥ शतगुणोत्तरा यथासम्भवं बहुगुणोत्तराः ॥ ६०–१ ॥ पाताळसप्तकमधोलोकसप्तकम् । **'अतळं वितळं चैव नितळं च गभस्तिमत् । महाख्यं सुतळं चाग्र्यं पाताळं चापि सप्तमम्'** [२.५.२] इति वैष्णवे । नितळमिति तळातळम् । गभस्तिमदिति रसातळम् । **'अवनेरप्यधस्तात् सप्त भूविवरा एकैकशो योजनायुतायामास्तारतम्येनोपक्लृप्ता अतळं वितळं सुतळं तळातळं महातळं रसातळं पाताळमिति'** [५.२३.७] इति भागवते । **'स्वर्लोकादपि रम्याणि पाताळादीनि नारदः । प्राह स्वर्गसदां मध्ये पाताळेभ्यो गतो दिवि । आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः । नागैराभ्रियमाणास्तु पाताळं केन तत् समम्'** [२.५.८–६] इति वैष्णवे । तथा भूमध्यात् पञ्चविंशत्कोटयोजनावनतमित्यर्थः । बलिना शेषदेवेन, शेषदेवेन बलिना च वा समधिष्ठितम् । शेषो देवो यस्य तेन शेषनियम्येन वा बलिना । मूलतः समधिष्ठितं विष्णुनाऽधिष्ठितम् । **'पाताळानामधश्चास्ते विष्णोर्या तामसी तनुः । शेषाख्या यद्गुणान् वक्तुं न शक्ता दैत्यदानवाः'** [वि.पु.२.५.१३] इति च । **'ततोऽधस्तात् सुतळ उरुश्रवाः पुण्यश्लोको विरोचनात्मजो बलिर्भगवता...... वामनरूपेण पराक्षिप्तलोकत्रयः....आस्तेऽधुनाऽपि'** [५.२३.२०] इति भागवते ॥ ६२ ॥ सप्तद्वीपेष्वपि जम्बूद्वीपादिषु विना साधनभूमिम् । **'–तत्र जम्बूनदीति वै । सरित् प्रवर्तते सा च पीयते तन्निवासिभिः । न स्वेदो नच दौर्गन्ध्यं न जरा नेन्द्रियक्षयः । तत्पानात् स्वच्छमनसां जनानां तत्र जायते'** [२.२.२०–१] इति वैष्णवे । **'तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः । नाऽधयो व्याधयो वाऽपि सर्वकालसुखं हि तत्'** [२.४.९] इति च । तेषु प्लक्षद्वीपप्रदेशेषु । **'प्लक्षद्वीपादिषु ब्रह्मन् शाकद्वीपान्तिकेषु वै । पञ्चवर्षसहस्राणि जना जीवन्त्यनामयाः'**

---

१. **'–सङ्कीर्णा–'** इति वे.ती.पाठः स्यात् ।

**एषां च सर्वलोकानां धाता नारायणः परः ।**
**विष्णुलोकस्थितो मुक्तैः सदा सर्वैरुपास्यते ॥ ६४ ॥**

**सेवका ब्रह्मणश्चैव देवा वेदाश्च[1] सर्वशः ।**
**शक्रस्य मुनयः सर्वे हरिश्चन्द्रश्च भूमिपः ॥ ६५ ॥**

**अखिला अपि राजानः पाण्डुश्चास्मत्पिता मुने ।**
**यमस्यैवानुगाः प्रोक्ता राजभिस्तैर्य्यमेन च ॥ ६६ ॥**

**उपास्यमानो भगवान् रामो यमसभातळे[2] ।**
**उक्त इन्द्रेण चोपास्यो वामनात्मा जनार्दनः ॥ ६७ ॥**

**प्रादुर्भावाश्च निखिला ब्रह्मणोपासिताः सदा ।**
**वरुणस्यानुगा नागास्तत्र मत्स्याकृतिर्हरिः ॥ ६८ ॥**

**गन्धर्वा धनदस्यापि तत्र कल्की हरिः प्रभुः ।**
**रुद्रस्योग्राणि भूतानि नृसिंहात्मा शिवेन च ॥ ६९ ॥**

**उपास्यते सदा विष्णुरित्याद्युक्तं त्वयाऽनघ ।**
**सर्वरत्नस्थलान् दिव्यान् देवलोकान् प्रभाषता ॥ ७० ॥**

---

[१५] इति च । **‘दशवर्षसहस्राणि तत्र जीवन्ति मानवाः’** [७९] इति च । तत्र पुष्करद्वीपे । **‘भोजनं पुष्करद्वीपे तत्र स्वयमुपस्थितम्’** [९३] इत्यादि च ॥ ६३ ॥ विष्णुलोके सर्वेषां दृश्यतया स्थितः ॥ ६४ ॥ ब्रह्मणश्चेति प्राधान्ये चः । सर्वे च देवास्तस्य सेवका एव । विशिष्य वेदमानिनः । हरिश्चन्द्रश्च शक्रस्य सेवकः ॥ ६५ ॥ अन्ये राजानः, अस्मत्पिता च । यमस्यैव । न शक्रस्य ॥ ६६ ॥ रामो यमसभातळे । राम इति भार्गवो दाशरथिश्च । वक्ष्यति च स्वयमेव–**‘रामद्वयसुदैवते’** इत्युपरि [७२] । वामनात्मा । उपेन्द्रो हि सः ॥ ६७–८ ॥ गन्धर्वा अनुगाः । उग्राणि भूतान्यनुगानि ॥ ६९ ॥ अघमिति दुरितम् । अनघ, सततं भगवच्चिन्तनेन हतदुरित । अघमिति दुःखम् । अनघ भगव-

---

१. **‘ब्रह्मणः सर्वे वेदा देवाश्च’** २. **‘–तले’**

**तत्र मे संशयो भूयान् हरिश्चन्द्रः कथं नृपः ।**
**ऐन्द्रं सभातळं[१] प्राप्तः पाण्डुर्नास्मत्पिता मुने ॥ ७१ ॥**

**इत्युक्तो नारदः प्राह राजसूयकृतोन्नतिम् ।**
**हरिश्चन्द्रस्य तां दृष्ट्वा पिता यमसभातळे[२] ।**
**स्थितस्त्वामवदत् पाण्डू रामद्वयसुदैवते ॥ ७२ ॥**

**करोतु राजसूयं मे पुत्रोऽजेयानुजार्च्चितः[३] ।**
**पालितो वासुदेवेन किं तस्यासाद्ध्यमत्र हि ॥ ७३ ॥**

**एतच्छ्रुत्वा धर्म्मसुतो भ्रातृभिः सहितो वशी ।**
**अवाप्तिं राजसूयस्य मन्त्रयामास धर्म्मवित् ॥ ७४ ॥**

**सुकार्य्यमेतदित्यलं निशम्य सोदरोदितम् ।**
**अयातयत् स्वसारथिं स केशवाय[४] भूपतिः ॥ ७५ ॥**

**तत्र शक्रस्य हरिश्चन्द्रः सेवकः, यमस्यास्मत्पिता पाण्डुः सेवक इत्यत्र मे भूयान् महान् संशयो जातः ॥ ७१ ॥ इत्युक्तः इति पृष्टः नारदः 'पाण्डुस्त्वां इत्यवदत्' इति प्राह । राजसूयकृता उन्नतिः राजसूयकृतोन्नतिः । हरिश्चन्द्रः कथमैन्द्रसभातळं प्रापेत्युक्तम् । पाण्डुस्तदकरणान्न प्रापेति चोक्तं भवति ॥ ७२–७ ॥**

---

ह्लीनचित्ततया दुःखदूर । सर्वाण्यपि रत्नमयानि स्थलानि, सर्वरत्नमयानि च स्थलानि यत्र । दिव्यान् दिवि भवान् द्योतमानांश्च । प्रज्ञाय भाषणं प्रभाषणम् । प्रबोधनाय भाषणं प्रभाषणम् । प्रभाषता प्रभाषमाणेन । तदपि लोकशिक्षार्थमिति परस्मैभाषा ॥ ७० ॥ हरिश्चन्द्रः कथं प्राप्तः? अस्मत्पिता कथं न प्राप्तः? ॥ ७१ ॥ रामद्वयसुदैवते । **'रामो दाशरथिश्चापि दृष्टो यमसभातळे । जामदग्न्यश्च रामोऽथ–'** [स.प.८.१८–९] इति हि भारते ॥ ७२ ॥ अजेयाभ्यामनुजाभ्याम् ॥ ७३–४ ॥ सुलभतया कार्यम् । एतत् नारदोदितं राजसूयेन यजनम् । **'गुरुवद् भूतगुरवे प्राहिणोद् दूतमञ्जसा'**

---

१. **'–तलम्'**

२. **'हरिश्चन्द्रस्य तां दृष्ट्वा पिता मां प्राह पाण्डव । करोतु राजसूयं मे–'** इत्यादिः प्रचुरः पाठः । प्राचीनकोशेष्वपि क्वचिदेतादृशः पाठो दृश्यते । परस्तात् हंसपादेन **'स्थितस्त्वाम्'**–इत्यादि श्लोकार्द्धं निवेशितम् ।

३. **'पुत्रो ज्येष्ठोऽनुजार्चितः'**

४. **'केशवस्य'** इति क्वचित् ।

**तदैव केशवस्य याः स्त्रियस्तदीयतातकैः ।**
**सहोदरैश्च यापितः [१]सुदूत आप माधवम्** ॥ ७६ ॥

**प्रणम्य केशवं वचः स आह मागधेन ते ।**
**विवाहबान्धवा रणे विजित्य रोधिता गिरौ** ॥ ७७ ॥

**नृपायुतद्वयेन सोऽष्टविंशकैः शतैरपि ।**
**यियक्षुरुग्ररूपिणं त्रिलोचनं त्वयि स्थिते** ॥ ७८ ॥

**अष्टविंशकैः शतैः द्विसहस्रादुपरि अष्टशतैः ॥ ७८–८० ॥**

---

[स.प.१३.४६] इति । स च दूतो धर्मसुतसारथिरिन्द्रसेन इति च भारते स्फुटम्–**'इन्द्रसेनेन सहित इन्द्रप्रस्थमगात् तदा'** [१३.५१] इति ॥ ७५ ॥ अथ भागवतगतां कथामत्र सङ्गमयति– तदैवेति । तथाहि भागवते–**'तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः । विज्ञापितो भगवते प्रतीहारैः प्रवेशितः । स नमस्कृत्य कृष्णाय परेशाय कृताञ्जलिः । राज्ञामावेदयद् दुःखं जरासन्धोपरोधजम्'** [१०.७८.२२–३] इत्यादि । सन्देशपटुर्विश्वासार्हश्च दूतः सुदूतः । तातकैरिति कना तेषां स्वतो मोचनासामर्थ्यमाह । सहोदरैश्च जरासन्धेन कारायां निहितेभ्य इतरैः, तैरपि सुहृद्द्वारा वा ॥ ७६ ॥ विवाहबान्धवाः प्रायो भार्यासहोदराः ॥ ७७ ॥ ननु भारते षडशीतिर्नृपाः कारागृहे निक्षिप्ता इति पठ्यते–**'षडशीतिः समानीताः शेषा राजंश्चतुर्दश । जरासन्धेन राजानस्ततः क्रूरं प्रवर्त्स्यते'** [स.प.१५.२६] इति । भागवते पुनरन्यथाऽन्यथा पठ्यते । विंशतिः सहस्राणीत्येकत्र । अष्टशताधिकानि तावन्तीत्यपरत्र–**'ये तु दिग्विजये तस्य सन्नतिं नाऽययुर्नृपाः । प्रसह्य रुद्धास्तेनाऽसन्नयुते द्वे गिरिव्रजे'** [१०.७८.२४] इति, **'अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः । विनिर्गता गिरिद्रोण्या मलिना मलवाससः'** [१०.८१.१] इति च । तत् कथं व्याहतानि प्राचामुदितानि विश्वसिमः? कं च वा पुनरेकं पक्षमन्ते निर्णयेनावलम्बामहे? एतां शङ्कामपनेतुं सर्वाविरोधेनार्थमाह– नृपाणामयुतद्वयेन, नृपाणामष्टविंशकैः शतैरपि । अष्टविंशतिरावृत्तयः परिमाणमेषामित्यष्टविंशकानि शतानि । २८०० नृपा इत्यर्थः । **'सङ्ख्यायाः सञ्ज्ञासङ्घातसूत्राध्ययनेषु'** [अ.सू.५.१.५८] इति हि स्मरन्ति । अत्र शतशब्दो नृपसङ्घवचनः । तथाच भारते शतेषु षडशीतिभागा नृपा इति भागवचनम्, न सङ्ख्यावचनम् । तथाच तदानीन्तनानां राजकुमाराणां सङ्ख्या–२६,५००मिता । तत्र षडशीतिभागाः विजित्य रोधिताः =२६५००÷ १००=२६५x८६=२२७९० राजकुमाराः । तदेवात्र शेषसङ्ख्यापूरणेन २२८०० नृपा इत्युक्तम् । भागवते अयुते द्वे इति शेषसङ्ख्यामविवक्षित्वोक्तमिति **'अयुते द्वे शतान्यष्टौ'** इत्युत्तरवचनेनैव स्फुटम् । साऽपि न पूर्णसङ्ख्येति पुनरवशिष्टं पूरयित्वाऽऽचार्यो निर्णिनायेति सर्वमतिसुन्दरम् । त्वयि स्थिते ते विवाहबान्धवैर्यियक्षुः । अपि च त्वयि सर्वोत्तमे स्थिते त्रिलोचनं यियक्षुः ॥ ७८ ॥

---

१. '–तः स दूत–'

विमोचयस्व तान् प्रभो निहत्य मागधेश्वरम् ।
अवैदिकं मखं च तं विलुम्प धर्म्मगुप्तये ॥ ७९ ॥

इतीरितोऽथ[1] सारथिं निशाम्य धर्म्मजस्य च ।
निशम्य तद्वचस्तदा जगाम पाण्डवालयम् ॥ ८० ॥

स पाण्डवैः समर्च्चितो मखाय धर्म्मजेन च ।
प्र पृष्ट आह माधवो वचो जगत्सुखावहम् ॥ ८१ ॥

क्रतुर्य्यथा विधानतः कृतो हि पारमेष्ठ्यकम् ।
पदं नयेत तत्पदे सुयोग्यमेष[2] नान्यथा ॥ ८२ ॥

अयोग्यका[3]न्महापदे विधातुरेष हि क्रतुः ।
समानयोग्यतागणात् करोति मुक्तिगं वरम् ॥ ८३ ॥

**मखाय मखार्थम् । मखसिद्ध्यर्थमिति यावत् ॥ ८१–२ ॥ अयोग्यकान्महापद इत्यत्र अयोग्यकादिति च्छेदः । एष क्रतुः विधातुः, क्रमात् पदेऽयोग्यम्, राजसूयस्य कर्तारमिति शेषः, मुक्तिगम् विधातुः महापदे अयोग्यकात् समानयोग्यतागणात् वरं आधिक्ययुक्तं करोति हि ॥ ८३–६ ॥**

---

सकृत् सपदि च मोचनं विमोचनम् । विपदो मोचनं विमोचनम् ॥ ७९ ॥ तस्य धर्मजसारथेश्च वचो निशम्य । तत् वच इति भिन्ने वा पदे ॥ ८० ॥ प्रकारपृच्छा प्रपृच्छा । प्रणयेन पृच्छा प्रपृच्छा । धर्मजेन पृष्टः माधवः प्राह इति वा ॥ ८१ ॥ विधानमनतिक्रम्य यथावत् कृतः । यया कृतः पारमेष्ठ्यं पदं नयेत् तथाऽऽहेति वा । यः पारमेष्ठ्यपदे योग्यः स सुयोग्य एव भवतीति स्वरूपकथनम् । यस्मादधिको योग्यो न भवति स किल सुयोग्यः । किं च तत्पदे सुयोग्यमत एवासुयोग्यं पदं नयेत । असोः मुख्यप्राणस्यैव हि योग्यं तत्पदम् । असुषु प्राणमानिषु योग्यं युक्ततमं मुख्यप्राणमिति च । असुश्चासौ पारमेष्ठ्यपदयोग्य इति वा । **'यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः । नृपतिः पारमेष्ठ्येन तद् भवाननुमोदताम्'** [१०.७८.४१] इति भागवते । स्वस्यातिप्रियं चैतत् पदमित्याह– पारमेष्ठ्यकमिति ॥ ८२ ॥ विधातुर्महापदे अयोग्यकान् प्रति त्वेष क्रतुः मुक्तिगं सुखं समानयोग्यताया यो जीवगणः तस्माद् वरमधिकं करोति । स्वसमानकक्ष्याणामकृताश्वमेधानां यन्मौक्तं सुखं ततोऽधिकं सुखमश्वमेधी लभत इत्यर्थः । तेष्वेकैकमपि मुक्तौ सम-कक्ष्यात् किञ्चिदुत्तमं करोतीति वा । अथचायोग्यकान् अयोग्यतमान्, अथापि राजसूयकरणाय प्रवृत्तान्, एष क्रतुर्महापदे

---

१. **'इतीरितेऽथ'** २. **'सुयोग्यमेव ना–'** ३. **'अयोग्यकं महा–'** इति क्वचित् ।

पुरा तु मुक्तितोऽधिकं स्वजातितः करोति च ।
अतस्त्रिशङ्कुपुत्रको नृपानतीत्य वर्त्तते ॥ ८४ ॥

सुरांशकोऽपि ते पिता विना हि राजसूयतः ।
न शक्ष्यति त्रिशङ्कुजाद् वरत्वमाप्तुमद्य तु ॥ ८५ ॥

तपश्चरन् समागते शचीपतौ पिता तव ।
मरुद्गणोत्तमः पुरा नतूत्थितः शशाप सः ॥ ८६ ॥

व्रजस्व मानुषीं तनुं ततो मृतः पुनर्द्दिवम् ।
गतोऽपि न[१] स्वकां तनुं प्रवेष्टुमत्र नेशसे ॥ ८७ ॥

**शापप्रकारमाह– व्रजस्वेति । मानुषीं तनुं व्रजस्व । ततः मानुष्यप्राप्त्यनन्तरं मृतः पुनर्दिवम्, गच्छसीति क्रियाध्याहारः कर्तव्यः । गतोऽपि पुत्रकगुणादिकारणविशेषवशाद् दिवं गतोऽपि अत्र दिवि स्वकां तनुं प्रवेष्टुं नेशसे न समर्थो भविष्यसि ॥ ८७ ॥**

---

नयेत । महतीमापदं नयेदित्यर्थः । यथा हंसडिभकौ । अथचैष क्रतुरनुष्ठितः, ईषद्योग्यमनुष्ठातारम्, अयोग्यकात् राजसूयकरणयोग्यताविधुरात् स्वसमानाज्जीवगणात् मुक्तावधिकसुखं करोति ॥ ८३ ॥ मुक्तौ न केवलम् । मुक्तितः पुराऽपि स क्रतुः कर्तारं स्वजातावधिकं करोतीति विशेषः । त्रिशङ्कुपुत्रकः । स्वरूपयोग्यतायां पाण्डोरल्पोऽपि सन् तमतीत्य वर्तत इत्यर्थः ॥ ८४ ॥ सुरांशकोऽपि । यद्यपि सुरांशः । अथापि शापग्रस्त इत्यनुकम्पायां कप्रत्ययः । त्रिशंकुजाद्धरिश्चन्द्राद् वरत्वमुत्तमत्वम् । अद्य तु अद्यैव । राजसूयकरणं विना, विना च शापमोक्षम् ॥ ८५ ॥ कथं शापग्रस्तः? तपश्चरन् । पुरा पूर्वजन्मनि तव पिता तपश्चरन् शचीपतौ समागते नतूत्थितः । समीपमागतं शचीपतिं विज्ञायाप्यवज्ञया नोत्थित इति विशेषं तुनाऽऽह । अतस्तं स शशाप ॥८६॥ न नेशसे । नञ्द्वयस्यावधारणार्थत्वं पूर्वमेव समर्थितम् । 'नः स्वकाम्' इति वा प्रतृण्णम् । तव स्वकाऽपि तनुर्नः अस्माकम्, अस्मदधीनमित्यर्थः । अतोऽस्मत्प्रसादं विनाऽत्र दिवि स्थितोऽपि स्वकां तनुं प्रवेष्टुं नेशसे । अथापि कथमीशसे? सत्यम्, **'ईशिषे'** इति वक्तव्यम् । आहो **'ईशिष्यसे'** इति । **'ईशः से'** [अ.सू.७.२.७७] इति पाणिनिस्मरणात् । आचार्यस्य देवभाषा स्वम् । तत् कथं स पाणिनिमुखं दिदृक्षेत? तद्यथा भाषायाम्–'ಬಂದಿದೆ' इत्येके । 'ಬಂದದೆ' इत्यपरे । एवम्– **'ईशिषे'** इति पाणिनीयाः । **'ईशसे'** इत्यप्यन्ये भाषामर्मविदः । अथच **'ईशः से'** इति सूत्रं परिहसन्निवाऽचार्यः प्रयुयोज–**'ईशसे'** इति । वयं शिक्षित्वाशिक्षित्वा भाषामहे । भगवत्पादस्तु भाषित्वाभाषित्वा शिशिक्षयिषते । अर्वाचां वाचां व्याकरणानुवर्तनमलङ्कारः । प्राचां वाचामनुवर्तनं

---

१. **'गतोऽपिच स्वकां'**

तदाऽधिकस्त्रिशङ्कुजो भविष्यतु त्वदित्यथ ।
क्षमापितश्च वासवो जगाद राजसूयतः ।
त्रिशङ्कुजाधिको भवानवाप्स्यति स्वकां तनुम् ॥ ८८ ॥

अतः सुकार्य्य एव ते युधिष्ठिर क्रतूत्तमः ।
भवद्भिरप्यवाप्यते स्वयोग्यताऽमुनाऽखिला[1] ॥ ८९ ॥

उदीर्य्य चैवमीश्वरः क्रतोरमुष्य योग्यता ।
वृकोदरे यतोऽखिला चतुर्म्मुखत्वयोग्यता[2] ॥ ९० ॥

ततः सुपूर्णमस्य तत् फलं विधातुमञ्जसा ।
जगाद वायुवाहनो वचो युधिष्ठरं त्विदम् ॥ ९१ ॥

**तदा स्वमूलरूपप्रवेशाभावदशायाम् । त्वत् त्वत्तः । अथ शापप्राप्त्यनन्तरम् ॥ ८८–९ ॥ ईश्वरः एवमुदीर्य युधिष्ठिरं वचो जगाद । किं कर्तुम्? अमुष्य क्रतोः अखिला योग्यता, सम्पूर्णा योग्यता, मुख्याधिकारित्वं वृकोदरे, अस्तीति शेषः । चतुर्मुखत्वयो(ग्यतया) मुख्याधिकारित्वात् अस्य वृकोदरस्य तत् फलं अञ्जसा पूर्णं विधातुम् ॥ ९०–१ ॥**

---

व्याकरणस्यालङ्कारः । नहि व्याकरणमस्तीति भाषन्ते । किन्तु महान्तोऽभाषन्तेति व्याक्रियते । ऋषीणामाद्यानां वचांसि व्याकरणमनुधावति । नतु व्याकरणं वचांसि । दृश्यन्ते चैतादृशाः प्रयोगा बहुलम्– **'अबिभ्रदर्यमा दण्डम्'** इत्यादयः पुराणेषु । अथच हन्तेर्यथा लुकमनाश्रित्य हनति अहनदित्यादिप्रयोगश्छन्दसि तद्वदीशतेरपि शब् वक्तव्यः । तेन ईशसे इति साधुः प्रयोगः । अपिच व्याकरणमुग्ध, तुष्यतु भवानिति गमनिकान्तरमुच्यते– **'णिश समाधौ'** इति धातुपारायणिकाः पठन्ति । सर्वस्मादुभयं पदमित्यात्मनेभाषत्वम् । तथाच नेशते समाहितचित्तो भवतीत्यर्थः । तेनायमत्र वाक्यार्थः– स्वकां तनुं प्रवेष्टुं न नेशसे न समाहितचित्तो भवसीत्यर्थः । योगिनां तनुत्यागस्तनुप्रवेशश्च चित्तवृत्तिनिरोधेन हि भवति । पाण्डोस्तु शचीपतिशापेन तनुप्रवेशसाधनमैकाग्र्यं नाम चित्तसमाधनं न सम्भभूवेत्यर्थः ॥ ८७ ॥ एवं पाणिनीयान् नियमान् पौनःपुनिकतया भङ्क्ष्यामीति सूचयन्नेव पुनराह– भविष्यत्विति । भविष्यतु भविष्यत्काले भवतु । लृटो लोटश्च प्रत्ययसमाहारेण रूपम् । विवृतं चैतत् पूर्वमेव । इति शशाप । अथ शापश्रवणसमनन्तरमेव, विदितापराधेन सपद्युत्थाय ॥ ८८ ॥ सुकार्य्यः पितुः प्रीत्यर्थमवश्यं कर्तव्यः ॥ ८९ ॥ चतुर्मुखत्वयोग्यतैवामुष्य क्रतोर्योग्यता । अतः अमुष्य अखिला योग्यता वृकोदर एव ॥ ९० ॥ पूर्णत्वं सापेक्षं भवतीति सुपूर्णमित्याह । स्वस्वयोग्यतानुगुणं पूर्णत्वं युधिष्ठिरादिभिरप्य-

---

१. **'स्वयोग्यताऽखिलाऽमुना'** इति क्वचित् । २. **'–योग्यतः'** । वे.ती. पाठोऽपि तथा स्यात् ।

क्व राजसूयमद्य ते जरासुते तु जीवति ।
जयेत् क एव तं युधा मृतो न योऽपि सीरिणा ॥ ९२ ॥

विरिञ्चिशर्ववाक्यतः समस्तलोकजायिनि ।
स्थिते तु ते जरासुते न सेत्स्यति क्रतूत्तमः ॥ ९३ ॥

इतीरिते रथाङ्गिना जगाद धर्म्मनन्दनः ।
निवर्त्तितं मनः क्रतोरलं ममामुना प्रभो ॥ ९४ ॥

बभूवुरेव भूभृतो[1] नचाऽधिराज्यमापिरे ।
यदा च चक्रवर्त्तिनस्तदेदृशा न शत्रवः ॥ ९५ ॥

इतीरितेऽमुनाऽवदत् प्रधानमारुतात्मजः ।
पदं चतुर्म्मुखस्य वा सुसाद्ध्यमेव यत्नतः ॥ ९६ ॥

**क्वेत्याक्षेपे । क एव जयेत्? न कोऽपीति भावः ॥ ९२–४ ॥ आधिराज्यं चक्रवर्तित्वं नाऽपिरे, बाहुल्येनेति शेषः । यदा चक्रवर्तिनः, येकेचनेति शेषः ॥ ९५ ॥ चतुर्मुखस्य पदं वा पदमपि यत्नतः सुसाध्यमेव सम्यक् साधयितुं शक्यमेव ॥ ९६ ॥**

---

वाप्यते । यज्ञस्य यावती फलदानयोग्यता सामस्त्येन तावत् फलं भीमे विधातुमित्यर्थः । तत् अश्वमेधजं फलम् । तस्य अश्वमेधस्य वा फलम् । वायुर्वाहनमस्येति वायुवाहनः । **'वरदो वायुवाहनः'** इति च विष्णुसहस्रनामसु । वायोरेव ब्रह्म-पदवीं प्रापयतीति च वायुवाहनः । युधिष्ठिरं तु । कृष्णाभिप्रायश्रवणे त्वरातिशयं तुनाऽऽह । श्रवणे निगूर्य स्थितमित्यर्थः ॥ ९१ ॥ क एव तं जयेत्? क एव ब्रह्मपदयोग्यः वाय्वात्मा भीम एव तं जयेदित्युत्तरगर्भोऽयमाक्षेपः । यतः सीरिणा शेषावतारेणापि न हतः । अतः वायुर्भीम एव तं जयेत्, मरणेन योजयेदपि । जीवतीति प्रारम्भात् । मृतो नेत्युपसंहाराच्च ॥ ९२ ॥ विरिञ्चिशर्वयोर्वरतः । अजिते स्थिते । अमृते स्थिते वा । ते क्रतूत्तमः न सेत्स्यति न सिद्धिं गमिष्यति ॥ ९३ ॥ अलमिति प्रतिषेधे । अमुना क्रतुनाऽलम् । मा भूदयं क्रतुरित्यर्थः ॥ ९४ ॥ यदा चक्रवर्तिनो बभूवु-स्तदेदृशाः शत्रवो न बभूवुः ॥ ९५ ॥ यत्नत इति सप्तमी । सुयत्ने कृते सुखेन साध्यमेव । ल्यबर्थे वा तसिः । यत्नं विधाय ॥ ९६ ॥

---

१. 'बभूविरे च भूभृतो–'

निजानुभाववर्ज्जिता हरेरनुग्रहोज्झिताः ।
महाप्रयत्नवर्ज्जिता जना न जग्मुरुन्नतिम् ॥ ९७ ॥

स्थिरोऽनुभाव एव मे महाननुग्रहो हरेः ।
प्रयत्नमेकमग्रतो निधाय भूतिमाप्नुमः ॥ ९८ ॥

इतीरितेऽमुना हरिः समुद्यमात् प्रधानतः ।
स्थिते हि यज्ञकारणे वृकोदरे जगाद ह ॥ ९९ ॥

स एक एव पूरुषो जरासुतोऽद्य वर्त्तते ।
समस्तसद्विरोधिनां बलं कलेरनन्तरः ॥ १०० ॥

तथा सतां समाश्रयो यदुद्भवाः सतां गुणाः ।
स एक एव तादृशस्त्वया विचिन्त्य यात्यताम् ॥ १०१ ॥

यदि स्म तेन मागधो निहन्यते सतां जयः ।
विपर्य्ययेण चासतामिति स्म विद्धि नान्यथा ॥ १०२ ॥

**निजानुभाववर्जिताः स्वरूपसामर्थ्येन रहिताः ॥ ९७–८ ॥ अमुना वृकोदरेण प्रधानतः समुद्यमात् प्रधानप्रयत्नात् इतीरिते सति, तस्मिन् वृकोदरे यज्ञकारणभूते स्थिते सत्येव ॥ ९९–१०० ॥ यथा जरासुतः तथा सतां समाश्रयः स एक एव ॥ १०१–४ ॥**

---

नच तावता योग्यताविरहेऽपि तत् सुसाध्यमिति मन्तव्यमित्याह– निजानुभाववर्जिताः । निजः सहजः, न वरादिलब्धः । अनुभावः प्रभावः । देहस्य मनसः स्वरूपस्य च सामर्थ्यविशेषः । प्रामाणिको यत्नः प्रयत्नः । महाफलमुद्दिश्य कृतः, फलनिष्पत्तिपर्यन्तमनुपरतश्च महान् प्रयत्नः ॥ ९७ ॥ स्थिर एवानुभावः । एवकारेण सहजत्वं नैरन्तर्यं चाऽह । अनुग्रहलेशेनाप्यक्लेशेन सर्वं साध्यम् । अस्माकं तु, विशिष्य च मम, महाननुग्रहो हरेः । अतो वयममहताऽपि प्रयत्नेन भूतिमाप्नुमः । भूतिरभीष्टसिद्धिरुन्नतिर्वा ॥ ९८ ॥ समुद्यमः कर्तव्यकर्मणि समुचिता सोत्साहा च प्रवृत्तिः । प्रधानतः प्राधान्येन । प्रधानाद्वा समुद्यमात् । इतरापेक्षयाऽधिकां कर्मश्रद्धामाश्रित्य इतीरिते । अत एव यज्ञस्य मुख्यकारणे वृकोदरे स्थिते जनार्दनो जगाद । प्रथमं नैराश्यजनकं वचनमुक्त्वा सम्प्रति सन्तोषजनकं जगादेत्याह– जगाद हेति ॥ ९९ ॥ बलमालम्बनम् । समाश्रय इत्येतत् ॥ १०० ॥ यथा जरासुतोऽसतां समाश्रयस्तथा । स कः? यदुद्भवाः सतां गुणाः । विष्णुभक्त्यादयो यन्मूलाः ॥ १०१ ॥ विपर्ययेण चासतां जयः ॥ १०२ ॥

स पारमेष्ठ्यसत्पदं प्रयात्यसंशयं युधि ।
य एव हन्ति मागधं स वेदधर्म्मपालकः[१] ॥ १०३ ॥

निहन्ति मागधेश्वरं य एष[२] वैष्णवं जगत् ।
करोति शर्वपालितो यतः स बार्हद्रथः[३] ॥ १०४ ॥

निहन्ति शैवनायकं य एष वैष्णवाग्रणीः ।
इति स्म भावसंयुते वदत्यजेऽबिभेन्नृपः ॥ १०५ ॥

युधिष्ठिरे ब्रुवत्यजं मखेन मे त्वलं त्विति ।
तमाह मारुतात्मजो निहन्मि मागधं रणे ॥ १०६ ॥

इतीरितेऽवदद्धरिर्व्रजामहे वयं त्रयः ।
अहं च भीमफल्गुनौ निहन्तुमेव मागधम् ॥ १०७ ॥

**भावसंयुते एतादृशस्यान्यस्याभावाद् भीम एव प्रेषणीय इत्यभिप्रायसंयुते ॥ १०५–८ ॥**

---

यो निश्चयेन हन्ति । स एव पारमेष्ठ्यं याति । स एव वेदधर्मपालकः । वेदानां वेदधर्माणां च पालकः । सत्पदं निर्दुष्ट-स्थानं जीवलोके ॥ १०३ ॥ निहन्ति निरायासं हन्ति, निगृह्य हन्ति, न्यक्कृत्य हन्ति । यो मगधेश्वरं हन्ति एष जगद् वैष्णवं विष्णुप्रवणं करोति । यातीति यो वायुरेष पुरोवर्ती भीम इति हृदयम् । **'राज्यं करोतीतिवत् वैष्णवं जगत् करोति रक्षतीत्यर्थः'** इत्यपि व्याचक्षते । **'बार्हद्रथः'** इति श्लथपाठेन छन्दःसौहित्यम् । तेन शिथिलोच्चारणेन तस्य बलशैथिल्यमाह । अनादरं च तस्मिन् व्यञ्जयति ॥ १०४ ॥ यो निहन्ति एष वैष्णवाग्रणीः । स च एष समीपवर्ती भीम इति ग्राहयन् स इत्यनुक्त्वा एष इत्याह । यकारो वायुवाचनः । एष यो वायुर्भीमो नियत्या हन्तीति च भगवतो हृदयम् ॥ १०५ ॥ मखेन तु जरासन्धवधमात्रसाध्येन मखेन । मे तु जरासन्धनिग्रहासमर्थस्य मम । अलं तु अल-मेव । सर्वथा माऽस्त्वित्यर्थः । **'तुहिशब्दौ विशेषार्थौ हेत्वर्थौ'** इति वागुरिः । तु जरासन्धवधं विना यागस्याशक्यत्वेन हेतुना, मे तु व्यर्थोद्यमस्य मम, अलमिति निषेधे वैयर्थ्ये च । **'अलं वारणे'** इति महेश्वरः । **'अलं निरर्थके'** इति हैमः । तद् यथा **'अलं महीपाल तव श्रमेण'** । एवमत्रापि निरर्थकोऽयं मम मखोद्यमः सर्वथा निवारणीय इति वाक्यार्थः ॥ १०६ ॥ भीमप्रकर्षप्राकट्यमात्मन इष्टमिति व्रजामह इत्यात्मनेभाषा । हे राजन् वयं व्रजामेति वा ॥ १०७ ॥

---

१. **'स एव धर्म्मपालकः'** २. **'–श्वरं स एव वै–'** ३. **'बार्हद्रथः'** इति विश्लिष्य पठनीयम् ।

वृकोदरेण हन्यते यदि स्म मागधाधिपः ।
मखश्च सेत्स्यते ध्रुवं जगच्च ते वशे भवेत् ॥ १०८ ॥

इतीरिते तु शौरिणा जगाद धर्म्मनन्दनः ।
स शूरसेनमण्डलप्रहाणतो हरेस्त्रसन् ॥ १०९ ॥

भयाद्धि यस्य माधुरं विहाय मण्डलं गताः ।
भवन्त एव सागरं ततो बिभेम्यहं रिपोः ॥ ११० ॥

इमौ हि भीमफल्गुनौ ममाक्षिणी सदा प्रभो ।
मनोनिभो भवान् सदा न वो विनाऽस्म्यतः[१] पुमान् ॥ १११ ॥

अतो न जीवितात् प्रियानहं रिपोर्बलीयसः ।
सकाशमात्महेतुतः प्रयातयामि वो विभो[२] ॥ ११२ ॥

**हरेः शूरसेनमण्डलप्रहाणतः शूरसेनविषयपरित्यागात् निमित्तात्, त्रसन् जरासुतस्य बलाधिक्यं मत्वा त्रसन् ॥ १०९–१२ ॥**

---

सेत्स्यते सेत्स्यति । षिधु संराद्धौ । **'षिधु हिंसासंराद्ध्योः'** इति काशिकायाम् [अ.सू.६.१.४९] । सिद्धि-र्निष्पत्तिः । तवैवायं महान् स्वार्थ इत्यात्मनेभाषयाऽऽह ॥ १०८ ॥ हरेः हरिकृतात् शूरसेनराज्यस्य मधुरायाः प्रहाणान्निमित्तात् त्रसन् बिभ्यत् धर्मनन्दनो जगाद । प्रहाणेन निमित्तेन जरासन्धात् त्रसन्निति वा । । त्रसी उद्वेगे । उद्वेगो भयम् ॥ १०९ ॥ भवन्तः । गौरवाद् बहुवचनम् । भवत्पुरोगा यादवा इति वा ॥ ११० ॥ **'भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम् । मनश्चक्षुर्विहीनस्य कीदृशं जीवितं भवेत्'** [स.प.१६.२] इति भारतगं वचः । प्रभविति सम्बोधनेनेदमाह–यद्यपि जरासन्धनिग्रहे प्रभवेद् भवान् । अथापि न मे मनः प्रत्येतीति । वो विना नाहं पुमानस्मि । पातीति पुमान् । मम पृथिवीपतित्वं भवदधीनमित्यर्थः । पौरुषं हि पुंसो लक्षणम् । तदपि भवदधीनमिति ॥ १११ ॥ पुनर्विभवित्याह तेनेदमाह–विभुः सर्वगतो भवान् । अपिच बिम्बरूपतया विविधः सन् सर्वान्तर्यामी भवन् भवानेव न मे मनः प्रत्याययतीति । बलीयसः रिपोः सकाशम् । अथच वस्तुतो रिपोर्बलीयसो वः आत्मन्यप्रत्ययात् न प्रयातयामि प्रसह्य यातयामि ॥ ११२ ॥

---

१. 'विनाऽस्म्यहं पुमान्' २. 'वः प्रभो ।'

इतीरितेऽवदत् पुनर्वृकोदरोऽरिकक्षभुक् ।
यदीयनेतृका रमाविरिञ्चिशर्वपूर्वकाः ॥ ११३ ॥

वशे च यस्य तद् बलं सुरासुरोरगादिनाम् ।
स एष केशवः प्रभुः क्व चास्य बार्हद्रथः[1] ॥ ११४ ॥

अधृष्यमस्ति मे बलं हरिः प्रणायकोऽस्य[2] च ।
समस्तलोकनेतरि प्रभौ हि सर्वशक्तिता[3] ॥ ११५ ॥

अजेयता तथाऽर्जुने हरेर्वरोद्भवाऽस्ति हि ।
अतो वयं त्रयोऽद्य तं प्रयाम मागधं रिपुम् ॥ ११६ ॥

**अरिकक्षभुक् शत्रूणामग्निरिव । रमाविरिञ्चिशर्वपूर्वकाः यदीयनेतृकाः यदीयप्रेरणयुक्ताः ॥ ११३ ॥ तद् बलमित्यत्र तदिति प्रसिद्धमित्यर्थः ॥ ११४ ॥ स्वतन्त्रं किं न स्यात् इत्यत आह–समस्तेति । सर्वशक्तिता सर्वविषयशक्तिमत्त्वम् ॥११५॥ हरेर्वरोद्भवा 'धरातळस्थिते न मय्यमुं कश्चन जेष्यति' इति ॥११६–८॥**

---

**'कक्षः शुष्कतृणे प्रोक्तः कक्षोऽरण्ये च वीरुधि'** । अरयः कक्षतुल्याः । अयं तेषां कक्षभुगग्निरिव । यदीयनेतृका इति । भावप्रधानो निर्देशः । यदीयनेतृत्वा इत्यर्थः । धर्मनिष्ठं यदीयत्वं धर्मिणि प्रयुज्यते । यथा **'नित्यः सर्वगतः'** इति सर्वगतत्वनिष्ठं नित्यत्वं सर्वगते । यदीयं प्रेरणं नेतृ येषामिति च पूर्वटीकाकाराः । नयतीति नेतृ प्रेरणम् । यदीयं नेतृ येषामिति भावप्रकाशिका । यः कृष्णः ईयः नेता च येषामिति वा । ईयते गम्यत इतीयः । ज्ञातव्यो गन्तव्यश्चेत्यर्थः । यदीयं सर्वजगन्नेतृ कमानन्दोऽस्ति येषां नियामकतया ते यदीयनेतृका इति च । **'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्'** इति हि श्रुतिः । यदीयाः यदधीना नेतृका अल्पा नेतारो रमाद्या इति वा । अयमेकः स्वतन्त्रो नेता । अन्ये सर्वेऽपि नियम्यत्वसमानाधिकरणनियामकत्वभाज इत्यर्थः ॥ ११३ ॥ तदेव स्फुटमाह– वशे च यस्य । तत् लोके शास्त्रेषु च विख्यातम् । सुरासुरोरगादीनामिति वक्तव्यम् । सुरासुरोरगादिनामित्याह । तेन तेषां लोकप्रथितं सर्वातिशयितं च बलं अनन्तबलस्य भगवतोऽग्रेऽत्यल्पमित्याह । संहितायां दैर्घ्यस्याऽधिक्यमिव ह्रस्वस्याल्पत्वमर्थ इति शास्त्रविदो विदन्ति । प्रथितश्च शास्त्रेष्विन्नन्तस्येदन्तस्य च व्यत्यस्य प्रयोग इत्युक्तम् । स एष प्रभवत्येव जरासन्धनिग्रहे । मा ते मनसि भूदप्रत्यय इत्याह– प्रभुरिति । बार्हद्रथ इति शिथिलप्रयोग उक्तार्थः ॥ ११४ ॥ हरिः अस्य मे बलस्य प्रणायकः । साक्षान्नयनं प्रणयनम् । प्रणयेन नयनं च प्रणयनम् ॥ ११५ ॥ अजेयता । मयि भूमौ तिष्ठति न कश्चित् तं जेष्यतीति हरेर्वरोद्भवा [२०.१३४] । एतेन–**'कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये । मागधं**

---

१. **'बार्हद्रथः'** इति पूर्ववत् । २. **'हरिप्रणायकस्य च ।'** ३. **'सर्वशक्तता'** इति क्वचित् ।

हनिष्य एव मागधं हरेः पुरो न संशयः ।
इतीरितेऽमुना हरिर्ज्जगाद धर्म्मनन्दनम् ॥ ११७ ॥

वयं त्रयः समेत्य तं प्रयातयाम मृत्यवे ।
हनिष्यति स्फुटं रणे वृकोदरो जरासुतम् ॥ ११८ ॥

भयं न कार्य्यमेव ते मया हतः स नेति ह ।
मया हि[१] नीतिहेतुतः स्वयं न हन्यते रिपुः ॥ ११९ ॥

स शर्वसंश्रयाग्रणीर्म्मदाश्रयोत्तमेन तु ।
निहन्यते यदा तदा प्रकाशितं हि मे बलम् ॥ १२० ॥

अतो न शङ्कितं मनः कुरुष्व भूपते क्वचित् ।
प्रदर्शयामि तेऽनुजौ निहत्य मागधेश्वरम् ॥ १२१ ॥

इतीरितः स विष्णुना विचार्य्य तद्गुणान् परान् ।
तथेति चाऽह ते त्रयः प्रतस्थुराशु मागधान् ॥ १२२ ॥

समेत्य मागधांस्तु ते शिवोरुलिङ्गमित्यलम् ।
सुमाल्यवस्त्रभूषणैः समर्च्चितं गिरिं ययुः ॥ १२३ ॥

**(भयं) न कार्यम् । हनन(मशक्यमिति भयं न) कार्यमेव । स्वयं आत्मना ॥ ११९–२० ॥ क्वचित् मद्विषये भीमार्जुनविषये च । शङ्कितं मरिष्यन्ति वा जेष्यन्ति वेति ॥ १२१–२ ॥ अलं समर्चितम् ॥ १२३–४ ॥**

---

**साधयिष्याम इष्टिं त्रय इवाग्नयः'** [स.प.१५.१३] इति भारतवचनं विवृतम् । कृष्णे नय इति नीतिर्नायकत्वं च । प्रयाम । रिपुविजयनिश्चय एव याने प्रकर्षः ॥ ११६–७ ॥ प्रयातयाम निकृत्योपहराम । प्रेषयामेति यावत् । यत निकारोपस्करयोः ॥ ११८ ॥ ते त्वया । हेति परिहसति । लीलापरिहासोऽयं यदहननं तस्य ॥ ११९ ॥ अहमेवाऽश्रयो येषां ते मदाश्रयाः । तेषूत्तमेन तु । स च भीम एवेति विशेषं तुनाऽऽह ॥ १२० ॥ प्रदर्शयामि विजयप्रहृष्टौ, प्रसन्नौ दर्शयामि ॥ १२१ ॥ मागधान् जनपदान् ॥ १२२ ॥ शिवोरुलिङ्गमिति । तथाहि भारते– **'दुर्वासास्तु सहंसेन डिभकेन**

---

१. **'मया तु'** इति क्वचित् ।

**स्वशीर्षतोऽपि चाऽद्दतं जरासुतेन ते गिरिम् ।**
**न्यपातयन्त बाहुभिस्तमस्य चोत्तमाङ्गवत् ॥ १२४ ॥**

**अद्वारतस्ते नगरं प्रविश्य माषस्य नाळेन कृतास्त्रिभेरीः ।**
**पुष्टिप्रदा[1] बिभिदुस्तस्य कीर्त्तिशास्त्रोपमा न्यक्कृतमागधेशाः ॥ १२५ ॥**

**तथाऽपणेभ्यो बहुमाल्यगन्धान् प्रसँह्य सङ्गृह्य शुभांश्च दध्रुः ।**
**अद्वारतस्तस्य गृहं च सस्रुर्भोशब्दतस्तं च नृपं प्रसस्रुः ॥ १२६ ॥**

**न्यक्कृतमागधेशाः ते माषस्य माषनाम्नोऽसुरस्य नाळेन कण्ठनाळेन । पुष्टिप्रदाः यावद्देशं स्वनादः(प्रसरति) तावद्देशे पुष्टिप्रदाः । तस्य जरासुतस्य कीर्तिशास्त्रोपमाः कीर्तिप्रतिपादकगद्यपद्यस्वरूपनिबन्धनसदृशाः । कीर्तिशास्त्रवत् तत्प्रसिद्धिकरा इति भावः ॥ १२५–६ ॥**

---

**निराकृतः । जरासन्धं समागम्य जहि तावित्युवाच ह । उपेक्षिते तेन कार्ये शिष्याविति तपोधनः । शशाप मागधं रोषात् त्यक्ष्यतीशः पुरं तव । त्वदर्चितं च लिङ्गं वै पर्वतं विफलं भवेत्'** इति । तदेतदितिशब्दसूचितम् । वस्तुतोऽलिङ्गं उरुलिङ्गमिति बुद्ध्या अतिमूल्यमाल्यवस्त्रभूषणैरलङ्कृत्य समर्चितम् ॥ १२३ ॥ न्यपातयन्त । दुर्वासः-शापेन सन्निधानापायादलिङ्गं हि तत् । अत एव न्यपातयन्त । स्वशीर्षतोऽप्यधिकमादृतम् । लिङ्गपातनात् स्वशीर्ष-पातनं वरमिति । कस्याप्यनतं स्वशीर्षमवनम्य चाऽद्दतम् ॥ १२४ ॥ माषस्य नाळेन । अत्र भारते बहवः पाठ-भेदाः । प्रायोऽयमिह प्रतनः पाठः ।– **'वृषभाकारमसुरं माषनामानमाहनत् । तं हत्वा माषनाळेभ्यस्तिस्रो भेरीरकारयत् । अनडुच्चर्मणा तेन स्थापयामास वै पुरे'** [स.प.२१.२०] इति च । नाळयत्यर्दयतीति नाळं चर्म । नाळानि नाड्यः । णळ गन्धे । गन्धोऽर्दनम् । बन्ध इत्येके । **'नाळेन कण्ठचर्मणा'** इत्यपि व्याचक्षते । **'कण्ठनाळेन'** इति प्राचीनम् । पुष्टिप्रदाः नादेनैव । कीर्तिशास्त्रोपमा भेरीः न्यक्कृतमागधेशा बिभिदुः । भेरीभङ्गे तस्य कीर्तिरपि भग्नेति, शास्त्रमपि शैवं भग्नप्रायमिति भेर्यः कीर्तिशास्त्रोपमा उच्यन्ते । अथवा कीर्तिकथनं शास्त्रं कीर्तिशास्त्रम् । कीर्तिशास्त्रं यथा गुणान् प्रथयति तथेमा भेर्योऽपि नादमात्रेण तस्य पौरुषं ख्यापयन्तीत्यर्थः ॥ १२५ ॥ बहूनि शुभानि माल्यानि गन्धद्रव्याणि च । **'बलाद् गृहीत्वा माल्यानि मालाकारान्महाबलाः'** [स.प.२१.३०] इति, **'अद्वारेण प्रविष्टा स्थ निर्भया राजकिल्बिषात्'** [५२] इति, **'भोशब्देनैव राजानमूचुस्ते तु महारथाः'** [३७] इति च । गन्ध मर्दने । गन्ध्यन्ते मर्द्यन्त इति गन्धाश्चन्दनादयः, यक्षकर्दम इति यावत् । **'कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनं तथा । महासुगन्धमित्युक्तं नामतो यक्षकर्दमः'** इति ह्यभिदधति । न केवलं नगरमद्वारतः प्रविविशुः । तस्य गृहं चाद्वारत एव सस्रुः । भोशब्दतः । 'वयमिमे भो राजन् जरासुत समागताः' इति वदन्तः । एतेन **'भोः'** इतिवत् **'भो'** इत्यपि सम्बोधनं सम्भवतीति बोधयति । अत एव 'अहं भो अभिवादये' इति वदन्तः सन्तोऽभिवादयन्ते । सरणं गमनम् । प्रसरणमभिगमनम् ॥ १२६ ॥

---

१. **'मुष्टिप्रदानाद् बिभिदु–'** इति क्वचित् । **'मुष्टिप्रहाराद्–'** इति च क्वचित् ।

तान् विप्रवेषान् स निशाम्य राजा महाभुजान् स्नातकवेषयुक्तान् ।
द्वितीयवर्ण्णान् प्रविचिन्त्य बाहून् ज्याकर्कशान् वीक्ष्य बभाष एतान्[1] ॥ १२७ ॥

के ष्ठाथ किंहेतुत आगताश्च कुतश्च मे पर्वतलिङ्गभेदनम् ।
कृतं भवद्भिः कुत एव दुर्नयाः कृतास्तथाऽन्ये द्विजवर्य्यवेषैः ॥ १२८ ॥

इति ब्रुवाणं भगवानुवाच कार्य्यं हि शत्रोरखिलं प्रतीपम् ।
इत्युक्त ऊचे नहि विप्रशत्रुरहं कुतो वो मम शत्रुता भवेत् ॥ १२९ ॥

**स्नातकवेषयुक्तान् । स्नातकः तीर्थयात्राव्रतधरः । प्रविचिन्त्य ज्ञात्वा ॥ १२७ ॥ के स्थ[2] यूयं के भवथ । अन्ये दुर्नयाः अन्यायाः ॥१२८॥ कुतश्च मे पर्वतलिङ्गभेदनं कृतमित्यादेरुत्तरमाह–कार्यं हीति ।**

---

विप्रवेषान् । तत्रापि स्नातकवेषयुक्तान् । विप्रत्वं वेष एवेति दर्शनेनैव निर्दधार । स्नातकाः स्युर्वा नवा स्युरिति जरासन्धस्यानिर्धारं सूचयितुं स्नातकवेषयुक्तानित्याह । स्नातकवेषः युक्तो येषां ते तादृशा वा, अथवा केवलं कृत्रिमेण स्नातकवेषेण युक्ता वेति । गुरुकुले विद्यातीर्थे स्नात्वा प्रतिनिवृत्ता अकृतोद्वाहाः स्नातका उच्यन्ते । स्नात एव स्नातकः । **'यावादिभ्यः कन्'** [अ.सू.५.४.२९] इति स्वार्थे कन् प्रत्ययः । **'स्नातः वेदसमाप्तौ'** इति यावादिगणे पठ्यते । **'सञ्ज्ञायां कन्'** [अ.सू.५.३.७५] इति सूत्रेण स्नातकपदनिष्पत्तिं वदन् भट्टोजिदीक्षितपुत्रो गणपाठं विसस्मार । स्वोदाहृतस्य सूत्रस्य चार्थम् । सञ्ज्ञायामिति सूत्रेण कन्विधाने स्नातक इत्यस्याधीतवेदत्वात् कुत्सित इत्यर्थः स्यात् । **'कुत्सिते'** [५.३.७४] इति पूर्वसूत्रमत्राप्यनुवर्तत इति वैयाकरणैरभ्युपगमात् । तथाहि काशिकायां जयादित्यः–**'कुत्सितत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् कन् प्रत्ययो भवति, कस्यापवादः, प्रत्ययान्तेन सञ्ज्ञा गम्यते'** इति । तेन व्याकरणनदीष्णा दीक्षितमिव तत्पुत्रमपि नाऽद्रियन्ते । विप्रवेषः प्रकटः । प्रकटाद् विलक्षणान्, द्वितीयवर्णान् चिन्तयित्वा । कुतः? बाहूनां ज्याकर्कशत्वात् ॥ १२७ ॥ के ष्ठ के स्थ । स्वस्य परमवैदिकत्वं विनेयानां जिग्राहयिषन् कारुणिक आचार्य एवं प्रायुङ्क्त । प्रसिद्धश्च वेदेष्वेतादृशः प्रयोगः–**'आपो हि ष्ठा मयोभुवः'** इत्यादिषु । पाणिनिरप्याह–**'पूर्वपदात्'** [अ.सू.८.३.१०४] इति । तथाहि काशिकायां वामनः–**'छन्दसीति वर्तते । एकेषामिति च । पूर्वपदस्थान्निमित्तात् परस्य सकारस्य मूर्धन्यादेशो भवति, छन्दसि विषये, एकेषामाचार्याणां मतेन । असमासेऽपि यत् पूर्वपदं तदपीह गृह्यते'** इति । पर्वत एव लिङ्गम् । शिवलिङ्गत्वेनाभिमतः पर्वत इत्यर्थः । अन्ये दुर्नयाः– आपणेभ्यः प्रसह्य गन्धाद्याहरणम्, अद्वारेण प्रवेशः, द्वारपालान् वञ्चयित्वा ब्राह्मणवेषेण मदुपसर्पणं च । द्विजेषु त्रिषु वर्णेषु वर्यः प्रथमवर्णो विप्रः ॥ १२८ ॥ प्रतीपं प्रतिकूलम् । तान् द्वितीयवर्णान् प्रविचिन्त्यापि, अस्तु तावत् किमपि वास्तवमिति सम्प्रत्यभ्युपगमवादेन

---

१. **'बभाष एतत्'** इति क्वचित् ।
२. **'के स्थाथ'** इत्येव टीकासम्मतः पाठः स्यात् ।

इत्युक्तवाक्यं नृपतिं जगाद जनार्दनो नैव हि तादृशा द्विजाः ।
वयं[1] रिपुस्तेऽस्मि हि वासुदेव इमौ च भीमार्ज्जुननामधेयौ ॥ १३० ॥

यद् बान्धवान् नः पिशिताशिधर्म्मतो रौद्रे मखे कल्पयितुं पशुत्वे ।
इच्छस्यरे वेदपथं विहाय तं त्वां बलाच्छास्तुमिहाऽगता वयम् ॥ १३१ ॥

विमोक्षयामः स्वजनान् यदि त्वं न मोचयस्यद्य निगृह्य च त्वाम् ।
मुञ्चाथ वा तानभियाहि वाऽस्मान्[2] रणाय मर्त्तुं कृतनिश्चयोऽत्र ॥ १३२ ॥

**महा(भुज)त्वादिलि(ङ्गाभ्यां) ज्ञातमपि क्षत्रियत्वं निगूह्य (आह)– अहं च[3] न विप्रशत्रुरिति । कुत इत्याक्षेपः ॥ १२९ ॥ ये द्विजास्तव वैरविषया न भवन्ति तादृशा द्विजा न । के स्थेत्यस्योत्तरमाह– रिपुरित्यादि ॥ १३० ॥ केन हेतुना आगता इत्यस्योत्तरं वक्तुं प्रसङ्गमाह–यद्बान्धवान्न इति ॥ १३१–४ ॥**

---

तावदाह– नाहं विप्रशत्रुरिति सर्वजनप्रसिद्धं हीति । वो मम शत्रुता । युष्माकं मच्छत्रुता । मम वा युष्मच्छत्रुता ॥ १२९॥ सत्यं वयं द्विजाः, अथापि न तादृशाः, यादृशांस्त्वं मन्यसे । न ब्राह्मणाः, किन्तु क्षत्रियद्विजा इत्यर्थः । भीमार्जुन-नामधेयौ । नामैव नामधेयमिति वैयाकरणाः । तथाहि वार्तिकम्–**'भागरूपनामभ्यो धेयः प्रत्ययो वक्तव्यः'** [५.४.२५] इति । वस्तुतस्तु वर्णाधिक्येन वर्णनीयाधिक्यं स्वरसतः प्रतीयते । तथाहि–अपूर्वं भाग्यं भागधेयम् । सर्वातिशायि रूपं रूपधेयम् । अन्वर्थं जगति विततं च, अत एव सदा हृदि निधेयम्, अविस्मरणीयमिति यावत्, नाम नामधेयम् । तेन भीमार्जुनावित्यन्वर्थनामानौ विश्रुतौ त्वयाऽपि श्रुतपूर्वौ, यन्नामश्रवणेनैव तवापि हृदयमुद्विजते ताविमावित्यर्थः । अहो पदविन्यासकौशलं भगवत्पादस्य ॥१३०॥ पिशितं मांसम्, विशिष्य नृमांसम्, अश्नन्तीति पिशिताशिनः पिशाचाः । पिशितमश्नन्तीत्येव हि पिशाचा इत्युच्यन्ते । एतं पिशाचशब्दं पृषोदरादिषु पठन्ति पाणिनीयाः । तथाच पिशिते इतस्य लोपः । पिश् अवशिष्यते । उत्तरपदे शकारस्य चकारः । तेन पिशिताशः पिशाचो भवति । पिशितमाचामतीति वा पिशाचः । तदाहुः–**'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्'** इति । पिशाचानां धर्मं स्वभावमाश्रित्य । रौद्रे रुद्रदैवत्ये । बलात् बलं प्रयुज्यापि । बलात्कारेणेत्येतत् । शास्तुं शासितुम् । शासु अनुशिष्टौ । उदितो धातोः क्त्वाप्रत्यये परतः इडागमो वा स्यादिति मन्यते पाणिनिः–**'उदितो वा'** [अ.सू.७.२.५६] इति । तेन शास्त्वा शासित्वा वा । न केवलं क्त्वाप्रत्यये । तुमुनि च विकल्पं मन्यते भगवत्पादः– ततः शास्तुं शासितुं वा । वस्तुतस्तु शासतिर्भ्वादिरपि पठनीयः । **'हत्वाऽशासत् त्रिविष्टपम्'** [भाग.८.१.१८] इत्यादि प्रयोगात् ॥ १३१ ॥ अथ तस्मात्, तान् मुञ्च वा, अभियाहि वा । यद्यायास्यसि अत्र अस्मिन्नेव चरमरणे मरणाय कृतनिश्चयो रणायाऽयाहि ॥ १३२ ॥

---

१. **'अहं रिपु–'** २. **'–याहि चास्मान्'** ३. एतेन **'न च विप्र–'** इति टीकासम्मतः पाठः स्यादिति भाति ।

इतीरितोऽसौ मगधाधिपो रुषा जगाद नाहं शिवयागयुक्तान् ।
मोक्ष्ये पशून् युगपद् वा क्रमेण योत्स्ये च वोऽथापि चमूसहायान् ॥ १३३ ॥

निरायुधः सायुधो वा युष्मदिष्टायुधेन वा ।
एकोऽपि सकलैर्य्योत्स्ये ससेनो वा[1] ससैनिकान् ॥ १३४ ॥

इत्युक्तवन्तमवददजितोरुबलो हरिः ।
एह्येकमेको वाऽस्मासु ससैन्यो वा रणे नृप ॥ १३५ ॥

येन कामयसे योद्धुं तं न आसादय द्रुतम् ।
निरायुधः सायुधो वा त्वदभीष्टायुधेन वा ॥ १३६ ॥

इत्याऽह[2] भगवाञ्छत्रुं यशो भीमे विवर्द्धयन्[3] ।
घातयित्वा स्वशत्रुं च भीमेनानुग्रहं परम् ॥ १३७ ॥

भीमस्य कर्त्तुमिच्छंश्च भक्तिज्ञानादिवर्द्धनम्[4] ।
तृणीकर्त्तुं रिपुं चैव निरायुधतयाऽगमत् ॥ १३८ ॥

**ससैन्यो वा एकमेव ॥ १३५ ॥ नः अस्माकं मध्ये ॥ १३६ ॥ स्वशत्रुं तं भीमेन घातयित्वा भीमे यशः अभिवर्धयन्, भीमस्य परमनुग्रहं च कर्तुमिच्छन्, अनुग्रहेण च भक्तिज्ञानाभिवर्धनं च कर्तुमिच्छन् इत्याहेति सम्बन्धः ॥ १३७–९ ॥**

---

तव बान्धवाः, मम शिवयागनियुक्ताः पशव इत्याह– नाहम् । मोक्ष्ये । मुच्लृ मोक्षणे । सोऽयं मम महान् स्वार्थः, यतस्तैः पशुभिः शिवं सन्तोष्य सम्राड् बुभूषामीत्यात्मनेभाषा ॥ १३३–६ ॥ एको वा ससैन्यो वा अस्मास्वेकमेहीत्याह । कुतः? यशो भीमे विवर्धयन् । स्वद्वेष्टारं भीमेन घातयित्वा । अथच ना परमपुरुषो नारायणः भीमे परं सर्वजीवाधिक-मनुग्रहं कर्तुमिच्छन् भीमस्य भक्तिज्ञानादिवर्धनं च कर्तुमिच्छन् । आदिपदेन वैराग्यमैश्वर्यं च । भक्त्यादिचतुरात्मको हि वायुः । रिपुं चैव । नीचत्वे चः । नीचं रिपुं तृणीकर्तुमेव ॥ १३८ ॥

---

१. **'ससैन्यो वा'**

२. **'इत्यूचे भग–'** इति क्वचित् ।

३. **'भीमस्य वर्द्धयन्'** इति क्वचित् । **'भीमेऽभिवर्द्धयन्'** इति वे.ती. पाठ इति भाति ।

४. **'–ज्ञानाभिवर्धनम्'** इतिच ।

कृष्णभीमार्ज्जुनास्तेन विप्रवेषाश्च तेऽभवन् ।
निरायुधः क्षत्रवेषो नैव योग्यः कथश्चन ॥ १३९ ॥

ततो जग्मुर्विप्रवेषास्तृणीकर्त्तुं हि[१] मागधम् ।
मागधस्य ससैन्यस्य स्वगृहे संस्थितस्य च ॥ १४० ॥

निरायुधेन भीमेन समाह्वाने कृतेऽमितम् ।
धर्म्मं यशश्च भीमस्य वर्द्धयामास केशवः ॥ १४१ ॥

तृतीयमर्ज्जुनं चैव समादाय ययौ रिपुम् ।
हरिस्तस्माच्च भीमस्य महाधिक्यं प्रकाशयन् ॥ १४२ ॥

**'तृणीकर्तुं रिपुं चैव निरायुधतयाऽगमत्' इत्येतद्विवृणोति–मागधस्येत्यादिना । समाह्वाने कृते । निमित्त-सप्तमीयम् ॥ १४०–१ ॥ अर्जुनमुपादाय गच्छतो हरेरभिप्रायमाह– तृतीयमित्यादिना । एवं वृण्विति ब्रुवन् मागधस्य मुखेनैव तस्मात् अर्जुनाच्च भीमस्य महाधिक्यं प्रकाशयन्नेव हि तृतीयमर्जुनं समादाय रिपुं ययाविति योजना ॥ १४२ ॥**

---

तेन निरायुधतया गमनेन कारणेन । किमिति क्षत्रवेषेणैव निरायुधा नागमन्? आह– निरायुधः ॥ १३९ ॥ ततः निरायुधस्य क्षत्रवेषस्यायोग्यत्वाद्, विप्रवेषाः । तृणीकर्तुं निरायुधत्वेन । निरायुधत्वाय विप्रवेष इत्यन्ततः सोऽपि तृणीकर्तुमेव । संस्थितस्य परिवारेण समं स्थितस्य ॥ १४० ॥ समाह्वाने समरायाऽह्वाने कृते सति भीमस्य अमितं धर्मम्, धर्मशब्दोऽस्त्रियाम्, अमितो धर्मः अमितं यशश्च स्यात् । अतस्तथा कारयित्वा भीमस्यामितं धर्मं यशश्च वर्धयामास केशव इत्यावृत्त्या योजना । वैयाकरणाश्च धर्मशब्दमर्धर्चादिषु पठन्ति, पुंसि च न पुंसि चेति । अत्र विशेषमाह जयादित्यः–**'शब्दरूपाश्रया चेयं द्विलिङ्गता कचिदर्थभेदेनापि व्यवतिष्ठते । यथा पद्मशङ्खशब्दौ निधिवचनौ पुंल्लिङ्गौ । जलजे उभयलिङ्गौ । भूतशब्दः पिशाचे उभयलिङ्गः, क्रियाशब्दस्याभिधेयवल्लिङ्गम् । सैन्धवशब्दो लवण उभयलिङ्गः, यौगिकस्याभिधेयवल्लिङ्गम् । सारशब्द उत्कर्षे पुंल्लिङ्गः, न्यायादनपेते नपुंसकम्– नैतत् सारमिति । धर्म इत्यपूर्वे पुंल्लिङ्गः, तत्साधने नपुंसकम्'** इति । अत्र तु द्वयमप्यभिमतम् । पुण्यं पुण्यसाधनं कर्म च । समाह्वाने कृते, तेनैव निमित्तेनेति निमित्तसप्तमी वा । तृतीयार्थे वा सप्तमी । भीमकृतेन समाह्वानेन । **'पञ्चसु तृतीया'** इति प्राचीनाः ॥१४१॥ तृतीयमर्जुनं च सहैवाऽदाय । अर्जुनमेव च तृतीयम् । नान्यम् । तत्र कारणमाह– तस्माच्च । अर्जुनेन सहैव गमनादपि ॥ १४२ ॥

---

१. **'कर्तुं च मा–'**

मुखेन मागधस्यैव वृण्वेकं न इति ब्रुवन् ।
वृण्वेकमस्मास्विति सः प्रोक्त[१] आह जरासुतः ॥ १४३ ॥

कुर्य्यां नैवार्ज्जुनेनाहमबलेनैव सङ्गरम् ।
पञ्चपञ्चाशदब्दोऽद्य ह्ययमेवं च[२] बालवत् ॥ १४४ ॥

अबलत्वाद् युवाऽप्येष बाल एव मतो मम ।
इत्युक्तोऽप्यर्ज्जुनो नाऽह कुरु तर्हि परीक्षणम् ॥ १४५ ॥

बाहुभ्यां धनुषा वेति[२] शङ्कमानः पराजयम् ।
अतो भीमे बलाधिक्यं सुप्रसिद्धमभून्महत् ॥ १४६ ॥

एतदर्त्थं हि कृष्णेन सहाऽनीतः[३] स फल्गुनः ।
जानन् कृष्णे बलं घोरमविषह्यं स मागधः ॥ १४७ ॥

कुत्सयन् गोप इति तं भयान्नैवाऽह्वयत् प्रभुम् ।
आह्वयामास भीमं तु स्याद् वा मे जीवनं त्विति ॥ १४८ ॥

**तत्कथमित्याह– वृण्वेकमिति ॥ १४३ ॥ अबलेनैव बलरहितेन, बालेनेति यावत् । युवाऽयमबलत्वेन कुतो बालोऽभिप्रेत इत्यत आह–पञ्चेति । अयमद्य इदानीं पञ्चपञ्चाशदब्दो हि । एवं (च) पञ्चपञ्चाशदब्दत्वेऽपि बालवत् बालसदृशः ॥ १४४ ॥ तत्कुत इत्यत आह– अबलत्वादिति ॥ १४५ ॥ अतः जरासन्धोक्त(स्य) अर्जुनेनाप्रत्युत्तरदानात् ॥ १४६ ॥ घोरम्, अत एवाविषह्यम् ॥ १४७–५१ ॥**

---

नः अस्माकं मध्ये कश्चिदेकं वृणु इति ब्रुवन् कृष्णः मागधस्य मुखेनैव तस्मादर्जुनाच्च भीमस्य महाधिक्यं प्रकाशयन् । कथं वृण्वेकं न इति ब्रुवन् भीमस्य महाधिक्यं प्रकाशयामास? आह– वृण्वेकमस्मास्विति । प्रोक्तः प्रकटं सर्वजनसमक्षमुक्तः ॥ १४२–३ ॥ बालवदिति । **'मत्वा देवं गोप इति बालोऽर्जुन इति स्म ह'** [स.प.२४.५] इति भारते । एवं च पञ्चपञ्चाशदब्दत्वेऽपि ॥ १४४–५ ॥ पूर्वमेव प्रसिद्धमिदानीं सुप्रसिद्धमभूत् ॥ १४६–७ ॥ ननु नार्जुनं कुत्सयामास केवलम् । कृष्णमपि । ततश्चानयैव दिशा कृष्णादपि बलाधिक्यं भीमस्य स्यात् । न स्यादित्याह–कुत्सयन्निति । तं पूर्वानुभूतसामर्थ्यम् । भयात् पराभवभयान्मरणभयाच्च । भीमं तु । तस्याप्यविषह्यं बलमिति तुनाऽऽह । तर्हि तमपि

---

१. 'स प्रोक्त–' २ **'ह्ययमेव तु बाल–'** ३. **'धनुषा चेति'** ४ **'समानीतः'**

हनिष्यत्येव मां कृष्ण इत्यासीन्नृपतेर्भयम् ।
तस्मात् तं नाऽह्वयामास वासुदेवं स मागधः ॥ १४९ ॥

अर्ज्जुने तु जिते कृष्णभीमौ मां निहनिष्यतः ।
त्रयाणां दुर्बलाह्वानान्नश्येत् कीर्त्तिश्च मे ध्रुवा[1] ॥ १५० ॥

इति मत्वाऽह्वयामास भीमसेनं स मागधः ।
कथञ्चिज्जीवितं वा स्यान्नतु नश्यति मे यशः ॥ १५१ ॥

इति स्म[2] भीमं प्रतियोधनाय सङ्गृह्य राजा स जरासुतो बली ।
राज्ये निजं चाऽऽत्मजमभ्यषिञ्चत् पुरा ख्यातं पत्रतापाख्यरुद्रम् ॥ १५२ ॥

बलं भीमे मन्यमानोऽधिकं तु गदाशिक्षामात्मनि चाधिकां नृपः ।
भीतो नियुद्धेऽस्य ददौ गदां स[3] भीमाय चान्यां स्वयमग्रहीद् बली ॥ १५३ ॥

**इति स्म उक्तहेतोरेव । सङ्गृह्य अङ्गीकृत्य ॥ १५२–३ ॥**

---

किमित्याह्वयामास? आह– स्याद्वा मे जीवनं त्विति । तदप्यसम्भावितप्रायम् । अथापि कथञ्चिद् दैवयोगेन स्यादिति सम्भावनामात्रमेतदपीति पुनस्तुनाऽऽह ॥ १४८–५० ॥ पराजयेऽपि महाबलेन यूना वृद्धः कथञ्चित् पराजित इति यशो मे नैव नश्यति ॥ १५१ ॥ समालोच्य ग्रहणं सङ्ग्रहणम् । समत्वेन ग्रहणं सङ्ग्रहणम् । वस्तुतः बली । अथापि कृष्ण-भीमयोः पुरस्तादबली । अत एव जिजीविषुरपि अविश्वसन्निव राज्ये निजमात्मजं सहदेवमभ्यषिञ्चत् ॥ १५२ ॥ मन्य-मानस्तु । सत्यमिदं माननमिति तुनाऽऽह । गदाशिक्षां तु । मृषैवायमभिमान इति तुनाऽऽह । अस्य भीमस्य नियुद्धे बाहुयुद्धे । तृतीयार्थे वा षष्ठी । अनेन भीमेन साकं नियुद्धे । पञ्चम्यर्थे च । अस्य अस्माद् भीमाद् भीतः । चतुर्थ्यर्थे च । अस्य अस्मै भीमाय ददौ गदां च । तथाहि भागवते–**‘न त्वया भीरुणा योत्स्ये युधि विक्लबचेतसा । मधुरां स्वां पुरीं त्यक्त्वा समुद्रे शरणं गतः । अयं तु वयसाऽतुल्यो नातिसत्वो न मे समः । अर्जुनो न भवेद् योद्धा भीमस्तुल्यबलो मतः । इत्युक्त्वा भीमसेनाय दत्वा स महतीं गदाम् । द्वितीयां स्वयमादाय निर्जगाम पुराद् बहिः’** [भाग.१०.८०.३१–३] इति । भारते तु व्यत्यासं नाम शैलीभेदमाश्रित्यान्यथा पठ्यते–**‘ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः’** [स.प.२४.१२] इति, **‘नर्दन्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ’** [१७] इत्यादि च । तथाच बाहुभ्यां प्रयोज्यं शस्त्रं प्रहरणमिति गदैव भारतेऽप्युच्यत इति न कोऽपि विरोधः ॥ १५३ ॥

---

१. **‘ध्रुवम् ।’** २. **‘इतीक्ष्य भीमम्’** ३. **‘गदां तु’** इति क्वचित् ।

**तदर्त्थमेवाऽऽशु गदां प्रगृह्य भीमो ययौ मागधसंयुतो बहिः ।**
**पुरात् सकृष्णार्ज्जुन एव तत्र त्वयुद्ध्यतां[1] केशवपार्त्थयोः पुरः ॥ १५४ ॥**

**वाचाऽजयत् तं प्रथमं वृकोदरः शिवाश्रयं विष्णुगुणप्रकाशया ।**
**ततो गदाभ्यामभिपेततुस्तौ विचित्रमार्ग्गानपि[2] दर्शयन्तौ ॥ १५५ ॥**

**तयोर्ग्गदे तेऽशनिसन्निकाशे चूर्ण्णीकृते देहमहादृढिम्ना[3] ।**
**अन्योन्ययोर्वक्षसि पातिते रुषा यथाऽश्मनोः पांसुपिण्डौ सुमुक्तौ ॥ १५६ ॥**

**तदर्थमेव जरासन्धार्थमेव ॥ १५४ ॥ विचित्रमार्गान् मण्डलप्रसाराभिसारादिविचित्रमार्गविशेषान् ॥ १५५–६३ ॥**

---

तदर्थं जरासन्धस्यापेक्षापूर्त्यर्थमेव । प्रगृह्य महतीमपि गदां प्रग्रहमिवानायासेन गृहीत्वा । शत्रुप्रचोदनाय गृहीत्वा । अयुद्ध्यताम्, अयुद्ध्येताम् । कृष्णप्रीत्यै भीमः, कृष्णद्वेषाज्जरासन्धश्च युयुधाते इति परस्मैभाषयाऽऽह । अत एव भारतेऽपि– **‘सिंहाविव सुसङ्क्रुद्धावाकृष्याऽकृष्य युद्ध्यताम्’** [१८] इत्युक्तम् । ब्रह्मवरमत्तस्य भाविब्रह्मणश्चेदं विशिष्टं युद्धमिति तुनाऽऽह– अयुद्ध्यतां तु । केशयोर्ब्रह्मरुद्रयोः प्रवर्तकस्य कृष्णस्याऽज्ञया ब्रह्मरुद्रवरमत्तमपि जरासुतं भीमोऽयुयुत्सतेति केशवपदेनाऽह ॥ १५४ ॥ वाचाऽजयत् तं प्रथमम् । तदेतत् भारते किञ्चिदिव सूचितम्–**‘ततः शब्देन महता भत्सयन्तौ परस्परम्’** [३०] इति । विष्णुगुणप्रकाशकेन शिवगुणप्रकाशकेन च महार्थेन साभिनिवेशं महता कण्ठेनोच्चैरुदितेन शब्देनेति । मार्गान् गतिविशेषान् । **‘मण्डलानि विचित्राणि सव्यं दक्षिणमेव च । चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः’** [१०.८०.३५] इति भागवते ॥ १५५ ॥ ते अशनिसन्निकाशे । प्रगृह्यसञ्ज्ञा च विभाषा भवतीत्याचार्याशयः । क्वचिदर्थविशेषलाभाय स्यादप्रगृह्यापि प्रयोगः । **‘सम्भृतिद्युव्याप्यपि चातः’** [ब्र.सू.३.३.२४] इति भगवत्प्रयोगः । **‘कृत्वा भाष्यानुभाष्येऽहम्’** इति च न्यायविवरणे । भाष्यानुभाष्ययोः परस्परपूरकत्वं तत्राप्रग्रहार्थः । गदयोः समानसारत्वमत्र । अशनिर्द्वयोः पठ्यते । तथाऽप्यत्र स्त्रीलिङ्गः परिगृह्यते । तदा ह्युपमानोपमेययोरेकलिङ्गता स्यात् । पर्वतवृक्षादीनप्यश्नातीत्यशनिः । अशेर्निः प्रत्ययः । देहयोर्महता वज्रकल्पेन दृढिम्ना । **‘आशिष्ठो दृढिष्ठो बलिष्ठः’** इति श्रुतिः । अन्योन्ययोर्वक्षसि पातिते । एतेन–**‘ततो भीमं जरासन्धो जघानोरसि मुष्टिना । भीमोऽपि तं जरासन्धं वक्षस्यभिजघान ह’** [स.प.२४.३१] इति भारतवचनं विवृतम्, बद्धगदेन मुष्टिना जघानेति । कथमन्योन्ययोः? अपूर्वोऽयं शब्दः । अन्योऽन्यस्य, अन्यश्चान्यस्येत्यन्योन्ययोः । विभक्तिप्रतिरूपकमव्ययम् । **‘ते वै गदे भुजजवेन निपात्यमाने अन्योन्ययोः सकटिपादकरोरुजत्रून् । चूर्णीबभूवतुरुपेत्य–’** [१०.८०.३७] इति भागवते । अश्मनोर्वक्षसि मध्यभागे सुमुक्तौ दृढं वेगेन पातितौ । पांसवो रजांसि । ये स्वयमनुन्दनशीलाः । तैः कथञ्चित् द्वौ पिण्डौ विधाय तयोः शिथिलयोः पिण्डयोः

---

१. **‘तत्र तावयुद्ध्यताम्’** इति क्वचित् ।  २. **‘–मार्गानभिदर्श–’**  ३ **‘–द्रढिम्ना’**

**सञ्चूर्ण्णितगदौ वीरौ जघ्नतुर्म्मुष्टिभिर्म्मिथः[१] ।**
**ब्रह्माण्डस्फोटसङ्काशैर्य्यथा केशवकैटभौ ॥ १५७ ॥**

**चचाल पृथ्वी गिरयश्च चूर्ण्णिताः कुलाचलाश्चेलुरलं विचुक्षुभुः ।**
**समस्तवाराम्पतयः सुरासुरा विरिञ्चशर्वादय आसदन्नभः ॥ १५८ ॥**

**सुरास्तु भीमस्य जयाभिकाङ्क्षिणस्तथाऽसुराद्या मगधाधिपस्य ।**
**पश्यन्ति सर्वे क्रमशो बलं स्वं समाददे मारुतनन्दनोऽपि ॥ १५९ ॥**

कठिने शिलाफलके वेगेन घट्टने यथा सपदि चूर्णीभवतस्तथा ते गदे अपि सपद्यप्रयत्नेन चूर्णीकृते इति । अत एवोपरि 'सञ्चूर्णितगदौ' इत्याह । सामस्त्येन शकलशश्चूर्णनं हि सञ्चूर्णनम् । सम्पूर्णं हि तच्चूर्णनं भवति ॥ १५६ ॥ जघ्नतु-र्मुष्टिभिर्मिथः । एतेन भारतोक्तं मुष्टियुद्धं पाश्चात्यमित्युक्तम् । प्रघसेन शैलीभेदेन न तत्र गदायुद्धं प्रास्तावीति च । तदेतत् स्फुटं भागवते– **'इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैर्व्यपिष्टाम्'** [३८] इति । मुष्टिघातजातेन नादेन ब्रह्माण्डस्फोटसन्निभैः । ब्रह्माण्डस्फोटे यो नादः स्यात् तत्सदृशनादयुक्तैः । कर्णपुटभेदनो हि नादः समानधर्म उभयोः । सृष्टेः पूर्वं प्रवृत्तं प्रथमं मुष्टियुद्धमुदाहरणत्वेनाऽह– यथा केशवकैटभौ । तदनन्तरं तादृशं द्वितीयं नियुद्ध-मिदमित्येतत् । पूर्वं देवान्तकस्य हनुमता कृते युद्धाह्वानेऽपीत्थमेवाऽह– **'आह्वयामास युद्धाय केशवः कैटभं यथा'** [८.४९] इति ॥ १५७ ॥ वाराम्पतयः उल्लोलकल्लोलं विप्लुताश्चुक्षुभुः । सुरा विरिञ्चमादौ कृत्वा । असुराः शर्वम् । अथच जरासन्धस्य वरदौ विरिञ्चिशर्वावपि भीमेन करिष्यमाणं वरभङ्गमभिमानपूर्वं दिदृक्षू आगतावित्यर्थः ॥ १५८ ॥ अभीक्ष्णं काङ्क्षाऽभि-काङ्क्षा । सुरास्तु ब्रह्माद्या भीमस्य सदा जयकाङ्क्षिणः । असुराः शर्वं पुरोधायाऽगताः । अथापि शर्वः स्ववरभङ्गेनापि भीमस्यैव जयाकाङ्क्षी । केवलमसुराद्यास्तामसा एव मागधजयाभिकाङ्क्षिणः । तदेतदसुराद्या इत्यनेन सूचयाम्बभूव । आद्यशब्दो हि प्रकारवचनः । भेदः सादृश्यं च प्रकारः । तेनासुरप्रकारा इत्यसुरभिन्ना असुरसदृशास्तामसा उच्यन्ते । सर्वे भीमस्य मगधाधिपस्य च नियुद्धमपश्यन् । समाददे प्रकटीचकार । तथाहि भारते– **'कार्त्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि । तदा तद्युद्धमभवद् दिनानि दश पञ्च च'** [स.प.२४.३३] इति, **'चतुर्दश्यां निशायां तु निवृत्तो मागधः क्लमात् । तं राजानं तथा क्लान्तं दृष्ट्वा राजन् जनार्दनः । उवाच भीमकर्माणं भीमं सम्बोधयन्निव'** [३४–५] इति, **'यत्ते दैवं परं सत्वं यच्च ते मातरिश्वनः । बलं भीम जरासन्धे दर्शयाऽशु तदद्य वै'**[२५.४] इति, **'एवमुक्त-स्ततो भीमो मनसा चिन्त्य मारुतम् । जनार्दनं नमस्कृत्य परिष्वज्य च फल्गुनम् । प्रभञ्जनबलाविष्टो जरा-सन्धमरिन्दमः । उत्क्षिप्य भ्रामयामास बलवन्तमरिन्दमः'** [२५.८–९] इति च । मकुटमिति केशपाशेऽपि व्याहरणं भवति । शिरःशेखरे कुसुमसन्दर्भेऽपि । उष्णीषेऽपि । किरीटेऽपि । केचिन्मकुटं मुकुटमाहुः । तथाहि प्रक्रियासर्वस्वकारः–

१. **'वीरौ मुष्टिभिर्जघ्नतुर्म्मिथः'**

**मानयित्वा वरं धातुर्दिवसान् दश पञ्च च ।**
**वासुदेवाज्ञया भीमः शत्रुं हन्तुं मनो दधे ॥ १६० ॥**

**स[1] प्रणम्य हृषीकेशं हर्षादाश्लिष्य फल्गुनम् ।**
**रिपुं जग्राह मकुटे[2] वारणं मृगराडिव ॥ १६१ ॥**

**पृष्ठेऽस्य जानुमाधाय कूर्म्मदेशं बभञ्ज ह ।**
**मृतिकाले पुनर्देहं विददार यथा पुरा ॥ १६२ ॥**

**मर्म्मण्येव न हन्तव्यो मयाऽयमिति मारुतिः ।**
**स्वपौरुषप्रकाशाय बभञ्जैनममर्म्मणि ॥ १६३ ॥**

**भज्यमाने शरीरेऽस्य ब्रह्माण्डस्फोटसन्निभः ।**
**बभूव रावो येनैव त्रस्तमेतज्जगत्त्रयम् ॥ १६४ ॥**

**ब्रह्माण्डस्फोटसन्निभः ब्रह्माण्डस्फोटोत्थशब्दसन्निभः ॥ १६४ ॥**

---

**'अकारं मुकुटस्याऽदावुकारं दर्दुरस्य च । बभाण पाणिनिस्तौ तु व्यत्ययेनाऽह भोजराट्'** इति । मङ्कते मण्डयति मुखमिति च निर्वदन्ति । मङ्केरुटः प्रत्ययः । नुमभावश्च । मुच्यते मुण्ड्यते नापितैरिति मुकुटम् । मुचेरुटच् प्रत्यय इति भोजः । मुच मोचने । महागात्रमपि वारणं पश्चार्धेन पृष्ठमारुह्य शिरो विभिद्य मारयति मृगराट् ॥ १५९–६१ ॥ अवाङ्मुख-तया पतितस्य अस्य जरासुतस्य पृष्ठभागे एकं जानु स्वचरणस्याध आधाय, अपरं च आधाय दोर्भ्यां गृहीत्वा । कूर्म-वदुन्नतो देशः पृष्ठवंशस्याधोभागः । तं बभञ्ज ह । हेति स्मरन्निव स्वदते । विस्मयावहं चेदमास द्रष्टॄणामर्जुनादीनामिति च । **'एकं पादं पदाऽऽक्रम्य दोर्भ्यामन्यं प्रगृह्य सः । गुदतः पाटयामास शाखामिव मतङ्गजः'** [१०.८०.४३] इति भागवते । जानुशब्दोऽर्धर्चादित्वादुभयलिङ्ग इत्याहुः । मृतिकाले पुनर्देहमिति । अयमाशयः । प्रथमं आकूर्मदेशादा मकुटं बभञ्ज । अथापि न स ममार । पुनः सङ्गतदेहो युद्धायोत्तस्थौ । अथ पुनस्तं देहं विददार, यथा पुरा जन्मकाले व्यत्यस्य क्षिप्तं शकलद्वयं दासीभिः तथा कृत्वा यथा पुनः सङ्गतो न भवेत् तथा तं विददारेति । तथाहि भारते– **'ततस्त्वाज्ञाय तस्यैव पादमुत्क्षिप्य मारुतिः । द्विधा बभञ्ज तद् गात्रं प्राक्षिपद् विननाद च । पुनः सन्धाय तु तदा जरासन्धः प्रताप-वान् । भीमेन च समागम्य बाहुयुद्धं चकार ह'** [स.प.२५.१६–७] इति, **'भीमसेनस्तदा ज्ञात्वा निर्बिभेद च मागधम् । द्विधा व्यत्यस्य पादेन प्राक्षिपच्च ननाद ह'** [२०] इति च ॥ १६२ ॥ मर्मण्येव हन्तव्यमिति नियमः । तथा नियम्य हन्तुं कियानयं मत्पुरः? ॥ १६३–४ ॥

---

१. अत्र मूलकोशेऽपि **'स प्रणम्य'** इति विसर्गरहित एव पाठः । २. **'मुकुटे'**

निहत्य कृष्णस्य रिपुं स भीमः समर्प्पयामास तदर्च्चनं हरेः ।
कृतां हि भीमेन समर्चनां तां समक्षमादातुमिहाऽगतो ह्यजः ॥ १६५ ॥

स्वीकृत्य पूजां च वृकोदरस्य दृढं समाश्लिष्य च तं जनार्दनः ।
प्रीतो नितान्तं पुनरेव कृष्णं ननाम भीमः प्रणतोऽर्ज्जुनेन ॥ १६६ ॥

जग्मुः सुराश्चातितरां प्रहृष्टा ब्रह्मादयो दीनतराश्च दैत्याः ।
बलादुमेशस्य वरे प्रभग्ने वृकोदरेणाच्युतसंश्रयेण ॥ १६७ ॥

सुतो ययौ शरणं तान् रमेशभीमार्ज्जुनान् सहदवोऽस्य धीमान् ।
रथं स्वसारं च ददौ स मारुतेर्न्ननाम कृष्णं परया च[1] भक्त्या ॥ १६८ ॥

रथो ह्यसौ वसुना वासुदेवाच्छक्रान्तराऽप्तो वसुवंशजत्वात् ।
जरासुतस्याऽस वृकोदरस्तं हरे रथं प्रार्प्पयामास तस्मै ॥ १६९ ॥

**तदर्चनं शत्रुहननात्मकमर्चनम् ॥१६५॥ तं दृढं समाश्लिष्य नितान्तं प्रीतः, अभूदिति शेषः ॥ १६६ ॥ निजबलात् उमेश(स्य) वरे । उपलक्षणमेतत् । ब्रह्मादिवरेऽपीत्यर्थः ॥ १६७–८ ॥ अयं रथो न यादृशतादृश इत्याह–रथो हीति । वसुना वसुनाम्ना राज्ञा । शक्रान्तरा शक्रव्यवधानेन ॥ १६९–७० ॥**

---

समर्चनां श्रेष्ठां पूजाम् ॥ १६५ ॥ जनार्दनः, सदा भीमे प्रीतः, अनया रिपुहननरूपया पूजया नितान्तं प्रीतो बभूव । भीमश्च पूर्वं हृषीकेशं प्रणम्य रिपुं जघान । हत्वा च पुनरेव कृष्णं ननाम । अनुज्ञानाय प्रथमः प्रणामः । कृतकार्यतया, आश्लेषजनितानन्दभरेण च द्वितीयः । पूर्वमर्जुनमाश्लिक्षत् । अर्जुनस्तूष्णीमाश्लिष्यत । सम्प्रति कृष्णेनाऽश्लिष्टं कृष्णाय कृतप्रणामं च भीममीक्षित्वा स्वयमपि जातस्मृतिनेव शत्रुवधजनितानन्दभरेण भीमः प्रणतोऽर्जुनेन ॥ १६६ ॥ भीमो जिगायेति हृष्टाः । मागधो मृत इति प्रहृष्टाः । अच्युतसंश्रयेण रुद्रवरोऽपि ब्रह्मवरोऽपि मुधा बभूवेत्यतितरां प्रहृष्टाः । एवं देत्या भीमजयेन दीनाः । रुद्रवररक्षितोऽपि मागधो हत इति दीनतराः ॥ १६७ ॥ अस्य मागधस्य सुतः । अस्य अकारवाच्यस्य हरेर्धीमान् । भगवज्ज्ञानी । अत एव परया भक्त्या ननाम च ॥ १६८ ॥ शक्रान्तरा शक्रद्वारा । शक्रान्तराप्त इत्येकं वा पदम् । शक्रान्तरेणाऽप्तः । शक्रेण अन्तरेण मध्यगतेन द्वारभूतेन । शक्रमन्तरं कृत्वा प्राप्त इत्यर्थः । असौ रथः नारायणेन शक्रस्य पूर्वं दत्तः । तद्द्वारा वसुनाऽऽप्तः । तेन रथेनोपरि अन्तरिक्षे चरणादेव यं वसुमुपरिचरमामनन्ति स्म । तत्तनयो बृहद्रथः । तत्सुतश्च जरासन्धः । तेन तस्मिन्नेष रथः स्थितः । स चैष सहदेवद्वारा नारायणमेवाऽपेति भारतगा कथा । तदेतदाह–वृकोदरस्तं हरे रथं प्रार्पयामास तस्मै । ज्ञात्वाऽर्पणं प्रार्पणम् ॥ १६९ ॥

---

१. 'परयैव भक्त्या'

कृष्णोऽस्मरद् गरुडं स ध्वजेऽभूद् रथं कृष्णोऽथाऽरुहत् पाण्डवाभ्याम् ।
भीमः कन्यां सहदेवस्य हेतोः समग्रहीदनुजस्याऽत्मनः सः ॥ १७० ॥

नकुलस्याऽदान्मद्रराजो हि पूर्वं स्वीयां कन्यां सा तथैषाऽप्युषा हि ।
एका पूर्वं ते अश्विनोश्चैव[१] भार्या यमौ रेमाते यदुषा अश्विभार्य्या ॥ १७१ ॥

ततः कृष्णायामग्रजभ्रातृभार्य्यावृत्तिं हि तौ चक्रतुर्म्माद्रिपुत्रौ ।
जरासुतस्याऽत्मजः केशवादीन् रत्नैः समभ्यर्च्य ययावनुज्ञया ॥ १७२ ॥

तदाज्ञया पितृकार्य्याणि कृत्वा तदाज्ञयैवामुचत्[२] तान् नृपांश्च ।
तैः संस्तुतः केशवो भीमपार्थयुक्तो ययौ[३] भक्तिनम्रैर्य्यथावत् ॥ १७३ ॥

**'सहदेवस्य हेतोः समग्रहीत्' इति सहदेवस्य द्वितीयविवाहोक्तिप्रसङ्गात् नकुलस्यापि द्वितीयं विविच्याऽह– नकुलस्येत्यादिना । मद्रराजः पूर्वं नकुलस्य स्वीयां कन्यामदाद्धि । (सा) मद्रराजसुता तथा एषा जरासुत- सुताऽपि, ते चैव पूर्वमश्विनोर्भार्या, एका उषा हि । एवं हिशब्दौ प्रसिद्धवाचकौ । यमौ रेमाते, ताभ्यामिति शेषः । ननूषा अनिरुद्धभार्या । अतोऽश्विनोर्भार्या कथमुच्यत इत्याशङ्क्याऽह–यदुषा इति । अश्विभार्या उषाः यत्, सकारान्तोषस्शब्दवाच्या य(स्मा)त्, तस्मात् सा आकारान्तोषाशब्दवाच्याया अनिरुद्धभार्याया अन्येति वाक्यशेषः ॥१७१॥ ततः द्वितीयविवाहानन्तरम् । ययौ, पुरबाह्यतः पुरीमिति शेषः ॥१७२॥ तै राजभिः ॥ १७३–४ ॥**

---

जरासन्धसुतेन सहदेवेन दत्तां तदनुजां भीमः स्वानुजस्य सहदेवस्य हेतोः सम्बन्धितयाऽग्रहीत् ॥ १७० ॥ ननु नकुलस्य हेतोः किमिति नाग्रहीत्? आह–नकुलस्यादात् । ते उभे अपि पूर्वं मूलरूपे एकैव, अश्विनोर्भार्या च । एवं मद्रकन्यया नकुलः मगधकन्यया सहदेवश्चेति यमौ रेमाते । नन्वियमुषेत्युक्तम् । तर्हि कथमश्विभार्या? अनिरुद्धभार्या ह्युषेति विनेया- शङ्कां कृपया वारयति–यदुषा अश्विभार्या । नेयमुषा । किन्तूषोमानिनी उषाः शास्त्रेषु कथितेत्यर्थः । यद्वा यत उषा अश्विनोर्यमयोर्भार्या ततोऽनया द्विरूपया यमौ रेमाते इत्यर्थः ॥ १७१ ॥ तेषां केशवभीमार्जुनानामनुज्ञयाऽनुज्ञां प्राप्य ययौ स्वपुरम् ॥ १७२ ॥ तदाज्ञया केशवाज्ञया पितृकार्याणि अग्निसंस्कारादीनि । तदाज्ञयैव, आज्ञासमनन्तरमेव, विलम्बमकृत्वा । तान् कारायां बद्धान् । भक्तिनम्रैः तैः बन्धमुक्तैः नृपैः । भगवानयमिति संस्तुतः परिचितः, सम्यक् सकार्तज्ञ्यं स्तुतश्च ॥ १७३ ॥

---

१. **'तेऽश्विनोश्चैव'** २. **'तदाज्ञयैवादिशत्'** इति क्वचित् । ३. **'–युक्तो दृष्ट्वा भक्ति–'** इति क्वचित् ।

**सम्भावितास्ते सहदेवेन[१] सम्यक् प्रशस्य कृष्णं भीमसेनं च सर्वे ।**
**ययुर्गृहान् स्वानपतत् केशवद्विड् जरासुतोऽन्धे तमसि क्रमेण ॥ १७४ ॥**

**कृष्णश्च पार्थौ च तथैकयानं समास्थिता धर्म्मजमभ्यगच्छन् ।**
**तेषां शङ्खध्वनिसम्बोधितात्मा राजा प्रीतश्चातितरां बभूव ॥ १७५ ॥**

**द्वैपायनोऽथ भगवानभिगम्य पार्थानाज्ञापयत् सकलसम्भृतिसाधनाय ।**
**तं राजसूयसहितं परमाश्वमेधयज्ञं समादिशदनन्यकृतं विरिञ्चात् ॥ १७६ ॥**

**कर्त्ता हि तस्य परमेष्ठिपदं प्रयाति यद्यन्यसद्गुणवरैः परमेष्ठितुल्यः ।**
**भीमे मखस्य फलमत्यधिकं[२] निधातुं[३] व्यासः क्रतुं तमदिशद् गुरुरब्जजस्य ॥ १७७ ॥**

**शङ्खध्वनिसम्बोधितात्मा शङ्खध्वनिनोद्बोधितमनाः । पूर्वं शङ्कितमना इति भावः ॥ १७५ ॥ सकलसम्भृतिसाधनाय यज्ञाङ्गभूतसकलसाधनसम्पादनाय ॥ १७६ ॥ अन्यसद्गुणवरैः राजसूयादन्यैः सद्गुणश्रेष्ठैः यदि परमेष्ठितुल्यः (तर्हि) तस्य राजसूयस्य कर्ता परमेष्ठिपदं प्रयाति हि यस्मात् तस्मात् अन्यसद्गुणवरैः परमेष्ठितुल्यत्वात्, मखस्य फलं भीमे अभ्यधिकं अतिपूर्णं विधातुम् ॥ १७७ ॥**

---

सम्यग् यथायथं तत्तद्योग्यतानुगुणं सम्भाविताः सत्कृताः । साधनपरिपाकक्रमेण, योग्यताक्रमेण, कालक्रमेण च ॥ १७४ ॥ तेषां शङ्खध्वनिना सकृष्णौ भ्रातरावागताविति बोधितः, अथच शङ्खध्वनिनैव सनामग्राहं सम्बोध्येव बोधितः, ध्वनिना सङ्केतेन विजयसञ्ज्ञया च बोधितः आत्मा मनो यस्य । आगतान् दृष्ट्वा च यथावृत्तं श्रुत्वा च प्रीतः । जरासन्धं हत्वाऽऽगता इत्यतिप्रीतः । राजपुत्रा मोचिता इत्यतितरां प्रीतः ॥ १७५ ॥ अभीष्टदानायाऽगत्य । सम्भृतयो यज्ञाङ्गतया सम्भरणीयान्युपकरणजातानि । साधनं सम्पादनम् । **'राज्ञा सोतव्यः, राजा वेह सूयते, राजसूयः क्रतुः'** इति काशिका । राजा चन्द्रः । तदभिमानिका सोमलताऽत्र सूयत इत्यर्थः । षुञ् अभिषवे । अश्वहवनसाध्यो मेध इत्यश्वमेधः । हु दानादनयोः । **'मेधा बुद्धौ क्रतौ पुमान्'** इत्यभिधानम् । **'अश्वमेधः क्रतुश्रेष्ठः'** इति स्मरणात् परमः । अन्यच्चास्ति कारणमित्याह–विरिञ्चादन्यैरकृतम् ॥१७६॥ अत्यधिकं फलं परमेष्ठिपदमेव । तद् भीमे निधातुम् । कथं व्यासः पारमेष्ठ्यदानस्येष्टे? अब्जजस्यापि गुरुत्वात् ॥ १७७ ॥

---

१. **'सम्भाविताः सहदेवेन'** २. **'फलमप्यधिकम्'** इति क्वचित् ।

३. **'विधातुम्'** । **'फलमभ्यधिकं विधातुम्'** इति टीकापाठः स्यात् ।

असाधारणहेतुर्य्यः कर्म्मणो यस्य चेतनः ।
स एव तत्फलं पूर्ण्णं भुङ्क्तेऽन्योऽल्पमिति स्थितिः ॥ १७८ ॥

विना विष्णुं निर्ण्णयोऽयं स हि कर्म्मफलोज्झितः ।
हेतवोऽपि हि पापस्य न प्रायः फलभागिनः ।
देवाः पुण्यस्य दैत्याश्च मानुषास्तद्विभागिनः[१] ॥ १७९ ॥

असाधारणहेतुश्च भीम एव प्रकीर्त्तितः ।
यज्ञस्यास्य जरासन्धवधात् कर्ण्णजयादपि ॥ १८० ॥

जयाच्च कीचकादीनामन्यैर्ज्जेतुमशक्यतः ।
द्वितीयः फल्गुनश्चैव तृतीयस्तु युधिष्ठिरः ॥ १८१ ॥

तस्माद् ब्रह्मपदावाप्त्यै[२] व्यासो भीमस्य तं क्रतुम् ।
अनन्यकृतमादिश्य दिशां विजयमादिशत् ॥ १८२ ॥

**ननु युधिष्ठिरादीनामपि तत्कर्तृत्वात् कथं भीमे फलमभ्यधिकं विधातुं शक्यमित्यत आह–आसाधारणेति ॥ १७८ ॥ (तस्यापवादमाह–) विनेति । तद्विभागिनः शुभाशुभकर्मफलविभागिनः ॥ १७९ ॥ अस्तु विष्णोर(न्य)स्यासाधारणकारणस्य मुख्यं फलम् । भीमस्य त्वेतन्मखं प्रति असाधारणहेतुत्वं कुत इत्यत आह–असाधारणेति ॥ ८०॥ अस्तु जरासुतवधादसाधारणहेतुत्वं भीमस्य । कर्णादिजयादप्येतत् कुतः? कर्णादेरर्जुनादिभिरपि जेतुं शक्यत्वादित्यत आह– अन्यैरिति ॥ १८१ ॥ 'कर्ता हि तस्य परमेष्ठिपदं प्रयाति' इत्याद्युक्तमुपपाद्योपसंहरति – तस्मादिति । तस्मात् असाधारणहेतुत्वात् ब्रह्मपदाधिकारित्वाच्च । आदिश्य**

---

इति शास्त्रेषु व्यवस्थितिः । निर्णय इत्येतत् ॥१७८॥ ननु तर्हि सर्वं फलं विष्णोरेव स्यात् । नेत्याह–विना विष्णुम् । कुतः? यतः स कर्मफलोज्झितः । पापस्य हेतवोऽपि देवा न पापस्य फलभागिनः । यथा राजाज्ञां पालयतो वधकस्य न पापलेपः । दैत्याश्च पुण्यस्य न फलभागिनः । ख्यात्याद्यर्थं करणात्, अलगनाच्च मनसो भगवति । तद्विभागिनः तयोः विभागेन फलभागिनः । तदुभयभागिन इत्येतत् । **'पुण्येन पुण्यं लोकं नयति पापेन पापम्'** इत्यादिश्रुतेः । तद्द्विभागिन इति वा । तयोर्द्वयोरपि भागिन इत्यर्थः ॥ १७९–८० ॥ अशक्यतः अशक्यत्वात् । सार्वविभक्तिकत्वात् तसेः षष्ठ्यर्थे वा । अन्यैर्जेतुमशक्यानां जयादिति ॥ १८१ ॥ कर्तव्यत्वेन प्रथममादिश्य ततस्तदङ्गतया दिशां

---

१. 'मानुषास्तु द्विभागिनः' २. 'ब्रह्मपदप्राप्त्यै'

अथाऽब्रवीद् धनञ्जयो धनुर्ध्वजो रथो वरः ।
ममास्ति तद्दिशां जयो ममैव वाञ्छितः प्रभो ॥ १८३ ॥

इतीरितोऽखिलप्रभुर्ज्जगाद सत्यमस्ति ते ।
समस्तसाधनोन्नतिर्म्महच्च वीर्यमस्ति ते[1] ॥ १८४ ॥

तथाऽपि कीचकादयो वृकोदराद‍ृते वशम् ।
न यान्ति नापि ते वशं प्रयाति कर्ण्ण एव च ॥ १८५ ॥

बलाधिकोऽसि कर्ण्णतस्तथाऽपि नामृतः करम् ।
ददाति ते ह्यतिस्पृधा न वद्ध्य एष तेऽद्य च ॥ १८६ ॥

सवर्म्मकुण्डलत्वतो न वद्ध्य एष यत् त्वया ।
ततो वृकोदरो दिशं प्रयातु ते पितुः प्रियाम् ॥ १८७ ॥

**कुरु त्वमिति । आदिशत् कुरुतेति ॥१८२॥ इदं धनु(रादिकमस्ति) ॥१८३॥ सत्यमित्यर्धाङ्गीकारः । तदेव विवृणोति–अस्तीत्यादिना । ते समस्तसाधनोन्नतिः[2]अस्ति, ते महद् वीर्यं चास्ति ॥१८४॥ तथाऽपीत्यादिनोन्नत्या सर्वदिग्विजयं प्रतिषेधति ॥ १८५ ॥ तर्हि हनिष्यामीत्यत आह– न वध्य इति ॥ १८६ ॥ तत्र निमित्तमाह– सवर्मेति । (ते) पितुः प्रियां दिशं ऐन्द्रीम् । भरतखण्डापेक्षयेति भावः । अन्यथा 'द्वीपान्**

विजयमादिशत् ॥ १८२ ॥ दिशां जयः ममैव वाञ्छितः । वाञ्छा त्वस्ति । तत्र प्रभवेयं नवेति निर्णेतुं भवानेव प्रभुरित्याशयेन प्रभविति सम्बोधयामास ॥ १८३ ॥ 'साधनोन्नतिरस्ति ते, वीर्यमस्ति ते' इति द्विर्वचनेनार्जुनस्य वाञ्छामुल्लाघयति । दिग्विजयसाधनानां रथादीनामुन्नतिरुत्कर्षः । दिव्यो हि रथः । गाण्डीवं धनुः । अक्षयाविषुधी । क्वान्यत्रोन्नतिरीदृशी? ॥ १८४ ॥ एवं प्रशस्येदानीं तदसामर्थ्यं प्रकटयति–तथाऽपीति । कीचकादयः कीचकप्रकाराः । शिशुपालः पौण्ड्रकः बाणश्च । शिववरक्षितत्वं प्रकारः । कर्णस्त्वन्यप्रकार इति पृथगाह । त्वत्तोऽनधिकबलः कर्ण एव न ते वशं प्रयाति, कथन्तरां वरलब्धबलाः कीचकादय इत्येवकारार्थः । चकारो हीनबलतामाह । न प्रयाति । प्रकटं न याति । न यतीत्येतत् प्रकटं स्फुटमित्यर्थः ॥ १८५ ॥ ननु कीचकादीन् जयेयम्, मा च स्म वा जयम् । कर्णजये का शङ्का? अत्र कारणान्तरमस्तीत्याह– बलाधिकोऽसीति । तर्हि मृतो ददातु । तदपि न युक्तमित्याह– न वध्य इति । अद्य सम्प्रति न वध्यश्च तव ॥ १८६ ॥ कुतः? सवर्मकुण्डलत्वतः । महाभारतयुद्धे तेन भागो वोढव्य इत्यतश्च नाद्य वध्यः । **'कवचेन**

१. **'–मस्ति हि ।'**

२. लिखितकोशे **'–साधनान्वितिः'** इति पठ्यते । उत्तरवाक्याननुगुणमेतत् ।

जीवग्राहभयात् कण्णों ददाति करमञ्जसा ।
भीमाय नात्र सन्देहो जितोऽनेन च संयुगे ॥ १८८ ॥

अजेयौ शर्ववचनाद् रणे कीचकपौण्ड्रकौ ।
वशं प्रयातो भीमस्य तथाऽवद्ध्योऽपि चेदिपः ॥ १८९ ॥

जीवग्राहभयं ह्येषां भीमान्मागधपातनात् ।
तस्मात् करं प्रयच्छन्ति जिता वा पूर्वमेव वा ॥ १९० ॥

प्रयाहि च त्वं धनदप्रपालितां दिशं द्वीपान् सप्त चाशेषदिक्षु ।
नागांश्च दैत्यांश्च तथाऽधरस्थान्[1] विजित्य शीघ्रं पुनरेहि चात्र ॥ १९१ ॥

रथो हि दिव्योऽम्बरगस्तवास्ति दिव्यानि चास्त्राणि धनुश्च दिव्यम् ।
येऽन्ये च बाणप्रमुखा अजेयाः शर्वाश्रयास्तानपि भीम एतु ॥ १९२ ॥

तथा सुराश्चापि समस्ततोऽस्य बलिं प्रयच्छन्ति मदाज्ञयेतरे ।
दिशं प्रतीचीमथ दक्षिणां च यातां यमौ क्रमशो ह्यध्वरार्थे[2] ॥ १९३ ॥

**सप्त चाशेषदिक्षु' इति वक्ष्यमाणविरोधात् ॥ १८७–९० ॥ अशेषदिक्षु सप्त द्वीपांश्च ॥ १९१ ॥ कथमप्यस्य सप्तद्वीपगमनं घटत इत्यत आह–रथो हीत्यादिना ॥ १९२–३ ॥**

---

**समायुक्तः कुण्डलाभ्यां च मानद । अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम । अमृतादुत्थितं ह्येतदुभयं रत्न-सम्मितम् । तस्माद् रक्ष्यं त्वया कर्ण जीवितं चेत् प्रियं तव'** इति सूर्यवचनं कुण्डलाहरणे [व.प.३०१.१९–२०] । पितुरिन्द्रस्य प्रियाम्, प्राचीं दिशम् ॥ १८७ ॥ ननु तर्हि भीमायापि नामृतः करं दद्यादित्यत आह– जीवग्राह-भयात् । जीवतो ग्रहणं जीवग्राहः । अञ्जसा क्षिप्रं ददाति । पूर्वानुभवसिद्धं चैतदित्याह– जितश्चानेन पूर्वमिति । यद्यथापि विग्रहीष्यति पुनरपि जितः सन् ददाति ॥ १८८ ॥ प्रयातः निःशङ्कं यातः । चेदिपोऽपि प्रयाति ॥ १८९ ॥ भीमाद् भयमेषाम् । भीमकृतात् मागधस्य पातनात् । मागधं पातयतीति मागधपातनाद् भीमाद् वा । प्रयच्छन्ति क्षिप्रं यच्छन्ति ॥ १९० ॥ प्रयाहि शीघ्रं याहि । 'शीघ्रं पुनरेहि' इत्युत्तरवचनात् । निधिभरितत्वेन पालिता प्रपालिता । अधरस्थान् भूमेरधस्तनलोकस्थान् ॥ १९१–२ ॥ यथा बाणप्रमुखा असुरास्तथा सुराश्च, समस्तेषु स्थानेष्वपि, यत्रयत्रायं गच्छति,

---

१. **'तथा धरास्थान्'** इति कचित् । २. **'क्रमतो ह्यध्व–'**

**यशश्च धर्म्मश्च तयोरपि स्यादिति स्म कृष्णेन सुतेन काळ्याः[१] ।**
**उक्ते ययुस्ते तमभिप्रणम्य दिशो यथोक्ताः परमोरुसद्गुणाः[२] ॥ १९४ ॥**

**वृकोदरो जयन्नृपान् विराटमाससाद ह ।**
**जितेऽत्र कीचके रणे समाददे करं ततः ॥ १९५ ॥**

**ततः क्रमान्नृपान् जित्वा चेदीनां विषयं गतः ।**
**मातृवाक्याद् भयाच्चैव शिशुपालेन पूजितः ॥ १९६ ॥**

**मातृष्वसुर्ग्गृहे चोष्य दिवसान् कतिचित् सुखम् ।**
**करं सुमहदादाय ततः पूर्वां दिशं[३] ययौ ॥ १९७ ॥**

**क्रमेण सर्वान् निर्ज्जित्य पौण्ड्रकं च महाबलम् ।**
**विरथीकृत्य कर्ण्णं च करमादाय सर्वतः ॥ १९८ ॥**

**काळ्याः सत्यवत्याः ॥ १९४ ॥ अत्र विराटसमीपे । ततः विराटात् ॥ १९५–६ ॥ ततः शिशुपालात् सुमहत् करमादाय ॥ १९७–८ ॥**

---

अस्य भीमस्य बलिं प्रेम्णा यच्छन्ति । प्रह्वा यच्छन्ति । कुतः? मदाज्ञया । इतरे असुरा अपि अर्जुनेन निगृहीतेभ्य-श्चेतरे । समस्तदेवासुरविजयफलं हि पारमेष्ठ्यम् । क्रमशः जननक्रमेण प्रतीचीं नकुलः । दक्षिणां सहदेवः ॥ १९३ ॥ कृष्णेनेति न देवकीतनयेन, किन्तु सुतेन काळ्याः, कृष्णद्वैपायनेन । अभिधानाख्यानपूर्वकं साष्टाङ्गं नमनमभि-प्रणामः । सद्गुणाः सात्विका मनुष्याः । उरुसद्गुणा ऋषिगन्धर्वादयः । एते पुनर्देवांशत्वात् परमोरुसद्गुणाः ॥ १९४ ॥ अथ भीमस्य विजयविहारं प्रमाणिकया प्रस्तौति– वृकोदर इत्यादिना । मध्येमार्गं कृतप्रतिरोधान् नृपान् जयन् विराटमाससाद । पुनरज्ञातवासे विराटसदनासदनं स्मरन्निवाऽह – आससाद ह । ततः विराटात् । समुचितं करमाददे ॥ १९५–६ ॥ ततः मातृष्वसुः, शिशुपालमातुः श्रुतश्रवसः, तत्प्रेरितात् शिशुपालाच्च, अत एव इतरदेशापेक्षया सुमहद् यथा स्यात् तथा दत्तम्, करमादाय, ततः मातृष्वसुर्गृहात्, चेदिविषयाद् वा पूर्वां दिशं ययौ । अर्थागम आयः । करः प्रत्यायः । **'अर्थागमो भवेदायो भागधेयो बलिः करः'** इत्यभिधानरत्नमाला । राजग्राह्यं धनमित्येतत् । कतिचिद् दिवसा-निति कति? त्रयोदशेति गृहाण । तथाहि भारते–**'ततो भीमस्तत्र राजन्नुषित्वा त्रिदशाः क्षपाः'** [स.प.३०.१६] इति । त्र्यधिका दशक्षपा इत्यर्थः । नतु त्रिगुणिता दश क्षपा इति । तदात्वे **'मासमुषित्वा'** इत्यवक्ष्यत्, नतु कति-

---

१. 'काल्याः' २. '–सद्गुणम् ।' ३. 'ततः प्राचीं दिशम्'

**हिमवच्छिखरे देवान् जित्वा शक्रपुरोगमान् ।**
**क्रीडार्थं युद्ध्यतस्तेभ्यस्तुष्टेभ्यो [१]रत्नसञ्चयम्** ॥ १९९ ॥

**बाहुयुद्धेन शेषं च गरुडं च महाबलम् ।**
**क्रीडमानौ[२] विनिर्ज्जित्य भूषणान्याप तोषतः ।**
**ताभ्यां च दृढमाश्लिष्टः स्नेहविक्लिन्नया धिया** ॥ २०० ॥

**पोप्लूयमानः स ततोऽम्बुधौ बली जगाम बाणस्य पुरं हरं च ।**
**रणेऽजयद् वारणरूपमास्थितं क्रीडन्तमेतेन च तोषितो हरः** ॥ २०१ ॥

**युध्यतः युद्धं कुर्वाणान् देवान् ॥ १९९–२०५ ॥**

---

चिद् दिवसानिति । एतेन तस्य दिग्विजये निश्चिन्ततामनुद्वेगं चाऽह ॥ १९७–८ ॥ रत्नसञ्चयं करमादाय । क्रीडार्थं युध्यतः युध्यमानान् । प्राणनारायणयोस्तुष्ट्या इदमिति परस्मैभाषा । क्रीडार्थमेव जित्वा । **'क्रीडार्थं युधि अतः'** इति वा प्रतृण्णम् । क्रीडार्थं युधि जित्वा । अतः जितत्वादेव, अतः अनेन विजयेन तुष्टेभ्यः रत्नसञ्चयं करमादाय ॥ १९९ ॥ किमेवं विनिर्जयेनाप्रसन्नौ जातक्रोधौ च शेषगरुडौ? नेत्याह–ताभ्यां च तोषतः दृढमाश्लिष्टः । व्यासाज्ञया विज्ञायैव हि कृतं बाहुयुद्धम् । तदिदं भारते गुह्यभाषयोक्तम्–**'कौशिकीकच्छनिलयं राजानं च महौजसम् । उभौ बलभृतौ वीरावुभौ तीव्रपराक्रमौ । निर्जित्याजौ महाराज बङ्गराजमुपाद्रवत्'** [स.प.३१.२३–४] इति । देवानां राजानमिन्द्रमित्यर्थः । अनो वायू राजा यस्य तं च राजानं देवतागणम् । तदेतदाह–**'जित्वा शक्रपुरोगमान् देवान्'** इति । कीदृशं शक्रं देवतागणं वा? कौशिकीकच्छनिलयम् । हिमवति वहमानायाः कौशिक्याः कच्छे तटे व्याघ्रादिरूपेण निलीनम् । तदेतदाह–**'हिमवच्छिखरे'** इति, **'सिंहव्याघ्रादिरूपाश्च'** [२०२] इति, **'सिंहादितनवः शेषवीन्द्रेन्द्रपूर्वकाः'** [२०८] इति च । अथच **'उभौ बलभृतौ वीरौ'** शेषगरुडौ । बलभृद् बलदेवः शेष इति स्फुटम् । स्वयं बली, बलरूपं भगवन्तं बिभर्तीति च बलभृद् गरुडः । वीरः स्फुटं गरुडः । वीन् पक्षिण ईरयतीति । ईरः समीरो विशिष्ट आभ्यामिति वीरौ शेषगरुडौ च । तदेतदुक्तम्–**'शेषं च गरुडं च महाबलम्'** इति । बं बलं गच्छतीति बङ्गो वङ्गः । बं बलमणतीति बाणः । तस्यापि राजा हरः । तदेतदुक्तम् **'जगाम बाणस्य पुरं हरं च'** इति । वं बलं गच्छति, वासुदेवं वाऽवगच्छतीति वङ्गो वायुः । स राजा यस्येति च वङ्गराजो हरः । वङ्गो वनगतो गजः । तेन वङ्गराजो गजयूथपः । तद्रूपं हरं च । एतदप्युक्तम्–**'वारणरूपमास्थितम्'** इति । पूर्वमेव स्नेहेन गौरवगर्भितेन क्लिन्ना आर्द्रा धीः । सम्प्रति तस्य बाहुयुद्धकौशलनिशामनेन विशेषतः क्लिन्नया धिया ॥ २०० ॥ शत्रुवारणं वारणं रूपमास्थितः ॥ २०१ ॥

---

१. **'–सञ्चयान् ।'** २. **'क्रीडमानो–'** इति क्वचित् ।

पृष्टश्च गिरिशेनासौ विस्तरं[1] दिग्जयस्य च ।
सिंहव्याघ्रादिरूपाश्च आत्मना[2] विजिता यथा ।
गरुत्मच्छेषशक्राद्या देवाः सर्वे तदब्रवीत् ॥ २०२ ॥

निशम्य शङ्करोऽखिलं मखस्य च प्रसाधकम्[3] ।
हरिं ततो बलेः सुताद् ददौ च रत्नसञ्चयम् ॥ २०३ ॥

स बाणदैत्यतो महच्छिवेन दत्तमुत्तमम् ।
प्रगृह्य रत्नसञ्चयं स्वकं पुरं समाययौ ॥ २०४ ॥

स विप्रयादवेश्वरं द्विधास्थितं जनार्दनम् ।
पुरो निधाय तद् वसु प्रभूतमानमत् तदा ॥ २०५ ॥

सोऽभिवाद्याग्रजं[4] चैव यथावृत्तं न्यवेदयत् ।
आत्मनः कृष्णयोः सर्वं धर्म्मराजाग्रतो मुदा ॥ २०६ ॥

**आत्मनो वृत्तं सर्वं यथास्थितं न्यवेदयत् ॥ २०६ ॥**

---

**'सिंहव्याघ्रादिरूपाश्च आत्मना'** इति विश्लिष्य पाठेनाऽत्मनः विलक्षणां शक्तिमत्तामाह । **'तमेवैकं जानथ आत्मानम्'** इति यथा । **'विश्लेषार्थे च विश्लिष्टम्'** इति हि स्मरन्ति । सिंहव्याघ्रादिरूपा गरुत्मच्छेषशक्राद्या सर्वे देवाश्च यथा विजिताः, तदिति सामान्ये नपुंसकम्, तं च विजयप्रकारमब्रवीत् ॥ २०२ ॥ प्रसाधकं प्रकटं सन्निधाय साधकं च हरिं निशम्य । बलेः सुतमाज्ञाप्य ददौ दापयामास । बलेः सुतादानायितं वा स्वयं ददौ । **'शिवेन दत्तम्'** इति हि वक्ष्यति ॥ २०३ ॥ बाणदैत्यतः शिवाय दत्तम् । शिवेन भीमाय दत्तम् । महत् महान्तं रत्नसञ्चयम् । महत् यथा स्यात् तथा दत्तमिति वा ॥ २०४–५ ॥ अग्रजं च अभिवाद्यैव । आत्मनो वृत्तं यथावत् न्यवेदयत् । अथवा यथावृत्तमित्यव्ययीभाव-समासः । यानियानि वृत्तानि, यथावृत्तम् । **'यथाऽसादृश्ये'** [अ.सू.२.१.७] इति हि स्मरति पाणिनिः । व्याचख्यौ च जयादित्यः–**'यथेत्येतदव्ययमसादृश्ये वर्तमानं सुपा सह समस्यते । अव्ययीभावश्च समासो भवति । यथावृद्धं**

---

१. **'विस्तारम्'** इति क्वचित् ।
२. **'–श्च ह्यात्मना'** इति क्वचित् ।
३. **'मखप्रसाधकं हरिम् । ततो बलेः सुताद् ददौ सुदिव्यरत्नसञ्चयम् ।'**
४. **'सोऽभिवन्द्याग्रजं'**

यथा जिताः कीचकाद्या एकलव्यसहायवान् ।
यथा जितः पौण्ड्रकश्च कर्ण्णाद्याश्च तथाऽपरे ॥ २०७ ॥

यथा सिंहादितनवः शेषवीन्द्रेन्द्रपूर्वकाः ।
यथा गजतनुः शर्वस्तच्च सर्वमवर्ण्णयत् ॥ २०८ ॥

सम्भावितश्च कृष्णाभ्यां राज्ञा च [१]सुमहाबलः ।
आज्ञया व्यासदेवस्य यज्ञाङ्गानि समार्ज्जयत् ॥ २०९ ॥

ऊचे तं भगवान् व्यासो जितं सर्वं त्वयाऽरिहन् ।
जये सर्वस्य यज्ञोऽयं पूर्ण्णो भवति नान्यथा ॥ २१० ॥

विरिञ्चः सर्वजित् पूर्वं द्वितीयस्त्वमिहाभवः ।
इत्युक्त्वैनं समाश्लिष्य यज्ञाङ्गानि समादिशत् ॥ २११ ॥

तदैवान्ये[२] दिशो जित्वा समीयुस्तस्य येऽनुजाः ।
सहदेवो दक्षिणाशां जित्वा रत्नान्युपाहरत् ॥ २१२ ॥

तत्र रुग्मी[३] न युयुधे सहदेवेन वीर्यवान् ।
जितः कृष्णेन पूर्वं यः शर्वादाप धनुर्वरम् ॥ २१३ ॥

**उक्तमेव विवृणोति– यथेत्यादिना । एकलव्यसहायवान् पौण्ड्रकश्च ॥ २०७–९ ॥ आत्मनियोगाद् भीम-कृतं दिग्विजयं प्रशंसन्नेव यज्ञाङ्गसमार्जने तात्पर्यं द्योतयन् पुनरादिशदित्याह– ऊच इति ॥ २१०–१२ ॥ (तत्र) तस्मिन् काले । न युयुध इत्यत्र कारणमाह– जित इति ॥ २१३–४ ॥**

---

**ब्राह्मणानामन्त्रयस्व । येये वृद्धाः, यथावृद्धम्'** इति । तथाच, आत्मनो यानियानि वृत्तानि तत्सर्वं न्यवेदयदित्यर्थः । कृष्णयोः द्वैपायनवासुदेवयोः ॥ २०६–७ ॥ सिंहादितनवः जिताः । शर्वश्च जितः ॥ २०८ ॥ अर्जुनो महाबलः । अयं तु सुमहाबलः । अथच महाबल ईश्वर उच्यते । अयं तमपि जिगायेति सुमहाबलः । समार्जयत् सामस्त्येन सम्पादयामास ॥ २०९–१० ॥ प्रीत्या दृढमाश्लिष्य । सम्पादयितुमादिशत् ॥ २११ ॥ अन्येऽनुजाः ॥ २१२ ॥ तपसा तोषितात्

---

१. **'च स महा–'** २. **'तदैवान्या दिशो–'** । **'तदैवान्यदिशो–'** इति क्वचित् । ३. **'रुक्मी'**

तपसा तोषितात् कृष्णादन्यानेवामुनाऽखिलान् ।
विजेष्यसि यदा कृष्णविरोधस्ते तदा धनुः ॥ २१४ ॥

मामेष्यतीति तेनोक्तो न व्यरुद्ध्यत केशवे ।
स्वसुः स्नेहाच्च कृष्णस्य यज्ञकारयितृत्वतः ॥ २१५ ॥

भीमार्ज्जुनबलाच्चैव माद्रेयाय ददौ करम् ।
जिग्ये बलेनान्यनृपान् सहदेवः प्रतापवान् ॥ २१६ ॥

तथा स्मृतं[1] समागतं घटोत्कचं विभीषणे ।
समादिशद् ययौ च सोऽपि [2]सोऽददान्महाकरम् ॥ २१७ ॥

पुरा हि राघवोदितं तदस्य[3] सोऽखिलं तदा ।
विचार्य्य केशवं च तं बलं च भीमपार्थयोः ।
दिवौकसश्च पाण्डवानवेत्य सोऽददात् करम् ॥ २१८ ॥

महौघरत्नसञ्चयं स आप्य भीमसेनजः ।
ययौ च माद्रिनन्दनं स चाऽययौ स्वकं पुरम् ॥ २१९ ॥

**रुद्रवाक्यात् कृष्णविरोध एव हि त्याज्यः । सहदेवेन विरोधाकरणे किं निमित्तमित्यत आह– कृष्णस्येति ॥ २१५–७ ॥ रामानुग्रहादजेयः सन् विभीषणः (कथं) करमदादित्यत आह– पुरेति । यत् करदानं अस्य विभीषणस्य राघवोदितम् । घटोत्कचे समागते करं देहीत्यादि राघवोदितम् । (तदा) घटोत्कचागमनसमये सः तदखिलम्, अस्मरद्धि इति क्रिया(ध्याहारः) ॥ २१८–२४ ॥**

---

शर्वादाप । यदि परोपकारार्थं प्रवर्तसे तदा विजेष्यसि । यदा स्वार्थं तदा न विजेष्यसे ॥ २१३–६ ॥ सः घटोत्कचो विभीषणं प्रति ययौ च । सोऽपि विभीषणोऽपि ॥ २१७ ॥ अस्य विभीषणस्य तत् करदानं पुरा राघवोदितं हि । यदाऽहं कृष्णो भविष्यामि, तदा मद्भक्तैः पाण्डवैः क्रियमाणस्य राजसूयस्य भवता करो देय इति । तदेतदखिलं विचार्य, केशवं च तं राघवोदितं कृष्णं विचार्य अवेत्य, भीमपार्थयोर्बलं च विचार्य अवेत्य, पाण्डवांश्च दिवौकसोऽवेत्य ॥ २१८–९ ॥

---

१. **'ततः स्मृतम्'** इति कचित् । २. **'सोऽप्यसौ ददौ महा–'** ३. **'यदस्य'** इति वे.ती.सम्मतः पाठः स्यादिति भाति ।

**नकुलः पश्चिमाशायां विजिग्येऽखिलभूभृतः ।**
**करमाप च वीरोऽसौ सौहार्द्दादेव मातुलात् ।**
**आययौ च महारत्नसञ्चयेन स्वकं पुरम्** ॥ २२० ॥

**अर्ज्जुनः कपिवरोच्छ्रितध्वजं स्यन्दनं समधिरुह्य गाण्डिवी ।**
**यात एव दिशमुत्तरां यदा[1] पार्वतीयकनृपाः[2] समाययुः** ॥ २२१ ॥

**त्रैगर्त्ताः पार्वतेयाश्च सहिताः पाण्डुनन्दनम् ।**
**अभ्येत्य योधयामासुर्ज्जानन्तस्तच्चिकीर्षितम्** ॥ २२२ ॥

**तान् विजित्य युगपत् स पाण्डवः सञ्जयन् क्रमश एव तां दिशम् ।**
**प्राव्रजच्च भगदत्तमूर्जितं तेन चास्य समभून्महारणः** ॥ २२३ ॥

**सोऽभियुद्ध्य सगजो दिनाष्टकं श्रान्त आह[3] पुरुहूतनन्दनम् ।**
**ब्रूहि ते समरकारणं त्विति प्राह देहि करमित्यथार्ज्जुनः** ॥ २२४ ॥

---

मातुल आर्तायनिः शल्यः ॥ २२० ॥ कपिवरेण सन्निहितेन इतरध्वजेभ्य उन्नतध्वजम् । कपेराञ्जनेयस्य वरेण वा । कपिवरेण श्रित उन्नतो वा ध्वजो यत्र । सङ्गरकरसङ्ग्रहसम्भ्रमेणाधिरुह्य । पार्वतीयकनृपाः । हिमालयप्रान्तवासिनः । यद्यपि **'पर्वताच्च'** [अ.सू.४.२.१४३] इति छप्रत्यये पर्वतीयकनृपा इति भवति । अथापि पर्वताच्छणपि भवतीति वक्तव्यम् । तद्यथा यज्ञस्यायं यज्ञीयो मन्त्र इति प्राप्ते छणमङ्गीकृत्य याज्ञीयमन्त्र इति वेदविदो वदन्ति । तेन **'यज्ञ-पर्वताभ्यां छणपि'** इत्युपस्कर्तव्यम् । **'विजित्य चाऽहवे शूरान् पार्वतीयान् महारथान्'** [स.प.२८. १५] इति भारते । पार्वतीयका इत्यल्पार्थे कन् । अर्जुनस्याग्रतस्ते कियन्त इति । सङ्गरार्थमाययुः ॥ २२१ ॥ न केवलं छण् । **'पर्वताड् ढक्'** इत्यपि पठनीयमिति विनेयान् ग्राहयन्–**'पार्वतेयाश्च'** इति पपाठ । यद्वा नद्यादिगणे पर्वतशब्दोऽप्युपसङ्ग्राह्यः । तेन **'नद्यादिभ्यो ढक्'** [अ.सू.४.२.९७] इति पर्वतशब्दाड् ढक् प्रत्ययः । तेन त्रीणि रूपाणि सम्पद्यन्ते– पर्वतीयः, पार्वतीयः, पार्वतेय इति । वस्तुतस्त्वत्र कश्चनार्थभेदोऽप्यस्तीति भाति । प्रशंसायां छण्, पार्वतीयाः । **'पार्वतीयान् महारथान्'** इति संवादात् । कुत्सायां ढक्, पार्वतेयाः । **'दस्यून् पर्वतवासिनः'** [१६] इति संवादात् । सामान्ये छः, पर्वतीयाः । तच्चिकीर्षितम्, भ्रातू राजसूये दिग्विजयार्थमागत इति जानन्तः । ज्ञात्वाऽपि करमदित्सन्तः ॥ २२२ ॥ सञ्जयन् सामस्त्येन जयन् । त्यागाय व्रजनमपि प्रव्रजनं भवति । प्रकृष्टत्वात् । प्राप्त्यै व्रजनमपि प्रव्रजनं भवति । स्वशक्तिं प्रकटय्य करप्राप्त्यै व्रजनमिह प्रव्रजनम् । बलोर्जितम् । अत एव रणोऽपि महाननितरसाधारणः ॥ २२३ ॥ दिग्विजयार्थमागत

---

१. **'–रां तदा'** २. **'पार्वतेयकुनृपाः'** ३. **'श्रान्त एव पुरु–'** इति क्वचित् ।

सोऽप्यदात् करममुष्य वासवो मद्गुरुस्तव पितेति सादरम् ।
नैव जेतुमिह शक्ष्यसि त्वमित्यावदद्धरिवरास्त्रतेजसा ॥ २२५ ॥

स्नेहपूर्वं प्रदत्ते तु करे नैवाऽह चोत्तरम् ।
अर्जुनो व्यर्थकलहमनिच्छन् स्नेहयन्त्रितः ॥ २२६ ॥

पार्थो जित्वाऽष्टवर्षाणि षड् द्वीपानपरानपि[१] ।
अजयच्चतुर्दिशमपि सर्वशः शस्त्रतेजसा[२] ॥ २२७ ॥

पाताळसप्तकं[३] गत्वा जित्वा दैतेयदानवान् ।
बलेश्च विष्णुवचनात् करं जग्राह सामतः ॥ २२८ ॥

जित्वा च वासुकिं भूरि रत्नमादाय सत्वरः ।
आजगाम पुरं स्वीयं वीरो वत्सरमात्रतः ॥ २२९ ॥

**(हरिवरा)स्त्रतेजसा श्रीवराहदत्तवैष्णवास्त्रतेजसेति भावः ॥ २२५–६ ॥ अष्टवर्षाणि जम्बूद्वीपगताष्टखण्डान् । (अपरान्) जम्बूद्वीपेतरान् षट् द्वीपानपि । सर्वशोऽपि चतुर्दिशं चतसृभिर्दिग्भिर्युतं यथा भवति तथा अजयत् । जम्बूद्वीपगताष्टवर्षापेक्षया प्राक् सप्तद्वीपांश्च प्रयाहीत्युक्तम् ॥ २२७ ॥ विष्णुवचनात् बलिद्वारस्थविष्णुवचनात् ॥ २२८–९ ॥**

इति सामान्यतः कारणं जानन्नपि, धर्मराजस्य राजसूयकरणमजानन्, अर्जुनपौरुषेण प्रीतः प्रीणयन्निवाऽह– समरकारणं तु विशिष्टं समरकारणं ब्रूहीति । अथ एवं पृष्टः अर्जुनः प्राह, सादरमाह– करं देहीति ॥ २२४ ॥ तव पिता वासवः मद्गुरुः । अत एव पूर्वश्लोके 'पुरुहूतनन्दनम्' इत्याह । पुरुहूतनन्दनं ज्ञात्वाऽऽहेत्यर्थः । हरेर्वरास्त्रस्य वैष्णवास्त्रस्य तेजसा रक्षितं मां त्वं जेतुं नैव शक्ष्यसि इति आदरपूर्वमवदत् ॥ २२५–६ ॥ अष्टवर्षाणि । नववर्षो हि जम्बूद्वीपः । तत्राष्टवर्षाणि, ऋते भारतवर्षात्– इळावृतम्, रम्यकम्, हिरण्मयम्, कुरुवर्षम्, हरिवर्षम्, किम्पुरुषम्, केतुमालम्, भद्राश्वं च । सप्तद्वीपा च पृथिवी । तत्र जितो जम्बूद्वीपः । अथापरानपि षड् द्वीपान् जित्वा प्लक्ष-शाल्मल-कुश-क्रौञ्च-शाक-पुष्कराख्यान् । चतसृणामपि दिशां समहारश्चतुर्दिशम् । चतुर्ष्वपि दिक्षु, सर्वशः सर्वानपि ॥ २२७ ॥ ऊर्ध्वलोकान् भीमो जिगाय । अर्जुनस्त्वधोलोकानित्याह–पाताळसप्तकमिति । अतळं, वितळं, सुतळं, तळातळं, महातळं, रसातळं पाताळमित्यधोलोकसप्तकमपीत्यर्थः । बलेश्च करं जग्राह तृतीये सुतळे । **'ततोऽधस्तात् सुतळ उरुश्रवाः पुण्य-श्लोको विरोचनात्मजो बलिः'** [५.२३.२०] इति भागवते ॥ २२८ ॥ जित्वा च वासुकिम्, सप्तमे पाताळे । **'ततोऽधस्तात्**

१. **'द्वीपानितरानपि'** इति वे.ती.सम्मतः पाठः स्यात् । २. **'सर्वशस्त्रास्त्रतेजसा'** ३. **'पातालसप्तकम्'**

सुवर्ण्णरत्नगिरयश्चतुर्भिस्तैः समार्ज्जिताः ।
चत्वारो योजनानां हि दश त्रिंशच्छतं तथा ॥ २३० ॥

चतुःशतं च क्रमश उच्छ्रिता दिग्जयार्ज्जिताः ।
प्रतीच्याद्यपसव्येन क्रमाद् दिग्भ्यः समार्ज्जिताः ॥ २३१ ॥

विश्वकर्म्मकृतत्वात्तु पुरस्याल्पेऽपि च स्थले ।
अन्तर्ग्गतास्ते गिरयस्तदद्भुतमिवाभवत् ॥ २३२ ॥

ततो यज्ञः प्रववृते कृष्णद्वैपायनेरितः ।
ऋत्विजो मुनयोऽत्राऽसन् सर्वविद्यासु निष्ठिताः ॥ २३३ ॥

**प्रतीच्याद्यपसव्येन, पश्चिमां दिशमारभ्य अप्रादक्षिण्येन, क्रमात् तैश्चतुर्भिः नकुलसहदेवभीमार्जुनैः चत्वारः चतुःसङ्ख्याविशिष्टाः सुवर्णरत्नगिरयः समार्जिताः सम्पादिताः आसन् । दिग्जयार्जिताः ते क्रमशः उक्त-क्रमात् योजनानां दश त्रिंशत् तथा शतं चतुःशतं उच्छ्रिताः[१] इति योजना ॥ २३०–३ ॥**

---

**पाताळे नागलोकपतयो वासुकिप्रमुखाः शङ्ख-गुळिक-महाशङ्ख-श्वेत-धनञ्जय-धृतराष्ट्र-शङ्खचूड-कम्बळ-अश्वतर-देवदत्तादयो महाभोगिनो महामर्षा निवसन्ति'** [५.२३.३१] इति च ॥ २२९ ॥ चतुर्भिश्चत्वारः सुवर्णरत्नगिरयः समार्जिताः । तत्र प्रतीच्यां नकुलेनार्जिताः दशयोजनोच्छ्रिताः । दक्षिणस्यां दिशि सहदेवेन त्रिंशद्योजनोच्छ्रिताः । पूर्वस्यां दिशि भीमार्जिताः शतयोजनोच्छ्रिताः । उत्तरस्यामर्जुनार्जिताश्चतुःशतयोजनोच्छ्रिताः । तदेतदाह–प्रतीच्याद्यपसव्येन प्रतीचीमारभ्याप्रादक्षिण्येन चतुसृभ्यः दिग्भ्यः समार्जिताः समं तत्तद्देशराजानुगुणं सामस्त्येन सङ्गृहीताः । अर्ज प्रति-यत्ने । चतुर्भिस्तैः समार्जिताः स्वसामर्थ्येन सम्पादिताः । अर्ज अर्जने । अत एव दिग्जयार्जिताः सुवर्णानां रत्नानां च गिरयः । यद्यपि अर्जुनेनार्जितमधिकम् । अथाप्यर्जुनाशक्यशत्रुदमनात् भीमो महत् फलमवाप । भीमशक्यशत्रुदमनाद-र्जुनोऽल्पं फलम् । अपि च अर्जुने यमयोश्च वायोरावेशात् तद्विजयफलेऽपि महद् भीममेव सञ्चक्राम । अथच नकुल-सहदेवौ धरित्रीमात्रजयिनौ । अर्जुनो भौमान् सप्तपाताळवासिनश्च विजिग्ये । भीमस्तु भूमावप्यर्जुनेनाजय्यान् नृपान् जिगाय । ततश्चोर्ध्वलोकगतान् सर्वानपि सुपर्वणः । तदपि नोर्ध्वलोकगमनेन । इहैव हिमवति समागतान् सिंहव्याघ्रादि-रूपेण स्वमूलरूपमपिधाय । दूरवचनं योजनपदमन्यार्थम्, औन्नत्यवचनमन्यार्थमित्युक्तम् ॥ २३०–१ ॥ अद्भुतमिव । महतां देवानां नाद्भुतम् ॥ २३२ ॥ ऋत्विज इति । **'स्वयं ब्रह्मत्वमकरोत् तस्य सत्यवतीसुतः । धनञ्जयानामृषभः सुसामा सामगोऽभवत् । याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्युसत्तमः । पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत्'**

---

१. लिखितकोशे **'ऊर्जिताः'** इति पठ्यते । तेन 'क्रमश ऊर्जिताः' इत्येव टीकाभिमतः पाठः स्यादपि ।

**द्वैपायनोक्तविधिना दीक्षयाश्चक्रिरे[1] नृपम् ।**
**ज्येष्ठत्वाद् याजमानं तु[2] प्रणिधाय युधिष्ठिरे ॥ २३४ ॥**

**भीमार्ज्जुनादयः सर्वे सह तेन समासिरे ।**
**ब्रह्माणीपदयोग्यत्वात् कृष्णैका यज्ञपत्न्यभूत् ॥ २३५ ॥**

**पदायोग्यतया नान्याः पत्न्यस्तेषां सहाऽसिरे ।**
**आज्ञयैव जगद्धातुर्व्यासस्यानन्ततेजसः ॥ २३६ ॥**

**चक्रिरे, ऋत्विज इति शेषः । याजमान्यं यजमानत्वम् ॥ २३४–४१ ॥**

---

[स.प.३६.३४–५] इति भारते । **'व्यासं धौम्यं वसिष्ठं च नारदं च महामुनिम् । सुमन्तुं जैमिनिं पैलं वैशम्पायनमेव च । याज्ञवल्क्यं च कपिलं कपालं कौशिकं तथा । सर्वांश्च ऋत्विक्प्रवरान् पूजयामास सत्कृतान्'** [स.प.७२.६] इति च ॥ २३३ ॥ यजमानस्य भावः कर्म वा याजमानम् । **'हायनान्तयुवादिभ्योऽण्'** [अ.सू.५.१.१३०] इति हि
२ पाणिनिः । **'युवादिभ्यश्चाण् प्रत्ययो भवति भावकर्मणोरर्थयोः'** इति जयादित्यः । यजमानशब्दश्च युवादिगणपठितः– **'युवन् । स्थविर । होतृ । यजमान–'** इति । यौवनम् । स्थाविरम् । हौत्रम् । याजमानम् । भीमापेक्षया हीनाधिकारित्वेऽपीति विशेषं तुनाऽऽह–याजमानं त्विति । तर्हि किमिति तमेव यजमानं कृत्वा भीमार्जुनादयस्तेन सहाऽसिरे? कथं वा तस्मिन्नेव याजमानं निधाय तमेव दीक्षयाश्चक्रिरे? आह– ज्येष्ठत्वात् । अनुज्येष्ठं हि लोके मानयन्ति । वयसा वृद्धो ह्यत्र ज्येष्ठ उच्यते । **'वृद्धस्य च'** [अ.सू.५.३.६२] इति वृद्धशब्दस्य ज्यादेशः । पञ्चापि वृद्धाः । अयमेषामतिशयेन वृद्ध इति ज्येष्ठः । वृद्धतमः । अत ऋषयस्तस्मिन् याजमानं प्रणिदधुः । तमेव दीक्षयाश्चक्रिरे । अन्ये भ्रातरश्च प्रधानं याजमानं तस्मिन्नेव प्रणिधाय स्वयं तेन सहाऽसिरे, अप्रधाना यजमानाः सन्तः । प्रणिधाय लोकव्यवहारानुगुणं तस्मिन्नेव याजमानं प्रकटं निधाय । तेन सह याजमानेन सङ्गता आसिरे । यज्ञे यजमानेन सहाधिकृता पत्नी । ननु काळी ब्रह्माणीपदयोग्या? सत्यं ब्रह्माणीपदयोग्या । अथापि न यज्ञपत्नी बभूव । सत्यं न बभूव । तर्हि ब्रह्माणीपदयोग्यत्वादिति गतो हेतुः । न गतः । शृणु कारणम् । प्रधानयजमानपत्नीत्वं बहिरङ्गं कारणम् । ब्रह्माणीपदयोग्यत्वमन्तरङ्गं कारणम् । तदुभयमप्यस्ति कृष्णायाम्, न काळ्यामिति कृष्णैका यज्ञपत्न्यभूत् । अर्जुनादयोऽपि ह्यवान्तरयजमानाः । तत्पत्नीत्वमपि यज्ञपत्नीत्व-समानाधिकरणमिहाभिमतम् । तेन कृष्णैका यज्ञपत्न्यभूत् । अपिच कृष्णेति काळीति चैका हि । तेन कृष्णयोपस्थितया काळी च फलभागिनी भवति । एतत्सूचनायैव काळीपदसमानार्थं कृष्णेति नाम पपाठ । न द्रौपदीति ॥ २३४–५ ॥ अनुजभार्यात्वेन यज्ञपत्नीपदायोग्यतया काळी, ब्रह्माणीपदायोग्यतया तेषां पञ्चानामप्यन्याः पत्न्यः न कृष्णया सहाऽसिरे,

---

१. **'दीक्षितं चक्रिरे'** । वे.ती. पाठोऽपि तथा स्यात् ।

२. **'याजमान्यं तु'** । वे.ती.पाठोऽपि तथेति भाति । **'यजमानं तु प्रणिधाय युधिष्ठिरम्'** इति क्वचित् ।

स्थलमप्यत्र सर्वं हि रत्नहेममयं त्वभूत् ।
किमु पात्रादिकं सर्वं शिबिराणि च सर्वशः ॥ २३७ ॥

आहूतं दिग्जये पार्थैस्तदा लोकद्विसप्तकम् ।
सर्वमत्राऽगमद् ब्रह्मशर्वशक्रादिपूर्वकम् ॥ २३८ ॥

भीष्मो द्रोणश्च विदुरो धृतराष्ट्रः सहात्मजः ।
सस्त्रीका आययुस्तत्र[1] बाह्लीकश्च सहात्मजः ॥ २३९ ॥

तथैव यादवाः सर्वे बलभद्रपुरोगमाः ।
रुग्मिणी[2]सत्यभामाद्या महिष्यः केशवस्य च ॥ २४० ॥

तत्र सर्वजगदेकसङ्गमे तत्वनिर्णयकथा बभूविरे ।
प्राश्निकोऽत्र परिपूर्णचिद्घनो[3] व्यास एव भगवान् बभूव ह ॥ २४१ ॥

---

भीमादीनां धर्मजेन सहाऽसनेऽपि । आज्ञयेत्युभयान्वयि– व्यासस्याऽज्ञयैव न सहाऽसिरे । न स्वाच्छन्द्येन । व्यासस्याऽज्ञयैव सर्वं स्थलमपि, न पात्रमात्रम्, रत्नहेममयमभूत् । अत्र अस्मिन् यज्ञे । त्विति अभूतपूर्वमेतदित्याह । पात्रादिकमित्यादिना सर्वं स्वर्णत्वयोग्यं साधनजातम् । सर्वशः सर्वाणि । सर्वत्र च धर्मराजगृहपरिसरे शिबिराणि सैन्यनिवेशाः । अतिथिसत्काराय कल्पितानि वा कृतकानि निकेतनानि । शवतीति शिबिरमिति कातन्त्राः । शव गतौ, किरः प्रत्ययः । **'संवृतिस्थानविशेषः'** इति दुर्गसिंहः कातन्त्रोणादिसूत्रवृत्तौ [१.२४] । शेरतेऽत्रेति शिबिरम् । शीङ् स्वप्ने । किरच् प्रत्यय इति भोजः [स.कं.२.३.४७] । **'शिबिरं राजसन्निवेशः'** इति दण्डनाथनारायणः । शं वियन्तीति शिबयो रमन्तेऽत्रेति तत्ववादिनः ॥ २३६–८ ॥ सस्त्रीका भीष्मं विहाय । स्त्रिय इति भार्याः पुत्रभार्याश्च । बाह्लीकः सहात्मजश्च सस्त्रीकश्च । आत्मजः सोमदत्तः । चकारेण तदात्मजा भूरिर्भूरिश्रवाः शलश्च ॥२३९॥ केशवस्य च । चकारेण बलभद्रादीनां महिष्यश्च । यद्यपि नृपासने कृताभिषेका महिष्युच्यते । न कृष्णो नापि बलदेवो नृपासने न्यषीदताम् । तेन प्रधानपत्नीत्वमत्र शब्दार्थः । तेनाष्टौ कृष्णमहिष्यः । भर्त्रा सह मह्यन्त इति महिष्यः । भोगिनीव्यक्तिरिक्ता नृपयोषितः ॥ २४० ॥ सर्वजगतामेकत्र सङ्गमः । मुख्यश्चायं सङ्गमः । सर्वजगतामेकः सङ्गमो यत्र, तत्र मख इति वा । तत्ववादिनां महानयं स्वार्थ इति बभूविर इत्याह । बभूव हेति व्यासस्य भगवतः प्राश्निकत्वं स्मरन्नास्वदते ॥ २४१ ॥

---

१. **'आययुः सर्वे'** इति क्वचित् । २. **'रुक्मिणी–'** ३. **'–पूर्णसद्गुणो–'** इति क्वचित् ।

तत्वनिर्ण्णयकथासु निर्ण्णयो वासुदेवगुणविस्तरोऽभवत् ।
नास्ति तत्सदृश उत्तमः कुतः पार एष न ततोऽन्य इत्यपि ॥ २४२ ॥

बादरायणभृगूत्थरामयोः शृण्वतोः परमनिर्ण्णये कृते ।
मोदमानजनतासमागमेऽपृच्छदत्र नृपतिर्य्यतव्रतम् ॥ २४३ ॥

जानमानोऽपि नृपतिः सर्वपूज्यतमं[1] हरिम् ।
संशयं भूभृतां भेत्तुं भीष्मं पप्रच्छ धर्म्मवित् ॥ २४४ ॥

नास्ति नारायणसममिति वादेन निर्ण्णये ।
कृते ब्रह्मादिभिरपि कृष्णं मर्त्यं हि मेनिरे ॥ २४५ ॥

नृपास्तस्मादयं कृष्णो नारायण इति स्म ह ।
सम्यग् ज्ञापयितुं धर्म्मसूनुर्भीष्ममपृच्छत ॥ २४६ ॥

**तत्वनिर्णयकथासु, 'तत्सदृशः नास्ति, उत्तमः कुतः? एषः पारः प्रकृतिमतीतः' (इति) वासुदेवगुणविस्तरोऽभवत् । एवं परतत्वनिर्णयोऽभवत् । ततः वासुदेवात् अन्यः (पारः) नेति निर्णयोऽभवत् । एवं परतत्वनिर्णयोऽप्यभवदिति भावः ॥ २४२ ॥ प्राश्निकत्वेनाधिकृतयोः बादरायणभृगूत्थरामयोः । (परमनिर्णये) परावरतत्वविषयकसकलनिर्णये ॥ २४३ ॥ जानन्नपि नृपतिः भीष्ममेव किमर्थमपृच्छदित्यत आह– जानमान इति । संशयं पूज्यत्वे, हरिः पूज्यतमो नवेति ॥ २४४ ॥ ब्रह्मादिभिर्नारायणस्य सर्वोत्तमत्वस्य निर्णीतत्वात् कृष्णस्यैव नारायणत्वात् कुतो भूभृतां संशय इत्यत आह– नास्तीति । सत्यम् । ब्रह्मादिभिर्नारायणसमो नास्तीति निर्णयः कृतः । इति एवं निर्णये कृतेऽपि नृपाः, कृष्णस्य नारायणत्वमवजानन्त इति शेषः, मर्त्यं मेनिरे हि यस्मात् तस्मात् ॥ २४५–६ ॥**

---

कथासु प्रवर्तमानासु । अथच कथानां कथाभिर्वा सुनिर्णयः श्रुतियुक्त्यनुभवमूलो निर्णयः । कथा चात्र वादरूपैव । तत्वनिर्णयार्थत्वात् । न जल्पो वितण्डा वा । इत्यपि निर्णयोऽभवत् । पारः परा काष्ठा ॥ २४२ ॥ भृगुवंशोत्थः रामः । यतव्रतं भीष्मम् ॥ २४३ ॥ नृपतिरपृच्छदिति स्ववचनमेव विवृण्वन्नाह– जानमानोऽपि ॥ २४४–५ ॥ कृष्णं नारायणावतारमजानन्तो नृपाः । स्मेति सर्वशास्त्रप्रसिद्धतामाह । अथापि कृष्णं मर्त्यं मेनिर इति विस्मयते हेति । सोऽयं धर्मसूनोः स्वार्थ इत्याह– अपृच्छतेति ॥ २४६ ॥

---

१. 'नृपतिः कृष्णं पूज्यतमम्'

ब्रह्मादयः सुरा यस्माद् दृश्यन्ते मर्त्यवन्नृभिः ।
नचैवातितराभ्यासो नृणामस्ति मुनिष्वपि ॥ २४७ ॥

सर्वशास्त्रविदं भीष्मं जानन्त्येते नृपा अपि ।
तस्माद् भीष्ममपृच्छत् स कुलवृद्धत्वतस्तथा ॥ २४८ ॥

पितामहाग्र्यपूजार्हः[१] कोऽत्र लोकसमागमे ।
ब्रह्मशर्वादयश्चात्र सन्ति राजान एव च ॥ २४९ ॥

इति पृष्टोऽब्रवीत् भीष्मः कृष्णं पूज्यतमं प्रभुम् ।
यद्यप्येकस्त्रिधा विष्णुर्वसिष्ठभृगुवृष्णिषु ॥ २५० ॥

प्रादुर्भूतस्तथाऽप्येते नृपा हि व्यासरामयोः । २
विप्रत्वान्न विरुद्ध्यन्ते तत एव च युक्तताम् ॥ २५१ ॥

**तर्हि तत्रस्था ब्रह्मादयः किमिति न पृष्टा इत्यत आह–(ब्रह्मादय इति ।) ब्रह्मादयः नृभिः मर्त्यवद् दृश्यन्ते यस्मात् तस्मात् नृणां विश्वासासम्भवात् तान्नापृच्छदिति भावः । नृभिरभ्यस्ता मुनयः किमिति न पृष्टा इत्यत आह– नचेति । अतस्तानपि नापृच्छदित्याशयः ॥ २४७ ॥ तर्हि भीष्मोक्तौ कथं विश्वास इत्यत आह– सर्वेति । भीष्मं प्रष्टुं निमित्तान्तरमप्याह– कुलेति ॥ २४८ ॥ भीष्ममपृच्छदित्युक्तम् । किमपृच्छदित्यत आह– पितामहेत्यादिना । अग्र्यपूजार्हः क इति प्रश्ने बीजं सूचयति– ब्रह्मेत्यादिना । राजानश्च सन्त्येव ॥ २४९–५० ॥ व्यासरामयोः विप्रत्वात् ताभ्यामग्र्यपूजायां दत्तायामेते नृपा न विरुद्ध्यन्ते । तत एव विप्रत्वादेव युक्ततां मन्यन्ते च । तत्र तयोः तादृशः (यादृशः) कृष्णे । अविवादेऽस्य (कृष्णस्य) प्रसिद्धिर्न भविता । कृष्णाय दत्ते राजानः अञ्जसा विवादं कुर्युः । विवादेन च वासुदेवस्य विस्तृता कीर्तिः स्यात् । तस्मात् कृष्णाय दातव्यमग्र्यार्हणमिति भीष्मेण चिन्तितम् ॥ २५१–६० ॥**

---

अतितराभ्यास इति । अतिराधिक्ये वर्तते । ततस्तरप् । अतितरामभ्यास इत्यर्थः ॥ २४७–८ ॥ लोकसमागमे ज्ञानिगणसमागमे ॥ २४९ ॥ वसिष्ठभृगुवृष्णिषु । गोत्रवचनमिदम् । वसिष्ठवंशे भृगुवंशे वृष्णिवंशे ॥ २५० ॥ व्यासरामयोरग्र्यपूजायां कृतायाम्, कृतां वाऽग्र्यपूजां न विरुद्ध्यन्ते ॥ २५१ ॥

---

१. '–महाग्र्यपूजार्हः'

मन्यन्ते न विरोधश्च तेषां तत्र हि तादृशः ।
अविवादे प्रसिद्धिश्च नैवास्य भविता क्वचित् ॥ २५२ ॥

तस्मात् कृष्णाय दातव्यमिति भीष्मेण चिन्तितम् ।
कृष्णाय दत्ते राजानो विवादं कुर्य्युरञ्जसा ॥ २५३ ॥

विवादेन च कीर्त्तिः स्याद् वासुदेवस्य विस्तृता ।
ततः कृष्णायाग्रपूजा दत्ता पार्त्थैर्ज्जगत्पुरः ॥ २५४ ॥

व्यासभार्ग्गवयोः साक्षात् तदैक्यात् तदनन्तरम् ।
अग्र्यां पूजां[1] ददुश्चान्यान् यथायोग्यमपूजयन् ॥ २५५ ॥

अग्र्योपहारमुप[2]यापित एव कृष्णे कोपादनिन्ददमुमाशु च चेदिराजः ।
श्रुत्वैव तत् पवनजोऽभिययौ नृपं तं हन्तुं जगद्गुरुविनिन्दकमृद्धमन्युः ॥ २५६ ॥

दूरेऽपि केशवविनिन्दनकारिजिह्वाँमुच्छेत्स्य इत्युरुतराऽस्य सदा प्रतिज्ञा ।
भीमस्य तं तु जगृहे सरिदात्मजोऽथ सम्प्रोच्य केशववचो निजयोर्वधाय ॥ २५७ ॥

---

तत्र व्यासरामयोः ॥ २५२–३ ॥ विस्तृता कीर्तिः स्यादिति च चिन्तितम् । चिन्तयित्वा च कृष्णमग्रपूजार्हमब्रवीत् । ततः भीष्मवचनात् ॥ २५४ ॥ व्यासभार्गवयोः कृष्णैक्यं नाम नेन्द्रार्जुनयोरिव स्वरूपैक्यमात्रम् । किन्तु गुणक्रिया-दिभिः सर्वात्मनेति साक्षात् तदैक्यादित्याह । कृष्णस्याग्रपूजानन्तरं व्यासभार्गवयोर्ददुः । तदनन्तरमन्यांश्चानुज्येष्ठम-पूजयन् ॥ २५५ ॥ सर्वोपरि प्रथमतया यापिते सति । एवकारेण निन्दायाः सापद्यमाह । तदेव स्फुटं चाऽह–आज्ञव-निन्दत् । अमुं कृष्णं चानिन्दत् । पूजकान् पाण्डवांश्च, सूचकं भीष्मं च ॥२५६॥ अथ पवनजोत्थानसमनन्तरमेव । जगृहे हस्ते गृहीत्वा वारयामास । सम्प्रोच्य समाधातुं वस्तुस्थितिप्रकाशकं वचनमुक्त्वा । निजयोः जयविजययोः शिशुपालदन्तवक्रयोश्च । निजयोर्वधाय स्वकर्तृकाय हननाय । तौ हन्तुमिति यावत् । सम्प्रोच्य समाधातुं प्रभवत् प्रभावि प्रशस्तं च वचनमुक्त्वा ॥ २५७ ॥

---

१. **‘अग्र्यपूजाम्’** इति क्वचित् ।
२. **‘अग्र्योपहार उप–’**

मयैव वद्ध्याविति तावाह यत् केशवः पुरा ।
तच्छ्रुत्वा भीमसेनोऽपि स्थितो भीष्मकरग्रहात् ॥ २५८ ॥

जानन्नपि हरेरिष्टं स्वकर्त्तव्यतयोत्थितः ।
भीम एतावदुचितमिति मत्वा स्थितः पुनः ॥ २५९ ॥

देवसङ्घभविनां महानभूदीक्ष्य[1] तोष इह केशवेऽधिकाम् ।
अर्चनां य इह मानुषो जनो मद्ध्य एव स तु संस्थितोऽभवत् ॥ २६० ॥

आसुरा इह सुयोधनादयस्तत्र ते विमनसो बभूविरे ।
दुर्वचोभिरधिकं च चेदिपः कृष्णमार्च्छदुरुसद्गुणार्ण्णवम् ॥ २६१ ॥

समाह्वयच्च केशवं युधे तमाशु केशवः ।
निवार्य्य तस्य सायकाञ्जघान चारिणा प्रभुः ॥ २६२ ॥

निकृत्त्यमानकन्धरः स भक्तिमानभूद्धरौ ।
तमाश्रितश्च योऽसुरो महातमः[2] प्रपेदिवान् ॥ २६३ ॥

**दुर्वचोभिरितीत्थम्भूतलक्षणे तृतीया । आर्छत् प्राप । दुर्वचांसि वदन् प्रापेति भावः ॥ २६१–३ ॥**

---

भीष्मकरग्रहं मानयित्वा । स्थितः शिशुपालनिग्रहान्निवृत्तः ॥ २५८–९ ॥ मानुषेषु यःकोऽपि पूज्यतां साधु मेने, किमस्माकमित्युदासीनाः केचिन्मनुष्याः । केचित् प्रियपाण्डवा ईषत् तुतुषुः । केचित् प्रियधार्तराष्ट्रा ईषद् विषेदुः । भीष्मेणोक्तमेव साधु भवितुमर्हति । के वयं विम्रष्टुं महदाचरणमिति केचित् तटस्था बभूवुः । तदेतत् सर्वं मनसि कृत्वाऽऽह– मानुषो जनः मध्य एव संस्थितोऽभवत् । निर्णयमजानन् संशय एव स्थितोऽभवदित्यर्थः ॥ २६० ॥ इह यज्ञे सङ्गताः । तत्र कृष्णस्याग्रपूजाविषये । विमनसः व्यथितमनसः विपरीतमनसश्च । यदा सन्तस्तुतुषुरेत ईर्ष्याश्चक्रुः, विव्यथिरे च । यदा त आनर्चुरेते दिद्विषुः, अन्तःसन्तेपिरे च । तेषामात्मगतं तमःसाधनमेतदित्याह– बभूविर इति । सत्त्वादयोऽपि गुणा उच्यन्त इति सद्गुणा इत्याह । दोषासमानाधिकरणा वा गुणाः सद्गुणाः । निरवधिकत्वा-दुरवः । गुणार्णवं सर्वाधिकं च कृष्णं दोषवचोभिरधिकमार्च्छत् ययौ । ऋ गतिप्रापणयोः । विनिनिन्द विरुरोध चेति निर्गळितम् । यद्यप्यृच्छधातुः पठ्यते धातुपारायणिकैः–**'ऋच्छ इन्द्रियप्रळयमूर्तिभावयोः'** इति । तथाऽपि तस्या-कर्मकत्वादर्थानुगुण्याभावाच्च नात्रोपयुक्तः ॥ २६१ ॥ अवज्ञातुमशक्यमाह्वानं समाह्वानम् । स केशवं युधे समाह्वयत् ।

---

१. **'–नभूद् वीक्ष्य'**

२. **'महत् तमः'** इति क्वचित् ।

जयः प्रविश्य केशवं पुनश्च पार्षदोऽभवत् ।
असौ च पाण्डवक्रतुः[1] प्रवर्त्तितो यथोदितः ॥ २६४ ॥

सुवर्ण्णरत्नभारकान् बहून् नृपा उपानयन् ।
उपायनं[2] सुयोधनं नृपोऽदिशद् ग्रहेऽस्य च ॥ २६५ ॥

अभोजयंस्तथा द्विजान् यथेष्टभक्ष्यभोज्यकैः ।
सुवर्ण्णरत्नभारकान् बहूंश्च दक्षिणा ददुः[3] ॥ २६६ ॥

यदिष्टमास यस्य च[4] प्रदत्तमेव पाण्डवैः ।
समस्तमत्र सर्वशोऽथ सस्नुरुद्धृता[5] मुदा ॥ २६७ ॥

नदत्सुरोरुदुन्दुभि प्रगीतदेवगायकाः ।
प्रनृत्तदिव्ययोषितः सुरापगां व्यगाहयन् ॥ २६८ ॥

**पार्षदः द्वारपालः ॥ २६४ ॥ अस्य उपायनस्य ग्रहे ग्रहणे ॥ २६५ ॥ बहून् सुवर्ण(रत्न)भारकान् ॥२६६॥ तत् समस्तम् ॥ २६७ ॥ नदन्तः सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः । प्रकृष्टं गीतं येषां ते प्रगीताः । प्रगीताः देवगायका येषां ते प्रगीतदेवगायकाः । नदत्सुरोरुदुन्दुभयश्च ते प्रगीतदेवगायकाश्च**

---

आहूय युयुधे च । अथ केशवोऽपि । युधि तस्य सायकानरिणैव निवार्य तं जघान च ॥२६२–३॥ यथा व्यासेनोदितः, यथा शास्त्रेषूदितः, तथा ॥२६४॥ भारकान् वीवधान् । **‘भारः स्याद् वीवधे विष्णौ पलानां द्विसहस्रके’** इति मेदिनी । उभयतोबद्धशिक्ये स्कन्धधृते दारुणि यावन्तं भारमध्वनीना वहेयुः स भारो भारक उच्यते । सुवर्णरत्नानां भारकान् । भारधारको वीवधोऽपि भारक उच्यते । ‘ಕಾವಡಿ’ इति भाषायाम् । सुवर्णरत्नभरितान् भारकानिति वा । उपायनमुपानयन् उपाहरन्नित्यर्थः । अस्योपायनस्य ग्रहे परिग्रहे स्वीकारे सुयोधनं नियोजयामास ॥ २६५ ॥ पूर्वमनास्वादितानि भक्ष्य-भोज्यकानि । **‘अज्ञाते’** [अ.सू.५.३.७३] इति कः । उपायनत्वेनाऽगतान् बहूंश्च सुवर्णरत्नभारकान् द्विजेभ्यो दक्षिणा ददुः ॥ २६६ ॥ प्रकामं दत्तमेव । सर्वशः सर्वप्रकारेण । अथ यागावसाने मङ्गलस्नानं चक्रुः । उद्धृताः पूर्णाः ॥२६७॥ उरुनादा दुन्दुभय उरुदुन्दुभयः । ‘दुन्दुम्’ इति ध्वनन्तो भान्ति । येषां नादो नाकाद् भूलोकमेति त उरवः । नदत्सुरोरु-दुन्दुभीति क्रियाविशेषणम् । नदत्सु सुरोरुदुन्दुभिषु सस्नुरिति वा, सुरापगां व्यगाहयन्निति वाऽन्वयः । प्रगीतेति प्रनृत्तेति

---

१. **‘पाण्डवैः क्रतुः’** २. **‘उपायने सु–’** ३. **‘दक्षिणां ददुः’** इति क्वचित् ।
४. **‘यस्य तत् प्रदत्त–’** इति वे.ती. पाठ इति भाति । ५. **‘सस्नुरुद्धता मुदा ।’**

**समस्तराजसंयुता विगाह्य जाह्नवीजले ।**
**पुरं ययुः पुनश्च ते सुसद्म[१] चागमन् सुराः ॥ २६९ ॥**

**गतेषु सर्वराजसु स्वकां पुरं[२] स्वकेषु च ।**
**सभीष्मकेषु सर्वशः सहाम्बिकेयकेषु च ॥ २७० ॥**

**विचित्ररत्ननिर्म्मिते[३] रविप्रभे सभातळे[४] ।**
**सकेशवो वरासने विवेश धर्म्मनन्दनः ॥ २७१ ॥**

**तथैव [५]रुग्मिणीमुखाः परिग्रहा रमेशितुः ।**
**तथैव भीमफल्गुनावुपाविशन् हरेरुप ॥ २७२ ॥**

**नदत्सरोरुदुन्दुभिप्रगीतदेवगायकाः ॥ २६८–७१ ॥ तथैव रुग्मिणीमुखाः रमेशितुः परिग्रहाः भार्याः, तथा भीमफल्गुनौ हरेरुपैव उपाविशन् ॥ २७२ ॥**

---

च कर्तरि क्तः । **'आदिकर्मणि क्तः कर्तरि च'** [अ.सू.३.४.७१] इति हि स्मरन्ति । **'आदिभूतः क्रियाक्षण आदिकर्म, तस्मिन्नादिकर्मणि भूतत्वेन विवक्षिते यः क्तो विहितस्तस्यायमर्थनिर्देशः'** इति काशिका । प्रगीताः प्रारब्धगीताः देवगायका गन्धर्वा येषां ते पाण्डवाः । गन्धर्वैर्गीयमाना इत्यर्थः । एवं प्रनृत्ताः प्रारब्धनृत्या दिव्ययोषितः अप्सरसो येषाम् । गन्धर्वगीतमभिनीय प्रदर्शयन्तीषु स्वर्वेश्यास्वित्यर्थः । **'स राजसूयः शुशुभे धर्मराजस्य धीमतः । गन्धर्वगणसङ्कीर्णः शोभितोऽप्सरसां गणैः'** [स.प.७१.३७] इति च भारते । सस्नुरित्युक्तम् । कुत्र सस्नुः? भारतेऽपि **'ततश्चावभृथस्नाता स राजा पाण्डुनन्दनः'** [स.प.७२.५] इतीयदेव पठ्यते । नन्वनुयमुनमिन्द्रप्रस्थो भवति । तद्यमुनायामवभृथस्नानमिति शक्यमूहितुम् । नेत्याह– सुरापगां व्यगाहयन् । गाहू विलोडने । **'विलोडनं परिमळनम्'** इति क्षीरस्वामी । सुरापगां व्यगाहन्त व्यगाहयन्त च । स्नानजनितेन सम्मर्देन परिवहमाणां गङ्गामपि विलोळयामासुरित्यर्थः ॥ २६८ ॥ ननु पाण्डवानां स्नानेन कथं सुरापगा विलोडयते? आह–समस्तराजसंयुता इति । सर्वेषां राज्ञामित्युपलक्षणम् । सर्ववर्णानां स्त्रीपुरुषाणां च स्नानेन सम्मर्दनमित्यर्थः । विगाह्य स्नात्वा । पुरमिन्द्रप्रस्थम् । एतेन यज्ञवाटाद् किञ्चिद्दूरे क्वापि हस्तिनपुरसमीपे गङ्गायां सस्नुरित्यवगम्यते । कुलमाता हि गङ्गा भीष्मजननी । अतस्तस्यामेव सस्नुरिति । स्फुटमेतद् भागवते–**'चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम्'** [१०.८३.८] इति । सुसद्म सुरसद्म ॥ २६९ ॥ सर्वशः सर्वेषु स्वकेषु ॥ २७० ॥ वरासने सिंहासने धर्मनन्दनः उपविवेश । तत्पार्श्वगते वरासने केशवः ॥ २७१ ॥ हरेः पार्श्वे

---

१. **'ते स्वसद्म'** २. **'स्वकं पुरम्'** । **'स्वकां पुरीम्'** इति क्वचित् । ३. **'–रत्नकारिते'**
४. **'सभातले'** ५. **'रुक्मिणी–'**

सहैव वायुसूनुना तथैव पार्षतात्मजा ।
उपैव रुग्मिणीं शुभा[1] तथैव सत्यभामिनीम्[2] ॥ २७३ ॥

यमौ च पार्षतादयो धनञ्जयान्तिकेऽविशन् ।
तथैव रामसात्यकी समीप एव भूभृतः ॥ २७४ ॥

समासतां तु[3] सा सभा व्यरोचताधिकं तदा[4] ।
यथा सभा स्वयम्भुवः समास्थिता च विष्णुना ॥ २७५ ॥

**ससत्यभामिनीं सत्यभामासहितां रुग्मिणीम् ॥ २७३–४ ॥ समासताम् (उपाविशताम्) ॥ २७५ ॥**

रमेशितुः परिग्रहा अष्टौ महिष्यः तथैव वरासने उपाविशन् । **'परिग्रहः कळत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे'** इत्यभिदधति । हरेरुप निकटभागे । भीमफल्गुनावपि तत्तद्योग्ये वरासने हरेरुपैव उपाविशतामिति । युधिष्ठिरस्य वामपार्श्वे महासने कृष्णः । तत्पार्श्वे भीमस्ततोऽर्जुनः । ततः किञ्चिदर्वाक् कृष्णभार्या उपविविशुरित्यर्थः । एतेनेतः पूर्वमेव यद् भारते कृष्णगमनमुक्तम् तद् व्यत्यासाख्येन शैलीभेदेनेति विवृतं भवति । तथाहि भागवते– **'भगवानपि तत्राङ्ग न्यवात्सीत् तत्प्रियङ्करः । प्रस्थाप्य यदुवीरान् स्वान् साम्बादींस्तु कुशस्थलीम्'** [१०.८३.२९] इति, **'सभायां मयक्लृप्तायां कापि धर्मसुतो विराट् । वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा । आसीनः काञ्चने साक्षादासने मघवानिव'** [३४] इति च ॥ २७२ ॥ वायुसूनुना सहैव, ततः किञ्चिदधस्तात्, तथैव महिषीयोग्यासने शुभा सर्वलक्षणसम्पन्नतया शोभमाना द्रौपदी उपविवेश । तत्र काञ्चिदासनव्यवस्थामाह–रुग्मिणीं सत्यभामिनीं च उपैवेति । एकस्मिन् पार्श्वे रुग्मिणी, अपरस्मिन् सत्यभामा, मध्ये द्रौपदीमुपवेशयामासतुरिति । कृष्णस्य पुरोभागे किञ्चिदधस्तात् रुग्मिणी । तथा भीमस्य द्रौपदी । तत्पार्श्वे सत्यभामा, तदनन्तरमितराः षण्महिष्यो बभूवुरित्यर्थः । भामैव भामिनी । सुन्दरीं कोपनां च कामिनीं भामिनीमाहुः । सत्या च सा भामिनी च सत्यभामिनी सत्याख्यस्य कृष्णस्य भामिनी वा ॥ २७३ ॥ धनञ्जयस्यान्तिके वामपार्श्वे यमौ द्रुपदस्तत्पुत्राश्चोपाविशन् । तथैव वरासने भूभृतः समीप एव दक्षिणपार्श्वे, तथैव तत्तद्योग्यतानुगुणतयैव, रामसात्यकी समासतां समासाताम्, उपाविशताम् । आत्मनेभाषमपि धातुं परस्मैभाषमिव भाषन्ते पुरातनाः स्वर्भाषाविदः । अथवा असतेरिदं परस्मैभाषस्य लङि द्विवचने रूपमासतामिति । अस गतिदीप्त्यादानेषु । उपेत्युपसर्गयोगे उपवेशनेऽपि पठ्यत इति वक्तव्यम् । तुना लोकविलक्षणाऽतिविशिष्टा चेयं सभेत्याह । तदेव विवृणोति– व्यरोचताधिकम् ॥ २७४–५ ॥

१. **'रुक्मिणीं शुभाम्'**
२. **'तथा ससत्यभामिनीम्'** इति वे.ती.पाठः स्यात्, हस्तलिखितादर्शनुगुणः ।
३. **'–सतां च सा'**
४. **'तथा ।'**

**विचित्रहेममालिनः शुभाम्बराश्च तेऽधिकम् ।**
**स्फुरत्किरीटकुण्डला विरेजुरत्र ते नृपाः ॥ २७६ ॥**

**विशेषतो जनार्दनः सभार्य्यको जगत्प्रभुः ।**
**यथा दिवौकसां सदस्यनन्तसद्गुणार्ण्णवः ॥ २७७ ॥**

**उपासिरे च तान् नृपाः[१] समस्तशः सुहृद्गणाः ।**
**तदाऽऽजगाम खड्गभृत् सहानुजः सुयोधनः[२] ॥ २७८ ॥**

**द्वारं सभाया हरिनीलरश्मिव्यूढं न जानन्[३] स विहाय भित्तिम् ।**
**अभ्यन्तराणां दृशि नोविघातिनीं सं स्फाटिकामाशु दृढं चुचुम्बे ॥ २७९ ॥**

**ते प्रसि(द्धाः) ते ॥ २७६–८ ॥व्यूढमाच्छन्नम् । अभ्यन्तराणां सभान्तर्वर्तिनां दृशि दर्शने नो विघातिनीं अप्रतिबन्धिनीं भित्तिं चुचुम्ब[४] ॥ २७९ ॥**

५

---

शुभाम्बराश्च ते पाण्डवा अधिकं विरेजुः । ते रुग्मिण्याद्याः स्त्रीजना वा । तत्राऽगतास्ते प्रथिता अतिथिभूता नृपाश्च विरेजुः ॥ २७६–७ ॥ तान् जनार्दनं पाण्डवांश्च । उप समीपे । आगता नृपाः । आसिरे आसीना बभूवुः । उपासिरे अशुश्रूषन्तेति वा । **'उपासनं शराभ्यासेऽभ्युपास्तावासनेऽपिच'** इत्यभिधानम् । ननु कथमुपासिरे? **'दयायासश्च'** [अ.सू. ३.१.३७] इति आसधातोः लिटि परत आम्प्रत्ययविधानात् उपासाञ्चक्रिर इति वक्तव्यम् । परमम् । आमि उपासाञ्चक्रिर इति वक्तव्यम् । अथापि उपासिर इत्याह । तेन **'आस आम् विभाषा भवति'** इत्याचार्यो मन्यते । छान्दसा उभयथाऽपि प्रयुञ्जते । अनुजैः सहितः सुयोधनः । **'तत्र दुर्योधनो मानी परितो भ्रातृभिः प्रियैः । किरीटमाली न्यविशदसिहस्तः क्षिपन् रुचा'** [१०.८४.१] इति भागवते ॥ २७८ ॥ हरिभिर्नीलैश्च रश्मिभिः व्यूढं व्याप्तम् । **'हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयोः'** इत्यभिधानम् । हरिरितीन्द्रः । तेन हरिनीला इन्द्रनीलमणयः । तेषां वा रश्मिभिः । अभ्यन्तराणां पादार्थनां दृशि दर्शने । **'अन्येभ्योऽपि दृश्यते'** [अ.सू.३.२.१२८] इति क्विप् । नोविघातिनीमित्येकं पदम् । अप्रतिरोधिनीम् । **'दृशिनः दर्शनस्य अविघातिनीम्'** इत्यपि व्याचक्षते । दृशिन इति कथं रूपमिति ते प्रष्टव्याः । स्फाटिकां स्फटिकनिर्मिताम् । समित्येतत् क्रियापदान्वयि । सञ्चुचुम्बे । सङ्घट्टय चुचुम्ब इत्यर्थः । संस्फाटिकां समीचीनतया स्फटिकनिर्मितामित्यपि व्याचक्षते । द्वारं विहाय पारदर्शिनीं भित्तिं द्वारं मन्वानश्चुचुम्बे । द्वारमिदमिति भ्रान्त्या प्रविविक्षन् भित्तिसङ्घट्टनेन भुग्नदन्तोष्ठो बभूवेति परिहसति सञ्चुचुम्बे इति । स्वयङ्कृतापराधोऽयमित्यात्मनेभाषा ॥ २७९ ॥

---

१. **'च तं नृपाः'**

२. **'–भृत् सुयोधनः सहानुजः ।'**

३. **'–व्यूढं त्वजानन्'**

४. **'दृढं चुचुम्ब'** इति मूलपाठष्टीकासम्मतः स्यात् ।

प्रवेशयेतां च यमौ तमाशु सभां भुजौ गृह्य नृपोपदिष्टौ ।
तत्रोपविश्य[1] क्षणमन्यतोऽगादमृष्यमाणः श्रियमेषु दिव्याम् ॥ २८० ॥

तत्रेन्द्रनीलभुवि रत्नमयानि दृष्ट्वा पद्मानि[2] नीरमनसा जगृहे स्ववस्त्रम् ।
रत्नोरुदीधितिनिगूढजलं स्थलं च मत्वा पपात सहितोऽवरजैर्ज्जलौघे ॥ २८१ ॥

तं प्राहसद् भगवता क्षितिभारनाशहेतोः सुसूचित उरुस्वरतोऽत्र भीमः ।
पाञ्चालराजसुतया च समं तथाऽन्यैः स्वीयैस्तथाऽनु जहसुर्भगवन्महिष्यः ॥ २८२ ॥

मन्दस्मितेन विलसद्वदनेन्दुबिम्बो नारायणस्तु मुखमीक्ष्य मरुत्सुतस्य ।
नोवाच किञ्चिदथ धर्म्मसुतो निवार्य्य प्रास्थापयद् वसनमाल्यविलेपनानि ॥ २८३ ॥

कृष्णावृकोदरगतं बहळं[3] निधाय क्रोधं ययौ सशकुनिर्द्धृतराष्ट्रपुत्रः[4] ।
सम्ब्रीळितो[5] नृपतिदत्तवराम्बरादीन् न्यक्कृत्य मार्ग्गगत आह स मातुलं स्वम् ॥ २८४ ॥

**गृह्य गृहीत्वा । क्षणमुपविश्य ॥ २८० ॥ नीरमिदमिति (मनसा) । रत्नोरुदीधितिनिगूढजलं च स्थलं मत्वा ॥ २८१–२ ॥ निवार्य हसतो भीमादीन् निवार्य ॥ २८३ ॥ सुब्रीळितः धृतराष्ट्रपुत्रः कृष्णावृकोदर-गतं तद्विषयं क्रोधं निधाय, स्वमनसीति शेषः । नृपतिदत्तवराम्बरादीन् न्यक्कृत्य ययौ, स्वमालयमिति शेषः । स मार्गगतः स्वं मातुलमाह ॥ २८४–५ ॥**

---

प्रवेशयेतां प्रावेशयेताम् । छान्दसमडभावं स्वच्छन्दं बहुलमुपयुङ्क्ते भगवत्पादः । एतेनेदमाह– तावप्यन्तः परिजहसतुः । केवलं नृप आदिदेशेति सभामानाययामासतुरिति । उपदिष्टौ समीपमानाय्य कर्णान्ते निरूप्याऽदिष्टौ ॥ २८० ॥ नीर-मनसा नीरभ्रान्त्या । नीरमिति मत्वा । जगृहे हस्ताभ्यां वस्त्रमुत्कृष्य जगृह इत्यर्थः ॥ २८१ ॥ प्रकटो हास प्रहासः । तिरस्कारगर्भः परापहासहेतुश्च । सूक्ष्मतया चक्षुर्निमेषमात्रेण अन्याविदिततया सूचितः । तथाऽन्यैः अन्यैश्च । स्वीयैर-र्जुनादिभिः । तदनु भगवन्महिष्यश्च जहसुः । **'जहास भीमस्तं दृष्ट्वा स्त्रियो भूपाश्च केचन । निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः'** [भाग.१०.८४.४] इति च ॥ २८२ ॥ प्रहसतः मरुत्सुतस्य मुखमीक्ष्य । स्वाशयज्ञे भीमे प्रीत्यतिशयं तुनाऽऽह । अथ दुर्योधनावमानेन सम्भ्रान्तो धर्मसुतः । हसन्तं भीममन्यांश्च निवार्य । प्रास्थापयत् प्रेषयामास ॥ २८३ ॥ क्रोधं मनसि निधाय । सहनातिगा ब्रीळा सम्ब्रीळा । व्रीड चोदने । **'चोदनं लज्जा'** इति क्षीर-स्वामी । स्वं स्वीयत्वेन विश्वासपात्रम् ॥ २८४ ॥

---

१. **'तत्रोपविष्टः क्षण–'** इति क्वचित् । २. **'दृष्ट्वा वर्त्मानि नीर–'** ३ **'बहुलम्'**
४. **'–राष्ट्रसूनुः ।'** ५. **'सुब्रीडितो नृपति–'** । **'सुब्रीळितो–'** इति वे.ती. पाठ इति भाति ।

यौ मामहसतां कृष्णाभीमौ कृष्णस्य सन्निधौ ।
तयोरकृत्वा सन्तापं नाहं जीवितुमुत्सहे ॥ २८५ ॥

यदि मे शक्तिरत्र स्याद् घातयेयं वृकोदरम् । २
अग्रपूजां च कृष्णस्य विलुम्पेयं न संशयः ॥ २८६ ॥

ईदृशं पाण्डवैश्वर्यं दृष्ट्वा को नाम जीवितम्[1] ।
इच्छेत करदा येषां वैश्यवत् सर्वभूमिपाः ॥ २८७ ॥

इत्युक्तः शकुनिर्वैरं दृढीकर्त्तुं वचोऽब्रवीत् ।
किं ते वैरेण राजेन्द्र बलिभिर्भ्रातृभिः पुनः[2] ॥ २८८ ॥

अनुजीवस्व तान् वीरान्[3] गुणज्येष्ठान् बलाधिकान् ।
इतीरितोऽतिसंवृद्धकोप आह सुयोधनः ॥ २८९ ॥

यदि तेषां तदैश्वर्यं न मां गच्छेदशेषतः ।
सर्वथा नैव जीवेयमिति सत्यं ब्रवीमि ते ॥ २९० ॥

**अत्र घातने । दत्तामपि अग्रपूजां[4] विलुम्पेयम् । दोषोक्त्या । अत्र संशयो न ॥ २८६–७ ॥ बलिभिः, पुनः भ्रातृभिः । बलिभिर्विरोधोऽशक्यः । भ्रातृभिर्विरोधोऽधर्म इति भावः ॥ २८८ ॥ अनुजीवस्व तदनुसारेण जीव ॥ २८९–९० ॥**

---

सन्तापं सङ्कटं पश्चात्तापं च ॥ २८५ ॥ शक्तिरत्र स्यात् । यदि शक्तिरभविष्यत् तदा वृकोदरमघातयिष्यम् । अग्रपूजां च विलुम्पेयं व्यलोप्स्यम् । प्रायः प्रतनाः लृङः स्थाने लिङं प्रयुञ्जते ॥ २८६ ॥ इच्छेत य आत्माभिमानवानित्यात्मनेभाषयाऽह ॥ २८७–८ ॥ अनुजीवस्व । तदनुजीवनं तव महान् स्वार्थः । पाण्डवश्रियं दृष्ट्वा वृद्धकोपः । अनुजीवस्वेति शकुनिकुत्सनेन संवृद्धकोपः । गुणज्येष्ठानित्यादितत्प्रशंसनेनातिसंवृद्धकोपः ॥ २८९ ॥ तत् राजसूयेन लब्धम् ॥ २९०–१ ॥

---

१. 'जीवितुम् ।'

२. '–जेन्द्र भ्रातृभिर्बलिभिः पुनः'

३. 'तान् सर्वान् गुण–' इति कश्चित् ।

५. एतेन 'अग्रपूजाम्' इति टीकाभिमतः पाठः स्यात् ।

नच बाहुबलाच्छक्ष्य आदातुं[१] तां श्रिंय क्वचित् ।
नेन्द्रोऽपि समरे शक्तस्तान् जेतुं किमु मानुषाः ॥ २९१ ॥

इतीरितः पापतम आह गान्धारको नृपः ।
पापाना[२]मखिलानां च प्रधानं चक्रवर्त्तिनम्[३] ॥ २९२ ॥

यान्तां[४] श्रियं प्रदीप्तां त्वं पाण्डवेषु प्रपश्यसि ।
तामक्लेशत आदास्ये क्रीडन्नक्षैस्त्वदन्तिके ॥ २९३ ॥

इतीरितः प्रसन्नधीः सुयोधनो बभूव ह ।
प्रजग्मतुश्च तावुभौ विचित्रवीर्य्यजं नृपम् ॥ २९४ ॥

धृतराष्ट्रमथोवाच द्वापरांशोऽतिपापकृत् ।
नास्तिक्यरूपः शकुनिर्विवर्ण्णं हरिणं कृशम् ॥ २९५ ॥

दुर्य्योधनं तु[५] तच्छ्रुत्वा कुत इत्याह दुर्म्मनाः ।
अब्रूतां तौ नृपायाऽशु द्वाभ्यां यन्मन्त्रितं पथि ॥ २९६ ॥

**बाहुबलात् तां श्रियमादातुं न शक्ष्ये । किन्तु केनाप्युपायेनाऽहर्तव्येति भावः ॥ २९१–४ ॥ विवर्णं पूर्ववर्णविपरीतवर्णम् । तदेवाऽह– हरिणं पाण्डुरं कृशं (दुर्योधनम्), धृतराष्ट्रमुवाच । तच्छ्रुत्वा दुर्मनाः कुत इत्याह । कस्मात् कारणात् एतादृशः स जात इति पप्रच्छ ॥ २९५–७ ॥**

---

कुत्सितो गान्धारो गान्धारकः । **'कुत्सिते । सञ्ज्ञायां कन्'** [अ.सू.५.३.७४–५] । अखिलपापानां चक्रवर्तिनमत एव पापतमेषु प्रधानम् ॥ २९२ ॥ यान्तामिति समस्तमेकार्थमित्युक्तम् । प्रदीप्ताम् । परेषां चक्षूंषि कण्टकेन विद्धयन्तीमिव प्रखरं प्रकाशमानाम् । प्रकटं प्रकृतं च पश्यसि । प्रवृद्धां प्रभूतां च पश्यसि । क्रीडनं परप्रलोभनार्थम् । तेन क्रीडन्नित्याह । आदानमात्मार्थम् । तेन आदास्य इत्याह ॥ २९३ ॥ हेति परानिष्टचिन्तनेनैव प्रसन्नतां नाम दौष्ट्यातिशयं विस्मयते । प्रलोभयितुं जग्मतुः ॥ २९४ ॥ धृतराष्ट्रं शकुनिरुवाच । किमुवाच । दुर्योधनं तु विवर्णं हरिणं कृशमुवाच । तच्च वैवर्ण्यं त्वन्निमित्तम्, तत्परिहारश्च त्वदधीन इति तुनाऽऽह ॥ २९५–६ ॥

---

१. 'नतु बाहुबलाच्छक्यमादातुम्' २. 'पापिनामखि–' ३. 'चक्रवर्तिनाम् ।'
४. 'यांयां श्रियम्' ५. 'दुर्योधनं च त–'

श्रुत्वैव तन्नेत्यवदत् स भूपतिर्विरोधि धर्म्मस्य विनाशकारणम् ।
कुमन्त्रितं वो न ममैतदिष्टं स्वबाहुवीर्य्याप्तमहाश्रियो हि ते ॥ २९७ ॥

त्वयाऽपि निर्ज्जित्य दिशो मखाग्र्याः कार्य्याः स्पृधो मा गुणवत्तमैस्तैः ।
विशेषतो भ्रातृभिरग्र्यपौरुषैरित्युक्त आहाऽशु सुयोधनस्तम् ॥ २९८ ॥

यदि श्रियं पाण्डवानां नाक्षैराच्छेत्तुमिच्छसि[१]।
मृतमेवाद्य मां विद्धि पाण्डवैस्त्वं सुखी भव ॥ २९९ ॥

यदि मज्जीवितार्त्थी[२] त्वमानयाऽश्विह पाण्डवान् ।
सभार्य्यान्[३] देवनायैव नचाधर्म्मोऽत्र कश्चन ॥ ३०० ॥

वेदानुजीविनो विप्राः क्षत्रियाः शस्त्रजीविनः ।
त्रुट्यते येन शत्रुश्च तच्छस्त्रं नैव चेतरत् ॥ ३०१ ॥

**मा स्पृधः स्पर्धां न कुरु ॥ २९८–९ ॥ 'विरोधि धर्मस्य' इत्येतत् सोपपत्तिकं परिहरति–नचेत्यादिना । अत्र द्यूते श्रिय आकर्षे ॥ ३०० ॥ त्रुट्यते । त्रुटी च्छेदन इति धातुः ॥ ३०१–२ ॥**

---

धर्मस्य विरोधि । आत्मनः विनाशकारणम् । नरकाद्यनर्थप्राप्तिकारणम् । **'विनश्यति नरकाद्यनर्थं प्राप्नोति'** इति हि गीताभाष्ये । नरकादिस्तमोऽन्तश्चायमनर्थः । कुलस्य च विनाशकारणम् । निःशेषो नाशो विनाशः ॥ २९७ ॥ मा स्पृधः मा स्पर्धिष्ठाः । भवन्ति चैतादृशाः प्रयोगा आद्यानामृषीणाम् । स यथा मा शोचीरिति वक्तव्ये मा शुचः इति प्रयुञ्जते । वस्तुतस्तु स्पृधधातुर्दिवादिरपि पूर्वमासीदिति भाति । पाश्चात्या वैयाकरणाः प्रायो विसस्मरुः ॥ २९८ ॥ बलादाहरणमाच्छेदः । तव सुखहेतुभिः पाण्डवैः सह ॥ २९९ ॥ सभार्यान् । यथाकथाच पाण्डवेभ्यो वियोज्य द्रौपदी वशीकर्तव्येति तस्य दुराशामनेन स्फुटयति । राज्यलाभादपि द्रौपदीलाभं महोत्सवं मन्यते स मूढः । अत्र देवने ॥३००॥ विप्रा ये वेदमनुसृत्य जीवन्ति । क्षत्रिया ये शस्त्रेण जीवन्ति । यत् शत्रून् त्रुटति तच्छस्त्रम् । तदेवं शत्रुत्रुटं शस्त्रमाचक्षते वर्णागमविपर्ययाभ्यां परोक्षप्रियाः । शस्तोऽपि शत्रुः त्रुट्यतेऽनेनेति शस्त्रमित्याचक्षत इत्यर्थः । नैव चेतरत् । यन्न शत्रुत्रोटनं तच्छस्त्रमेव न भवति । नहि प्रहरणान्याभरणानि भवन्ति ॥ ३०१ ॥

---

१. **'नाक्षैराहर्तुमिच्छसि '** । **'नाक्षैरादातुमिच्छसि'** इति क्वचित् । **'नाक्षैराक्रष्टुमिच्छसि'** इत्यपि वे.ती. पाठः स्यात् ।

२. **मज्जीवनार्थी'** ३. **'सभायां देव–'**

अतः स्वधर्म्म एवायं तवापि स्यात् फलं महत् ।
इत्युक्तो मा फलं मेऽस्तु तवैवास्त्विति सोऽब्रवीत् ॥ ३०२ ॥

एवं ब्रुवन्नपि नृप आविष्टः कलिना स्वयम् ।
पुत्रस्नेहाच्च विदुरमादिशत् पाण्डवान् प्रति ॥ ३०३ ॥

आविवेश कलिस्तं हि यदा पुत्रत्वसिद्धये ।
अंशेन तत आरभ्य नैवास्मादपजग्मिवान् ॥ ३०४ ॥

यावत् पुरं परित्यज्य वनमेव विवेश ह ।
तदन्तरा ततस्तस्य पापयुक्तं मनोऽभवत् ॥ ३०५ ॥

न्यवारयत् तं विदुरो महत् ते[१] पापं कुलस्यापि विनाशकोऽयम् ।
समुद्यमो नात्र विचार्य्यमस्ति कृथा न तस्मादयशश्च ते स्यात् ॥ ३०६ ॥

इति ब्रुवाणं कलहोऽत्र न स्यान्निवारयामो वयमेव यस्मात् ।
द्रष्टुं सुतान् क्रीडत एकसंस्थानिच्छामि पार्थांश्च सुयोधनादीन् ॥ ३०७ ॥

**प्रत्यादिशत् पाण्डवान्, आनेतुमिति शेषः ॥ ३०३ ॥ कलिना आविष्ट इत्युक्तम् । तदावेशः कदा कियत्काल-पर्यन्तमित्यत आह– आविवेशेत्यादिना । कलिः यदा पुत्रत्वसिद्धये (तं पूर्व)माविवेश । प्रथमं पितृप्रवेशः पश्चान्मातृप्रवेश इति नियमात् तं पितृभूतमाविवेश । तत आरभ्य यावत् यदा पुरं परित्यज्यैव धृतराष्ट्रो वनं प्रविवेश तावत्पर्यन्तं अस्मादंशेन नैवापजग्मिवान् ॥ ३०४–५ ॥ तस्मान्न कृथाः न कुरु ॥ ३०६ ॥ इति ब्रुवाणम्, धृतराष्ट्र आहेति शेषः ॥ ३०७ ॥**

---

माऽस्तु । माशब्दोऽयम्, न माङिति वैयाकरणाः ॥ ३०२ ॥ पाण्डवान् प्रति आदिशत् विससर्ज । प्रेषयामासे-त्येतत् । पाण्डवान् नागपुरं प्रति आनेतुमादिदेश च ॥ ३०३ ॥ पुत्रत्वसिद्धये यदा तमाविवेश तत आरभ्य । एकेनांशेन पुत्रो बभूव । अपरेणांशेन तस्मिन्नेव स्थितस्तं व्यामोहयामास ॥ ३०४ ॥ यावद् वनं विवेश तावन्तं कालम् । वनमेव अपुनरागमाय विवेश । विवेश हेति कलिमुक्तं शुद्धहृदयं धृतराष्ट्रमभिनन्दतीव ॥ ३०५ ॥ कृथा इति छान्दसो लकारव्यत्ययः, अडभावश्च । न कृथाः, मा कृथा इत्यर्थः ॥ ३०६ ॥ इति ब्रुवाणं **'विदुरमादिशत्'** [३०३] इति पूर्वश्लोकोक्तमत्राप्य-

---

१. 'विदुरो महामतिः पापं'

अतः क्षिप्रमुपानेयाः पार्थ्था इति बलोदितः ।
ययौ स विदुरः पार्थ्थान्[1] द्वारकां केशवे गते ॥ ३०८ ॥

गते हि[2] पार्थ्थसन्निधेः सुयोधने तु नारदः[3] । ३
शशंस धर्म्मसूनुना प्रचोदितोऽरिमागतम् ॥ ३०९ ॥

क उद्यमी नृपेष्वति प्रपृष्ट आह नारदः ।
स सौभराड् वरं शिवादवाप वृष्णिनिर्ज्जयम् ॥ ३१० ॥

पांसुमुष्टिं सकृद्ग्रासी बहूनब्दांस्तपश्चरन् ।
आजगाम हरादाप्य वरं कृष्णजये पुनः ॥ ३११ ॥

स श्रुत्वा मागधवधं दिशां विजयमेव च ।
राजसूयं क्रतुं[4] चैव शिशुपालवधं तथा ॥ ३१२ ॥

यदून् प्रत्युद्यमं तूर्ण्णं करोतीति निशम्य तत् ।
समैक्षद् धर्म्मजः कृष्णमुखशीतांशुमण्डलम् ॥ ३१३ ॥

**केशवे इन्द्रप्रस्थात् द्वारकां गते सति ॥ ३०८–९ ॥ नारदः शशंसेत्युक्तं विवृणोति– क उद्यमीति ॥३१०–१२॥ कृष्णमुखशीतांशुमण्डलमित्यनेन विरोध्यागमनेऽपि व्याकुलताभावः सूचितः ॥ ३१३ ॥**

---

नुवर्तते । एकत्र समानतया मिलित्वा स्थितान् ॥ ३०७–८ ॥ केशवनिर्गमनस्य निमित्तभूतां पूर्वकथामाह–गते हि । द्वेषं मनसि गाढं निधायेति विशेषं तुनाऽऽह– सुयोधने त्विति । प्रचोदितः को विशेष इति पृष्टः कृष्णस्यारिमागतं शशंस ॥ ३०९ ॥ नृपेषु कोऽयं हरिमरिं मन्यमान उदयुङ्क्तेति विवरं प्रकटयितुं पृष्टः । निःशेषो जयो निर्जयः ॥ ३१० ॥ यदुनाथे जिते सर्वेऽपि वृष्णयो निर्जिता भवन्तीति मन्वानः कृष्णजयं हराद् वरमाप । कृष्णजयविषये । जयार्थं वा ॥ ३११ ॥ विजयमेव च । एवकारेणान्येषामशक्यं पाण्डवानामेव सुशकमासेत्याह । क्रतुं चैवेति । को ह्यन्योऽकृष्णसहायो राजसूयस्य क्रतोरीष्टे ॥ ३१२ ॥ सञ्ज्ञार्थमैक्षत् । शीतांशुमण्डलमिति । एतेनैतदाह– बलिना शत्रुणा स्वपुराक्रमणोदन्तं श्रुत्वाऽपि न तस्य मुखं प्रसन्नतां विजहाविति । न मुखे विषण्णता । नाप्युग्रता । न काऽपि चित्तविक्रिया । तदाऽपि

---

१. **'विदुरः शीघ्रं द्वारकाम्'** इति क्वचित् । २. **'गते तु'** इति क्वचित् ।
३. **'सुयोधनेऽथ नारदः'** ४. **'राजसूयक्रतुम्'**

अस्त्वित्युक्त्वा स गोविन्दः प्रेषयामास यादवान् ।
प्रद्युम्नादीन् दिनैः कैश्चित् स्वयं चागात् सहाग्रजः ॥ ३१४ ॥

विदुरस्तु ततो गत्वा धर्म्मराजमथाऽह्वयत् ।
भ्रातृभिर्वार्य्यमाणोऽपि कृष्णया च स धर्म्मराट् ।
सार्द्धं मात्रा भ्रातृभिश्च कृष्णया च ययौ द्रुतम् ॥ ३१५ ॥

ज्येष्ठाज्ञयैव विदुर आह्वयन्नपि धर्म्मजम् ।
नाऽगन्तव्यमिति प्राह दोषानुक्त्वाऽक्षजान् बहून् ॥ ३१६ ॥

इतीह दोषसञ्चयस्तथा च[1] ते पितुर्वचः ।
समीक्ष्य तद् द्वयं स्वयं कुरुष्व कार्य्यमात्मनः ॥ ३१७ ॥

इतीरितोऽपि पाण्डवो ययौ कलिप्रवेशितः[2] ।
विचित्रवीर्यजं च तं[3] समासदत् ससैनिकः ॥ ३१८ ॥

कल्यावेशान्नृपतिः प्रतिजज्ञे पूर्वमेव धर्म्मात्मा ।
आहूतो [4]द्यूतरणान्निवर्त्तेयं नैव वारितोऽपीति ॥ ३१९ ॥

**अस्त्वित्युक्त्वा । स्वमुखमवलोकयतो धर्मसुतस्य यादवाः प्रेषणीया इत्यभिप्रायं ज्ञात्वेति शेषः ॥३१४ ॥ कारणपूर्वकं कृष्णगमनमुक्त्वाऽह्वातुं गतेन विदुरेण किङ्कृतमित्याह– विदुरस्त्वित्यादिना ॥ ३१५ ॥ अक्षजान् अक्षक्रीडाजातान् ॥ ३१६ ॥ इह द्यूतक्रियायाम् ॥ ३१७ ॥ नाऽगन्तव्यमित्यभिप्रायेण इतीरितोऽपि ॥ ३१८–९ ॥**

---

मन्दहासमृदुसुन्दरानन एवाऽस । अहो सर्वलोकातिगा लीला भगवत इति ॥३१३॥ प्रद्युम्नादीन् सपदि प्रेषयामास । स्वयं कैश्चिद् दिनैः परस्तादगात् ॥ ३१४ ॥ अथ कृष्णगमनानन्तरम्, ततः धृतराष्ट्रेणाऽज्ञप्तत्वाद्धेतोः । अनिच्छन्नपि विदुरः । कृष्णया च मात्रा च वार्यमाणोऽपि ॥ ३१५–६ ॥ तथा च द्यूतार्थमागच्छेति च ॥ ३१७ ॥ यदृच्छया कलिः प्रवेशितो यस्मिंस्तादृशः । धृतराष्ट्रे स्वयं कलिः सदा प्रविष्टः । अत्र भगवदिच्छया तदानीं प्रवेशित इत्यर्थः ॥ ३१८ ॥ द्यूताख्यात् रणात् । एकवद्भावेन द्यूतरणाभ्यामिति प्राचीनं व्याख्यानम् । निवर्तेयमिति शिथिलद्वित्वं पठनीयम् । तेन

---

१. '–स्तथाऽपि ते' २. 'कलिप्रवेशतः' ३. '–वीर्यजं नृपं समा–' ४. 'द्यूतकरणान्नि–'

तेनाऽयात् [१]स्वसुहृद्भिर्निर्वार्य्यमाणोऽपि नागपुरमाशु ।
नहि धर्म्मो द्यूतकृतो विशेषतः क्षत्रियस्य लोकगुरोः ॥ ३२० ॥

वैचित्रवीर्य्यतनयेन तु पाण्डुपुत्राः सम्भावितास्तमुप च न्यविशन् निशां ताम्[२] ।
प्रातश्च[३] भीष्ममुखराः सकलाश्च भूपा आसेदुराशु च सभां सह पाण्डुपुत्रैः ॥ ३२१ ॥

वैचित्रवीर्य्यनृपतिर्विदुरान्वितोऽस्य गान्धारराजसहितास्तनयाः सकर्ण्णाः ।
प्राप्ताः सभातळ[४]मथाऽह्वयदत्र धर्म्मराजं सुतः सुबलकस्य स देवनाय ॥ ३२२ ॥

सर्वांश्च तत्र कलिराविशदेव भीमपूर्वान् विनैव चतुरः सपृथां च कृष्णाम् ।
क्षत्तारमेव च ततो नहि भीष्ममुख्यैस्ते वारिताः कुलविनाशनकर्म्मवृत्ताः ॥ ३२३ ॥

भीमादिभिः स विदुरेण च वार्य्यमाणो
द्यूते निधाय पणमप्यखिलं स्ववित्तम् ।
गान्धारकेण विदिताक्षहृदा जितो द्राक्
पाण्डोः सुतोऽथ नकुलं न्यदधात् पणाय ॥ ३२४ ॥

**लोकगुरोः कर्मप्रवर्तकत्वेन ॥ ३२० ॥ वैचित्रवीर्यतनयेन । विचित्रवीर्य एव वैचित्रवीर्य इति स्वार्थेऽण्प्रत्यये कृते वैचित्रवीर्यतनयो धृतराष्ट्रः, तेन । तदाह्वायितानां धृतराष्ट्रप्राप्तौ तत्सम्भावितत्वस्य तत्समीपे निवासस्य चोपपन्नत्वान्न प्रतीतार्थ उक्तः ॥ ३२१–२ ॥ ततो हि कल्यावेशादेव । (वृत्ताः) प्रवर्तमानाः ॥ ३२३–४ ॥**

तुरीयपादस्याप्यष्टादशमात्रता । पादान्त्यस्य लघुत्वविवक्षया वा मात्रानुगुण्यम् । अथवा एकमात्राधिक आर्याभेदः ॥ ३१९ ॥ द्यूतेन कृतः सम्पादितः । द्यूतकृत इति षष्ठी वा । द्यूतकृतः क्षत्रियस्य ॥ ३२० ॥ वैचित्रवीर्यतनयेन धृतराष्ट्रतनयेन दुर्योधनेन स्वस्य कापट्यं निगूहता सम्भाविताः । येऽन्तर्द्रुह्यन्ति ते बहिर्बहु मानयन्ति । सम्भाविता इव सम्भावयन्ति । विचित्रवीर्य एव वैचित्रवीर्यः, तत्तनयो धृतराष्ट्र एवेति प्राचीनम् ॥ ३२१ ॥ अस्य तनयाः । सुबलकस्य सुतः शकुनिः । सुवलकस्येति कुत्सने सञ्ज्ञायां कन् ॥ ३२२ ॥ भीमार्जुननकुलसहदेवांश्चतुरो विनैव । एवं क्षत्तारं च विना । कर्मणि वृत्ताः प्रवृत्ता निरता वा ॥ ३२३–४ ॥

१. 'स सुहृद्भि–'
२. 'न्यवसन्निशायाम्' । 'न्यवसन् निशां ताम्' इति क्वचित् ।
३. 'प्रातस्तु भीष्म–'
४. 'सभातल –'

तस्मिन् जितेऽथ सहदेवमथार्ज्जुनं च भीमं च सोमकसुतां स्वमपि क्रमेण ।
राजा निधाय विजितोऽथ सुयोधनः स्वं सूतं दिदेश पृषतात्मजपुत्रिकायाः ॥ ३२५ ॥

सूतो गत्वा तदन्तं समकथयदिमां द्यूतमद्ध्ये जिताऽसि
क्षिप्रं चाऽयाहि राज्ञां समितिमुरुतरामित्यथो साऽप्यवादीत् ।
नाहं यास्ये गुरूणां[१] समितिमिति ययौ सोऽप्यमुं भीमभीतं
ज्ञात्वा दुःशासनं सोऽप्यदिशदथ नृपो धार्त्तराष्ट्रोऽनुजं स्वम् ॥ ३२६ ॥

स पापपूरुषोत्तमः प्रगृह्य केशपक्षके ।
पुरः स्वमातुरानयत् सभामयुग्मवाससीम् ॥ ३२७ ॥

समाहृता रजस्वला जगाद भीष्मपूर्वकान् ।
अधर्म्म एष वार्य्यते न धर्म्मिभिर्भवद्विधैः ॥ ३२८ ॥

**तस्मिन् जिते पणतया निहिते नकुले (जिते) । (अथ) पराजयानन्तरं पणतयोत्सृष्टे सति । निधाय, पणमिति शेषः । पृषतात्मजपुत्रिकायाः, आनयनार्थमिति शेषः ॥ ३२५ ॥ जिताऽसि पणतयोत्सृष्टाऽसि ॥ ३२६ ॥ केशपक्षके उत्तमकेशभारे । अयुग्मवाससीम् उत्तरीयवस्त्ररहिताम् ॥ ३२७ ॥ रजस्वला सती समाहृता । एषः सभां प्रति कुलाङ्गनाहरणात्मकः ॥ ३२८ ॥**

---

पृषतात्मजस्य द्रुपदस्य पुत्रिकाया आनयनार्थम् । पुत्रिका प्रियपुत्री ॥ ३२५ ॥ तदन्तं तत्समीपम् । तामिति वक्तव्ये 'इमाम्' इत्याह । तेन तं प्रसङ्गं स्वयं प्रत्यक्षमनुभवन्निवाऽह । अपिच भारत्या अपूर्वं नामेदम् । अस्य विष्णोरियं मा गृहलक्ष्मीरिति अमा रमा । एतीति ऐर्वायोरियं मा इमा भारती । सरस्वती वा । उग्रस्येयं मा उमा पार्वती । सम् आदरपूर्वकम्, अथापि सङ्कुचन्निव समग्रमुदन्तमकथयत् । द्यूतमध्ये नतु द्यूतान्ते । प्रथमं त्वं जिताऽसि । अन्ते युधिष्ठिरो जित इत्यर्थः । उरुतरां महद्भिः कुरुभिर्गुरुभिश्चाधिष्ठिताम् । अथो दूतवचनश्रवणसमनन्तरमेव । सोऽपि दूतोऽपि । अमुं दूतम् । सोऽपि धार्तराष्ट्रः । अथ दूतप्रेषणं वितथमिति विज्ञाय स्वमनुजमदिशत् ॥ ३२६ ॥ स्ववशं नेतुं ग्रहणं प्रग्रहणम् । यथाऽश्वानां प्रग्रहः । कमनीयः केशपाशः केशपक्षकः । मातुरेव पुर एवं चकारेति तस्य दौष्ट्यातिशयं स्फोरयति । अयुग्मवाससीमेकाम्बराम् । 'अयुग्मवाससम्' इति पाणिनीयाः । प्राचीना विपश्चितो ङीपमप्यनुमन्यन्ते । तथाहि भारते–**'अकस्मादबलां नारीं हन्तासीमामनागसीम्'** [स.प.२३.१५] इति । तेन **'असुनि च ङीबन्यतरस्याम्'** इति पठनीयम् ॥ ३२७ ॥ समाहृता बलादानीता । कथमित्युत्तरश्लोके पठ्यमानमत्राप्यनुवर्तते । कथं न वार्यते? एषः

---

१. **'कुरूणाम्'** इति क्वचित् ।

कथं छलात्मके द्यूते जिते धर्म्मजयो भवेत्[१] ।
नहि द्यूतं [२]धर्म्यमाहुर्विशेषेण तु[३] भूभुजाम् ॥ ३२९ ॥

ये धर्म्मं न वदन्तीह न ते वृद्धा इतीरिताः ।
अवृद्धमण्डितां[४] नैव सभेत्याहुर्म्मनीषिणः ॥ ३३० ॥

कथं द्यूते जिता चाहमजिते स्वपतौ स्थिते ।
समानधर्म्मिणीमाहुर्भार्य्यां यस्माद् विपश्चितः ॥ ३३१ ॥

सहैव कर्म्म कर्त्तव्यं पतौ दासे हि भार्य्यया ।
दासीत्वं न पृथङ् मे[५] स्याज्जितेऽपि हि पतौ ततः ॥ ३३२ ॥

**द्यूतजिताया आहरणं धर्म एव नाधर्म इत्याशङ्क्याऽह– कथमिति । छलात्मके जिते जये । नपुंसके भावे क्तः । धर्मजयः धर्मेण जयः । द्यूतमेव धर्मो न भवति । छलात्मकं सुतरामधर्मः । अतस्तेन जयः कथं धर्मजयो भवेदित्यभिप्रायेणाऽह– नहीति । धर्म्यं धर्मादनपेतम् । तस्मादयमधर्मो निवारणीय इति भावः ॥ ३२९ ॥ अधर्मानिवारणे दोषमाह–य इति । अधर्ममिति पदविभागः । अधर्मं सन्तमधर्म इति न वदन्ति, ये धर्मं जानन्तः धर्मं न वदन्ति इति वा ॥ ३३० ॥ प्राग् जितत्वमभ्युपगम्य तद्धर्मेण नेत्युक्तम् । इदानीं जितत्वमेव नास्तीत्येतत् सोपपत्तिकमाह–कथमित्यादिना ॥ ३३१ ॥ पृथक् पत्युः । ततः भार्या(त्वात्) ॥ ३३२–४ ॥**

---

द्यूतोद्यमः । तत्र पणाय पत्न्याः निधानम्, रजस्वलाया अयुग्मवाससः सभां प्रति समाहरणमित्ययं सर्वोऽप्यधर्मः । भवद्भिर्धैः धर्मविद्भिः धर्ममाचरद्भिश्च कथं न वार्यते? स्वयमेवोत्तरमप्याहेव– कल्यावेशेन नधर्मिभिर्भवद्भिर्धैः कथं वार्यते? अथ वृद्धैर्भवद्भिरवारणं नामैष पुनर्महानधर्मः । तेषां द्यूतक्रीडा तत्र स्त्रीपणनादिकं च क्षम्येत । भवतां कुलवृद्धानां ज्ञानेन वयसा च वृद्धानामक्षन्तव्यमिदमवारणमिति ॥ ३२८ ॥ छलेन ग्लहे जिते सति । धर्म्यं धर्मादनपेतम् । **'धर्मपथ्यर्थन्यायादनपेते'** [अ.सू.४.४.९२] इत्यनपेत इत्यर्थे यत् प्रत्ययः । भूभुजां तु । प्रजासु धर्मरक्षादीक्षाणाम् ॥ ३२९ ॥ ये धर्मं न वदन्ति धर्मोऽयमिति, ये चाधर्मं न वदन्ति अधर्मोऽयमिति न ते वृद्धाः । ये धर्मं वदन्तो वर्धन्ते, यैश्च धर्मो वर्धते ते वृद्धा भवन्ति । या धर्मेण सह भाति सा सभा भवति ॥३३०–१॥ पतौ दासे सति पत्या सहैव भार्यया कर्म कर्तव्यम् । अथ भार्ययेति तृतीया षष्ठ्यर्थे च । पतौ दासे सति भार्याया दासीत्वं भवति हि । ततः तस्मात् कारणात् मे पतौ जितेऽपि

---

१ **'धर्म्मजितो भवेत्'** इति क्वचित् । २. **'धर्ममाहु–'** इति क्वचित् । ३. **'–षेण च भू–'**
४. **'–मण्डिता नैव'** इति क्वचित् । ५. **'दासीत्वं मे पृथङ् न स्या–'**

इत्युक्ता अपि भीष्माद्याः कल्यावेशेन मोहिताः ।
पृच्छ धर्म्मजमित्युक्त्वा तूष्णीमेव बभूविरे ॥ ३३३ ॥

दुर्य्योधनप्रतीपं हि न कश्चिदशकत् तदा ।
उवाच विदुरस्तत्र न धर्म्मोऽयमिति स्फुटम् ॥ ३३४ ॥

न तस्य वाचं[1] जग्राह धृतराष्ट्रः सहात्मजः ।
ऊर्ध्वबाहुः स चुक्रोश देवानां ख्यापयंस्तदा ॥ ३३५ ॥

स्वाशक्तिं द्रौपदीं चाऽह जिता नैवासि धर्म्मतः ।
अधर्म्मो हि महानेतां सभामाक्रम्य तिष्ठति ॥ ३३६ ॥

एवं तु विदुरेणोक्ते विकर्ण्णः पापकोऽपि सन् ।
आह डम्भार्त्थमेवात्र धर्म्मवित्त्वं प्रकाशयन् ।
अधर्म्म एवायमिति कर्ण्णोऽथैनमभत्सयत् ॥ ३३७ ॥

दृष्ट्वा भीमः क्लिश्यमानां तु[2] कृष्णां धर्म्मात्ययं धर्म्मराजे च दृष्ट्वा ।
राजा शास्यो युवराजेन धर्म्माच्चलन् यस्माद् वाक्यमिदं बभाषे ॥ ३३८ ॥

**देवानां स्वाशक्तिं ख्यापयन् ऊर्ध्वबाहुः ॥ ३३५–८ ॥**

मे पृथग् दासीत्वं न स्याद्धीति च । पतावित्यसमासेऽपि भवति । **'क्लीबे च पतिते पतौ'** इत्यादिप्रयोगात् । वस्तुतस्तु **'समासे न पत्येति न पत्याविति भवति'** इत्येतावदेव वक्तुमुचितम् ॥ ३३२–३ ॥ दुर्योधनप्रतीपं कर्तुं वक्तुं वा । तदा न कश्चिदशकत् । कल्यावेशात् । यदा न कश्चिदशकत् तदा कल्यावेशविधुरो विदुर उवाच ॥३३४–५॥ द्रौपदीं प्रति च स्वाशक्तिं ख्यापयन्नाह– जिता नैवासि धर्मत इत्यादि ॥ ३३६ ॥ क्षुद्रः पापी पापकः स्वस्मिन् विद्यमानं नीचत्वं निगूह्य स्वस्मिन्नविद्यमानस्योत्तमत्वस्य प्रदर्शनं डम्भः । **'दन्भु दम्भे'** इत्यर्वाचीना वैयाकरणाः । **'लोकरञ्जनार्थमेव कर्मानुष्ठानं दम्भः'** इति च व्याचक्षते । डम्भ इत्येव प्रतनः प्रयोगः । तेन मूर्धन्यादिरपि धातुः पठनीयः ॥ ३३७ ॥ कृष्णां तु । क्लेशायोग्यां कृष्णाम् । अथापि क्लिश्यमानाम् । शास्यः, हितवचनेन बोधनीयः । तस्मात् वक्तुं योग्यमिदं बभाषे । **'वाक्यं तु कुत्सिते हीने बचनार्हे च'** इत्यभिदधति ॥ ३३८ ॥

१. 'वाक्यं जग्राह'

२. **'–मानां च कृष्णाम्'**

इमां न्यस्तवतो द्यूते धक्षणीयौ हि ते भुजौ ।
नैवमित्यर्ज्जुनोऽवादीत् तमाहाथ वृकोदरः ॥ ३३९ ॥

वक्तव्यं नतु कर्त्तव्यं तस्मान्नहि मया कृतम् ।
उत्तमे वचसा शिक्षा मद्ध्यमेऽर्त्थापहारणम् ॥ ३४० ॥

अधमे देहदण्डश्च तस्माद् वाच्यो युधिष्ठिरः ।
अथ कर्ण्णोऽब्रवीत् कृष्णामपतिर्ह्यसि शोभने ॥ ३४१ ॥

धार्त्तराष्ट्रगृहं याहीत्यथ दुर्य्योधनोऽवदत्[1] ।
परस्परविरोधार्त्थं पाण्डवानामिदं वचः ॥ ३४२ ॥

युधिष्ठिरो दुःखहेतुस्तवैको यद्येनमन्ये न गुरुर्न्न एषः ।
इति ब्रूयुरथवा भीमपार्त्थावेकोऽपिवा भीम इहोत्सृजे त्वाम् ॥ ३४३ ॥

इत्युक्त ऊचे पवमानसूनुः पूज्योऽस्माकं धर्म्मजोऽसंशयेन[2] ।
गुरुश्चाहं वोऽखिलानां यतो हि बलज्येष्ठं क्षत्रमाहुर्म्महान्तः ॥ ३४४ ॥

**नैवम्, एवं न वक्तव्यमिति ॥ ३३९ ॥ वक्तव्यम्, अत्र मया वक्तुं योग्यम् । तदेवोपपादयति– उत्तम इति ॥ ३४०–२ ॥ अन्ये भीमादयश्चत्वारः ॥ ३४३ ॥ बलज्येष्ठं क्षत्रं क्षत्राणां गुरुमाहुः ॥ ३४४ ॥**

---

भुजावितीदं बभाषे । ज्येष्ठस्य नैवं वक्तव्यमित्यर्जुनोऽवादीत् । वक्तव्यं नतु कर्तव्यमिति भीम आह । धक्षणीयौ दाहेन क्लेशनीयौ । कथं धक्षणीयौ? अर्वाचीनानां वैयाकरणानां मते दहनीयाविति वक्तव्यम् । न धक्षणीयाविति । सत्यम्, यदीदं दहते रूपं स्यात् । नेदं दहतेः, किन्तु धक्षतेः अनीयर् प्रत्यये निष्पन्नं रूपम् । यद्यपि, अद्यतना धातुपारायणिका धक्षतिं न पठन्ति । पठन्ति धिक्षतिं धुक्षतिं च–धिक्ष धुक्ष सन्दीपनक्लेशनयोरिति । धक्ष सन्दीपनक्लेशनयोरिति च पाठकैर्विस्मृतं पठनीयम् । तथाच धक्षते दहति क्लेशयति चेत्यर्थ इत्यलम् ॥ ३३९–४१ ॥ पाण्डवानां परस्परविरोधजननार्थमिदं वचोऽवदत् ॥ ३४२ ॥ अन्ये चत्वारः पाण्डवाः । 'न गुरुर्न एषः' इति ब्रूयुः, भीमपार्थौ न गुरुर्नविष इति ब्रूयाताम् । एकोऽपि वा भीमो न गुरुर्म एष इति ब्रूयात् ॥ ३४३–४ ॥

---

१. **'दुर्योधनोऽब्रवीत्'** इति क्वचित् ।
२. **'धर्मजः संशयो न ।'**

**बलज्यैष्ठ्ये यदि वः संशयः स्यादुत्तिष्ठध्वं सर्व एवाद्य वीराः ।**
**मृद्नामि वः पादतळेन[1] सर्वान् सहानुबन्धान् यश्च मां योद्धुकामः ॥ ३४५ ॥**

**इति ब्रुवन् समुत्थितो नदन् वृकोदरो यदा ।**
**विघूर्ण्णिता सभाऽखिला भयान्नचाऽह किञ्चन ॥ ३४६ ॥**

**भीष्मो द्रोणो विदुराद्याः क्षमस्व सर्वं त्वयोक्तं सत्यमित्येव हस्तौ ।**
**गृहीत्वैनं स्थापयामासुरस्मिन् स्थिते शान्तिं चाऽपिरे धार्त्तराष्ट्राः ॥ ३४७ ॥**

**निवारितो धर्म्मजेन गुरुभिश्चापरैस्तदा ।**
**माननार्थं गुरूणां [2]तु न भीमस्तान् जघान ह ॥ ३४८ ॥**

**नचात्यवर्त्तत[3] ज्येष्ठं धर्म्मात्मानं युधिष्ठिरम् ।**
**तेषां पापाभिवृद्ध्यर्थं ज्येष्ठवृत्तिं च दर्शयन् ॥ ३४९ ॥**

**वीराः वीरं मन्यमानाः । उत्तिष्ठध्वम् । सन्नद्धा भवत । नत्वासनादुत्तिष्ठतेति । तथात्वे 'उदोऽनूर्ध्वकर्मणि' इति प्रतिषेधादात्मनेपदासम्भवात् । यश्च मां योद्धुकामः स मामायातु ॥ ३४५–८ ॥ वृत्तिं अनुवृत्तिं दर्शयन् लोकस्य ॥ ३४९–५१ ॥**

---

मम बलज्यैष्ठ्ये । यश्च मां योद्धुकामः स उत्तिष्ठताम्, बलपरीक्षायै प्रयतताम् । तं च वश्च सहैव मृद्नामि । केवलमूर्ध्व-कर्मण्यर्थे न भवत्यात्मनेपदमिति पाणिनिर्मन्यते–**'उदोऽनूर्ध्वकर्मणि'** [अ.सू.१.३.२४] इति । तद् यथा– **'आसनादुत्तिष्ठति'** । अत्र तु उत्थाय परीक्षायै यतध्वमित्यर्थ इति युक्तमात्मनेपदम् । तद् यथा– **'उत्तिष्ठते कुटुम्बे'** । तदर्थं यतत इत्यर्थः ॥ ३४५ ॥ विघूर्णिता उत्कम्पिता । सभा नचाऽह किञ्चन । सभेति सभासद उच्यन्ते । **'मञ्चाः क्रोशन्ति'** इतिवत् ॥ ३४६ ॥ विदुराद्याः । आदिना कृपः अश्वत्थामा बाह्लीकाद्याश्च । स्थापयामासुः, सम्भावितात् सङ्घर्षात् निवर्तयामासुः, निरुरुधुरित्यर्थः । अस्मिन् भीमे तूष्णीं स्थिते । तेषां वचसि वा स्थिते सति । पुनर्जीविताशया मनःशान्तिम्, आपिरे लेभिरे । आप्लृ लम्भने । आपतीति परस्मैभाष इति बहवः । आपते इत्यात्मनेभाषोऽपीति मैत्रेयः ॥ ३४७ ॥ अपरैश्च बन्धुभिः । गुरूणां तु अनुल्लङ्घ्यशासनानाम् । हेति विस्मयते, भीमस्य निष्ठाम्, तेषां मृत्युमुखात् प्रत्यावर्तनं च ॥ ३४८–९ ॥

---

१. **'पादतलेन'** २. **'तु भीमस्तान् न जघान ह'** ३. **'नैवातिवर्तते ज्येष्ठम्'**

अथ दुर्य्योधनः पापो भीमसेनस्य पश्यतः ।
ऊरुं सन्दर्शयामास कृष्णायै भीम आह तम् ॥ ३५० ॥

तवोरुमेनं गदयोरुवेगया [1]बिभेत्स्य इत्येव पुनः सुयोधनः ।
ऊचे नान्यद् भवतामस्ति वित्तं द्यूते कृष्णं[2] स्थापयध्वं पणाय ॥ ३५१ ॥

अथाब्रवीद् वृकोदरः कृतेऽवमानने हरेः ।
निपात्य भूतळे[3] हि ते शिरो मृदिष्य इत्यलम् ॥ ३५२ ॥

स वद्ध्य एव मे सदा परोक्षतोऽपि यो हरिम् ।
विनिन्दयेदिति ध्रुवं प्रतिश्रुतं हि मारुतेः ॥ ३५३ ॥

पुनश्च पापवृद्धये तदैव नो जघान तम् ।
विकर्त्तनात्मजः पुनर्ज्जगाद सोमकात्मजाम् ॥ ३५४ ॥

प्रयाहि भूभृतो हि नो गृहं न सन्ति पाण्डवाः ।
इतीरिते समुत्थितौ वृकोदरोऽनु चार्ज्जुनः ॥ ३५५ ॥

**अलं मृदिष्ये ॥ ३५२ ॥ प्रतिश्रुतं प्रतिज्ञा । भावे क्तः ॥ ३५३–४ ॥ न सन्ति, मृतप्राया इति भावः ॥ ३५५–६ ॥**

---

पश्यन्तं भीमसेनमनादृत्य । भीमः पश्यत्विति मत्यैव ॥ ३५० ॥ बिभेत्स्ये विभेत्स्ये । वबयोरभेदाद् । स्वबलेन भगवदिच्छया च भेत्स्य इत्यर्थः । भगवदनुग्रहातिशयः फलमात्मगामीत्यात्मनेभाषा । इत्येव इत्येवं आह । बिभेत्स्य एवेत्याहेति वा ॥ ३५१ ॥ मृदिष्ये । मृद क्षोदे । मर्दिष्यामीति वक्तव्ये मृदिष्य इत्याह । क्रियाविषयस्य गुणाभावे, दुर्गुणभावे च क्रियापदस्यापि गुणाभावः । बहव एतादृशाः प्रयोगा भवन्ति प्रतनग्रन्थेषु । दुर्गुणानां दुष्टानां दमनं महान् स्वधर्म इत्यात्मनेभाषा । तेन मृदुरङ्गुलिक्षेप एव पर्याप्तस्ते मर्दनायेत्याह ॥ ३५२ ॥ विनिन्दयेत् विद्विष्य, विनोदार्थं वा निन्देत् । स्वार्थे णिच् । अन्यैः प्रचोद्य निन्दयेदिति च । प्रतिश्रुतं प्रतिश्रवः ॥ ३५३ ॥ सोमकात्मजामिति परम्परया । सोमकस्याऽत्मजः पृषतः । पृषतस्य द्रुपदः । द्रुपदतनया द्रौपदीति ॥ ३५४ ॥ नोऽस्माकं सर्वेषां भूभृतः दुर्योधनस्य । तव पतित्वेन न सन्ति । यद्यपि सन्ति, अथापि न सन्तीव ॥ ३५५ ॥

---

१. **'विभेत्स्य–'** २. **'कृष्णं द्यूते स्थापयध्वम्'** इति वे.ती. पाठः स्यात् । उत्तरत्र [२२.३९] तथा प्रतीकग्रहणात् ।
३. **'भूतले'**

उभौ च तौ युधिष्ठिरो न्यवारयत् तथाऽपरे ।
ततो निषण्णयोस्तयोः सुयोधनो वचोऽब्रवीत् ॥ ३५६ ॥

दुःशासनैषां वासांसि दासानां नो व्यपाकुरु ।
इत्युक्तोऽभ्यगमत् पार्थान् स्ववासांस्यथ ते ददुः ॥ ३५७ ॥

ते [1]चर्म्मवसना भूत्वा तानशिष्टान् प्रकाश्य च ।
निषेदुश्च क्षमायान्ते क्षमामालम्ब्य विस्तृताम् ॥ ३५८ ॥

पुनर्दुर्य्योधनेनोक्तः पार्त्थानामथ पश्यताम् ।
चकर्ष वासो द्रौपद्यास्तदाऽवादीद् वृकोदरः ॥ ३५९ ॥

पापेषु पूर्वस्य तथाऽधमस्य वंशे कुरूणामुरुधर्म्मशीलिनाम्[2] ।
दुःशासनस्यास्य विदार्य्य वक्षः पिबामि रक्तं जगतः समक्षम् ॥ ३६० ॥

**व्यपाकुरु अपाहर ॥ ३५७ ॥ ते क्षमायान्ते । आयः आयतिः । क्षमाया आयस्य चान्ते समाप्तौ, चर्मवसना भूत्वा विस्तृतां क्षमां शान्तिमालम्ब्य तानशिष्टान् अधमान् प्रकाश्य निषेदुः इत्यन्वयः ॥ ३५८–६० ॥**

---

तथाऽपरे भीष्माद्या अपि न्यवारयन् ॥ ३५६ ॥ नः दासानामेषाम् । विकृष्य अपाकुरु । अथ सुयोधनवचनसमनन्तरमेव परैर्विकर्षणं विना ॥ ३५७ ॥ ते चर्मवसना भूत्वा निषेदुः । कुत्र कथं निषेदुः? निषेदुश्च क्षमायां ते इत्यावृत्त्या योजना । तेन पूर्वोत्तरार्धयोर्भिन्नवाक्यत्वेन न पुनरुक्तिः । निषेदुरिति पूर्वत्राप्यनुवर्तनीयमिति ज्ञापनायैव च त इति द्विराह । क्षमाया अन्ते कोणे निषेदुरिति वा । शिरोपधानमितिवत् सन्धिगर्भः सन्धिः । **'क्षमायाया द्यूतभूमेः अन्ते प्रान्ते । द्यूतभूमिः क्षमाया स्यादित्यभिधानात्'** इति प्राचीनटीका । यत्राक्षाणां माया तामक्षमायां क्षमायामाहुः परोक्षप्रिया इत्यर्थः । यत्र स्थितानां क्षमिणामपि क्षमा यातीति वा तां क्षमायामाहुः । क्षमाया अयस्य शुभावहविधेश्च अन्ते अवसाने सत्यपि क्षमामालम्ब्य निषेदुरित्यपि प्राचीनं व्याख्यानम् । सर्वेऽप्यर्थाः सङ्गता एव । एवमेकेन पदेनाहो बहूनां बहूनर्थविशेषानाविश्चकार भगवानाचार्यः विनेयदयावशंवदः ॥ ३५८ ॥ पार्थानामथ पश्यतामित्यनादरे । षष्ठी । पार्थेषु पश्यत्स्वेव । अथ भीमकोपदर्शनान्तरमपीति तस्य मौर्ख्यातिशयमाह ॥ ३५९ ॥ पापेषु पूर्वस्य प्रथमस्य । कुरूणां वंशे जातेष्वधमस्य । उरुधर्म एव शीलमेषामिति उरुधर्मशीलिनः । **'धर्मशीलवर्णान्ताच्च'** [अ.सू.५.२.१३२] इतीनिः । उरुधर्माणां शीलमेषामिति वा ॥ ३६० ॥

---

१. **'ते चीरवसना–'** २. **'–धर्मशालिनाम्'**

विकृष्यमाणे वसने तु कृष्णा सस्मार कृष्णं सुविशेषतोऽपि ।
तदाऽन्यदासीद् वसनं च तस्या दिव्यं सुसूक्ष्मं कनकावदातम् ॥ ३६१ ॥

पुनःपुनश्चैव विकर्षमाणे दुःशासनेऽन्यानि च तादृशानि ।
बभूवुरन्तं न जगाम पापः श्रान्तो न्यषीदत् स्विन्नगात्रः सभायाम् ॥ ३६२ ॥

वस्त्रोच्चये शैलनिभे प्रजाते दुर्य्योधनः प्राह सञ्जातकोपः ।
प्रवेशयेमां[1] गृहमेव शीघ्रं किं नश्चिरेणेति सुमन्दबुद्धिः ॥ ३६३ ॥

तच्छ्रुत्वा वचनं कृष्णा प्रतिज्ञामकरोत् तदा ।
भीमो दुर्य्योधनं हन्ता कर्ण्णं हन्ता धनञ्जयः ॥ ३६४ ॥

शकुनिं त्वक्षकितवं सहदेवो वधिष्यति[2] ।
इत्युक्ते तत् तथेत्याह भीमसेनः सभातळे[3] ॥ ३६५ ॥

**कृष्णा वसने विकृष्यमाणे तु विकृष्यमाणे सत्यपि कृष्णं सुविशेषतोऽपि सस्मारेत्युक्त्या महापद्यपि तस्या मनो भगवन्नियतमेवेत्युक्तं भवति । न त्वापन्निवृत्त्यर्थं तत्स्मरणम् । तस्याः शुद्धभागवतधर्मरतत्वेन काम्यानुष्ठानरहितत्वात् । तदा तद्वसनविकर्षणावसरे ॥३६१–२॥ नः अस्माकं चिरेण विलम्बेन ॥३६३–५॥**

वसने विकृष्यमाणे तु । विकृष्यमाणेऽपि । विकृतं कर्षणं विकर्षणम् । विलज्जं कर्षणं विकर्षणम् । विवसनामेनां करिष्यामीति विभ्रमेण कर्षणं विकर्षणम् । विकृष्यमाणेऽपि कृष्णा तु । तुना तस्याः कातर्यविरहमाह । अकातरा कृष्णं सस्मारेति । सर्वदा कृष्णं स्मरन्त्यपि तदा सुविशेषतः सस्मार । दुष्टशिक्षायै विशेषतः । तेन शिष्टानां रक्षार्थं सुविशेषतः । आपत्काले कथं वर्तितव्यमिति शिष्टशिक्षार्थं च ॥ ३६१ ॥ पुनपुनश्च विकर्षमाण एव । निरन्तरं छलेन विकर्षति सतीत्यर्थः ॥ ३६२ ॥ नः गृहं प्रवेशय । नः विलम्बेन किं फलम् । सदाऽपि मन्दबुद्धिः । दुष्टाचरणेन भाविनोऽनिष्टस्याचिन्तनमिह मान्द्यं बुद्धेः । सम्प्रति द्रौपदीवसनकर्षणवैफल्येनापि, वस्त्रोच्चयदर्शनेनापि तस्य विवेकोदयो न बभूवेति सुमन्दबुद्धिरित्याह ॥ ३६३–४ ॥ नकुलस्य पूर्वजातत्वेऽपि सहदेवस्य ज्येष्ठत्वात् प्रथमं तद्ग्रहणम् । यमयोः पश्चिमो ज्येष्ठ इति वचनात् पूर्वोत्पन्ननकुलापेक्षया पश्चिमोत्पन्नस्य सहदेवस्य ज्येष्ठत्वमिति प्राचीनम् । अपूर्वमिदं यमळयोर्यत्राग्रजः कनिष्ठो भवत्यनुजो ज्येष्ठ इति । तत् द्रौपद्युक्तं सर्वं तथैव भविष्यतीत्याह भीमसेनः । **'अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः । शकुनिं त्वक्षकितवं सहदेवो वधिष्यति'** [स.प.९२.६०] इति भीमवचनं भारते । सम्प्रति

१. 'प्रवेशयैनां गृह–' २. '–देवो हनिष्यति' ३. 'सभातले'

**प्रतिज्ञामाददे पार्थस्तां माद्रीनन्दनस्तथा ।**
**नकुलः प्रतिजज्ञेऽथ शाकुनेयवधं प्रति ॥ ३६६ ॥**

**ततः सुयोधनानुजश्चकर्ष पार्षतात्मजाम् ।**
**गृहाय तन्निशाम्य[1] तु क्रुधाऽऽह मारुतात्मजः ॥ ३६७ ॥**

**अर्ज्जुनार्ज्जुन नैवात्र क्षमा मे तात रोचते ।**
**'पतितस्यास्य देहस्य काष्ठविष्ठासमस्य च ॥ ३६८ ॥**

**तां द्रौपद्युक्तां प्रतिज्ञाम् ॥ ३६६–७ ॥ अर्जुनार्जुनेति सम्भ्रमेण द्विरुक्तिः । अत्र जायोपहतिप्राप्तिसमये । दाहे काष्ठसमस्य । अदाहे विष्ठासमस्य ॥ ३६८ ॥**

---

हनिष्यतीति पाठं पठन्ति । वधधातुः प्राचीनः । केशिनं वधतीति केशव इति हि निर्वदन्ति । **'अक्षरसाम्यान्निर्ब्रूयात्'** इति च यास्कः । वधधातोरनभ्युपगमे **'हनो वध लृटि वा'** इति वक्तव्यम् ॥ ३६५ ॥ द्रौपदीकृतां तां प्रतिज्ञां पार्थोऽर्जुन आददे स्वीचकार । यथा द्रौपद्या प्रतिज्ञातं तथा करिष्यामीति । इयान् विशेषः– भीमस्तथा भविष्यतीत्याह । अर्जुनस्तु यदि तथा भविष्यति तर्हि तथा करिष्यामीत्याह । माद्रीनन्दनः सहदेवश्च यथाऽर्जुनस्तथा, तथा करिष्यामीति प्रतिज्ञामाददे केवलम् । अथ नकुलः प्रतिजज्ञे– न केवलं शकुनिः, तत्पुत्रः उलूकोऽपि वध्यते आवयोर्यमयोरन्यतरेणेति । अथवा शकुनिम्, शाकुनेयं च सहदेवो वधिष्यतीति । तथाहि महाभारते शल्यवधे– **'सहदेवः प्रतापवान् । उलूकस्य महाराज भल्लेनापाहरच्छिरः'** [श.प.२७.३१] इति । वक्ष्यति चाऽचार्योऽपि–**'उलूकं सहदेवोऽथ शकुनिं चातिपापिनम् । जघान–'** [२९.३५] इति । प्रतिज्ञा तु नकुलेनैव कृता । तथाहि सभापर्वणि नकुलवचनम्–**'उलूकं च दुरात्मानं सौबलस्य सुतं प्रियम् । क्रूरं हन्तास्मि समरे–'** [९९.४६] इति । ननु तर्हि नकुलेनैव हन्तव्यमुलूकं सहदेवः कथं जघान? कथं च नकुलप्रतिज्ञां बभञ्ज? एतामाशङ्कां परिहर्तुमेव भगवत्पादो भारततात्पर्यमाह शाकुनेयवधं प्रति प्रतिजज्ञे केवलम्, न पुनः स्वेन वधं प्रतीति । नन्विदं भारतवचनविरुद्धं व्याख्यानम् । तत्र हि नकुल उलूकस्य स्फुटं स्वेन वध्यतामाह–**'उलूकमहं हन्ताऽस्मि समरे'** इति । सत्यमाह । तत्तु पुरुषव्यत्यासेन योज्यम् । **'व्यत्यासः प्रातिलोम्यं च'** इत्यादिना पुराणशैलीभेदविदां न तिरोहितमेतत् । अपिच भारतवचनं साकूतमर्थान्तरं च गमयति– शाकुनेयं सहदेवो हनिष्यति । यदि कथञ्चित् तेन मुक्तस्तदा हन्त, अहमस्मि तस्य हन्तेति । तस्मात् सर्वमनाकुलम् ॥ ३६६ ॥ तत् तु अधर्मस्य पारगमनं निशाम्य ॥ ३६७ ॥ निश्चलतया काष्ठसमस्य । वस्तुतस्तु ततोऽप्यवरस्य विष्ठासमस्य । काष्ठं हि शुष्यति । देहस्तु दुर्गन्धेन दुष्यति विष्ठावत् ॥ ३६८ ॥

---

१. **'तां निशाम्य'**

'फलानि त्रीणि शिष्यन्ते विद्या कर्म्म सुता इति' ।
इति वेदोदितं वाक्यं न सुतो दारदूषणे[१] ॥ ३६९ ॥

दुष्टदारो नचाऽप्नोति लोकानर्द्धो हि दूषितः ।
अरक्षणाद् दूषिताया[२] न त्यागाच्च शुभं भवेत् ॥ ३७० ॥

अतोऽद्य सानुबन्धकान् निहन्मि धार्त्तराष्ट्रकान् ।
इति ब्रुवन् व्यलोकयद् रिपून् दहन्निवौजसा ॥ ३७१ ॥

ददर्श च महाघोरमादातुं परिघं रुषा ।
कर्त्तुं व्यवसितो बुद्ध्या निश्शेषान् धृतराष्ट्रजान्[३] ॥ ३७२ ॥

तदा शिवा ववाशिरे सुयोधनाग्निगेहतः ।
तथैव तत्पितुर्ग्गृहेऽप्यभूद् भयानकं बहु ॥ ३७३ ॥

**इति त्रीणि फलानि । दारधर्षणे का हानिरित्यत आह– (न) सुत इति ॥ ३६९ ॥ दारदूषणे दोषान्तरं चाऽह– दुष्टेति । दुष्टदारस्वीकार एव लोकाभावः, परित्यागे लोकाभावो न भवेदित्यत आह– अरक्षणादिति ॥ ३७० ॥ अतः एतादृशसमये क्षमाया अनुचितत्वात् ॥ ३७१ ॥ व्यवसितः निश्चितः ॥ ३७२ ॥ ववाशिरे कुत्सितशब्दं चक्रुः । वाशृ शब्दकुत्सायामिति[४] धातुः । गेहतः गेहे । सार्वविभक्तिकस्तसिः । भयानकं भयङ्करम्, निमित्तमिति शेषः ॥ ३७३–४ ॥**

---

न सुतो दारदूषणे । तेन फलत्रये सुताख्यं फलं नष्टमित्येषणात्रये पुत्रैषणा गता ॥ ३६९ ॥ ततः कर्मफलं परलोकश्च नङ्क्ष्यतीत्याह– दुष्टदारो नचाऽप्नोति लोकान् । धर्मे चार्थे च कामे च नातिचरामीति प्रतिज्ञाभङ्गात् । तेन लोकैषणा च गता । अर्ध इति त्रिषु भागद्वयं दूषितमित्यर्थः । परसङ्गेन दूषिताया अरक्षणात् गृहमेव हिंसामयं नरकं स्यात् । गृहान्निष्क्राम्य परित्यागे ततोऽप्यनिष्टम् । प्रीत्या सुरक्षिताऽप्यन्यं चकमे । त्यक्ता पुनः स्यादेव बन्धकी । अतः दूषिता दाराः प्रीत्या रक्षितव्या भवन्ति विनाऽङ्गसङ्गम् ॥ ३७० ॥ अनुबन्धाश्च धार्तराष्ट्राश्चेत्युभयेऽपि पापतमा इति कना कुत्सयामास ॥ ३७१ ॥ निःशेषान् कर्तुं बुद्ध्या मनीषया व्यवसितः कृतनिश्चयः ॥ ३७२ ॥ अग्निहोत्रगेहतः ॥ ३७३ ॥

---

१. **'दारधर्षणे'** । वे.ती. व्याख्याने द्वेधाऽपि पाठः दृश्यते । २. **'दूषितायां न'**

३. **'–षान् धार्तराष्ट्रकान् ।'** ४. **'वाशृ शब्दे'** इति प्रचलितो धातुपाठः ।

निमित्तान्यतिघोराणि[१] कुपिते मारुतात्मजे ।
दृष्ट्वाऽऽम्बिकेयो विदुरं पप्रच्छैषां फलं द्रुतम् ॥ ३७४ ॥

आह तं विदुरो ज्येष्ठं क्षणेऽस्मिंस्तव पुत्रकाः ।
सानुबन्धा नशिष्यन्ति वृकोदरबलाहताः ॥ ३७५ ॥

क्रीडसेऽर्भकवत् त्वं हि किं जितं किं जितं त्विति ।
अधर्म्मेण जितानत्र जितान् पश्यसि पाण्डवान् ॥ ३७६ ॥

स्त्रीषु द्यूतेषु वा दत्तं मदान्धेन नरेण वा ।
न दत्तमाहुर्विद्वांसस्तस्य बन्धुभिरेव च ॥ ३७७ ॥

आहार्य्यं पुनराहुश्च तथाऽपि नतु पाण्डवैः ।
तत् कृतं तव पुत्राणां ख्यापयद्भिरशिष्टताम् ॥ ३७८ ॥

इत्युक्त आहाऽम्बिकेयो निमित्तानां फलं कथम् ।
न भवेदिति स प्राह[२] द्रुतं कृष्णा विमुच्यताम्[३] ॥ ३७९ ॥

**नशिष्यन्ति नङ्क्ष्यन्ति । अवशिष्टा न भविष्यन्तीति वा ॥ ३७५ ॥ किं जितं किं जितम् । अस्मिन् द्यूते पणत्वेनोत्सृष्टे(षु) किं जितम्, इदानीं पणत्वेनोत्सृष्टं किं जितमिति, वदन्निति शेषः ॥३७६–८॥ द्रुतं कृष्णा विमोच्यताम् । तोषयस्व वरैश्चैनाम् । एवं सति निमित्तफलं न भवेदिति वाक्यशेषः ॥ ३७९–८२ ॥**

---

दृष्ट्वेत्यन्धं परिजहासेव । विज्ञायेत्यर्थः । कथमन्धः पश्येत्? ॥ ३७४ ॥ पुत्रकाः तव प्रीतिपात्राणि । वस्तुतः क्षुद्राः पुत्राः । नङ्क्ष्यन्तीति वक्तव्यम् । नशिष्यन्तीत्याह । अनेनाक्षराधिक्येन निःशेषं नङ्क्ष्यन्ति नावशिष्यन्त इत्याह । तमो विशन्तीति यावत् । उभयपदत्वमिव धातूनामिड्विकल्पोऽपि प्रायो भवतीति च सूचयति । न शिष्यन्ति इति द्वे पदे इति विवक्षित्वा **'नावशिष्टा भविष्यन्ति'** इत्यपि व्याचक्षते ॥ ३७५–६ ॥ तस्य नरस्य बन्धुभिस्तत् पुनराहार्यमेव स्यादिति चाऽहुः ॥ ३७७–९ ॥

---

१. **'निमित्तान्यथ घोराणि'** इति क्वचित् ।

२. अत्रापि मूलकोशे **'स प्राह'** इति विसर्गरहित एव पाठः ।

३. **'विमोच्यताम्'** । वे.ती. पाठोऽपि तथेति भाति ।

तोषयस्व वरैश्चैनामन्यथा ते सुतान् मृतान् ।
विद्धि भीमेन निष्पिष्टान् माऽत्र[१] ते संशयो भवेत् ॥ ३८० ॥

कृष्णा च पाण्डवाश्चैव तपोवृद्धिमभीप्सवः ।
तपसा नैव धक्ष्यन्ति तेन जीवन्ति ते सुताः ॥ ३८१ ॥

तथाऽपि यदि कृष्णां त्वं न मोचयसि ते सुतान् ।
हनिष्यति न सन्देहो बलेनैव वृकोदरः ॥ ३८२ ॥

इतीरितो[२] विनिर्भर्त्स्य पुत्रं दुःशासनं नृपः ।
अमोचयद् वरैश्चैनां छन्दयामास पार्षतीम् ॥ ३८३ ॥

छन्दिता सा वरैस्तेन धर्म्मे भागवते स्थिता ।
नैवाऽत्मनो [३]वरान् वव्रे वव्रे तेषां विमोक्षणम् ॥ ३८४ ॥

युधिष्ठिरस्य सभ्रातुः सराष्ट्रस्य विमोक्षणम् ।
ददौ नृपोऽस्या न पुनश्छन्द्यमानाऽपि साऽवृणोत् ॥ ३८५ ॥

भर्त्तुर्विष्णोश्च नान्यस्माद् वरस्वीकार इष्यते ।
एवं हि भगवद्धर्म्मस्तस्मात् सा नावृणोत् परम् ॥ ३८६ ॥

**छन्दयामास तोषयामास वरान् वृणीष्वेति ॥ ३८३–५ ॥ आत्मार्थं किमिति वरान् न वव्र इत्यत आह– भर्तुरिति । नेष्यते, परमभागवतधर्मस्थैरिति शेषः । कुतो नेत्यत आह– एवं हीति । परम् अन्यम्, वरमिति शेषः ॥ ३८६ ॥**

---

माऽत्र ते संशयो भवेत् । माशब्दोऽयम् । माङ्यपि लकारव्यत्ययश्छन्दसीष्यत इत्युक्तम् ॥ ३८०–१ ॥ तपोबलेन आत्मबलेनैव च ॥ ३८२ ॥ छन्दयामास छन्दानुसरणेन सान्त्वयामास । पार्षतीं पृषतस्य पौत्रीम् ॥ ३८३ ॥ छन्दिता यथेष्टं वरान् वृणीष्वेत्यनुरुद्धा । तेषां पाण्डवानाम् । अविधिना हृतत्वात् विहितं मोक्षणं वव्रे ॥ ३८४ ॥ छन्द्यमाना सान्त्वपूर्वमर्थ्यमानाऽपि ॥ ३८५–७ ॥

---

१. '–ष्टान् नात्र' २. 'इतीरिते विनिर्भर्त्स्य' ३. 'वरम्' इति क्वचित् ।

अधर्म्मतो हृतत्वात्तु तद् दानं न वरो भवेत् ।
इति मत्वा पाण्डवानां वव्रे कृष्णा विमोक्षणम् ॥ ३८७ ॥

श्वशुरादैहिकवराः क्षत्रियायास्त्रयो यतः ।
उक्ताः शतं च विप्राया धर्म्मे भागवते ततः ।
हेतुनाऽनेन[1] वव्रे सा नान्यत् किञ्चिदतः परम् ॥ ३८८ ॥

ततो विमुक्ताः प्रययुश्च पार्त्था गुरून् प्रणम्य स्वपुरं सकृष्णाः ।
दुर्य्योधनानन्तरजो जगाद तातं निजं पापकृतां प्रधानः ॥ ३८९ ॥

समस्तपाण्डवश्रियं समागतामहो पुनः ।
व्यमोचयो वृकोदराद् वधश्च नो ध्रुवो भवेत्[2] ॥ ३९० ॥

अतः पुनश्च पाण्डवान् समाह्वयस्व नः कृते ।
पुनश्च देवनं भवेज्जितो वनं प्रयातु च[3] ॥ ३९१ ॥

**एवं तर्हि युधिष्ठिरादिविमोक्षणवरस्वीका(रेऽपि) धर्महानिरित्यत आह– अधर्मत इति । तद्दानं युधिष्ठिरादिविमोक्षणदानम् ॥ ३८७ ॥ प्रकारान्तरेणापि भागवतधर्महानिर्नाभूदित्याह– श्वशुरादिति । ततः भागवतधर्महानिर्नाभूदिति वाक्यशेषः । अनेन हेतुना श्वशुराद् वरत्रयस्वीकारेऽपि भागवतधर्माविरोधेन हेतुना । अतः वृतेभ्यो वरेभ्यः परमुपरि अन्यत् किञ्चित् अभीष्टं न वव्रे ॥३८८–९०॥ नः कृते अस्मदर्थे । जिता वनं प्रयान्त्विति । जितानां वनप्रयाणं नः पणः कर्तव्य इति भावः ॥ ३९१– २ ॥**

---

त्रयो वरा विहिताः । ततः स वरो नाविहितो भवेत् । वरत्रयमेव च वृतं तया– युधिष्ठिरस्य मोक्षणम्, तद्भ्रातॄणां मोक्षणम्, राष्ट्रस्य मोक्षणं चेति । अतः वरत्रयस्य वृतत्वात्, अतः परं पुनरपि, परं चतुर्थमन्यत् किञ्चिन्न वव्रे । अन्यत् किञ्चिदिति सामान्ये नपुंसकम् । अन्यं कञ्चन वरं न वव्रे ॥ ३८८ ॥ विमुक्ता विषमाया विपदो मुक्ताः । अत एव प्रहृष्टा ययुः ॥ ३८९–९० ॥ जितो वनं प्रयातु च । अयमर्थः । उभौ किल दीव्यतः । उभयोर्यो जीयते स वनं प्रयातु । सपरिवारो यातु । दुर्योधनार्थे शकुनिर्दीव्यतीति दुर्योधनधर्मराजयोर्यो जीयते स वनं यातु । प्रयातु चेति चकारेण यो जयति स समग्रस्यापि राजा भवतु ॥ ३९१ ॥

---

१. **‘हेतुना तेन’** २. **‘ध्रुवं भवेत्’** ३. **‘–ज्जिता वनं प्रयान्तु च’** । वे.ती. पाठोऽपि तथा ।

तेनोक्तः स तदा राजा पाण्डवान् पुनराह्वयत् ।
पुनः पित्रा समाहूतो देवनाय युधिष्ठिरः ।
भ्रातृभिर्वार्य्यमाणोऽपि कृष्णया चाऽगमत् सभाम् ॥ ३९२ ॥

द्वादशाब्दं वने वासमज्ञातत्वेन वत्सरम्[1] ।
वासं प्रसिद्धनृपतेः पुरे नैवातिदूरतः ॥ ३९३ ॥

कृष्णायाः पाण्डवानां वा दर्शनेऽज्ञातवासिनाम् ।
एकस्यापि समस्तानां द्वादशाब्दं पुनर्वनम् ॥ ३९४ ॥

वत्सराज्ञातवासं च त्यागेऽप्युक्तविधेस्तथा ।
दुर्य्योधनः पणं चक्रे बुद्ध्या दुःशासनोक्तया ॥ ३९५ ॥

गान्धारेण पुनश्चाक्षहृदयज्ञेन धर्म्मजः ।
पराजितो वनं यातुमैच्छत् सभ्रातृको यदा ॥ ३९६ ॥

तदा ननर्त्त पापकृत् सुयोधनानुजो हसन् ।
वदंश्च मारुतात्मजं पुनःपुनश्च गौरिति ॥ ३९७ ॥

उवाच च पुनः कृष्णां नृत्यन्नेव सभातळे[2] ।
अपतिर्ह्यसि कल्याणि गच्छ दुर्य्योधनालयम् ॥ ३९८ ॥

**अतिदूरतो न । हस्तिनानगरादिति शेषः । प्रसिद्धनृपतेः (पुरे) एकवत्सरमज्ञातवासं च ॥ ३९३–४ ॥ उक्तनियमस्य त्यागेऽपि तथा वनवासादि ॥३९५॥ अक्षहृदयज्ञेन अक्षहृदयविद्यां जानता ॥३९६–८॥**

---

भ्रातृभिः कृष्णया च वार्यमाणोऽपि भ्रातृभिः कृष्णया च सहाऽगमत् ॥ ३९२ ॥ अज्ञातत्वेन वत्सरम् । अत्यन्तसंयोगे द्वितीया ॥ ३९३ ॥ परिवारस्येयत्तां स्वानुगुणतया पूर्वमेव निगमयति– कृष्णायाः पाण्डवानां वेति । तेन जितः सदारसोदरो वनं यायादिति पणः । सोदराः सर्वे । दारेषु प्रधानमहिषी गच्छेदेव । अन्या यथाच्छन्दं गच्छेयुर्नवा गच्छेयुरिति ॥३९४॥ उक्तनियमस्य बुद्धिपूर्वकमुल्लङ्घनेऽपि तथा द्वादशाब्दं पुनर्वने वासम्, वत्सरं चाज्ञातवासम् ॥ ३९५ ॥ अक्षप्रयोगस्य हृदयं गुह्यं जानातीत्यक्षहृदयज्ञः ॥ ३९६–८ ॥

---

१. **'–मज्ञातं त्वेकवत्सरम्'** । **'–मज्ञातं चैकवत्सरम्'** इति क्वचित् । अयमेव वे.ती. पाठोऽपि । २. **'सभातले'**

एतेऽखिलाः [1]षण्ढतिलास्तमोऽन्धमाप्ता[2] नचैषां पुनरुत्थितिः स्यात् ।
इति ब्रुवाणोऽनुचकार भीमं तदाऽहसन् धार्त्तराष्ट्राश्च सर्वे ॥ ३९९ ॥

तदाऽकरोद् भीमसेनः प्रतिज्ञां हन्तास्मि वो निखिलान्[3] सङ्गरेऽहम् ।
इतीरिते शरणं द्रोणमेव जग्मुः समस्ता धृतराष्ट्रपुत्राः ॥ ४०० ॥

यत्र द्रोणस्तत्र पुत्रस्तत्र भीष्मः कृपस्तथा ।
नचात्येति गुरून् भीम इति तं शरणं ययुः ॥ ४०१ ॥

अब्रवीद् धार्त्तराष्ट्रांश्च द्रोणो विप्रोऽपि सन्नहम् ।
सपुत्रः सकृपः शस्त्रं ग्रहीष्ये भवतां कृते ॥ ४०२ ॥

रक्षणे भवतां चैव कुर्य्यां यत्नं स्वशक्तितः ।
नतु भीमाद् रक्षितुं वः शक्तः सत्यं ब्रवीम्यहम् ॥ ४०३ ॥

ततो ययुः पाण्डवास्ते सभाया वनाय कृष्णासहिताः सुशूराः ।
गत्याऽनुचक्रे युवसिंहखेलगतिं भीमं धार्त्तराष्ट्रोऽपहस्य ॥ ४०४ ॥

**षण्डतिलाः निर्वीर्याः । तमोऽन्धं प्राप्ताः । पुनरुत्थितिर्न स्यात् । तमोऽन्धं प्राप्तानां यथोर्ध्वगतिर्न भवेत् तथैव तेषामप्येतदापन्निवृत्तिः कदाऽपि नच भविष्यतीति भावः । अनुचकार गमनादिना । तदा भीमगमनाद्यनुकारेण ॥ ३९९ ॥ हन्तास्मि हनिष्यामि ॥ ४०० ॥ किमभिप्रायेण द्रोणमेव जग्मुरित्यत आह– यत्रेति । पुत्रः अश्वत्थामा । द्रोणादीनतिक्रम्यापि भीमो निहनिष्यतीत्यत आह– नचात्येति गुरूनिति ॥ ४०१–३ ॥ युवसिंहखेलगतिं युवसिंह इव खेलगतिं चतुरगतिम् ॥ ४०४ ॥**

---

षण्ढतिलाः निष्फला आरण्यास्तिलाः । न वेसवाराय स्युः । न तेमनाय । न तैलाय । नापि श्राद्धकर्मणे । तथा व्यर्थं जीवन् षण्ढतिल उच्यते । **'जर्तिलः कथ्यते सद्भिरपि षण्ढतिलः स्मृतः'** इति हलायुधः । तमोऽन्धम् । अनन्तं दुःखम् ॥ ३९९–४०० ॥ पुत्रो द्रोणस्य, अश्वत्थामा । पितुः शिष्यो ह्यात्मशिष्य इति सोऽपि गुरुस्थानीयः । विप्रत्वाच्च ॥ ४०१ ॥ विप्राभ्यामेव पुत्रकृपाभ्यां सहितः ॥ ४०२ ॥ भवतां रक्षणे च यत्नं कुर्यामेव ॥ ४०३ ॥ वनाय वने वासाय । नत्वशक्ततया, किन्तु वचनरक्षायै धर्मबद्धतया । यतः सुशूराः महावीराः । खेलनं खेलः । खेलार्था गतिः । क्रीडतो युवसिंहस्य गतिरित्येतत् ॥ ४०४ ॥

---

१. **'षण्डतिला–'** इति वे. ती. पाठः स्यात् । २. **'–स्तमोऽन्धं प्राप्ता–'** । वे.ती. पाठोऽपि तथा । ३. **'वो ह्यखिलान्'**

दृष्ट्वा सभाया अर्द्धनिष्क्रान्तदेहो व्यावृत्य भीमः प्राह संरक्तनेत्रः ।
ऊरुं तवान्यं च रणे विभेत्स्य इत्युक्त्वाऽसौ निर्गतोऽसत्सभायाः ॥ ४०५ ॥

प्रयातानानु तान् कुन्ती प्रययौ पुत्रगृद्धिनी ।
रोरुद्यमानां विदुरः स्थापयामास तां गृहे ।
प्रणम्य तां ययुः पार्त्थाः सकृष्णाः शीघ्रगामिनः ॥ ४०६ ॥

युधिष्ठिरोऽवाग्वदनो ययौ न क्रोधचक्षुषा ।
दहेयं कौरवान् सर्वानिति कारुणिको नृपः ॥ ४०७ ॥

उद्धृत्य बाहू प्रययौ बाहुषाली[१] वृकोदरः ।
आभ्यामेवाखिलाञ्छत्रूञ्छक्तो हन्तुमहं त्विति ॥ ४०८ ॥

अबद्धकेशा प्रययौ द्रौपदी सा सभातळात्[२] ।
मुक्तकेशा भविष्यन्ति धार्त्तराष्ट्रस्त्रियस्त्विति ॥ ४०९ ॥

वर्षन् पांसून् ययौ पार्त्थ इत्थं शत्रुषु सायकान् ।
वर्षयानीत्यभिप्रायः[३] परमास्त्रविदां वरः ॥ ४१० ॥

यमाववाङ्मुखौ यातौ नाऽवयोः शत्रवो मुखम् ।
पश्यन्त्वस्यामवस्थायामित्येव धृतचेतसौ ॥ ४११ ॥

**असत्सभायाः । दुर्योधनाद्यसत्तदनुबन्धिजनयुक्तत्वात् सभाया असत्त्वम् ॥ ४०५ ॥ प्रयातान् गच्छतः । कर्तरि क्तप्रत्ययः । पुत्रगृद्धिनी पुत्रस्नेहवती । रोरुद्यमानां भृशं रुदन्तीम् ॥ ४०६ ॥ 'इति कारुणिको नृपः' इत्यादावितिशब्दस्य इत्यभिप्रायवानित्यर्थः ॥ ४०७–१० ॥ अस्यामवस्थायां एवं निर्गमनवेलायाम्**

---

सहजलक्षणतया पूर्वमीषद्रक्तनेत्रः । सम्प्रति कोपातिशयेन संरक्तनेत्रः ॥ ४०५ ॥ रोरुद्यमानां क्रियासमभिहारेण भृशं वा रुदन्तीम् ॥ ४०६–९ ॥ वर्षयाणीति वक्तव्ये वर्षयानीत्याह । यथा सुषुम्णां सुषुम्नामाहुः ॥ ४१० ॥ इत्येव ।

---

१. 'बाहुशाली' २. 'सभातलात्' ३. 'वर्षयामीत्यभिप्रायः'

प्रेतसंस्करसूक्तानि पठन् धौम्योऽग्रतो ययौ ।
हतेषु धार्त्तराष्ट्रेषु मया कार्य्याः क्रिया इति ॥ ४१२ ॥

तानथानुययुः सूता रथैः परिचतुर्द्दशैः ।
सूदाः पौरोगवाश्चैव भृत्या ये त्वाप्तकारिणः ॥ ४१३ ॥

ततस्ते जाह्नवीतीरे वने वटमुपाश्रिताः ।
न्यषीदन्नागतान् दृष्ट्वा समस्तान् पुरवासिनः ॥ ४१४ ॥

ततस्तु ते सर्वजगन्निवासं नारायणं नित्यसमस्तसद्गुणम् ।
स्वयम्भुशर्वादिभिरर्चितं सदा भक्त्याऽस्मरन् भक्तभवापहं प्रभुम् ॥ ४१५ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये पाण्डववनप्रवेशो नाम**
**एकविंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **२७६६**+४१५=**३१८१**]

**॥ ४११–२ ॥ परितश्चतुर्दशैः उपरथत्वेन परितश्चतुर्दशरथयुक्तैः रथैः प्रधानरथैः । प्रधानभूतैकैकस्य परितश्चतुर्दशचतुर्दशोपरथा आसन्निति भावः । पौरोगवाः सूदाध्यक्षाः ॥ ४१३–५ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायामेकविंशोऽध्यायः

—०—

---

पूर्वेषामिव नात्र यमयोः कश्चिद् गूढोऽभिप्रायविशेष इत्येवकारार्थः ॥ ४११–२ ॥ परिवारतया परिगताश्चतुर्दश परि-चतुर्दशाः । तै रथैः । **'सङ्ख्याऽव्यय–'**[अ.सू.२.२.२५] इति सङ्ख्येये वर्तमानया सङ्ख्ययाऽव्ययं समस्यते । **'इन्द्रसेना-दयश्चैतान् भृत्याः परिचतुर्दशैः । रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः'** [व.प.१.११] इति किर्मीरवधे । **'परिचतुर्दशैः अधिकचतुर्दशैः पञ्चदशभी रथैरित्यर्थः'** इत्येके व्याचक्षते । सूदाः पाककारिणः । ये सुखकरमुन्नतमाहारं ददति । ये सूदयन्ति च मृगान् पाकार्थम् । पौरोगवाः सूदानामुपद्रष्टारः । पुरः पुरस्तादेव महानसकर्मणि गौर्नेत्रमेषामिति पुरोगवाः पाककर्तारः । तेषामयमध्यक्षः पौरोगवः । पुरस्ताद् विद्यमाना गौर्भूमिः पाकशाला पुरोगवी । तस्यायमिति वा । आप्तमन्तरङ्गं कर्म ये कुर्वन्ति त आप्तकारिणः । अन्तरङ्गभृत्याः । ये भृत्यर्थं भाटकार्थं कर्म कुर्वन्ति ते भृत्याः ॥ ४१३ ॥ **'ददृशु-र्जाह्नवीतीरे प्रमाणाख्यं महावटम्'** [व.प.१.११] इति, **'ते तं दिवसशेषेण वटं गत्वा तु पाण्डवाः । ऊषुस्तां रजनीं**

**वीराः संस्पृश्य सलिलं शुचि'** [१.४१] इति च ॥ ४१४ ॥ नराणां समुदायो नारम् । तेषामयनो नारायणस्तम् । तदेतदाह– सर्वजगन्निवासम् । अरा दोषा इति नाराः सद्गुणाः, तेषामयनम् । तदेतदाह– नित्यसमस्तसद्गुणम् । नरेषु अन्तर्नियामकतया स्थिता नारास्तत्वाभिमानिनो देवाः । तेषामयं पूज्यत्वादयनः । तदेतदाह– स्वयम्भुशर्वादिभि-रर्चितम् । नराणामयमिति नारः संसारः । तमाययति गमयत्यपगमयतीति च नारायणः । निर्दोषत्वान्नारा मुक्ताः, तेषामयमयनः । तदेतदाह– भक्तभवापहम् । नारौ जीवकलामानिनौ ब्रह्मवायू । नारा च निर्दोषा रमा । तयोश्च तस्याश्चायमयनः । तदेतदाह– प्रभुम् । सर्वेभ्यः प्रकृष्टो भवतीति प्रभुः । एतेन पञ्चात्मा हरिरपि स्मृतो भवति । सर्वजगन्निवास इत्यनिरुद्धः । न क्वापि निरुद्धोऽस्य वास इति । नित्यसमस्तसद्गुणः प्रद्युम्नः । प्रकृष्टं द्युम्नं द्योतमानं गुणजात-मस्येति । स्वयम्भुशर्वादिभिरर्चितः सङ्कर्षणः । ब्रह्मादिभिः संस्तुतस्तान् संसारात् कर्षतीति । भक्तभवापहो मोक्ष-प्रदो वासुदेवः । अथच शक्यं रीत्यन्तरेणाप्यनुसन्धातुम् – सर्वजगन्निवास इति वासुदेवः । सर्वत्र वसन् देवो हि वासुदेवः । सद्गुणः प्रद्युम्न इति समानम् । जगद्रक्षार्थं ब्रह्मादिभिरर्चित इत्यनिरुद्धः । स्थितिकारणं ह्यनिरुद्धः । संसारात् कर्षणाद् भक्तभवापहः सङ्कर्षणः । स्वयम्भुशर्वादिभिस्तदातदा तत्तदवतारार्थमर्चितमित्यनन्ता अप्यवताराः सङ्गृहीताः ॥ ४१५ ॥ पाण्डववनप्रवेशो नामेति । खाण्डवदाहादारभ्य वनप्रवेशपर्यन्तकथोऽयमध्याय इत्यर्थः ॥ ✲ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतमेकविंशाध्यायविवरणं सतां हृदाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायामेकविंशोऽध्यायः**

—०—

२२-१२-१२

# द्वाविंशोऽध्यायः

**[अरणीप्राप्तिः]**

**ॐ ॥ आगन्तुकामान् पुरवासिनस्ते संस्थाप्य कृच्छ्रेण[1] कुरुप्रवीराः ।**
**रात्रौ प्रविष्टा गहनं वनं च किर्म्मीरमासेदुरथो नराशम् ॥ १ ॥**

**बकानुजोऽसौ निखिलैरजेयो वराद् गिरीशस्य निहन्तुकामः ।**
**सदारसोदर्य्यमभिप्रसस्रे भीमं महावृक्षगिरीन् प्रमुञ्चन् ॥ २ ॥**

**ॐ ॥ गहनं दुष्प्रवेशम् ॥ १ ॥ सदारसोदर्यं भीमं निहन्तुकामः ॥ २ ॥**

---

ॐ ॥ वनपर्वकथासङ्ग्रहोऽयमध्यायः । तत्कालभाविकृष्णकथासङ्ग्रहश्च । पाण्डवैः सह वासाय पुरं विहाय आगन्तुं कामयन्त इति आगन्तुकामाः । काममनसोः परयोस्तुमो मलोपः । संस्थाप्य निवार्य । कुरुप्रवीरा इति कुरुपाण्डवन्यायं विवृणोतीव । कुरुवीराः कौरवाः । पाण्डवाः कुरुप्रवीरा इति । गहनमविरळतरुच्छायम् । दिवाऽपि यत्र नाऽतपप्रसरः । वनं काम्यकं नाम । पुरपरिसरगतत्वात् पौरैरपि काम्यते विहाराय मृगयायै च राजभिरपीति काम्यकम् । काम्यं च कमनीयं चेति । अथो प्रवेशसमनन्तरमेव । किर्मीरं च नीचं किर्मीरमासेदुः । **'नीचत्वे चः प्रयुज्यते'** । नीचत्वमेव स्फुटयति–अथोनराशम् । नराशम्, अथ ऊनराशम् । नरेभ्य ऊना ऊनरमणाश्च मृगा ऊनरा उच्यन्ते । तानश्नाति । सर्वभक्षमित्येतत् । मारकाण्यायुधानि किरन् क्षिपन् प्राणिजातं मीत्वा हिंसित्वा रमत इति किर्मीरः । किरतीति किर्मीर इति वैयाकरणाः । तेषां पक्षे किरतेरीरन् मुडागमश्च । मङ्गलारम्भश्चायं वनवासस्य यद् दुष्टनिधनमित्याह– अथो ॥१॥ बकानुजोऽसौ । सखा च हिडिम्बस्य । समानोदरे शयिताः सोदर्याः । शयित इत्येतस्मिन्नर्थे यः प्रत्ययः । **'सोदराद् यः'** [अ.सू.४.४.१०९] । महावृक्षान् महागिरीन् महाशिलाश्च । सदारसोदर्यं भीमं निहन्तुकामः । अभियोद्धुमभिलष्य अभिमुखं प्रसभमनिरीक्षितं सरणमभिप्रसरणम् । उल्काप्रकाशेन सरणं च प्रसरणम् । तेषां वनगमनं विज्ञाय तत्र निरीक्षमाणः स्थित आत्मनो महानयं भोजनलाभ इति मन्यमान इत्यात्मनेभाषयाऽऽह । प्रकामं निरन्तरं मुञ्चन् ॥ २ ॥

---

१. **'–स्ते कृच्छ्रेण संस्थाप्य कुरु–'** इति क्वचित् ।

स सम्प्रहारं सह तेन कृत्वा भीमो निपात्याऽशु धरातळे[1] तम् ।
चक्रे मखे सङ्गरनामधेये प्रसँह्य नारायणदैवते पशुम् ॥ ३ ॥

निहत्य रक्षो वनमद्धयसंस्थास्तदा यतीनामयुतैः समेताः ।
अशीतिसाहस्रमुनिप्रवीरैर्दशांशयुक्तैः सहिता व्यचिन्तयन् ॥ ४ ॥

विचिन्त्य तेषां भरणाय धर्म्मजः सम्पूज्य सूर्य्यस्थितमच्युतं प्रभुम् ।
दिनेऽक्षयान्नं पिठरं तदाऽऽप रत्नादिदं कामवरान्नदं च ॥ ५ ॥

**सम्प्रहारं युद्धम् । प्रसह्य आशु निपात्य ॥ ३ ॥ दशांशयुक्तैः । अशीतिसाहस्रतो दशांशा अष्टसहस्राणि ॥ ४ ॥ दिने दिवा ॥ ५ ॥**

---

सम्प्रहारो रणः । यत्र समवेताः प्रहरन्ति स सम्प्रहारः । यत्र च प्रभूतः संहारः, प्रसह्य वा । प्रसह्याऽशु नीचैः पातयित्वा ॥ ३ ॥ यतीनामयुतमेषामस्तीति यतीनामयुतैः । मत्वर्थीयोऽच् । अन्यथा यतीनामयुतेनेत्यवक्ष्यत् । तावद्यतिभिः सङ्गतैर्गृहस्थैः स्नातकैर्वा मुनिप्रवीरैः, ये पूर्वं धर्मराजसद्मनि स्थिताः, ये च पाण्डवैः सह वनमागताः तैः समेताः पाण्डवाः पश्चापि सहिताः सह स्थिताः कथमियतां भरणं शक्यं नः स्यादिति विमृशन्तोऽचिन्तयन् । यद्वा अयुतानि पृथक्कर्तुमशक्यानि, अयुतसिद्धानीत्येतत्, दश सहस्राणि । तेनायुतमित्येकवचनान्तमिवायुतानीति बहुवचनान्तमपि दशसहस्रवचनम् । अतो न विरोधः । शिष्याणां भाषासम्पदभिवर्धतामित्येतादृशान्यपूर्वाणि पदानि प्रयुङ्क्ते भगवानाचार्यः करुणया । दशस्वेकोंऽशः, अष्टौ सहस्राणि । **'दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् । ह्रियते रुग्मपात्रीभिर्यतीनामूर्ध्वरेतसाम्'** [व.प.२३४.४६] इति, **'अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा । भुञ्जते रुग्मपात्रीषु युधिष्ठिरनिवेशने'** [४४] इति, **'अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः । त्रिंशद्दासीक एकैको यान् बिभर्ति युधिष्ठिरः'** [४५] इति च द्रौपदीसत्यभामासंवादे । न केवलमिन्द्रप्रस्थे । वनेऽप्येते युधिष्ठिरमनुययुरित्यनेन सूचयति । तथाहि वने वसतां पाण्डवानां वर्तनविषये वैशम्पायनवचनम्–**'ब्राह्मणानां सहस्राणि स्नातकानां महात्मनाम् । दश मोक्षविदां तद्वद् यान् बिभर्ति युधिष्ठिरः'** [व.प.४७.६] इति इन्द्रलोकाभिगमने ॥ ४ ॥ विचिन्त्य च लब्धपरिहारः । सूर्यस्थितमच्युतमिति । सूर्यः स्तूयते । अच्युतस्य चासाधारणधर्मा उच्यन्ते । तेन ज्ञायते सूर्यस्थितं ब्रह्मादीनामपि प्रभुमच्युतं सन्तोष्य पूजयामासेति । तथाहि महाभारते धर्मराजवचनम्–**'सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च । न तद् भूतमहं मन्ये यदर्कादतिरिच्यते'** [व.प.३.२६] इति । नहि ब्रह्मादित आधिक्यमर्कस्य युज्यते । **'महामर्कम्'** इत्युक्तो ह्यर्कोऽत्रोच्यते । स च **'एको विष्णुर्महद् भूतम्'** इत्युक्तो नारायण इति स्फुटं चक्षुष्मताम् । अन्यच्च– **'त्वामिन्द्रमाहुस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिः'** [४१] इत्यादि । मूलरूपे च धर्मराजस्य समानकक्ष्यः सूर्यः । समानं पूजयेयुः । न सम्पूजयन्ति । सभक्ति पूजनं हि सम्पूजनं नाम । स्वोत्तमानेव सम्पूजयन्ति । पिठरं स्थाली । पाकसाधनभाण्डम् । पच्यते तस्मिन्निति पिठिरं पिठरं

---

१. **'–तले तम्'**

**बभार तेनैव युधिष्ठिरस्तान् प्रत्येकशस्त्रिंशतदासिदासकान्[1] ।**
**सुवर्ण्णपात्रेषु हि भुञ्जते ये गृहे तदीये बहुकोटिदासिके[2] ॥ ६ ॥**

**सत्सङ्गमाकाङ्क्षिण एव तेऽवसन् पार्त्थैः सहान्ये च मुनीन्द्रवृन्दाः ।**
**शृण्वन्त एभ्यः परमार्त्थसाराः कथा वदन्तश्च पुरातनास्तथा ॥ ७ ॥**

**त्रिंशतं त्रिंशत् । तदीये युधिष्ठिरसम्बन्धिनि गृहे भुञ्जते, वनवासात् पूर्वमिति शेषः ॥ ६ ॥ परमार्थसाराः भगवद्विषयत्वेनोत्तमाः कथाः ॥ ७ ॥**

---

वेति वैयाकरणाः । अक्षयान्नमक्षयभोगप्रदम् । अद्यत इत्यन्नमुपजीव्यं भोगमात्रमुच्यते । तदेव विविच्याऽह– रत्नादिदं कामवरान्नदं च । रत्नादि येन शरीरभूषणम् । कामवरान्नं येन शरीरपोषणम् । यद्यत् काम्यते तत्तद् वरमदनीयं च ददाति । भक्ष्यादिकमपि ददाति । पेयं पायसादिकमपि ददाति । **'त्रेधा वा इदमन्नं विहितम् । अशनं पानं खादः'** इति हि श्रुतिः ॥ ५ ॥ तेनैव पिठरेण तान् यतीन् गृहमेधिनो मुनींश्च प्रत्येकशस्त्रिंशतदासीदासकान् बभार युधिष्ठिरः । एकमेकं प्रतीति प्रत्येकशः । वीप्सायां शस् । **'त्रिंशद्दासीक एकैकः'** इत्यस्येदं विवरणम् । त्रिशब्दस्य त्रिन्भावः, दशतः शभावः, तश्च प्रत्ययः । त्रिंशत्, त्रिंशतम्, त्रिंशतिरिति त्रीणि रूपाण्यपि प्राचीनाः प्रयुञ्जते । भारते दासीपदं दासानामप्युपलक्षणमिति **'त्रिंशतदासिदासकान्'** इत्याह । ङ्यन्तस्याऽबन्तस्य च सञ्ज्ञाच्छन्दसोर्बहुलं ह्रस्वो भवतीति [अ.सू. ६.३.६३] दासिदासकानित्याह । प्रायः स्त्रीपूर्वो हि निर्देशो भवति । यथा–सीतारामौ, स्त्रीपुंसौ । अत आह– दासिदासकानिति । न दास्यो दास्य आसन् । न दासा दासाः । भृत्या अपि भर्तृसमानयोगक्षेमा आसन्निति ह्रस्वेन कप्रत्ययेन च सूचयामास । बहुकोटिदासिके । बहुकोटिदासीदासके । यद्यपि **'शतं दासीसहस्राणि कौन्तेयस्य महात्मनः'** [४८] इति भारते पठ्यते । तत्र शतशब्दो बहुत्वार्थो व्याख्येय इति सूचयितुं 'बहुकोटिदासिके' इत्याह । अन्यथा **'त्रिंशद्दासीक एकैकः'** इति दशलक्षत्रयं प्रायस्तत्रैवाऽसीदिति **'शतं दासीसहस्राणि'** इत्यसङ्गतमभविष्यत् । ये पुरा भुञ्जते अभुञ्जत । एतेन पुरवासिनो निवृत्ताः, मुनयः सहैवाऽगता इति विज्ञायते । **'निवृत्तेषु तु पौरेषु रथानास्थाय पाण्डवाः । आजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटम्'** [व.प.१.४१] इति किर्मीरवधे ॥ ६ ॥ ननु मुनीन्द्रा यतयश्च किमिति पुरा पुरवासिनोऽभवन् । तत्रापि राजगृहवासिनः? अथ किमिति सम्प्रति वनमागताः केवलं भरणभाराय पाण्डवानाम्? आह– सत्सङ्गमाकाङ्क्षिण एव । पार्थैः सह वास एव प्रवृत्तिबीजम् । वने वा नगरे वेत्यवर्जनीयसन्निधिरित्यर्थः । वृंहन्तीति वृन्दाः । समूहाः । वृहि वृद्धौ । **'अब्दादयश्च'** [६.११] इति दशपादिकायामब्दपदसहपाठात् पुल्लिङ्गोऽयं वृन्दशब्दः । **'वृञ् वरणे । वृणोतीति वृन्दः'** [का.सू.वृ.३.६४] इति दुर्गसिंहः । अन्ये च ये पुरा पाण्डवगृहे नाऽसुः । परमार्थं सरन्तीति परमार्थसारा भगवद्विषयाः कथाः । परमोऽर्थो यासां ताः, अत एव साराः श्रेष्ठा वा । परमः अर्थसारो यासु वा । पुरातनाः कथा मन्वन्तरानुचरिताद्याः ॥ ७ ॥

---

१. **'–दासदासिकान्'** २. **'–दासके'**

एवं गजानां बहुकोटिवृन्दांस्तथा रथानां च हयांश्च[१] वृन्दशः ।
विसृज्य रत्नानि नरांश्च वृन्दशो वने विजह्रुर्दिवि देववत् सुखम् ॥ ८ ॥

गवां च लक्षं प्रददाति नित्यशः सुवर्ण्णभारांश्च शतं युधिष्ठिरः ।
सभ्रातृकोऽसौ वनमाप्य शक्रवन्मुमोद विप्रैः सहितो यथासुखम् ॥ ९ ॥

पार्त्थेषु यातेषु किमत्र कार्य्यमिति स्म पृष्टो विदुरोऽग्रजेन ।
आहूय राज्यं प्रतिपादयेति प्राहैनमाहाथ रुषाऽऽम्बिकेयः ॥ १० ॥

ज्ञातं प्रतीपोऽसि ममाऽत्मजानां न मे त्वया कार्य्यमिहास्ति किञ्चित् ।
यथेष्टतस्तिष्ठ वा गच्छ वेति प्रोक्तो ययौ विदुरः पाण्डुपुत्रान् ॥ ११ ॥

तस्मिन् गते भ्रातृवियोगकर्शितः पपात भूमौ सहसैव राजा ।
सञ्ज्ञामवाप्याऽदिशदाशु सञ्जयं जीवामि चेदाशु ममाऽनयानुजम् ॥ १२ ॥

**एवं वने सुखं विजह्रुः ॥ ८–९ ॥ पार्थेषु यातेषु सत्सु । अत्र किं कार्यमिति अग्रजेन पृष्टः विदुरः प्राह स्म ॥ १० ॥ ज्ञातम् । तव मन इति शेषः । तदेव विविच्याऽह– प्रतीपोऽसीति ॥ ११ ॥ आशु ममानुजमानय**

---

एवं गजानाम् । ये पुरा इन्द्रप्रस्थ आसन् । रथानां च वृन्दान् । वृन्दशः वृन्दीभूय स्थितान् हयांश्च । नराश्च राजगृहाधिकृताः पार्थानां विरहमसहमानाः स्वंस्वं कर्तव्यं विहाय ये वृन्दशः पार्थानन्वगच्छन्, पार्था अपि तान् साश्रुनयनाः प्रेषयामासुरिति भावेन पुनराह– नरांश्च वृन्दश इति । वने, अथाप्यवने सुरक्षिते ॥ ८ ॥ लक्षं शतमिति प्रायो बहुत्वमात्रवचनम् । न सङ्ख्याविशेषवचनम् । तामसानां मोहाय चैवंविधाः प्रयोगा भवन्ति । तदा सदा भारतदेश एष गोभिः सुवर्णैश्च समृद्ध आसेति भावः । नित्यशः नियमेन प्रतिदिनं च । विंशतिस्तुला भार इत्युक्तम् । यः पुरा इन्द्रप्रस्थे प्रददाति प्राददात् स सम्प्रति वनमाप्य यथासुखं मुमोद भोगान् बुभुजे । दाने प्रकर्षो नाम प्रहर्षातिशयः, प्रतिफलनिरपेक्षता, भगवत्प्रीत्यर्थता च ॥ ९ ॥ अत्र अस्यां विषमस्थितौ । प्राह प्रीत्याऽऽह । प्रकृष्टां शुभोदर्कां वाचमाह । अथाऽम्बिकेयः रुषाऽऽह ॥ १० ॥ प्रतिकूलोऽसीति ममाऽत्मजानां पूर्वमेव ज्ञातम् । सम्प्रति ममापि ज्ञातं ममाऽत्मजानां प्रतीपोऽसीति । **'मतिबुद्धिपूजार्थेभ्यश्च'** [अ.सू.३.२.१८८] इति बुद्ध्यर्थस्य ज्ञाधातोर्वर्तमाने क्तः । **'क्तस्य च वर्तमाने'** [२.३.६७] इति वर्तमानकालविहितस्य क्तस्य योगेन ममेति षष्ठी । इह राजभवने, राजकार्ये, सङ्कटनिवारणे वा । इति प्रोक्तः सकोपं प्रसभमुक्तः । अत एव न तस्थौ, किन्तु पाण्डुपुत्रान् ययौ ॥ ११ ॥ कर्शितः दुर्बलीकृतः किमपि कर्तुमपारयन्

---

१. **'–स्तथा हयानां च रथांश्च'** इति क्वचित् ।

**इतीरितः सञ्जयः पाण्डवेयान् प्राप्याऽनयद् विदुरं शीघ्रमेव ।**
**सोऽप्यागतः क्षिप्रमपास्तदोषो[१] ज्येष्ठं ववन्देऽथ स चैनमाश्लिषत् ।**
**अङ्कं समारोप्य स मूर्ध्नि चैनमाघ्राय लेभे परमां मुदं तदा ॥ १३ ॥**

**क्षत्तारमायान्तमुदीक्ष्य सर्वे ससौबला धार्त्तराष्ट्रा अमर्षात् ।**
**सम्मन्त्र्य हन्तुं पाण्डवानामुतैकं छन्नोपधेनैव ससूतजा ययुः ॥ १४ ॥**

**विज्ञाय तेषां गमनं समस्तलोकान्तरात्मा परमेश्वरेश्वरः ।**
**व्यासोऽभिगम्यावददाम्बिकेयं निवारयाऽश्वेव सुतं तवेति ॥ १५ ॥**

**इति (चेत् यदि) तर्हि जीवामि इत्युक्त्वा आशु सञ्जयमादिशत् इति सम्बन्धः ॥ १२ ॥ अपास्तरोषः निरस्तक्रोधः । क्षिप्रं ववन्दे ॥ १३ ॥ पाण्डवानां मध्ये एकमुत एकमपि छन्नोपधेन प्रच्छन्नव्याजेन ॥ १४ ॥**

---

मूर्छितः पपात । भ्रातृवियोग एनं कर्शयामासेति भ्रातृवियोगकर्शितः । कृश तनूकरणे । णिचि रूपम् । आश्वादिशत् । आश्वानयेति । कुत इयं त्वरा? आह–जीवामि चेत् । तदागमनपर्यन्तं यदि जीवेयम् ॥१२॥ पाण्डवेयान् । पाण्डुशब्दादपत्यार्थे ढकि रूपम् । तथाहि पाणिनिः स्मरति–**'शुभ्रादिभ्यश्च'** [अ.सू.४.१.१२३] इति । आह च जयादित्यः–**'चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति । तेन गाङ्गेयः पाण्डवेय इत्येवमादि सिद्धं भवति'** इति । आम्बिकेय इति चैतेनैव सिद्ध्यति । शीघ्रमेव प्राप्याऽनयत् । क्षिप्रमागतः क्षिप्रं ववन्दे । अपास्तदोषः शुद्धमनाः । विनाऽपराधं मां तत्याजेति भ्रातरि दोषबुद्धिमकुर्वन् । स च पश्चात्तापेनापास्तरोषदोषः, अत एवाङ्कं समारोप्य सम्भ्रमेण प्रीतिपूर्वमारोप्य, एनमाश्लिक्षत् ॥ १३ ॥ अमर्षात् असहनया । असूयादग्धाः । समेत्य मन्त्रयित्वा । छन्नोपधेन गूढकपटेन । स्वेषां कपटतन्त्रं ते यथा न जानीयुस्तथा हन्तुम् । नूनमुपधिश्छलम् । कथमुपधम्? ननु कोशमुग्ध, शृणु । उपधीयत आरोप्यतेऽनेनेति अकर्तरि कारके **'उपसर्गे धोः किः'** [अ.सू.३.३.९२] इति किप्रत्यये उपधिरिति रूपम् । उपदधाति आरोपयति इति कर्तरि कप्रत्यये उपधमिति उपध इति वा रूपम् । उपद्रवं दधातीति वा उपधः । कर्मण्युपपदे **'आतोऽनुपसर्गे कः'**[अ.सू.३.२.३] । ननु नायं कर्मणि । नाप्यनुपसर्गः । न भोः । उपद्रवमिति कर्मवचनात् । एवमुपस्य उपद्रवपदशेषत्वात् नोपसर्गत्वं विवक्षितम् । यद्वा उपधा उपायः । छन्ना उपधा यत्र तादृशेनोद्यमेन ॥ १४ ॥ अन्तरात्मा अन्तर्यामी । अन्तरः आत्मा स्वामी च वा । पराः मुनयः । परमा देवाः । परमेशास्तत्वाभिमानिन इन्द्राद्याः । परमेश्वराः शिवाद्याः । परमेश्वरेशौ ब्रह्मवायू । भगवान् परमेश्वरेश्वर इति । परमः सर्वोत्तमोऽत एव ईश्वराणामपीश्वर इति वा । आशु निगृह्य वारय, निवर्त्य वारय ॥ १ ५ ॥

---

१. **'–मपास्तरोषो–'** इति टीकासम्मतः पाठः ।

अवाप्य पार्थानयमद्य मृत्युं सहानुबन्धो गमिता ह्यसंशयम् ।
इतीरिते तेन निवारयेति प्रोक्तो हरिः प्राह न संवदे तैः ॥ १६ ॥

मैत्रेय आयास्यति सोऽपि वाचं शिक्षार्थमेतेष्वभिधास्यतीह ।
तां चेद् करोत्येष सुतस्तवास्य भद्रं तदा स्याच्छप्स्यति[1] त्वन्यथा सः ॥ १७ ॥

उक्त्वेति राजानमनन्तशक्तिर्व्यासो ययौ तत्रगतेषु तेषु ।
सुयोधनाद्येषु हतेषु पार्थैर्भूभारहानिर्न भवेदिति प्रभुः ॥ १८ ॥

सर्वाश्च चेष्टा भगवन्नियुक्ताः सदा समस्तस्य चितोऽचितश्च ।
तथाऽपि विष्णुर्विनिवारयेत् क्वचिद् वाचा विधत्ते च जनान् विडम्बयन् ॥ १९ ॥

मैत्रेय आगादथ[2] भूपतिश्च पुत्रान् समाहूय सकर्ण्णसौबलान् ।
सम्पूजयामास मुनिं स चाऽह दातुं राज्यं पाण्डवान् सम्प्रशंसन् ॥ २० ॥

विशेषतो भीमबलं शशंस किर्म्मीरनाशादि वदन् मुनीन्द्रः ।
श्रुत्वाऽसहंस्तद्[3] धृतराष्ट्रपुत्र आस्फालयामास निजोरुमुग्रः ॥ २१ ॥

**मृत्युं गमिता हि यस्मात् तस्मात् आशु निवारयेत्यवदत् इति सम्बन्धः ॥ १५–१७ ॥ प्रभुरनन्तशक्तिर्व्यासः इति अभिप्रायवान् राजानं इत्युक्त्वा ययौ इति सम्बन्धः ॥ १८ ॥ अचितोऽचेत-नस्य । तथाऽपि सकलचेष्टाप्रेरकोऽपि क्वचिद् वाचा निवारयेत् एवं न कुर्विति । क्वचिद् वाचा विधत्ते एवं कुर्विति वदति ॥ १९ ॥ दातुम्, पाण्डवानामिति शेषः ॥ २० ॥ असहन् असहमानः ॥ २१–२ ॥**

गमिता गन्ता । अक्षराधिक्येन मृत्योरप्यमितत्वमाह । तेन धृतराष्ट्रेन **'त्वमेव निवारय'** इति प्रार्थनपूर्वमुक्तः प्रकट-माह अनवलोकनीयमुखस्ते मूर्खः सुत इति–**'तैः सह भाषितुमपि नेच्छामि'** इति ॥ १६ ॥ एतेषु तव सुतेषु विषये । एतेषां दौरात्म्यविषये । एतेषां सविधे वा । एतेषां कृते वा । शिक्षार्थं हितोपदेशार्थं । तेषां हितं ग्राह-यितुम् । इह तव सविधे । तां मैत्रेयाभिहितां वाचं करोति सफलां करोति चेत् । अस्य भद्रं स्यात् । तव च ॥ १७ ॥ तत्रगतेष्वित्येकं पदम् । **'तत्र'** [अ.सू.२.१.४६] इति स्मरणात् । **'तत्रेत्येतत् सप्तम्यन्तं क्तान्तेन समस्यते, तत्पुरुषश्च समासो भवति'** इति जयादित्यः । केवलं तत्रगतेषु हतेषु समस्तभूभारहानिर्न भवेदिति हेतोरि-त्युक्त्वा ॥ १८ ॥ विशिष्य मुखतः, वाचा निषिध्य वारयेत् । क्वचिद् वाचा विधत्ते कारयेदपि ॥ १९ ॥ तैः सह पूज-यामास । भक्त्या च पूजयामास । सामर्थ्यप्रकाशनेन प्रशंसन् ॥ २० ॥ असहन् । असहनफलं लोकनाश इति परस्मै-

१. 'तदा शप्स्यति' २. 'आयादथ' ३. 'श्रुत्वा हसंस्तद्–'

शशाप चैनं मुनिरुग्रतेजास्तवोरुभेदाय भवेत् सुयुद्धम् ।
इत्यूचिवान् धृतराष्ट्रानतोऽपि ययौ न चेद् राज्यदस्त्वं तथेति ॥ २२ ॥

श्रुत्वा तु किर्म्मीरवधं स्वपित्रा पृष्टक्षत्त्रोक्तं[1] सोऽत्रसद् धार्त्तराष्ट्रः ।
वने वसन्तोऽथ पृथासुतास्ते वार्त्तां स्वकीयां प्रापयामासुराशु ॥ २३ ॥

कृष्णे सोऽपि द्रुतमायात् ससत्यः सम्बन्धिनो ये च पाञ्चालमुख्याः ।
क्रुद्धं कृष्णं धार्त्तराष्ट्राय पार्त्थाः क्षमापयामासुरुच्चैर्ग्गृणन्तः ॥ २४ ॥

गुणांस्तदीयानमितान् प्रणम्य तदा रुदन्ती द्रौपदी चाऽप पादौ ।
सा पादयोः पतिता वासुदेवमस्तौत् समस्तप्रभुमात्मतन्त्रम् ॥ २५ ॥

**श्रुत्वा तु श्रुत्वैव ॥ २३ ॥ कृष्ण इत्युपलक्षणम् । पाञ्चालादिष्वपीति ग्राह्यम् । पार्थाः तदीयान् कृष्णसम्बन्धिनः गुणान् उच्चैर्गृणन्तः कृष्णं प्रणम्य क्षमापयामासुः ॥ २४–५ ॥**

---

भाषयाऽह ॥ २१ ॥ भवादृशां दुष्टानां नाशेन सुयुद्धम् । सुघोरं च युद्धम् । तथेति सुयुद्धं भवेदिति । तव सुतस्योरु-भङ्गश्च भवेदिति ॥ २२ ॥ स्वपित्रा पृष्टेन क्षत्त्रा उक्तम् । **'तृन्तृचौ शंसिक्षदादिभ्यः सञ्ज्ञायां चानिटौ'** [२.१] इति दशपादिका । तृन्-तृचौ प्रत्ययौ भवतः शंसेः क्षदप्रकारेभ्यश्च, सञ्ज्ञायामनिटौ च भवत इत्यर्थः । शंसतीति शंस्ता ऋत्विक् । क्षदतीति क्षत्ता विदुरः । **'क्षद गतौ'** इति केचित् । **'क्षद गतिहिंसनयोः'** इत्यन्ये । **'क्षद संवरणे'** इत्यपरे । **'क्षद स्थैर्ये'** इति स्कन्दस्वामी । कस्य सञ्ज्ञा? दासीपुत्रस्येयं सञ्ज्ञा । **'क्षुदिर् सम्पेषणे । क्षुदति पिनष्टीति क्षत्ता प्रतीहारः'** [का.सू.वृ.२.४२] इति दुर्गसिंहः । **'क्षदेर्युक्ते'** [स.कं.२.१.१४८] इति भोजः । **'क्षदेर्युक्तेऽर्थे तृन्प्रत्ययः अनिट् चासौ भवति । क्षत्ता नियुक्तः'** इति वृत्तिकारो दण्डनाथनारायणः । तदिदमवगमयति वैयाकरणानां वैयाकुल्यमनैकमत्यं च । अत्रसत् । त्रसी उद्वेगे । श्यनो विकल्पेन लङि रूपद्वयम्– अत्रस्यदिति, अत्रसदिति । तथाहि पाणिनिः–**'वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-लषः'** [अ.सू.३.१.७०] इति । वनगमनवार्ताम् । प्रापयामासुराशु कृष्णे । ब्राह्मणमुखेनेत्यर्थः । तथाहि भागवते [१०.८७.१–५] । ये च सम्बन्धिनः पाञ्चालमुख्याः तेष्वपि वार्तां प्राप-यामासुः । तेऽपि द्रुतमायान् । उच्चैर्गुणान् गृणन्तः स्तुवन्तः । गॄ शब्दे । पाञ्चालो धृष्टद्युम्नः । **'पाञ्चालस्य च दायादो धृष्टकेतुश्च चेदिपः । केकयाश्च महावीर्या भ्रातरो लोकविश्रुताः । वने द्रष्टुं ययुः पार्थान् क्रोधामर्षसमन्विताः'** [व.प.१२.२–३] इति भारते ॥ २३–५ ॥

---

१. **'पृष्टं क्षत्त्रोक्तम्'**

**अचिन्त्यनित्याव्ययपूर्णसद्गुणार्णवैकदेहाखिलदोषदूर ।**
**रमाब्जजेशेरसुरेन्द्रपूर्ववृन्दारकाणां सतताभिवन्द्य ॥ २६ ॥**

**समस्तचेष्टाप्रद सर्वजीवप्रभो विमुक्ताश्रय सर्वसार ।**
**इति ब्रुवन्ती सकलानुभूतं जगाद सर्वेशितुरच्युतस्य ॥ २७ ॥**

**कथमस्तौदित्यतः स्तुतिप्रकारं विवृणोति– (अचिन्त्ये)त्यादिना[2] । (नित्यः) विनाशरहितः । अव्ययः ह्रास-रहितः ॥ २६ ॥ सर्वजीवः सर्वप्राणधारकः । जीव प्राणधारण इति धातुः । सर्वसारः सर्वोत्तमः । इति ब्रुवन्ती एवं स्तुवन्ती स्वयं शेषेशविपादिकेभ्यः यस्य अच्युतस्य अधिकानुग्रहपात्रभूता सर्वेशितुः तस्य**

---

अचिन्त्यः सामस्त्येन । **'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'** इत्यादेः । अः इति चिन्त्यः । नित्य उत्पत्तिनाशविरहात् । विकारस्य अयनं व्यय इत्यव्ययो निर्विकारः । पूर्णो गुणतः देशतश्च । एवं सद्गुणार्णवः । एकः स्वगतभेदरहितः स्वरूपभूतो देहोऽस्येत्येकदेहः । अखिलः अखण्डः । दोषेभ्यः दूरः दोषैरस्पृष्टः । एवमचिन्त्येत्यादीनि दोषदूरेत्यन्तान्यष्टौ विशेषणानि । अखिलदोषदूरेत्येकं वा पदम् । सद्गुणार्णवैकदेहेति च । अपारत्वादगाधत्वाच्च सद्गुणा अर्णवा इव । त एव केवलं देहोऽस्येति । सद्गुणार्णवैरेकः अभिन्नः देहोऽस्येति वा । सद्गुणानां सलिलसमूहस्थानीयानां अर्णव इव निधानमस्यैकदेह इति वा । अथच अचिन्त्याः नित्याः अव्ययाः पूर्णाश्च सद्गुणाः । अचिन्त्यः नित्यः अव्ययः पूर्णसद्गुणश्चास्य देह इति बहुविधमनुसन्धानं भवति । सृष्टिसंहारयोर्नियुक्तावित्यब्जजेशयोः सहपाठः । ततः जीवनप्रद ईरः समीरः । ईशेर इति मुख्यवायुर्वा । य ईराः एकोनपञ्चाशन्मरुतस्तेषामयमीश इति । य ईशस्यापीष्टे स चासावीर इति वा । **'ब्रह्मशङ्करशक्राद्यैर्देववृन्दैः पुनःपुनः । क्रीडसे त्वं नरव्याघ्र बालः क्रीडनकैरिव'** [व.प.१२.५७] इति च द्रौपदीवचनं भारते । अत्र ब्रह्मपदेन **'मम योनिर्महद् ब्रह्म'** इत्युक्ता श्रीरपि गृह्यते । ब्रह्मपदं गमिष्यन् वायुश्च । तदेतदाह–रमाब्जजेशेरसुरेन्द्रपूर्ववृन्दारकाणामिति । सन्ततमेव मकारलोपेन सततमुच्यते । **'कथं सततम्? समस्तते विकल्पेन मकारलोपो विधीयते'** [अ.सू.६.१.१४४] इति वामनः । स्मरन्ति च–**'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः'** इति ॥ २६ ॥ समस्तजीवानां चेष्टाप्रद । अत एव सर्वजीवप्रभो । अथ च समस्तस्य चितोऽचितश्च चेष्टाप्रद । सर्वं चेतनजातं विशिष्य प्राणयतीति सर्वजीवः । सर्वस्य च प्रभो । यद्यप्यमुक्तानामप्याश्रयः । अथापि सदा सन्निधानेन मुक्तानां विशेषाश्रयः । अथचान्धन्तमोगा अपि मुक्ता इति च विमुक्ताश्रय इत्याह । सर्वसार सर्वान्तर्यामिन् सर्वोत्तम । सकलैः पाण्डवैः स्वेन च, विशिष्य च स्वानुभूतं सकलम् । सर्वं ज्ञातुमीशितुरपि जगाद ॥ २७ ॥

---

१. **'रमाब्जजेरेशसुरेन्द्र–'**

२. लिखितकोशे **'अनन्तेत्यादिना'** इति पठ्यते । न ज्ञायते किं लिपिकृतः प्रामाद्यन्नाहो अयमेव टीकासम्मतः पाठ इति ।

**यस्याधिकानुग्रहपात्रभूता स्वयं हि शेषेशविपादिकेभ्यः ।**
**श्रुत्वा समस्तं भगवान् प्रतिज्ञां चकार तेषामखिलाश्च योषाः ॥ २८ ॥**

**पतीन् समालिङ्ग्य विमुक्तकेश्यान्[१] भीमाहतान् दर्शये नान्यथेति ।**
**तां सान्त्वयित्वा मधुरैः सुवाक्यैर्नारायणो वाचमिमां जगाद ॥ २९ ॥**

**यदीहाहं स्थितो नैवं भविताऽहं त्वयोधयम् ।**
**साल्वराजं दुरात्मानं हतश्चासौ सुपापकृत् ॥ ३० ॥**

**सन्निधानेऽथ दूरे वा कालव्यवहितेऽपि वा ।**
**स्वभावाद् वा व्यवहिते वस्तुव्यवहितेऽपि वा ॥ ३१ ॥**

**अच्युतस्य सकलानुभूतं जगाद । हिशब्देनाधिकानुग्रहपात्रभूतत्वं तस्याः प्रसिद्धमित्याह ॥ २७–९ ॥ एवं न भविता एवं नाभविष्यदिति क्रियातिपत्तौ लुट् । न भविष्यदर्थे ॥ ३०–१ ॥**

---

प्रतिज्ञां चकार । किमिति? तेषामित्यादि ॥ २८ ॥ विमुक्तकेश्यान् विमुक्तोष्णीषान् । केशेभ्यो हिताः केश्याः । **'शरीरावयवाद् यत्'** [अ.सू.५.१.६] । ननु केशा अप्यवयवाः? किन्त्वे छिन्नम् । वैवक्षिकं हि भवत्यवयवत्वमनवयवत्वं वा । ये शरीरे भवन्ति वयोऽनुगुणं वर्धन्ते विपरिणमन्ते च तेऽवयवा इति पक्षे केशा अप्यवयवाः । छिन्नप्ररोहिणो नावयवा इति पक्षे न केशा अवयवाः । समालिङ्ग्य स्थिता योषा दर्शये । नेदमन्यथा भवति केनाऽपि हेतुना । सर्वथा दर्शयामीत्यर्थः । त्वत्प्रतीपानां प्रतिकरणं मम स्वार्थ इति भक्तवशंवदत्वमात्मनेभाषयाऽह । सुखकरैः महार्थैश्च वाक्यैः सान्त्वयित्वा अथ पाण्डवान् प्रति चेमां वाचं जगाद ॥ २९ ॥ यद्यहमिह स्थितः अस्थास्यम्, तदा नैवं भवतां वनवासादिकं भविता अभविष्यत् । किन्त्वहं द्वारकां गतः, गत्वा साल्वराजमयोधयम् । भवितेति–गर्हायां गम्यमानायां **लुट्** । ततश्च **'नैवं भविता'** इत्यस्य नेदं गर्हितं भवतां वनगमनं समभविष्यदित्यर्थः । कचिल्लुडिव लिङपि प्रयुज्यते । **'नैतत् कृच्छ्रमनुप्राप्तो भवान् स्याद् वसुधाधिपः । यद्यहं द्वारकायां स्यां राजन् सन्निहितः पुरा'** [व.प.१३.१] इति महाभारते । **'मय्यागतेऽथवा वीर द्यूतं न भविता तथा'** [२२.४३] इति च । सुपापकृत् महापातककृत् । **'हतश्चासौ सुपापकृत्'** इत्यन्तं कृष्णवचनम् । ततः **'केशवोऽब्रवीत्'**[४१] इत्यन्तमेकादश श्लोका आचार्यपादस्य स्ववचनम् । ततः परम्–**'साल्वं श्रुत्वा–'**[४२] इत्यादि, **'विप्रकर्षान्मे कार्यतस्तु–'** [५३] इत्यन्तं पुनः कृष्णवचनम् ॥ ३० ॥ ननु द्वारकायां स्थितोऽपि कृष्णः पाण्डवानां वनगमनं निरोद्धुं प्रभवत्येव । अन्तर्यामित्वात् सर्वगतत्वाच्च । **'न ऋते त्वत् क्रियते किञ्चनाऽरे–'** इति च हि श्रुतिः । तत् किमेवमतथ्यमाह भगवान्– **'यदीहाहं स्थितो नैवं भविता'** इति?

---

१. **'विमुक्तकेशा भीमा–'**

नाशक्तिर्विद्यते विष्णोर्नित्याव्यवहितत्वतः ।
तथाऽपि नरलोकस्य करोत्यनु कृतिं प्रभुः ॥ ३२ ॥

दुष्टानां दोषवृद्ध्यर्थं भीमादीनां गुणोन्नतेः ।
युधिष्ठिरेऽतिवृद्धं तु राजसूयादिसम्भवम् ॥ ३३ ॥

धर्म्मं च सङ्क्रामयितुं कृष्णायामनुजेषु च ।
योग्यताक्रमतो विष्णुरिच्छयेत्थमचीक्लृपत् ॥ ३४ ॥

एधमानद्विळित्येव[१] विष्णोर्नाम हि वैदिकम् ।
स्वयोग्यताया [२]अधिकधर्म्मज्ञानादिजं फलम् ॥ ३५ ॥

**नित्याव्यवहितत्वतः नित्यं सर्वगतत्वात् । तथाऽपि सर्वदा सकलज्ञानशक्तिमत्त्वेऽपि एवं करोति ॥ ३२ ॥ श्रीकृष्णः एवं स्वभक्तपराभवं किमित्युपेक्षामासेत्यत आह– दुष्टानामित्यादिना । दुष्टानां तमोयोग्यानां दोषवृद्ध्यर्थं पाण्डवानां पराभवेन दुःखसद्भावज्ञानेन कृष्णस्य तत्परिहारासामर्थ्यज्ञानेनैवेति भावः । भीमादीनां गुणोन्नतेः गुणोन्नत्यर्थम् । युधिष्ठिरे अतिवृद्धं योग्यतामतिक्रम्य वृद्धं राजसूयादिसम्भवं धर्मं योग्यताक्रमतः कृष्णायामनुजेषु च सङ्क्रामयितुं च विष्णुरिच्छयैवेत्थमचीक्लृपत् ॥ ३३–४ ॥ धर्मस्यान्यत्र योग्यताक्रमतः सङ्क्रामणं किमर्थमकरोदित्यतः तत्करणं विष्णोः स्वभाव इत्यभिप्रायेणात्र प्रमाणमाह– एधमानेति । एधमानं जीवानां योग्यतातिरिक्तं नाशयतीति एधमानद्विडिति हि वैदिकं नाम । हीति प्रसिद्धं द्योतयति । पाण्डवानां व्यसनोपेक्षणे कारणान्तरं चाऽह– स्वयोग्यताया**

---

लोकविडम्बनमेतदित्याह– सन्निधानेऽथ दूरे वा । दूरे देशतः असन्निधाने । एवं कालतः अव्यवहिते एककालवर्तिनि, व्यवहिते वा भिन्नकालवर्तिनि भूते भाविनि वा । देशतः कालतश्चाव्यवधानेऽपि स्वभावतः व्यवधानं नामातीन्द्रियत्वं परमाण्वादीनामिव, धर्माधर्मादीनामिव । यद्वा स्वभावतः व्यवधानं देवदानवयोरिव । वस्तुना व्यवधानं यथा मेघैः सूर्यप्रकाशस्य । कवचेन वा देहस्य । कुड्येन वा घटादीनाम् ॥ ३१ ॥ नित्यं नियमेन देशकालाभ्यां वस्तुतश्च व्यवधानराहित्यात् । कुतः? नित्यत्वात्, सर्वगतत्वाच्च । सर्वसमर्थे स्वभावव्यवधानस्याकिञ्चित्करत्वात् । तदेतदाह– प्रभुः । तथाऽपि नरलोकस्य कृतिमनुकरोति ॥ ३२ ॥ गुणोन्नतेः । ल्यबर्थे पञ्चमी । गुणोन्नतिं साधयित्वा । तदसहमानानां दुष्टानां दोषान् वर्धयितुम् । गुणोन्नतेः गुणवृद्ध्यर्थमिति वा । चतुर्थ्यर्थे षष्ठी । **'चतुर्थ्यर्थे बहुलं छन्दसि'** [अ.सू.२.३.६२] इति हि पाणिनिः स्मरति ॥ ३३–३४ ॥ **'शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्'** [ऋ.सं.६.४७.१६] इति श्रुतिः । वीर इन्द्रः परमेश्वरः उग्रमुग्रं आसुरं दमयन् अन्यमन्यं

---

१. '–मानद्विडित्येव' २. 'अधिकं धर्म–'

भीष्मद्रोणाम्बिकेयादेः पार्त्थेष्वेव निधापितुम् ।
पुनश्च पापवृद्ध्यर्त्थमजो दुर्य्योधनादिषु ॥ ३६ ॥

व्यासोऽम्बिकासुतं प्राह पार्त्था मेऽभ्यधिकं[1] प्रियाः ।
तेषां प्रवासनं चैव प्रियं न मम सर्वथा ॥ ३७ ॥

इति दुर्य्योधनादीनां पापवृद्ध्यर्थमेव सः ।
प्रिया इत्येव कथनात् पाण्डवानां शुभोन्नतेः[2] ॥ ३८ ॥

गुरुत्वाद् भीमसेनस्य क्षमा द्यूतेऽर्ज्जुनादिनाम् ।
नातिधर्म्मस्वरूपोऽत्र धर्म्मो भीमे निरौपधः ॥ ३९ ॥

**इति । भीष्मद्रोणाम्बिकेयादेः भीष्मद्रोणाम्बिकेयादीनाम् । 'अधर्म एष वार्यते न धर्मिभिर्भवद्भिर्धैः'(२१.३२८) इति कृष्णयोक्तेऽपि भीष्मादीनां तूष्णीम्भावात् स्वस्वयोग्यतातिरिक्तधर्महानिरभूदिति भावः । पाण्डवनिर्गमनानन्तरं धृतराष्ट्रं प्रति व्यासोक्तिप्रकारं तत्प्रयोजनं चाऽह– पुनश्चेत्यादिना । सः अजो व्यासः अम्बिकासुतं प्राह इति योजना ॥ ३५–७ ॥ गुणोन्नतेः गुणोन्नतिप्रकाशनार्थम्, पापवृद्ध्यर्थं पापवृद्धिप्रकाशनार्थं च प्राहेति पूर्वेणैव सम्बन्धः ॥ ३८ ॥ अर्जुनादिभिरपि द्यूते क्षमयाऽतिरिक्तधर्महानि-**

---

दैवं अतिनेनीयमानश्च श्रुतः । स्वयोग्यतामतीत्य एधमानं द्वेष्टि चायम् । उभयस्य राजा दैवस्य चाऽसुरस्य भूत-सर्गस्य । मनुष्यरूपाः प्रजाः पुनरयं चक्रनेमिवत् उपर्यधश्च परिवर्तयतीति ॥ ३५ ॥ निधापयितुम् । भीमान्यूनमन्य-पार्थेष्वित्यक्षरलोपेनाऽह । पराशराज्जातोऽपि वस्तुतोऽजः । न जायत इति, अकारवाच्यात् स्वत एव स्वयं स्वेच्छया जायत इति ॥ ३६ ॥ ममाभ्यधिकं प्रियाणां तेषां प्रवासनं च मम सर्वथा न प्रियमेव ॥ ३७ ॥ इति व्यासोऽम्बिकासुतं प्राह । प्रबोधयन्नाह । ननु कथमिदं निर्णीयेत दुर्योधनादीनां पापवृद्ध्यर्थमेवैवमाहेति । दुर्योधनं प्रबोध्य सन्मार्गे स्थापयितुमपि शक्यमेवं व्याहर्तुमित्यत आह– दुर्योधनादीनां पापवृद्ध्यर्थमेव स व्यासव्याहार इति । स व्यासस्तथा प्राहेति अनुवर्तते वा । कुतः? प्रिया इत्येव कथनात् । पार्थाः ममातिप्रिया इति कथनादेवेदं ज्ञायते यत् पाण्डवानां शुभगुणोन्नतिं प्रकाश्य धार्तराष्ट्राणां दोषवृद्ध्यर्थमेवैवमाहेति । अन्यथाऽन्यादृशो व्याहारोऽभविष्यत् 'कौरवा अपि मे प्रियाः पौत्राः किल । अतस्तान् निवारय' इत्यादिरूपः । अथच पार्था मेऽभ्यधिकं प्रिया इति कथनात् तद्द्वारा पाण्डवानां शुभोन्नतेरेव कथनात् । किं नाम तच्छुभं यद् भगवत्प्रीतिभाजनत्वादुन्नतम्? तेन पाण्डवेषु कौरवाणामसूया वर्धताम् । असूयया च पापानि वर्धन्तामिति भगवदाशयः । पाण्डवानां शुभोन्नतिप्रकाशनादेव कौरवाणामशुभोन्नतिश्च प्रकाशिता स्यात् । तेन पुनरसूयातिशयेन पापातिशयः ॥ ३८ ॥ अत्र भीमावज्ञाप्रसङ्गे क्षमा । अर्जुनादिनामिति ह्रस्वेन तेषां व्यक्तित्वेऽपि किञ्चिदिव

---

१. **'मे ह्यधिकम्'** २. **'–वानां गुणोन्नतेः'** इति वे.ती.पाठः ।

द्रौपद्या अप्यतिक्लेशात् क्षमा धर्म्मो महानभूत् ।
सा हि भीममनो वेद न कार्य्यः शाप इत्यलम् ॥ ४० ॥

तस्माद् यथायोग्यतया हरिणा धर्म्मवर्द्धनम् ।
कृतं तत्रासन्निधानकारणं केशवोऽब्रवीत् ॥ ४१ ॥

साल्वं श्रुत्वा समायातं[१] रौग्मिणेयादयो मया ।
प्रस्थापिता हि भवतां सकाशात्[२] ते ययुः पुरीम् ।
तदा साल्वोऽपि सौभेन द्वारकामर्द्दयद् भृशम् ॥ ४२ ॥

**रभूदित्याह–गुरुत्वादिति । भीमसेनस्य गुरुत्वात् द्यूते गुरोः भीमस्य दुर्योधनादिकृतावज्ञाक्षमा अर्जुनादीनां अतिधर्मस्वरूपो न । अत्र द्यूते भीमे धर्मः निरौपधः निर्व्यभिचारः । 'युधिष्ठिरो दुःखहेतुस्तवैकः'(२१. ३४३) इत्यादिना युधिष्ठिरावज्ञायां कृतायाम्, 'पूज्योऽस्माकं धर्मजोऽसंशयेन'(३४४) इत्यादिना परिहार-स्योक्तत्वात् । 'कृष्णं द्यूते स्थापयध्वं पणाय'(३५१) इति कृष्णावज्ञायाम्, 'निपात्य भूतळे हि ते शिरो मृदिष्ये'(३५२) इति चोक्तत्वात् इति भावः ॥३९॥ अतिक्लेशात् क्षमा अतिक्लेशमनुभूय क्षमा । ल्यब्लोपे पञ्चमी । अलं वेद हि ॥ ४० ॥ युधिष्ठिरेऽतिवृद्धमित्याद्युक्तमुपसंहरति– (तस्मादित्यादिना) । 'यदीहाहं स्थितो नैवं भविताऽहं त्वयोधयम्'(३०) इत्यादिना सङ्क्षेपेणोक्तं स्वासन्निधानकारणं विविच्याऽह– तत्रेत्यादिना । तत्र द्यूतावसरे ॥ ४१ ॥ स्वेच्छानुसारगतिना (सौभेन) कारणेन ॥ ४२–३ ॥**

---

ह्यसमाह । निरौपध इति धर्माधिक्यं च । उपधमेवौपधम् । निरौपध इति निर्व्याजतमः । **'अनौपमम्'** इतिवदयं शब्दः ॥ ३९ ॥ भीममनोगतं वेद । भीमेन यदमन्यत तद् भीममनः । भैमीच्छा । का सा? न कार्यः शाप इति । अलं अर्जुनाद्य-पेक्षयाऽधिकं वेद ॥ ४० ॥ यथायोग्यतया । पदार्थानतिवृत्तिर्यथापदार्थः । योग्यपदेन च योग्यतोच्यते । तथाच योग्यतामन-तिक्रम्य कृतं यथायोग्यम् । **'अव्ययं विभक्ति–'** [अ.सू.२.१.६] इत्यव्ययीभावसमासः । तस्य भावः यथायोग्यता । तया । अथ च **'यथाऽसादृश्ये'** [२.१.७] इत्यनेनासादृश्येऽव्ययीभावः । येये योग्यास्तथा यथायोग्यम् । अन्यत् पूर्ववत् । अथ नवाऽयमव्ययीभावः । यथावत् स्थिता योग्यता यथायोग्यता । तया तदनुसारेणेति । धर्मस्य वर्धनं वृद्धिः भीमादिषु । वर्धनं क्षपणं भीष्मादिषु । 'वृद्धौ छेदे च वर्धनम्' इति मङ्खः । 'वर्ध च्छेदनपूरणयोः' इति धातुपाठः । प्रसक्तं विस्तरश उक्त्वाऽथ प्रस्तुतमुपक्रमते– तत्रेन्द्रप्रस्थेऽसन्निधानकारणं केशवो व्यक्तमाहेति ॥ ४१ ॥ प्रस्थापिता हि भवतां सकाशात् । तावत्पर्यन्तं प्रसङ्गं भवन्तोऽपि जानन्त्येव हि । सौभेन कामगामिना विमानविशेषेण । सुभान्तीति सुभानि काञ्चनादीनि । तैर्निर्मितं सौभम् । भृशमर्दयत् । अथाप्यकिञ्चित्करमित्यल्लोपेनाऽह ॥ ४२ ॥

---

१. 'समायान्तं रौक्मिणेया–' २. 'सकाशे ते'

प्रद्युम्न आशु निरगादथ सर्वसैन्यैरन्यैश्च यादवगणैः सहितोऽनुजैश्च ।
साल्वोऽवगम्य तनयं मम तद्विमानात् पापोऽवरुह्य रथमारुहदत्र योद्धुम् ॥ ४३ ॥

कृत्वा सुयुद्धममुना मम पुत्रकोऽसावस्त्राणि तस्य विनिवार्य्य महास्त्रजालैः ।
दत्तं मया शरममोघमथाऽददे तं हन्तुं नृपं कृतमतिस्त्वशृणोद् वचः खे ॥ ४४ ॥

नारायणेन हि पुरा मनसाऽभिक्लृप्तं कृष्णावतारमुपगम्य निहन्मि साल्वम् ।
इत्येव तेन हरिणाऽपि स भार्ग्गवेण विद्रावितो न निहतः स्वमनोनुसारात् ॥ ४५ ॥

वद्ध्यस्त्वया नहि ततोऽयमयं च बाणश्चक्रायुधस्य दयितो नितराममोघः ।
मा मुञ्च तेन तमिमं विनिवर्त्तयेऽहं साल्वं हृदि स्थित इतीरितमीरणेन ॥ ४६ ॥

**अशृणोत्, तदेति शेषः ॥ ४४ ॥ इत्येव मनसाऽभिक्लृप्तं हि यस्मात् तेन तस्मात् स्वमनोनुसारात् स्वेच्छानुसारेण ॥ ४५ ॥ ततः हरिणैव वध्यत्वात् । अयं त्वया वध्यो नहि । नितरां दयितः ॥ ४६–७ ॥**

---

अथ भृशमर्दितायां द्वारकायां तदसहमानः । सैन्यैः सैनिकैः । सेनां समवयन्तीति सैन्याः । **'सेनाया वा'** [अ.सू.४.४.४५] इति ण्यः । अनुजैश्च । वक्ष्यति हि–**'प्रद्युम्नसाम्बगदसारणचारुदेष्णाः'** [४८] इति । तद्विमानात् तस्मात् सौभाख्यात् विमानात् । अत्र यादवसैन्यमध्ये ॥ ४३ ॥ सुयुद्धं चिरयुद्धम् । विधानेनैव निगृह्य वारयित्वा । शरमथ । यादवानां मङ्गलकरं शरमाददे शत्रुं हन्तुम् । अथ वचः खेऽशृणोत् ॥ ४४ ॥ निहननं प्राणहरणम् । भार्गवेण न निहतः । तथाहि भारते–**'ततः स भृगुशार्दूलस्तं सौभं योधयन् प्रभुः । सुबन्धुरं रथं राजन्नास्थाय भरतर्षभ । नग्निकानां कुमारीणां गायन्तीनामुपाशृणोत् । राम राम महाबाहो भृगूणां कीर्तिवर्धन । त्यज शस्त्राणि सर्वाणि न त्वं सौभं वधिष्यसि । शङ्खचक्रगदापाणिर्देवानामभयङ्करः । युधि प्रद्युम्नसाम्बाभ्यां कृष्णः सौभं वधिष्यति । तच्छ्रुत्वा पुरुषव्याघ्रस्तत एव वनं ययौ । न्यस्य सर्वाणि शस्त्राणि कालाकाङ्क्षी महायशाः'** [स.प.४९.२४–८] इति । एतेन **'जितवान् जामदग्न्यं यः कोटिविर्षगणान् बहून् । स एष नान्यैर्वध्यो हि त्वामृते नास्ति कश्चन'** [व.प.२२.२५] इति वचनं चानेन विवृतम् । जितवानिवाऽहवादहतः परावृत्त इति ॥ ४५ ॥ युद्धाद् विरतं निवर्तये । इति खे वचः ईरितं समीरणेन । **'ततो देवगणाः सर्वे सेन्द्राः सहधनेश्वराः । नारदं प्रेषयामासुः श्वसनं च मनोजवम् । तौ रौग्मिणेयमागम्य वचोऽब्रूतां दिवौकसाम् । नैव वध्यस्त्वया वीर साल्वराजः कथञ्चन । संहरस्व पुनर्बाणमवध्योऽयं त्वया रणे । एतस्य च शरस्याऽजौ नावध्योऽस्ति पुमान् क्वचित् । मृत्युरस्य महाबाहो रणे देवकिनन्दनः । कृष्णः सङ्कल्पितो धात्रा तन्मिथ्या न भवेदिति'** [व.प.१९.२१–४] इत्येतद्वचनमनेन विवृतम् । देवगणा नारदं प्रेषयामासुः । नारदः प्राणं प्रार्थयामास । प्राणश्चादृश्यः सन् खे वचः श्रावयामासेति ॥ ४६ ॥

श्रुत्वा वचः स पवनस्य शरं त्वमोघं सञ्जह्र आशु स च साल्वपतिः स्वसौभम् ।
आरुह्य बालकलहेन किमत्र कार्य्यं कृष्णेन सङ्गर इति प्रययौ स्वदेशम् ॥ ४७ ॥

प्रद्युम्नसाम्बगदसारणचारुदेष्णाः सेनां निहत्य सह मन्त्रिगणैस्तदीयाम् ।
आह्लादिनः स्वपुरमाययुरप्यहं च तत्रागमं सपदि तैः श्रुतवानशेषम् ॥ ४८ ॥

यस्मिञ्छरे करगते विजयो ध्रुवः स्यान्मत्तेजसा तदनुसङ्ग्रहणात् सुतान्मे ।
यातं निशम्य रिपुमात्मपुरीं च भग्नां दृष्ट्वैव तेन तदनुव्रजनं[1] कृतं मे ॥ ४९ ॥

तं सागरोपरिगसौभगतं निशाम्य मुक्ते च तेन मयि शस्त्रमहास्त्रवर्षे ।
तं सन्निवार्य्य तु[2] मया शरपूगविद्धो माया युयोज मयि पापतमः स साल्वः ॥ ५० ॥

ताः क्रीडया क्षणमहं समरे निशाम्य ज्ञानास्त्रतः प्रतिविधूय बहूंश्च दैत्यान् ।
हत्वाऽऽशु तं च गिरिवर्षिणमाशु सौभं वार्द्धौ न्यपातयमरीन्द्रविभिन्नबन्धम् ॥ ५१ ॥

**तैः, उक्तमिति शेषः ॥ ४८ ॥ तेन भग्नाम् ॥ ४९ ॥ तेन च । तत् शस्त्रास्त्रवर्षम् ॥ ५० ॥ बहून् दैत्यान्, मायया सृष्टानिति शेषः । ज्ञानास्त्रतः प्रतिविधूय विनाश्य । गिरिवर्षिणं च साल्वं हत्वा विद्धवा ॥ ५१ ॥**

---

सञ्जह्रे कार्मुकेऽनारोप्य तूणीरे निचिक्षेप । साल्वं च वायुरेव निवर्तयामासेत्याह– स च वायुना हृदि प्रेरितः साल्वपतिः स्वदेशं प्रययाविति । अन्यप्रचोदितं यानमिह प्रयाणम् ॥ ४७ ॥ मन्त्रिगणैः सहिताः । निहत्य संहृत्य । रणाङ्गणात् यदा स्वपुरमाययुः तदैवाहमपि तत्रागमम् । अशेषं च शत्रूदन्तं श्रुतवान् ॥ ४८ ॥ मत्तेजसा समेधिते यस्मिन्, तस्य अनुसङ्ग्रहणान्निमित्तात् । अनुरुद्धतया स्वेषामनुकूलाय शत्रुसंहारार्थं ग्रहणमनुसङ्ग्रहणम् । तस्मात् कारणात् मे सुतं विहायापयातम् । तेन साल्वेन भग्नां दृष्ट्वैव तत्प्रतीकारार्थं तदनुव्रजनं कृतं मया ॥ ४९ ॥ सागरस्योपरि अम्बरमार्गेण गच्छति सौभे स्थितम् । **'ततः सागरमासाद्य कुक्षौ तस्य महोर्मिणः । समुद्रनाभ्यां साल्वोऽभूत् सौभमास्थाय शत्रुहन्'** [व.प.२०.१७] इति च । एवं सौभमास्थाय गच्छन्तं निशाम्य तदनुव्रजनं कृतं मया । तत् तस्मात् तेनापि मे अनुव्रजनं कृतम् । अनुव्रज्य च तेन मुक्ते । शस्त्राणि वर्षन्तं तं सन्निवार्य समन्तात् कस्याश्चिदपि काष्ठायां तस्य विवरमदत्वा, यथा स दिङ्मूढः स्यात् तथा तं सर्वतोदिशं निपुणं वारयित्वा । मया तु, लोकविडम्बनार्थं युध्यमानेन मया, विद्धः ॥ ५० ॥ क्रीडया क्षणमप्रतियुद्ध्यन् मुग्ध इव तूष्णीं निशामयन् स्थितः । ततः क्रीडयैव मायाप्रतिकूलेन ज्ञानास्त्रेण ता माया विधूय । बहूंश्च दैत्यान् आशु हत्वा तं च तस्य सौभं च विमानं आशु चक्रश्लथबन्धं वार्धौ नीचैरपातयम् । प्रतिकारा-यानवसरदानमाशुत्वम् । सर्वं युगपच्चकारेति द्विराशिवत्याह । किमासीदित्यवगमात्पूर्वमेव सर्वं सम्पन्नमित्यर्थः ॥ ५१ ॥

---

१. **'तदनुव्रजनम्'**

२. **'–वार्य च मया'** । **'तत् सन्निवार्य'** इति वे.ती.पाठः ।

तं [१]स्यन्दनस्थितमथो विभुजं विधाय बाणेन तद्रथवरं गदया विभिद्य ।
चक्रेण तस्य च शिरो विनिकृत्य धातृशर्वादिभिः प्रतिनुतः स्वपुरीमगां च ॥ ५२ ॥

तस्मादिदं व्यसनमास हि विप्रकर्षान्मे कार्य्यतस्त्विति निगद्य पुनश्च पार्त्थान् ।
कृष्णां च सान्त्वयितुमत्र दिनान्युवास सत्या च सोमकसुतामनुसान्त्वयन्ती ॥ ५३ ॥

पाण्डवानां च या भार्य्याः पुत्रा अपि हि[२] सर्वशः ।
अन्वेव पाण्डवान् याता वनमत्रैव च स्थिताः[३] ॥ ५४ ॥

धृष्टद्युम्नस्ततः कृष्णां सान्त्वयित्वैव केशवम् ।
प्रणम्य समनुज्ञातो भागिनेयैः पुरं ययौ ॥ ५५ ॥

**अथो सौभनिपातानन्तरम् ॥५२॥ तस्मात् कार्यतः तत्कार्यवशात् मे विप्रकर्षात् वियोगात् ॥ ५३ ॥ अत्र वन एव स्थिताश्च, श्रीकृष्णागमनपर्यन्तमिति शेषः ॥५४॥ समनुज्ञातः कृष्णेन पाण्डवैश्च ॥५५–६॥**

---

अथो विमानस्य भग्नत्वात् भूमौ पतितम्, उत्थाय च स्यन्दनस्थितम् । बाणेन विगतभुजद्वयं विधाय, तस्य तं च रथवरं शत्रुभिरभेद्यं रथं गदया विभिद्य शकलशो भित्त्वा । विनिकृत्य । कृती च्छेदने । पूर्वमेव विश्लथं कायात् पृथक्कृत्य । यद्वा तं विनिकृत्य विगतमानं विगतविमानं निकृष्टं कृत्वा । कृञ् करणे । निकारो निकृष्टकरणम् । न्यक्कार इत्येतत् । **'निकारः स्यात् परिभवे'** इत्यभिधानम् । कथं निकृत्य? गदया रथं विभिद्य । चक्रेण च शिरो विभिद्य । प्रत्येकं नुतः । महिमानं प्रतीत्य च नुतः ॥ ५२ ॥ तस्मात् कार्यतः साल्ववधनिमित्तात् मम विप्रकर्षादसन्निधानात् । मदिच्छयैवैतत् सर्वं सम्पन्नम्, न किमप्यनिरीक्षितमिति विशेषं तुनाऽऽह । कृष्णमनु सत्या चोवास सन्दर्भानुगुणैर्वचनैः सान्त्वयन्ती च ॥ ५३ ॥ या भार्यास्ताश्च, ये पुत्रास्तेऽपि । पाण्डवाननुसृत्यैव वनं याताः । अत्र वन एव स्थिताश्च । सर्वशः प्रायशः सर्वे । अपवादं वक्ष्यति–यमयोर्भार्याः पार्वती माद्री मागधी च न याता इति । ननु भीमभार्या हिडिम्बा न याता । अन्याश्च भार्या देव्याद्या एकविंशतिर्वासुदेव्यो न याताः । उलूपीचित्राङ्गदे अर्जुनभार्ये च न याते । सत्यम् । शृणु तर्हि तथ्यम् । या भार्या वनगमनसमये पाण्डवैः सह शक्रप्रस्थे न्यूषुस्तासां सर्वासामनुयानमिह विवक्षितम् । नहि या अन्यत्र स्थितास्ता अप्यानाय्य वनमनिनीषन्त पाण्डवा इति । यमयोर्भार्यास्ताभ्यां सहैवाऽसन्निहिता एव केवलमपोद्यन्ते । एवं पुत्रा अपि, ये पाण्डवैः सहाऽसन्, ते सर्वे । तथाचैवं व्याख्येयम्– याया भार्याः, येये च पुत्राः पाण्डवाननु, पाण्डवाननुगताः, तैः सह शक्रप्रस्थ एव स्थिता इति यावत्, ताश्च ते च सर्वशो वनं याता इति । अथवा सर्वाविरोधायैवं व्याख्येयम्–यायाः, पाण्डवाननु वनं याता भार्याः, येये च पुत्राः, तास्ते च सर्वशः, यावत् कृष्णस्य स्वस्वबन्धूनां चाऽगमनम्, तावदत्र वन एव स्थिता इति ॥ ५४ ॥ समनुज्ञातः नेतुं सम्मतिदानेन प्रीत्याऽनुज्ञातः,

---

१. **'स्यन्दने स्थित–'** २ **'अपि च सर्वशः'** ३. **'-मत्रैव संस्थिताः ।'**

धृष्टकेतुश्च भगिनीं काशिराजः सुतामपि ।
पुरं ययतुरादाय कुन्त्यैवान्याः सह स्थिताः ॥ ५६ ॥

पार्वती नकुलस्याऽसीद् भार्य्या पूर्वं तिलोत्तमा ।
पूर्वोक्ते चैव यमयोर्भार्य्ये कुन्त्या हि वारिताः[१] ॥ ५७ ॥

सुभद्रामभिमन्युं च रथमारोप्य केशवः ।
पाण्डवानभ्यनुज्ञाय सभार्य्यः स्वपुरीं ययौ[२] ॥ ५८ ॥

कश्चित् कालं द्रौपदेया उष्य पाञ्चालके पुरे ।
ययुर्द्वारवतीं[३]मेव तत्रोषुः कृष्णलाळिताः[४] ॥ ५९ ॥

**अत्र नाम्ना पार्वती । पूर्वोक्ते मद्रमगधराजसुते च पार्वती च कुन्त्यैव (वारिताः) ॥ ५७–९ ॥**

---

केशवेन, पाण्डवैः, द्रौपद्या च । भागिनेयैः द्रौपदीपुत्रैः पञ्चभिः सह ॥ ५५ ॥ धृष्टकेतुः शिशुपालपुत्रः । भगिनीं देवकीं युधिष्ठिरभार्यामादाय शुक्तिमतीं नाम पुरम् । चकारेण तस्याः पुत्रं सुहोत्रं च । **'धृष्टकेतुः स्वसारं च समादायाथ चेदि-राट् । जगाम पाण्डवान् दृष्ट्वा रम्यां शुक्तिमतीं पुरीम्'** [व.प.२२.५०] इत्यर्जुनाभिगमने । अत्रापि स्वसारं चेति चकारेण स्वसुः पुत्रो गृह्यते । यत् पुनरर्वाचीना व्याचक्षते– **'धृष्टकेतोर्भगिनी करेणुमती नकुलभार्या'** इति ते निर्मूल-पाठभ्रान्ता इत्युपेक्षणीयाः । काशिराजः सुतां काळीं भीमभार्याम् । अपिना तत्पुत्रं शर्वत्रातमपि । अन्वेव पाण्डवान् याता इत्यस्यापवादमाह– कुन्त्यैवान्याः सह स्थिताः ॥ ५६ ॥ काः कुन्त्या सह स्थिताः? आह–पार्वती । पूर्वोक्ते नकुलस्य माद्री सहदेवस्य मागधी च । प्रायस्ताः सर्वा अपि नवोढा गुर्विण्य आसन् । अतो हि कुन्त्या वारिताः ॥ ५७ ॥ अभ्यनुज्ञाय अभिमानपूर्वकमामन्त्र्य । पुना राज्यलाभोऽस्त्विति अभिलष्य आमन्त्र्य । **'सुभद्रामभिमन्युं च रथमारोप्य केशवः । आजगाम वनाद् राजन् पुरीं द्वारवतीं प्रभुः'** [१०.८७.११] इति भागवते ॥ ५८ ॥ ययुर्द्वारवतीमेव । तथाह्युपरि भारते द्रौपदीं प्रति सत्यावचनम्–**'पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथाविधः । आर्जुनिः श्रुतकीर्तिश्च शतानीकश्च नाकुलिः । सहदेवाच्च यो जातः श्रुतकर्मा तवाऽत्मजः । सर्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव । अभिमन्युरिव प्रीता द्वारवत्यां रता भृशम् । त्वमिवैषां सुभद्रा च प्रीत्या सर्वात्मना स्थिता'** [व.प.२३६.१०–२] इति द्रौपदीसत्यभामासंवादपर्वणि ॥ ५९ ॥

---

१. 'कुन्त्या निवारिताः'
२. 'स्वपुरं ययौ'
३. '–र्द्वारावती–'
४. 'कृष्णपालिताः'

ततः परं धर्म्मराजो निर्विण्णः स्वकृतेन ह ।
भ्रातृभार्य्यापदे कृष्णां स्थापयामास सर्वदा ॥ ६० ॥

ऊषुर्वने च ते पार्त्था मुनिशेषान्नभोजिनः ।
भुक्तवत्स्वेवानुजेषु भुङ्क्ते राजा युधिष्ठिरः ॥ ६१ ॥

अलङ्घ्यत्वात् तदाज्ञाया अनुजाः पूर्वभोजिनः ।
तस्यानन्तरमेवैका भुङ्क्ते सा पार्षतात्मजा ॥ ६२ ॥

एवं सदा विष्णुपरायणानां [१]तत्प्रापणान्नैकभुजां प्रयातः ।
संवत्सरस्तत्र जगाद कृष्णा भीमाज्ञया धर्म्मराजं सुवेत्त्री ॥ ६३ ॥

अतिमार्द्दवयुक्तत्वाद् धर्म्मराजश्चतुर्द्दशे ।
अपि वर्षे गुरुभयाद् राज्यं नेच्छेदिति प्रभुः ।
मारुतिः प्रेषयामास कृष्णां प्रस्तावहेतवे ॥ ६४ ॥

**स्वकृतेन देवनेन निर्विण्णः धर्मराजः, ततः परं देवनात् परम् ॥ ६०–२ ॥ तत्प्रापणं तस्मै समर्पणम् । एवं संवत्सरः प्रयातः ॥ ६३ ॥ अतिमार्दवयुक्तत्वात् कारणात् गुरुभयात् । प्रस्तावहेतवे स्वविवक्षितं वक्तुं प्रसङ्गमुत्पादयितुम् ॥ ६४ ॥**

हेति धर्मराजस्य सौजन्यं स्वदते । भ्रातॄणां भार्यापदे । माद्रीपुत्रौ तस्यां भ्रातृभार्यावृत्तिं चक्रतुरिति पूर्वमेवोक्तम् [२१. १७२] । सम्प्रति धर्मराजोऽपि तां भ्रातृभार्यापदे स्थापयामास । तेनात्र भ्रात्रोरिति भीमार्जुनयोः । विशेषतो भ्रातुर्भीमस्य ॥ ६० ॥ वने द्वैतवने । प्रथमं काम्यकं प्रविष्टाः यावत् कृष्णसन्दर्शनं तत्रोषित्वा ततो हि द्वैतवनं विविशुः स्थिर-वासाय । द्वाभ्यां फलेन कुसुमेन च आ समन्तात् एतं चित्रवर्णम् । **'एतः कर्बुर आगते'** इत्यभिधानम् । द्वाभ्यां क्रूरमृग-गणेन साधुमुनिगणेन च इतमुपेतमिति वा । द्वीतमेव द्वैतम् ॥ ६१–६२ ॥ यदन्नं विष्णुनैवेद्यार्थं पूजागृहं प्रापयन्ति तत् तत्प्रापणान्नम् । अद्यापि हि मठेषु गुरुभोज्यमन्नं प्रापणमिति वदन्ति । प्रयोगश्च वाराहे–**'एवं तु भोजनं दत्वा व्यप-नीय तु प्रापणम्'** [११.४७] इति । **'ताम्रपात्रेण वै भूमे प्रापणं यत् प्रदीयते'** [१२९.४४] इति च । प्रयातः सुखं यातः । सुवेत्त्री सर्ववेत्त्री ॥ ६३ ॥ परदुःखासहिष्णुता मार्दवम् । असतामपि दुःखलेशदर्शनेनापि चित्तद्रवणमति-मार्दवम् । गुरवः धृतराष्ट्रादयः न राज्यं दित्सन्ति चेत् तद्विरोधः स्यादिति भयाद् राज्यं नेच्छेत् । वचनप्रहाणे सङ्कोचः,

१. **'तत्प्रार्पणान्नैक–'** । **'तत्प्रापणैकान्नभुजाम्'** इति क्वचित् ।

क्षमा सर्वत्र धर्म्मो न पापहेतुश्च दुर्ज्जने ।
राज्ञां सामर्थ्ययुक्तानामिति संस्थाप्य शास्त्रतः ॥ ६५ ॥

हत्वा चतुर्द्दशे वर्षे धार्त्तराष्ट्रानराज्यदान् ।
कर्त्तुं राज्यं पुरो गन्ता भवानीत्यग्रजेन ह ॥ ६६ ॥

कारयन् सत्यशपथं विवादस्य क्रमेच्छया ।
आदिशत् प्रथमं कृष्णां भीमः सा नृपमब्रवीत् ॥ ६७ ॥

नैव क्षमा कुजनतासु नृपस्य धर्म्मस्तां त्वं वृथैव धृतवानसि सर्वकालम्[१] ।
इत्युक्त आह नृपतिः परमा क्षमैव सर्वत्र तद्विधृतमेव जगत् समस्तम् ॥ ६८ ॥

कर्त्ता च सर्वजगतः सुखदुःखयोर्हि नारायणस्तदनुदत्तमिहास्य सर्वम् ।
तस्मान्न कोपविषयोऽस्ति कुतश्च कश्चित् तस्मात्क्षमैव सकलेषु परोऽस्य धर्म्मः ॥ ६९ ॥

**इति एतमर्थं संस्थाप्य धर्मजं प्रति समर्थयित्वा, अग्रजेन इति सत्यशपथं कारयन् कारयिष्यन् भीमः प्रथमं कृष्णामादिशत् । संस्थाप्य स्वयं निश्चित्येति वा ॥ ६५–६७ ॥ नृपस्य, सामर्थ्ययुक्तस्येति शेषः । सार्वकालं सर्वकालसम्बन्धि यथा भवति तथा । सर्वत्र कुजनतासु सुजनतासु च । तद्विधृतं तया क्षमया (वि)धृतं रक्षितम् ॥ ६८ ॥ सर्वत्र क्षमा कर्तव्येत्येतदुपपादयति– कर्ता चेति । चशब्द एवार्थे । इह लोके अस्य चेतनजातस्य (सर्वं) सुखदुःखाशनं तदनुदत्तम् । तेन नारायणेन अनुदत्तं कर्मानुसारेण दत्तं हि यस्मात्**

---

गुरुषु गौरवम्, युद्धे गुरुहननादिना पापभीरुता चात्र भयशब्दार्थः । स्वयं बोधयितुं प्रभुरपि प्रस्तावहेतवे द्रौपदीं प्रेषयामास । प्रस्तावः प्रसञ्जनम् । विषयोपक्षेपः । पीठिकेव महाप्रबन्धस्य ॥ ६४ ॥ राज्ञां दुर्जने क्षमा न केवलमहेतुः पुण्यस्य, पापहेतुश्च । संस्थाप्य युक्तिसङ्गततया शास्त्रतः स्थापयित्वा ॥ ६५ ॥ अराज्यदान् । यदि राज्यं न दास्यन्ति तदा तान् हत्वा । न दास्यन्तीति स्वयं जानाति भीम इत्यराज्यदानित्येवाऽह । हेति धर्मराजस्य मनःपरिवर्तनं दुष्करमिति विस्मयमानः स्वदते ॥ ६६ ॥ शान्तिविषये स्वस्य धर्मराजस्य च यो विवादः मतभेदः तस्य क्रमेण स्वपरतया पर्यवसाययितुमिच्छया, तदर्थं चिकीर्षितः यः विविधो वादः स उत्तरोत्तरं क्रमेण वर्द्धमानः स्यादितीच्छया, प्रथममवरैर्हितं वक्तव्यं तत उत्तमैरिति क्रमेच्छया च । प्रथमं कृष्णामादिशत् ॥ ६७ ॥ सर्वकालम् । सर्वस्मिन्नपि काले । अत्यन्तसंगोगे द्वितीया । सर्वत्र क्षमैव परमा । क्षमैव परमो धर्म इत्यर्थः । विधृतं सर्वदा धृतम् ॥ ६८ ॥ कर्ता च हर्ता च । नारायणो हि । सर्वशास्त्रसिद्ध-

---

१. **'सार्वकालम्'** । वे.ती. पाठोऽपि तथा ।

इत्युक्तवन्तं नृपमाह पार्षती यदि क्षमा सर्वनरेषु धर्म्मः ।
राज्ञा न कृत्यं[1] नच लोकयात्रा भवेज्जगत् कापुरुषैर्विनश्येत् ॥ ७० ॥

सत्यं च विष्णुः सकलप्रवर्त्तको रमाविरिञ्चेशपुरस्सराश्च ।
काष्ठादिवत् तद्वशगाः समस्तास्तथाऽपि न व्यर्थता पौरुषस्य ॥ ७१ ॥

तदाज्ञया पुरुषश्चेष्टमानश्चेष्टानुसारेण शुभाशुभस्य ।
भोक्ता न तच्चेष्टितमन्यथा भवेत् कर्त्ता तस्मात्[2] पुरुषोऽप्यस्य वश्यः ॥ ७२ ॥

**तस्मात् नारायण एव सर्वजगतः सुखदुःखयोः कर्ता । तस्मात् नारायणस्यैव सर्वकर्तृत्वात् कुतश्च कारणात् कश्चित् अपि जन्तुः कोपविषयो नास्ति इति । क्षमैव सर्वत्र परमेत्युक्तमुपपाद्योपसंहरति– तस्मादिति । तस्मात् अन्यस्य कारणत्वाभावात्, अस्य पुरुषस्य सकलेषु सदसत्सु च क्षमैव परो धर्मः ॥ ६९ ॥ लोकयात्रा लोकप्रवृत्तिः । कापुरुषैः दुर्जनैः ॥ ७० ॥ सर्वकर्ता विष्णुरिति यदुक्तं तदङ्गीकृत्याऽह– सत्यं चेति । चोऽवधारणे । काष्ठादिवत् काष्ठादिकं यथाऽस्मदादिचेतननियतं तद्वत् । सकलप्रवर्तकत्वं विष्णोरङ्गीकृतं चेत् न कोऽपि कोपविषय इत्यागतमित्यत आह– तथाऽपि विष्णोः सकलप्रवर्तकत्वेऽपि । पौरुषस्य पुरुषप्रयत्नस्य व्यर्थता अफलता नेति सम्बन्धः ॥ ७१ ॥ पौरुषस्याव्यर्थत्वमुपपादयति– तदित्यादिना । शुभाशुभस्येति द्वन्द्वैकवद्भावः । तच्चेष्टितं जीवचेष्टितम् । अन्यथा अफलं न भवेत् । चेष्टानुसारेणैव भोक्ता, (अतः)**

---

मेतत् । त्वयाऽप्यनुभूतं हि । तेन तत्तत्कर्मानुगुणं दत्तमस्य सर्वजगतः सर्वमपि । इह संसारे । सर्वस्य नारायण एव कर्तेति कं प्रति कुप्येत्? कस्माद् वा कुप्येत्? सकलेषु सत्सु असत्सु च । अस्य धर्ममनुवर्तमानस्य लोकस्य ॥६९॥ वसन्ततिलकाभ्यां कामिनीपदविन्यासललिताभ्यां विषयं प्रस्तूय प्रश्नमुद्भाव्याथ प्रत्युत्तरं वंशस्थगर्भाभिरुपजातिभिः परिणतपाण्डित्यजनितपुलकेन कुलकेनाऽह– यदि क्षमेत्यादिना । तथाह्याचक्षते–**'यत्र वाक्यार्थविश्रान्तिः श्लोकेनैकेन जायते । तन्मुक्तकं युगं द्वाभ्यां त्रिभिः स्यात् तिलकं पुनः । चतुर्भिः स्याच्च कलकं पञ्चभिः कुलकं ततः । महाकुलकमित्यार्याः कथयन्ति ततः परम्'** इति । दुर्बलाः क्षमन्त एव । न शिक्षया कृत्यम् । नापि राज्ञा । बलवन्तः कापुरुषाः बाधन्ते । दुर्बला बाध्यन्ते । एवं सति कथं लोकयात्रा स्यात्? स्वार्थेन परस्परं हिंसया च कथं जगन्न नश्येत्? विनश्येत् विजितं विहतं च सत् नश्येत् ॥ ७० ॥ विष्णुः सर्वप्रवर्तक इति च सत्यम् । अन्ये समस्ता अपि तद्वशगा इति च सत्यम् । काष्ठादिवत् । अत एवाऽहुः–**'यथा काष्ठं च काष्ठं च समेयातां परस्परम्'** इति । पराधीनकृतिमत्त्वं साधारणं हि चेतनेष्वचेतनेषु च । तर्हि को जीवे विशेषः? इच्छापूर्वककृतिमत्त्वमित्यवधत्स्व । तदेवाऽह– तथाऽपि न व्यर्थता पौरुषेयस्येति । पौरुषं पुरुषकारः । पुरुषप्रयत्न इत्येतत् ॥ ७१ ॥ त्रिविधं हि कर्तृत्वं भवति । क्रियाश्रयत्वं नाम

---

१. **'राज्ञो न कृत्यम्'** इति क्वचित् । २. **'भवेत् तस्मात् कर्ता पुरुषो–'** इति क्वचित् ।

वृथा यदि स्यात् पौरुषं कस्य हेतोर्विधिर्निषेधश्च समस्तवेदगः ।
विधेर्निषेधस्य च नैव गोचरः पुमान् यदि स्याद् भवतो हि तौ हरेः ॥ ७३ ॥

तेनैव लेपश्च भवेदमुष्य पुण्येन पापेन च नैव चासौ ।
लिप्येत ताभ्यां परमस्वतन्त्रः[१] कर्त्ता ततः पुरुषोऽप्यस्य वश्यः ॥ ७४ ॥

**तच्चेष्टितमफलं नेति भावः । एवं कर्तृत्वमुपपाद्योपसंहरति–कर्ता तस्मादिति । तस्मात् पुरुषः कर्ता । अत्रायं प्रयोगः– जीवः कर्ता भोक्तृत्वात् । यः कर्ता न भवति स भोक्ता न भवति यथा घट इति । ईश्वरस्यापि कर्तृत्वेन सपक्षत्वात् तत्र भोक्तृत्वाभावादसाधारणानैकान्तिको हेतुरिति नाऽशङ्कनीयम् । अस्वतन्त्र-कर्तृत्वसाधनादित्याह–अपीति । अपि कर्ताऽपि अस्य ईश्वरस्य वश्यः ॥ ७२ ॥ ननु भोक्तृत्वादिति हेतुरस्तु, कर्तृत्वसाध्यं मा भूत्, किं विपक्षे बाधकमिति तत्राह–वृथेति । यदि पौरुषं वृथा अकर्तव्यं स्यात् । यदि पुरुषः कर्ता न स्यादित्यर्थः । तर्हि समस्तवेदगः प्रमाणतमसमस्तवेदगतः विधिः 'प्रातरुत्थायाथ सन्ध्यामुपासीत' इत्यादिविधिः, निषेधश्च 'न सुरां पिबेत् न पलाण्डुं भक्षयीत' इत्यादिनिषेधश्च कस्य हेतोः, प्रवृत्ताविति शेषः । जीवस्य कर्तृत्वाभावे विधिनिषेधकशास्त्रवैयर्थ्यं स्यात् । नच तद्युक्तम् । विधिनिषेधगोचरश्च (अ)कर्तैवेति चेत्, न ह्यकर्तारमुद्दिश्य विधिनिषेधौ भवतः । तस्माद् विधिनिषेधगोचरतया जीवः कर्तैवेति भावः । न जीवो विधिनिषेधगोचरोऽतः कर्ताऽपि नेति चेत् तत्राऽह–विधेरिति । पुमान् यदि विधेर्निषेधस्य च गोचरो न स्यात् तर्हि पुरुषस्य विधिनिषेधात्मकशास्त्रगोचरत्वाभावात् शास्त्रस्य निर्विषयत्वं स्यात् । नच निर्विषयत्वं युक्तम् । अतः परिशेषात् विधिनिषेधौ हरेरेव भवतः ॥ ७३ ॥ अस्तु हरेरेव**

कर्तृत्वमेकम् । तज्जडेष्वपि दृश्यते । यथा ग्रावाणः पतन्ति । इच्छापूर्वकक्रियाश्रयत्वं द्वितीयम् । तज्जीवगतं कर्तृत्वम् । स्वतन्त्रेच्छापूर्वकक्रियाश्रयत्वं तृतीयम् । तदेतन्मुख्यं कर्तृत्वमीश्वरमात्रनिष्ठम् । तेन पराधीनमिच्छापूर्वककर्तृत्वं जीव-निष्ठमित्यर्थः । शुभाशुभस्य । शुभं वाऽशुभं वेति शुभाशुभम् । अन्यथा शुभाशुभस्य भोगाभावे क्रियायां प्रवृत्तिरेव न भवेत् । अस्वतन्त्रः कर्तैव फलभाक् । स्वतन्त्रस्य पुण्यपापलेपासम्भवात् । तस्मात् जीवस्याप्यस्वतन्त्रं कर्तृत्वमनिच्छताऽ-प्यभ्युपेयम् ॥ ७२ ॥ विधिनिषेधौ कस्येति तावद् वक्तव्यं पुरुषकारस्य वैयर्थ्यवादिना । न तावज्जडस्य । अकर्तृत्वात् । नापि जीवस्य । अकर्तृत्वादेव । अतः परिशेषात् तौ हरेरेव स्याताम् । यः संसारबन्धं परिहरति स हरिरेव विधिनिषेधबद्ध इत्यायातम् । परमः सर्वोत्तमश्चासौ स्वतन्त्रश्च । स पुण्यपापाभ्यां नैव लिप्येत । परं केवलमस्वतन्त्र एव ताभ्यां लिप्येत । न तद् भगवति युक्तम् । स्वतन्त्रकर्तृत्वात् । अस्वतन्त्रकर्तैव हि लिप्यते । येन क्रियते स लिप्यत इति न नियमः । यदर्थं क्रियत स लिप्यत इति तु युक्तम् । स्वयं कर्तुमप्रभवतः कृते हि प्रभुः करोति । अप्रभवन् लिप्यते । न कर्ताऽपि प्रभुः । ऋत्विग्भिः यागः क्रियते । यजमानः पुण्येन युज्यते । पुरोहितैः प्रायश्चित्तं क्रियते । यजमानः पापेन मुच्यते । भगवान् हि पुरोहितः । यजमानो जीवः । अत एव श्रुतिराह– **'अग्नमीळे पुरोहितम्'** इति । पूर्वोक्तमेव पुनरुपसंहारदार्ढ्यायाऽह– ततः पुरुषोऽप्यस्य वश्यः ॥ ७३–४ ॥

इतीरितो धर्म्मजः कृष्णयैव निरुत्तरत्वं गमितस्त्वभत्सयत्[2] ।
कुतर्क्कमाश्रित्य हरेरपि त्वमस्वातन्त्र्यं साधयसीति चोक्त्वा ॥ ७५ ॥

छलेन तेन प्रतिभत्सिता सा क्षमापयामास नृपं यतः स्त्री ।
वाचाळता[3] नातितरां हि शोभते स्त्रीणां ततः प्राह वृकोदरस्तम् ॥ ७६ ॥

राजन् विष्णुः सर्वकर्त्ता नचान्यस्तत्तन्त्रमेवान्यदसौ स्वतन्त्रः ।
तथाऽपि पुंसा विहितं स्वकर्म्म कार्य्यं त्याज्यं चान्यदत्यन्तयत्नात् ॥ ७७ ॥

**विधिनिषेधगोचरत्वं किं नश्छिन्नमित्यत आह– तेनैवेति । तेनैव विधिनिषेधगोचरत्वेनैव अमुष्य विष्णोः पुण्येन विहितकरणात् पुण्येन, पापेन विहिताकरणात् प्रत्यवायाद्येन निषिद्धकरणात् पापेन च लेपो भवेत् । (तन्निबन्धनं) सुखदुःखभोक्तृत्वं च स्यादिति भावः । अस्तु पुण्यपापलेपस्तस्य को दोष इत्यत आह– नैवेति । असौ हरिः ताभ्यां पुण्यपापाभ्यां नैव लिप्येत नैव लिप्यते । चशब्दात् तन्निबन्धनसुखदुःखभोक्ता च नेत्यर्थः । तस्य पुण्यपापलेपाभावे तन्निबन्धनसुखदुःखाभावे (च) हेतुमाह– परमस्वतन्त्र इति । तस्माज्जडेश्वरयोः विधिनिषेधगोचरत्वानुपपत्तेः पारिशेष्यात् विधिनिषेधगोचरत्वेन पुण्यपापलेपवत्त्वात् एतन्निबन्धनसुखदुःखभोक्तृत्वात् पुरुषः कर्तैवेति भावः । उपसंहरति– कर्तेति ॥ ७४ ॥ अभत्सयत्, कृष्णामिति शेषः ॥ ७५ ॥ तेन धर्मजेन ॥ ७६ ॥ 'कर्ता च सर्वजगतः'(६९) इत्यादिना युधिष्ठिरेण यत् सर्वकर्तृत्वमुक्तं स्वातन्त्र्यं चोक्तं भगवतस्तदङ्गीकृत्य जीवस्यापि कर्तृत्वमस्वातन्त्र्यं च साधयति– राजन्नित्यादिना, 'तस्मात् कार्यं तेन क्लृप्तं स्वकर्म' (८९) इत्यन्तेन ग्रन्थसन्दर्भेण । विहितं स्वकर्म कार्यमत्यन्तयत्नात् । अन्यत् निषिद्धं अत्यन्तयत्नात् त्याज्यं चेति सम्बन्धः ॥ ७७ ॥**

---

कृष्णयैव । किमुत भीमेन गमिष्यतीति । तु इति पतित्वाभिमानरूपेण भ्रमविशेषेणेत्याह । स्वोपज्ञतर्कबलेन श्रुतेरपार्थ-करणं कुतर्कः । अभत्सयत् । भत्सधातुरयमरेफ इति प्रतनानां मतम् । सरेफता तु अर्वाचीनानां वैयाकरणानां प्रमादः । बहुषु हि धातुरूपेष्वेवंविधाः प्रमादाः परिदृश्यन्ते ॥ ७५ ॥ छलेन स्वसमये दुराग्रहेण, प्रमाणवचनानां स्वानुकूलतयाऽर्थान्तरकरणेन च । यदि मया किञ्चिदयुक्तमवादि क्षम्यतामिति क्षमापयामास । नायुक्तमुक्तम् । तेन न क्षमावसर इति तु हृदयम् । अथापि स्त्रीसहजं सौजन्यं दर्शयन्ती लोकसङ्ग्रहाय क्षमापयामास । वाचाळता न शोभते । अतिवाचाळता नतराम् । भर्तुः पुरः क्वचिद् वाद एव न शोभते । विवादः पुनः नातिशोभते । विवादाय वाचाळता तु नातितराम् ॥ ७६ ॥ अथ भैमं तत्वज्ञानं सङ्गृह्णात्येकोनचत्वारिंशता श्लोकैः– राजन् विष्णुः सर्वकर्तेत्यादि,

---

१. 'परमः स्वतन्त्रः' २. '–स्त्वभर्त्सयत्' ३. 'वाचालता'

प्रत्यक्षमेतत् पुरुषस्य कर्म्म तेनानुमेया प्रेरणा केशवस्य ।
स्वकर्म्म कृत्वा विहितं हि विष्णुना तत्प्रेरणेत्येव बुधोऽनुमन्यते ॥ ७८ ॥

तेनैति सम्यग्गतिमस्य विष्णोर्जनोऽशुभो दैवमित्येव मत्वा ।
हित्वा स्वकं कर्म्म गतिं च तामसीं प्रयाति तस्मात् कार्य्यमेव स्वकर्म्म ॥ ७९ ॥

ज्ञातव्यं चैवास्य[1] विष्णोर्वशत्वं कर्त्तव्यं चैवाऽऽत्मनः कार्य्यकर्म्म ।
प्रत्यक्षैषा कर्त्तृता जीवसंस्था तथाऽऽगमादनुमानाच्च सर्वम् ॥ ८० ॥

**पुरुषस्य एतत् कर्म गमनागमनादिरूपं कर्म प्रत्यक्षम् । एतत् पुरुषनिष्ठतया प्रत्यक्षसिद्धम् । स्वगत-कर्मणश्च स्वस्वकर्तृत्वमहं करोमीति स्वस्वसाक्षिप्रत्यक्षसिद्धम् । तेन प्रत्यक्षसिद्धेन क्वचिच्च प्रतिहतेन कर्तृत्वेन केशवस्य प्रेरणा, कर्तृत्वस्येति शेषः, अनुमेया । विप्रतिपन्नं कर्तृत्वमीश्वराधीनं क्वचित्क्वचित् प्रति-हतत्वात् राजपुरुषकर्तृत्ववदित्यनुमानेन ज्ञातव्या । कर्तृत्वं (तस्य) केशवप्रेरितत्वं (च) ज्ञानि-प्रत्यक्षसिद्धमेवेत्याह– स्वकर्मेति । विष्णुना विहितं विष्ण्वाज्ञारूपश्रुतिस्मृतिविहितम् ॥ ७८ ॥ तेन एवं ज्ञात्वा कर्मक(करणेन) विष्णोः सकाशात्, तदनुग्रहेणेति यावत्, सम्यग् गतिं समीचीनां गतिं एति । दैवमेव करोतीति मत्वा । तस्मात् कर्तृत्वसद्भावात् स्वकर्माकरणेऽनर्थसद्भावाच्च ॥ ७९ ॥ (कार्यमेव स्वक)र्मेत्युक्तम् । तत्रेतिकर्तव्यतामाह– ज्ञातव्यमिति । अस्य कर्तृजीवस्य विष्णोर्वशत्वं च ज्ञातव्यमेव । परतन्त्रत्वात् । नाहं कर्तेति मत्वा स्वकर्म न त्याज्यं चेत्याह– कर्तव्यमिति । आत्मनः कार्यं कर्म च कर्तव्यमेव । जीवस्य कर्तृत्वं विष्ण्वधीनत्वं च पुनः सप्रमाणकं दर्शयति– प्रत्यक्षेत्यादिना । यथा जीवसंस्थाऽ-स्वतन्त्रजीवसङ्गता एषा कर्तृता प्रत्यक्षाऽहं कर्तेति प्रत्यक्षसिद्धा । तथा 'कुर्वन्नेवेह कर्माणि जिजीविषेत्'**

**'–वासुदेवप्रसादात्'** [११५] इत्यन्तम् । विष्णुविषये सर्वं त्वदुक्तं यथार्थम् । तथाऽपि ॥ ७७ ॥ पुरुषस्य कर्तृत्वं प्रत्यक्षम् । अस्वातन्त्र्यं च । तेन स्वतन्त्रस्यान्यस्य प्रेरणाऽनुमेया । स च ब्रह्मरुद्रयोरपि प्रवर्तकः केशव एवेति श्रुतिभिरवगम्यते । तदिदं प्रमाणत्रितयसिद्धम् । अनुमन्यते । श्रुतिप्रत्यक्षाभ्यां सहकृतेनानुमानेन मन्यते । प्रमाणत्रितया-नुगुणं मन्यते ॥ ७८ ॥ तेन एवमनुसन्धानेन । अस्य स्वतन्त्रकर्तुर्विष्णोः सकाशात् । निर्दोषत्वादकारवाच्यस्य वा । तेन फलदाने तस्य न वैषम्यनैर्घृण्ये इत्याह । अशुभो जनस्तु, **'केनापि दैवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि'** इति जल्पन् जम्बूककल्पः दैवमेव सर्वं करोतीति मत्वा न किमपि कर्तव्यं कुर्वन्, अकर्तव्यं वा कुर्वन् नरकाद्यनर्थं यातीति च प्रसिद्धम् । तस्मात् स्वभावविहितं कर्म कर्तव्यमेव ॥ ७९ ॥ कार्यकर्म । यस्य स्वभावस्य वर्णस्य च यत् सहजं कार्यं तत् कर्म । अस्य कर्मणः, कर्तुर्वा जीवस्य विष्णोर्वशत्वं च ज्ञातव्यमेव । जीवसंस्था जीवे फलसमानाधिकरणतया

१. **'चास्य'** इति क्वचित् ।

विष्णोर्वशे तन्न हेयं द्वयं च जानन् विद्वान् कुरुते कार्य्यकर्म्म ।
तत्प्रेरकं विष्णुमेवाभिजानन् भवेत् प्रमाणत्रितयानुगामी ॥ ८१ ॥

पूर्ण्णं प्रमाणं तत्त्रयं चाविरोधेनैकत्रस्थं तत् त्रयं चाविरोधि ।
पृथङ् मद्ध्यं चाप्रमाणं विरोधि स्यात् तत् तस्मात् त्रयमेकत्र कार्य्यम् ॥ ८२ ॥

**इत्यागमात्, विप्रतिपन्नः कर्ता भोक्तृत्वात् व्यतिरेकेण घटवदित्यनुमानाच्च सिद्धा । सर्वं जीवगतकर्तृत्वादिकं विष्णोर्वशे, वर्तत इति शेषः । तद् द्वयं च जीवस्य कर्तृत्वादिकं तस्येश्वराधीनत्वं च न हेयं जानन् कार्यकर्म विहितं कर्म कुरुते । विद्वान् ममेश्वराधीनं कर्तृत्वमिति विद्वान् । एवं जीवगतं कर्तृत्वमीश्वराधीनमिति ज्ञात्वैव ज्ञानी कर्म कुरुत इत्युक्तम् । इदानीं स एव प्रत्यक्षादिप्रमाणानुसारी नान्य इत्याह– तत्प्रेरकमिति । यः तत्प्रेरकं जीवकर्तृत्वे प्रेरकं विष्णुमभिजानन् सम्यग्जानन्नेव, कर्म कुरुत इति शेषः । (सः) प्रमाणत्रितयानुगामी प्रत्यक्षादिप्रमाणत्रयसिद्ध(त)त्वाङ्गीकारवान् भवेदिति । जीवस्य कर्तृत्वाभावं वा स्वातन्त्र्यं वा मन्यमानो न प्रमाणत्रितयानुगामीत्यर्थः ॥ ८०–१ ॥ ननु प्रमाणत्रितयानुगामित्वं किमर्थम्? जीवेश्वरकर्तृत्वग्राहकप्रमाणानां भिन्नविषयत्वं वा, एकविषयत्वेऽ(प्य)न्यतम(स्या)प्रामाण्यं वा किं न स्यादित्यतः प्रमाणानामविरोधेनैकविषयतानभ्युपगमे सत्यङ्गीकृतप्रमेयस्य पूर्णप्रमाणता न स्यादिति भावेनाऽह– पूर्णं प्रमाणमिति । तत्त्रयं (च) अविरोधेन परस्परविरोधाभावेन एकत्रस्थं एकार्थप्रतिपादकत्वेन प्रवृत्तम्, चेत् तर्हीति शेषः । तस्मिन्नर्थे पूर्णं प्रमाणम्, भवेदिति शेषः । तत्त्रयं तु अविरोधि परस्परविरोधरहितं पृथक् भिन्नार्थविषयं चेत् तर्हि (मध्य)प्रमाणं भवेत् । बाहुल्यलक्षणप्राबल्याभावात् । प्रमाणान्तरविरोधाभावेनाप्रामाण्यशङ्का(या अ)विषयत्वाच्चेति भावः । तत्त्रयं च विरोधि एकस्मिन्नर्थे परस्परविरोधयुक्तं चेत् तर्हि अप्रमाणं स्यात् । परस्परविरोधेनैकस्यापि निःशङ्कतया स्वार्थानिश्चायकत्वादिति भावः । तस्मात् एवन्त्वात् तत्त्रयं प्रमाणत्रयं एकत्र अविरोधेनैकार्थविषयतया कार्यं योज्यम् ॥ ८२ ॥**

---

स्थिता । आगमश्च विधिनिषेधाभ्यां कर्तृत्वमेव गमयति । **'कुर्वन्नेवेह कर्माणि–'**, **'स्वाध्येयोऽध्येतव्यः'**, **'सत्यं वद । धर्मं चर'** इत्याद्या श्रुतिः । **'कुरु कर्मैव तस्मात् त्वम्'** इत्याद्या च स्मृतिः । विधिनिषेधयोरीश्वरे जडे चासम्भवादिति परिशेषानुमानाच्च जीवसंस्था कर्तृता सिद्धा । स्वतन्त्रस्य न फलभाक्त्वम्, नाप्यकर्तुरिति वाऽनुमानात् । तथा जीवस्यास्वातन्त्र्यात् स्वतन्त्रः कर्ताऽन्य इत्यनुमानात्, **'सर्वस्य वशी सर्वस्येशानः'** इत्याद्यागमाच्च सर्वं विष्णोर्वशे वर्तत इति च सिद्धम् । तस्माद् द्वयमपि न हेयम् । प्रमाणसिद्धत्वाद् ग्रह्यमेव न त्याज्यमित्यर्थः । इति जानन् विद्वान् भवति । कुरुते च स्वभावसहजं कर्म । अभितः सर्वत्र जानन् । अभिमुखं बिम्बरूपं च जानन् ॥ ८०–८१ ॥ तत् प्रत्यक्षादिकं त्रयम्, अविरोधेन परस्परपूरकत्वेन एकत्रस्थं चेत् तत् पूर्णमुत्तमं प्रमाणमुच्यते । तत् त्रयं न परस्परं

अज्ञः प्रत्यक्षं त्वपहायैव दैवं मत्वा कर्तृ स्वात्मकर्म्म प्रजह्यात् ।
विद्वान् जीवं विष्णुवशं[1] विदित्वा करोति कर्त्तव्यमजस्रमेव ॥ ८३ ॥

स्वभावाख्या योग्यता या हठाख्या याऽनादिसिद्धा सर्वजीवेषु नित्या ।
सा कारणं तत् प्रथमं[2] तु द्वितीयमनादिकर्म्मैव तथा तृतीयः ॥ ८४ ॥

**एवं तिस्रोऽवस्थाः प्रदर्शिताः । ततः कः कामवस्थामङ्गीकरोतीत्यत आह– अज्ञ इति । अज्ञस्तु विपरीतज्ञानी प्रत्यक्षं प्रत्यक्षसिद्धं जीवकर्तृत्वं अपहाय दैवमेव कर्तृ मत्वा स्वात्मकर्म प्रजह्यात् । न करोतीत्यर्थः । विद्वान् सम्यग्ज्ञानी जीवं तत्कर्तृत्वं च विष्णुवशं विदित्वा करोत्येव ॥ ८३ ॥ विद्वदविदुषो(र)पि (प्रवृत्तिभेदे) किं कारणमित्यत आह– स्वभावेति । स्वभावाख्या हठाख्या स्वभावहठापरपर्यायवाच्या या योग्यता, जीवानामिति शेषः । या योग्यता सर्वजीवेषु अनादि(सिद्धा), नित्या अनादिनित्येत्यर्थः । सा प्रथमं मुख्यं कारणम्, जीवानां विचित्रप्रवृत्ताविति शेषः । अनादिकर्म तु अनाद्यदृष्टं द्वितीयं योग्यतापेक्षयाऽनन्तरं**

---

विरोधि नापि परस्परपूरकम्, किन्तु पृथग्विषयम्, तन्मध्यमं प्रमाणमुच्यते । तस्मात् पूर्णप्रमाणत्वाय प्रमाणत्रयमेकानुगामि कर्तव्यम् । पूर्णं प्रमाणं यथा जीवकर्तृत्वे । अपूर्णं प्रमाणं यथा जीवस्याकर्तृत्वे– **'न ऋते त्वत् क्रियते किञ्चनाऽरे–'** इत्याद्या श्रुतिः । नेयं प्रत्यक्षसिद्धं जीवकर्तृत्वं विरुणद्धि । नापि समर्थयते । ईश्वरसन्निधानं विना स्वतन्त्रं जीवकर्तृत्वमेव किलात्र निषिद्ध्यते । तस्मादिदमपूर्णं प्रमाणम् । जीवकर्तृत्वप्रमाणेन सहावधृतं पूर्णं प्रमाणं भवतीति ॥ ८२ ॥ अज्ञस्तु । प्रत्यक्षं तु, प्रामाणिकमपि प्रत्यक्षम् । दैवमेव कर्तृ मत्वा । स्वं स्वाभाविकमात्मनः कर्म । प्रकामं जह्यात् । प्रकटं जह्यात् । विद्वांस्तु । कर्तव्यमजस्रं करोत्येव ॥ ८३ ॥ महाभारते, प्रसङ्गेऽस्मिन् बहुलं हठशब्दः श्रूयते । **'यश्च दिष्टपरो लोके यश्चापि हठवादिकः । उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते'** [व.प.३२–१३] इति, **'अकस्मादिह यः कश्चिदर्थं प्राप्नोति पूरुषः । तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित्'** [१६] इति, **'सर्वमेव हठेनैके दैवेनैके वदन्त्युत । पुंसः प्रयत्नजं केचिद् दैवमेव विशिष्यते'** [३२] इत्यादि च । तेषां वाक्यानामस्फुटार्थतया पदार्थं तावद् विवृणोति–स्वभावाख्येत्यादिना । इदमुक्तं भवति । भारते हठ इति न बलात्करणमुच्यते । किन्तु स्वभावाख्या योग्यतोच्यते । दैवमिति अनादिकर्माख्यमदृष्टं भगवदिच्छा च । ननु स्वभावोऽन्यः । हठश्चान्यः । तथाहि तत्रैव– **'एवं हठाच्च दैवाच्च स्वभावात् कर्मणस्तथा । यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणाम्'**[२०] इति । न भोः । भ्रान्तोऽसि । स्वपदव्याख्यानमेतत् । हठाख्यात् स्वभावात्, दैवाख्यात् पूर्वकर्मणश्चेति । अतः सुष्ठूक्तम्– **'स्वभावाख्या योग्यता या हठाख्या'** इति । यद्यपि सम्प्रतीदं भारते द्रौपदीवचनतया पठ्यते । प्रायः प्रतनपाठे भीमवचनतया पठितमिति गम्यते । व्यत्यासाख्यः शैलीभेदो वा शरणम् । योग्यता अनादितः सिद्धा नित्या नाशरहिता । तत् तस्मात् सा प्रथमं

---

१. **'–वशे वि–'** २. **'कारणं प्रथमम्'**

जीवप्रयत्नः पौरुषाख्यस्तदेतत् त्रयं विष्णोर्वशगं सर्वदैव ।
स कस्यचिन्न वशे वासुदेवः परात् परः परमोऽसौ स्वतन्त्रः ॥ ८५ ॥

हठश्चासौ तारतम्यस्थितो हि ब्रह्माणमारभ्य कलिश्च यावत् ।
हठाच्च कर्म्माणि भवन्ति कर्म्मजो [१]यत्नो यत्नो हठकर्म्मप्रयोक्ता ॥ ८६ ॥

**कारणम् । पौरुषाख्यः जीवप्रयत्नः तृतीयकारणम् । तथाशब्दः समुच्चये । ननु योग्यतादीनामेव जीवप्रवृत्तिकारणत्वे विष्णोः स्वातन्त्र्यं गतमित्यत आह– तदेतदिति । तदेतत् त्रयं उक्तस्वरूपयोग्यतादित्रयम् । ननु योग्यतादीनां यथेश्वराधीनत्वं तथेश्वरस्यापि किमन्याधीनत्वमित्याशङ्क्य सयुक्तिकं परिहरति– स कस्यचिदिति । असौ परात् परः उत्तमादप्युत्तमः । परमः स्वतन्त्रः मुख्यस्वतन्त्रः । नहि परमात् परमस्य परमस्वतन्त्रस्य अपरमास्वतन्त्राधीनत्वं घटत इत्यर्थः ॥ ८४–५ ॥ यो हठः स्वभावयोग्यतापरपर्यायवाच्यः प्रथमकारणत्वेनोक्तः स किं सकलजीवेष्वेकप्रकारोऽवतिष्ठते उत तारतम्येनेत्याशङ्क्य परिहरति– हठश्चासाविति । उपलक्षणम् । अनादिकर्मापीति भावः । स्थितो हि स्थित एव । चेतनस्वरूपाद्यभिप्रायेण योग्यतादीनां प्राथम्यादिकमुक्त्वा इदानीं योग्यतानादिकर्मणोरुत्तरोत्तरकारणत्वाच्च प्राथम्यादिकमित्याह– हठाच्चेत्यादिना । कर्माणि अनादिकर्माणि । यत्नः तात्कालिकः पुरुषप्रयत्नः कर्मजः अनादिकर्मजः । उत्पत्त्यपेक्षया हठादेः प्राथम्यादिकमुक्त्वा हठकर्मणोरभिव्यञ्जकत्वेन यत्नस्य प्राथम्यमाह– यत्नो हठकर्मप्रयोक्तेति । हठकर्मप्रयोक्ता योग्यताकर्मणोः प्रयोक्ताऽभिव्यञ्जकः । पुरुषप्रयत्नानुसारेण हि योग्यताकर्मणी अभिव्यज्येते । तस्माद् यत्नः तयोः व्यक्तौ प्रयोजक इति भावः ॥ ८६ ॥**

---

कारणं जीवस्य प्रवृत्तिनानात्वे फलनिष्पत्तौ च । कर्म त्वनादितः शक्त्यात्मना विद्यमानमपि न सिद्धम् । किन्तु साध्यम् । नापि नित्यम् । तादृशं कर्म स्वभावानुगुणं व्यज्यत इति द्वितीयं कारणम् । स्वभावाधीनत्वात् । यादृशः स्वभावः, यादृशं च पूर्वतनं कर्म तदुभयानुगुणं प्रयतत इति जीवप्रयत्नः कारणेषु तृतीयः । अस्वतन्त्रकारणेष्वेवायं तरतमभावः । स्वतन्त्रकारणं तु भगवानेवेत्याह– त्रयं विष्णोर्वशगमेव सर्वदेति । सर्वस्मात् सावधिकात् परात् परोऽसौ । निरवधिकं परत्वमस्य । अथच परात् अक्षरादपि परः । तदेव स्फुटमुच्यते–परा मा रमा च यस्याधीना स परम इति । अथच परा मा प्रमाऽस्येति परमः सर्वज्ञः । परेषामपि मानं निर्माणं ज्ञानं लयश्च यस्मात् स परमः । पाति सर्वं रमयति रमते चेति परमः । अथच क्वचित् सापेक्षं स्वातन्त्र्यं भवति । यथा तीर्णशास्त्रजलधिं सर्वतन्त्रस्वतन्त्रमाहुः । स्वतन्त्रेच्छान् मुनीन् नियोगपर्यनुयोगानर्हानाहुः । न तादृशं भगवतः स्वातन्त्र्यम्, किन्तु निरपेक्षमनन्तं चेत्याह–परमः स्वतन्त्र इति ॥८४– ५॥ यत्नः पूर्वकर्मजः । एवं तृतीयोऽपि यत्नः पूर्वभवयोर्हठकर्मणोर्द्वयोरपि प्रयोक्ता फलाधायक इत्यर्थः ॥८६॥

---

१. 'यत्नो यतो हठ–'

विना यत्नं न हठो नापि कर्म्म [१]फलप्रदौ वासुदेवोऽखिलस्य ।
स्वातन्त्र्यशक्तेर्विनियामको हि तथाऽप्येतान् सोऽप्यपेक्ष्यैव युञ्जेत्[२] ॥ ८७ ॥

एतानपेक्ष्यैव फलं ददानीत्यस्यैव सङ्कल्प इति स्वतन्त्रता ।
नास्यापगच्छेत् स हि सर्वशक्तिर्नाशक्तता क्वचिदस्य प्रभुत्वात् ॥ ८८ ॥

तस्मात् कार्य्यं तेन क्लृप्तं स्वकर्म्म तत्पूजार्थं तेन तत्प्राप्तिरेव ।
अतोऽन्यथा निरयः सर्वथा स्यात् स्वकर्म्म विप्रस्य जपोपदेशौ ॥ ८९ ॥

**कुतो यत्नस्तत्प्रयोजक इत्यत आह–विनेति । यत्नं विना हठो न । कर्मापि न । नाभिव्यज्येते इत्यर्थः । अत्राभिव्यक्तिर्नाम फलदानोन्मुखत्वम् । ननु यत्नादेव योग्यतादेः फलसम्भवात् किमीश्वरेणेत्यत आह– फलप्रद इति । अखिलस्य हठादेः । कुतो वासुदेवः फलप्रद इत्यत आह– विनियामक इति । विनियामकः हठादेः प्रेरको हि यस्मात् तस्मात् फलप्रद इति पूर्वेण सम्बन्धः । कुतो नियामक इत्यत उक्तम्–स्वातन्त्र्य-शक्तेरिति । स्वातन्त्र्येण फलप्रदत्वे वैषम्यादिकं स्यादित्यत आह–(तथाऽपीति) । तथाऽपि स्वातन्त्र्येण सर्वस्य नियामकोऽपि, सोऽपि, एतान् हठादीन् अपेक्ष्यैव अनुसृत्यैव युञ्जेत् फलेन योजयेत् । फलं ददातीत्यर्थः ॥ ८७ ॥ हठादिकमपेक्ष्य फलदश्चेन्न स्वातन्त्र्यशक्तिरित्यत आह–एतानिति । इति एवं अस्यैव सङ्कल्पः । अस्य विष्णोरेव सङ्कल्प इति यस्मात् तस्मात् अस्य स्वातन्त्र्यं नापगच्छेत् । स्वाधीनहठादिकमपेक्ष्यैव फलं ददानीति स्वसङ्कल्पानुसारेण फलदत्वात् न स्वातन्त्र्यहानिरिति भावः । हठादिकमनपेक्ष्य फलदानेऽ-समर्थत्वात् हठादिकमपेक्षत इति किं न स्यात् इत्यत आह– स हीति । सः सर्वशक्तिः सर्वविषयशक्तिः हि यस्मात् तस्मात्, प्रभुत्वात् एवमतिसमर्थत्वात् अस्य क्वचित् कस्मिंश्चिदपि विषये अशक्तता असमर्थता न ॥ ८८ ॥ 'तथाऽपि पुंसा विहितं स्वकर्म'(७७) इत्यादिना जीवस्य भगवदधीनकर्तृत्वमुपपाद्योपसंहरति– तस्मादित्यादिना । तस्मात् जीवस्य कर्तृत्वसद्भावात् तेन विष्णुना क्लृप्तं वर्णाश्रमविशेषनिष्ठतया क्लृप्तं**

---

तदेव स्फुटमाह– विना यत्नं न हठो नापि कर्म फलप्रदाविति । पूर्वतनौ द्वावपि हेतू न फलप्रदावित्यर्थः । 'फलप्रदो वासुदेवः' इति पाश्चात्यः पाठः । वासुदेवस्त्वखिलस्य जगतः, अखिलस्य हठस्य कर्मणो यत्नस्य च वैविध्येन तरतम-भावोपेततया नियामकः । कुतः ? स्वातन्त्र्यात्, सर्वशक्तेश्च । तथाऽपि स्वतन्त्रोऽपि सर्वशक्तोऽपि स्वेच्छया एतान् हठादीन् त्रीनपेक्ष्यैव जीवं नियुञ्जेत् नियमयेदित्यर्थः ॥ ८७ ॥ तर्हि सापेक्षत्वात् गतं स्वातन्त्र्यम् । सत्यम् । सापेक्षत्वं स्वातन्त्र्यं विरुणद्धि । न स्वापेक्षत्वमित्याह– एतानित्यादि । अत एव भगवान् स्वतन्त्र उच्यते, नातन्त्र इति । प्रकृष्टो भवतीति प्रभुत्वात् सर्वोत्तमत्वात् नासामर्थ्यं क्वचिदस्य शङ्क्यमिति ॥ ८८ ॥ तेन वासुदेवेन क्लृप्तं नियतं स्वसहजं

---

१. **'–प्रदो वासु–'** । वे.ती.पाठोऽपि तथा । २. **'युञ्ज्यात्'** इति क्वचित् ।

विष्णोर्म्मुखाद् विप्रजातिः प्रवृत्ता मुखोत्थितं कर्म्म तेनास्य सोऽदात् ।
बाह्वोर्ज्जातः क्षत्रियस्तेन बाह्वोः कर्म्मास्य पापप्रतिवारणं हि ॥ ९० ॥

प्रवर्त्तनं साधु धर्म्मस्य चैव मुखस्य बाह्वोश्चातिसामीप्यतोऽस्य ।
जपोपदेशौ क्षत्रियस्यापि विष्णुश्चक्रे धर्म्मौ यज्ञकर्म्मापि विप्रे ॥ ९१ ॥

वैश्यो यस्मादूरुजस्तेन तस्य प्रजावृद्धिस्तज्जकर्म्मैव धर्म्मः ।
तत्सादृश्यात् स्थावराणां च वृद्धिं करोरूर्वोः[१] सन्निकृष्टत्वहेतोः ॥ ९२ ॥

**स्ववर्णाश्रमोचित(कर्म तस्य विष्णोः) पूजार्थं करोमीति सङ्कल्पपूर्वकं कार्यम् । एवं कर्तुः फलमाह– तेनेति । तेन एवं कर्मकरणेनैव तत्प्राप्तिः । नान्यथेत्यर्थः । (अतः) अन्यथा, विहितकरणादन्यथा, विहिताकरणात् निषिद्धकरणाच्चेत्यर्थः । स्वकर्म सर्वथा कार्यमित्युक्तम् । तत्र कस्य किं स्वकर्म इत्यतो विभागेन कर्मस्वरूपं तदधीनकारणं च निरूपयति– स्वकर्मेत्यादिना । जपः अध्ययनम् । उपदेशोऽध्यापनम् ॥ ८९ ॥ तेन अस्य क्षत्रियस्य पापप्रतिवारणं साधुधर्मस्य प्रवर्तनं च बाह्वोः कर्मैव, बाहुवीर्यसाध्यमेवेत्यर्थः । स्वकर्म हि । क्षत्रियस्याऽनुषङ्गिककर्माण्याह– मुखस्येति । अस्य क्षत्रियस्यापि । विप्रस्याप्यानुषङ्गिकं कर्माह– यज्ञकर्मेति । मुखस्य बाहुसमीप्यात् मुखजे विप्रे बाहुजं यज्ञकर्मापि धर्मं चक्रे ॥ ९०–१ ॥**

---

कर्म । अन्यत्र चाऽह– **'कुरु भुङ्क्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया'** इति ॥ ८९ ॥ विप्रजातिः । जात्या स्वभावतः विप्रः । विप्रवर्णः । पापप्रतिवारणं अधर्मस्य अधर्मिणां च निग्रहेण प्रतिरोधेन वारणं प्रतिवारणम् । धर्मस्य धार्मिकाणां च साधु प्रवर्तनमेव, अस्य क्षत्रियस्य स्वकर्म चक्रे । साधुधर्मस्य वेदधर्मस्य वैष्णवधर्मस्येति वा । यज्ञकर्मण इति यावत् । विष्णुपूजार्थं स्वयं यजन् प्रजाश्च याजयन् क्षत्रियो भवतीत्यर्थः । ब्राह्मणवत् क्षत्रियस्यापि जपोपदेशौ स्वधर्मौ चक्रे । मुखस्य बाहुसामीप्यात् । क्षत्रियवत् विप्रेऽपि यज्ञकर्म स्वधर्मं चक्रे । बाह्वोर्मुखसामीप्यात् । यज्ञकर्म यजनं याजनं च । अयमत्र विशेषः । उपदेशो हि मुख्यं मुखकर्म । तेन ज्ञानोपदेशे सामान्यतः क्षत्रियस्याधिकारेऽपि वेदोपदेशः केवलं ब्राह्मणस्यैव धर्मः । एवं याजनकर्मण्यपि यन्मुख्यतो मुखकर्म आर्त्विज्यं तद् ब्राह्मणस्यैव धर्म इति ॥९०–९१॥ एवं अध्ययनमध्यापनं यजनं याजनं चेति चतुर्मुखो धर्मो निरूपितः । अथ वैश्यवर्णे अर्थकामयोर्धर्मात्मकता जातेत्याह । प्रजावृद्धिस्तस्य वैश्यस्य धर्मः । अत एव तेषां वैश्यनाम । विशामिमे वैश्या इति । प्रजा हि विश उच्यन्ते । स्थावराणां वृद्धिं कृषिकर्म च धर्मं चकार । उत्पादनं पालनं च वृद्धिः । नह्यनुत्पन्नं वर्धते । नाप्यपालितम् । करोः करयोरूर्वोश्च सन्निकर्षात् करसाध्यं ऊरुसाध्यं च वार्तात्मकं कर्म गोरक्षणं वाणिज्यं च । गोपाला गोरक्षार्थं यवसादिकमन्वेषमाणा वनाद् वनं चरन्तो घोषेषु वसन्ति । वणिजोऽपि व्यापारनिर्वाहाय सार्थं वहन्तो नगरान्नगरं चरन्ति । गवां पालनं

---

१. **'करयोरूर्वोः'** । वे.ती. पाठोऽपि तथा स्यात् ।

वार्त्तात्मकं कर्म्म धर्म्मं चकार विष्णुस्तस्यैवाङ्घ्रिजः शूद्र उक्तः ।
गतिप्रधानं कर्म्म शुश्रूषणाख्यं सादृश्यतो हस्तपदोस्तथैव ॥ ९३ ॥

हस्तोद्भवं कर्म्म तस्यापि धर्म्मः सन्तानवृद्धिश्च समीपगत्वात् ।
भुजावुरो हृदयं यद् बलस्य ज्ञानस्य च स्थानमतो नृपाणाम् ॥ ९४ ॥

बलं ज्ञानं चोभयं धर्म्म उक्तः[१] पाणौ कृतीनां कौशलं केवलं हि[२] ।
तस्मात् पाण्योरूरुपदोरुपस्थितेर्विट्छूद्रकौ कर्म्मणां कौशलेतौ ॥ ९५ ॥

**विष्णोरूरुजः । तज्जकर्मैव ऊरुजकर्मैव, प्रजावृद्धिर्धर्मः । वैश्यस्यानुषङ्गिककर्मान्तराण्यप्याह— तत्सादृश्यादित्यादिना । तत्सादृश्यात् उत्पाद्य(त्व)पाल्यत्वलक्षणप्रजा(वृद्धि)सादृश्यात् । वार्तात्मकं कृषिवाणिज्यादिरूपं तस्यैव वैश्यस्यैव विष्णुर्धर्मं चकार । अङ्घ्रिजः विष्णवङ्घ्रिजः । तेन गतिप्रधानं गमनप्रधानं कर्म दूतत्वादिकर्म धर्मं चकार । हस्तपदोः सादृश्यतः अङ्गुलिमत्त्वसादृश्यात् तद्भवं कर्म शुश्रूषणादिरूपम् । नतु यज्ञादिकम् । समीपगत्वात् (सन्तानवृद्धिश्च) । बाहुजा(तस्य) क्षत्रियस्य बाहुबलरूपं कर्म धर्म इत्युक्तम् । तदेवोपपादयन् धर्मान्तरमप्याह— भुजावित्यादिना । भुजौ उरश्च (बलस्य) तदनु ज्ञान(स्य च) स्थानं यस्मात् अतः बलं ज्ञानमिति उभयं च नृपाणां धर्म इत्युक्तम् । बाह्वोर्हृदयसामीप्यात् हृदयकर्म ज्ञानं धर्मः । उरःसामीप्याच्च प्रागुक्तं बलं धर्म इति भावः । विट्शूद्रयोर्हस्तजन्यं कर्मान्तरं (चाऽह)— पाणावित्यादिना । कृतीनां कर्मणां कौशलं चातुर्यं केवलं (पाणौ) अवतिष्ठते हि यस्मात् तस्मात् विट्शूद्रकौ कर्मणां कौशलेतौ चातुर्ययुक्तौ । पाण्योरूर्वोश्च सामीप्यात् ऊरुजस्य पाणिजं च केवलं धर्मः । ऊर्वोः पदोश्च सामीप्यात् पदोः पाणिसादृश्याच्च पादजस्यापि कर्मकौशलं धर्म इति भावः ॥ ९२–५ ॥**

---

करसाध्यम् । सञ्चरणमूरुसाध्यम् । एवं वाणिज्येऽपि । तस्मात् तद्द्वयमुभयसाध्यम् । ननु 'करयोरूर्वोः' इति वक्तव्ये कथं 'करोरूर्वोः' इत्याह । अपूर्वोऽयं प्रयोगः । हृषीकेशतीर्थीयं त्वत्र गलितम् । अन्यत्र सर्वत्र प्राचीनादर्शेषु 'करोरूर्वोः' इत्येव पाठः । सम्भाव्यते–पदयोः पदोरितिवत् करयोः करोरिति छान्दसं रूपं स्यादिति । यद्यपि उर्वीति ऊरुविशेषणमिति शक्यं वक्तुम् । व्यर्थविशेषणता तु भवति । यद्वा ऊरुगतमुरुत्वं नाम विपुलत्वं प्रजावैपुल्यं गमयतीति समाधेयम् । गतिप्रधानं पादप्रधानम् । अत एव विशिष्य चरणशुश्रूषेत्युच्यते । सेवार्थं गृहात् गृहमटन्तो भवन्तीति च गतिप्रधानम् । गोरक्षा कृषिश्च शूद्रस्यापि हस्तोद्भवं कर्म । विरळतया वाणिज्यं च । यच्छुश्रूषात्वेन क्रियते तद्धस्तोद्भवमप्यनुमतमित्यर्थः । तद्यथा स्थावराणि रोहयन् स्थावरशुश्रूषां मन्यते । गा रक्षन् गोशुश्रूषां मन्यते । वैश्यस्तु अर्थेप्सुः करोतीति भेदः । वैश्योऽपि शुश्रूषते । अथाप्यर्थेप्सया शुश्रूषते । शूद्रोऽप्यर्थं लभेत । अथापि शुश्रूषया नियतं लभत इति सूक्ष्मदृग्भिरूहनीयम् ॥ ९२–३ ॥ भुजावुरश्च बलस्य । हृदयं ज्ञानस्य । पाण्योरूरुसामीप्यात् हस्तकौशलं वैश्यकर्म ।

---

१. **'उक्तम्'** इति वे. ती. पाठ इति भाति । २. **'कृतीनां केवलं कौशलं हि'** इति क्वचित् ।

प्राधान्यतो धर्म्मविशेष एष सामान्यतः [1]सर्वमेवाखिलानाम् ।
वयं हि देवास्तेन सर्वं हि कर्म्म प्रायेण नो धर्म्मतामेति शश्वत् ॥ ९६ ॥

एतैर्द्धर्म्मैर्विष्णुना पूर्वक्लृप्तैः सर्वैर्वर्णैर्विष्णुरेवाभिपूज्यः ।
तद्भक्तिरेवाखिलानां च धर्म्मो [2]यथायोग्यं ज्ञानमस्यापि पूजा ॥ ९७ ॥

पिता गुरुः परमं दैवतं च विष्णुः सर्वेषां तेन पूज्यः स एव ।
तद्भक्तत्वाद् देवताश्चाभिपूज्या विशेषतस्तेषु येऽत्यन्तभक्ताः ॥ ९८ ॥

**एषः 'स्वकर्म (विप्रस्य) जपोपदेशौ'(८९) इत्यादिनोक्तः धर्मविशेषः विप्रादीनां धर्मभेदः प्राधान्यतः असाधारणधर्माभिप्रायेण, प्रागुक्त इति शेषः । सामान्यतः साधारण्यात् उक्ताः सर्व एव अखिलानां विप्रादीनां धर्माः । वयं देवा हि यस्मात् तेन सर्वं कर्म नः अस्माकं प्रायेण शश्वत् सर्वदा धर्मतामेति । देवानामपि मानुषेष्ववतीर्णानां तत्तत्कुलवर्णाश्रमाणामनुसेव्यत्वात् प्रायेण इत्युक्तिः ॥ ९६ ॥ हरिपूजार्थं स्वकर्म कर्तव्यमित्युक्तं विशदयति– एतैरित्यादिना । धर्मैः करणभूतैः, वर्णैः कर्तृभिः । सर्वसाधारणधर्मानप्याह– तद्भक्तिरित्यादिना । भक्तिज्ञानपूजानां यथायोग्यत्वमपेक्षितम् ॥ ९७ ॥ तेषु हरिभक्तेषु येऽत्यन्तभक्ताः ते विशेषतः पूज्याः ॥ ९८–१०० ॥**

---

पादसामीप्यात् शूद्रकर्म । तस्मात् विट्शूद्रकौ कर्मणां कौशलेतौ । शिल्पं नाट्यं गृहादिनिर्माणं च कर्मकौशलम् । **'त्रयः पूर्वे शूद्रमूलाः सर्वे कर्मकराः स्मृताः । ब्राह्मणादिषु शुश्रूषा दासधर्म इति स्मृतः । वार्ता च दारुकर्माणि शिल्पं नाट्यं तथैव च'** [अनु.प.२०८.३४] इति भारते पार्वतीं प्रति शिववचनम् ॥ ९४–९५ ॥ सर्वं सर्ववर्णोचितमपि कर्म नः धर्मतामेति । निषिद्धमपि कर्म नो नैव अधर्मतामेतीति च । लोकनियमो न देवेषु प्रवर्तत इत्यप्रगृह्याऽह । शश्वत् सार्वकालिकोऽयं देवानां नियमः । अथापि नरेषु जनने मनुष्यधर्मा अप्यनुवर्तनीया इति प्रायेणेत्याह ॥ ९६ ॥ इदानीं सर्ववर्णसाधारणं धर्ममाह । अभितः अन्यदेवेष्वप्यन्तर्यामितया पूज्यः । तद्भक्तिरेव अनन्या विष्णुभक्तिः । अथच यथायोग्यं स्वस्वयोग्यतानुगुणमस्य विष्णोः महात्म्यज्ञानं, अस्य पूजा च धर्मः । यथायोग्यमिति सर्वत्रान्वेति । यथा योग्यमिति भिन्ने वा पदे । यथा यथावत् स्वयोग्यं च ज्ञानम् । स्वयोग्या भक्तिः पूजा च । अथवा यथायोग्यं यद्यद् योग्यं तस्य तस्य ज्ञानम् । याया योग्या सासा पूजा । **'यथाऽसादृश्ये'** [अ.सू.२.१.७] इत्युक्तम् ॥ ९७ ॥ तदेव स्फुटमाह–पितेत्यादिना । आह चान्यत्र–**'हरिरेव परो हरिरेव गुरुर्हरिरेव जगत्पितृमातृगतिः'** इति । अभितः परिवारतया पूज्याः । विष्णुभक्ता इत्यभिमानेन पूज्याः । तेषु देवेष्वपि येऽत्यन्तभक्तास्ते विशेषतः भगवतोऽतिनैकट्येन पूज्याः । तेषु भगवद्भक्तेषु मध्ये येऽत्यन्तभक्ताः प्रह्लादाद्याः । तेऽपि विशेषतः **'वैष्णवा मम बान्धवाः'** इत्यभिमानेन पूज्याः । अथ

---

१. **'सर्व एवा–'** । वे.ती. पाठोऽपि तथा । २. **'यथायोगम्'** इति क्वचित् ।

सम्पूजितो वासुदेवः स मुक्तिं दद्यादेवापूजितो दुःखमेव ।
स्वतन्त्रत्वात् सुखदुःखप्रदोऽसौ नान्यः [1]स्वतस्तद्वशा यत् समस्ताः ॥ ९९ ॥

स्वतन्त्रत्वात् सुखसज्ज्ञानशक्तिपूर्वैर्गुणैः पूर्ण्ण एषोऽखिलैश्च ।
स्वतन्त्रत्वात् सर्वदोषोज्झितश्च निस्सीमशक्तिर्हि यतः स्वतन्त्रः ॥ १०० ॥

दोषास्पृष्टौ गुणपूर्त्तौ च शक्तिर्न्निस्सीमत्वाद् विद्यते तस्य यस्मात् ।
एवं गुणैरखिलैश्चापि पूर्ण्णो नारायणः पूज्यतमः स्वधर्म्मैः ॥ १०१ ॥

अस्माकं यत् तेन नातिक्षमैव धर्म्मो दुष्टानां वारणं ह्येव कार्य्यम् ।
हन्याद् दुष्टान् यः क्षत्रियः क्षत्रियांश्च विशेषतो युद्धगतान् स्मरन् हरिम् ॥ १०२ ॥

स्वबाहुवीर्य्येण च तस्य बाहू चैतन्यमात्रौ भवतः सदेहौ ।
पापाधिकांश्चैव बलाधिकांश्च हत्वा मुक्तावधिकाऽऽनन्दवृद्धिः ॥ १०३ ॥

**तस्य निस्सीमत्वात् दोषास्पृष्टौ सर्वसद्गुणपूर्त्तौ च शक्तिः विद्यते यस्मात् एवं अस्माद्धेतोः अखिलैर्गुणैः पूर्णो नारायणः स्वधर्मैः पूज्यतमः ॥ १०१ ॥ यदर्थं 'नैव क्षमा कुजनतासु'(६८) इत्यादिना कृष्णाभीमाभ्यामुक्तं तदाह– अस्माकमित्यादिना। तेन स्वकर्मणा भगवत्पूजायाः कर्तव्यत्वेन कारणेन अस्माकम्, क्षत्रियाणामिति भावः, अतिक्षमा, कुजनतास्विति शेषः, धर्मो नैव यत् यस्मात् तस्मात् दुष्टानां दुर्योधनतदनुबन्धिनां वारणम्, निधनमिति भावः, कार्यमेवेति सम्बन्धः। क्षत्रियस्य दुष्टनिवारणे फलमाह– (हन्यादिति।) यः क्षत्रियः दुष्टान् क्षत्रियान् युद्धगतान् स्वबाहुवीर्येण तनुच्छेदादिनेति भावः। (हरिं स्मरन्, तत्पूजात्वेनेदं कृ)तमिति स्मरन्निति भावः। विशेषतो हन्यात् यागादीतरधर्मेभ्योऽपि दुष्टहननमेव प्रथमतः कुरुत इति भावः। तस्य बाहू सदेहौ चैतन्यमात्रौ केवलं चिदात्मकौ भवतः॥ १०२ ॥ दुष्टहननेऽपि विशेषमाह– पापाधिकानित्यादिना ॥ १०३–४ ॥**

---

च हरिभक्तेषु येऽत्यन्तभक्तिमन्तः, हरिभक्तभक्ताः तेऽपि विशेषतोऽभिमानेन सम्माननीयाः ॥ ९८ ॥ सर्वोत्तमत्वेन पूजितः। मुक्तिमेव दद्यात्। मुक्तिं दद्यादेव च। दुःखमेव दद्यात्। दुःखं दद्यादेव च। नान्यः स्वतः स्वातन्त्र्येण सुखदुःखप्रदः ॥ ९९ ॥ सज्ज्ञानेति देहल्यां दीपः। तेन मध्यगतं सत्पदं सर्वेषां गुणानां निर्दोषत्वमाह ॥१००–१०१॥ यत् यस्मादेवं तेन कारणेन अस्माकं सज्जनेष्वपि उत्पथं गतेषु क्षमा नातिधर्मः। किं पुनर्दुष्टेषु क्षमा? किं पुनरतिदुष्टेषु क्षमा? किन्तरामतिक्षमा? ॥ १०२ ॥ चैतन्यमात्रौ भवतः सदेहौ। दुष्टहननं मुक्तिफलदं महत् पुण्यं कर्मेत्यर्थः। **'हैरण्यौ**

---

१. 'स्वतन्त्रस्तद्वशा–'

प्रीतिश्च विष्णोः परमैव तत्र तस्माद्धन्तव्याः पापिनः सर्वथैव ।
ये त्वक्षधूर्त्ता ग्रहणं गता वा पापास्तेऽन्यैर्घातनीयाः स्वदोर्भ्याम् ॥ १०४ ॥

राजानं वा राजपुत्रं तथैव राजानुजं [1]वाऽभियातं निहन्यात् ।
राज्ञः पुत्रोऽप्यकृतोद्वाहको यः स घातनीयो न स्वयं वद्ध्य एव ॥ १०५ ॥

क्रूरं चान्यद् धर्म्मयुक्तं परैस्तत् प्रसाधनीयं क्षत्रियैर्न्न स्वकार्य्यम्[2] ।
एवं धर्म्मो विहितो वेद एव वाक्यं विष्णोः पञ्चरात्रेषु तादृक् ॥ १०६ ॥

अक्षद्यूतं निकृतिः पापमेव कृतं त्वया गर्हितं सौबलेन ।
न कुत्रचिद् विधिरस्यास्ति तेन न तद् दत्तं द्यूतहृतं वदन्ति ॥ १०७ ॥

भीतेन दत्तं द्यूतदत्तं तथैव दत्तं कामिन्यै पुनराहार्य्यमेव ।
एवं धर्म्मः शाश्वतो वैदिको हि द्यूते स्त्रियां नाल्पमाहार्य्यमाहुः ॥ १०८ ॥

**घातनीयः, परैरिति शेषः । घातनीय इत्येतद् विवृणोति– न स्वयमिति । स्वयमेव न वध्यः ॥ १०५ ॥ क्रूरं स्त्रीबालवधादिकम्, धर्मयुक्तं च धर्मसाधनमपि । स्वकार्यं स्वयं कर्तव्यम् ॥ १०६ ॥ निकृतिः व्याजात्मकम् । अत एव (पापं) पापसाधनम् । तस्मादेव गर्हितम् । सौबलेन, सहेति शेषः । तेन द्यूत-हृतं तद् दत्तं न वदन्ति ॥ १०७ ॥ न केवलं द्यूतहृतं तद् दत्तं न । ततोऽन्यदपीत्याह– भीतेनेति । द्यूते**

---

**भवतो बाहू श्रुतिर्भवति शाश्वती । हत्वा द्विषन्तं सङ्ग्रामे भुङ्क्ष्व बाहुजितं वसु'** [व.प.३५.९] इति वचनमनेन गदिताभिप्रायम् । हैरण्यौ ज्ञानानन्दमयौ । हितं रमणीयं ण्यं ज्ञानानन्दमयं च हि हिरण्यमुच्यते । हत्वैवाऽनन्द-वृद्धिः । अधिकाधिकस्य हनने अधिकाधिका वृद्धिः ॥ १०३ ॥ ये त्वक्षधूर्ताः ये वा ब्रह्महत्यादिकं कृत्वा ग्रहणं गताः कारायां भवन्ति पापास्ते राजभटैः घातनीयाः । न स्वयं हन्तव्याः । योद्धुमभियातं राजादिकं स्वदोर्भ्यां हन्यात् । तत्राप्यपवादमाह– अकृतोद्वाहकश्चेत् राज्ञः पुत्रोऽपि न स्वयमेव वध्यः । किन्त्वन्यैरेव घातनीयः । अकृतोद्वाहकः, वयसा च कनीयानिति कनाऽऽह । तेन भीष्मादिव्यावृत्तिः ॥ १०४–५ ॥ यच्चान्यत् धर्मयुक्तमपि क्रूरं कर्म गले बद्ध्वा मारणादिकं तत् परैरेव तदर्थमेव प्रयुक्तैर्भटैः साधनीयम् । न स्वतः कार्यम् ॥ १०६ ॥ निकृष्टा कृतिर्निकृतिः । परप्रता-रणम् । **'निकृतिर्भत्सने क्षेपे शठे शाठ्येऽपि च स्त्रियाम्'** इत्यभिधानम् । सौबलेन साकम् । तेन कारणेन अवैधत्वात् द्यूतहृतं तद् धनादिकं न विधिना दत्तं भवतीति वदन्ति ॥ १०७ ॥ भीतेन दत्तम्, द्यूतव्यसनिना द्यूते दत्तम्, स्त्रीव्यसनिना कामिन्यै दत्तं च पुनराहार्यमेव । तत्र द्यूते दत्तं स्त्रीनिमित्तं च दत्तमल्पं चेत् न पुनराहार्यमाहुः । प्रभूतं चेदाहार्यमेव ।

---

१. **'–नुजं चाभियातम्'** २. **'क्षत्रियैर्नैव कार्यम्'** इति क्वचित् ।

यद्येषां वै[१] भोग्यमल्पं तदीयं भोगेन तद्बन्धुभिस्तच्च हार्य्यम् ।
निवारणे पुरुषस्य त्वशक्तैस्तद्[२] राज्यं नः पुनराहार्य्यमेव ॥ १०९ ॥

त्वं [३]धर्म्मनित्यश्चाग्रजश्चेति राजन् ऋतेऽनुज्ञां न मया तत् कृतं च ।
दातास्यनुज्ञां यदि तान् निहत्य त्वय्येव राज्यं स्थापयाम्यद्य सम्यक् ॥ ११० ॥

सत्यं पापेष्वपि कर्त्तुं यदीच्छा तथाऽपि मासा द्वादश नः प्रयाताः ।
वेदप्रामाण्याद् वत्सरास्ते हि मासैः सहस्राब्दं सत्रमुक्तं नराणाम् ।
अज्ञातमेकं मासमुष्याथ शत्रून् निहत्य राज्यं प्रतिपालयामः[४] ॥ १११ ॥

**स्त्रियां च, दत्तमिति शेषः ॥ १०८–९ ॥ धर्मनित्यः धर्मे स्थिरः ॥ ११० ॥ ते अस्माकमतीता मासाः । वेदप्रामाण्यात् प्रमाणतमवेदोक्तत्वादिति भावः । वत्सरा हि । सहस्राब्दं सहस्राब्दनिर्वर्त्यं सत्रं नराणां मासैः सहस्रमासैः निर्वर्त्यमुक्तम्, वेद इति शेषः । नराणामल्पायुष्यादिति भावः ॥ १११–२ ॥**

---

अथच दत्तं प्रभूतं चेत्, ततोऽल्पं यत्किञ्चित् नाऽहार्यम् । किन्तु समग्रमेव प्रत्याहार्यम् । भीतेन दुर्बलेन दत्तम्, बलिष्ठेन बलादात्मसात्कृतमल्पमपि प्रत्याहार्यमेव ॥ १०८ ॥ नाल्पमाहार्यमित्युक्तम् । तस्यापवादोऽप्यस्तीत्याह– यद्येषाम् । वायित्येतत् सर्वं नीतिशास्त्रप्रसिद्धमित्याह । एषां हृतस्वानाम् । भोग्यं स्वतोऽल्पम् । तदपि भोगेन बलादात्मसात्कृत्य भोगेन निमित्तेन, तदीयं कितवकामिन्याद्यधीनं जातम् । तदाऽल्पहरणमपि सर्वस्वहरणमेव जातम् । तेन तद्बन्धुभिः तदपि प्रत्याहार्यम् । प्रथमं हृतस्वस्य पुरुषस्य ततो निवारणे बन्धुभिः प्रयतितव्यम् । तदसम्भवे तद् धनमाहार्यमिति । अथच एषां हृतस्वस्य बन्धूनां विद्यमानमल्पमपि भोग्यं भोगेन पालनेनानुभोगेन च मिमित्तेन तदीयं हृतस्वस्य वशे स्थितम्, तच्चेत् द्यूतजितं कामिन्यै वा तेन दत्तम्, तदा तदपि हृतस्वस्य बन्धुभिः मूलतः स्वकीयं स्वाधीनीकरणीयम् । तद्बन्धुभिः भोगेन भोक्तृत्वेनाधिकारेण हार्यमिति वा ॥ १०९ ॥ तत् द्यूते हृतस्य प्रत्याहरणम् । अद्यैव सम्यग् विधिवत् स्थापयामि ॥ ११० ॥ दत्तं वचनं सत्यं कर्तुम् । अथच पापेष्वपि सत्यं कर्तुं पालयितुम् । ते मासा अपि वत्सरशब्दवाच्या हि । यतः सहस्रमासैः सहस्राब्दं सत्रमुक्तं नराणां ये न सहस्राब्दजीविनः । तथाहि स्मरन्ति– **'नैमिशेऽनिमिषक्षेत्रे मुनयः शौनकादयः । सत्रं स्वर्गाय लोकाय सहस्रसममासत'** [भाग. १.१.४] इति । तेन ज्ञायतेऽब्दपर्याया मासपर्याया अपि स्युरिति । तेनाशीतिसमं सत्रं सहस्रसममाहुरिति । तथाहि भारते भीमसेनवचनम्–**'अस्माभिरुषिताः सम्यग् वने मासास्त्रयोदश । परिमाणेन तान् पश्य तावतः परिवत्सरान् । अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः । पूतिकामिव सोमस्य तथेदं क्रियतामिति'** [व.प.३५.३२–३] इत्यर्जुनाभिगमने । सम्प्रति द्वादशमासा एवोषिताः ।

---

१. **'यद्येतेषां भोग्य–'** इति कचित् । २. **'त्वशक्तौ तद्–'**
३. **'धर्मनिष्ठश्चाग्रज–'** ४. **'प्रतिपादयामः'**

**मा मित्राणां तापकस्त्वं भवेथास्तथाऽमित्राणां नन्दकश्चैव राजन् ।**
**ज्वलस्वारीणां मूर्ध्नि मित्राणि नित्यमाह्लादयन् वासुदेवं भजस्व ॥ ११२ ॥**

**स्वतन्त्रत्वं वासुदेवस्य सम्यक् प्रत्यक्षतो दृश्यते ह्यद्य राजन् ।**
**यस्मात् कृष्णो व्यजयच्छङ्करादीन् जरासुतादीन् कादिवरैरजेयान् ॥ ११३ ॥**

**ब्रह्मादीनां प्रकृतेस्तद्वशत्वं दृष्टं हि नो बहुशो व्यासदेहे ।**
**पाराशर्य्यो दिव्यदृष्टिं प्रदाय स्वातन्त्र्यं नोऽदर्शयत् सर्वलोके[1] ॥ ११४ ॥**

**तस्माद् राजन्नभिनिर्य्याहि शत्रून् हन्तुं सर्वान् भोक्तुमेवाधिराज्यम् ।**
**एवञ्च ते कीर्त्तिधर्म्मौ महान्तौ प्राप्यौ राजन् वासुदेवप्रसादात् ॥ ११५ ॥**

**कादिवरैः ब्रह्मादीनां वरैः ॥ ११३ ॥ सर्वलोके सर्वलोकविषये ॥ ११४ ॥ तस्मात् स्वातन्त्र्यादिगुणविशिष्टस्य**

---

तस्मात् त्रयोदश मासाश्चेदुषितास्तदा ते त्रयोदशसंवत्सरप्रतिनिधयो भविष्यन्तीति मूलं व्याख्येयमित्याशयेनाऽह–अज्ञात-मेकं मासमुष्येति । अथ तस्मात्, अथ इतोऽनन्तरम्, एकं मासमज्ञातमुषित्वा राज्यं कितवैः प्रत्याहृत्य पालयामः ॥ १११ ॥ मित्राणां तापको मा भवेथाः । एष स्वार्थो महांस्तवेत्यात्मनेभाषा । अमित्राणां नन्दकश्च मैव भवेथाः । अमित्राणामेव नन्दकश्च सर्वथा मा भवेथाः । माशब्दोऽयं न माङित्युक्तम् । केचिद् वैयाकरणा माशब्दं नानुमन्यन्ते । तथाहि जयादित्यः काशिकायाम् [अ.सू.३.३.१७५]–**'माङ्युपपदे धातोर्लुङ् प्रत्ययो भवति । सर्वलकाराणामपवादः । मा कार्षीत् । मा हार्षीत् । कथं मा भवतु तस्य पापम्, मा भविष्यतीति? असाधुरेवायम् । केचिदाहुः–अङिदपरो माशब्दो विद्यते, तस्यायं प्रयोगः'** इति । अथच ये मित्राणि न भवन्ति ते मामित्राः । तेषां तापको भव । तथा मित्राणामेव नन्दकश्च भव । अरीणां मूर्ध्नि पदं निधाय, तानधःकृत्य सर्वोपरि त्वं प्रकाशस्व । अरीणां मूर्ध्नि मित्राणि स्थापयित्वा च ज्वलस्व । मित्राण्यानन्दयंश्च ज्वलस्व । मोक्षप्रदं वासुदेवं भजस्व । अरिमर्दनेन मित्राह्लादनेन च तमप्याह्लादयन् प्रीणयन् ॥ ११२ ॥ सम्यक् निरुपचरितं स्वतन्त्रत्वम् । शङ्करादीन् पारिजातहरणप्रसङ्गे व्यज-यत । भूमाववतीर्णान् शङ्करादीनश्वत्थामादींश्च धन्याश्चर्यप्रसङ्गे । को ब्रह्मा । आदिना शङ्करः पार्वती च । तत्पुत्रौ च स्कन्दगणपती । विजयफलं च तस्य सर्वोत्तमत्वज्ञानं परेषामिति व्यजयदित्याह ॥ ११३ ॥ ब्रह्मादीनां प्रकृतेः श्रीतत्वस्य च । अथच ब्रह्मादीनां प्रकृतेः स्वभावस्य । **'द्रव्यं कर्म च कालश्च स्वभावो जीव एवच'** इत्यादेः । व्यासदेहे व्यासरूपे भगवति । नः विवाहकाले द्रुपदस्य दिव्यदृष्टिं प्रदाय सर्वलोकेऽपि स्वस्य स्वातन्त्र्यं नोऽदर्शयत् किल ॥ ११४ ॥ अभियोद्धुं निर्धार्य याहि । सर्वान् शत्रून् हन्तुं निर्धार्य । अधिराज्यं भोक्तुमेव निर्धार्य शत्रूनभियाहि । इह महती

---

१. **'नो दर्शयामास लोके'** इति कचित् ।

एवमुक्तोऽब्रवीद् भीमं धर्म्मपुत्रो युधिष्ठिरः ।
त्रयोदशाब्दस्यान्तेऽहं कुर्य्यामेव त्वदीरितम् ॥ ११६ ॥

सत्यमेतन्न सन्देहः सत्येनाऽत्मानमालभे ।
लोकापवादभीरुं मां नातोऽन्यद् वक्तुमर्हसि ॥ ११७ ॥

तुदसे चातिवाचा मां यद्येवं भीम मां वदेः[1] ।
तदैव मेऽत्ययः कार्य्यो हन्तव्याश्चैव शत्रवः ॥ ११८ ॥

नैतादृशैरिदानीं तु वाक्यैर्बाधितुमर्हसि ।
भीष्मद्रोणादयोऽस्मद्भा निवार्य्याश्च कथं युधि ॥ ११९ ॥

**हरेः पूजार्थमस्माकं दुष्टनिग्रहस्य कर्तव्यत्वात् । राजन् याहि[2] वनवासान्निर्गत्याभिगच्छ ॥ ११५–६ ॥ कुर्यामेव त्वदीरितमित्येतद्वचः सत्यम् । सत्येन वचनेन आत्मानमालभे स्पृशामि । सत्यशपथार्थमिति (भावः) ॥ ११७ ॥ हे भीम, यदि एवम्, एवमपि, मया सत्यशपथे कृतेऽपि, मां वदेः, पुनःपुनरिदानीमेव गन्तव्यमित्यादिनिर्बन्धरूपवचो वदेः, तर्हि मां अतिवाचा क्रूररूपवचसा तुदसे । तदैव मत्तो(ऽक)रणसमय एव मेऽत्ययः कार्यः, शत्रवश्च हन्तव्या एव । नात्राहं प्रष्टव्य इति भावः ॥ ११८–२० ॥**

---

कीर्तिः । परत्र महान् मोक्षहेतुर्धर्मः ॥ ११५ ॥ भीमेनैवमुक्तो युधिष्ठिरो युधि स्थिरोऽन्वर्थनामा बभूव । कुर्यामेव त्वदीरितम्, त्रयोदशस्याब्दस्यान्तेऽपि ते चेद् राज्यं न दद्युः ॥ ११६ ॥ नेदमौपचारिकम् । किन्तु सत्यम् । अनेन सत्यवचनेनाऽत्मानमालभे स्पृशामि । आत्मानमेव साक्षीकृत्य ब्रवीमि । 'ನನ್ನಾಣೆ' इति भाषायाम् । अन्यत् **'सम्प्रत्येव निर्याहि, अस्माकं वाऽनुज्ञां देहि'** इत्यादि ॥ ११७ ॥ अथापि यद्येवमेव पुनरपि वदेः, तदा मामनयाऽतिनिष्ठुरया वाचा अतितरां तुदसे व्यथयसि । तुद व्यथने । मामिति द्विरुक्त्या तात्पर्यमवधारयति । यद्वा, एवमीदृशीं मां वाचं वदेः । **'वाचो मा मातरः स्मृताः'** इति स्मरणात् । मीयते ज्ञायतेऽनयेति मा वाक् । मान्यत इति माता जननी वाग् वा । तदैव त्रयोदशाब्दस्यान्ते, ते यदि अतियन्ति, अथापि यद्यहं मृदुः स्याम्, तदैव त्वया मद्वचनात्ययः कार्यः । ऋतेऽपि मदाज्ञायाः, उल्लङ्घ्यापि मदाज्ञां हन्तव्या एव शत्रवः ॥ ११८ ॥ इदानीं तु न बाधितुमर्हसि । तुना मासानां वत्सरत्वेन परिगणने स्वस्य सर्वथाऽरुचिं सूचयति । कारणान्तरं चास्तीत्याह– भीष्मेत्यादिना ॥ ११९ ॥

---

१. **'तुदसे नातिवाचा मां यद्येवं भीम मा वदेः'** इति क्वचित् । २. **'अभिनिर्याहि'** इति प्रतीकग्रहणं स्यात् ।

पूज्यास्ते बाहुयुद्धेन न निवार्य्याः कथञ्चन ।
अस्त्राणि जानन्नपि हि न प्रयोजयसि क्वचित्[1] ॥ १२० ॥

तस्माद् तदैव गन्तव्यं विज्ञातास्त्रे धनञ्जये ।
इत्युक्तो भीमसेनस्तु स्नेहभङ्गभयात् ततः ॥ १२१ ॥

नोवाच किञ्चिद् वचनं स्वाभिप्रेतमवाप्य च ।
अभिप्रायो[2] हि भीमस्य निश्चयेन त्रयोदशे ॥ १२२ ॥

युधिष्ठिरस्य राज्यार्त्थं गमनार्त्थे प्रतिश्रवः ।
अन्यथाऽतिमृदुत्वात् स न गच्छेद् भिन्नधीः परैः ॥ १२३ ॥

**तदैव गन्तव्यमित्युक्ते कदेत्याकाङ्क्षायामाह– विज्ञातास्त्रे धनञ्जय इति ॥ १२१ ॥ त्रयोदशे, वर्षे अतीते सतीति शेषः । राज्यार्थं निश्चयेन गमनार्थे युधिष्ठिरस्य प्रतिश्रवः भीमस्याभिप्रायो हि । प्रतिश्रवस्य कारयितुर्भीमस्याभिप्रायमाह– अन्यथेति । अतिमृदुत्वात् अतिमृदुचित्तत्वात् परैः शत्रुभिः भिन्नधीः भीमचिकीर्षितप्रतिकूलमनाः सः अन्यथा प्रतिश्रवाभावे सति न गच्छेत् राजाभिमुखे[3] न गच्छेदित्यर्थः । तस्मात् प्रतिश्रवं तेन कारयामासेति भावः ॥ १२२–२३ ॥**

---

ननु युध्वा निवार्यन्ते । कथं युद्ध्यसे? न तावद् बाहुभ्याम् । यतस्ते भीष्मादयः ते तव पूज्याः । नाप्यस्त्रैः । यतो जानन्नपि फलापेक्षया न प्रयोजयसि । प्रयोजनापेक्षया न योजयसीत्येतत् । विशेषतः पूज्येषु गुरुषु । **'अनिर्जित्य रणे सर्वानेतान् पुरुषसत्तमान् । अशक्यो ह्यसहायेन हन्तुं दुर्योधनस्त्वया'** [व.प.३६–१९] इति भारतवचनमनेन विवृतम् । भीष्माद्या दुर्योधनसहायास्तं रक्षन्ति । तानहत्वा कथमसहायेन त्वया हन्तुं दुर्योधनः शक्यः । न च तान् हत्वा । यतस्त्वं गुरुस्थानीयान् न विगृह्णासि निगृह्णासि वा । अतस्तेषां निग्रहार्थं तवापि सहायः कश्चनापेक्षित इति ॥ १२० ॥ विज्ञातानि साक्षादस्त्रदेवताद्वारा ज्ञातानि द्रोणेनाप्यनधिगतानि दिव्यास्त्राणि येन । एतादृशेषु प्रयोगेषु क्तस्य केवलं गोचरतैवार्थः । नतु भूतकालविशिष्टा गोचरता । शापमोक्षे सत्यभिज्ञातं भविष्यतीतिवत् । युद्धगमनात् पूर्वभावित्वं तु स्यात् । अप्रियस्य सम्भावना भयम् ॥ १२१ ॥ न केवलं भयात् । किन्तु स्वाभिप्रेतमवाप्य च ॥१२२॥ त्रयोदशे अब्दान्ते । त्वद्वचने स्थास्यामीत्याश्वासनपूर्वकमभ्युपगमः प्रतिश्रवः । भिन्ना स्वाभिप्रेतविरुद्धार्थविषया । परैः परोपदेशेन ॥ १२३ ॥

---

१. **'हि प्रयोजयसि न क्वचित्'** इति क्वचित् । २. **'स्वाभिप्रायो–'**

३. नातिस्वरसः पाठः । पाठान्तरं किमपि स्यादिति भाति । मृग्यः शुद्धपाठः । **'राज्यविमुखो न गच्छेदित्यर्थः'** इति स्यात् ।

कृतकृत्ये तथा[1] भीमे स्थिते धर्म्मात्मजो हि सः ।
भीष्मद्रोणादिविजयः कथं स्यादित्यचिन्तयत्[2] ॥ १२४ ॥

निवारणं गुरूणां हि भीम इच्छति न क्वचित् ।
तस्मात् ते ह्यर्ज्जुनेनैव निवार्य्या इत्यचिन्तयत् ॥ १२५ ॥

आपद्येव हि भीमस्तान् निवारयति नान्यथा ।
एवं चिन्तासमाविष्टं विज्ञायैव युधिष्ठिरम् ॥ १२६ ॥

सर्वज्ञः सर्वशक्तिश्च कृष्णद्वैपायनोऽगमत् ।
नृपतिं बोधयामास चिन्ताव्याकुलमानसम् ॥ १२७ ॥

इमं मन्त्रं वदिष्यामि येन जेष्यति फल्गुनः ।
भीष्मद्रोणादिकान् सर्वान् तं त्वं वद धनञ्जये ॥ १२८ ॥

इत्युक्त्वैवावदन्मन्त्रं सर्वदैवतदृष्टिदम्[3] ।
न स्वयं ह्यवदत् पार्थे फलाधिक्यं यतो भवेत् ॥ १२९ ॥

भीष्मद्रोणादिविजय एतावद् वीर्य्यमेव हि ।
अलं नातोऽधिकं कार्य्यमेतावद् योग्यमस्य च ॥ १३० ॥

फल्गुनस्येति भगवान् न स्वयं ह्यवदन्मनुम् ।
गते व्यासे भगवति सर्वज्ञे सर्वकर्त्तरि ॥ १३१ ॥

तथा तूष्णीकां स्थिते । सः त्रयोदशेऽब्देऽतीते निश्चितं योत्स्य इति भीमाय दत्तवचनः । विजयः समग्रजयः ॥ १२ ॥ निगृह्य वारणं निवारणम् ॥ १२५ ॥ ननु भीमोऽपि द्रोणं निवारयामास । अत आह– आपद्येव ॥ १२६–७ ॥ इमं मन्त्रं प्रतिस्मृत्याख्यम् । **'गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमतीमिव । विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते'** [व.प.३६.३०] इति च । तं त्वं धनञ्जयाय वद उपदिश ॥ १२८ ॥ सर्वदैवतदृष्टिदम् । स्मृतिमात्रेण देवान् प्रत्यक्षं दर्शयतीति हि मन्त्रोऽयं प्रतिस्मृत्याख्यः ॥ १२९–३२ ॥

१. **'तदा भीमे'** २. **'स्यादिति चिन्तयन् ।'** ३. **'–दैवततुष्टिदम्'**

धर्म्मराजोऽदिशन्मन्त्रं[१] फल्गुनाय रहस्यमुम् ।
तमाप्य फल्गुनो मन्त्रं ययौ ज्येष्ठौ प्रणम्य च ॥ १३२ ॥

यमजौ च समाश्लिष्य गिरिमेवेन्द्रकीलकम् ।
तपश्चचार[२] तत्रस्थः शङ्करस्थं हरिं स्मरन् ॥ १३३ ॥

षण्मासेऽतिगतेऽपश्यन्मूकं नामासुरं गिरौ ।
वराहरूपमायातं वधार्त्थं फल्गुनस्य च ॥ १३४ ॥

तं ज्ञात्वा फल्गुनो वीरः सज्यं कृत्वा तु[३] गाण्डिवम् ।
चिक्षेप वज्रसमितांस्तत्काये सायकान् बहून् ॥ १३५ ॥

**फल्गुनस्य वधार्थं च वधार्थमेव आयातं आगच्छन्तम् । फल्गुनस्येति परोक्षनिर्देशः ॥ १३४ ॥ तं आत्मनो वधार्थमायातं ज्ञात्वा ॥ १३५ ॥**

---

इन्द्रकीलकं नाम हिमवतः शृङ्गविशेषं ययौ । **'हिमवन्तमतिक्रम्य गन्धमादनमेव च । अत्यक्रामत् स दुर्गाणि दिवारात्रमतन्द्रितः । इन्द्रकीलं समासाद्य ततोऽतिष्ठद् धनञ्जयः'** [३७.४१–२] इति, **'शुशुभे हिमवत्पृष्ठे वसमानोऽर्जुनस्तदा'** [३८.१८] इति च । इन्द्रमपि कीलति स्नेहेन बध्नातीन्द्रकीलः । इन्द्रप्रियः पर्वतः । कील बन्धे । शङ्करस्थं हरिं स्मरन् । **'तोषितव्यस्त्वया रुद्रो विष्णुर्लोकनमस्कृतः'** इति पौराणं वचोऽनेन विवृतं भवति । **'शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे । दक्षयज्ञविनाशाय हरिरूपाय ते नमः'** [व.प.३९.७६] इति च । **'नारायणः शिवो विष्णुः शङ्करः पुरुषोत्तमः । एतैस्तु नामभिर्ब्रह्म परं प्रोक्तं सनातनम्'** [७२.१२] इति वाराहे ॥ १३३ ॥ मवते बध्नाति साधून् स्ववशे कृत्वेति मूकः । मूङ् बन्धने । अवतिमवतिभ्यां कक् । अवतेरूकः । तद्यथा मण्डूकः । फल्गुनस्य च वधार्थमिति चकारेण मूकस्य नीचाशयत्वं स्फुटयति ॥ १३४ ॥ तं वधार्थमायातं ज्ञात्वा । तं वराहरूपमसुरं ज्ञात्वा । तस्य नीचमाशयं वा ज्ञात्वा । गाण्डिवं तु । असतां शिक्षणे सदा दक्षं धनुर्वरं गाण्डिवम् । **'सज्यं धनुर्वरं कृत्वा'** इति भारते ॥ १३५ ॥

---

१. **'–राजोऽवदन्मन्त्रम्'**

२. **'तपश्चकार'** इति क्वचित् । उपलब्धकोशानुसारेण वे.ती.पाठोऽपि तथेति भाति । सोऽप्यक्षरचणप्रमादः स्यात् । यतो विवरणवाक्ये– **'तपश्चरणमुक्तम्'** [१४४] इत्युक्तम् । न तपःकरणमिति । तेन तर्कयामः–प्रायः **'तपश्चचार'** इत्येव वेदाङ्गतीर्थसम्मतः पाठ इति ।

३. **'कृत्वा च गा–'**

किरातरूपस्तमनु सभार्य्यश्च त्रियम्बकः[१] ।
स ममार [२]हतस्ताभ्यां दानवः पापचेतनः ॥ १३६ ॥

तेनोक्तोऽसौ मयैवायं वराहोऽनुगतोऽद्य हि ।
तमविद्ध्यो यतस्त्वं हि तद् युद्ध्यस्व मया सह ॥ १३७ ॥

इत्युक्तः फल्गुनः प्राह तिष्ठतिष्ठ न मोक्ष्यसे ।
इत्युक्त्वा तावुभौ युद्धं चक्रतुः पुरुषर्षभौ ॥ १३८ ॥

तत्राखिलानि चास्त्राणि[३] फल्गुनस्याग्रसच्छिवः ।
ततोऽर्ज्जुनस्तु गाण्डीवं समादायाभ्यताडयत् ॥ १३९ ॥

तदप्यग्रसदेवासौ प्रहसन् गिरिशस्तदा ।
बाहुयुद्धं ततस्त्वासीत्[४] तयोः पुरुषसिंहयोः ॥ १४० ॥

पिण्डीकृत्य ततो रुद्रश्चिक्षेपाथ[५] धनञ्जयम् ।
मूर्च्छामवाप महतीं फल्गुनो रुद्रपीडितः ॥ १४१ ॥

**तं वराहं अनु, गच्छन्निति शेषः ॥ १३६–४१ ॥**

---

तं वराहमनुगच्छन् त्रियम्बकोऽपि तमर्जुनमन्वेव सायकांश्चिक्षेप । अर्जुनकृतं सायकक्षेपमनु वा । सभार्यश्चेति चकारेण परिवारभूतैर्भूतैः स्त्रीभिश्च सहितः । ताभ्यां फल्गुनशङ्कराभ्याम् । अथच फल्गुनमुक्तेष्वेकेन शङ्करमुक्तेष्वेकेन चेति द्वाभ्यां सायकाभ्यां हतो ममार । **'तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः'** [व.प.३९.१४] इति कैराते ॥ १३६ ॥ हन्तुमनुगतः । अद्य हि । मूकासुरमेनं जानन् हन्तुमुद्यत इति हिनाऽऽह । परन्तु तस्य पूर्वोत्तरमजानन् त्वमविध्यो हि । मयाऽनुगतं त्वमविध्य इत्येतत् त्वमपि किल जानासि ॥ १३७ ॥ मोक्ष्यसे । मुञ्चतेः कर्मणि लृट् ॥ १३८ ॥ ततस्तु उपायान्तराभावात् ॥ १३९–४० ॥ अथ रुद्रः, ततः गाण्डीवग्रसनेनापि अर्जुनस्य स्वापरिज्ञानात् कारणात्,

---

१. क्वचित् कोशेषु **'त्र्यम्बकः'** इति पठ्यते । उभयथाऽपि न दोषः । प्रश्लिष्य लिखन्ति । विश्लिष्य पठन्ति ।

२. **'ममाराऽहत–'** इत्येकस्मिन् प्रतनकोशे पठ्यते । हृषीकेशतीर्थीयं त्वत्र गलितम् ।

३. **'–लानि शस्त्राणि'** ४. **'ततश्चाऽसीत्'** इति क्वचित् । ५. **'–क्षेप च धन–'**

पूर्वं सम्प्रार्थयामास शङ्करो गरुडध्वजम् ।
अवराणां वरं मत्तो येषां त्वं सम्प्रयच्छसि ॥ १४२ ॥

अजेयत्वं प्रसादात् ते विजेयाः स्युर्म्मयाऽपि ते ।
इत्युक्तः प्रददौ विष्णुरुमाधीशाय तं वरम् ॥ १४३ ॥

तेनाजयच्छ्वेतवाहं गिरिशो रणमद्ध्यगम् ।
केवलान् वैष्णवान् मन्त्रान् व्यासः पार्थाय नो ददौ ॥ १४४ ॥

एतावताऽलं भीष्मादेर्ज्जयार्त्थमिति चिद्घनः ।
केवलैर्वैष्णवैर्म्मन्त्रैः स्वदत्तैर्विजयावहैः ॥ १४५ ॥

**ननु 'धरातळस्थिते न मय्यमुं कश्चन जेष्यति'(२०.१३४) इति कृष्णदत्ताजेयत्ववरसद्भावात् कथमर्जुनः पराजित इत्यत आह– पूर्वमिति । अजेयत्वं वरमिति सम्बन्धः ॥ १४२–३ ॥ ननु 'शङ्करस्थं हरिं स्मरन् तपश्चकार' (१३३) इति हरिध्यानपूर्वकं तपश्चरणमुक्तम् । 'ततः प्रादादस्त्रं पाशुपतं शिवः'(१४८) इति शिवादस्त्रप्राप्तिर्वक्ष्यते । तस्माद्धरिं ध्यात्वा तपसि (कृते) रुद्राद्वरलाभोऽनुपपन्न इत्यतस्तदुभयं घटयितुमाह– केवलानिति । व्यासः केवलान् वैष्णवान् विष्ण्वेकदेवताकान् मन्त्रान् नो ददौ । किन्तु विष्णुरुद्रोभयदेवताकानेव ददावित्यर्थः । अत एव 'शिवः प्रादात्' (१४८) इति च शिवगतो विष्णुः प्रादादित्यर्थोऽङ्गीकरणीयः । प्रागपि 'शङ्करस्थं हरिं स्मरन्'(१३३) इत्येतेन तपश्चरणकालविषयो विरोधोऽपि वारितो वेदितव्यः ॥ १४४ ॥ एतादृश(मन्त्रदाने किं कारणमित्यत आह)– एतावतेति । भीष्मादेर्जयार्थं**

---

ग्रसनानन्तरमपि अगलिताहङ्कारत्वात् । तस्य मनसि अहङ्कारात्मना ततः सन् । धनञ्जयमिति पदेनैव **'शत्रुधनञ्जयोऽहम्'** इति तस्याहङ्कारं ध्वनयति ॥ १४१ ॥ ननु कृष्णेनोक्तमिन्द्राय **'मयि भूमौ स्थिते न कश्चिदर्जुनं जेष्यति'** इति । तत् कथं शिवोऽर्जुनं जिगाय? अत्र पूर्ववृत्तमाह– पूर्वमिति । शङ्करसमकक्ष्यो गरुडो यस्य ध्वजस्तं शङ्करः प्रार्थयामास । किमिति?–मत्तोऽवराणां येषां त्वमजेयत्वं वरं सम्यक् प्रसन्नो यच्छसि तेऽपि, तव प्रसादात् मया विजेयाः स्युरिति सादरं समेत्य प्रार्थयामास । विजेयाः कारणविशेषतो जेयाः । यत्र पराजयोऽपि प्रसादः । प्रसन्नो विष्णुर्ददौ च तं वरमुमाधीशाय । उत्कृष्टा मा वाक् उमा । तन्मानिनी पार्वती चोमा । उत्कृष्टा मा प्रमा चोमा । मनोमानी हि शिवः । तेनोभयथाऽपि शिव उमाधीशः । उमाऽपि मनस ईष्टे । अयमधीष्टे । प्रायो विष्णुरजेयत्वं वरं न ददाति । नतरामसुराणाम् । यत्र क्वचिद् ददौ तत्रापि 'अजेयोऽस्त्वयमृते शिवात्' इत्येव भगवत्सङ्कल्प इत्यायातम् । 'यत्र पराजयोऽपि जयावहस्तमृते' इति वा । उत्तमाय दत्तो वरः क्वचिदवराय दत्तं वरं बाधेतापि । तेन न वचनभङ्गः । विजयपर्यन्तो हि स पराजयो भवति । तेनोभावप्यनुगृहीतौ भवतः । एतेन बभ्रुवाहनप्रसङ्गोऽपि व्याख्यातः ॥ १४२–४७ ॥

अतिवृद्धस्य पार्त्थस्य दर्प्पः स्यादित्यचिन्तयत्[1] ।
पार्त्थः सञ्ज्ञामवाप्याथ जयात्थ्याराधयच्छिवम् ॥ १४६ ॥

व्यासोदितेन मन्त्रेण तानि पुष्पाणि तच्छिरः ।
आरुहन् स तु तं ज्ञात्वा रुद्र इत्येव फल्गुनः ॥ १४७ ॥

नमश्चक्रे ततः प्रादादस्त्रं पाशुपतं शिवः ।
अस्त्रं तद् विष्णुदैवत्यं साधितं शङ्करेण यत् ॥ १४८ ॥

तस्मात् पाशुपतं नाम स्वान्यस्त्राण्यपरे सुराः ।
ददुस्तदैव पार्त्थाय सर्वे प्रत्यक्षगोचराः ॥ १४९ ॥

इन्द्रोऽर्ज्जुनं समागम्य[2] प्राह प्रीतोऽस्मि तेऽनघ ।
रुद्रदेहस्थितं ब्रह्म विष्णवाख्यं तोषितं त्वया ॥ १५० ॥

तेन लोकं ममाऽगच्छ प्रेषयामि रथं तव ।
इत्युक्त्वा प्रययाविन्द्रस्तद्रथेन च[3] मातलिः ॥ १५१ ॥

**एतावता केवलवैष्णवत्वरहितेन मन्त्रेण अलमिति, अभिप्रायवानिति शेषः । अभिप्रायान्तरं चाऽह– केवलैरिति ॥ १४५–७ ॥ उभयदेवता(क)मन्त्रस्य कथं पाशुपतनामत्वमित्यत (आह–अस्त्रमिति । अस्त्रस्य देवता) विष्णुः । तस्माद् विष्णुदैवत्यम् । तत्साधकत्वेनाभिमानिदेवता पशुपतिः । तस्मात् पाशुपतं नामेत्यर्थः । तदैव सुराः स्वान्यस्त्राणि ददुः ॥ १४८–९ ॥ त्वया ब्रह्म तोषितं यतः तेन प्रीतोऽस्मि ॥ १५०–३ ॥**

---

**'कामये दिव्यमस्त्रं तद् घोरं पाशुपतं प्रभो । यत्तद् ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम्'** [व.प.४०.८] इति वचनाभिप्रायमाह– विष्णुदैवत्यमिति । ब्रह्मशिरो हि विष्णुदैवत्यम् । शङ्करेण साधितत्वात् पाशुपतम् । **'यत्तत् ब्रह्मशिरो नाम तपसा रुद्रमागमत्'** [व.प.८९.११] इति च ॥ १४८ ॥ अपरे सुराः दिगीशा यमवरुणकुबेराः ॥ १४९–५० ॥ तद्रथेन तस्येन्द्रस्य रथेन । तेन **'प्रेषयामि रथं तव'** इतीन्द्रोक्तेन वा रथेन । इन्द्रः प्रययौ मातलिश्चाऽयादिति चकारेण साप्द्यमाह ॥ १५१ ॥

---

१. **'स्यादिति चिन्तयन् ।'** २. **'समागत्य'** इति क्वचित् । ३. **'तद्रथेनैव मा–'**

आयात् पार्थस्तमारुँह्य ययौ तातनिवेशनम्[१] ।
पूजितो दैवतैः सर्वैरिन्द्रेणैव [२]निवेशितः ।
तेन सार्द्धमुपासीदत् तस्मिन्नैन्द्रे वरासने ॥ १५२ ॥

प्रीत्या समाश्लिष्य कुरुप्रवीरं शक्रो द्वितीयां तनुमात्मनः सः ।
ईक्षन् मुखं तस्य मुमोद सोऽपि ह्युवास तस्मिन् वत्सरान् पञ्च लोके ॥ १५३ ॥

अस्त्राणि तस्मा अदिशत् स[३] वासवो महान्ति दिव्यानि तदोर्वशी तम् ।
सम्प्राप्य भावेन तु मानुषेण माता कुलस्येति निराकृताऽभूत्[४] ॥ १५४ ॥

षण्ढो भवेत्येव तयाऽभिशप्ते[५] पार्थे शक्रोऽनुग्रहं तस्य चादात् ।
संवत्सरं षण्ढरूपी चरस्व न षण्ढता ते भवतीति[६] धृष्णुः ॥ १५५ ॥

**मानुषेण भावेन स्वस्य मानुष्यजन्मापेक्षया कुलस्य मातेति निराकृता निषिद्धा अभूत् । उर्वश्याः पुरूरवसो भार्यात्वात् । स्वस्यापि पुरूरवसो वंशे जातत्वात् । त्वमस्मत्कुलमाता । अतो नाङ्गसङ्गयोग्येति न्यषेधदिति भावः ॥ १५४ ॥ संवत्सरं च ते षण्ढता न भवतीति अनुग्रहं चादात् ॥ १५५ ॥**

---

निवेशितः ऐन्द्रे वरासने ॥ १५२ ॥ समाश्लिष्य गाढमालिङ्गच । **'स चैनं वृत्तपीनाभ्यां बाहुभ्यां प्रत्यगृह्णत'** [व.प.४२.१९] इतीन्द्रलोकाभिगमने । सोऽर्जुनोऽपि तस्मिन् देवलोके । **'पुरन्दरनियोगाच्च पञ्चाब्दानवसत् सुखी'** [४३.३७] इति च ॥ १५३ ॥ सम्भोगार्थं प्राप्य । मनुष्यलोकसम्बन्धापेक्षया कुलस्य माता । शशाङ्कपुत्राद्धि पुरूरवसश्चन्द्रवंशारम्भः । उर्वशी च तत्प्रिया । **'यथा कुन्ती च माद्री च शची चैव समा इह । तथाच वंशजननी त्वं हि मेऽद्य गरीयसी'** [व.प.४४.६२] इति हि भारते ॥ १५४ ॥ संवत्सरं षण्ढरूपी अज्ञातवासे चरस्व । तेन तत्रैव जनैरज्ञेयत्वं नाम महान् लाभः । **'शण्ढषण्ढौ वन्ध्यपुंसि'** इत्यभिधानम् । **'षडि निर्बीजे'** इति प्रचलितः काशकृत्स्नधातुपाठः । भ्रान्तिमूलोऽयं पाठः । ढान्तप्रकरणत्वात् । तेन **'षढि निर्बीजे'** इत्येव साधुः पाठः । तथाहि तत्पूर्वम्– **'धृढ धारणे'** इत्यारभ्य, **'ढुढि अन्वेषणे'** इत्यन्तं ढान्ताः पठिताः । तत् कथमिह डान्तता स्यात् । तेन **'षढि निर्बीजे'** इत्येव पठनीयम् । विस्मरणशरणा वैयाकरणा बहून् धातून् व्यत्यास्यन् । अपरांश्च भक्षयामासुरिति । धृष्णुः प्रगल्भः । प्रत्युत्पन्नमतिर्धीर इत्यर्थः ॥ १५५ ॥

---

१. **'तातनिकेतनम्'** । **'शक्रनिकेतनम्'** इति क्वचित् । २. **'–रिन्द्रेणाभिनिवे–'** ३. **'अदिशच्च वासवो–'**
४. **'निवारिताऽभूत्'** ५. **'तदाऽभिशप्ते'** इति क्वचित् । ६. **'भवितेति'** इति क्वचित् ।

ततोऽवसत् पाण्डवेयो गान्धर्वं वेदमभ्यसन् ।
गन्धर्वाच्चित्रसेनात्तु तथाऽस्त्राणि सुरेश्वरात् ॥ १५६ ॥

सुभद्रयाऽभिमन्युना सह स्वकां पुरं गतः[1] ।
जनार्दनोऽत्र संवसन् कदाचिदित्थमैक्षत ॥ १५७ ॥

मया वरो हि शम्भवे प्रदत्त आस पूर्वतः ।
वरं ग्रहीष्य एव ते सकाशतो विमोहयन् ॥ १५८ ॥

**गान्धर्वं वेदं (गान)विद्याम् ॥ १५६ ॥ 'सुभद्रामभिमन्युं च रथमारोप्य केशवः'(२२.५८) इत्यत्र कृष्णः 'पाण्डवानभ्यनुज्ञाय' द्वारकामगमदित्युक्तम् । ततः किमकरोदित्यतस्तत्प्रवृत्तिमाह– सुभद्रयेत्यादिना । असुरान् विमोहयन् अहं ते सकाशतः वरं ग्रहीष्ये । ततस्त्वं मत्तः श्रेष्ठः पूज्यो भविष्यसि इति पूर्वतः पूर्वं शम्भवे वरः प्रदत्त आस हि यस्मात् तस्मान्मयेदानीं शम्भोर्वर आदातव्यः । इत्थमैक्षत अचिन्तयत् ॥ १५७–८ ॥**

---

कुरुपाण्डुभ्यामपि ढक् वक्तव्य इत्युक्तम् । गान्धर्वं वेदमभ्यसन्निति । **'ततः शक्रोऽब्रवीत् पार्थं कृतास्त्रं काल आगते । नृत्यं गीतं च कौन्तेय चित्रसेनादवाप्नुहि'** [व.प.४३.३८] इति । सुरेश्वरादस्त्राण्यभ्यसन्, अभितः आद-दानः । अस गतिदीप्त्यादानेषु । अभ्यसति । अभ्यसन् । अस्यतेरभ्यस्यन्निति । छान्दसो वा यलोपः ॥ १५६ ॥ अथ तदानीं भूमौ प्रवृत्तमुदन्तमाह–सुभद्रया । संवसन् । यादवैः सह तेषां सुखदः सन् वसन् ॥ १५७ ॥ **'तपसा तोषयित्वा तं कैलासगिरिवासिनम् । रुग्मिण्यां तनयं लेभे दग्धं कामं पुनर्हरिः'** [१०.६८.१] इति भागवत उक्षणनयेन सङ्क्षिप्योक्तं कथाभागं हरिवंशानुगुणं विवृण्वन् अनुशासनपर्वगतस्य दर्शनभाषामालम्ब्य प्रवृत्तस्य सर्वस्य प्रमेय-जातस्य गमनिकामाह– मया वर इत्यादिना । **'ततो ध्यात्वा च भगवान् ब्रह्मा तममितौजसम् । अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तमुमापतिम्'** [अनु.प.२६५.३५] इत्यादि कृष्णवचनम्, **'ततो मां जगतो माता धारिणी सर्वपावनी । उवाचोमा प्रणिहिता शर्वाणी तपसां निधिः । दत्तो भगवता पुत्रः साम्बो नाम तवानघ । मत्तोऽप्यष्टौ वरानिष्टान् गृहाण त्वं ददामि ते'** [अनु.प.४६.४–५] इति, **'नास्ति शर्वसमो देवो नास्ति शर्वसमा गतिः'** [४६.११] इति च, **'ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः । न विदुस्त्वां तु तत्वेन कुतो वेत्स्यामहे वयम्'** [४७.१५] इत्यादि च शिवं प्रति तण्डिवचनम्, उपमन्युप्रोक्तं शिवसहस्रनामस्तोत्रम् [४८], दक्षकृतमष्टोत्तरसहस्रनामस्तोत्रम् [शां.प.२९०] इत्यादेः समग्रस्य शैवप्रकरणस्य तात्पर्यमनेनाऽविष्कृतं भवति ॥ १५८ ॥

---

१. 'पुरीं गतः'

'त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा ।
'द्वापरादौ युगे भूत्वा कलया मानुषादिषु[१]' ॥ १५९ ॥

इति वाक्यमृतं कर्त्तुमभिप्रायं विजज्ञुषी ।
प्रीत्यर्थं वासुदेवस्य रुग्मिणी[२] वाक्यमब्रवीत् ॥ १६० ॥

जातेऽपि पुत्रे पुत्रार्त्थं सा हि वेद मनोगतम् ।
पुत्रो मे बलवान् देव स्यात् सर्वास्त्रविदुत्तमः ॥ १६१ ॥

इत्युक्तो भगवान् देव्या सम्मोहाय सुरद्विषाम् ।
ययौ सुपर्ण्णमारुँह्य स्वीयं बदरिकाश्रमम् ॥ १६२ ॥

'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ १६३ ॥

**'वरं ग्रहीष्ये' इत्युक्तमर्थं पद्मपुराणगतवाक्येन विवृण्वन्नाह– त्वामिति । 'त्वामाराध्य' इत्यस्यापि पूर्वार्धे– 'मां चोवाच यथा मत्तः पूज्यः श्रेष्ठो भविष्यसि' इति । अस्यार्थः– विष्णोः सकाशादाधिक्यमिच्छता मया सम्यगाराधितो हरिः मां चोवाच, शम्भो त्वं मत्तः श्रेष्ठः मत्तोऽपि पूज्यः, अज्ञलोकप्रवादत इति भावः, यथा भविष्यसि तथा अहं द्वापरादौ युगे कलया अंशेन मानुषादिषु भूत्वा त्वामाराध्य वरं ग्रहीष्यामि इति हरिणोक्तमिति पार्वतीं प्रति रुद्रवचनम् ॥ १५९ ॥ इति वाक्यं 'त्वामाराध्य' इत्यादिना रुद्रायोक्तं स्ववाक्यं ऋतं कर्तुं चिन्तयतो वासुदेवस्य अभिप्रायं पुत्रं देहीति मया प्रार्थनं कार्यमित्यभिप्रायं विजज्ञुषी रुग्मिणी, वासुदेवस्य प्रीत्यर्थं पुत्रे जातेऽपि पुत्रार्थं वाक्यमब्रवीत् (इति) 'अभिप्रायं विजज्ञुषी' इत्येतद् विवृणोति ॥ १६०–२ ॥ असुराणां सम्मोहाय ययावित्युक्तार्थे वराहपुराणगतवाक्यं सम्मतित्वेनोदाहरति–**

---

**'त्वामाराध्य–'** [उ.खं.७१.१०६] इत्यस्य पाद्मवचनस्य **'मां चोवाच यथा मत्तः पूज्यः श्रेष्ठो भविष्यसि'** इति पूर्ववचनेनान्वयः । यथा पूज्यो भविष्यसि तथा त्वामाराध्य । आत्मानं प्रति हरिणोक्तमिति पार्वतीमुद्दिश्य रुद्रोक्तिरियमुत्तरखण्डे ॥ १५९–६० ॥ सर्वास्त्रविदामुत्तमः । उत्तम इति भिन्नं वा पदम् । गुणाढ्यत्वादुत्तम उत्कृष्टतमः ॥ १६१ ॥ सुरद्विषां सम्मोहाय सन्तताय मोहाय, अयथार्थज्ञानवृद्ध्य इत्येतत् । पुनःपुनरधर्मकामितायै च । स्वीयम्, नरनारायणात्मना व्यासात्मना च स्वेनाधिष्ठितम् ॥ १६२ ॥ **'एष मोहम्–'** इत्यादि वाराहवचनमिति प्रथमाध्याये स्थितम् । तत्र **'एष**

---

१. इतः परम्– **'स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु ।
'मां च गोपय येन स्यात् सृष्टिरेषोत्तराधरा'** इत्यधिकं प्र. पाठे । २. **'रुक्मिणी'**

'अतत्थ्यानि वितत्थ्यानि दर्शयस्व महाभुज ।
'प्रकाशं कुरु चाऽत्मानमप्रकाशं च मां कुरु ॥ १६४ ॥

'अहं त्वां पूजयिष्यामि लोकसम्मोहनोत्सुकः ।
'तमोऽसुरा नान्यथा हि यान्तीत्येतन्मतं मम' ॥ १६५ ॥

इत्युक्तवचनं[1] पूर्वं केशवेन शिवाय यत् ।
तत् सत्यं कर्तुमायातं[2] कृष्णं बदरिकाश्रमम् ।
सर्वज्ञा मुनयः सर्वे पूजयाश्चक्रिरे प्रभुम् ॥ १६६ ॥

रात्रौ कृष्णे मुनिमद्ध्ये निविष्टे[3] घण्टाकर्ण्णः कर्ण्णनामा पिशाचौ ।
समायातां गिरिशेन प्रदिष्टौ कृष्णं द्रष्टुं द्वारकां गन्तुकामौ ॥ १६७ ॥

**एष इति । मोहं मोहकं शास्त्रम् । यः मोहकग्रन्थः । त्वं कुरु कारय च ॥ १६३ ॥ अतथ्यानि कुत्राप्य-विद्यमानानि। वितथ्यानि व्यधिकरणत्वेन विद्यमानानि। मयि दर्शयस्व॥ १६४ ॥ मोहसृष्ट्यादेः प्रयोजन-माह– तमोऽसुरा इति । एतन्मतं ममेति । मम एतत् मतं अभिप्राय इति (अतः) असुरा मोहनीया इति शेषः ॥ १६५ ॥ केशवेन शिवाय पूर्वं यत् इत्युक्तवचनं (तत्) सत्यं कर्तुम् ॥ १६६ ॥ कृष्णं द्रष्टुं गिरिशेन प्रदिष्टौ, अत एव द्वारकां गन्तुकामौ समायाताम्, बदरिकाश्रममिति शेषः ॥ १६७–७० ॥**

---

**मोहम्–'** इत्येकः श्लोकः सम्प्रति वाराहे पठ्यते [७०.३५] । श्लोकद्वयं मतान्धघुणैर्भक्षितम् । हरिवंशेऽपीदं किञ्चिदिव सूचितम्– **'अहं तु यास्ये कैलासं कुतश्चित् कारणान्नृपाः । शङ्करं द्रष्टुकामोऽस्मि भूतभावनभावनम्'** [भ.प.७४. २०] इति । कुतश्चिदसुरमोहनाख्यात् कारणादिति हृदयम् ॥ १६३–४ ॥ **'देवकार्यावतारेषु मानुषत्वमुपागतः । त्वामेवाऽराधयिष्यामि त्वं च मे वरदो भव'** [व.पु.७३.४५] इति च ॥ १६५–६ ॥ कर्णनामा तदनुजः । पिशित-मश्नीत इति पिशाचौ । **'येषु लोपागमवर्णविकाराः शास्त्रेण न विहिताः, दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति । यानियानि यथोपदिष्टानि शिष्टैरुच्चारितानि प्रयुक्तानि, तानि तथैवानुगन्तव्यानि'** इति काशिकायां वामनः [६.३.१०९] । **'मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः । तस्माद् गत्वा च बदरीं तत्राऽराध्य जनार्दनम् । मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे'** [ह.वं.भ.प.८०.३०–१] इति गिरिशेन प्रदिष्टौ ॥ १६७ ॥

---

१. 'इत्युक्तं वचनम्' २. 'कर्तुमायान्तम्' ३. '–मध्ये प्रविष्टे'

तौ दृष्ट्वा मुनिमद्ध्यस्थं केशवं तदबोधतः ।
कृत्वा स्वजातिचेष्टाश्च द्ध्यानेनैनमपश्यताम् ॥ १६८ ॥

दृष्ट्वा हृदि स्थितं तं तु[1] कौतूहलसमन्वितौ ।
स्तुत्वा भक्त्या प्रणामं च बहुशश्चक्रतुः शुभौ ॥ १६९ ॥

तयोः प्रसन्नो भगवान् स्पृष्ट्वा गन्धर्वसत्तमौ ।
चकार क्षणमात्रेण दिव्यरूपस्वरान्वितौ ॥ १७० ॥

ताभ्यां पुनर्नृत्तगीतसंस्तवैः पूजितः प्रभुः ।
ययौ कैलासमद्रीशं चकारेव तपोऽत्र च ॥ १७१ ॥

स्वीयानेव गुणान् विष्णुर्भुञ्जन् नित्येन शोचिषा ।
शार्वं तपः करोतीव मोहयामास दुर्ज्जनान् ॥ १७२ ॥

पूर्वं तेनोदितं यत्तल्लोकान् मोहयताऽञ्जसा ।
शर्वं प्रति तवाहं तु कुर्य्यां द्वादशवत्सरम् ॥ १७३ ॥

**अत्र च शैवं तपश्चकारेव अदर्शयत् ॥ १७१ ॥ इवेत्युक्तस्याभिप्रायमाह– स्वीयानिति ॥ १७२ ॥ तेन**

---

**'तेषामनु महाघोरौ पिशाचौ विकृताननौ ।....खादन्तौ मांसपिटकं पिबन्तौ रुधिरं बहु ।.......हसन्तौ विविधं हासं स्वजातिसदृशं नृप'**[भ.प.७९. १–४] इति हरिवंशे ॥ १६८ ॥ तं तु कृष्णमेव विष्णुरूपेण हृदि स्थितम् । **'स च घोरः पिशाचोऽपि ददर्शाऽत्मनि केशवम् । पीतकौशेयवसनं पद्माक्षं श्यामलं हरिम्'** [भ.प.८१.१३] इति च । **'पिशिताशो जगन्नाथं ददर्शाथ जगद्गुरुम् । समाधौ च यथा दृष्टं भूमौ चापि तथा हरिम् । अयं विष्णुरयं विष्णुरित्यूचे पिशिताशनः । समाधौ च यथा दृष्टः सोऽयमत्रापि दृश्यते'** [८२.१–२] इति च ॥ १६९–७० ॥ भक्तिसम्पन्नैः नृत्तगीतस्तवैः । नृत्तगीतसङ्गतैर्वा स्तवैः । अद्रीशं कैलासं ययौ । अत्र कैलासे अद्रीशं गिरीशं प्रति तपश्च चकारेव । **'मानसस्योत्तरं तीरं जगाम यदुनन्दनः । तपश्चर्तुं किल हरिर्विष्णुः सर्वेश्वरः शिवः । जटी चीरी जगन्नाथो मानुषं वपुरास्थितः'**[८४.१४–५] इति च । तपश्चर्तुं किलेति सर्वेश्वरस्य तपश्चरणं विडम्बनमात्रम्, न वास्तवमित्याह । **'वार्तायामरुचौ किल'** इत्यभिधानम् ॥ १७१ ॥ नित्येन शोचिषा स्वयम्प्रकाशेन स्वरूपेण । शुच शोके इति पठन्ति धातुपारायणिकाः । **'शुच दीप्तौ'** इति च पठनीयम् । भुञ्जन्ननुभवन् ॥ १७२ ॥ **'अयं नारायणः श्रीमान्**

---

१. 'स्थितं तौ तु'

तपोऽसुराणां मोहाय सुराः सन्तु गतज्वराः ।
इति तस्मात् तदा कृष्ण एकाहेन बृहस्पतिम् ॥ १७४ ॥

आज्ञया[१] चारयामास क्षिप्रं द्वादशराशिषु ।
द्वादशाब्दमभूत् तेन तदहः केशवेच्छया[२] ॥ १७५ ॥

एकस्मिन्नह्नि भगवान् राशिंराशिं च वत्सरम् ।
कल्पयित्वोपवासादीन् मनसा नियमानपि ॥ १७६ ॥

मासव्रतं[३] सार्द्धशतश्वासकालैरकल्पयत् ।
मनसैव स्वभक्तानां द्वादशाब्दव्रताप्तये ॥ १७७ ॥

**हरिणा सुराः गतज्वराः सन्त्विति अभिप्रायेण असुराणां मोहाय अहं द्वादशवत्सरं तव तपः कुर्यामिति शर्वं प्रति तपश्चरणं पूर्वमुदितं यद् यस्मात् तस्मात् द्वादशवत्सरं तपसः कर्तव्यत्वात् एकमेवाहो द्वादशवत्सरं कर्तुं कृष्णः तदा बृहस्पतिं आज्ञया स्वाज्ञया क्षिप्रं द्वादशराशिषु चारयामासेत्यन्वयः । तेन द्वादशराशिषु बृहस्पतिसञ्चारेण ॥ १७३–७ ॥**

---

**पुत्रार्थे व्रतकाङ्क्षया । दीक्षितोऽभून्महाबाहुः पुरा द्वादशवार्षिकम्'**[अनु.प. २०३.१] इति भारतवचनस्य हृदयं व्यनक्ति– पूर्वमिति । शर्वं प्रति तेन विष्णुना यत्तत् गतज्वरा इत्यन्तमुदितम् । लोकान् दुर्जनान् । क्वचित् सज्जनानपि । मोहे आञ्जस्यं नाम तत्तद्योग्यतानुसारित्वम् । दुर्जनानामनन्तो मोहः । सतां कादाचित्कः । तव त्वद्विषयं तपः । अहं तु त्वत्त उत्तमोऽपि, कर्तव्यकर्मरहितोऽप्यहम् । एकाहेन षष्टिघटिकामितकालेन । बृहस्पतेरेकस्मिन् राशौ स्थिति-कालो हि बार्हस्पत्यो वत्सरः, यं परिवत्सर इत्याचक्षते मौहूर्तिकाः । द्वादशानामब्दानां समुदायो द्वादशाब्दम् । द्वादशसंवत्सरसाध्यं वा तपः । द्वादशाब्दसदृशम् ॥ १७३–५ ॥ २१६०० श्वासकालो हि दिनम् । अत्र चाहःशब्देना-होरात्रात्मकं दिनमुच्यते । तस्मिन् दिने बृहस्पतेरेकराशिस्थितिकालः [२१६००÷१२=१८००श्वासकालमितः] पञ्चघटिकात्मको वत्सरो बभूव । ३००विघटिका इत्येतत् । ततश्च २५ विघटिका÷मासकालः [१८००÷१२=१५० श्वासकालमितः] । ततश्च १८०० श्वासकालो वत्सरो द्वादशसङ्ख्यया गुणितः– १८००x१२=२१ ६०० श्वासकालो द्वादशवत्सरा बभूवुः । उपवासादीन् मनसा कल्पयित्वा मासव्रतं मनसैव अकल्पयत् । तथाहि हरिवंशे–**'एकस्मिन्नेकदा मासे भुञ्जानो नियतात्मवान् । द्वितीये त्वथ पर्याये भुञ्जन्नेकेन केशवः'** [भ.प.८४.२५] इत्यादि । किमर्थं कृष्ण एवं चकार? स्वभक्तानां तस्मिन्नेकस्मिन्नेव दिने कृतेन व्रतेन द्वादशाब्दव्रतफलाप्तये ॥ १७६–७ ॥

---

१. **'स्वाज्ञया'** २. **'केशवाज्ञया'** ३. **'मासव्रतं'**

**तत्रास्य गरुडाद्याश्च[1] परिचर्य्यां स्वपार्षदाः ।**
**चक्रुर्होमादिकाश्चैव क्रियाश्चक्रे जनार्दनः ।**
**स्वात्मानं प्रति पापानां शिवायेति प्रकाशयन् ॥ १७८ ॥**

**एवं स्थितं तमरविन्ददलायताक्षं ब्रह्मेन्द्रपूर्वसुरयोगिवरप्रजेशाः ।**
**अभ्याययुः पितृमुनीन्द्रगणैः समेता गन्धर्वसिद्धवरयक्षविहङ्गमाद्याः ॥ १७९ ॥**

**शर्वोऽपि सर्वसुरदैवतमात्मदैवमा[2]यातमात्मगृहसन्निधिमाश्ववेत्य ।**
**अभ्याययौ निजगणैः सहितः सभार्य्यो भक्त्याऽतिसम्भ्रमगृहीतसमर्हणाग्र्यः ॥ १८० ॥**

**अभ्येत्य पादयुगळं[3] जगदेकभर्त्तुः कृष्णस्य भक्तिभरितः शिरसा ननाम ।**
**चक्रे स्तुतिं च परमां परमस्य पूर्णषाड्गुण्यविग्रहविदोषमहाविभूतेः ॥ १८१ ॥**

**तत्र तस्मिन् काले । स्वात्मानं प्रत्येव होमादिकाः क्रियाश्चक्रे ॥ १७८ ॥ योगिवराः सनकाद्याः । प्रजेशाः दक्षाद्याः ॥ १७९ ॥ आशु अभ्याययौ । निजगणैः निजप्रमथगणैः ॥ १८०–१ ॥**

---

तत्रास्य गरुडाद्याश्च । आद्यशब्देन आयुधदेवताः । तथाहि हरिवंशे– **'गरुडः काश्यपसुत इन्धनानि समाचिनोत् । होमार्थं वासुदेवस्य चरतस्तप उत्तमम् । चक्रराजोऽथ पुष्पाणि सञ्चिनोति तदा हरेः । दिक्षु सर्वासु सर्वत्र ररक्ष जलजस्तदा । खड्ग आहृत्य यत्नेन कुशान् सुबहुशस्तदा । गदा कौमोदकी चैव परिचर्यां चकार ह । धनुःप्रवरमत्युग्रं शार्ङ्गं दानवभीषणम् । स्थितं हि पुरतस्तस्य यथेष्टं भृत्यवत् स्वयम्'** [८३.२०–२३] इति । **'जुहोति भगवान् विष्णुरेधोभिर्बहुभिः सदा । आज्यादिभिस्तदा हव्यैरग्निं सम्पूज्य माधवः'** [२४] इति वचनाशयमाह–होमादिकाश्चैव । शिवादिनामानं स्वात्मानं प्रत्येव क्रियाश्च चक्रे । पापानां एतत् सर्वं शिवतोषणार्थं क्रियत इति प्रकाशयन्, एवं कृतपापानां सतां मानुषाणां होमादिकाः क्रियाः शिवाय दुरितोपशमाय कर्तव्या इति च प्रकाशयन् । एवं पापानामसतां सर्वाः क्रियाः शिवतोषणायैव कर्तव्या इति भ्रमं च जनयन् ॥ १७८ ॥ योगिवराः सनत्कुमारप्रमुखाश्चत्वारः । प्रजेशा मरीच्याद्या नव । **'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च'** इति । अग्निष्वात्तादयः सप्त पितृप्रधानाः । तत्पुत्रपौत्रगणश्च । मुनीन्द्रा नारदाद्याः । गन्धर्ववराः सिद्धवरा यक्षवरा विहङ्गमवराश्च देवानां परिवारगणाः । आदिना किन्नरपन्नगाद्याः । गन्धर्वादिषु ये वरा देवगणप्रविष्टा इत्यर्थः ॥ १७९ ॥ सर्वसुरदैवतम् । **'दैवतं देवतानां च'** इति हि स्मरन्ति । विशिष्य चाऽत्मदैवम् । **'द्रष्टुं हरिं लोकहितैषिणं प्रभुं ययौ भवान्या सह भूतसङ्घैः'**[८५.९] इति च । हर्षोत्कर्षजनितमतित्वरणमतिसम्भ्रमः । आदरातिशयश्च । **'सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि'** इत्यभिधानम् । अर्हणमतिथीनां यदुपह्रियते । पूजासाधनानि द्रव्याण्यर्घ्यपाद्यादीनि । अतिथिमात्रस्यार्हणं भवति । महतः समर्हणम् । महत्तमस्य समर्हणाग्र्यम् ॥ १८० ॥ चक्रे स्तुतिम् । **'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां**

---

१. **–द्यास्तु परि–'** २. **'–मायान्तमात्म–'** ३. **'पादयुगलम्'**

कृष्णोऽप्ययोग्यजनमोहनमेव वाञ्छंस्तुष्टाव रुद्रहृदिगं निजमेव रूपम् ।
रुद्रो निशम्य तदुवाच सुरान् समस्तान् सत्यं वदामि शृणुताद्य वचो मदीयम् ॥ १८२ ॥

विष्णुः समस्तसुजनैः परमो [1]ह्युपेयस्तत्प्राप्तयेऽहमनिलोऽथ रमाऽभ्युपायाः[2] ।
एष ह्यशेषनिगमार्त्थविनिर्ण्णयोत्थो[3] यद् विष्णुरेव परमो मम चाब्जयोनेः ॥ १८३ ॥

अव्यक्ततः सकलजीवगणाच्च नित्य[4] इत्येव निश्चय उतैतदनुस्मरध्वम् ।
इत्युक्तवत्यखिलदेवगणा गिरीशे कृष्णं प्रणेमुरतिवृद्धरमेशभक्त्या ॥ १८४ ॥

**रुद्रहृदि गतं निजं रूपम् । रुद्रहृदि गतत्वाद् रुद्राभिधायकानेकशब्दाभिधेयमिति भावः । तत् स्तुति-वाक्यं निशम्य ॥ १८२ ॥ विष्णुः समस्तसुजनैः परमः सर्वोत्तम इति अभ्युपेयः ज्ञेयः । तत्प्राप्तये तज्ज्ञा-नाय । अभ्युपायाः समीचीनोपायाः । तज्ज्ञानसाधनसामग्रीसम्पादकत्वात् तज्ज्ञानेऽभ्युपायाः । 'मुक्तास्तु मानुषा देवान् देवा इन्द्रं स शङ्करम् । स ब्रह्माणं क्रमेणैव तेन यान्त्यखिला हरिम्' इति प्रवेशे द्वारत्वाच्चेति भावः । अशेषनिगमार्थविनिर्णयः निखिलवेदार्थ(विनिर्णयः । तेन उत्थः स्थापितः । मम सकाशात्)**

---

तवाङ्गसम्भूतौ तस्मात् केशवनामवान्'[८८.४८] इति, **'नमः सर्वात्मना देव विष्णो माधव केशव । नमस्करोमि सर्वात्मन् नमस्तेऽस्तु सदा हरे । नमः पुष्करनाभाय वन्दे त्वामहमीश्वर'**[८८.६७] इत्यादि च । **'नमो विष्णो नमो विष्णो नमो विष्णो नमो हरे । नमस्ते वासुदेवाय वासुदेवाय धीमते'**[९०–२७] इत्यादि च । परमस्य स्तुतिरपि परमैव भवितुमर्हतीत्याह– चक्रे स्तुतिं च परमां परमस्य ॥ १८१ ॥ तुष्टाव रुद्रहृदिगं निजमेव रूपम् । **'नमो हराय विप्राय नमो हरिहराय च । नमोऽघोराय घोराय घोरघोरप्रियाय च'** [८७.१७] इति, **'हराय हरिरूपाय नमस्ते तिग्मतेजसे । भक्तिप्रियाय भक्ताय भक्तानां वरदायिने'**[२१] इत्यादि च । सुरान् समस्तान्– **'हरिरेकः सदा ध्येयो भवद्भिः सत्वमास्थितैः । नान्यो जगति देवोऽस्ति विष्णोर्नारायणादृते । ओमित्येवं सदा विप्रा पठत ध्यात केशवम्'** [८९.९] इत्यादि ॥ १८२ ॥ तत्प्राप्तयेऽहम् । **'–ध्यात्वा मां ततो जानीत केशवम् । उपास्योऽहं सदा विप्रा उपास्योऽस्मिन् हरौ स्मृतः'**[८४.१४] इति शिववचनरहस्यमनेनोद्घाटितम् । ध्यात्वा मां शिवमित्यर्थः । अथच अहं अहङ्कारमानी शिवोऽहमुपास्यः । एवमहम्पदवाच्यजीवकलामानी अनिल उपास्यः । कुत्र? अस्मिन् हरौ । तदाश्रित-त्वेन । अः निलयनमस्येति अनिल उच्यते । एवमन्ते मां रमां ध्यात्वा हरिरुपेय इति विनिर्णयोत्थः शास्त्रसारः । अभी-ष्टदा उपाया अभ्युपायाः । हरेरभिमता उपाया अभ्युपायाः । साधकैरभीप्सिता उपाया अभ्युपायाः । शास्त्रेष्वभिहिता उपाया अभ्युपायाः ॥१८३॥ अव्यक्ततः सकलजीवगणाच्च नित्यः परमः । नित्यं परम इत्यर्थः । अथ च अव्यक्तं नित्यम् । ब्रह्मादिः

---

१. **'परमोऽभ्युपेय–'** । स एव वे.ती.सम्मतः पाठः ।
२. **'रमाऽभ्युपेयाः'** । **'रमा ह्युपेयाः'** इति क्वचित् ।
३. **'–निगमोत्थविनिर्ण्णयोऽर्थो यद्–'**
४. **'नित्यमित्येव'** । वे.ती. पाठोऽपि तथा ।

उक्तैरन्यैश्च गिरिशवाक्यैस्तत्वविनिर्ण्णयैः ।
कृष्णस्यैव गुणाख्यानैः पुनरिन्द्रादिदेवताः ॥ १८५ ॥

ज्ञानाभिवृद्धिमगमन् पुराऽपि ज्ञानिनोऽधिकम् ।
सर्वदेवोत्तमं तं हि जानन्त्येव सुराः सदा ॥ १८६ ॥

तथाऽपि तत्प्रमाणानां बहुत्वाद् येऽत्र[१] संशयाः ।
युक्तिमात्रे[२] तेऽपि रुद्रवाक्यादपगतास्तदा ॥ १८७ ॥

ततः कृष्णः सुतवरं त्वत्त आदास्य इत्यजः ।
यदुक्तवाञ्छिवं पूर्वं सत्यं कर्त्तुं तदब्रवीत् ॥ १८८ ॥

पुत्रं देहीति सोऽप्याह पूर्वमेव सुतस्तव ।
जातः प्रद्युम्ननामा यः स मद्दत्तः प्रवादतः ॥ १८९ ॥

**अब्जयोनेः, अव्यक्ततः लक्ष्म्याः, सकलजीवगणाच्च नित्यं संसारे मुक्तौ च विष्णुरेव परमः उत्तमः यत् यस्मात् तस्मात् 'विष्णुः समस्तसुजनैः परमोऽभ्युपेयः' इति पूर्वेण सम्बन्धः। इत्येव उक्तप्रकारेणैव (निश्चयः उत तस्मात् एतदनु)स्मरध्वम्। अन्वनु निरन्तरं स्मरध्वम्॥ १८३–५ ॥ 'पुराऽपि ज्ञानिनोऽधिकम्' इत्युक्तं विवृणोति–सर्वेति॥ १८६ ॥ तथाऽपि सर्वदेवोत्तमत्वज्ञाने सत्यपि। तत्प्रमाणानां तदुत्तमत्वप्रतिपादकप्रमाणानां बहुत्वात् नानाविधत्वात् । अत्र प्रमाणेषु युक्तिमात्रे विरोधपरिहारयुक्तिमात्रे ये संशयाः तेऽपि तदा रुद्रवाक्यादपगताः। एवं च युक्तिभिः प्रमाणैः तत्सर्वोत्तमत्वावधारणात् 'ज्ञानाभिवृद्धिमगमन्' इत्युक्तमिति भावः ॥ १८७ ॥ ततः रुद्रागमनानन्तरं। तत् सत्यं कर्तुम्, पुत्रं देहीति शिवमब्रवीत्॥ १८८–९ ॥**

---

सकलजीवगणश्च नित्यः । अयं तु ततोऽपि नित्यः । **'नित्यो नित्यानाम्–'** इत्यादेः । अव्यक्तादीनामपि नित्यताप्रदः । एतत् उत बाढमनुदिनं च शास्त्रानुगुणं स्मरध्वमात्मनो हिताय मोक्षान्ताय । अखिलदेवगणाः कृष्णं प्रणेमुः । **'हरे कुर्वति तत्रैवमञ्जलिं कुरुसत्तम । मुनयो देवगन्धर्वाः सिद्धाश्च सहकिन्नराः । अञ्जलिं चक्रिरे विष्णौ देवदेवेश्वरे हरौ'** [८८.१७] इति च । अतिगुणवृद्धे रमेशे अतिवृद्धया भक्त्या । कृष्णं रमेशत्वेनानुसन्धाय प्रणेमुरित्यर्थः ॥ १८४–८ ॥ प्रचुरो वादः प्रवादः । प्रकटो वादः प्रवादः । प्रसिद्धो वादः प्रवादः । लोकप्रसिद्धित

---

१. 'यत्र' २. 'युक्तिमात्रात्'

पुरा दग्धो मया कामस्तदाऽयाचत मां रतिः ।
देहि कान्तं ममेत्येव तदा तामहमब्रवम् ॥ १९० ॥

उत्पत्स्यते वासुदेवाद् यदा तं[१] पतिमाप्स्यसि ।
इत्यतोऽसौ मया दत्त इव देव त्वदाज्ञया ॥ १९१ ॥

दासोऽस्मि तव देवेश पाहि मां शरणागतम् ।
इत्युक्त्वाऽभिप्रणम्यैनं पुनराह सुरान् हरः ॥ १९२ ॥

यदर्थमेष आयातः केशवः शृणुतामराः ।
योऽसुरो वक्रनामाऽऽसीदवद्ध्यो ब्रह्मणो वरात् ॥ १९३ ॥

तदाजाताद् वासुदेवपुत्रात् कामादृते क्वचित् ।
तं हन्तुमेव पुत्रं स्वं प्रद्युम्नमुदरेऽर्प्य च ॥ १९४ ॥

आयात इह तं चापि ददाह स्वोदरात् सुतम् ।
निस्सारयित्वा कक्षं च दग्धं पश्यत देवताः ॥ १९५ ॥

ज्वालामालाकराळेन[२] स्वतेजोवर्द्धितेन च ।
प्रद्युम्नेनैव तं दैत्यं दग्ध्वा वनसमन्वितम् ॥ १९६ ॥

**प्रवादतो मद्दत्त इत्युक्तमेव विवृणोति– पुरेत्यादिना । तदा अहं तामित्यब्रवमिति सम्बन्धः । एवं वचनेऽपि न मे स्वातन्त्र्यमित्याह– त्वदाज्ञयेति ॥ १९०–५ ॥ ज्लालामालाकराळेन (दावानल)ज्वालामालाकराळेन**

---

इत्यर्थः ॥ १८९–९० ॥ **'पुत्रो दत्तो मया देव पूर्वमेव जगत्पते'** [८८.५], **'ज्येष्ठस्तव सुतो देव प्रद्युम्नेत्यभि-विश्रुतः'** [१३] इति च ॥ १९१–२ ॥ इदानीं भारतगां कथामाह– यदर्थमेष आयातः । अनुशासनपर्वणि– **'असुरः साम्प्रतं कश्चिदहितो लोकनाशनः'** [२०३.३१] इत्यादिना सङ्क्षिप्योक्तमेतत् । तदा यदाऽसुरसंहारस्तदैव सद्योजातात् ॥ १९३–४ ॥ कक्षं वनम् । यत्र वक्रनामाऽसुरो बभूव । वक्ष्यति हि–**'तं दैत्यं दग्ध्वा वनसमन्वितम्'** इति । **'कक्षोऽरण्ये च वीरुधि'** इत्यभिधानम् ॥ १९५–७ ॥

---

१. 'यदा त्वं पति–' । 'तदा त्वं पति–' इति क्वचित् ।
२. '–करालेन'

पुनश्च स्वोदरे पुत्रं[1] स्थापयामास केशवः ।
सद्योगर्भं पुनस्तं च रुग्मिण्यां[2] जनयिष्यति ॥ १९७ ॥

पूर्ववत् क्षणमात्रेण युवा च स भविष्यति ।
दृष्टमेतन्नारदाद्यैर्म्मुनिभिः सर्वमेव च ॥ १९८ ॥

एवं क्रीडत्ययं देवः पूर्ण्णैश्वर्य्येण केवलम् ।
इत्युक्ते केशवं नेमुर्द्देवाः शक्रपुरोगमाः ॥ १९९ ॥

ततो हरिर्ब्रह्मसुरेन्द्रमुख्यैः सुरैः स्तुतो गरुडस्कन्धसंस्थः ।
पुनःपुनः प्रणतः शङ्करेण स्तुतस्तृतीयेऽह्नि निजां पुरीमगात् ॥ २०० ॥

कृष्णे प्रयाते निलयं पुरद्विषो रात्रौ पौण्ड्रो वासुदेवः समागात् ।
सहैकलव्येन निजेन मातुः पित्रा तथाऽक्षोहिणिकत्रयेण[3] ॥ २०१ ॥

**स्वतेजोवर्द्धितेन च स्वतेजसा उपचितेन च ॥ १९६–७ ॥ एतत् वक्रासुरहननादिकम् ॥ १९८–९ ॥ तृतीयेऽह्नि द्वारकानिर्गमनात् तृतीये दिवसे ॥ २०० ॥ पुरद्विषः पुरारेः ॥ २०१–२ ॥**

---

पूर्ववत्, पूर्वं यावद्वया आसीत् तावद्वया युवा क्षणमात्रेण भविष्यति । मुनिभिश्च दृष्टमेव, चकाराद् देवैश्च । मुनिभिरेव दृष्टम् । न तत्रत्यैर्मानुषैः ॥ १९८–९ ॥ गरुडस्कन्धे स्थितः सञ्चरतीति संस्थः । अथच गरुडस्य स्कन्धे काये संस्थः अन्तः प्रविश्य स्थितः । बहिर्गरुडोऽमुमुवाह । अन्तरयमेव गरुडमप्युवाहेत्यर्थः । **'स्कन्धः प्रकाण्डे कायेंऽसे'** इत्यभिधानम् । कन्धया कन्धरया सह भवतीति स्कन्धः । वैयाकरणास्तु स्कन्दतीति स्कन्ध इति स्कन्देर्धातोर्धोऽन्तादेश इति वदन्ति । **'लोक एवं विजानाति गरुडो वहतेऽच्युतम् । भूत्वा वेगेन गरुडो वहाम्यात्मानमात्मना'** [१२५.३०] इति वाराहे ॥ २०० ॥ त्रिपुरद्विषो निलयं कैसालम् । पौण्ड्रो वासुदेवः । अयमपि पुत्रिकापुत्रधर्मेण वसुदेवाज्जातः । कस्यचित् काशीशस्य तनया सुतनुर्यस्य माता । कथं पौण्ड्रः । पुण्ड्रा नाम जनपदाः । यत्र पाकेन गुळस्य शर्कराया वा निर्माणं व्यवसायः । पुण्ड्रविषयस्याप्ययं प्रभुरासीदिति पौण्ड्र उच्यते । निजेन स्वभावसाम्यादात्मीयेन एकलव्येन । निजेन मातुः पित्रा काशिराजेन च सह । तथा निजेन कृष्णद्वेषकुत्सितेन अक्षोहिणीत्रयेण च सह द्वारकां प्रति सङ्ग्रामेच्छुरागात् । अक्षोहिणीति सेनाविशेषस्य सञ्ज्ञेति ह्रस्वत्वम् । काशिराज इति यथा ॥ २०१ ॥

---

१. **'पुनश्च पुत्रमुदरे स्थाप–'** इति क्वचित् । २. **'रुक्मिण्याम्'** ३. **'तथाऽक्षौहिणीकत्रयेण'**

पुरीं प्रभञ्जन्तममुं विदित्वा सरामशैनेययदुप्रवीराः ।
संयोधयामासुरथाभ्यवर्षच्छरैर्निषादाधिप एकलव्यः ॥ २०२ ॥

तदस्त्रशस्त्रैः सहसा विषण्णा यदुप्रवीरा विहतप्रदीपाः[१] ।
सहैव रामेण शिनेश्च नप्त्रा समाविशन् स्वां पुरमेव सर्वे ॥ २०३ ॥

पुनः समादाय तथोरुदीपिका अग्रे समाधाय च रौहिणेयम् ।
विनिस्सृता आत्तशस्त्राः स्वपुर्य्याः सिंहा यथा धर्षिताः सद्गुहायाः ॥ २०४ ॥

अथाऽससादैकलव्यं रथेन रामः शैनेयः पौण्ड्रकं वासुदेवम् ।
अयुद्ध्यतां तौ सात्यकिः पौण्ड्रकश्च[२] तथाऽन्योन्यं विरथं चक्रतुश्च ॥ २०५ ॥

ततो गदायुद्धमभूत् तयोर्द्वयोस्तथा रामश्चैकलव्यश्च वीरौ ।
कृत्वाऽन्योन्यं विरथं[३] गदाभ्यामयुद्ध्यतां जातदर्प्पौ बलाग्र्यौ ॥ २०६ ॥

तस्मिन् काले केशवो वैनतेयमारुँह्याऽयाद् यत्र ते युद्धसंस्थाः ।
दृष्ट्वा कृष्णं हर्षसम्पूरितात्मा रामो हन्तुं चैकलव्यं समैच्छत् ॥ २०७ ॥

**नप्त्रा पौत्रेण, सात्यकिनेत्यर्थः ॥ २०३–८ ॥**

---

सरामशैनेयाः यदुप्रवीराः । बलभद्रसात्यकिनेतृकाः । सङ्गरभूमिं समेत्य योधयामासुः । अथ तैः पीडितायां पौण्ड्रकसेनायाम् । शरैः यदुप्रवीरान् अभ्यवर्षत् अभितः क्लेशयामास । नहि सेचनमिह वर्षणम् । तदा शरानभ्यवर्षदित्यवक्ष्यत् । वृषु सेचनहिंसाक्लेशनेषु ॥ २०२ ॥ न पतन्ति पितरोऽनेनेति नप्ता पौत्रः । अन्ये त्वाहुः– **'नयतेरीकारस्य अकारो निपात्यते पुगागमश्च । नमतेरन्त्यस्य पकारो वा । नयति नमति वा नप्ता पौत्रो दौहित्रश्च'** [द.पा.वृ.२.३] इति । रणसम्मर्देन विहतोल्काः । शत्रवः स्वेषां स्थितिं जानीयुरिति विनाशितोल्का वा । रणाङ्गणात् स्वां पुरमेव समूह्य आविशन् ॥ २०३ ॥ उरुदीपिका दीपाटिकाः । 'ದೀವಟಿಗೆ' इति भाषायाम् । धर्षिता उद्दीपितगर्वाः । यादवाः पौण्ड्रकसेनादुर्वचोभिः । सिंहा अशिवैः शिवारुतैः । सुरक्षिता अहितवारणदक्षा गुहा सद्गुहा । सतां गूहनाद् यदूनां पुरी च सद्गुहा ॥ २०४ ॥ तौ पूर्वप्रस्तुतौ । पूर्वं चत्वारः प्रस्तुताः । तत्र काविमौ द्वौ? आह– सात्यकिः पौण्ड्रकश्च ॥ २०५ ॥ तयोर्द्वयोः सात्यकिपौण्ड्रकयोः ॥ २०६ ॥ युद्धे सम्यक् तन्मयतया स्थिताः । युद्धमग्नाः । हर्षेण निर्भरतया पूरितात्मा । एकलव्यं

---

१. **'विगतप्रदीपाः'**
२. **'तौ पौण्ड्रकः सात्यकिश्च'** इति क्वचित् ।
३. **'विरथं तौ गदाभ्या–'**

उद्यम्य दोर्भ्यां स गदां जवेनैवाभ्यापतद्[१] रौहिणेयो निषादम् ।
बलं कोपं चास्य दृष्ट्वैकलव्यः पराद्रवज्जीवितेच्छुः[२] सुदूरम् ॥ २०८ ॥

विद्रावयन् रौहिणेयोऽन्वयात् तं भीतोऽपतच्चैकलव्योऽम्बुधौ सः ।
वेलान्तं तं द्रावयित्वाऽत्र तस्थौ रामो गदापाणिरदीनसत्त्वः ॥ २०९ ॥

सुपापोऽसावेकलव्यः सुभीतो रामं मत्वैवानुयातं[३] पुनश्च ।
समुद्रेऽशीतिं योजनानामतीत्य पश्चादैक्षद् द्वीपमेवाधिरुँह्य ॥ २१० ॥

रामो विजित्यातिबलं रणे रिपुं मुदैव दामोदरमाससाद ।
पौण्ड्रस्त्ववज्ञाय शिनिप्रवीरं निवार्य्यमाणोऽपि ययौ[४] जनार्दनम् ॥ २११ ॥

तं केशवो विरथं व्यायुधं च क्षणेन चक्रे स ययौ निजां पुरीम् ।
प्रस्थापयामास पुनश्च दूतं कृष्णायैको वासुदेवोऽहमस्मि ॥ २१२ ॥

**अदीनसत्त्वः (अहीनपौरुषः) ॥ २०९ ॥ अतीत्यैव पश्चात् पृष्ठतः ॥ २१०–१ ॥ पुनः स्वपुरीगमनानन्तरम् । एकः अद्वितीयः । अहमेव वासुदेवो नान्य इत्यभिप्रायः ॥ २१२ ॥**

---

च । नीचमेकलव्यम् । समैच्छत् । निर्धारणपूर्वकमैच्छत्, समुचितमैच्छत् ॥ २०७ ॥ यांयां दिशमभिधावति तान्तान्दिशमभितो रौहिणेयमेव ददर्शेति अभ्यापतदित्याह । बलं बलभद्रम्, अस्य कोपं च दृष्ट्वा । ननु कोपो नाम कश्चन मानसो विकारः । स कथं दृश्यते । मनोविकारजो मुखविकारो दृश्यते । यो भ्रुकुटीबन्धः, यच्च लौहित्यमक्ष्णोः, यश्च ललाटसङ्कोचः । तेन कोपकार्यदर्शनेन कोपं दृष्ट्वेत्याह । अस्य बलभद्रस्य बाहुबलं कोपं च दृष्ट्वेति वा । अत एव सुभीत इति वक्ष्यति । अत एव सुदूरं पराद्रवत् ॥ २०८ ॥ अत्र वेलायाम् । अदीनं अप्रतिहतं निर्भयं च सत्त्वं पौरुषमस्य । **'दीना स्त्री मूषिकास्त्रियाम् । वाच्यवद् दुर्गते भीते'** इत्यभिधानम् ॥ २०९ ॥ मत्वा भ्रमित्वा । अनवस्थितमनाः कायतोऽप्यनवस्थितो भवति । **'किञ्चिद् द्वीपान्तरं राजन् प्रविश्य न्यवसत् तदा'** [ह.वं.भ.प.१०२.७] इति च ॥ २१०–११ ॥ भागवते श्रूयते बलभद्रसात्यकिनिर्जितः पौण्ड्रकः शर्वर्यामेव वाराणसीं जगाम । परेद्यवि प्रभाते कृष्ण आगत इति । हरिवंशे तु वाराणसीगमनं नोच्यते । कृष्णागमनानन्तरं सात्यकिं विहाय कृष्णेन युयुधे पौण्ड्रक इति चोच्यते । तमेतं पुराणशैलीभेदं व्यत्यासाख्यं समन्वीय उभयसङ्गतां कथामाह– तं केशव इत्यादिना । अहमेव वसुदेवात्

---

१. **'जवेन यदाऽपतद्–'**
२. **'–ज्जीवितेप्सुः'** इति क्वचित् ।
३. **'–यान्तम्'**
४. **'–माणोऽभिययौ'**

**मदीयलिङ्गानि विसृज्य चाऽशु समागच्छेथाः शरणं मामनन्तम् ।**
**तद्दूतोक्तं वाक्यमेतन्निशम्य यदुप्रवीरा उच्चकैः प्राहसन् स्म ॥ २१३ ॥**

**कृष्णः प्रहस्याऽह तवाऽयुधानि दास्याम्यहं[1] लिङ्गभूतानि चाऽजौ ।**
**इत्युक्तोऽसौ दूत एत्याऽह तस्मै स चाभ्यागाद्[2] योद्धुकामो हरिश्च ॥ २१४ ॥**

**तं शातकौम्भे गरुडे रथस्थे स्थितं चक्रादीन् कृत्रिमान् सन्दधानम् ।**
**श्रीवत्सार्थे दग्धवक्षस्थलं च दृष्ट्वा कृष्णः प्राहसत् पापबुद्धिम् ॥ २१५ ॥**

**ततोऽस्त्रशस्त्राण्यभिवर्षमाणं विजित्य तं वासुदेवोऽरिणैव ।**
**चकर्त्त तत्कन्धरं तस्य चानु मातामहस्याच्छिनत् सायकेन ॥ २१६ ॥**

**मां शरणं समागच्छेथाः, इत्युक्त्वा दूतं प्रस्थापयामास इति सम्बन्धः । दूतोक्तं तत् एतत् वाक्यम् ॥२१३॥ हरिश्च अभ्यगात् ॥ २१४–२१ ॥**

---

पूर्वजात इत्येको मुख्यो वासुदेवः । अहमेव च वासुदेवाख्यं परं ब्रह्माऽस्मि ॥ २१२ ॥ मदीयानि लिङ्गानि चिह्नानि चक्रादीन्यायुधानि श्रीवत्सकौस्तुभवनमालादीनि भूषणानि गरुडवाहनत्वं च । तेन अहमेवानन्तः नाशविधुरः, नारायणांशसम्भूतश्च, न त्वम् । परस्य बालिश्यप्रकाशको हासः प्रहासः । किमतोऽधिकं प्रहसनं नाम । तस्य पौण्ड्रकस्य दूतेनोक्तमेतद् वाक्यम् । दूतोक्तं तदेतद् वाक्यं वा । **'दृष्ट्वा तमात्मना तुल्यं कृत्रिमं वेषमास्थितम् । यथा नटं रङ्गगतं विजहास भृशं हरिः'** [१०.६९.२८] इति भागवते ॥ २१३ ॥ स चाभ्यागाद् पुराद् रणभूमिम् । हरिश्चाभ्यागात् वाराणसीम् । **'कृष्णोऽपि रथमारुह्य प्रायात् काशीं ससनैनिकः । पौण्ड्रकोऽपि तदुद्योगमुपलभ्य महारथः । अक्षोहिणीभिः सहितो निश्चक्राम पुराद् द्रुतम्'** [६९.२३–४] इति च ॥ २१४ ॥ शतकुम्भे गिरौ भवं शातकौम्भं काञ्चनम् । शातकौम्भस्यायं शातकौम्भः काञ्चनमयो गरुडः । **'आनुशतिकादीनां च'** [अ.सू.७.३.२०] इत्यनेन शतपदस्य कुम्भपदस्य चाऽदेरचः स्थाने वृद्धिः । **'तमायान्तं रथोपस्थे सुवर्णगरुडे स्थितम्'** [६९.२५] इति च ॥२१५॥ तत्कन्धरम् । यद्यपि **'कन्धरो वारिवाहे स्यात्, ग्रीवायां कन्धरा मता'** इति कोशकारा मन्यन्ते । कं जलस्य धरः कन्धरो मेघः । कं शिरसो धरा कन्धरा ग्रीवेति । सत्यं कन्धरा ग्रीवा । कण्ठस्तु कन्धरो भवति । ग्रीवाग्रं कण्ठमाहुः । ग्रीवाग्रं कन्धरं भवति । तेन कन्धरः कन्धरा कन्धरमिति त्रिलिङ्गं पदमिति सूक्तम् । तदनु तस्य पौण्ड्रकस्य यो मातामहस्तस्य कन्धरमच्छिनत् । तस्य माता सुतनुर्वसुदेवभार्याऽसीत् । तेन सा कृष्णस्यापि माता, काशीश्वरश्च मातामहो भवति लोकदृष्ट्या । तमेतमर्थं **'तस्य मातामहस्य'** इति सूचयतीव ॥ २१६ ॥

---

१. **'दातास्म्यहम्'** २. **'चाभ्यगाद्–'** । वे.ती. पाठोऽपि तथा स्यात् ।

**अपातयच्चाऽशु शिरः स तेन काशीश्वरस्येश्वरो [1]वारणस्याम् ।
स च ब्रह्माहं वासुदेवोऽस्मि नित्यमिति ज्ञानादगमत् तत् तमोऽन्धम् ॥ २१७ ॥**

**साहाय्यकृच्चास्य च काशिराजो यथैव किर्म्मीरहिडिम्बसाल्वाः ।
अन्ये च दैत्या अपतंस्तमोऽन्धे[2] तथैव सोऽप्यपतत् पापबुद्धिः ॥ २१८ ॥**

**निहत्य तौ केशवो रौग्मिणेयं[3] पुनर्वैदर्भ्यां जनयामास सद्यः ।
स चैकलव्यो रामजितः शिवाय[4] चक्रे तपोऽजेयतां चाऽप तस्मात् ॥ २१९ ॥**

**स शर्वदत्तेन वरेण दृप्तः पुनर्योद्धुं कृष्णमेवाऽससाद ।
तस्यास्त्रशस्त्राणि निवार्य्य केशवश्चक्रेण चक्रे तमपास्तकन्धरम् ॥ २२० ॥**

**स चाऽप पापस्तम एव घोरं कृष्णद्वेषान्नित्यदुःखात्मकं तत् ।
एवं यदूनामृषभेण सूदिते पौण्ड्रे तथा काशिनृपे[5] च पापे ॥ २२१ ॥**

**काशीशपुत्रस्तु सुदक्षिणाख्यस्तपोऽचरच्छङ्करायोरुभक्त्या ।
प्रत्यक्षगं तं शिवं पापबुद्धिः कृष्णाभावं याचते दुष्टचेताः ॥ २२२ ॥**

**कृष्णाभावम्, वरमिति शेषः ॥ २२२ ॥**

---

तेन सायकेनैव सर्वेश्वरोऽयं कृष्णः काशीश्वरस्य तच्छिरः वारणस्यामपातयच्च । काश्यां स्थितस्येश्वरस्य शिवस्याप्ययमीश्वरो हि । तस्य कियानयं जीर्णकूर्चः काशिराजः? **'ततः काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः । न्यपातयत् काशिपुर्यां पद्मकोशमिवानिलः'** [६९.३७] इति च । वारणस्याम् । वरणेत्यसीति च नदीद्वयं काशीं परितः प्रवहति । अतः वरणासीत्युच्यते । तामेतां वरणासीं सतीं वरणसीति वराणसीति वाराणसीति वाराणासीति वारणासीति वारणसीति बहुधा व्याहरन्ति परोक्षप्रिया विबुधाः । मुक्तिवारणानि दुरितानि स्यतीति च वारणसी । स च पौण्ड्रकश्च ॥२१७॥ अस्य साहाय्यकृच्च मातामहः काशिराजश्च । नीचस्तामसः काशिराजः । नीचत्वे चः । अन्ये च नरकबकाद्याः । तमसाऽन्धं तमोऽन्धमन्धन्तमः । पापबुद्धिः हेतुगर्भम् । पापबुद्धित्वादपतत् । पापे बुद्धिरस्य । पापा चास्य बुद्धिः ॥ २१८ ॥ शिवाय तदनुग्रहाय, ततो वरलाभाय ॥ २१९–२० ॥ यथा काशिराजस्तथा स च ॥ २२१ ॥ काशीशपुत्रः पौण्ड्रकस्य मातुलः । मातृशब्दाद् भ्रातर्यभिधेये डुलजिति वैयाकरणाः । पुत्रस्तु इति तुना सोऽपि भागिनेय इव पितेव पापतम

---

१. **'वारणास्याम्'** २. **'तमोऽन्धं तथैव'** ३. **'रौक्मिणेयम्'**
४. **'शिवस्य चक्रे'** इति क्वचित् । ५. **'काशिराजे च'**

कृत्यामस्मै दक्षिणाग्नौ शिवोऽपि दैत्यावेशाददादावृतात्मा ।
स दक्षिणाग्निश्चासुरावेशयुक्तः सम्पूजितः काशिराजात्मजेन ॥ २२३ ॥

वरादुमेशस्य विवृद्धशक्तिर्य्ययौ कृष्णो यत्र सम्पूर्णशक्तिः ।
कृष्णस्तस्य प्रतिघातार्थमुग्रं समादिशच्चक्रमनन्तवीर्य्यः ॥ २२४ ॥

जाज्वल्यमानं तदमोघवीर्य्यं व्यद्रावयद् वह्निमिमं सुदूरम् ।
कृत्यात्मको वह्निरसौ प्रधानवह्नेः पुत्रश्चक्रविद्रावितोऽथ ॥ २२५ ॥

सहानुबन्धं च सुदक्षिणं तं भस्मीचकाराऽशु सपुत्रभार्य्यम् ।
दग्ध्वा पुरीं वारणसीं सुदर्शनः[१] पुनः पाश्र्वं वासुदेवस्य चाऽगात् ।
सुदक्षिणोऽसौ तम एव जग्मिवान् कृष्णद्वेषात् सानुबन्धः सुपापः ॥ २२६ ॥

**दक्षिणाग्नौ कृत्याम्, उत्पाद्येति शेषः । दैत्यावेशात् कारणात् आवृतात्मा मिथ्याज्ञानेनाऽवृतमनाः ॥ २२३–६ ॥**

---

एवाऽसीदित्याह । न केवलं पापधिषणः, तस्य चित्तमेव, अन्ततः स्वरूपचैतन्यमेव पापकलुषमित्याह– दुष्टचेता इति । नन्वयं काशीशः स्वयमपुत्र आसीत् । अतः स्वतनयायां वसुदेवाज्जातं पुत्रं पौण्ड्रकं पुत्रिकापुत्रधर्मेण स्वीकृत्य पुत्रत्वेन पालयामास । तदेतदुक्तं द्वादशाध्याये–**'राज्ञश्च काशिप्रभवस्य कन्यकां स पुत्रिकापुत्रकधर्मतोऽवहत्'** [१२.७] इति । तत् कथमपुत्रस्य काशीशस्य सम्प्रत्यकस्मात् सुदक्षिणः पुत्रो बभूव? मा स्म सम्भ्रमद् भवान् । यदा पौण्ड्रको जात-स्तदा त्वपुत्र एवाऽसीदयम् । ततः काशिभार्या सुदक्षिणमसूत । ततश्च काशिराजस्य पौण्ड्रे पुत्रभावः क्रमेणाहीयत । स दौहित्र एव बभूव । अत एव भगवत्पादः पौण्ड्रकस्य मातामहमाह, न पितरम्–**'निजेन मातुः पित्रा'** [२०१] इति, **'तस्य चानु मातामहस्य'** [२१६] इति । अत एव न तस्य स्वराज्ये भागं ददौ । प्रायः स्वश्वशुरस्य पुण्ड्राधिपस्योत्तराधि-कारिणं चक्रे । तेन तं पौण्ड्रकमाहुः । न काश्यम् ॥ २२२ ॥ कृत्यतेऽनयेति कृत्या शत्रुसंहननशक्तिः, देवता वा । कृती च्छेदने । दक्षिणाग्नौ सन्निहितां तां । कृष्णाभावं याचमानस्य वरं ददौ । न शापम् । तदेतदहो दैत्यावेशं गमयतीत्याह– दैत्यावेशादावृतात्मा । आवृतमनाः, आवृतस्वरूपः, आवृतभगवत्स्वरूपश्च । सम्पूजितः सादरं पूजितः । तेन दुष्टपूजास्वीकारेण स्वयमपि दुष्टमना बभूव ॥ २२३ ॥ कृत्यायोगेन वृद्धशक्तिः । वरादुमेशस्य विवृद्धशक्तिः । एवमाहितशक्तिः सः । सम्पूर्णशक्तिश्च कृष्णः । निरवधिकत्वं शक्तेः सम्पदार्थः । यत्र कृष्णस्तां द्वारकां ययौ ॥ २२४ ॥ तत् अनन्तवीर्येण प्रहितममोघवीर्यं चक्रम् । अत एवाद्यापि कृत्यानिवारणाय सुदर्शनमन्त्रेण जुह्वति । अथ चक्रेण विद्रावणानन्तरम् ॥२२५॥ स्वयमकृतकृत्यः स कृत्याग्निः पूर्वं येन सम्पूज्य प्रेषितस्तं सुदक्षिणमेव सहानुबन्धं भस्मीचकार । **'सुदर्शनोऽस्त्रियां चक्रे'**

---

१. 'वारणासीं सुदर्शनं पुनः'

कृष्णः क्रीडन् द्वारवत्यां सुपूर्णनित्यानन्दः क्वचिदाह स्म भैष्मीम् ।
विडम्बयन् गृहिणामेव चेष्टा[१] नित्याविरोधोऽपि तया विदोषया ॥ २२७ ॥

त्वया न कार्य्यं मम किञ्च भद्रे मयाऽरीणां मानभङ्गार्थमेव ।
समाहृताऽसीति सा चावियोगं सदा कृष्णेनाऽत्मनोऽप्येव वेत्री ॥ २२८ ॥

स्त्रिया भेतव्यं भर्त्तुरित्येव धर्म्मं विज्ञापयन्ती दुःखितेवाऽस देवी ।
तां सान्त्वयामास गृहस्थधर्म्मं विज्ञापयन् देवदेवोऽप्यदुःखाम् ॥ २२९ ॥

एवं क्रीडत्यब्जनाभे रमायां कृष्णादिष्टो गोकुलं रौहिणेयः ।
प्रायाद् दृष्ट्वा तत्र नन्दं यशोदां[२] तत्पूजितः[३] कृष्णवार्त्तां च पृष्टः ॥ २३० ॥

मासौ तत्र न्यवसद् गोपिकाभी रेमे क्षीबो यमुनामाह्वयच्च ।
मत्तोऽयमित्येव नदीमनागतां चकर्ष रामो लाङ्गलेनाग्र्यवीर्य्यः ॥ २३१ ॥

पुनस्तया प्रणतः[४] संस्तुतश्च व्यसर्ज्जयत् तामथ नन्दगोपम् ।
आपृच्छ्य[५] चागाद् द्वारकां केशवाय न्यवेदयन्नन्दगोपादिभक्तिम् ॥ २३२ ॥

**क्वचित् कदाचित् । विडम्बयन्नेव ॥ २२७ ॥ आत्मनः सदा कृष्णेन अवियोगमेव वेत्त्री अपि ॥२२८॥ अदुःखामपि ॥ २२९–३० ॥ क्षीबः मत्तः ॥ २३१–२ ॥**

---

इति नामनिधानम् । सुदक्षिणं सानुबन्धं ददाह । स्वयं कृतापराधत्वात्, अपराधकरणे सहकाराच्चानुबन्धानाम् । तामसत्वाच्च । केवलं पुरीं ददाह । न पुरगानपि । नहि राज्ञि कृतागसि प्रजाः शिक्षामर्हन्ति । अनुबध्नन्ति, अनुबध्यन्ते वा अनुबन्धा अनुयायिनः ॥ २२६ ॥ सावधिकं निरवधिकं चेति द्विविधं पूर्णत्वम् । मुक्तेषु सावधिकम् । भगवति तु निरवधिकं तदित्याह– सुपूर्णेति ॥ २२७ ॥ किञ्च किमपि । कृष्णेनाऽत्मनः सदैव अवियोगं वेत्त्री सत्यपि ॥ २२८–९ ॥ पृष्टः नन्देन यशोदया, गोपैश्च गोपिकाभिश्च ॥ २३० ॥ **'द्वौ मासौ तत्र चावात्सीत् मधुं माधवमेव च'**[१०.८८.१७] इति च भागवते । क्षीबृ मदे । क्षीबत इति क्षीबः पानमत्तः । क्षत्रियाणामनुमतं हि सुरापानम् । ततो न धर्मलोपः ॥ २३१ ॥ प्रश्रयान्नतः । शेषोऽयमिति संस्तवेन स्तुतश्च । **'यस्यैकांशेन विधृता जगती जगतां पते'**

---

१. **'चेष्टाम्'** इति क्वचित् । २. **'दृष्ट्वा नन्दगोपं यशोदाम्'** इति क्वचित् । ३. **'सम्पूजितः'** इति क्वचित् ।
४. **'तया पुनः प्रणतः'** इति क्वचित् । ५ **'आपूज्य'** इति क्वचित् पठ्यते । **'आपृच्छ्यागात्'** इति क्वचित् ।

तदैव मैन्दो विविदश्च भौमे हते सखायौ[१] दानवावेशयुक्तौ ।
आनर्त्तराष्ट्रं वासुदेवप्रतीपौ व्यनाशयेतां वासुदेवोऽथ चोचे ॥ २३३ ॥

रामाय सोऽदाद् वरमब्जनाभो वद्ध्यावेतौ भवतां तेऽप्यवद्ध्यौ ।
वराद् विरिञ्चस्य तथाऽमृताशनादुभौ च मैन्दो विविदो व्रजेति[२] ॥ २३४ ॥

गत्वा स मैन्दं प्रथमं जघान क्रोधात् युद्धायाऽगतं रैवताग्रे ।
दिने परस्मिन् विविदं जघान शिला वर्षन्तं मुसलेनाग्र्यकर्म्मा ॥ २३५ ॥

तयोराविष्टौ तावसुरौ तमोऽन्धं प्राप्तौ च तावश्विनौ स्वं च लोकम् ।
दुर्य्योधनस्याऽस पुत्री रतिर्य्या पूर्वं नाम्ना लक्षणा कान्तरूपा ॥ २३६ ॥

स्वयम्बरस्थां[३] तां बलादेव साम्बो जग्राह सा चैनमासानुरक्ता ।
बलाद् गृहीतां वीक्ष्य तां कर्ण्णमुख्या दुर्य्योधनाद्या युयुधुः क्रोधदीप्ताः ॥ २३७ ॥

**दानवावेशयुक्तौ, अत एव वासुदेवप्रतीपौ (मैन्दो विवि)दश्च सखायौ । भौमे हते । निमित्तसप्तमीयम् ॥ २३३ ॥ व्रजेति ऊचे, राममिति शेषः ॥ २३४–५ ॥ राममाहात्म्यप्रसङ्गात् साम्बमोचनादिराम-महिमानं वक्तुं तदुपयुक्तां स्वयंवरकथामाह– दुर्योधनस्येत्यादिना । पूर्वं रतिः, अत्र नाम्ना लक्षणा, दुर्योधनस्य या पुत्री आस ॥ २३६–७ ॥**

[१०.८८.२८] इति च ॥ २३२ ॥ भौमे नरके हते । तस्य सखायौ । आनर्तानां राष्ट्रं द्वारकाम्, यत्र हरिरास्ते । दानवावेशयुक्तौ । यथा सुग्रीवस्य कर्णत्वेऽसुरावेशेन प्राप्तमधिकं पुण्यमहीयत, एवमनयोरपि रामस्याधिकसेवनात् प्राप्त-मधिकं पुण्यमसुरावेशेन कृष्णं विरुध्याहीयतेत्यर्थः । अथ तस्माद् अब्जनाभः स वासुदेवः रामाय वरमदात्, दत्वा चोचे । किमिति? विरिञ्चस्य वरात्, तथा अमृतस्याशनात्, मैन्दविविदभाव एव, मैन्दो विविद इत्युभावपि अवध्यौ । एवं सकलैरवध्यावप्येतौ मम वरबलात् ते वध्यौ भवतामिति । एवं वरं दत्वा तं हन्तुं व्रजेति चोचे । केवलं गमनं व्रजनम् । गन्तव्यमितीष्वा गमनं व्रजनम् । कार्यविशेषसम्पिपादयिषया गमनं व्रजनम् ॥ २३३–४ ॥ क्रोधाद् युद्धायाऽगतं मैन्दं क्रोधादेव प्रथमं जघान मुसलेन । भागवते विविदवध एव कथितः । अतः मैन्दकथामप्यत्र सञ्जग्राह ॥ २३५ ॥ पूर्वं मूलरूपे या रतिः सेदानीं दुर्योधनस्य पुत्री नाम्ना लक्षणाऽऽस नाम्ना न केवलम् । किन्त्वर्थतश्चेत्याह– कान्त-रूपा ॥ २३६ ॥ बलाद् दुर्योधनपक्षीयानानादृत्यैव । अथापि प्रणयबलादेव । नाप्येककोटिकः प्रणयः । साऽप्येनम-

१. **'सखाये दान–'** २. **'व्रजेति'** । वे.ती. पाठोऽपि तथा । ३. **'स्वयंवरस्थाम्'**

कृच्छ्रेण तं विरथीकृत्य चैकं सर्वे समेता जगृहुर्द्धार्त्तराष्ट्राः ।
कर्ण्णेन भूरिश्रवसा च सार्द्धं बाह्वोर्बलादेव दुर्य्योधनस्य[1] ॥ २३८ ॥

श्रुत्वैव तद्[2] वृष्णयः सर्व एव समुद्यमं चक्रिरे कौरवेषु ।
निवार्य्य तान् बलभद्रः स्वयं ययौ सहोद्धवः कौरवेयाञ्छमार्त्थी ॥ २३९ ॥

पुरस्य बाह्योपवने स्थितः स [3]प्रास्थापयच्चोद्धवं कौरवार्त्थे ।
आगत्य सर्वे कुरवोऽस्य पूजां चक्रुः स चाऽहोग्रसेनस्य चाऽज्ञाम् ॥ २४० ॥

आज्ञापयद् वो नृपतिः स्म यन्नः[4] कुमारकः प्रगृहीतो भवद्भिः ।
एकः समेतैर्बहुभिर्बान्धवार्त्थं क्षान्तं तन्नो मुञ्चताऽश्वेव साम्बम् ॥ २४१ ॥

आज्ञापयामास व उग्रसेन इत्युक्तमेव तु निशम्य कुरुप्रवीराः ।
संश्राव्य दुष्टवचनानि बलं पुरं स्वं क्रोधात् समाविविशुरत्र चुकोप रामः ॥ २४२ ॥

**एकं च असहायं च ॥ २३८ ॥ शमार्थी सन्धानार्थी बलभद्रः ॥ २३९–४० ॥ नः नृपतिः उग्रसेनः । वः इत्याज्ञापयत् । उग्रसेनाज्ञामाह– कुमारकः प्रगृहीत इति यत् तत् कुमारग्रहणम् ॥ २४१ ॥ क्रोधात् बलं दुष्टवचनानि संश्राव्य ॥ २४२ ॥**

---

नुरक्तैवाऽस । कर्णमुख्याः कर्णं पुरोधाय । क्रोधेन तपन्त इव परन्तपाः ॥ २३७ ॥ अथ समेता अपि कर्णभूरिश्रवसोः सहायेन, दुर्योधनस्य बाह्वोर्बलमाश्रित्यैव च ॥ २३८ ॥ श्रुत्वैव तद् साम्बबन्धनं नारदमुखात् । समरोद्यमं चक्रिरे ॥ २३९ ॥ कौरवार्थे । धृतराष्ट्रदर्शनार्थम् । शान्तिसन्देशार्थं च । स च बलभद्रश्च भीष्मादीनां कुरूणां यथा-योग्यं पूजां चकार । आह चोग्रसेनस्याऽज्ञाम् ॥ २४० ॥ नः नृपतिः उग्रसेनो व आज्ञापयत् । यत् नः प्रियकुमारः भवद्भिः प्रसभं गृहीतः, तत् प्रग्रहणं बन्धुस्नेहार्थं क्षान्तम् । तत् तस्मात् बन्धुस्नेहरक्षार्थमेव यूयमपि नः साम्बमाशु मुञ्चतेति ॥ २४१ ॥ कौरवाणां रामवचनश्रवणजनितमुद्वेगं छन्दसाऽभिनीय दर्शयन्निव इन्द्रवज्रया त्रिष्टुभाऽरभ्य वसन्ततिलकया शक्वर्या समापयति–आज्ञपयामासेत्यादिना । उक्तं तु आत्मनोऽवमानकरमुक्तं निशम्यैव श्रवण-मात्रेण प्रचोदिताः प्रकुपिताश्च कुरुवीराः । समेतैरैककण्ठ्येन श्रावणं संश्रावणम् । उपवनात् पुरं सङ्घीभूय प्रविविशुः । अत्र तैरुक्ते दुष्टवचने तेषां दुर्वर्तने च विषये ॥ २४२–३ ॥

---

१. 'सुयोधनस्य' इति क्वचित् । २. **'श्रुत्वैतद्–'**
३. **'प्रस्थापय–'** इति क्वचित् । ४. **'नृपतिः स्वयं नः'**

स लाङ्गलेन[1] तत् पुरं विकृष्य जाह्नवीजले ।
निपातयन् निवारितः प्रणम्य सर्वकौरवैः ॥ २४३ ॥

सभार्य्यमाशु पुत्रकं सुयोधनाभिपूजितम् ।
सपारिबर्हमाप्य च प्रजग्मिवान् स्वकां पुरम्[2] ॥ २४४ ॥

इत्यादिकर्म्माणि महान्ति रामस्याऽसञ्छेषस्याच्युतावेशिनोऽलम् ।
यस्याच्युतावेशविशेषकालं ज्ञात्वा भीमोऽप्यस्य नोदेति युद्धे ॥ २४५ ॥

क्रीडायुद्धे बहुशो रौहिणेये व्यक्तिं विष्णोर्भीमसेनो विदित्वा ।
तात्कालिकीं क्रीडमानोऽपि[3] तेन नैवोद्यमं कुरुते विष्णुभक्त्या ॥ २४६ ॥

तदा जयी प्रभवत्येष रामो नातिव्यक्तस्तत्र यदा जनार्द्दनः ।
तदा भीमो विजयी स्यात् सदैव विष्णोः केशावेशवान् यत् स रामः ॥ २४७ ॥

एतादृशेनैव रामेण युक्ते कृष्णे द्वार्वत्यां निवसत्यब्जनाभे ।
स्वप्नेऽनिरुद्धेन रता कदाचिद् बाणात्मजोषा चित्रलेखामुवाच ॥ २४८ ॥

**तत् पुरं (हस्तिनपुरम्) ॥ २४३–४ ॥ भीमोऽपि यस्य अलमच्युतावेशिनः अस्य रामस्य अच्युतावेशविशेषकालं ज्ञात्वा युद्धे क्रीडायुद्धे नोदेति ॥ २४५ ॥ नोदेतीत्येतद् विवृणोति– क्रीडायुद्ध इत्यादिना । तात्कालिकीं व्यक्तिं तत्कालीनमावेशविशेषाविर्भावम् ॥ २४६–७ ॥ द्वार्वत्यामेव निवसति ।**

सभार्यं लक्षणया सहितं प्रियपुत्रं साम्बम् । परिबर्ह एव पारिबर्हः । श्रेष्ठः परिबर्ह इत्यर्थः । वरोपचाराय दीयमानं परिच्छदादिकं परिबर्हः । **'परिबर्हस्तु राजार्हवस्तुन्यपि परिच्छदे'** इत्यभिधानम् । कृतकार्यतया प्रहृष्टो जग्मिवान् ॥ २४४ ॥ नोदेति नोद्यमं करोति ॥२४५॥ क्रीडमान इति अनुक्रीडमान इत्यर्थः । तात्कालिकीं व्यक्तिमनुसृत्यैव क्रीडन् इत्यर्थः । एतमर्थविशेषं द्योतयितुमेव क्रीडमान इत्याह । **'क्रीडोऽनुसम्परिभ्यश्च'** [अ.सू.१.३.२१] इति हि पाणिनिः । नह्यनुः प्रयोक्तव्य एवेति राज्ञामाज्ञा । यत्रानोरर्थो विवक्षितस्तत्रापि भवत्यात्मनेभाषा ॥ २४६ ॥ तदा रामः जयी प्रकृष्टो भवति । प्रकर्षोऽयमन्यावेशनिमित्त इति जयीत्येवाऽह । न विजयीति । प्रभुः समर्थश्च भवति । अन्यदा तु भीम एव बलराममभिभवन् स्वरूपशक्त्या विजयी भवति ॥ २४७ ॥ लोके क्वचिदेवं भवति । प्रथमं सुप्तः पश्यति । पश्चादुत्थितः

१. **'स्वलाङ्गलेन'** २. **'स्वकं पुरम्'** । **'स्वकां पुरीम्'** इति क्वचित् । ३. **'–कीं पीड्यमानोऽपि'**

**तमानयेत्यथ सा चित्रवस्त्रे प्रदर्श्य लोकान् समदर्शयत् तम् ।**
**पौत्रं विदित्वा वचनाच्च तस्याः कृष्णस्य तं चाऽनयत् तत्र रात्रौ ॥ २४९ ॥**

**अनिरुद्धं गुणोदारमानीतं चित्रलेखया ।**
**प्राप्य रेमे बाणसुता दिवसान् सुबहूनपि ॥ २५० ॥**

**गूढं कन्यागृहे तं तु ज्ञात्वा कन्याभिरक्षिणः ।**
**ऊचुर्बाणायादिशच्च किङ्करान् ग्रहणेऽस्य सः ॥ २५१ ॥**

**आगतानानिरुद्धस्तान् परिघेण महाबलः ।**
**निहत्य द्रावयामास स्वयमायात् ततोऽसुरः ॥ २५२ ॥**

**स तु युध्वाऽतिकृच्छ्रेण नागास्त्रेण बबन्ध तम् ।**
**अथ कृष्णः समारुह्य गरुडं रामसंयुतः ॥ २५३ ॥**

**स्वप्ने (रता) । तमानयेत्युवाच ॥ २४८–५१ ॥ निहत्य (ताडयि)त्वा ॥ २५२–३ ॥**

---

पश्यति । तादृशमुषाहरणप्रसङ्गमाह– स्वप्नेऽनिरुद्धेन । चित्रलेखामन्तरङ्गसखीम् ॥ २४८ ॥ तं मया स्वप्ने दृष्टम् । लोकान् लोकस्थान् प्रधानपुरुषांश्च । **‘ततः प्रास्तीर्य पट्टं सा चित्रलेखा स्वयं कृतम् । उषायै दर्शयामास सखीनां तु विशेषतः’** [वि.प.११८.६३], **‘तानेतान् पश्य सर्वांस्त्वं यथैव लिखितान् मया । यस्ते भर्ता यथारूपो स मया लिखितः सखि । तं त्वं प्रत्यभिजानीहि स्वप्ने यं दृष्टवत्यसि’** [६६–७], **‘तत्रानिरुद्धं दृष्ट्वा सा विस्मयोत्फुल्ललोचना । उवाच चित्रलेखां तामयं चोरः स वै सखि’** [६९] इति हरिवंशेषु । तस्या उषायाः **‘अयं मम चित्तचोरः’** इति वचनात् तं कृष्णस्य पौत्रं विदित्वा, **‘अन्तरिक्षचरा च त्वं योगिनी कामरूपिणी । उपायस्यास्य कुशला क्षिप्रमानय मे प्रियम्’** [७६] इति तस्या वचनादेव, पुनश्च चित्रलेखायां द्वारकाया दुर्गमतया शङ्कमानायाम्, **‘यद्येनं मे विशालाक्षि भर्तारममरोपमम् । अद्य नाऽनयसि क्षिप्रं प्राणांस्त्यक्ष्याम्यहं शुभे’** [७९] **‘अनिरुद्धस्य वदनं पूर्णचन्द्रसमप्रभम् । यद्यहं तन्न पश्यामि यास्यामि यमसादनम्’** [८७] इति च तस्या वचनादेव तस्मिन्नेव रात्रौ तं तत्राऽनयच्च । **‘हर्म्ये स्त्रीगणमध्यस्थं कृत्वा चान्तर्हितं तदा । उत्पपात गृहीत्वा सा प्राद्युम्निं युद्धदुर्मदम् । सा तमध्वानमागम्य सिद्धचारण-सेवितम् । सहसा शोणितपुरं प्रविवेश मनोजवा’** [११९.५४–५] इति च ॥ २४९–५१ ॥ परिघेण अर्गलेन । ‘ભોગળ’ इति भाषायाम् । असुरः बाणः स्वयमायात् ॥ २५२ ॥ अथ नारदेनानिरुद्धोदन्तश्रवणानन्तरम् । **‘यदूनामाचचक्षे तं बद्धं बाणेन नारदः’** [५.३३.१०] इति श्रीविष्णुपुराणे ॥ २५३ ॥

प्रद्युम्नेन च तत्रागात् प्रथमं तत्र वह्निभिः ।
युध्वैवाङ्गिरसा[१] चैव क्षणाद् विद्राप्य[२] तान् हरिः ॥ २५४ ॥

३ विद्राप्य[३] सर्वप्रमथानाससाद ज्वरं ततः ।
तेन भस्मप्रहारेण ज्वरितं रोहिणीसुतम् ॥ २५५ ॥

आश्लिष्य विज्वरं चक्रे वासुदेवो जगत्प्रभुः ।
स्वयं विक्रीड्य तेनाथ कश्चित् कालं जनार्दनः ॥ २५६ ॥

निष्पिष्य मुष्टिभिश्चान्यं ससर्ज्ज ज्वरमच्युतः ।
स्वयं जित्वाऽपि गिरिशभृत्यं नालमिति प्रभुः ॥ २५७ ॥

स्वभृत्येनैव जेतव्य इत्यन्यं ससृजे तदा ।
ज्वरेण वैष्णवेनासौ सुभृशं पीडितस्तदा ॥ २५८ ॥

**तान् अग्नीनङ्गिरसं च ॥ २५४ ॥ ततः ज्वरमाससाद । तेन ज्वरेण कर्त्रा भस्मप्रहारेण करणेन ॥ २५५–६ ॥ अन्यं ज्वरं वैष्णवज्वरमिति भावः । तदा तु गिरिशभृत्यं ज्वरम्, स्वयं आत्मना जित्वाऽपि नालम्, मदाधिक्यस्येति शेषः ॥ २५७–९ ॥**

रुद्रानुचरैः वह्निभिः । **'रुद्रस्यानुचराग्नयः'** [वि.प.१२२.२४] इति हरिवंशे । **'ते जातवेदसः सर्वे कल्माषः कुसुमस्तथा । दहनः शोषणश्चैव तपनश्च महाबलः । स्वाहाकारस्य विषये प्रख्याताः पञ्च वह्नयः'** [३०] इति, **'पिठरः पतगः स्वर्णः श्वागाधो भ्राज एव च । स्वधाकाराश्रयाः पञ्च अयुध्यंस्तेऽपि चाग्नयः । ज्योतिष्टोमविभागौ च वषट्काराश्रयौ पुनः'** [३२–३] इत्यादि च । **'ततोऽग्नीन् भगवान् पञ्च जित्वा नीत्वा तथा क्षयम् । दानवानां बलं कृष्णश्चूर्णयामास लीलया'** [५.३३.२०] इति श्रीविष्णुपुराणे । अङ्गिरसा रुद्रभृत्यमुख्येन । **'अथाङ्गिरास्त्रिशूलेन दीप्तेन समधावत'** [वि.प.१२२.३६] इति हरिवंशे । अङ्गिरसा च युध्वैव । एवकारेण युद्धस्य घोरतामाह । क्षणादेव तान् सर्वान् प्रमथान् विद्राप्य । प्रमथ्नन्त्यरीनिति प्रमथाः शिवानुचरा भूतगणाः । **'भूताः शिवस्य पार्षदाः'** इति संसारावर्तः । अथ कृष्णस्तेन ज्वराख्येन शिवप्रमथेन कश्चित् कालं विनोदाय क्रीडित्वा मुष्टिभिस्तं निष्पिष्य अन्यं स्वभृत्यं ज्वरं ससर्ज । मुष्टिभिरिति चतुर्भुजत्वमाह । **'ततस्त्रिपादस्त्रिशिरा ज्वरो माहेश्वरो महान् । बाणरक्षार्थमभ्येत्य युयुधे शार्ङ्गधन्वना । तद्भस्मस्पर्शसम्भूततापः कृष्णाङ्गसङ्गमात् । अवाप बलदेवोऽपि श्रममामीलितेक्षणः । ततः स युध्यमानस्तु सह देवेन शार्ङ्गिणा । वैष्णवेन ज्वरेणाऽशु कृष्णदेहान्निराकृतः'** [५.३३.१४–६] इति विष्णुपुराणे ॥ २५४–८ ॥

१. **'युध्वा चाङ्गिरसा'** इति क्वचित् । २. **'विद्राव्य तान्'** ३. **'विद्राव्य शर्व–'** ।

ग्रासार्थमुपनीतश्च जगाम शरणं हरिम् ।
तेन स्तुतः स भगवान् मोचयामास तं विभुः[१] ॥ २५९ ॥

क्रीडार्थमत्यल्पजनेष्वपि प्रभुः कथञ्चिदेव व्यजयद् व्यथां विना ।
इत्यादि मोहाय स दर्शयत्यजो नित्यस्वतन्त्रस्य कुतो व्यथादयः ॥ २६० ॥

यदा ज्वराद्या अखिलाः प्रविद्रुतास्तदा स्वयं प्राप हरिं गिरीशः ।
तयोरभूद् युद्धमथैनमच्युतो विजृम्भयामास ह जृम्भणास्त्रतः[२] ॥ २६१ ॥

विजृम्भिते शङ्करे निष्प्रयत्ने स्थाणूपमे संस्थिते कञ्जजातः ।
दैत्यावेशाद् वासुदेवानभिज्ञं सम्बोधयामास सदुक्तिभिर्विभुः[३] ॥ २६२ ॥

**अजः प्रभुः व्यथां दुःखं विना स्थितः । दुःखरहित इत्यर्थः ॥ २६० ॥ विजृम्भणास्त्रतः स्तम्भनास्त्रतः । विजृम्भयामास स्तम्भयामास ॥ २६१ ॥ स्थाणूपमे निष्प्रयत्ने स्थाणुवन्निष्प्रयत्ने स्थिते सम्बोधयामास ॥ २६२ ॥**

---

**‘कृष्णस्य पादयोर्मूर्ध्ना शरणं सोऽगमज्ज्वरः’** [वि.प.१२३.१४] इति च हरिवंशे ॥ २५९ ॥ व्यथां विना क्लेशं विना व्यजयत, अथापि कथञ्चित् महता क्लेशेन व्यजयतेत्यादि दर्शयति । व्यथा समासन्नाऽसीत् । अथापि कथञ्चिद् दैवयोगेन व्यथां विना व्यजयतेति वा । । परेषां मोहाय । अत एव व्यजयदिति परस्मैभाषा ॥ २६० ॥ तयोरभूद् युद्धमिति । **‘तथा बाणपुरस्याऽसन् द्वारस्था देवताः सदा । महेश्वरो गुहश्चैव भद्रकाळी विनायकः’** [स.प.६०.१९] इति, **‘ततः कृष्णो रणं कृत्वा मुहूर्तं शूलपाणिना । विजित्य तं महादेवं ततो युद्धे जनार्दनः । अन्यांश्च जित्वा द्वारस्थान् प्रविवेश पुरोत्तमम्’** [२६] इति च भारते । यद्यपीदमौत्तरा न पठन्ति । अग्रपूजावसरे भीष्मवचनं हीदम् । राजसूयः पूर्वभावी । अनिरुद्धविवाहोऽनन्तरभावी । तस्मादिदमसङ्गतं स्यादिति तैरन्तरितमिति भाति । अथापि **‘व्यत्यासः प्रातिलोम्यं च’** इत्यादिना सङ्गमयितुं शक्यमिति दाक्षिणात्यैरयं भागो भारतान्तर्गत इत्यङ्गीक्रियते । विजृम्भयामास विसञ्ज्ञं चकार । जृभि गात्रविनामे । शिथिलितसर्वाङ्गं किमपि कर्तुमपारयन्तं स्तब्धं निषादयामास । स्तब्धो निषसादेत्यर्थः । हेति हकारवाच्यस्य हरेर्महिमातिशयमास्वदते ॥ २६१ ॥ संस्थिते मृतवत् स्थिते । निष्पन्दं स्थिते वा । **‘नच युद्धं महाबाहो तव कृष्णेन रोचते । नच बुद्ध्यसि कृष्णं त्वमात्मानं तु द्विधा कृतम्’** [वि.प.१२५.१७] इत्यादिसदुक्तिभिः । तत्र कृष्णरूपेण युध्यते, त्वयि च स एव स्थितः स्वात्मना युध्यमानः क्रीडति बाध्यबाधकतां

---

१. **‘तं प्रभुः’** २. **‘–मास विजृम्भ–’** । वे.ती.पाठोऽपि तथा । ३. **‘सदुक्तिभिः प्रभुः ।’**

प्रगृह्य शर्वं च विवेश विष्णोः स तूदरं दर्शयामास तत्र ।
शिवस्य रूपं[१] स्तम्भितं बिल्वनाम्नि वने गिरीशेन च यत् तपः कृतम् ।
शैवं पदं प्राप्तुमेवाच्युताच्च तच्चावदत् कञ्जजः शङ्करस्य ॥ २६३ ॥

अपेत[२]मोहोऽथ वृषध्वजो हरिं तुष्टाव बाणोऽभिससार केशवम् ।
तस्याच्युतो बाहुसहस्रमच्छिनत् पुनश्चारिं जगृहे तच्छिरोर्त्थे ॥ २६४ ॥

तदा शिवेन प्रणतो बाणरक्षणकाम्यया ।
कृत्वा स्वभक्तं बाणं तं ररक्ष द्विभुजीकृतम् ॥ २६५ ॥

मोचयित्वाऽनिरुद्धं च ययौ बाणेन पूजितः ।
एवमग्नीनङ्गिरसं ज्वरं स्कन्दमुमापतिम् ॥ २६६ ॥

**तत्र विष्णूदरे बिल्वनाम्नि वने गिरीशेन अच्युतात् शैवं पदं प्राप्तुमेव यद् येन रूपेण तपः कृतं शिवस्य तद् रूपं स्तम्भितं दर्शयामास च ॥ २६३ ॥ तच्छिरोर्थे तच्छिरश्छेदनार्थम् ॥ २६४ ॥ स्वभक्तं कृत्वा, गतासुरावेशं कृत्वेति भावः ॥ २६५–६ ॥**

---

गत इति, **'आत्मानं द्विधा कृतम्'** इति हरिवंशवचनस्यार्थः । प्रीत्या सम्बोध्य बोधयामास । सम्बोधयामास कृष्णमेव विष्णुं बोधयामासेति च । **'अकयप्रविसम्भूमसखहा विष्णुवाचकाः'** । यतः स विशिष्टो भवतीति रुद्रस्यापि विभुः ॥ २६२ ॥ स तु दैत्यावेशविधुरो विधिः । शर्वं च प्रेम्णाऽऽदाय, विष्णोस्तु उदरस्थजगतो विष्णोः, उदरं तु सर्व-जगदाश्रयमुदरं वा, विवेश । तत्र स्तम्भितं शिवस्य पूर्वरूपं शिवस्यैव दर्शयामास । किं तद् रूपम्? बिल्वनाम्नि वने गतम् । अपिच अच्युतानुग्रहात् शैवं प्रकृष्टं पदमाप्तुमेव यच्च गिरीशेन तत्र वने तपः कृतम्, तच्च दर्शयामास । दर्शयित्वा तत् पूर्ववृत्तं शङ्करस्यावदच्च । हरिचित्ते सदाऽभिव्यक्ततया स्थितं हरचित्ते गतमपि विस्मृतं कञ्जजः स्मारयामासेत्यर्थः । चतुर्मुखस्य तु सदा भगवत्सामीप्यान्न विस्मृतिरिति सूचयितुमेव **'कञ्जजातः'** इति, **'कञ्जजः'** इति चाऽह ॥ २६३ ॥ जृम्भिते शङ्करे गुहे च जिते अथ स्वयं बाणोऽभिससार । **'कृत्वा द्विबाहुं तं बाणं छिन्नशाखमिव द्रुमम् । पुनः कराग्रे कृष्णस्य चक्रं प्राप्तं सुदर्शनम्'** [वि.प.१२६.१३१] इति च । तच्छिरःकृन्तनार्थं पुनश्च चक्रं चगृहे ॥ २६४–५ ॥ बाहुच्छेदानन्तरं बाणः शिवेन सह महाकालो नाम गणमुख्यो भूत्वा निर्जगामेति हरिवंशे श्रूयते । तत्तु पाश्चात्य-मिति तदात्वे प्रवृत्तां कथामाह– ययौ बाणेन पूजित इति । एतेन हरिवंशे यदुच्यते बाणमन्त्रिणा कुम्भाण्डेन पूजित

---

१. **'शिवस्वरूपम्'** २. **'व्यपेत–'**

बाणं चायत्नतो जित्वा प्रायाद् द्वारवतीं पुनः[१] ।
येनायत्नेन विजितः सर्वलोकहरो हरः ॥ २६७ ॥

किं ज्वरादिजयो विष्णोस्तस्यानन्तस्य कत्थ्यते ।
ईदृशानन्तसङ्ख्यानां शिवानां ब्रह्मणामपि ॥ २६८ ॥

रमाया अपि यद्वीक्षां विना न चलितुं बलम् ।
नच ज्ञानादयो भावा नचास्तित्वमपि क्वचित् ॥ २६९ ॥

अनन्तशक्तेः कृष्णस्य न चित्रः[२] शूलिनो जयः ।
चित्रलेखासमेतोषान्वितपौत्रसमन्वितः ॥ २७० ॥

सरामः ससुतो वीन्द्रमारुह्य द्वारकां गतः ।
रेमे तत्र चिरं कृष्णो नित्यानन्दो निजेच्छया ॥ २७१ ॥

एवंविधान्यगणितानि यदूत्तमस्य कर्म्माण्यगण्यमहिमस्य महोत्सवस्य ।
नित्यं रमाकमलजन्मगिरीशशक्रसूर्य्यादिभिः परिनुतानि[३] विमुक्तिदानि ॥ २७२ ॥

**'क्रीडार्थमत्यल्पजनेषु' (२६०) इत्यतः ज्वरातिशयो नाश्चर्य इत्युक्तम् । तत् कैमुत्येनोपपादयति–येनेति । किं कथ्यते, अशक्य इ(ती)ति शेषः ॥ २६७ ॥ सर्वाद(प्यधिकानां ब्रह्मणामपि रमाया अपि) चलितुं बलं न । भावाः धर्माः ॥ २६८–७२ ॥**

इति । कुम्भाण्डमुखेन स्वयं बाणः पूजयामासेत्येव तदर्थ इत्युक्तं भवति ॥ २६६–७ ॥ अनन्तस्य, यत्सामर्थ्यस्यान्तो न विद्यते ॥ २६८–७१ ॥ उत्सव इति मह उच्यते । उत्सव इत्युत्सेकः । उत्सव इत्यमर्षः । उत्सव इतीच्छा-सम्पत्तिः । **'उत्सवो मह उत्सेक इच्छाप्रसवकोपयोः'** इत्यभिधानम् । महानुत्सवो महोऽस्येति महोत्सवः नित्योत्सवः । पापेषु महानुत्सवः कोपोऽस्येति महोत्सवः । तेन साधूनां महानुत्सव उद्धर्षो येन स महोत्सवः । सतां रक्षणेऽसतां निग्रहे च महानस्य उत्सव इच्छाप्रकर्ष इति महोत्सवः । महांश्चास्य सर्वगुणानामुत्सव उत्सेक इति महोत्सवः । सूर्यादिभि-रिति । सूरी सूरिर्वा देवगुरुर्बृहस्पतिः । तदादिभिः । सूर्यचन्द्रादिभिर्वा । ऋग्वेदमानी शक्रः । यजुर्वेदमानी सूर्य इति तयोः सहग्रहणम् ॥ २७२ ॥

१. '–वर्ती प्रभुः ।' २. 'चित्रं शूलिनो–' ३. 'परिणुतानि'

**एवं वसत्यमितपौरुषवीर्य्यसारे नारायणे स्वपुरि शक्रधनञ्जयोक्तः ।**
**सम्प्राप्य लोमशमुनिः सकलानि तीर्थान्याप्तुं स पाण्डुतनयेषु सहाय आसीत् ॥ २७३ ॥**

**पृथ्वीं प्रदक्षिणत एत्य समस्ततीर्थस्नानं यथाक्रमत एव विधाय पार्थाः ।**
**सम्पूज्य तेषु निखिलेषु हरिं सुभक्त्या कृष्णे समर्प्पयितुमापुरथ प्रभासम् ।**
**सम्भावनाय सकलैर्य्यदुभिः समेतस्तेषां च रामसहितो हरिराजगाम ॥ २७४ ॥**

**पार्त्थैः सम्पूजितस्तत्र कृष्णो यदुगणैः सह ।**
**पार्त्थान् सम्पूजयामासुर्वृष्णयश्चाऽऽज्ञया हरेः ॥ २७५ ॥**

**तत्र भीमं तपोवेषं दृष्ट्वाऽतिस्नेहकारणात् ।**
**दुर्य्योधनं निन्दयति रामे सात्यकिरब्रवीत् ॥ २७६ ॥**

**शक्रधनञ्जयोक्तः, इन्द्रेण, दिवि स्थितेन धनञ्जयेन चोक्तः । सः प्रसिद्धः ॥ २७३ ॥ पृथ्वीमिति । भारत-वर्षान्तर्गताम् ॥ २७४–५ ॥ भीमेऽतिस्नेहात् कारणात् ॥ २७६ ॥**

---

शिष्टरक्षणदाक्ष्यं पौरुषम् । दुष्टदमनदाक्ष्यं तु वीर्यम् । **'सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् । वचनात् पुरुहूतस्य पार्थस्य च महात्मनः'**[व.प.८९.८] इति लोमशवचनं भारते । लोमान्यपि शमात्मकान्यस्येति लोमशो भगवान् । देहे सर्वत्र रोहन्तीति लोमानि । लूयन्ते परस्तादिति च लोमानि । बहुलोमवान् मुनिर्लोमश उच्यते । पाण्डुतनयेषु यात्रोन्मुखेषु तदा **'लघुर्भव'** इति लोमशेनोक्तः स्वेन सहोषितान् परःसहस्रं मुनींश्च ब्राह्मणांश्च विसर्जयामास– **'भिक्षाभुजो निवर्तन्तां ब्राह्मणा यतयश्च ये । क्षुत्तृड्ध्वश्रमायासशीतार्तिमसहिष्णवः । ते सर्वे विनिवर्तन्तां ये च मृष्टभुजो द्विजाः'** [व.प.९०.२०] इति च । **'ततो भूयिष्ठशः पौरा गुरौ भारे समाहिते । विप्राश्च यतयो मुख्या जग्मुर्नागपुरं प्रति'** [२४] इति च । अन्ये च वनवासिनो मुनयस्तमनुजग्मुः । **'धौम्येन सहिता वीरास्तथा तैर्वनवासिभिः । मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः'** [९१.२७] इति च ॥ २७३ ॥ यथाक्रमतः यथास्थितेन क्रमेण । अन्तर्यामित्वेन पूजा सम्पूजा । अनन्या सर्वाधिका च भक्तिः सुभक्तिः । **'न ऋते त्वत् क्रियते किञ्चनाऽरे'** इत्यर्पणं समर्पणम् । आदरपूर्वकं प्रत्युद्गमनं सम्भावनम् । यदुभिश्च समेतः ॥ २७४ ॥ पार्थान् सम्पूजयामासुः, हरिस्त्र संस्थित इति हरिप्रतिमात्वेन पूजयामासुः । कृष्णस्यैते सम्मता इति सादरं पूजयामासुः ॥ २७५ ॥ रामे निन्दयति । निन्दतीति पर्याप्तम् । अथापि निन्दयतीत्याह । प्रियणिजन्ताः सङ्ख्यावन्तश्चोरतिं चोरयतिमाहुः । निन्दतिं निन्दयतिम् । एतेनाक्षराधिक्येन कोपाधिक्यं स्फोरयति ॥ २७६ ॥

सर्वे वयं निहत्याद्य सकर्ण्णान् धृतराष्ट्रजान् ।
अभिमन्युं स्थापयामो राज्ये यावत् त्रयोदशम् ॥ २७७ ॥

संवत्सरं समाप्यैव पुरं यास्यन्ति पाण्डवाः ।
ततो युधिष्ठिरो राजा राज्यं शासतु पूर्ववत् ॥ २७८ ॥

एवं वदत्येव शिनिप्रवीरे जनार्द्दनः पार्त्थमुखान्युदीक्ष्य ।
उवाच शैनेय न पाण्डुपुत्राः परेण संसाधितराज्यकामाः ॥ २७९ ॥

स्वबाहुवीर्य्येण निहत्य शत्रूनाप्स्यन्ति राज्यं त इतीरितेऽमुना ।
तथेति पार्त्था अवदंस्ततस्ते कृष्णं पुरस्कृत्य ययुर्द्दशार्हाः ॥ २८० ॥

क्रमेण पार्त्था अपि शैशिरं गिरिं समासदंस्तत्र कृष्णां सुदुर्ग्गे ।
विषज्जन्तीमीक्ष्य[१] तैः संस्मृतोऽथ हैडिम्ब आयात् सहितो निशाचरैः ॥ २८१ ॥

उवाह कृष्णां स तु तस्य भृत्या ऊहुः पार्त्थांस्ते बदर्य्याश्रमं च ।
प्राप्यात्र नारायणपूजया कृतस्वकीयकार्य्या ययुरुत्तरां दिशम् ॥ २८२ ॥

**यावत् पाण्डवाः पुरं यास्यन्ति तावत् (स्थाप)यामः । ततः स्वपुरप्राप्त्यनन्तरम् ॥ २७७–८० ॥ शैशिरं हिमवन्तम् । सुदुर्गे स्थले ॥ २८१–२ ॥**

---

त्रयोदशं संवत्सरं समाप्य यावद् यास्यन्ति तावदभिमन्युं राज्ये स्थापयामः । शासतु शास्तु । विकरणव्यत्ययेन । यद्वा महतां प्राचां बहुलं प्रयोगदर्शनात् शासतिर्भ्वादिगणे च पठनीय इत्युक्तम् । अथवा तुष्यतु दुर्जनः– युधिष्ठिरो राजा भवतु । पाण्डवा राज्यं शासतु इति भिन्नवाक्यतया व्याख्यास्यामः ॥ २७७–८ ॥ वीर इति पुत्रनाम । तेन प्रवीर इति पौत्रः । शिनेः पौत्रः सात्यकिरित्यर्थः । उदीक्ष्य साकूतमीक्षित्वा । सम्यक् शत्रुनिग्रहपूर्वकं साधितमुपपादितम् ॥ २७९ ॥ दशार्हा दशार्हस्य राज्ञो दायभागिनो यादवाः ॥ २८० ॥ तत्र हिमवति गिरौ । बन्धुरतया सुदुर्गे । विषज्जन्तीं स्खलन्तीम् । षस्ज गतौ । सहायार्थं स्मृतः संस्मृतः । निशाचरैः स्वानुचरैः ॥ २८१ ॥ स तु । तस्य पुत्रत्वेन मातुर्वहने विशेषाधिकारमाह । बदर्याश्रमं मनुष्यगम्यं क्षेत्रम् ॥ २८२ ॥

---

१. **'विषज्जतीं वीक्ष्य'**

अतीत्य शर्वश्वशुरं गिरिं ते सुवर्ण्णकूटं निषधं गिरिं च ।
मेरोः प्राच्यां गन्धमादे गिरौ च प्रापुर्बदर्य्याश्रममुत्तमं भुवि ॥ २८३ ॥

तस्मिन् मुनीन्द्रैरभिपूज्यमाना नारायणं पूजयन्तः सदैव ।
चक्रुस्तपो ज्ञानसमाधियुक्तं [१]सत्तत्वविद्यां प्रतिपादयन्तः ॥ २८४ ॥

एवं बदर्य्यां विहरत्सु तेषु क्वचिद् रहः कृष्णया वायुसूनौ ।
स्थिते गरुत्मानुरगं जहार महाह्रदाद् वासुदेवासनाग्र्यः ॥ २८५ ॥

तत्पक्षवातेन विचालिते तु तस्मिन् गिरौ कमलं हैममग्र्यम् ।
पपात कृष्णाभीमयोः सन्निधान उद्यद्भानोर्म्मण्डलाभं सुगन्धम् ॥ २८६ ॥

**(शर्वश्वशुरं) गिरिं हिमवन्तम् । सुवर्णकूटं हेमकूटं गिरिम्, निषधं गिरिं च । मेरोः प्राच्यां पूर्वस्यां दिशि ॥ २८३ ॥ प्रतिपादयन्तः मुन्यादिभ्यः ॥ २८४–९ ॥**

---

शर्वश्वशुरं गिरिम् । अभिमानिवचनेनाभिमन्यमानव्यपदेशः । सुवर्णकूटं हेमकूटम् । ततः बदर्याश्रमं बदरीषण्ड-मण्डितं नरनारायणाश्रमम् । **'ततस्तमाश्रमं पुण्यं नरनारायणाश्रितम् । ददृशुः पाण्डवा राजन् सहिता द्विजपुङ्गवैः'** [व.प. १४७–२९] इति च । बद स्थैर्ये । बदति स्थिरं भवति मनोऽनेनेति बदरश्चन्द्रः । बदति मनोऽत्रेति बदरी नर-नारायणव्यासानामाश्रमभूमिः । बदरी वृक्षविशेषश्च । 'ಬೋರೆ' इति भाषायाम् । तत्फलं च बदरम् । तच्च मुनीनां स्थैर्यहेतुराहारः ॥ २८३ ॥ विज्ञाय देवांशतामभिमानेन पूज्यमानाः । ज्ञानपूर्वः समाधिर्ज्ञानसमाधिः ॥ २८४ ॥ बदर्यां नरनारायणाश्रमे । वासुदेवस्याऽसनम् । अत एवाग्र्यश्च । आसनेषु चाग्र्यः । कथा चेयं महाभारते व्यत्यस्य पठ्यत इत्याश-यवानेवमाह । उपरि पञ्चवर्णानि गरुडाहृतानीति हि भारते पठ्यते– **'ततः कतिपयाहस्सु महाह्रदनिवासिनाम् । ऋद्धिमन्तं महानागं सुपर्णः सहसाऽहरत्'** [व.प.१६१.१६], **'तत्र पुष्पाणि दिव्यानि सुहृद्भिः सह पाण्डवाः । ददृशुः पञ्चवर्णानि द्रौपदी च यशस्विनी'** [१९] इति ॥ २८५ ॥ सुगन्धम् । अतः सौगन्धिकमिति प्रसिद्धम् । ननु शोभनो गन्धोऽस्येति विग्रहे **'गन्धस्येदुत्पूतिसुसुरभिभ्यः'** [अ.सू.५.४.१३५] इति गन्धशब्दस्येकारादेशो भवति समासान्तः । तेन सुगन्धि कमलमिति वक्तव्यम् । न सुगन्धं कमलमिति । ननु प्रियव्याकरण, वैयाकरणैरेव दत्तोत्तरोऽसि समासान्तो विधिरनित्य इति । अथापि शृणु वार्तिकम्–**'गन्धस्येत्त्वे तदेकान्तग्रहणम्'** इति । नात्र गन्धस्यैकान्तग्रहणम् । सत्यं शोभनोऽस्य गन्धः । गन्धादप्यतिशोभनं रूपम् । तेन युक्तमुक्तं सुगन्धं कमलमिति । तदेवाऽह– उद्यद्भानोर्मण्डलाभमिति । जले प्रतिबिम्बितभानुमण्डलाभम् । **'तस्यां नद्यां महासत्त्वः सौगन्धिकवनं महत् । अपश्यत् प्रीतिजननं बालार्कसदृशद्युति'** [व.प.१५३.३२] इति च । **'सहस्रपत्रमर्काभम्–'** [१८८.६] इति च ॥ २८६ ॥

---

१. 'सुतत्व–'

दृष्ट्वाऽतिगन्धं वरहेमकञ्जं कुतूहलाद् द्रौपदी भीमसेनम् ।
बहून्ययाचत् तादृशान्यानुभावमविषह्यं[1] जानती देवदैत्यैः ॥ २८७ ॥

तयाऽर्थितः सगदस्तुङ्गमेनं गिरिं वेगादारुहद् वायुसूनुः ।
प्रशस्यमानः सुरसिद्धसङ्घैः मृद्नन् दैत्यान् सिंहशार्दूलरूपान् ॥ २८८ ॥

आसेदिवांस्तत्र हनूमदाख्यं निजं रूपं प्रोद्यदादित्यभासम् ।
जानन्नप्येनं स्वीयरूपं स भीमश्चिक्रीड एतेन यथा परेण ॥ २८९ ॥

धर्म्मो देवानां परमो मानुषत्वे स्वीये रूपेऽप्यन्यवदेव वृत्तिः ।
अनादानं दिव्यशक्तेर्विशेषान्नरस्वभावे सर्वदा चैव वृत्तिः ।
तस्माद् भीमो हनुमांश्चैक एव ज्यायःकनीयोवृत्तिमत्राभिपेदे ॥ २९० ॥

सर्वे गुणा आवृता मानुषत्वे युगानुसारान्मूलरूपानुसारात् ।
क्रमात् सुराणां भागतोऽव्यक्तरूपा आदानतो व्यक्तिमायान्त्युरूणाम् ॥ २९१ ॥

**विशेषाद् दिव्यशक्तेः अनादानं स्वत एव विद्यमानशक्तिं विना अधिकानादानं परमो धर्मः । भीमः हनुमांश्च एक एव सन्, तस्मादत्र ज्यायःकनीयोवृत्तिमभिपेदे ॥ २९० ॥ देवानां मानुषत्वेऽपि दिव्यशक्तेः सत्त्वाद् विशेषाद् दिव्यशक्त्यनादानं धर्म इति कथमुच्यत इति तत्राऽह– सर्व इति । सुराणां मानुषत्वे युगानुसारात् कृतादियुगक्रमानुसारात् मूलरूपेषु उत्तमत्वाधमत्वानुसारेण सर्वे गुणाः बलज्ञानादयः आवृताः, भवन्तीति शेषः । किं सर्वात्मना आवृता भवन्तीति? नेत्याह– भागत इति । उरूणां उत्तमानां आदानतः इदानीमेव**

---

आ समन्तात् सर्वविषयमनुभावम् । प्रारब्धान्तगमननिर्धारः, तत्सामर्थ्यं चानुभावः ॥ २८७ ॥ **'सिंहव्याघ्रमृगांश्चैव मर्दयानो महाबलः'** [व.प.१४८.४२] इति भारतवचनस्यान्तरङ्गमाह– दैत्यान् सिंहशार्दूलरूपानिति । स्फुटमेतदुपरितन-भारतवाक्येनैव–**'सिंहव्याघ्राश्च सङ्क्रुद्धा भीमसेनमथाऽद्रवन् । शकृन्मूत्रं च मुञ्चाना भयविभ्रान्तमानसाः । व्यादितास्या महारौद्रा व्यनदन् भीषणान् रवान्'** [१४८.५०–५१] इत्यादि ॥ २८८ ॥ प्रोद्यदादित्यभासमिति । श्रूयते हि प्राणमन्त्रध्याने–**'उद्यद्रविप्रकरसन्निभम्'** इति । आदित्यस्येव भासा प्रभा यस्य तदादित्यभासं रूपम् । आदित्यस्येव भाः यस्य तमादित्यभासमेनं हनूमन्तं वा ॥ २८९ ॥ धर्मो देवानां न केवलम् । भगवानप्यनुवर्तते धर्ममेतम् । यथा रामायणे रामभार्गवयोः समागमे । यथा वा पाण्डवराजसूये कृष्णव्यासभार्गवाणां समागमे । एक एव सन् हनूमान् ज्यायानिव भीमः कनीयानिव वृत्तिं वर्तनं अभिपेदे स्वीचकार ॥ २९० ॥ सुराणां मानुषत्वे आवृताः । मूलरूपमनुसृत्य क्रमात्

---

१. **'–भावमस्याविषह्यम्'**

**नैवाव्यक्तिः काचिदस्तीह विष्णोः [1]प्रादुर्भावेऽप्यतिसुव्यक्तशक्तेः ।**
**इच्छाव्यक्तिः प्रायशो मारुतस्य तदन्येषां व्यक्तता कारणेन ॥ २९२ ॥**

**तस्माद् भीमो धर्म्मवृद्ध्यर्थमेव स्वीये रूपेऽप्यन्यवद् वृत्तिमेव ।**
**प्रदर्शयामास तथाऽसुराणां[2] मोहायैवाशक्तवच्छक्तिरूपः[3] ॥ २९३ ॥**

**तद्रूपवृद्धिं भीमसेनोऽथ दृष्ट्वा श्रुत्वा हनूमन्मुखतः कथाश्च ।**
**रामस्य तच्चातुरात्म्यं च दिव्यं चातुर्य्युगं धर्म्ममप्यग्रमेव[4] ॥ २९४ ॥**

**दिव्यगुणाविर्भावो भवेदिति पूर्वमादानतः आदानेच्छातः व्यक्तिं अभिव्यक्तिं आयान्ति ॥ २९१ ॥ अतिसुव्यक्तशक्तेः विष्णोः प्रादुर्भावेऽपि इह बलज्ञानादिविषये काचिदव्यक्तिः नास्ति । 'आदानतो व्यक्तिमायान्त्युरूणाम्' इति यदुक्तं तत्र विशेषमाह– इच्छाव्यक्तिरिति । तदन्येषां मारुतादन्येषां कारणेन, सत्यामप्यादानेच्छायां कारणेन कारणविशेषेण ॥ २९२–३ ॥ रामस्य कथाः त(था) राम(स्य) दिव्यं तच्चातुरात्म्यं चतूरूपत्वम् । वासुदेवरूपेणैव रामत्वम् । सङ्कर्षणादिरूपाणां लक्ष्मणादिष्वाविष्टत्वम् । एवं**

---

उत्तमेषूत्तमेष्वधिकमधिकं व्यक्तिमायान्ति । आदानेच्छया नतु सर्वदा । तदपि भागतः । न सर्वात्मना । तदपि युगानुसारेण । कृतादुत्तरोत्तरं ह्रसीयसी व्यक्तिरिति ॥ २९१ ॥ एवं स्थिते तत्रापवादमाह– विष्णोर्नैवाव्यक्तिरिति । अव्यक्तिः इह शक्तिविषये । इह मानुषलोके प्रादुर्भावेऽपि तिरोधानं नास्त्येव विष्णोः । देवाः कदाचिद् व्यक्तशक्तयः । मारुतस्तु इच्छया सदा व्यक्तशक्तिरिति सुव्यक्तशक्तिः । भगवांस्ततोऽप्यतिशयेनेत्यतिसुव्यक्तशक्तिरुच्यते । मारुतस्य शक्तेरादानेच्छया अभिव्यक्तिः । अन्यदा तिरोहिता शक्तिरवतिष्ठते । वायोरवतारेष्वपि मूलरूपज्ञानमतिरोहितम् । इतरेषु तदपि तिरोहितं भवति । तदन्येषां शेषशक्रादीनां बलवता कारणेन स्वमूलशक्तेरभिव्यक्तिः । यथा कृष्णालिङ्गनेन बलरामार्जुनयोः । यथा रावणगृहीतस्य लक्ष्मणस्य । प्रायशः इत्यनेन वायोरपि मूलरूपापेक्षया किञ्चिदिव ह्रासो वर्तत इत्याह ॥ २९२ ॥ **'गच्छन् सौगन्धिकार्थं पथि स हनुमतः पुच्छमच्छस्य भीमः प्रोद्धर्तुं नाशकत् स त्वमुमुरुवपुषा भीषयामास चेति । पूर्णज्ञानौजसोस्ते गुरुतम वपुषोः श्रीमदानन्दतीर्थ क्रीडामात्रं तदेतत् प्रमदद सुधियां मोहक द्वेषभाजाम्'** इति पण्डिताचार्यवचनम् । अजानन्निव केवलं प्रदर्शयामासैव । किमर्थम्? स्वस्य धर्मवृद्ध्यर्थमेव । कथम्? उक्तं हि–**'धर्मो देवानाम्–'** इत्यादि । सुराणां च धर्मवृद्ध्यर्थम् । वायोर्लीलाविडम्बनास्वादनेन प्रमदभरेण तेषां धर्मवृद्धिः । तथा असुराणां मोहाय । भीमो हनुमता जित इति भ्रान्त्या प्रमदभरेण तेषामधर्मवृद्धिरित्यर्थः । एवकारेण सर्वथा न वास्तवमेतदित्याह ॥ २९३ ॥ तद्रूपवृद्धिमदृष्टपूर्वमिव दृष्ट्वा । **'तं वानरवरं धीमानतिकायं महाबलम् । स्वर्गपन्थानमावृत्य हिमवन्तमिव स्थितम्'** [व.प.१४८.८७] इति भारते । अश्रुतपूर्वा इव रामस्य कथाश्च श्रुत्वा । तस्य रामात्मनो हरेः

---

१. **'प्रादुर्भावेष्वति–'** २. **'तदाऽसुराणाम्'**
३. **'–शक्तवच्छक्तरूपः'** ४. **'–मप्यग्ररूपम्'** इति क्वचित् ।

**ध्वजाद् बीभत्सोर्गर्ज्जनेनैव[1] शत्रुपराभवे तेन दत्तेऽर्ज्जुनस्य ।**
**ययौ प्रणम्यैनमाशु एव भीमः सौगन्धिकं वनमत्यग्र[2]रूपम्** ॥ २९५ ॥

**नरागम्यां [3]नळिनीमेत्य तत्र दृष्ट्वा पद्मान्यद्भुताकारवन्ति ।**
**हैमानि दिव्यान्यतिगन्धवन्ति समासदद् वार्य्यमाणो नराशैः** ॥ २९६ ॥

**ते भीममात्तायुधमुग्ररूपं महाबलं रूपनवावतारम् ।**
**न्यवारयन् क्रोधवशाः समेताः शतं सहस्राण्यजितानि सङ्घे[4]** ॥ २९७ ॥

**चतूरूप(त्वम्) ॥ २९४– ७ ॥**

---

चतुर्युगेषु चातुरात्म्यम् । कृते **'शुक्लो नारायणस्तदा'** [१५१.१८], त्रेतायाम् **'रक्ततां याति चाच्युतः'** [२५], द्वापरे **'विष्णुर्वै पीततां याति'** [२८], तथा कलौ **'कृष्णो भवति केशवः'** [३५] इति भगवतश्चतूरूपत्वं नाम चातुर्युगं चातुरात्म्यम् । एवं चातुर्युगं धर्ममपि अश्रुतपूर्वमिव श्रुत्वा । अपिना चातुर्वर्ण्यधर्ममपि । यत्र शुक्लो भगवान् तद् ब्राह्मण-प्रधानं युगम् । यत्र रक्तस्तत् क्षत्रप्रधानम् । यत्र पीतस्तद् वैश्यप्रधानम् । यत्र कृष्णस्तच्छूद्रप्रधानमिति ॥ २९४ ॥ बीभत्सोः । बध बन्धने । नित्यसन्नन्तोऽयमिति केचित् । अर्थविशेषे सन्विधानादन्यत्र न सन्प्रसङ्ग इति तु युक्तम् । तथाहि–**'मान्-बध-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य'** [अ.सू.३.१.६] इति सूत्रवृत्तौ जयादित्यः– **'अत्रापि सन्नर्थविशेष इष्यते । मानेर्जिज्ञासायाम् । बधेर्वैरूप्ये । दानेरार्जवे । शानेर्निशाने'** इति । तेन बन्धने बधयति बाधते वा । वैरूप्येऽर्थे बीभत्सते । तथाच बीभत्सन्ते वैरूप्यं यान्ति शत्रवोऽनेनेति बीभत्सुः । अथच बीभत्सते शत्रुभयङ्करो भवतीति बीभत्सुः । अथच बीभत्सते शत्रूनपि साधून् कृपयतीति बीभत्सुः । तथाहि बीभत्सपदार्थं वर्णयन्ति–**'बीभत्सो विकृते पार्थे क्रूरे पापघृणात्मनोः'** इति । एतेन हनुमतो ध्वजगतत्वादेव वस्तुतो बीभत्सुर्बीभत्सुर्बभूवेत्युक्तं भवति । **'न कुर्यां कर्म बीभत्सं युध्यमानः कदाचन । तेन देवमनुष्येषु बीभत्सुरिति मां विदुः'** [वि.प.४२.३१] इति तु गोग्रहणे । बीभत्सादेव बीभत्सते । तेन बीभत्सुरित्यर्थः । केचित्तु भदि कल्याणे इति धातोः सनि बीभत्सुरिति रूपमित्याचक्षते । बीभत्सोरर्जुनस्य ध्वजे स्थित्वा गर्जनमात्रेणार्जुनस्य शत्रुपराभवरूपे वरे च तेन दत्ते । बीभत्सोरिति ध्वजविशेषणं वा । शत्रुभयङ्कराद् ध्वजात् । रथाग्रस्थितं ध्वजमाराद् दृष्ट्वैवारयो भीयासुः–'अयमिदानीमागमिष्यत्यर्जुनः' इति । का कथा पुनरर्जुनं दृष्ट्वेत्यर्थः । **'विजयस्य ध्वजस्थश्च नादान् मोक्ष्यामि दारुणान्'** [व.प.१५३.१८] इति च । यस्य सरसि सौगन्धिकानि विकसन्ति तत् सौगन्धिकं वनम् । अत्यग्ररूपम्, अत्यद्भुतदर्शनम् ॥ २९५ ॥ नळानि नळिनानि सन्त्यस्यामिति नळिनी पुष्करिणी । पद्माकरं सरः । **'नळिनेऽपि नळं मतम्'** इत्यभिधानम् । समासदत् समीप-माससाद ॥ २९६ ॥ **'नवावतारो रूपस्य विक्रीडन्निव पाण्डवः'** [व.प.१४८.३५] इति यक्षयुद्धे । सङ्घमित्येव प्रतनं

---

१. **'–र्गर्जितेनैव'** इति क्वचित् ।
२. **'वनमप्यग्र–'**
३. **'नलिनीमेत्य'**
४. **'–ण्ययुतानि सङ्घचे ।'**

वराच्छिवस्यैव परैरजेयाः शस्त्रास्त्रवृष्टिं मुमुचुः सुभीमाम् ।
भीमेऽखिलज्ञे तपसां निधाने बलोदधौ शैवशास्त्रं वदन्तः ॥ २९८ ॥

तान् वैष्णवैरेव शास्त्रैः स भीमो विजित्य पूर्वं वाङ्मये सङ्गरे तु ।
शस्त्रास्त्रवर्षस्य कुर्वन् प्रतीपं जघ्नेऽखिलान् गदया तेषु वीरान् ॥ २९९ ॥

'वातेन कुन्त्यां बलवान् स जातः शूरस्तपस्वी द्विषतां निहन्ता ।
'सत्ये च धर्म्मे च रतः सदैव पराक्रमे शत्रुभिरप्रधृष्यः' ॥ ३०० ॥

तत्रापरांश्चैव बहूनसत्यं निरीश्वरं चाप्रतिष्ठं च लोकम् ।
सिद्धोऽहमीशोऽहमिति ब्रुवाणान् गुणान् विष्णोः ख्यापयन् वादतोऽजैत् ॥ ३०१ ॥

भिन्नं विष्णुमधिकं सर्वतश्च ब्रुवन् प्रवीरान्[1] लक्षमेषां निजघ्ने[2] ।
'ते तस्य वीर्यं च बलं च दृष्ट्वा विद्याबलं बाहुबलं तथैव ।
'अशक्नुवन्तः सहिताः समस्ता हतप्रवीराः सहसा निवृत्ताः' ॥ ३०२ ॥

**परैः शत्रुभिः ॥ २९८–९ ॥ शिववरादजेयान् कथं जिग्य इत्यतस्तत्स्वरूपं निरूपयति– वातेनेति ॥३००॥ विष्णोः गुणान् ख्यापयन् । अत एव विष्णुं सर्वतः भिन्नं सर्वतोऽधिकं ब्रुवन् । ब्रुवाणान् बहूंश्च वादतः अजैत् । 'जघ्नेऽखिलान् गदया तेषु वीरान्' इत्युक्तम् । तत्र कति हता इत्याकाङ्क्षायामाह– वीरान् लक्ष-मेषां निजघ्न इति । ते हतावशिष्टाः । बलं शरीरसत्त्वम् । विद्याबलं बाहुबलं इति द्विविधं बलमिति ॥ ३०१–२ ॥**

युद्धवचनम् । सङ्ख्यमित्यर्वाचीनानां कोशकृतां वैयाकरणानां च भ्रमजं पदम् । समेत्य खनन्ति खन्यते वाऽत्र । खनु अवदारणे । क्रोधवशा इति गणनाम । **'तच्च क्रोधवशा नाम राक्षसा राजशासनात् । रक्षन्ति शतसाहस्राश्चित्रायुध-परिग्रहाः'** [व.प. १५४.११] इति च । भारते शतसाहस्रा इति, अत्र च **'शतं सहस्राणि'** इति चावशिष्टानामल्पसङ्ख्याना-मुपेक्षया । अत एव लक्षहननानन्तरमपि **'हतावशिष्टाः'** इति वक्ष्यति ॥ २९७ ॥ परैः वायोरन्यैः देवैरपि । वरादेव नतु स्वशक्त्या । स्वतो भीमाम् । वरात् पुनः सुभीमाम् ॥ २९८ ॥ वाङ्मये सङ्गरे तु । **'ते तस्य वीर्यं च बलं च दृष्ट्वा विद्याबलं बाहुबलं तथैव'** [व.प.१५५.२२] इति भारतवचनसूचितोऽयमर्थः ॥ २९९ ॥ **'वातेन कुन्त्याम्–'** [१५५.२०] इति समग्रं भारतवचनम् ॥ ३०० ॥ असत्यमित्यादि । तेन तेषां तमोयोग्यत्वं स्फुटमाह । तथाहि भगवद्गीतासु–**'असत्य-मप्रतिष्ठं ते जगदाहुरनीश्वरम्'** [१६.८] इति, **'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी'** [१४] इति, **'मामप्राप्यैव**

१. **'ब्रुवन् वीरान्'** इति क्वचित् । वे.ती. पाठोऽपि तथेति भाति ।
२. **'–मेषां च जघ्ने'** इति क्वचित् ।

विक्रम्य तान् गदयाऽसौ निहत्य विद्राप्य[1] सर्वान् नळिनीं[2] प्रविश्य ।
पीत्वाऽमृताम्भश्च ततोऽम्बुजानि दिव्यानि जग्राह कुरुप्रवीरः ॥ ३०३ ॥

अथो कलहशंसीनि [3]निमित्तानि युधिष्ठिरः ।
दृष्ट्वा कृष्णामपृच्छच्च क्व भीम इति दीनधीः ॥ ३०४ ॥

सौगन्धिकार्थं यातं तं श्रुत्वा कृष्णामुखान्नृपः ।
आरुह्य राक्षसश्रेष्ठान् कृष्णया भ्रातृभिः सह ॥ ३०५ ॥

ययौ वृकोदरो यत्र दृष्ट्वा चैनमवस्थितम् ।
उवाच[4] मैवमित्येनं भीतो गिरिशकोपतः ॥ ३०६ ॥

देवेभ्यो मरणाद् भीता राक्षसा वित्तपाज्ञया ।
तदीयां नळिनीं[2] ते हि रक्षन्त्यस्याऽश्रयो हरः ।
जानन् वित्तेश्वरो भीममाहात्म्यं न चुकोप ह ॥ ३०७ ॥

**अमृताम्भः अमृतसदृशाम्भः**[5] **॥ ३०३–५९ ॥**

---

**कौन्तेय ततो यान्त्यधमां गतिम्'** [२०] इति च । अजैत् अजैषीत् । अक्षरलोपेनानायासमजैषीदित्याह । **'अजैः स्वर्वतीरपः'** [ऋ.सं.८.४०.११] **'अजैरध्वरे मतीः'** [९.७२.५] इत्यृग्वेदे । अजैरजैषीरित्यर्थः ॥ ३०१ ॥ प्रथममागतान् वीरान् जघ्ने । तेष्वपि प्रकृष्टाः प्रवीराः परस्तादागताः । तानपि प्रथमं वादतोऽजयत् । पश्चान्निजघ्ने । पुनरपि स्वोक्तार्थे भारतवचनमेव संवादयति– ते तस्येति । साम्प्रतमुत्तरार्धं किञ्चिद् व्यत्यस्य अनन्वितं पाठं पठन्ति–**'अशक्नुवन्तः सहितं समन्ताद् द्रुतं प्रवीराः सहसा निवृत्ताः'** [व.प.१५५.२२] इति ॥३०२॥ अमृतकल्पमम्भः पीत्वा । **'स शक्रवद् दानवदैत्यसङ्घान् विक्रम्य जित्वा च रणेऽरिसङ्घान् । विगाह्य तां पुष्करिणीं जितारिः कामं स जग्राह ततोऽम्बुजानि । ततः स पीत्वाऽमृतकल्पमम्भो भूयो बभूवोत्तमवीर्यतेजाः । उत्पाट्य जग्राह ततोऽम्बुजानि सौगन्धिकान्युत्तमगन्धवन्ति'** [व.प.१५५.२४–५] इति च भारते ॥ ३०३ ॥ कलहशंसीनि । **'ततो वायुर्महान् शीघ्रो नीचैः शर्करवर्षणः । प्रादुरासीत् खरस्पर्शः सङ्ग्राममभिचोदयन्'** [१५६.२] इत्यादीनि ॥ ३०४–५ ॥ यत्र वृकोदरो ययौ तत्र स्वयं भ्रातृभिः सह ययौ । अवज्ञया स्थितम् । 'मैवं कर्तव्यमासीत्' इत्येनमुवाच ॥ ३०६ ॥ अस्य

---

१. **'विद्राव्य'** २. **'नलिनीम्'** ३. **'–सीनि कारणानि'** इति क्वचित् । ४. **'प्रोवाच'** इति क्वचित् ।

५. इतः परम्– **'एवमन्येऽपि–'** [३६०] इति श्लोकपर्यन्तं षट्पञ्चाशतः श्लोकानां व्याख्यानमादर्शे न दृश्यते । सम्भाव्यते गलितमिति । आदर्शान्तरमन्वेषणीयं भवति ।

वसत्सु तत्र पार्थेषु पुनः कतिपयैर्दिनैः ।
उवाच भीमसेनस्य यशोधर्म्माभिवृद्धये[१] ॥ ३०८ ॥

पञ्चवर्ण्णानि पुष्पाणि कृष्णा वीक्ष्याऽहृतानि तु ।
मारुतेन कुबेरस्य गृहान्नृभिरगम्यतः ॥ ३०९ ॥

अगम्योऽयं गिरिः सर्वैः कुबेरेणाभिपालितः ।
अद्य त्वयैव गन्तव्यो विधूयाखिलराक्षसान् ॥ ३१० ॥

इत्युक्त आशु सगदः सधनुः सबाणो भीमो गिरीन्द्रमजितोरुबलो विगाहे ।
प्राप्तं निशाम्य[२] बलदैवतसूनुमत्र पद्मत्रयं न्यरुणदुद्धतराक्षसानाम् ॥ ३११ ॥

अग्रे निधाय मणिमन्तमजेयमुग्रं शम्भोर्वराद् विविधशस्त्रमहाभिवृष्ट्या[३] ।
तान् सर्वराक्षसगणान् मणिमत्समेतान् भीमो जघान सपदि प्रवरैः शरौघैः॥ ३१२ ॥

---

वित्तपस्य । स्वाश्रयाद्धरादप्यधिकं भीममाहात्म्यं जानन् । हेत्यास्वादे ॥ ३०७ ॥ तत्र सौगन्धिकवनप्रान्ते आर्ष्टिषेणस्याऽश्रमे । **'गिरेः शिखरमुद्यानमिदं भारतसत्तम'** [व.प.१६०.२८], **'एतदेवंविधं चित्रमिह तात युधिष्ठिर'** [३०], **'वसध्वं पाण्डवश्रेष्ठा यावदर्जुनदर्शनम्'** [३१] इति चार्ष्टिषेणवचनम् । कतिपयैर्दिनैः । कतिपयेषु दिनेषु गतेषु ॥३०८॥ मारुतेनाऽहृतानि । गरुडेन नागाहरणकथा भारतेऽत्रोक्ता सौगन्धिकाहरणेऽनुसन्धेयेत्युक्तम् । तत्र गमकमाह– कुबेरस्य गृहान्नृभिरगम्यादिति । कुबेरसद्मनः समया ह्यार्ष्टिषेणाश्रमम् । शिखरे कुबेरसदनम् । तटे चाऽर्ष्टिषेणस्य । कुसुमानि वातनीतानि सहजमधःपतन्ति । न तत्र गरुडपक्षपवनापेक्षा । दूरे च नरनारायणाश्रमं सौगन्धिकवनात् । अतस्तत् सुपर्णपर्णानिलानीतमिति सुन्दरम् । व्यत्यस्य कथनं तु पुराणादिशैलीप्रभेद एवेति न कोऽपि दोषः ॥ ३०९ ॥ अगम्योऽयं गिरिः । **'नचाप्यतः परं शक्यं गन्तुं भारतसत्तमाः । विहारस्तत्र देवानाममानुषगतिस्तु सा'** [व.प.१६०.२२] इति, **'इह वैश्रवणस्तात पर्वसन्धिषु दृश्यते । शिखरे तं समासीनमधिपं यक्षरक्षसाम् । प्रेक्षन्ते सर्वभूतानि भानुमन्तमिवोदितम्'** [२६–७] इति च ॥ ३१० ॥ विगाहे विजगाहे विलोळयामास । गाहू विलोडने । **'विलोडनं परिमलनम्'** इति क्षीरस्वामी । विमर्दनमित्येतत् । अक्षरलोपेन तस्य लीलामात्रमेतदित्याह । यद् भीमो विजगाहे तदहमेव विगाह इति च प्रकटयामास विनेयानुजिघृक्षया । पद्मत्रयमिति महापद्मत्रयमित्यर्थः । **'महापद्मत्रये हते'** इति हि वक्ष्यति । कोटीनां लक्षं महापद्ममिति वदन्ति । विविधशस्त्राणां महत्या निरन्तरया अभितः सर्वतोदिशं निरवकाशया च वृष्ट्या न्यरुणत् । शम्भोर्वरादजेयमवध्यं मणिमन्तम्, राक्षसानां पद्मत्रयं च ॥ ३११–३ ॥

---

१. **'–धर्मविवृद्धये'** इति कचित् । २. **'निशम्य'** ३. **'–महास्त्रवृष्ट्या'**

अवद्ध्यांस्तान् क्षणेनैव हत्वा भीमो महाबलः ।
रणे क्रोधवशान् सर्वानतिष्ठद् गिरिमूर्द्धनि ॥ ३१३ ॥

ते हता भीमसेनेन प्रापुरन्धन्तमोऽखिलाः ।
हताः[1] सौगन्धिकवने मणिमांश्च पुनः कलौ ॥ ३१४ ॥

जातो मिथ्यामतिं सम्यगास्तीर्य्याऽपुस्तमोऽधिकम्[2] ।
ततो वैश्रवणो राजा महापद्मत्रये हते ॥ ३१५ ॥

राक्षसानामवद्ध्यानां सखाये मणिमत्यपि ।
आरुरोह रथं दिव्यं योद्धुकामो वृकोदरम् ॥ ३१६ ॥

असुरावेशतस्तस्य भीमे क्रोधो महानभूत् ।
स आजगाम भीमेन योद्धुं वित्तपतिः स्वयम् ॥ ३१७ ॥

तस्मिन् काले भीमसेनस्य घोषं श्रुत्वा राजाऽपृच्छदाशु स्म कृष्णाम् ।
क्व भीम इत्येव तयोदितं च श्रुत्वा जगामाऽशु रक्षोंससंस्थः ॥ ३१८ ॥

सभ्रातृके मुनिभिः कृष्णया च गते राजन्यत्र भीमं कुबेरः ।
दृष्ट्वाऽसुरावेशतो धर्मजं च किञ्चिन्मुक्तः स्नेहयुक्तस्तथाऽऽस ॥ ३१९ ॥

---

अत्र हताः तमः प्रापुः । पूर्वं सौगन्धिकवने हताश्च क्रोधवशाः, अत्र हतो मणिमांश्च पुनः कलौ जातः, चकारेण सौगन्धिकवने हताः क्रोधवशाश्च पुनः कलौ जाताः, मिथ्यामतिं मायावादेनासच्छास्त्रेण सम्यक् प्रसार्य अधिकं तम आपुः ॥३१४॥ विश्रवसोऽपत्यं वैश्रवणः । विश्रवसो विश्रवणादेशः । **'शिवादिभ्योऽण्'** [अ.सू.४.१.११२] इत्यपत्यार्थेऽण् । राक्षसानां महापद्मत्रये । सह अयत इति सहायः । ह्रस्य खः । सखायोऽनुचरः सखा च । यथा मन्था मन्थानश्च तथा सखा सखायश्च ॥ ३१६ ॥ सौगन्धिकाहरणे यो न चुकोप स एवात्र कुतश्चुकोप? आह– असुरावेशतः ॥ ३१७–८ ॥ सभ्रातृके मुनिभिः कृष्णया च । भारते–**'द्रौपदीमार्ष्टिषेणाय सम्प्रधार्य'** [व.प.१६२.३] इति पठ्यते । **'रक्षार्थमार्ष्टिषेणाय समर्प्य'** इति च व्याचक्षते । प्रमादोऽयम् । द्रौपदी किल भीमं तत्र प्रेषयामास । सैव तं द्रष्टुं न ययाविति न युक्तं वचः । **'धौम्यः**

---

१. **'हतः'** २. **'–र्याऽप तमो–'**

**धृतायुधं भीममीक्ष्यापि किञ्चिद् दैत्यावेशाद् बहु मेने न भीमम् ।**
**अगस्त्यशापं चावदत् स्वस्य पूर्वं सखायनाशे कारणं राजराजः ॥ ३२० ॥**

**दैत्यावेशादुज्झितः शान्तभावो ददौ निजं स्थानमेषां सुतुष्टः ।**
**आवासार्थं तेऽवसंस्तत्र पार्थास्तथाऽन्येषां दैवतानां[1] गृहेषु ॥ ३२१ ॥**

**तत्रैव तेषां वसतां महात्मनामानन्दिनामब्दचतुष्टये गते ।**
**पश्चाब्दमद्ध्याप्य महान्ति चास्त्राणीन्द्रो गुर्वर्थं फल्गुनेनार्थितोऽभूत् ॥ ३२२ ॥**

**वधं वव्रे स्वशत्रूणामिन्द्रः पार्थात् स्वरूपतः ।**
**निवातकवचाख्यानां येषां ब्रह्मा ददौ वरम्[2] ॥ ३२३ ॥**

**अवद्ध्यत्वं[3] सुरैर्दैत्यैर्गन्धर्वैः पक्षिराक्षसैः[4] ।**
**पुनरिन्द्रेणार्थितोऽदाज्जहीमान् नरदेहवान् ॥ ३२४ ॥**

---

**कृष्णा च विप्राश्च सर्वे च सुहृदस्तथा । भीमसेनमपश्यन्तः सर्वे विमनसोऽभवन्'** [१६२.२] इति पूर्ववचनाननुगुणं च । नहि कृष्णामेकामत्यन्तं विमनसं विहायापरे जग्मुरिति वक्तुमुचितम् । अतः 'भ्रातृभ्यां यमाभ्यां सहिते धौम्यादि-मुनिभिः कृष्णया च सहिते गते धर्मराजे' इत्याह भगवत्पादः । कोऽर्थस्तर्हि भारतवचनस्य । शृणु–आर्ष्टिषेणाय तन्निमित्तम्, तदादेशपालनार्थं द्रौपदीमपि सम्प्रधार्य राक्षसेन वाहयित्वा शैलमारुरुहुरित्यर्थः । धर्मजं च दृष्ट्वा असुरावेशतः किञ्चिन्मुक्तः । अत एव किञ्चित्स्नेहयुक्तश्च ॥ ३१९ ॥ पूर्वमविद्यमानो दैत्यावेशः कथं सम्प्रत्यबाधत? मुनिशापादि-त्याशयेन अगस्त्यशापं चावदत् । **'राक्षसाधिपतिः श्रीमान् मणिमान्नाम मे सखा । मौर्ख्यादज्ञानभावाच्च दर्पान्मोहाच्च पार्थिव । न्यष्ठीवदाकाशगतो महर्षेस्तस्य मूर्धनि । ततः क्रुद्धः स भगवानुवाचेदं तपोधनः । मामवज्ञाय दुष्टात्मा यस्मादेव सखा तव । धर्षणां कृतवानेतां पश्यतस्ते धनेश्वर । तस्मात् सहैभिः सैन्यैस्ते वधं प्राप्स्यति मानुषात् । त्वं चाप्येभिर्हतैः सैन्यैः क्लेशं प्राप्नुहि दुर्मते । तमेव मानुषं दृष्ट्वा किल्बिषाद् विप्रमोक्ष्यसे'** [व.प.१६२.६१–४] इति । सखायस्यानुचरस्य मणिमतः । राज्ञां यक्षाणां राजा राजराजः कुबेरः । राज्ञा चन्द्रेण सह उत्तरदिगधिपत्वेन राजत इति वा । **'यक्षे चन्द्रे च राजा स्यात्'** इत्यभिदधति ॥ ३२० ॥ भावः स्वभावः । शान्तस्वभावः । भाव आशयः । शान्ता-शयः । भावो मनः । शान्तमनाः । भावश्चेष्टा । शान्तयुद्धचेष्टः पूर्वं भीमं दृष्ट्वाऽपि किञ्चिदेव तुष्ट आस । इदानीं दैत्यावेशादुज्झितः सुतुष्ट आस ॥ ३२१ ॥ गुरुदक्षिणार्थम् । गुरोरर्थं दक्षिणां प्रति वा ॥ ३२२–३ ॥ पुनरर्थितो ब्रह्मा

---

१. 'देवतानाम्'
२. **'–ख्यानामेषां ब्रह्मा वरं ददौ ।'**
३. 'अवध्यतां सुरै–'
४. **'–र्वैर्यक्षराक्षसैः'**

**इति तेनार्ज्जुनं शक्रः स्वात्मानं नरदेहगम् ।**
**जगाद तान् जहीत्येव किरीटं स्वं निबद्ध्य च[1] ॥ ३२५ ॥**

**ऐन्द्रं स्यन्दनमारुह्य पार्त्थो मातलिसंयुतः ।**
**गाण्डीवं धनुरादाय ययौ हन्तुं महासुरान् ॥ ३२६ ॥**

**शङ्खं ददुस्तस्य देवा देवदत्तः स शङ्खराट् ।**
**नादयन् शङ्खघोषेण धनुर्विष्फारयन्[2] महत् ॥ ३२७ ॥**

**दधानः कुण्डले दिव्ये शक्रदत्ते सुभास्वरे ।**
**आससाद पुरं दिव्यं दैत्यानामिन्द्रनन्दनः ॥ ३२८ ॥**

**तस्य शङ्खध्वनिं श्रुत्वा गाण्डीवस्य च निस्स्वनम् ।**
**अभिसस्रुर्म्महावीर्य्या निवातकवचासुराः ॥ ३२९ ॥**

**तिस्रः कोट्यो दानवानां स्वयम्भुवरगर्विताः ।**
**नानायुधै रणे पार्त्थमभ्यवर्षन् सुसंहताः ॥ ३३० ॥**

---

इमान् निवातकवचान् नरदेहवान् जहीति वरमदात् । **‘ततः शक्रेण भगवान् स्वयम्भूरभिचोदितः । विधत्तां भगवानत्रेत्यात्मनो हितकाम्यया । तत उक्तो भगवता दिष्टमत्रेति भारत । भविताऽन्तस्त्वमप्येषां देहेनान्येन वृत्रहन्’** [व.प.१७४.३०–१] इति च ॥३२४॥ किरीटं स्वं निबद्ध्य । अतः किरीटीति प्रथितः ॥३२५–६॥ देवा ददुः । अत एव देवदत्तनामा । **‘चिस्फुरोर्णौ’** [अ.सू.६.१.५४] इति स्मरणात् स्फुरतेर्णौ परतः एचः स्थाने विभाषा आकारादशो भवति । स्फारयति, स्फोरयति । **‘स्फुरतिस्फुलत्योर्निर्निविभ्यः’** [अ.सू.८.३.७६] इत्यनेन स्फुरतेः सकारस्य वि इत्यत उत्तरस्य वा मूर्धन्यादेशः । विष्फारयन् । विस्फारयन् । ज्याकर्षणेन टङ्कारं जनयन् ॥ ३२७ ॥ कनकमयत्वाद् भास्वरे । दिव्यत्वात् सुभास्वरे । दिव्यं दुर्गमत्वाद् विजयमानं द्योतमानं च पुरम् । इन्द्रस्य नन्दनः । इन्द्र एव नन्दनः । नरदेहेन स्वशत्रुहननेन स्वयमेव स्वस्याऽनन्दकृद् बभूव ॥ ३२८–९ ॥ **‘निवातकवचा नाम दानवा मम शत्रवः । समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत । तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः । तांस्तत्र जहि कौन्तेय गुर्वर्थस्ते भविष्यति’** [व.प.१७०.११–१२] इति च । **‘ततो निवातकवचैरितः प्रच्याविताः सुराः । तपस्तप्त्वा महत् तीव्रं प्रसाद्य च पितामहम् । इदं वृतं निवासाय देवेभ्यश्चाभयं युधि’** [१७४.२८–९] इति च ।

---

१. **‘किरीटं सन्निबद्ध्य च’** इति क्वचित् । २. **‘–र्विस्फारयन्’**

**तेषां स शस्त्राणि किरीटमाली निवार्य्य गाण्डीवधनुप्रमुक्तैः[1] ।**
**शरैः शिरांसि प्रचकर्त्त वीरो महास्त्रशिक्षाबलसम्प्रयुक्तैः ॥ ३३१ ॥**

**सर्वे हतास्तेन महारथेन ते दानवाः सोऽपि ययौ तथाऽन्यान् ।**
**पौलोमकालेयगणाभिधानान् षष्टिं सहस्राणि महारथानाम् ॥ ३३२ ॥**

**तानस्त्रशस्त्राण्यभिवर्षमाणान् धनञ्जयः पाशुपतास्त्रतो द्राक् ।**
**दग्ध्वा ययौ पुनरेवेन्द्रसद्म तं सस्वजे प्रीतियुतश्च[2] शक्रः ॥ ३३३ ॥**

**ययुरन्धं तमस्तेऽपि [3]सर्वदेवद्विषोऽसुराः ।**
**अथानुज्ञाप्य पितरं रथेनैन्द्रेण भास्वता ।**
**सोदर्य्याणां सकाशं स ययौ वज्रधरात्मजः ॥ ३३४ ॥**

---

सुसंहता ऐकमत्येन सङ्गताः, सुदृढाश्च । **'संहतं सङ्गते दृढे'** इत्यभिधानम् ॥ ३३० ॥ किरीटं मलत इति किरीटमाली । मल धारणे । अथच शिरसि किरीटं कण्ठे माला चास्य स्त इति किरीटमाली । एतेनेन्द्रः किरीटेन सह विजयमालां च कण्ठे निबबन्धेति ज्ञायते । तदेतत् **'किरीटं स्वं निबद्धय च'** [३२५] इति चकारेण सूचितम् । **'अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् । देवदत्तं च मे शङ्खं देवः प्रादान्महारवम्'** [व.प.१७६.४] इति च भारते । शिक्षाप्रकर्षेण सलीलं मुक्तैः । प्रचकर्त प्रसभं चकर्त । महतां मन्त्रसाध्यानामस्त्राणां शिक्षया लब्धं यद् बलं तेन समर्थतया प्रयुक्तैः । धनुप्रमुक्तैरित्यविसर्गः प्राचीनपाठः । धनुना प्रमुक्तैरित्यर्थः । पुल्लिङ्गेन धनुषो दार्ढ्यातिशयमाह । **'धनुः पुमान् पियालद्रौ राशिभेदे शरासने'** इति नान्तेषु मेदिनी ॥ ३३१ ॥ पुलोमाया अपत्यानि पौलोमाः । पुलोमाया अण् । कालायाः कालकाया वा अपत्यानि कालेयाः कालकेया वा । **'स्त्रीभ्यो ढक्'** [अ.सू.४.१.१२०] । **'निवर्तमानेन मया महद् दृष्टं ततोऽपरम् । पुरं कामगमं दिव्यं पावकार्कसमप्रभम् । पौलोमैः कालकेयैश्च नित्यहृष्टैरधिष्ठितम्'** [१७५.१–२] इति च । **'पुलोमा नाम दैतेयी कालका च महासुरी । दिव्यं वर्षसहस्रं ते चेरतुः परमं तपः । तपसोऽन्ते ततस्ताभ्यां स्वयम्भूरददाद् वरम् । अगृह्णीतां वरं ते तु सुतानामल्पदुःखताम् । अवध्यतां च राजेन्द्र सुरराक्षसपन्नगैः'** [१७५. ७–९] इति । **'हिरण्यपुरमित्येवं ख्यायते नगरं महत् । रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः'** [१७५.१३] इति च । **'मानुषान्मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा'** [१५] इति च । षष्टिं सहस्राणीति । **'अहं पारे समुद्रस्य हिरण्यपुरवासिनम् । हत्वा षष्टिं सहस्राणि जयं सम्प्राप्तवान् रणे'** [वि.रा. ४३.४७] इति गोग्रहणे ॥ ३३२ ॥ वर्षणमिहाऽत्मरक्षार्थमित्यात्मनेभाषा ॥ ३३३ ॥ पितरमिन्द्रम् ॥ ३३४ ॥

---

१. **'–धनुःप्रमुक्तैः'** २. **'प्रीतियुक्तश्च'** इति क्वचित् ।
३. **'तमश्चापि सर्वे देव–'** । **'तमस्तेऽपि सर्वे देव–'** इति च क्वचित् ।

**आयान्तमीक्ष्य बीभत्सुं मुमुदुर्भ्रातरोऽधिकम् ।**
**ऊषुश्च चतुरोऽब्दांस्ते[1] पुनर्म्मेरौ प्रमोदिनः[2]** ॥ ३३५ ॥

**कथाभिर्वासुदेवस्य ध्यानेनाभ्यर्च्चनेन च ।**
**ययौ कालः सुखेनैव तेषां विष्णुरतात्मनाम्** ॥ ३३६ ॥

**नैव शत्रूननुत्साद्य नानादाय महद् यशः ।**
**नाकृत्वा वासुदेवाज्ञां राज्ञां मुख्यगतिर्भवेत्** ॥ ३३७ ॥

**तदन्येषां तु वर्णानां क्षमा बाह्येषु शत्रुषु ।**
**प्रायो धर्म्म इति प्रोक्तो हरेराज्ञाऽखिलस्य च** ॥ ३३८ ॥

**इति भीमवचः श्रुत्वा ससोदर्य्यो युधिष्ठिरः ।**
**राक्षसस्कन्धमारूढः कृष्णया चाऽययौ पुनः** ॥ ३३९ ॥

**पादेषु तेषु निवसत्सु हिमाचलस्य[3] याम्याश्रितेषु पवमानसुतः कदाचित् ।**
**धन्वी मृगाननुचरन् सहसाऽऽससाद हाऽयोः[4] सुतं नहुषमाजगरोरुरूपम् ॥ ३४० ॥**

---

**'समेत्य पार्थेन यथैकरात्रमूषुः समास्तत्र तथा चतस्रः'** [१७८.५] इति च। एवमुपैकादशा वत्सरा अतीताः ॥ ३३५–७ ॥ बाह्येषु शत्रुषु । अन्तःशात्रवस्त्वक्षत्रियैरपि न क्षन्तव्याः । किन्तूत्साद्या एव । आपदि क्वचिदात्मरक्षाद्यर्थं बाह्यशात्रवोऽ-प्युत्साद्याः स्युरिति प्राय इत्युक्तम् । **'कुरुष्व बुद्धिं द्विषतां वधाय कृतागसां भारत निग्रहे च'** [व.प.१७८.१३] इत्यादि भीमवचनमाजगरे । हरेराज्ञा । तदाज्ञारूपश्रुतिस्मृत्युक्तानुष्ठानमित्यर्थः ॥ ३३८॥ हिमाचलस्य शृङ्गादवतीर्य तटान्तरमाययौ ॥ ३३९ ॥ हिमाचलस्य पादेषु प्रत्यन्तपर्वतेषु । याम्यां यमदेवत्यां दक्षिणां दिशमा-श्रितेषु । याम इति यमपर्यायः पठ्यते । यामवन्तो यामिनो मुनयः । तेन याम्याश्रितां मुनिजुष्टां च । यामी यमस्य भगिनी यमुना वा । तयाऽऽश्रितां वा । **'घटोत्कचं सानुचरं विसृज्य ततोऽभ्ययुर्यामुनमद्रिराजम्'** [व.प.१७९.१५] इति च । आससाद ह । साधोर्नहुषस्य शापमोक्षकालः सन्निहित इति भीमासादनं स्वदते हेति । आजगरम्, तत्राप्युरु रूपं यस्य । अजगर एव सरीसृपेषूरुरूपः । अस्य तु ततोऽप्युरुरूपमास । येन गजादिभक्षणेऽपि स प्रभुरासीदित्यर्थः ॥३४०॥

---

१. **'चतुरब्दांस्ते'** इति क्वचित् । २. **'प्रमोदिताः'** इति क्वचित् ।
३. **'हिमालयस्य'** ४. **'–साद ह्यायोः'** इति क्वचित् ।

१ पूर्वं हि वृत्रवधतोऽम्बुजनाळतन्तुसंस्थे[1] शचीप्रणयिनि प्रविचिन्त्य देवाः ।
चक्रुस्त्रिलोकपतिमायुसुतं वरं च दत्वाऽक्षिगोचरतपोऽस्य बलं च सर्वम् ॥ ३४१ ॥

स सर्वसुरविप्रेन्द्रतपश्च बलमक्षयम् ।
अवाप्य ववृधे नित्यं दर्प्पादैच्छच्छचीमपि ॥ ३४२ ॥

स इन्द्रवचनाच्छच्या महर्षिगणवाहने ।
नियुक्तो वञ्चनायैव वाहयामास तानृषीन् ॥ ३४३ ॥

स शचीप्रतिषेधार्थमगस्त्येन महात्मना ।
वेदप्रामाण्यविषये पृष्टो नेत्याह मूढधीः ।
प्रमाणमिति तेनोक्तः[2] शिरस्येनं पदाऽहनत् ॥ ३४४ ॥

तदा भृगुं तस्य जटासु लीनं कदाऽपि तस्याक्षिपथं न यातम् ।
आविश्य कञ्जप्रभवः शशाप व्रजाऽशु पापाजगरत्वमेव ॥ ३४५ ॥

**'ततो हते महावीर्ये वृत्रे देवभयङ्करे'** [उ.प.१०.४५], **'प्रतिच्छन्नोऽवसच्चाप्सु चेष्टमान इवोरगः'**[४९] इति भारत-वचनाभिप्रायमाह– अम्बुजनाळतन्तुसंस्थे शचीप्रणयिनीति । **'स आवसत् पुष्करनाळतन्तून्'** [६.१३.१५] इति हि भागवते । **'बिसतन्तुं प्रविष्टं च तत्रापश्यच्छतक्रतुम्'** [१४.११] इति, **'अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुम्'** [१६.१२] इति चोपरि । **'देवदानवयक्षाणामृषीणां रक्षसां तथा । पितृगन्धर्वभूतानां चक्षुर्विषयवर्तिनाम् । तेज आदास्यसे पश्यन् बलवांश्च भविष्यसि । धर्मं पुरस्कृत्य सदा सर्वलोकाधिपो भव'** [उ.प.११.७–८] इति च सेनो-द्योगे । **'चक्षुषा यं प्रपश्यामि प्राणिनां पृथिवीपते । तस्य तेजो हरिष्यामि तद्धि दृष्टेर्बलं मम'** [व.प.१८३.३५] इत्याजगरे ॥ ३४१–२ ॥ **'ऋषियानेन दिव्येन मामुपैहि जगत्पते । एवं तव वशे प्रीता भविष्यामीति तं वद'** [१५.४] इति शच्या इन्द्रवचनात् । शच्या महर्षिगणेन स्वशिबिकावाहने वञ्चनायैव नियुक्तः । स तु सत्यं मेने । तेन वाहयामास तानृषीन्, वहनकर्मणि नियोजयामासेत्यर्थः । तैरृषिभिः शिबिकां वाहयामासेत्येतत् ॥ ३४३ ॥ शचीप्रतिषेधार्थम् । नहुषं शचीगमनान्निवारयितुम् । वेदप्रामाण्यविषये । **'य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् । एते प्रमाणं भवत उताहो न–'** [१७.९] इति वेदप्रामाण्यविषये अगस्त्येन पृष्टः । यदि प्रमाणमित्याह तदा वेदवचनैरेव तं परस्त्रीसञ्जिगमिषातः परावर्तयिष्यामि । यदि नेत्याह तदा मौढ्यात् स्वयमेव नश्यतीत्याशयेन पृष्टो नेत्याह मूढधीः । **'नहुषो नेति तानाह तमसा मूढचेतनः'** [१७.१०] इति च । पुनस्तेनागस्त्येन प्रमाणमित्युक्त एनमगस्त्यं पदाऽहन् ॥ ३४४ ॥ तदा

१. **'–नालतन्तु–'** २. **'तेनोक्ते शिर–'**

**षष्ठे काले यस्त्वयाऽसादितः स्यात् स ते वशं यातु बलाधिकोऽपि ।**
**यदा गृहीतं पुरुषं निहन्तुं न शक्ष्यसे यदि स त्वद्गृहीतः ।**
**शक्तोऽपि नाऽत्मानमभिप्रमोचयेत् तदाऽस्य[1] स्यात् त्वत्तपोऽग्र्यं बलं च ॥ ३४६ ॥**

**सर्वदेवमुनीनां[2] यत् तपस्त्वां समुपाश्रितम् ।**
**तच्च सर्वं तमेवैति नात्र कार्य्या विचारणा ॥ ३४७ ॥**

भृगुम् । तथाहि– **'अथागस्त्यमृषिश्रेष्ठं वाहनायाऽजुहाव ह । ...ततो भृगुर्महातेजा मैत्रावरुणिमब्रवीत् । निमीलय स्वनयने जटां यावद् विशामि ते । सुरेन्द्रपातनायेति स च नेत्रे न्यमीलयत् । ततोऽगस्त्यस्याथ जटां दृष्ट्वा प्राविशद्च्युतः । भृगुः स सुमहातेजा पातनाय नृपस्य च'** [अनु.प.१५७.१४–६] इति चोपरि । तस्य अगस्त्यस्य जटासु, कदाऽपि तस्य नहुषस्याक्षिपथं न यातं भृगुम् । सर्वैर्देवैः समेत्य दत्तस्य वरस्य कथं भृगुशापमात्रेण निर्वीर्यता स्यात् । न केवलं देवाः । ब्रह्मा चामृतं पाययित्वा वरं ददौ । तथा हि स्मर्यते– **'वरदेन वरो दत्तो भवतो विदितश्च सः'** [अनु.प.१५६.१६] इति, **'अमृतं चास्य पानाय दत्तमस्मै पुरा विभो'** [१९] इति च । तत् कथं भृगुः शपेदित्यत आह– आविश्य कञ्जप्रभव इति । एतदपि सूचितम्– **'पितामहनियोगेन भवन्तं सोऽहमागतः । प्रतिकर्तुं बलवति नहुषे दर्पमोहिते'** [१५६.२२] इति भृगुवचनेन । 'त्वमगस्त्यजटायां निलीय तिष्ठ । अहं त्वां प्रविश्य शपामि' इति पितामहनियेगेन । ऋषिषु कृतापराध ऋषिभिरेव शप्तव्य इति भृगुमाविश्य शशाप । अगस्त्यस्य नहुषेण दृष्टत्वान्न शापसम्भव इति जटासु लीनो भृगुः शशाप । **'जटां प्राविशदच्युतः'** इत्यस्य चायमेवार्थः । प्रळयेऽप्यच्युतप्रज्ञः अत एवाच्युतनामा चतुर्मुखः जटां प्राविशत् । नृपस्य पातनाय भृगुश्च प्राविशदिति भारतवचनहृदयम् । ननु किमित्यगस्त्यं भृगुराह– **'चक्षुर्निमीलय'** इति । न ह्यगस्त्यश्चक्षुषा पुरःस्थितस्य तपो बलं वाऽकर्षति । सत्यमाह भवान् । नह्यगस्त्येन दृष्टे भृगौ काऽपि क्षतिः । अथापि **'निमीलय स्वनयने'** इत्याह । तेन ज्ञायते भृगुरगस्त्यं विनोनुदीति–'निमीलय नयने । मा नहुष इव त्वमपि मे तपोबलमहार्षीः' इति । एवं विनोदेऽपि कश्चनापूर्वोऽर्थः प्रतिभाति–**'निमीलय स्वनयने'** स्वरूपनयने इत्यर्थः । स्वरूपनयने विवृते ब्रह्मण आवेशमप्ययमन्तर्दृष्ट्या जानीयादेव । तन्माऽयं देवगुह्यमगस्त्योऽपि विज्ञासीदिति ॥ ३४५ ॥ प्रतितृतीयदिनं रात्रिः षष्ठकालः । प्रतिदिनं द्वे भोजने इति तृतीयदिनमध्याह्ने पञ्चमकालः । तद्रात्रिः षष्ठान्नकाल इति वदन्ति । मनुष्याणामयं षष्ठान्नकालो नाजगरस्येति केचिदेतं पक्षं नेच्छन्ति । तत्पक्षे प्रातःसङ्गवमध्याह्नापराह्णसायाः पञ्चकालाः । ततः परा रात्रिः षष्ठकालः । बलाधिकोऽपि । **'नहि मे मुच्यते कश्चित् कथञ्चित् प्रग्रहं गतः । गजो वा महिषो वाऽपि षष्ठे काले नरोत्तम'** [व.प.१८१.१६] इति च । अग्र्यं तपः, अग्र्यं बलं च ॥ ३४६ ॥ समष्ट्या त्वामुपाश्रितम् । यं गृहीतमपि निहन्तुं न शक्ष्यसे, यः शक्तोऽपि नाऽत्मानमभिप्रमोचयेत् तमेवैति । **'शक्ष्यसे'** इति स्वादेः शक्नोते रूपमिति विवक्षायां छान्दसमात्मनेभाषत्वम् । आत्मगामि ह्यशक्तिफलम् । दिवादेः शक्यतेर्वा रूपम्–**'शक मर्षणे'** इति । तदा शक्यति शक्यत इत्युभयमपि साधु । मर्षणं चान्ततः शकनमेव ॥ ३४७ ॥

१. 'तदा तस्य'

२. **'–मुनीन्द्राणां यत् तपस्त्वामुपाश्रितम् ।'**

**यदा प्रश्नांस्त्वदीयांश्च कश्चित् परिहरिष्यति ।**
**तदा गन्ताऽसि च दिवं विसृज्याऽजगरं[1] तनुम्** ॥ ३४८ ॥

**स्मृतिश्च मत्प्रसादेन सर्वदा ते भविष्यति ।**
**भृगुदेहगतेनैवं[2] शप्तः कमलयोनिना** ॥ ३४९ ॥

**पपाताजगरो भूत्वा नहुषः क्षणमात्रतः ।**
**इन्द्रोऽप्यवाप स्वं स्थानमिष्ट्वा विष्णुं विपापकः** ॥ ३५० ॥

**धर्म्मवृद्ध्यर्थमेवैतत् पापमासीच्छचीपतेः ।**
**नहि लोकावनं पापं त्रैलोक्येशस्य वज्रिणः** ॥ ३५१ ॥

**वृत्रं हत्वा महानासेत्यादि वेदपदं च यत् ।**
**'क्वचित् पापं च पुण्यानां[3] वृद्धये भवति स्फुटम्** ॥ ३५२ ॥

---

आजगरं तनुम् । आजगरीं तनुमिति वक्तव्यम् । आजगरं तनुमित्याह । तद्यथा **'दाशोदिताभिर्वचोभिः'** इत्याह, यथा **'अमूभिरयातयामैः'** इत्याह । तथेह विशेष्यविशेषणयोर्लिङ्गं व्यत्यास्यत्, स्वग्रन्थस्य छन्दस्तुल्यत्वशिक्षायै छात्राणाम् । देहस्य हेयताप्रदर्शनं लिङ्गव्यत्ययबीजम् । यो मदाच्छचीमैथुनमैच्छत् सोऽजगरो भूत्वा मैथुनसुखेनापि वर्जितो जिजीवेति । अथवा तनुः स्त्रियामिति प्रायोवादोऽयम् । पुंस्यपि भवति । तथाहि दशपादिका– **'भृ-मृ-शी-तॄ-चरि-त्सरि-तनि-मि-मस्जिभ्यः उः'** [१.९२] इति । अत्र हि निष्पन्नानि सर्वाणि पुंसि पठ्यन्ते । तथाहि– बिभर्तीति भरुः समुद्रः । म्रियन्तेऽत्रेति मरुः जलतृणवर्जितो देशः । शेतेऽत्यर्थमिति शयुः अजगरः । तरन्ति छायापुष्पफलार्थिनस्तमिति तरुः वृक्षः । चरन्त्यस्मादिति चरुः उपहारः । त्सरतीति त्सरुः आयुधग्रहणैकदेशः । तनोत्याहारजातं प्राप्येति तनुः देहः । मीयतेऽसाविति मयुः तुरङ्गवदनः । मज्जत्यम्भसीति मद्गुः पक्षी । सर्वेऽपि पुल्लिङ्गाः । तेन ज्ञायते कायवचनस्तनुशब्दः पुंस्यपि साधुरिति । तदेतज्ज्ञापयितुमपूर्वं प्रमेयं शिष्यानुकम्पया नूनमाजगरं तनुमित्याह । अधुनातनास्तु कोशमुग्धाः– **'आजगरीं तनुम्'** इति व्यत्यस्य पठन्ति भगवत्पादहृदयमविदन्तः ॥ ३४८–९ ॥ वृत्रहत्ययाऽपि अत्यल्पं पापमिवाऽसेति पापकमित्याह । **'अल्पे'** [अ.सू.५.३.८५] कन् भवतीति हि पाणिनिः । अथवा पापमिव पापकम् । **'इवे प्रतिकृतौ'** [अ.सू.५.३.९६] इति कन् । पापप्रतिकृतिः । विष्णुमिष्ट्वा तेन पापकेनापि विमुक्तः ॥ ३५०–१ ॥ **'इन्द्रो वै वृत्रं हत्वा महानभवत्'** इति हि श्रुतिरैतरेयी ॥ ३५२ ॥

---

१. **'दिवं गन्तासि च तदा विसृज्याऽजगरीं तनुम्'** २. **'–देहस्थितेनैवम्'** इति क्वचित् । ३. **'च धर्मस्य वृद्धये'** इति क्वचित् ।

'वृत्रहत्या यथेन्द्रस्य जाता धर्म्मस्य वृद्धये[१] ।
'देवानां वा मुनीनां वा भवेदेवं नवै नृणाम् ॥ ३५३ ॥

'पापं यत् पुण्यमेवैतदसुराणां विलोमतः' ।
एवं स्कान्दे हि वचनं न [२]पापं तच्छचीपतेः ॥ ३५४ ॥

नान्यस्य पदमाप्स्यन्ति तद् देवानां व्रतं परम् ।
तस्मात् ते नहुषं शक्रपदे [३]निदधुरीश्वराः ॥ ३५५ ॥

तस्मिन्नेवं निपतिते ब्रह्मणः शापकारणात् ।
अष्टाविंशतिमे प्राप युगे भीमस्तमुल्बणम् ॥ ३५६ ॥

जानन्नेव तदीयं तत् तप आदातुमीप्सया[४] ।
यत्तत् सुराणां सर्वेषां मुनीनां च तपः स्थितम् ॥ ३५७ ॥

तद् गृहीतुं[५] वशगवदिच्छयैवाऽस मारुतिः[६] ।
देवानां हि नृजातानामल्पं व्यक्तं भवेद् बलम् ॥ ३५८ ॥

---

एवं यत् पापं तत् पुण्यमेव इत्येतद् देवानां वा मुनीनां वा भवेत् । नृणां नवै भवेत् । तेषां पापं पापमेव । पुण्यं पुण्यमेव भवेत् । असुराणां विलोमतः, यत् पुण्यमेव एतदपि पापं भवेदिति पुराणवाक्यान्वयः ॥ ३५३–४ ॥ नान्यस्य पदमाप्स्यन्ति ईप्सन्तीत्यर्थः । क्वचिदिच्छार्थकोऽपि लृङ् भवति । तद् यथा 'प्रारप्स्यमाणस्य प्रबन्धस्याविघ्नातायै मङ्गलमाचरति' इत्याचक्षते । 'प्रारिप्सितस्य प्रबन्धस्य' इत्येव तदाचक्षते । 'करिष्यमाणस्य कर्मणः' इत्याचक्षते । 'चिकीर्षितस्य कर्मणः' इत्येव तदाचक्षते । **'न स्म कश्चन देवानां राज्ये वै कुरुते मतिम्'** [उ.प.१०.५३] इति च ॥ ३५५ ॥ अष्टाविंशे इति पर्याप्तम् । अथाप्यष्टाविंशतिमे इत्याह । तेनाक्षराधिक्येन अष्टाविंशस्य द्वापरस्येतरद्वापरापेक्षयाऽऽधिक्यमाह । यत्र हि स्वयं भगवान् व्यासत्वेनावततार । यत्र च प्राणनारायणौ भीमवासुदेवौ भूत्वा भुवमलश्चक्रतुः । यत्र च प्रायः सर्वदेवानां भूमाववतारः । वरबलेन उल्बणमनिग्राह्यं जानन्, नहुषोऽयमिति च जानन् । ईप्साऽत्रेच्छा । आदानस्य पृथगुक्तेः । पाकं पचतीत्यादिवत् ॥ ३५६–७ ॥ एवं ग्रहीतुमिति वक्तव्ये गृहीतुमित्याह वैदिकं पन्थानमनुपतन् । **'आशिष्ठो**

---

१. **'धर्माभिवृद्धये'** । **'धर्मविवृद्धये'** इति च क्वचित् । २. **'वचनं पापं नैतच्छची–'** ३. **'–पदे विदधु–'** इति क्वचित् ।
४. **'आदातुमिच्छया'** ५. **'ग्रहीतुम्'** ६. **'वशमगादिच्छयैव स–'** इति क्वचित् ।

इच्छया व्यक्ततां याति वायोरन्येषु तच्च न ।
नित्यव्यक्ता[१] गुणा विष्णोरिति शास्त्रस्य निर्ण्णयः ॥ ३५९ ॥

एवमन्येऽपि हि गुणा मानुषादिषु जन्मसु ।
देवानां मानुषादौ तु शक्येऽप्यव्यक्ततताकृतेः ॥ ३६० ॥

धर्म्मवृद्धिर्भवेत् तेषां प्रीतो भवति केशवः ।
तन्मानुषे बले तस्य वराद् वारितवत् स्थिते ॥ ३६१ ॥

दैवं बलं न शक्तोऽपि[२] व्यक्तं चक्रे न मारुतिः ।
आत्ममोक्षाय न प्रश्नान् व्याजहार स[३] चाभिभूः ॥ ३६२ ॥

विद्योपजीवनं धर्म्मो विप्राणामपि नो यतः ।
किमुत क्षत्रियस्येति जानन्नपि वृकोदरः ॥ ३६३ ॥

**शक्येऽप्यनभिव्यक्तताकर्तुः[४] ॥ ३६० ॥ (तत्) तदर्थं धर्मवृद्ध्यर्थं हरिप्रीत्यर्थं (च) ॥ ३६१ ॥ दैवं बलं व्यक्तं न चक्रे । न व्याजहार न (परिज)हार ॥ ३६२ ॥ तत्प्रश्नपरिहारं जानन्नपि ॥ ३६३ ॥**

---

**दृढिष्ठः'** इति हि श्रुतिः । **'विष्णु सृजिष्णु–'** इत्यादि स्वयमेवान्यत्र प्रयुयोज ॥ ३५८–९ ॥ एवं बलादन्ये ज्ञानादयोऽपि गुणाः मनुष्यतिर्यक्स्थावरजन्मसु देवानामल्पमेव व्यक्तं भवेत् । एवं देवानां मनुष्यादिविषये शक्येऽपि व्यक्तताकरणे । व्यक्ततताया अकृतेः धर्मवृद्धिः केशवप्रीतिश्च महत् फलम् । मानुषे मनुष्यशरीरसम्भवे । शक्यं च तन्निवारणं भीमस्य कर्तुम् । अतो वारितवदित्याह । स्वरूपबलं त्वबाधितं स्थितमपि नन व्यक्तं चक्रे, नैव प्रकटीचकार । एवमस्मिन् ग्रन्थे द्वित्रेषु स्थानेषु नञ्द्वयगर्भः पाठो दृश्यते । पुराणेषु चैतादृशाः प्रयोगा भवन्तीत्युक्तम् । नञ्द्वयं निषेधमेव सातिशयं गमयति । द्विरभिधानं ह्यभ्यासो नाम तात्पर्यमवधारयति । तद्य यथा–**'मामा भूद् विलम्बः'** । तथा नन चक्रे नैव चक्र इत्युक्तं भवति । अथच व्याख्यानान्तरम्– यद्यपि दैवं बलं न वारितवत् स्थितम् । अथापि शक्तोऽपि व्यक्तं चक्रे न मारुतिरिति । सर्वानभिभवतीति अभिभूः । सर्वाधिकशक्तिः ॥ ३६०–३ ॥

---

१. **'नित्यं व्यक्ता–'**
२. **'बलं सुशक्तोऽपि'** । **'न शक्तोऽपि व्यक्तं चक्रे स मारुतिः'** इति क्वचित् ।
३. **'–मोक्षाय यत् प्रश्नान् व्याजहार नचा–'**
४. एतेन **'शक्येऽप्यव्यक्तताकृतः'** इति टीकासम्मतः पाठः स्यादिति भाति ।

तत्प्रश्नपरिहारेण नाऽत्ममोक्षं समैच्छत ।
अयतन्तमपि ह्येनं चालनायापि नाशकत् ॥ ३६४ ॥

पूर्णोऽपि सर्वलोकानां बलेन नहुषस्तदा ।
वेष्टयित्वैव तं भीमं स्थितोऽसौ नाशकत् परम् ॥ ३६५ ॥

भ्रातृमात्रादिषु स्नेहात् क्षिप्रमात्मविमोक्षणम् ।
इच्छन्नपि न मोक्षाय यत्नं चक्रे वृकोदरः ॥ ३६६ ॥

सर्वदेवमुनीन्द्राणां तप आदातुमत्रगम् ।
भ्रात्रादिषु स्नेहवशान्न स्थातव्यमिहेत्यपि ॥ ३६७ ॥

मन्वानः कालतो भङ्गं स्वयमेवैष यास्यति ।
आज्ञया वासुदेवस्य दार्ढ्याद् देहस्य मे तथा ॥ ३६८ ॥

स्रस्ताङ्गे पतिते सर्प्पे यास्यामीति विचिन्तयन् ।
तस्थौ भीमो हरिं ध्यायन् स्वभावान्न तदिच्छया ॥ ३६९ ॥

तदैव ब्रह्मवचनात् पूर्वोक्तात् केशवाज्ञया ।
बलं तपश्च सर्वस्य तत्स्थमायाद् वृकोदरम् ॥ ३७० ॥

**'वारि(तवत् स्थिते' इति) यदुक्तं (तद्) विवृणोति– अयतन्तमित्यादिना ॥ ३६४ ॥ परं अन्यन्निगरणादिकं क(र्तुम्) ॥ ३६५–६ ॥ इह बन्धने ॥ ३६७–८ ॥ स्वभावात् हरिं ध्यायन् । तदिच्छया बन्धमोचनेच्छया ॥ ३६९ ॥ 'शक्तोऽपि नाऽत्मानमभिप्रमोचयेत्'(३४६) इत्यादिब्रह्मवचनात् ॥ ३७०–२ ॥**

---

आत्ममोक्षं प्रश्नपरिहारेण सम्पादयितुं नैच्छत । तेनाऽत्मनो महान् धर्मलाभ इत्यात्मनेभाषा । एनं भीमसेनमयतन्तमपि ॥ ३६४ ॥ वेष्टनात् परमधिकं किमपि कर्तुं नाशकत् ॥ ३६५ ॥ भ्रातृमात्रादिषु विद्यमानात् स्वविषयकस्नेहात् मा ते आतङ्किता भूवन्निति क्षिप्रमोक्षणमिच्छन्नपि, क्षिप्रं तद् भविष्यतीति जानन् तदर्थं पृथङ् नायतत ॥ ३६६–८ ॥ स्वभावादेव हरिं ध्यायन् । नाऽत्ममोक्षेच्छया ॥ ३६९ ॥ **'यदा गृहीतं पुरुषं निहन्तुं न शक्ष्यसे–'** [३४६] इत्यादिपूर्वोक्तात् केशवाज्ञया विहिताद् ब्रह्मवचनात् । अथच ब्रह्मवचनात्, नहुषो भग्नबलो भवत्विति पूर्वोक्तया [३६८] केशवाज्ञया च ॥ ३७० ॥

पूरिते नहुषस्थेन तपसा च बलेन च ।
भीमे स नहुषोऽथाऽसीत् स्रस्तभोगः शनैःशनैः ॥ ३७१ ॥

गते भीमे निमित्तानि दृष्ट्वा राजा युधिष्ठिरः ।
पप्रच्छ क्व गतो भीम इति कृष्णां चलन्मनाः ॥ ३७२ ॥

यातं मृगार्त्थं स निशम्य [1]तस्यास्तदूरुवेगात् पतितान्[2] नगेन्द्रान् ।
दृष्ट्वा पथा तेन ययौ स तत्र दृष्ट्वा च सर्प्पावृतमन्वपृच्छत् ॥ ३७३ ॥

स कारणं नहुषात् सर्वमेव शुश्राव तत्प्रश्नमशेषतश्च ।
भ्रातृस्नेहाद् व्याकरोद् धर्म्मसूनुस्तदैव सोऽप्यारुहत् स्वर्ग्गलोकम् ॥ ३७४ ॥

दिव्याम्बरे कुण्डलिनि स्वपूर्वे गते विमानेन स धर्म्मराजः ।
भीमश्चाऽयात् स्वाश्रमायैव सर्वं युधिष्ठिरः कथयामास तत्र ॥ ३७५ ॥

श्रुत्वा कृष्णा भ्रातरश्चास्य सर्वे सर्वे मुनीन्द्रा भीमसेनेऽतिभक्ताः ।
व्रीळां[3] ययुर्भीमसेनग्रहेण तथाऽब्रुवन् स्नेहतो भीमसेनम् ॥ ३७६ ॥

**अन्वपृच्छत्, अजगररूपं नहुषमिति शेषः ॥ ३७३–९ ॥**

---

अथ शापमोक्षस्य सन्निहितत्वात् । स्रस्तभोगः । शिथिलशरीरबन्धः । **'भोगः सुखे धने चाहेः शरीरफणयोरपि'** इत्यभिधानम् ॥ ३७१ ॥ अपायाशङ्कया विचलितमनाः ॥ ३७२ ॥ तस्याः सकाशात् निशम्य । नगेन्द्रान् महामहीरुहान् । **'नगो महीरुहे शैले'** इत्यभिधानम् । अन्वपृच्छत् । भीममनुद्रुत्यापृच्छत् । **'युधिष्ठिरस्तमासाद्य सर्पभोगेन वेष्टितम् । दयितं भ्रातरं धीमानिदं वचनमब्रवीत्'** [व.प.१८२.१] इत्याजगरे । अथ भीमवचनमन्वेव नहुषमपृच्छत्–**'मुच्यतामयमायुष्मन् भ्राता मेऽमितविक्रमः । वयमाहारमन्यं ते दास्यामः क्षुन्निवारणम्'** [१८२.५] इत्यादि च ॥ ३७३ ॥ ननु विद्योपजीवनं न धर्म इति जानन् धर्मसूनुस्तत्प्रश्नान् कथं व्याकरोत्? आह– भ्रातृस्नेहादिति । उत्तरणमेवात्र व्याकरणम् । समर्पकं विवरणमित्येतत् ॥ ३७४ ॥ स्वपूर्वे । **'पूर्वादिभ्यो नवभ्यो वा'** [अ.सू.७.१.१६] इति ङौ स्मिन् विभाषा भवति । पूर्वे पूर्वस्मिन् । **'ततो द्विजेभ्यः सर्वेभ्यः समेतेभ्यो यथातथम् । कथयामास तत् सर्वं धर्मराजो युधिष्ठिरः'** [व.प.१८३.४९] इति च ॥ ३७५–६ ॥

---

१. **'निशम्य राजा तदूरु–'** २. **'–वेगोत्पतितान्'** इति क्वचित् । ३. **'व्रीडाम्'**

नैतादृशं साहसं तेऽनुरूपं शक्तोऽपि यत् स्वात्मनो मोक्षणाय[1] ।
नैवाऽचरो[2] यत्नमतो निजानां महद् दुःखं हृदये प्रार्प्पयस्त्वम् ॥ ३७७ ॥

मैवं पुनः कार्य्यमिति ब्रुवन्तः समाश्लिषन् सर्व एवैत्य भीमम् ।
ततोऽह्नोभिः कैश्चिदापुः कुरूणां राष्ट्रं पार्त्था मुनिमुख्यैः समेताः ॥ ३७८ ॥

ततोऽमितौजा भगवानुपागमन्नारायणः सत्यभामासहायः ।
सम्पूजितः पाण्डवैस्तैः समेतश्चक्रेऽथ सौहार्द्दनिमित्तसत्कथाः ॥ ३७९ ॥

कृष्णा च सत्या च परस्परं मुदा सम्भाषणं चक्रतुर्य्योषिदग्र्ये ।
परीक्षन्त्या[3] सत्यया सर्ववेत्र्या निर्द्दोषया चोदिता प्राह कृष्णा ॥ ३८० ॥

स्त्रीधर्म्मानखिलांस्तत्र सत्यां निर्द्दोषसंविदम् ।
ज्ञात्वाऽपि कृष्णा प्रोवाच लोकशिक्षार्त्थमेव तु ॥ ३८१ ॥

**'सम्भाषणं चक्रतुः' इत्येतद् विवृणोति– परीक्षन्त्येत्यादिना । स्त्रीधर्माः क इति चोदिता ॥ ३८० ॥ अखिलान् स्त्रीधर्मान् प्राह ॥ ३८१ ॥**

---

**'गर्हयन्तोऽस्य साहसम्'** [५१] इति भारतवचनभावमाह– नैतादृशम् । क्वचिदविमृश्यकारिता साहसमुच्यते । न तदत्र युक्तम् । सर्वं ज्ञात्वा विमृश्य च भीमो हि बद्धवत् तस्थौ । क्वचिद् दमः साहसम् । क्वचिद् धाष्टर्चम् । क्वचिदपि दुष्करं कर्म । एते सर्वेऽप्यर्था अत्राभिमताः । आत्मसामर्थ्यदमनरूपं साहसं न तवानुरूपम् । यत्र यादृशी सर्वलोकस्य सहजा प्रतिक्रिया तत्र तद्विपरीतकरणं धाष्टर्चम् । लोकविपरीतं साहसं न तवानुरूपम् । एवं केनापि दुष्करं कर्म कृत्वाऽस्माकं संशये पातनं न तवानुरूपम् । अथापि भीमसामर्थ्यमजानन्तः केचिदेवमपि ब्रूयुः– एवमविमृश्यकारी मा स्म भव इति ॥ ३७७ ॥ **'मैवमित्यब्रुवन् भीमम्'** [१८३.५१] इति भारतवचने शेषपूरणपूर्वकं वाक्यार्थमाह– मैवं पुनः कार्यम् । कुरूणां राष्ट्रम् । राष्ट्रे काम्यकं वनमित्यर्थः । **'तत्रैव वसतां तेषां प्रावृट् समभिपद्यत'** [व.प.१८४.१] **'सूतैः पौरोगवैः साकं काम्यकं प्रययुर्वनम्'** [१८] इति च मार्कण्डेयसमास्यायाम् ॥ ३७८–९ ॥ परीक्षन्त्या । परीक्षा च न स्वावगमाय । यतः सर्ववेत्त्री । नापि स्वदोषपरिहारार्थम् । यतो निर्दोषा । नापि द्रौपदीशिक्षार्थम् । यतः साऽपि योषिदग्र्या । नापि द्रौपदीबोधनार्थम् । यतः सा निर्दोषया । निर्दोषं यं ज्ञानं यस्याः । किन्तु लोकशिक्षार्थमिति परीक्षन्त्येति परस्मैभाषा ॥ ३८० ॥ तदेव स्फुटमाह– लोकशिक्षार्थमेव । कृष्णा तु । सत्यायाः कृष्णस्य च मनोगतं ज्ञात्वा तदनुगुणं

---

१. **'स्वात्मविमोक्षणाय'** २. **'नैवाकरोर्य्यत्न–'** ३. **'परीक्षयन्त्या'**

क्रीडार्थमेव वचनं ज्ञात्वा सत्यासमीरितम् ।
तस्यानुसारवाक्यानि[1] तत्प्रीत्या एव साऽब्रवीत् ॥ ३८२ ॥

ततः कतिपयाहानि निरुष्यात्र जनार्दनः ।
ययौ सभार्य्यः स्वपुरीं पाण्डवाननुमान्य च ॥ ३८३ ॥

ततः कदाचिन्मृगयां गतेषु पार्त्थेषु राजा सैन्धव आससाद ।
सकोटिकाश्यः सबलश्च तेषां वराश्रमं सोऽत्र ददर्श कृष्णाम् ॥ ३८४ ॥

व्रजन्[2] विवाहार्त्थमसौ[3] निशाम्य कृष्णां कोटिं प्रेषयित्वैव काश्यम् ।
आयाहि मामित्यवदत् सुपापस्तया निरस्तो जगृहे करे च ॥ ३८५ ॥

तया धुतो[4] निपपाताऽशु भूमौ पुनश्च सज्ज्ञोऽभ्यपतद्[5] विलज्जः ।
ततोऽसहायत्वत एव कृष्णा धौम्यायोक्त्वा साग्निरन्वेहि मेति ॥ ३८६ ॥

**कुशलप्रश्नरूपं अन्यद् वचनं च क्रीडार्थमेव सत्यासमीरितं ज्ञात्वा । तत्प्रीत्यै सत्यभामाप्रीत्यै ॥ ३८२ ॥ अत्र पाण्डवसमीपे ॥ ३८३–४ ॥ कोटिं काश्यं कोटिकाश्यमित्यर्थः । प्रेषयित्वैव तन्मुखेन मामायाहि इत्यवदत् । जगृहे, स्वयमेवेति शेषः ॥ ३८५ ॥ असहायत्वत एव पत्यादिसहायरहितत्वत एव साग्निः (मा) मां अन्वेहीति धौम्यायोक्त्वा ॥ ३८६ ॥**

---

विडम्बयामासेति तुनाऽऽह ॥ ३८१ ॥ तस्य सत्यावचनस्य अनुसाराय वाक्यानि । तस्यानुसाराणि वाक्यानि । तस्यानुगुणानि सारवाक्यानि च । साराणि न्याय्यानि श्रेष्ठानि च । **'सारं न्याय्ये वस्तुनि च'** इति मङ्खः ॥ ३८२ ॥ अनुमान्य । न ते स्वतोऽनुमेनिरे । किन्तु कृच्छ्रादनुमानयामास । तान् वयोऽनुगुणं मानयित्वा च ॥ ३८३ ॥ **'ततस्तु राजा सिन्धूनां वार्द्धक्षत्रिर्महायशाः । विवाहकामः साल्वेयान् प्रयातः सोऽभवत् तदा'** [व.प.२६५.६] इति द्रौपदीहरणे । कोटिकाश्यः जयद्रथसखः शिविवंशजातस्य सुरथस्य सुतः । सबलः ससैन्यः ॥ ३८४ ॥ कोटिं काश्यं तत्परिज्ञानाय प्रेषयित्वा, तां द्रौपदीं विज्ञाय, स्वयमागत्य, आयाहि मामित्यवदत् । **'पतिः सौवीरसिन्धूनां दुष्टभावो जयद्रथः । स प्रविश्याऽश्रमं पुण्यं सिंहगोष्ठं वृषो यथा । आत्मनासप्तमः कृष्णामिदं वचनमब्रवीत्'** [व.प.२६८.८–९], **'एहि मे रथमारोह सुखमाप्नुहि केवलम्'**[१६] इति च । तया वाचा भत्सयित्वा निराकृतः प्रथममुत्तरवस्त्रदेशे ततः करे च जग्राह । कोटयते तापयति शत्रूनिति कोटिः । कुट प्रतापने । वस्तुतस्तु कुटति कुटिलो भवतीति कोटिः । कुट कौटिल्ये ॥ ३८५ ॥ पाण्डवा-

---

१. **'–सारिवाक्यानि'** २. **'व्रजन्'** ३. **'विहारार्थमसौ'** इति क्वचित् ।
४. **'तया धूतो निपपा–'** । ५. **'पुनः ससञ्ज्ञोऽभ्यगमद्–'**

**समारुहत् सैन्धवस्यैव यानं सुखं न यासीति तमीरयित्वा ।**
**तदा निमित्तानि निशाम्य पार्त्थाः समाययुस्त्वरयैवाऽश्रमाय ॥ ३८७ ॥**

**श्रुत्वा दासीवचनात् सर्वमेव चक्रुः क्षिप्रं सैन्धवस्यानुयानम् ।**
**आक्रोशमानं भीमसेनेति धौम्यं दृष्ट्वा तस्याग्रे सैन्धवं चातिपापम् ॥ ३८८ ॥**

**चक्रुर्न्नादान् सिंहवत् पाण्डुपुत्रा दृष्ट्वा कृष्णा चावतरद् रथात् तदा ।**
**धौम्येन सार्द्धं सा ययौ चाऽश्रमाय[१] सैन्यं पार्त्थास्तत्र निजघ्नुरोजसा ॥ ३८९ ॥**

**अग्रे कृष्णां योऽवदत् सिन्धुराजं याहीति तं कोटिकाश्यं सुपापम् ।**
**छित्वा शिरो मृत्यवे भीमसेनो निवेदयामास तमः स चागात् ॥ ३९० ॥**

**हत्वा सेनामखिलां[२] सैन्धवस्य भीमार्ज्जुनौ सयमं धर्म्मराजम् ।**
**विसृज्य धावन्तमथानुजग्मतुर्ज्जयद्रथं विरथं फल्गुनोऽकः ॥ ३९१ ॥**

**पद्भ्यां धावन्तं भीमसेनो निगृह्य दत्वा प्रहारांश्च भृशं तमार्त्तम् ।**
**आदायाधाद् द्रौपदीपादयोश्च तं मोचयामास च धर्म्मसूनुः ॥ ३९२ ॥**

**निमित्तानि, अशुभशंसीनीति शेषः ॥ ३८७ ॥ आक्रोशमानं आह्वयन्तम् । रुदन्तमिति वा । क्रुश आह्वाने रोदने चेति धातुः ॥ ३८८–९३ ॥**

नामसन्निधानान्मद्रक्षार्थं मामन्वेहीति धौम्यायोक्त्वा ॥ ३८६ ॥ निमित्तानि निशाम्य । **'आदित्यदीप्तां दिशमभ्युपेत्य मृगा द्विजाः क्रूरमिमे वदन्ति'** [व.प.२७०.३] इत्यादि च । सहैव सङ्गता आययुः ॥ ३८७ ॥ भीमसेनाऽ इत्याक्रोशमानं धौम्यम् । **'पदातीनां मध्यगतं च धौम्यं विक्रोशमानं भीमपार्थेत्यभीक्ष्णम्'** [व.प.२७०.३० ] इति च ॥३८८॥ अवतरत् । अनायासेनावातरदित्यर्थः । **'स तस्मिन् सङ्कुले सैन्ये द्रौपदीमवतार्य ताम् । प्राणप्रेप्सुरुपाधावद् वनं तत्र नराधमः । द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् । माद्रीपुत्रेण वीरेण रथमारोपयत् तदा'** [व.प.२७२.४१–२] इति च । **'राजा निववृते कृष्णामादाय सपुरोहितः'** [५५] इति च । **'प्रविवेशाऽश्रमं कृष्णा यमाभ्यां सह भामिनी'** [५९] इति च ॥ ३८९ ॥ अग्रे आदौ, कृष्णां याहीति यः सिन्धुराजमवदत् तं कोटिकाश्यं मृत्यवे निवेदयामास । नरसिंहाय अर्पयामास । अथच मृत्यवे यमाय निवेदयामास ददौ ॥ ३९० ॥ यमाभ्यां सहितं धर्मराजं आश्रमगमनाय विसृज्य । फल्गुनो विरथमकरोत् ॥ ३९१–२ ॥

१. 'ययौ स्वाश्रमाय' २. 'सेनां निखिलाम्'

दासो द्रौपद्या अहमित्येव वाक्ये तेनैवोक्ते भीमसेनोऽप्यमुश्चत् ।
स व्रीळितोऽ[1]वाग्वदनो ययौ वनं पार्थाश्च तत्रोषुरतिप्रमोदिनः ॥ ३९३ ॥

मार्कण्डेयस्तदाऽऽगत्य तेषामकथयत् कथाः ।
बह्वचश्चैव विचित्राश्च भाषात्रयसमन्विताः ॥ ३९४ ॥

लोकदर्शनमाश्रित्य देवाश्च मुनयस्तथा ।
ब्रूयुः कथास्तत्र शिक्षा ग्राह्या नार्त्थाः[2] कथञ्चन ॥ ३९५ ॥

अर्त्थः समाधिभाषासु ग्राह्यः सर्वोऽप्यसंशयम् ।
परदर्शनभाषासु ज्ञेयं तद्दर्शनं तथा ॥ ३९६ ॥

**बह्वचः बह्वीः । वैदिकप्रयोगोऽयम् ॥ ३९४ ॥ भाषात्रयसमन्विताः कथाः किमर्थमवददित्यत आह– लोकेति । लोकदर्शन(भाषा स्वदर्शनभाषा परदर्शनभाषेति) दर्शनभाषायास्त्रैविध्यम् । (लोकदर्शनमिति) समाधिगुह्यभाषयोरुपलक्षणम् । एवं त्रिविधदर्शनभाषायां लोकदर्शनभाषा(माश्रित्य) कथाः ब्रूयुः – रामस्य पिता मृतः, रामो जनकाय जलाञ्जलिं ददावित्यादिरूपाः । तदा तत्र तासु कथासु शिक्षाः 'पुत्रेण पित्रे जलाञ्जलिर्दातव्या' इत्यादिरूपाः ग्राह्याः । अर्थः रामस्य पिता मृत इत्यादिरूपः कथञ्चन न ग्राह्यः ॥ ३९५ ॥ तत्र यदा समाधिभाषामाश्रित्य कथाः ब्रूयुः– 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इत्यादि यथावत्स्थितकथनपराः तदा समाधिभाषासु, उक्त इति शेषः । अर्थः सर्वोऽप्य(संश)यं ग्राह्यः । तत्र यदा**

---

**'एवमुक्तस्तु सव्रीळं तूर्ष्णीं किञ्चिदवाङ्मुखः । जगाम राजा दुःखार्तो गङ्गाद्वाराय भारत । स देवं शरणं गत्वा विरूपाक्षमुमापतिम् । तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः'** [व.प.२७३.२७–८] इत्यादि च ॥ ३९३ ॥ याः बह्वचः बहुविधा विचित्राश्चाऽसन् । बह्वच इति द्वितीयार्थे वा प्रथमा । **'सप्तसु प्रथमा'** इति स्मरणात् । तत्रापि विचित्रा एव । लोकदृष्ट्या त्वविश्वसनीयाः, श्रवणमात्रेण विस्मयजननीरेव ॥ ३९४ ॥ लोकैर्यथा दृश्यते तथा । नतु यथा वर्तते तथा । लौकिकं दर्शनमाश्रित्य । नतु वेददर्शनमिति च ॥ ३९५ ॥ परेषां दर्शनं तथेत्येव ज्ञेयम् । नतु तथ्यमिति च । तथ्यं वा स्यादतथ्यं वा । प्रमाणसंवादे तथ्यमपरथा त्वतथ्यमिति । गुह्यभाषासु आपातप्रतीतादन्य एवार्थो ग्राह्यः । विवृतमेतद् द्वितीयाध्याये [११८–१२१] । इदमुक्तं भवति–सम्यग् यथावत् आधीयते यत्र सा समाधि-भाषा । यथा मार्कण्डेयवचनम्– **'यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः । स एष पुरुषव्याघ्र सम्बन्धी ते जनार्दनः'** [व.प.१९२.५१] इत्यादि । यथा वा– **'तपसा स्वर्गगमनं भोगो दानेन जायते । ज्ञानेन मोक्षो विज्ञेयस्तीर्थस्नानादघक्षयः'**

---

१. **'व्रीडितोऽवाग्–'** २. **'नार्थः'** । वे.ती.पाठोऽपि तथेति भाति ।

ग्राह्यो नार्त्थो वैदिकं तु दर्शनं ग्राह्यमेव च[1] ।
अन्यार्त्थो गुह्यभाषासु ग्राह्य एवं विनिर्णयः ॥ ३९७ ॥

जयद्रथस्तु भीमेन तदा[2] पञ्चशिखीकृतः ।
तपसा शिवमाराद्ध्य वव्रे पाण्डवरोधनम् ।
ऋतेऽर्ज्जुनादर्ज्जुनस्य तुष्टो हि तपसा शिवः ॥ ३९८ ॥

वने वसत्स्वेव च पाण्डवेषु चक्रे यज्ञं पौण्डरीकाख्यमेव ।
संस्पर्धया राजसूयस्य राजा दुर्य्योधनो नाप्यसौ तत्कलार्हः ॥ ३९९ ॥

**परदर्शनभाषामाश्रित्य कथा ब्रूयुः शिवसूर्यस्कन्दविनायकशक्तीनां प्रत्येकं सर्वोत्तमत्वकथनपराः । तदा परदर्शनभाषासु, प्रवृत्तास्विति शेषः । तद्दर्शनं तेषान्तेषां दर्शनं तथा तथाविधमिति ज्ञेयम् । भारतादिषु यदा शिवादीनां सर्वोत्तमत्वं सर्वसृष्ट्यादिकर्तृत्वमुच्यते तदा 'इयं परदर्शनभाषा, शैवादय एवं ब्रूयुः' इति ज्ञातव्यमिति भावः । अर्थः वस्तुतः तेषामेव सर्वोत्तमत्वादिनोपास्यत्वलक्षणः न ग्राह्यः । शैवादिदर्शनानां वेदविरुद्धत्वात् परदर्शनत्वम् । तत्र यदा वैदिकदर्शनमाश्रित्य कथा ब्रूयुः विष्णुसर्वोत्तमत्वादिरूपाः तदा एवंरूपं वैदिकं दर्शनं तु ग्राह्यम् ॥ ३९६–९ ॥**

---

[व.प.२०३.११८] इत्यादि । दर्शनानुगुणा भाषा यथा तस्यैव – **'तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे । नष्टे देवासुरगणे यक्षराक्षसवर्जिते । निर्मनुष्ये महीपाल निःश्वापदमहीरुहे । अनन्तरिक्षे लोकेऽस्मिन् भ्रमाम्येकोऽहमातुरः'** [१९१.८७–८] इत्यादि । न महाप्रळये मार्कण्डेय आस । दर्शयामास हि भगवांस्तस्य प्रळयं तत्र न्यग्रोधं तत्पत्रे शयानं शिशुरूपमात्मानं च । गुह्या भाषा यथा स्कन्दस्तवे– **'त्वं पुष्कराक्षस्त्वरविन्दवक्त्रः सहस्रचक्षुश्च सहस्रबाहुः'**[२३३.१३], **'सहस्रशीर्षस्त्वमनन्तरूप सहस्रपात् त्वं दशशक्तिधारी'** [१५] इत्यादि । अत्र मुखतः स्कन्दः स्तूयते । अन्तर्यामी स्तूयत इति तु गुह्यम् ॥ ३९६–७ ॥ ऋतेऽर्जुनात् । तथाहि शिववचनम्– **'सहायः पुण्डरीकाक्षः श्रीमानतुलविक्रमः । समानस्यन्दने पार्थमास्थाय परवीरहा । न शक्यते तेन जेतुं त्रिदशैरपि दुःसहः । कः पुनर्मानुषो भावो रणे पार्थं विजेष्यति । तमेकं वर्जयित्वा तु सर्वं यौधिष्ठिरं बलम् । चतुरः पाण्डवान् राजन् दिनमेकं विजेष्यसे'** [व.प.२७३.७६–८] इत्यादि ॥ ३९८ ॥ वने द्वैतवने । दुर्योधनकृतो यज्ञो वैष्णवयज्ञ इति भारते पठ्यते–**'एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः'** [व.प.२५६.२०] इति । सर्वोऽप्यन्ततो वैष्णवयज्ञ एव । अतो विशेषनामाऽह–पौण्डरीकाख्यम् । पुण्डरीकमस्यास्ति नाभाविति पुण्डरीकः पद्मनाभः । शत्रुखण्डनाद् वा पुण्डतीति पुण्डरीको भगवान् । पुडि खण्डने । तस्यायं पौण्डरीको यज्ञः । सर्वतः स्पर्धा संस्पर्धा । यज्ञकर्मणि अन्नादिदाने दक्षिणायां च । असौ

---

१. '–मेव हि ।' २. 'भीमेन यदा'

दुर्य्योधनस्याऽज्ञया पाण्डवानां दुःशासनः प्रेषयामास तत्र[१] ।
आगच्छतेत्यवमानाय तं तु भीमोऽवादीद् रणयज्ञं स्वगम्यम् ॥ ४०० ॥

ततो दिनैः कैश्चन धार्त्तराष्ट्राः सकर्ण्णगान्धारनृपाः कुमन्त्रतः ।
सभार्य्यकाः पाण्डवान् द्रौपदीं च महैश्वर्य्यं दर्शयित्वाऽवमन्तुम् ॥ ४०१ ॥

ते स्यन्दनैः काञ्चनरत्नचित्रैर्म्महागजैस्तुरगैः पत्तिभिश्च ।
स्वलङ्कृताश्चित्रमाल्याम्बराश्च विनिर्य्ययुर्द्वैतवनाय शीघ्रम् ॥ ४०२ ॥

गवां दृष्टिच्छद्मना निर्ग्गतांस्तान् ज्ञात्वा शक्रस्तेजसो भङ्गकामः ।
तत्सामर्त्थ्यं वरमस्मै प्रदाय तद्बन्धनायादिशच्चित्रसेनम् ॥ ४०३ ॥

**तत्र तस्मिन् काले । आह्वानस्य तात्पर्यमाह– अवमानायेति । भीमस्तु तं (दूतं) रणयज्ञं स्वगम्यं (ब्रूहि) इति अवादीत् ॥ ४०० ॥ ततः आह्वानानन्तरम्, ते धार्तराष्ट्रा विनिर्ययुः इत्यन्वयः ॥ ४०१–२ ॥तान् गवां दृष्टिच्छद्मना (पाण्डवान् अवमन्तुं निर्गतान् ।) तत्सामर्थ्यं दुर्योधनतेजोभङ्गसामर्थ्यम् ॥ ४०३–५ ॥**

---

दुर्योधनकृतो यज्ञः । **'यौधिष्ठिरस्य यज्ञस्य न समो ह्येष ते क्रतुः । नैव तस्य क्रतोरेष कलामर्हति षोडशीम्'** [व.प.२५८.३] इति च ॥ ३९९ ॥ तत्र द्वैतवने स्थितानां पाण्डवानाम् । दुःशासनः कञ्चन दूतं प्रेषयामास । तत्र यज्ञे भागं वोढुमागच्छतेति । **'तत्र कश्चित् प्रयान्तं तु दूतं दुःशासनोऽब्रवीत् । गच्छ द्वैतवनं शीघ्रं पाण्डवान् पापपूरुषान् । निमन्त्रय यथान्यायं विप्रांस्तस्मिन् वने तथा'** [२५७.७–८] इति च । स्वस्य स्वीयानां युधिष्ठिरादीनां च गम्यम् ॥ ४०० ॥ ततः पौण्डरीकयागानन्तरम् । भारते तु यागात् पूर्वमेषा कथा पठ्यते । अतस्तत इत्याह । पूर्वं पठितमपि पश्चादनुसन्धेयम् । पाठक्रमादप्यर्थक्रमो हि बलीयान् । गान्धारनृपः शकुनिः । पौण्डरीकयागजनितं महैश्वर्यम् । **'स्थितो राज्ये च्युतान् राज्याच्छ्रिया हीनाञ्छ्रिया वृतः । असमृद्धान् समृद्धार्थः पश्य पाण्डुसुतान् नृप'** [व.प.२३८.१६] इति, **'समस्थो विषमस्थान् हि दुर्हृदो योऽभिवीक्षते । जगतीस्थानिवाद्रिस्थः किमतः परमं सुखम्'** [२३८.१९] इति कर्णस्य शकुनेश्च वचनं घोषयात्रायाम् ॥ ४०१ ॥ ते स्यन्दनैः । **'अष्टौ रथसहस्राणि त्रीणि नागशतानि च । पत्तयो बहुसाहस्रा हयाश्च नवतिः शताः'** [व.प.२४०.२६] इति च ॥ ४०२ ॥ गवां दृष्टिच्छद्मना । **'घोषयात्रापदेशेन गमिष्यामो न संशयः'** [व.प.२३९.१९] इति च । धार्तराष्ट्राणां तेजसो भङ्गकामः । धार्तराष्ट्रतेजोभङ्गसामर्थ्यम् । तेषां धार्तराष्ट्राणां बन्धनाय ॥ ४०३ ॥

---

१. **'–मास दूतम् ।'**

स षष्टिसाहस्रककोटियूथपैर्गन्धर्वमुख्यैः संवृतोऽगात् सरस्तत् ।
यस्मिन् स्नातुं वाञ्छति धार्त्तराष्ट्रस्तदाज्ञया पुरुषास्तानथोचुः ॥ ४०४ ॥

स्नातुं समायास्यति धार्त्तराष्ट्रो राजेश्वरो निस्सरध्वं तदस्मात् ।
तीर्थादाज्ञां धारयन्तश्च तस्येत्युक्ता गन्धर्वा जहसुस्तानथोच्चैः ॥ ४०५ ॥

ऊचुर्वयं मानयामस्तदाज्ञां त्रिलोकानां यः पतिः शक्रदेवः ।
न मानुषाणामपि चक्रवर्त्तिनां किम्वल्पसारस्य[१] सुयोधनस्य ॥ ४०६ ॥

इतीरिते कुपितो धार्त्तराष्ट्रो जघान गन्धर्ववराञ्छरौघैः ।
जघ्नुः सकर्ण्णा अपि तस्य सोदरा जघ्नुश्च ते धार्त्तराष्ट्रस्य सेनाम् ॥ ४०७ ॥

मुहूर्त्तमासीत् सममेव युद्धं तेषां तदा धार्त्तराष्ट्रस्य चैव ।
पुरां[२] भिन्दोर्वरतो मायया च गन्धर्ववीरा ववृधुस्ततः स्म ॥ ४०८ ॥

**अल्पसारस्य दुर्बलस्य ॥ ४०६–७ ॥ पुरां भिन्दोः पुरन्दरस्य ॥ ४०८ ॥**

---

षष्टिः सहस्राणि यत्र तादृशाः कोटियूथपाः । षष्टिसहस्राणि च कोटिश्च यूथपानामित्यर्थः । सषष्टिसाहस्रकाः कोटियूथपा इति वा । यस्मिन् द्वैतसरसि । निर्वचनमुक्तम् । भयानकं चाऽसेचनकं चेति द्वाभ्यां गुणाभ्यामुपेतमिति च तद् वनं द्वैतवनमित्याहुः । तत् सरश्च द्वैतसर इति ॥ ४०४ ॥ भार्याभिः सखिभिश्च समेत आयास्यति । निःसरध्वम् । निःसरणं भवतामेव भूतये, अन्यथा वृथा नङ्क्ष्यथेत्यात्मनेभाषा । तीर्थं स्नानावतरणस्थानम् । तस्य दुर्योधनस्याऽज्ञाम् । तान् परिजहसुः ॥ ४०५–६ ॥ इति गन्धर्ववचने दूतैरीरिते, धार्तराष्ट्रो दुर्योधनः । प्रथमप्राप्तत्वात् । राजेश्वरो धार्तराष्ट्र इति पूर्वं तस्यैव तत्पदेन प्रस्तुतत्वात् । ते गन्धर्ववराश्च ॥ ४०७ ॥ मुहूर्तं सममेवाऽसीत् । मुहूर्तमेव सममासीत् । मुहूर्तमित्यल्पकाल-मात्रमुच्यते । न कालविशेषः । क्षणमिति यथा । चैवेति समुदितं समुच्चयार्थे पठन्ति कोशकाराः । यथाच'अथातः' इति समुदितमारम्भार्थे । अथचैवकारेण साम्यमपि किञ्चिदेवेति सूचयाम्बभूव । **'एवौपम्ये परिभवे ईषदर्थेऽव-धारणे'** इत्यभिधानम् । पुरां भिन्दुरिति पुरन्दरस्य वैदिकं नाम । तथाहि श्रूयते–**'पुरां भिन्दुर्युवा कविरमितौजा अजायत । इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः'**[ऋ.सं.१.११.४; साम.सं. ३५९;१२५०; ताण्ड्यब्रा.१४.१२.३] इति । ववृधुः ववृधिरे । वृद्धिरियं पाण्डवानां प्रीत्यर्थमिति परस्मैभाषा ॥ ४०८ ॥

---

१. **'किन्त्वल्पसारस्य'** । **'किमल्पसारस्य'** इति क्वचित् ।
२. **'पुरां भिदोर्वर–'** इति क्वचित् ।

तेजोभङ्गं तत्र सुयोधनस्य पार्थार्थमत्र प्रविधातुमेव च[१] ।
बलं ददावब्जजः केशवश्च गन्धर्वाणां तेऽभ्ययुर्धार्त्तराष्ट्रान् ॥ ४०९ ॥

स चित्रसेनः प्रथमं कर्ण्णमेव युयोध पार्थस्पर्द्धया तेन युद्ध्यन् ।
कर्ण्णो नाशक्नोद् वचनाद् भार्ग्गवस्य रामस्य नित्यामितषड्गुणस्य ॥ ४१० ॥

स भग्नयानश्च विकर्ण्णयानमास्थाय तस्यैव नियम्य वाजिनः ।
पराद्रवत् तेन सहैव शीघ्रं दुर्य्योधनश्चित्रसेनं युयोध ॥ ४११ ॥

मुहूर्त्तमेनेन[२] समं स युद्ध्यन्नन्यैर्ग्गन्धर्वैर्बहुभिर्म्मायथैव ।
भग्ने रथे भूमितळे[३] स्थितः सन् गृहीत आसीच्चित्रसेनेन सङ्घे[४] ॥ ४१२ ॥

महाबलो धार्त्तराष्ट्रोऽपि शक्रवराद् विष्णोराज्ञया चाभिवृद्धे ।
स चित्रसेनेन धृतस्तदाऽऽसीद् बद्धः पाशैर्वैद्युतैरिन्द्रदत्तैः ॥ ४१३ ॥

तस्यानुजाः शकुनी राजभार्य्याः सर्वे बद्धाः शक्रभृत्यैः[५] प्रणीताः ।
आदाय तानम्बरं[६] सम्प्रयातेष्वरूरुवन् पाण्डवान् मन्त्रिणोऽस्य ॥ ४१४ ॥

**पार्थार्थं पाण्डवानामर्थे ॥ ४०९–१२ ॥ तदा स धार्तराष्ट्रः महाबलोऽपि, शक्रवराद् विष्णोराज्ञया च अभिवृद्धे, चित्रसेनस्य बले इति शेषः, चित्रसेनेन (धृतः) गृहीतः, इन्द्रदत्तैः वैद्युतैः पाशैर्बद्धः आसीत् ॥ ४१३–५ ॥**

---

तदेव स्फुटमाह– तेजोभङ्गमित्यादिना । तत्र द्वैतवने । अत्र गन्धर्वैः सह प्रवृत्ते समरे । प्रविधातुं प्रकटं पाण्डवानां समक्षं सुयोधनस्य तेजोभङ्गं विधातुमेव । चकारेण पाण्डवानां तेन यशोवृद्धिं धर्मवृद्धिं च विधातुमेव ।।४०९–१०।। विकर्णस्य दुर्योधनानुजस्य यानमास्थाय तेन सहैव शीघ्रं पराद्रवत् ॥ ४११ ॥ भग्ने रथे । **'दुर्योधनं चित्रसेनो विरथं पतितं भुवि । अभिद्रुत्य महाबाहुर्जीवग्राहमथाग्रहीत्'** [व.प.२४३.६] इति च ॥ ४१२ ॥ महाबलोऽपि धार्त-राष्ट्रः । अभिवृद्धे सङ्घे, चित्रसेने वा । **'चित्रसेनेऽनेन'** इति पाठे स्फुटोऽर्थः । धृतः गृहीतः वैद्युतैर्विद्युत्सम्ब-न्धिभिः । स्पर्शमात्रेण सन्तापकैः ॥ ४१३ ॥ विजयसम्भ्रमेण प्रयाणं सम्प्रयाणम् । अस्य दुर्योधनस्य मन्त्रिणः पाण्डवानेत्य

---

१. 'प्रविधातुमेव ।' २. 'मुहूर्त्तमेतेन' ३. '–तले स्थितः'
४. 'सङ्घे ।' ५. 'शक्रदूतैः प्र–' ६. 'तानम्बरे सम्प्र–'

समीपमागत्य पृथासुतानां परिभूतं[१] वः कुलं शक्रभृत्यैः ।
धृतः सभार्य्यः सानुजो धार्त्तराष्ट्रस्तं मोचयध्वं भ्रातरं भारताग्र्याः ॥ ४१५ ॥

इत्युक्त ऊचे भीमसेनोऽग्रजं स्वं जाने राजन् यादृशोऽयं विमर्द्दः ।
ऐश्वर्य्यं स्वं दर्शयन् नः समागाद् दुर्य्योधनस्तेजसो भङ्गमिच्छन् ॥ ४१६ ॥

विज्ञाय तेषां मन्त्रितं वज्रबाहुरेतच्चक्रे नात्र नः कार्य्यहानिः ।
दिव्यं ज्ञानं स्वात्मनो दर्शयन् स एतावदुक्त्वा विरराम भीमः ॥ ४१७ ॥

एकाहयज्ञे दीक्षितेनैव राज्ञा सम्प्रेषितो भीमसेनोऽर्ज्जुनश्च ।
समाद्रेयौ चित्रसेनं रणे तौ विजित्य दुर्य्योधनमाश्वमुञ्चताम् ॥ ४१८ ॥

स चित्रसेनो वासवोक्तं च सर्वं कुमन्त्रितं धार्त्तराष्ट्रस्य चाऽह ।
पार्त्थस्य भीमस्य च तन्निशम्य सुव्रीळितो[२] धृतराष्ट्रात्मजोऽभूत् ॥ ४१९ ॥

समाप्य यज्ञं च ततोऽभियातं सर्वे प्रापुर्द्धर्म्मराजं स चाऽशु ।
सम्पूज्य तूत्सृज्य च चित्रसेनमूचे गान्धारे न पुनः कार्य्यमीदृक् ॥ ४२० ॥

**अयं विमर्दः यादृशः तादृशं जाने इति । तेजसः अस्मत्तेजसः ॥ ४१६–७ ॥ एकाहयज्ञे एकाहनिर्वर्त्ययज्ञे ॥ ४१८ ॥ पार्थस्य अर्जुनस्य ॥ ४१९ ॥ उत्सृज्य गमयित्वा ॥ ४२०–१ ॥**

---

अरूरुवन् ॥ ४१४ –५ ॥ परिवारसमेत आगात् नस्तेजसो भङ्गमिच्छन् ॥ ४१६ ॥ नात्र नः कार्यहानिः । **'अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम्'** [व.प.२४३.१७] इति भीमवचनं घोषयात्रायाम् ॥ ४१७ ॥ अमुञ्चताम् । मुक्तमकुरुताम् । एकाहयज्ञ इति । **'स्वयमेव प्रधावेयं यदि न स्याद् वृकोदर । विततो मे क्रतुर्वीर नहि मेऽत्र विचारणा'** [व.प.२४४.३१] इति च ॥ ४१८ ॥ धार्तराष्ट्रस्य कुमन्त्रितं पार्थस्य भीमस्य चाऽह । पूर्वं पराजयेन व्रीळितः । इदानीं चित्रसेनेन भीमार्जुनयोः पुरतः स्वदुराशयाविष्करणेन सुव्रीळितः ॥ ४१९ ॥ सम्पूज्य तु । प्रशंसापूर्वकं सत्कृत्य परस्परं वा पूजयित्वा । तुना 'दिष्ट्या शक्तैरपि धार्तराष्ट्रो न हिंसितः' इति गन्धर्वेष्वभिमानविशेषमाह । गान्धार्या अयं गान्धारिः । न पुनः कार्यमीदृक् । **'मा स्म तात पुनः कार्षीरीदृशं साहसं क्वचित् । नहि साहसकर्तारः सुखमेधन्ति भारत'** [व.प.२४७.२७] इति च ॥ ४२० ॥

---

१. 'पराभूतम्' २. 'सुव्रीडितो–'

**स पाण्डवैर्म्मोचितः सानुजश्च[1] सभार्य्यकः किञ्चिदतोऽपगम्य ।**
**सम्मेळनायोपविष्टश्च[2] तत्र सुव्रीळितः[3] सूतपुत्रं ददर्श ॥ ४२१ ॥**

**स चाऽह दिष्ट्या जयसि राजन्निति सुयोधनम् ।**
**व्रीळितो[4] नेति तं चोक्त्वा यथावृत्तं सुयोधनः ॥ ४२२ ॥**

**उक्त्वा प्रायोपवेशं च चक्रे तत्र सुदुःखितः ।**
**कर्ण्णदुःशासनाभ्यां च सौबलेन च देविना ॥ ४२३ ॥**

**अन्यैश्च याच्यमानोऽपि नैवोत्तस्थौ सुयोधनः ।**
**ततो निशायां प्राप्तायां स्वपक्षे प्रविषीदति ॥ ४२४ ॥**

**मन्त्रयित्वाऽसुरैः कृत्या निर्म्मिता होमकर्म्मणा[5] ।**
**शुक्रेणोत्पादिता कृत्या सा प्रसुप्तेषु मन्त्रिषु ॥ ४२५ ॥**

**धार्त्तराष्ट्रं समादाय ययौ [6]पाताळमाशु च ।**
**अथ सम्बोधयामासुर्दैत्या दुर्य्योधनं नृपम् ॥ ४२६ ॥**

**राजन् जयसि, दिष्ट्या एतत् साधु ॥ ४२२–६ ॥**

---

स्वपुरं गच्छन् द्वैतवनात् किञ्चिदपगम्य पथि क्वचिद् रम्ये भूमिभागे उपविष्टः । **'धर्मराजनिसृष्टस्तु धार्तराष्ट्रः सुयोधनः । लज्जयाऽधोमुखः सीदन्नुपासर्पत् सुदुःखितः'**[२४८.५] इति, **'विमुच्य पथि यानानि देशे सुयवसोदके । सन्निविष्टः शुभे रम्ये भूमिभागे यथेप्सितम्'** [७] इति च । संनिविष्ट इति भारतपदम्, **'सम्मेळनायोपविष्टः'** इति व्याचख्यौ ॥ ४२१ ॥ **'दिष्ट्या जयसि गान्धारे दिष्ट्या नः सङ्गमः पुनः'** [९] इति च । यथावृत्तं यद्यद् वृत्तं तच्चोक्त्वा । देविना देवनशीलेन ॥ ४२२–३ ॥ अन्यैश्च । **'स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च । बहुप्रकारमप्युक्तो निश्चयान्न व्यचाल्यत'**[व.प.२५२.१७] इति च । इष्टनाशेन, इष्टप्राप्त्यर्थमुपायान्तरादर्शनेन वा मनसो भङ्गो विषादो नैराश्यं नाम । विषादस्य परा काष्ठा प्रविषादः । अवसादो वा विषादः । प्रकटं क्षीयमाणे सति ॥ ४२४ ॥ सा च कृत्या शुक्रेणोत्पादिता । **'उत्पादिताकृत्या'** इत्येकं वा पदम् । शुक्रेणाऽथर्वणैर्मन्त्रैरुत्पादितया आकृत्या युक्ता कृत्या । दुर्योधनमन्त्रिषु गाढसुप्तेषु ॥ ४२५ ॥ ययौ पाताळम् । **'समादाय च राजानं प्रविवेश रसातळम्'**[व.प.२५२.२९]

---

१. **'सानुगश्च'** २. **'सम्मेलनायोप–'** ३. **'सुव्रीडितः'**
४. **'व्रीडितो–'** ५. **'होमकर्मणि ।'** ६. **'पातालमा–'**

त्वं दिव्यः पुरुषो वीरः सृष्टोऽस्माभिः प्रतोषितात् ।
तपसा शङ्कराद् वज्रकायोऽवद्धयश्च सर्वदा ॥ ४२७ ॥

अस्माकं पक्षभूतस्त्वं देवानां चैव पाण्डवाः ।
इदानीं सर्वदेवानां वरात् त्वं विजितो रणे ॥ ४२८ ॥

वयं तथा करिष्यामो यथा जेष्यसि पाण्डवान् ।
कृष्णेन निहतश्चैव नरकः कर्ण्णं आस्थितः[1] ॥ ४२९ ॥

स च कृष्णार्ज्जुनाभावं करिष्यति न संशयः ।
भीष्मादींश्च वयं सर्वानाविशाम[2] जयाय ते ॥ ४३० ॥

तपसा वर्द्धयिष्यामस्त्वां कर्ण्णादींश्च सर्वशः ।
तस्माद् गत्वा पालयस्व राज्यं राजन्नपेतभीः ॥ ४३१ ॥

इदं कस्यापि नाऽख्येयं सुगुप्तं भूतिवर्द्धनम् ।
इत्युक्त्वा कृत्यया भूयः स्वस्थाने स्थापितो नृपः ॥ ४३२ ॥

**दिव्यः पुरुषः, न यादृशतादृश इत्यर्थः ॥ ४२७–३१ ॥ इदं अस्माभिरुक्तं भूतिवर्द्धनं श्रेयोवर्द्धनं भवेत् ॥ ४३२ ॥**

---

इति च। **'भोः सुयोधन राजेन्द्र भरतानां कुलोद्वह'**[२५३.१] इति सम्बोध्य बोधयामासुः। समेताः साभिमानं बोधयामासुः ॥ ४२६ ॥ तपसा महता प्रयासेन तोषितात् ॥ ४२७ ॥ अस्माकं त्वमेव गतिः। देवानां च पाण्डवा एव। **'त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः'** [व.प.२५३.२५] इति च ॥ ४२८ ॥ नरकः कृष्णेन निहतश्च निहतोऽपि, न क्वापि गतः, किन्तु कर्ण एव आविश्य स्थितः। **'हतस्य नरकस्याऽत्मा कर्णमूर्तिमुपाश्रितः'** [२५३.२०] इति च। पूर्वं सहस्रवर्मणाऽसुरेणाऽविष्ट एवाजायत। सम्प्रति विशिष्य कृष्णद्वेषार्थं नरकोऽपि कर्णे स्थितो बभूवेत्यर्थः। तत्र स्वकृतदोषपरिणामभूतः पूर्वविशः। नरकस्तु कृष्णद्वेषात् स्वेच्छया दैत्यानां प्रार्थनया च स्वयं कर्णमाविवेशेति भेदः ॥ ४२९–३० ॥ पालयस्व। तेन महद् यशस्ते भवितेत्मात्मनेभाषा। स्वराज्यं पालयेति वा ॥ ४३१ ॥ इत्युक्त्वा दैत्यैः कृत्यया द्वारभूतया स्वस्थाने स्थापितः ॥ ४३२ ॥

---

१. **'कर्ण्णमाश्रितः'** २. **'–नाविशामो जयाय'**

उमया निर्म्मितात्मार्द्धमुत्तरं हरनिर्म्मितम् ।
ज्ञात्वैवावद्ध्यतां चैव राज्ये बुद्धिं चकार सः ॥ ४३३ ॥

नोवाच कस्यचित् तेषु स्वानुभूतं सुयोधनः ।
प्रभातायां तु शर्वर्य्यां पुनः कर्ण्णो वचोऽब्रवीत्[1] ॥ ४३४ ॥

भृत्यैस्तवैव पार्त्थैर्य्यन्मोचितोऽसि परन्तप ।
तेन मान्योऽधिकं लोके यद् भृत्या एव तादृशाः ।
किमु त्वं राजशार्दूल तदुत्तिष्ठ स्थिरो भव ॥ ४३५ ॥

या च तेऽर्ज्जुनमाहात्म्ये शङ्का सा व्यैतु[2] मे शृणु ।
यावन्नैवार्ज्जुनं हन्यां पादौ प्रक्षाळये[3] स्वयम् ॥ ४३६ ॥

इत्युक्तोऽवरजैश्चैव सर्वैः शकुनिना तथा ।
याचितो रथमारुह्य ययौ नागपुरं द्रुतम् ॥ ४३७ ॥

**सः नृपः ॥ ४३३–४ ॥ स्थिरो भव स्थिरबुद्धिर्भव, मे वचन इति शेषः ॥ ४३५–६ ॥ इत्युक्तः कर्णेन ॥ ४३७–८ ॥**

---

उमया निर्मितात्मार्धम् । तथाहि भारते–**'पुरा त्वं तपसाऽस्माभिर्लब्धो राजन् महेश्वरात् । पूर्वकायश्च ते सर्वो निर्मितो वज्रसञ्चयैः । अस्त्रैरभेद्यः शस्त्रैश्चाप्यधःकायश्च तेऽनघ । कृतः पुष्पमयो देव्या रूपतः स्त्रीमनोहरः । एवमीश्वरसंयुक्त-स्तव देहो नृपोत्तम । देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः'** [व.प.२५३.६] इति । ज्ञात्वैव ज्ञानसमनन्त-रमेव । विना व्यवधानम् । असुरवचने विश्वासातिशयमेवकार आह । द्वितीय एवकार औपम्येऽर्थे । एव एवं अवद्ध्यतां च ज्ञात्वैव । अवध्यतामेव वज्रकायत्वेन उमाहराभ्यां रक्षितत्वेन च सर्वात्मनाऽवध्यतां वा ॥ ४३३ ॥ तेषु स्वानुरागिषु कर्णादिषु सोदरेषु च । **'नचाऽचचक्षे कस्मैचिदेतद् राजा सुयोधनः'** [२५३.३७] इति च ॥ ४३४ ॥ राजशार्दूलो राजश्रेष्ठः । यत्रोत्तरपदं बलवत्प्राणिवचनं तत्र पूर्वपदार्थस्य बलिष्ठत्वं श्रेष्ठत्वं च तदाह ॥ ४३५ ॥ व्या एतु । गर्भत एव व्यापन्ना एतु अपगच्छतु । मे वचनं शृणु । द्वितीयार्थे वा षष्ठी । **'नच कश्चिच्छृणोति मे'** इतिवत् । पादौ प्रक्षाळये स्वयम् । न भृत्यैः क्षाळयामि । एतेन, **'पादौ न धावये तावद् यावन्न निहतोऽर्जुनः'** [२५८.१७] इति भारत-वचनमुक्तार्थम्– **'पादौ भृत्यैर्न धावये, किन्तु स्वयं धावामि'** इति ॥ ४३६–७ ॥

---

१. 'कर्णोऽब्रवीद् वचः ।' २. 'व्येतु' ३. 'प्रक्षालये'

सकुण्डलं सकवचमवद्ध्यं सूर्य्यनन्दनम् ।
ज्ञात्वेन्द्र उभयं तस्मादैच्छदादातुमुत्तमम् ॥ ४३८ ॥

तद् विज्ञाय रविः कर्ण्णं स्वप्न उक्त्वा न्यवारयत् ।
सर्वथा दास्य इत्युक्ते प्राहाऽदेयं वरायुधम् ॥ ४३९ ॥

ददौ चोत्कृत्य कवचं कुण्डले च शचीपतेः ।
अमोघां शक्तिमादाय ज्ञात्वैव[1] द्विजरूपिणम् ॥ ४४० ॥

ऋतेऽर्ज्जुनादेकमेव वधिष्यस्यनयेति सः ।
दत्वा शक्तिं ययौ शक्रः सार्द्धं कवचकुण्डलैः ॥ ४४१ ॥

पार्त्था विमुच्यैव सुयोधनं तं वने वसन्तो मुदिताः सदैव ।
सहारणीभाण्डमथो मृगेण हृतं द्विजस्याऽशु निशम्य चान्वयुः ॥ ४४२ ॥

तस्मिन्नदृश्ये तृषिता [2]एकैक उदकार्त्थिनः ।
ययुर्य्युधिष्ठिरमृते सुप्तास्ते धर्म्ममायया ॥ ४४३ ॥

अदृश्येनैव धर्म्मेण वारिता वारिपायिनः ।
क्षत्रधर्म्मस्य रक्षार्त्थं न तत्प्रश्नान् विदां वराः ॥ ४४४ ॥

**स्वप्ने उक्त्वा इन्द्रचिकीर्षितमुक्त्वा ॥ ४३९–४२ ॥ उदकार्थिनः एकैके पृथक्पृथक् युधिष्ठिरमृते ययुः । ते**

---

कुण्डलद्वयं कवचं चेत्युभयम् । कुण्डलत्वं कवचत्वं चेति धर्मनिष्ठं द्वित्वं धर्मिणि निरूप्यते । अवध्यताहेतुत्वादुत्तमम् ॥ ४३८ ॥ यदि दास्यस्येव तदा तस्मात् त्वयाऽपि शक्त्याख्यं वरायुधं प्रत्यादेयमिति प्राह ॥ ४३९ ॥ द्विजरूपिणं तमिन्द्रं ज्ञात्वैव ॥ ४४० ॥ कवचेन कुण्डलाभ्यां च ॥ ४४१ ॥ अरणीभ्यां अग्निमथनकाष्ठाभ्यां सहितं भाण्डं पात्रम् । अथवा अरणी अरणिकाष्ठे, अथो भाण्डं अग्न्यासादनपात्रं च सह युगपद् हृतं मृगेण ॥ ४४२ ॥ एकस्मादनन्तरमेकस्तत एक इत्येकैके । धर्मस्य यमस्य मायया ॥ ४४३ ॥ वारि पिबन्तीति वारिपायिनः । ननु ताच्छील्यार्थे

---

१. 'ज्ञात्वेन्द्रं द्विज–' २. 'एकैकमुदका–'

व्याचक्रुः शक्तिमन्तोऽपि पानीयार्त्थमरिन्दमाः ।
न विप्राणां च धर्म्मोऽयं विद्याया उपजीवनम् ॥ ४४५ ॥

क्षत्रियाणां तु[1] किमुत प्रसभं तेन ते पपुः ।
देवा अपि मनुष्येषु जाताः सुबलिनोऽपि हि ॥ ४४६ ॥

मानुषेणैव भावेन युक्ताः स्युः केशवादृते ।
कार्य्येष्वेषां क्रमेणैव व्यक्तिमायान्ति सद्गुणाः ॥ ४४७ ॥

अतो भीमार्ज्जुनौ धर्म्मादत्युत्तमबलावपि ।
देवमायां समाश्रित्य धर्म्मेण स्वापितौ क्षणात् ॥ ४४८ ॥

मुहूर्त्तमेव सा माया तयोराच्छादनक्षमा[2] ।
ततः प्रबुद्धयोर्द्धर्म्मो नैव शक्तिशतांशभाक् ॥ ४४९ ॥

उक्तं पाद्मपुराणे[3] च तदेतत् सर्वमञ्जसा ।
तस्मान्नाशक्तिरनयोः सम्भाव्या भीमपार्त्थयोः ॥ ४५० ॥

**अदृश्येनैव धर्मेण वारिताः, मत्प्रश्नमपरिहृत्य पानीयं न पीयतामिति वारिताः । वारिपायिनः, प्रसभमिति शेषः । धर्ममायया सुप्ताः ॥ ४४३–६ ॥ क्रमेण तारतम्यक्रमेण ॥ ४४७–५५ ॥**

---

णिनिः श्रूयते–'**सुप्यजातौ णिनिस्ताच्छील्ये**' [३.२.७८] इति । पौनःपुन्ये च श्रूयते–'**बहुलमाभीक्ष्ण्ये**' [३.२.८१] इति । नात्र ताच्छील्यमर्थः । नापि पौनःपुन्यम् । तत् कथं णिनिः? सत्यम् । नात्र ताच्छील्यार्थे णिनिः । नापि पौनःपुन्यार्थे । किन्त्विच्छार्थे । वारि पातुकामा इत्यर्थः । ये पिपासार्तास्ते पौनःपुन्येन पिबन्तीति तेऽत्र वारिपायिन उच्यन्ते । नन्वस्मिन्नर्थे न पाणिनिर्णिनिं मन्यते? नन्वाभीक्ष्ण्ये मन्यते । तत्कारणे किमिति नानुमन्यते? अत्राऽभीक्ष्ण्यं नार्थ इति सूचयितुमेव णत्वं विजहौ । अन्यथा '**वारिपायिणः**' इत्येवावक्ष्यत् । विदां वराः । यद्यपि सोपपदादेव विदधातोः क्विप्प्रत्ययं पाणिनिर्मन्यते । वेदवित् मन्त्रविदिति । नतु केवलात् । अथापि द्वेष्टीति द्विडिति केवलादपि प्रयुञ्जते । एवं विदेरपि क्वचित् केवलादपि स्यादित्याचार्याशयः ॥ ४४४–५० ॥

---

१. '**याणां च कि–**' २. '**–राच्छादने क्षमा**' ३. '**पद्मपुराणे**'

धर्म्मात्मजोऽथाऽजगामोदकान्तं दृष्ट्वा भ्रातॄंस्तत्र दुःखाभितप्तः ।
इच्छन् पातुं वारि संवारितश्च पित्रा बकाकारमितेन नापात् ॥ ४५१ ॥

अर्त्थे भ्रातॄणामैच्छदसौ तदीयप्रश्नप्रतिव्याहरणं दयाळुः[1] ।
ततो धर्म्मो यक्षतनुः स भूत्वा प्रश्नांश्चक्रे व्याकरोत् तान् स पार्त्थः ॥ ४५२ ॥

ततस्तुष्टो वरमस्मै ददौ स एकोत्थानं भ्रातृमद्ध्ये स वव्रे ।
यद्येकः स्यान्नकुलोऽस्त्वित्यथाऽह तुष्टो धर्म्मः कथमेतत् कृतं ते ॥ ४५३ ॥

अतिप्रीतिर्भीमसेने तवास्ति बली चासौ राज्यहेतुस्तव स्यात् ।
इत्युक्त ऊचे माद्रिपुत्रं विहाय कुन्तीपुत्रो न मयोत्थापनीयः ॥ ४५४ ॥

स एवमुक्तो नितरां प्रीयमाण उत्थापयामास च तान् समस्तान् ।
यथेष्टरूपप्राप्तिमेषां पुनश्च स्वकामतो निजरूपाप्तिमादात् ॥ ४५५ ॥

अज्ञातवासेऽज्ञाततां सर्वदैव ददौ तेषां प्रीत इवाऽनृशंस्यात्[2] ।
एवं क्रीडन् पुत्र इत्यात्मनैव यशोधर्मावात्मनो वर्द्धयन् सः ॥ ४५६ ॥

युधिष्ठिरात्मनस्तस्य यशोधर्म्मविवृद्धये[3] ।
कृत्वाऽरण्यपहारादि[4] पुनर्दत्वा च तत् स्वयम् ।
दातुं विप्राय तद्धस्ते ययौ धर्म्मो दिवं पुनः ॥ ४५७ ॥

**आनृशंस्यात् अक्रौर्यात् ॥ ४५६–५८ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां द्वाविंशोऽध्यायः

—०—

उदकान्तं जलाशयसकाशम् । बकाकारं इतेन गतेन । बकाकारेण मितेन परिच्छिन्नेन, बकाकारेण मितेन अवगतेन वा । अपात् । पा पाने लुङ् ॥ ४५१ ॥ पूर्वं बकाकारः, पश्चाद् यक्षतनुः । अपरिज्ञेयदिव्यरूपो यक्ष उच्यते ॥४५२॥

१. 'दयालुः'
२. 'प्रीत एवाऽनृशंस्यात्'
३. 'युधिष्ठिरात्मनः स्वस्य यशोधर्माभिवृद्धये ।'
४. 'कृत्वाऽरण्यपहृत्यादि'

**ततो राजा भीमसेनार्ज्जुनौ च सार्द्धं यमाभ्यामरणीं प्रदाय ।**
**मुदा युताः कृष्णया सार्द्धमेव सन्तुष्टुवुः कृष्णमनन्तमच्युतम् ॥ ४५८ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये**
**अरणीप्राप्तिर्न्नाम**
**द्वाविंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **३१८१**+४५८=**३६३९**]

---

भ्रातृमध्ये एकोत्थानं वरं ददौ । स च एकोत्थानमेव वव्रे । 'यद्येक एव जीवनीयः स्यात् तर्हि नकुलो जीवतु' इति । एतत् नकुलस्य जीवनवरणं कथं कृतमृते भीमादीनां जीवनवरणात् ॥ ४५३ ॥ राज्यहेतुस्तव स्यादिति धर्म आहेति पूर्वान्वयः ॥ ४५४–५ ॥ आनृशंस्यमक्रौर्यं कारुणिकता । धर्मराजस्याऽनृशंस्यात् प्रीत इव । वस्तुतस्तु सदा प्रीत एव ॥ ४५६–७ ॥ विप्राय प्रदाय । प्रसाद्य दानं प्रदानम् । सन्तुष्टुवुः । यथा कृष्णः सन्तुष्टः स्यात् तथा तुष्टुवुः ॥ ४५८ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**प्रगतं द्वाविंशाध्यायविवरणं सतां हृदयाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**द्वाविंशोऽध्यायः**

—०—

[22-10-12]

# त्रयोविंशोऽध्यायः

[**अज्ञातवाससमाप्तिः**]

ॐ ॥ नारायणानुग्रहतो यथावन्निस्तीर्य्य तान् द्वादशाब्दान् वने ते ।
विसृज्य च ब्राह्मणादीन् सधौम्यानज्ञातवासाय ततो मनो दधुः ॥ १ ॥

गत्वा विराटस्य पुरीं निधाय हेतीः शम्यां छन्नरूपा बभूवुः ।
यतिः सूदः षण्ढवेषोऽश्वसूत[1]वेषो गोपो गन्धकर्त्री च जाताः ॥ २ ॥

**ॐ ॥ १ ॥ हेतीः शम्यां निधाय विराटस्य पुरीं गत्वा छन्नरूपा बभूवुः । पुरीं गत्वा पुरसमीपं गत्वेति वा । कथं छन्नरूपा इत्यतस्तद् विविच्याऽह– यतिरित्यादिना । एवं जाता बभूवुः ॥ २ ॥**

---

ॐ ॥ विराटपर्वसारं सङ्गृह्णात्यनेनाध्यायेन– नारायणानुग्रहत इत्यादिना । ब्राह्मणादीनित्यादिना परिचारकाः । **'अज्ञात-चर्यासमयं शेषं वर्षं त्रयोदशम् । तद् वत्स्यामः क्वचिच्छन्नास्तदनुज्ञातुमर्हथ । इत्युक्ता धर्मराजेन ब्राह्मणाः परमाशिषः । प्रयुज्याऽपृच्छ्य भरतान् यथास्वं प्रययुर्गृहान् । सर्वे वेदविदो मुख्या यतयो मुनयस्तदा । आशीरुक्त्वा यथान्यायं पुनर्दर्शनकाङ्क्षिणः । ते तु भृत्याश्च दूताश्च शिल्पिनः परिचारकाः । अनुज्ञाप्य यथान्यायं पुनर्दर्शनकाङ्क्षिणः'** [विरा.प.१.४४– ७] इति च । धर्मसचिवत्वाद् गुरुत्वात् पुरोहितत्वाच्च धौम्यस्य पृथग्ग्रहणम् ॥ १ ॥ गत्वा विराटस्य पुरीमिति गङ्गायाङ्घोषवादोऽयम् । पुरीपरिसरं गत्वा । यतिः । **'कङ्को नाम्ना परिव्राट् च विराटस्य सभासदः'** [२.२८] इति च । कङ्कत इति कङ्कः । ककि गतौ । सदा चरणशीलः । कं ब्रह्म कायति गायतीत्यान्तरोऽर्थः । सूदः पाचकः । सूदयति पशून् भक्षार्थमिति सूदः । सूद हिंसायाम् । अन्नपानादिदानेन सुखिनो भवन्त्युदा जीवसङ्घा अनेनेति वा । सदा भगवद्द्वेषिसूदनादन्वर्थं सूदो भीमसेनः । **'सूदोऽहं वललो नाम्ना सूपकारो नराधिप'** [३.८] इति च । धर्म-राजनामानुगुणं स्वस्यापि गूढं नाम चकार वलल इति । वल सञ्चरणे । बलं राति लाति वा । वं बलं ज्ञानं वा लालयते वा । लल ईप्सायाम् । वेन बलेन ज्ञानेन वा ललति । लल विलासे । षण्ढवेषः भ्रुकुंसः । **'वेणीकृतशिरा भूत्वा भविष्यामि बृहन्नळा'** [३.४४] इति च । **'ऊर्वश्याश्चापि शापेन प्राप्तोऽस्मि नृप षण्ढताम्'** [३.४९] इति च । बृहन् नडो नटनमस्या इति बृहन्नळा । नड नट अवस्रंसने । षण्ढवेष इति । अत्रार्वाचीनाः कोशकाराः विस्मृतधातुपारायणा बहुधा

---

१. **'–वेषोऽथ सूत–'** इति क्वचित् ।

**सर्वे विराटं ययुरत्र देववत् सम्भावितास्तेन शुभोरुलक्षणाः ।**
**युधिष्ठिरस्यैव शुश्रूषणं ते चक्रुर्हृदा वासुदेवस्य नान्यत् ॥ ३ ॥**

**परपाको गृहस्थस्य क्षत्रियस्य विशेषतः ।**
**न योग्य इति सूदस्य बभ्रे वेषं[१] वृकोदरः ॥ ४ ॥**

**ननु क्षत्रियाः सन्तस्ते भीमादयः कथमन्यसेवां चक्रुरित्यत आह– युधिष्ठिरस्येति । ते भीमादयः सूदादिकर्मभिः युधिष्ठिरस्यैव शुश्रूषणं चक्रुः । अन्यत् अन्यसेवनम् ॥ ३ ॥ भीमादीनां सूदादिवेषाङ्गीकाराभिप्रायमाह–परपाक इत्यादिना ॥ ४ ॥**

---

विभ्रमन्ति । केचित् प्रजननशक्तिहीनं शण्डं वदन्ति । अन्ये शण्ढम् । अपरे षण्डम् । षण्ढमेके । तत्रेयं व्यवस्था– शण्डमिति षण्डमिति च वृक्षादिकदम्बमुच्यते । षण्ड इति बलीवर्दः । षण्ढ इति प्रजननशक्तिहीन उच्यते । **'षढि निर्बीजे'** इति पठनीयमित्युक्तं पूर्वाध्याये [१५५] । वेषशब्दः सर्वत्रान्वेति– यतिवेष इत्यादि । कृतकरूपधारणं वेषः । अश्वसूत-वेषो नकुलः । **'अश्वाध्यक्षो भविष्यामि विराटस्येति मे मतिः । दामग्रन्थीति नाम्नाऽहं कर्मैतत् सुप्रियं मम'** [४.५] इति च । अदान्तानप्यश्वान् दमयित्वा दाम्ना प्रग्रहेण ग्रन्थयते बध्नातीति दामग्रन्थिः । गोपः–**'गोसङ्ख्याता भविष्यामि विराटस्येति रोचये । तन्तिपालेति मे नाम स्वयं प्रोक्तं भविष्यति'** [४.१५] इति च । तन्तिबन्धेन पालयति गा इति तन्तिपालः । गन्धकर्त्री सैरन्ध्री । **'सैरन्ध्री गन्धकारिका'** इति रत्नमाला । **'सैरन्ध्री जातिसम्पन्ना नाम्नाऽहं व्रतचारिणी । भविष्यामि महाराज विराटस्येति मे मतिः'** [४.३०] इति च ॥ २ ॥ अत्र विराटस्य पुर्याम् । देववत् देवा इव सम्भाविताः । **'त्वं चापि देवो मम राज्यमर्हसि'** [वि.प.९.४५] इति युधिष्ठिरं प्रति विराट-वचनम् । **'त्रिलोकपालो हि यथा विराजसे तथाऽद्य मे विष्णुरिवातिरोचसे'** [१०.२३] इति भीमसेनं प्रति । **'किमेष देवेन्द्रसुतः किमेष ब्रह्मात्मजो वा किमयं स्वयम्भूः'** [११.७] इत्यर्जुनं प्रति । **'विभाति वीरो हि यथाऽमरस्तथा'** [१२.४] इति नकुलं प्रति । **'समुद्रनेमीश्वररूपवानसि'** [१३.१४] इति सहदेवं प्रति । **'प्रशाधि मत्स्यान् सहराज-कानिमान् बृहस्पतिः शक्रसुतानिवामरान्'** [८] इति च । हृदा मनसा । युधिष्ठिरस्य युधिष्ठिरान्तर्यामिणः वासुदेवस्य च । अन्यत् अन्यशुश्रूषणं न चक्रुः । **'क्षत्रधर्मरता नित्यं केशवानुगताः सदा'** [३१.२१] इति गोग्रहणे । अन्यत् अन्यस्य शुश्रूषणमिति षष्ठ्यर्थे प्रथमा वा ॥ ३ ॥ परपाकः स्वात्मात्मीयेतरैः पक्वस्य परकीयस्यान्नस्य भोजनम् । गृहस्थस्य ब्राह्मणस्यापि न प्रशस्तम् । अथापि न निषिद्धम् । ब्रह्मचारिणो यतेर्वा भिक्षितमश्नतः परपाको न दोषायेति गृहस्थस्येत्याह । वानप्रस्थोऽपि प्रायो गृहस्थ एव भवति । विषप्रयोगादिशङ्कया क्षत्रियस्य तु सर्वथा न युक्तमिति विशेषत इत्याह । क्षत्रियस्यापि आपत्काले कथञ्चिदनुमन्यत इति न सर्वथा निषिद्धम् । अथापि सति सम्भवे परपाको न योग्य इति वृकोदरः पाककर्ता बभूव । तेन धर्मराजादेरपि न परपाको बभूव । यतिवेषत्वाद् धर्मराजस्य लोकदृष्ट्या परपाकोऽपि न दोषाय ॥ ४ ॥

---

१. **'सूदस्य वेषं बभ्रे वृको–'** इति क्वचित् ।

वैदिकव्यवहारेषु ज्ञानाधिक्यप्रसिद्धितः ।
जानीयुर्भीम इत्येव [१]शूद्रवेषस्ततोऽभवत् ॥ ५ ॥

स्वीयं वेदविदां सर्वं देवेशानां[२] च किं पुनः ।
अतस्तेऽन्याश्रयं नैव चक्रुः स्वबलसंश्रयात् ॥ ६ ॥

शापादेवार्ज्जुनः षण्ढवेषोऽभून्नकुलस्तथा ।
क्षत्रियानन्तरत्वात्तु सूतजातेस्तथाऽभवत् ॥ ७ ॥

सूतस्यानन्तरत्वात्तु वैश्यजातेस्तथाऽभवत् ।
सहदेवो वैश्यजातिर्ग्गोपालस्तेषु चोत्तमः ।
ततो गोपालतामाप यतिः पूज्योऽखिलैर्य्यतः ॥ ८ ॥

**सूदत्वेऽपि शूद्रवेषाभिप्रायमाह–वैदिकव्यवहारेष्विति । भीम इति जानीयुरेव यतः ततः ॥ ५ ॥ इतश्च तेऽन्याश्रयं न चक्रुरित्याह– स्वीयमिति । वेदवित्त्वात् देवेशत्वात् स्वबलसंश्रयत्वाच्च अन्याश्रयं न चक्रुरिति भावः ॥ ६ ॥ शापात् उर्वशीशापात् । नकुलः तथा स्वजातेरनन्तरसूतजातिमाप । सहदेवः तथा सूत-जात्यनन्तरवैश्यजातिरभवत् । तेषु वैश्येषु ॥ ७–८ ॥**

---

तर्हि भीमः शूद्रो बभूव । यतः प्रायः क्षत्रियकुलेषु शूद्राः सूदा भवन्ति । सत्यं बभूवेत्याह– वैदिकव्यवहारेषु । तथाहि भीमवचनम्–'**नरेन्द्र शूद्रोऽस्मि चतुर्थवर्णभाक्**' [१०.१३] इति, '**जात्याऽस्मि शूद्रो वललेति नाम्ना जिजीविषुस्त्वद्विषयं समागतः**' [१०.१७] इति च । '**सोऽहं शूद्रेण सङ्गामे बललेनाभिरक्षितः**' [३६.१५] इति च । विराटस्य शुचं द्रावयतीत्यन्वर्थं शूद्रनामा भीमसेनः । द्रौपदीशुचा निमित्तेन कीचकं प्रत्याद्रवणाद्वा । इति जानीयुरेव, इति यस्मात् तत एव । इत्येव इति हेतोरेव । ततः विराटपुरीप्रवेशानन्तरम् । ज्ञानविततो वा ततः । ततोऽपि शूद्रवेष एवाभवत् ॥ ५ ॥ स्वीयमिति । तेन वस्तुतः परपाकेऽपि न दोषः । परस्यापि स्वीयत्वात् । अथापि लोकसङ्ग्रहार्थमेवं चकार भीम इति । स्वभावतश्चतुर्वर्णा देवा इति जातिव्यत्ययोऽपि न दोषाय तेषाम् । अथापि नरलोके नरवत् प्रवृत्तिरित्याशयः ॥ ६ ॥ युधिष्ठिरः ब्राह्मणवेषो बभूव । भीमः शूद्रवेषो बभूव । अर्जुनः स्त्रीवेषः षण्ढो भृकुंसो बभूव । क्षत्रियत्वं तु नोद्घाटनीयम् । अतः क्षत्रियानन्तरत्वादेव । तथा, यथा भीमादयोऽक्षत्रियवेषा बभूवुस्तथा । नकुलः तथा सूतजातिवेषोऽ-भवत् । कुतः? सूतजातेः क्षत्रियादधमत्वात्, वैश्यादुत्तमत्वात् । क्षत्रियाद् ब्राह्मण्यां हि जातं प्रायः सूतमाहुः । अश्वरक्षायां नकुलस्य रुचिविशेषं च तुनाऽह नकुलस्त्विति । सूतजातेः शूद्रादुत्तमत्वं च विशेषं सूतजातेस्त्विति ॥ ७ ॥ यथा

---

१. 'इत्येव सूदवेष–'

२. '**देवांशानाम्**' इति क्वचित् ।

**यतिरासीद् धर्म्मजोऽतः सोऽभ्यासार्थं सदैव च[1] ।**
**अक्षासक्तोऽभवत् पश्चाद् दर्शयिष्यन् स्वशिष्टताम् ॥ ९ ॥**

**भीमसेनसधर्म्मार्त्थं शूद्रा सैरन्ध्रिकाऽभवत् ।**
**द्रौपदी भर्त्तृसाधर्म्म्यं स्त्रीणां धर्म्मो यतः सदा ॥ १० ॥**

**अथाऽजगाम मल्लकः समस्तभूमिमण्डले ।**
**वरेण योऽजितो जयी शिवस्य सञ्जगर्ज्ज च ॥ ११ ॥**

**पश्चात् अज्ञातवासानन्तरं स्वशिष्टतां स्वस्य अक्षगतिज्ञतां[2] दर्शयिष्यन् ॥ ९–१० ॥ शिवस्य वरेण अजितः, स्वयं जयी च ॥ ११–१३ ॥**

---

नकुलः सूतजातिरभवत् तथा सहदेवोऽपि आनन्तर्यविवक्षयैव वैश्यजातिरभवत् । कुतः? वैश्यजातेः सूतादवरत्वात्, शूद्रादुत्तमत्वात् । तेषु च वैश्येषु गोपालनवृत्तिरुत्तम इति गोपालतामाप ॥ ८ ॥ अखिलैर्वर्णैराश्रमैश्च पूज्यत्वाद् ब्राह्मणेषु यतिः श्रेष्ठ इति धर्मजो यतिरासीत् । अक्षासक्तश्चाभवत् । अभ्यासार्थं पाटवार्थम् । पश्चात् अज्ञातवासानन्तरं स्वराज्ये स्थितिदशायां च्छद्मनैव शकुनिर्जिगाय नतु स्वापाटवादिति लोकान् प्रत्याययितुं स्वस्य अक्षे सम्यगनुशिष्टतां सुशिक्षिततां शिष्टतां च दर्शयितुमिच्छन् । शकुनेः सुतरामशिष्टतां च दिदर्शयिषन् ॥ ९ ॥ भीमसेनसधर्मार्थम् । भावप्रधानो निर्देशः । भीमसेनसाधर्म्यार्थम् । भीमसेनेन, तद्धर्मेणेति यावत्, समानो धर्मः भीमसेनसधर्मः । तदर्थमिति वा । ननु धर्मराजो ब्राह्मणवेषो बभूव । तेन ब्राह्मणीत्वेऽपि द्रौपद्या भर्तृसाधर्म्यं भवति । न भोः । तथ्यं शृणु । भर्तुः सकाशादनुत्तमवर्णत्वमिह भर्तृसाधर्म्यं विवक्षितम् । अपि च मूलरूपेऽपि भर्ता भीमसेन एवेति तत्साधर्म्यं तस्या मुख्यधर्मः । तेन भीमः शूद्रोऽभवदिति सा शूद्रा बभूव । जात्या शूद्रा, न शूद्रस्य पत्नीति ख्यापयन्ती । **'शूद्रा चामहत्पूर्वा जातिः'** [अ.सू.४.१.४] इति गणसूत्रम् । **'सा सैरन्ध्री याऽन्यगृहे स्वायत्ता शिल्पकारिणी । वर्णसङ्करजा या च'** इति दण्डनाथः । **'चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता'** इति कात्यः । स्वैरं ध्रियत इति सैरन्ध्री भवति । सर्वेषामपि प्रिया युवती वा सैरन्ध्री सैरन्ध्रिका ॥ १० ॥ अथ मासत्रयानन्तरम्, चतुर्थे मासे । अथेति कथान्तरे च । माङ्गलिकं चेदं भीमसेनमहिमानुसन्धानम् । नीचो मल्लो मल्लकः जीमूतो नाम । कथं जीमूतः? जयति सर्वानिति जीमूतः । तथाहि दशपादिका–**'जेर्मुट् चोदात्तः'** [६.११] इति । जेर्धातोः क्तः प्रत्ययो भवति । मुट् चाऽगमः । स चोदात्तः [जीमूतः] । दीर्घश्च धातोरिति सूत्रार्थः । जीयते भीमेनेति जीमूत इति त्वन्वर्थं नामधेयम् । **'जीवनं जलं मूत्रयति स्रावयतीति पृषोदरादित्वात् सिद्धेरनार्षमिदं सूत्रम्'** इत्येके । अनार्षमेव हि प्रायो वैयाकरणानां निर्वचनं भवति । जीवनं जलं मुञ्चतीत्यपरे । जीवनं जलं मूतं बद्धमनेनेत्यपरे । **'जीवनस्य मूतो जीमूतः । वनशब्दस्य**

---

१. **'सदैव हि'** इति कचित् ।
२. **'अक्षाभिज्ञताम्'** इति स्यात् ।

**तमीक्ष्य सर्वमल्लका विराटराजसंश्रयाः ।**
**प्रदुद्रुवुर्भयार्दितास्तदाऽवदद् युधिष्ठिरः ॥ १२ ॥**

**य एष सूद आशु तं निहत्य मल्लमोजसा ।**
**यशस्तवाभिवर्द्धयेत् समाह्वयाद्य तं नृप ॥ १३ ॥**

**इतीरिते समाहुतो जगाद मारुतिर्वचः ।**
**प्रसादतो हरेरहं [१]निसूदयेऽद्य मल्लकम् ॥ १४ ॥**

**समस्तदेववृन्दतो महान् य एव केशवः ।**
**समस्तदेवनामवांस्तदीयभक्तितो बलम् ॥ १५ ॥**

**हरेः प्रसादतो निसूदय इत्यवददित्युपलक्षणम् । महादेवादेः प्रसादतोऽपि निसूदय इत्यवददित्यर्थः ॥१४॥ ननु महादेवादेरप्युत्तमो[२] भीमः महादेवादेः प्रसादतो निसूदय इति कथमवददित्यतो महादेवादिशब्दानां हरौ प्रवृत्तिमुपपादयति– समस्तेत्यादिना । यः केशवः समस्तदेववृन्दतो महान् क्रीडादिगुणरूपत्वाद् देवश्च स एव महांश्चासौ देवश्चेति निरुक्त्या महादेव इत्युक्त इति भावः । न केवलं महादेवशब्दवाच्यः । किन्तर्हि? समस्तदेवनामवाच्यश्चेत्याह– समस्तेति । यः केशवः महादेवादिसर्वदेवनामवान् तदीयभक्तितः बलम्, सर्वेषामिति शेषः । तस्माद् भीमो महादेवानुग्रहतो निसूदय इत्याहेत्यभिप्रायः ॥ १५ ॥**

---

**लोपः'** इति वामनः । शृणु चापरं निर्वचनम्– जीवजातं स्वबलेन, आसारेण वा, मूकं तनोतीति जीमूतः । परतेजस आवरणेन वर्णतश्च मेघसादृश्याज्जीमूत इव चायं जीमूतः । समस्तभूमिमण्डले परैरजितः, परेषां जयी । आगत्य सगर्वं जगर्ज च । समाहूय जगर्ज च । **'अथ मासे चतुर्थे तु शङ्करस्य महोत्सवः । ..तत्र मल्लाः समापेतुर्दिग्भ्यो राजन् सहस्रशः'** [१५.१३] इति समयपालने । **'तेषामेको महानासीत् सर्वान् मल्लानथाऽह्वयत्'**[१७] इति च । **'आगतं मल्लराजं मां कृत्स्ने पृथिविमण्डले । सिंहव्याघ्रगणैः सार्धं क्रीडन्तं विद्धि भूपते'** [२२] इति च ॥ ११ ॥ क्षुद्रा मल्ला मल्लकाः । प्रमुख एव दुद्रुवुः ॥ १२ ॥ य एष सूदः । तेन सूदयति जीमूतं च । तव शोकं च । अभितः सर्वतोदिशम् । समादृत्याऽह्वय । सधैर्यमाह्वय । सन्तोषेणाऽह्वय । तं सूदम् ॥ १३ ॥ समाहुतः । हु दाने, आदाने च । जीमूतनिहननार्थं स्वीकृतः । सम्प्रीणितश्च । 'हु प्रीणन' इति च हि पठन्ति । तेन सह योद्धुं समाहुतः समाहूतश्च । भगवदिच्छया दुष्टसंहारे प्रवृत्तस्येदमाह्वानमकिञ्चित्करमिति दीर्घलोपेनाऽह ॥ १४ ॥ प्रसादतो हरेरहम् । नन्वसङ्गतमुच्यते हरेः प्रसादत इति । हरस्य प्रसादत इति तु वक्तव्यम् । तथाहि भारते–**'महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम्'** [१५.३२] इति ।

---

१. 'निषूदये–'

२. '–वादेरत्युत्तमो–' इति च पठन्ति ।

**य एव देवनामधा इति श्रुतिर्ज्जगाद हि ।**
**महांश्च देव एष तत् स मे जयं विधास्यति ॥ १६ ॥**

**युधिष्ठिराभिधश्च यो युधिष्ठिरे स्थितः सदा ।**
**त्वयि स्थितस्त्वमित्यसौ सदाऽभिधीयते हरिः ॥ १७ ॥**

**विष्णोः सर्वदेवनामवत्त्वाभिधायिकां 'यो देवानां नामधा एक एव' इत्येतां श्रुतिमर्थतोऽनुवदति– य इति । एषः महांश्च देवश्च तत् तस्मादेव निरुक्त्या महादेवनामवानपि हरिरित्यभि(प्रेत्य स महादेवः मे जयं वि)धास्यति, इति भीम आहेति शेषः ॥ १६ ॥ युधिष्ठिरप्रसादात् त्वत्प्रसादाच्च निसूदय इत्युक्तेर्भावमाह– युधिष्ठिरेति । त्वयीति पुरोवर्त्युपलक्षणार्थः । पुरोवर्तिस्थितः त्वमित्युच्यते । स्वगतः अहमित्युच्यते । विप्रकृष्टगतः असावित्युच्यते । 'सर्वान्तर्यामको विष्णुः सर्वनामाऽभिधीयते । एषोऽहं त्वमसौ चेति नतु सर्वस्वरूपतः' इत्युक्तेः ॥ १७ ॥**

---

शिवो हि महादेव उच्यते । सत्यं शिवो महादेव उच्यते । न शिव एव । नारायणोऽपि । मुख्यतस्तु नारायण एवेत्याह– समस्तदेववृन्दतः । सर्वेऽपि देवाः स्वावरेभ्यो महान्तः । तेन सर्वेभ्यो महान् देव एव मुख्यार्थो वक्तव्य इत्यर्थः । **'त्वं हि देवो महादेव सर्वलोकनमस्कृतः'** [उ.प.१०.८] इति च विष्णुं प्रति देवानां वचनम् । पाद्मे च–**'किं करोमि महादेव येन मे पूर्विका तनुः । त्वत्प्रसादेन भविता–'** [सृ.खं.१४.१५६] इति । यस्य वरेणायं मल्लः सर्वैरजेयो बभूव तस्य शिवस्याप्यन्तर्यामिणो महतो देवस्य प्रसादेनेति हृदयम् । तदीयभक्तितो बलम्, मम च, सर्वेषां च । **'स वै बलं बलिनां चापरेषाम्'** इति हि स्मरन्ति । अभक्तत्वाज्जीमूतस्य तद्बलमकिञ्चित्करम् ॥ १५ ॥ **'यो देवानां नामधा एक एव'** [ऋ.सं.१०.८२.३ ] इति हि विश्वकर्मसूक्ते । देवेभ्यो महान्, देवेषु वा महानित्युक्तम् । महादेवे शिवे स्थितत्वान्महादेव इति च । निर्वचनान्तरं चाऽह–महांश्च देवः । महच्चास्य देवत्वम् । दिवु विजिगीषायाम् । दीव्यन्ति लीलया विजयन्ते शत्रूननेनेति देव इत्याशयेनाऽह– स मे जयं विधास्यति ॥ १६ ॥ **'नरेन्द्र ते प्रभावेन श्रिया शक्त्या च शासनात् । अनेन सह मल्लेन योद्धुं राजेन्द्र शक्नुयाम् । युधिष्ठिरकृतं ज्ञात्वा श्रिया तव विशाम्पते'** [१५.३१] इति भारतवचनस्याऽशयमाह– युधिष्ठिरेत्यादिना । तथाचायं भारतवचनार्थः– नरेन्द्र हे राजन्, ते त्वयि स्थितस्य नारायणस्य प्रभावेन प्रसादेन, तद्दत्तया श्रिया त्वद्गतया, शक्त्या च मद्गतया, त्वयि युधिष्ठिरे च स्थितस्य तस्यैव शासनात् मल्लेन योद्धुं शक्नोमीति । अपिचेदं मल्लयुद्धाय मदाह्वानं युधिष्ठरगतेन युधिष्ठिरनाम्ना भगवतैव कृतं ज्ञात्वा तं मल्लं पातयामि । तव त्वद्गतस्य भगवतः आज्ञारूपया च श्रिया तं पातयामीति । सर्वेऽप्यनेन युधि स्थिरा भवन्तीति युधिष्ठिरः । ततं वं ज्ञानं बलं चास्येति त्वम् । विराजन्नटतीति विराटः । विरागिष्वटतीति विराटः । वीरेष्वटतीति विराटः । वृणोतीति विराटः । वृङ इत्वमाटक्प्रत्ययश्चेति दण्डनाथः ॥ १७ ॥

इति ब्रुवाणो मल्लं तमभियातो वृकोदरः ।
अनयन्मृत्युलोकाय बलाढ्यैरपि दुर्ज्जयम् ॥ १८ ॥

एवं निवसतां तत्र पाण्डवानां महात्मनाम् ।
संवत्सरे द्विमासोने विजित्य दिश आगतः ।
कीचको [1]मत्स्यनृपतेः स्यालो[2] बलवतां वरः ॥ १९ ॥

स द्रौपदीमीक्ष्य[3] मनोभवार्त्तः सम्प्रार्थयामास तया निरस्तः ।
मासे गते भगनीं स्वां सुदेष्णां सम्प्रार्थयामास तदर्थमेव ॥ २० ॥

तया निषिद्धोऽपि पुनःपुनस्तां यदा ययाचेऽथ च साऽऽह[4] कृष्णाम् ।
समानयाऽऽश्वेव सुरां मदर्थमितीरिता नेति भीताऽवदत् सा ॥ २१ ॥

**सर्वान्तर्गतत्वेन सर्वनामवन्तं हरिमभिप्रेत्य महादेवयुधिष्ठिरादिप्रसादतः मल्लं निसूदय इति ब्रुवाणः ॥ १८–९ ॥ प्रार्थनया द्रौपदीनिरसनेन च मासे गते सति ॥ २० ॥ तया सुदेष्णया । मदर्थं सुरां समानय, कीचकमन्दिरादिति शेषः । भीता कीचकदौरात्म्यात् भीता ॥ २१–३१ ॥**

---

तं जीमूतनामानं मृत्युलोकाय अनयत् । मृत्युलोकमनयदित्यर्थः । **'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ–'** [अ.सू.२.३.१२] इति हि पाणिनिः ॥ १८ ॥ द्वाभ्यां मासाभ्यामूने । **'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः'** [अ.सू.२.१.३१] इति तृतीयातत्पुरुषः । स्यालः सेनापतिश्च । तदेतद् **'बलवतां वरः'** इत्यनेन सूचितम् । सेना च हि बलमुच्यते ॥१९॥ सङ्गमाय प्रार्थयामास । **'मा सूतपुत्र मुह्यस्व माऽद्य त्यक्ष्यस्व जीवितम् । जानीहि पञ्चभिर्घोरैर्नित्यं मामभिरक्षिताम् । नचाप्यहं त्वया लभ्या गन्धर्वाः पतयो मम । ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः'** [१७.१५–६] इति तया निरस्तः । तदर्थमेव द्रौपदीसङ्गमार्थमेव । सम्मूढः प्रार्थयामास । भगिन्याश्चरणग्रहणपूर्वकं प्रार्थयामास । **'स तु मूर्ध्न्यञ्जलिं कृत्वा भगिन्याश्चरणावुभौ । सम्मोहाभिहतस्तूर्णं वातोद्धूत इवार्णवः'** [१८.३] इति च ॥ २० ॥ तयाऽपि निषिद्धः । निषिद्धोऽपि ययाचे । यदा यस्माद् ययाचे, अथ च तस्मादेव कारणात् । सा च पूर्वं कृतनिषेधाऽपि सा । समानया राजदारा इति साहङ्कारया कीचकसमानया नीचबुद्ध्याऽऽह । किमिति? समानय सधैर्यमानय । अहं त्वां रक्षामीति । अथ च सोदरीत्वात् प्रकृत्या कीचकसमा आह । किमिति? आनयाऽऽश्वेव सुरां

---

१. **'मात्स्य–'** इति क्वचित् । २. **'नृपतेः श्यालो बल–'**

३. **'द्रौपदीं वीक्ष्य'** इति क्वचित् । ४. **'ययाचेऽथ सा चाऽह'** इति क्वचित् ।

**बलात् तया प्रेषिता[१] तद्गृहाय यदाऽगमत् तेन हस्ते गृहीता ।**
**विधूय तं प्राद्रवत् सा सभायै स्मृत्वाऽऽदित्यस्थं वासुदेवं परेशम् ॥ २२ ॥**

**अनुद्रुत्यैतां[२] पातयित्वा पदा स सन्ताडयामास तदा रविस्थितः[३] ।**
**नारायणो हेतिनामैव रक्षो न्ययोजयत् तददृश्यं समागात् ॥ २३ ॥**

**वायुस्तमाविश्य[४] तु कीचकं तं न्यपातयत् तां समीक्ष्यैव भीमः ।**
**चुकोप वृक्षं च समीक्षमाणं तं वारयामास युधिष्ठिरोऽग्रजः ॥ २४ ॥**

**कृष्णा रात्रौ भीमसकाशमेत्य हन्तुं पापं कीचकं प्रैरयत् तम् ।**
**भीमस्य बुद्ध्या निशि सा कीचकं च जगाद गन्तुं शून्यगृहं स चागात् ॥ २५ ॥**

---

मदर्थम् । एवमत्र त्रेधा प्रतृण्णं भवति । समानया+आश्वेव । समानय+आश्वेव । समा+आनय+आश्वेव । नाहं तत्र व्रजामि । नाऽनयामि च सुरामित्यवदत् । भीतेव । नहि स्वयं भयं भवति भारत्याः । यद्वा आज्ञाया अनुल्लङ्घ्यता-हेतुः पारवश्यं नामासहायता भयम् । तद् यथा– भयादस्याग्निस्तपति । सम्प्रत्यज्ञातवासे स्वरूपाविष्करणस्य राज्ञ्या आज्ञाया अकरणस्य चाशक्यताजननी व्यावहारिकी काचिदसहायता भयम् ॥ २१ ॥ यदाऽगमत् तदा । **'–दक्षिणे पाणौ सूतपुत्रः परामृशत्'** [१९.२१] इति च । सभायै न्यायदानार्थं सभां प्रार्थयितुं प्राद्रवत् । **'क्रियार्थोपपदस्य च कर्मणि स्थानिनः'** [अ.सू.२.३.१४] इति स्मरणात् । न्यायनिर्णयायाधिकृताः सभासदः सभाशब्देनोच्यन्ते । सभेत्यास्थान-मास्थानिनश्च । **'सभा सभ्येषु शालायाम्'** इति ह्यभिदधति । **'उपातिष्ठत सा सूर्यं मुहूर्तमबला तदा । तदस्यास्तनु-मध्यायाः सर्वं सूर्योऽवबुद्धवान् । अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत्'** [१९.३–४] इति भारतवचनाशयमाह– 'स्मृत्वाऽऽदित्यस्थम्' इत्यादिना ॥ २२ ॥ पश्यतां सभासदां समक्षं ताडयामास । **'ततो दिवाकरेणाऽशु राक्षसः सन्नियोजितः । स कीचकमपोवाह वातवेगेन भारत'** [१९.२५] इति भारतवचनाभिप्रायमाह–तदा रविस्थितः ॥२३॥ **'वातवेगेन'** इत्यस्य स्वाविष्टेन वायुना प्रदत्तवेगेनेत्यर्थमाह–वायुस्तमाविश्य । अन्यथा शिववरादजेयं कथं हेति-र्विजयेत । तं हेतिं राक्षसम् । हेतिप्रहेती सूर्यरथचक्ररक्षौ राक्षसौ । तां कीचकताडितां द्रौपदीम् । तद्धननाय वृक्षं अनुमत्यै राजानं च समीक्षमाणम् । **'निरैक्षत द्रुमं दीर्घं राजानं चाप्यवैक्षत'** [१९.३१] इति च । अङ्गुष्ठेनाङ्गुष्ठमवमृद्य सङ्केतभाषया च वारयामास । अग्रजत्वाद् वारयामास । अग्रजेन वारित इति भीमोऽपि कोपं नियम्य तूष्णीमास ॥ २४ ॥ **'यैषा नर्तनशालेह मत्स्यराजेन कारिता । दिवाऽत्र कन्या नृत्यन्ति रात्रौ यान्ति तथा गृहम् । तत्रास्ति शयनं भीरु दृढाङ्गं**

---

१. **'प्रेरिता'** इति क्वचित् ।
२. **'अनुद्रुत्यैनां पात–'**
३. **'रविस्थः ।'**
४. **'वायुस्तदाविश्य'**

**तत्रैनमासाद्य तु[1] भीमसेनो विजित्य तं बाहुयुद्धे निहत्य ।**
**शिरो गुदे पाणिपादौ च तस्य प्रवेशयामास विमृद्य वीरः ॥ २६ ॥**

**अवद्ध्यं तं निहतं वीक्ष्य तस्य पञ्चोत्तरं शतमेवानुजानाम् ।**
**सर्वं वराच्छङ्करस्य ह्यवद्ध्यं सहैव कृष्णां तेन दग्धुं बबन्ध ॥ २७ ॥**

**सा नीयमाना कीचकैः संरुराव श्रुत्वैव तं भीमसेनो महान्तम् ।**
**उद्धृत्य वृक्षं तेन जघान सर्वानादाय कृष्णां पुनरागात् पुरं च[2] ॥ २८ ॥**

**एवं यत्नात् तपसा तैरवाप्तो वरः शिवादजयत्वं रणेषु ।**
**अवद्ध्यता चैव षडुत्तरास्ते शतं हता भीमसेनेन सङ्ख्ये[3] ॥ २९ ॥**

**गन्धर्व इत्येव निहत्य सर्वान् मुमोद भीमो द्रौपदी चाऽथ कृष्णाम् ।**
**याहीत्यूचे तां[4] सुदेष्णा भयेन त्रयोदशाहं पालयेत्याह तां सा ॥ ३० ॥**

---

**सुप्रतिष्ठितम् । तत्रैनं दर्शयिष्यामि पूर्वप्रेतान् पितामहान्'** [२५.३–४] इति भीमस्य बुद्ध्या । कर्तव्यबोधनी वागिह बुद्धिपदार्थः । **'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु'** [२.३९] इतिप्रयोगाद् भगवद्गीतायाम् । शून्यं नर्तन-गृहं निशि गन्तुम् ॥ २५ ॥ **'अथ पाणी च पादौ च शिरो ग्रीवां सकुण्डलाम् । गुदे प्रवेशयामास मृदित्वाऽङ्गानि सर्वशः'** [२६.४०] इति च ॥ २६ ॥ तेन सहैव कृष्णां दग्धुं बबन्ध ॥ २७ ॥ संरुराव । उच्चैश्चुक्रोश । कीचकै-रुपकीचकैः । कीचका इव सङ्घशः संश्लिष्टा भवन्तीति पञ्चोत्तरं शतमुपकीचकाः कीचका उच्यन्ते । कचन्त इति कीचका इत्येके । कच बन्धने । वर्णविपर्ययेण चीकयन्त इति कीचका इत्यपरे । चीक मर्षणे । कीनाशो मृत्युरिव शत्रून् चकयन्तीति कीचका इति तत्ववादिनः । चक प्रतिघाते । कीलालेन शोणितेन चकन्ति तृप्यन्ति वा । चक तृप्तौ । तदेवमेते नीचकाः कीचका उच्यन्ते ॥ २८ ॥ न कोऽपि जयत्येतानित्यजयाः । अजेयाः । रणेष्वजेयत्वं नाम, अवध्यता च नाम यो वरः महान्तं प्रयासमनुभूय तपसा शिवमाराध्य प्रसन्नात् शिवात् तैरवाप्तः, स एव एवं एतादृशो विफलो बभूवेत्यर्थः । अथच यैस्तैः नीचत्वेन प्रसिद्धैः एवमवाप्तो वरः त एव अवध्यत्वाजेयत्ववरबलवन्त एव शतादप्युत्तरा षट्सङ्ख्या येषां ते षडुत्तराः । भीमसेनेन हताः । यतः सः शङ्करस्यापीनेन हरिणा तदनुग्रहेण सहितः ॥ २९ ॥ तेषां हन्ता गन्धर्व इत्येव जनप्रवादेन भीमो मुमोद । द्रौपदी च मुमोद । अथ भीता सुदेष्णा तां स्वसोदराणां हननहेतुं कृष्णां यथेष्टं क्वाप्यन्यत्र

---

१. **'–साद्य च भीम–'** २. **'– गात् गृहं च ।'**
३. **'सङ्ख्ये ।'** ४. **'–त्यूचे सा सु–'**

अस्त्वित्येनामाह भयात् सुदेष्णा तथाऽवसन् पूर्णमब्दं च तेऽत्र ।
तदा पार्त्थान् [1]प्रविचित्याखिलायां पृथ्व्यां छन्नान् धार्त्तराष्ट्रस्य दूताः ॥ ३१ ॥

अविज्ञाय प्रययुर्द्धार्त्तराष्ट्रमूचुर्हतं कीचकं योषिदर्त्थे ।
तेनावदद् द्रौपदीकारणेन दुर्य्योधनो निहतं कीचकं तम् ॥ ३२ ॥

भीमेनागुस्तत्र दुर्य्योधनाद्या भीष्मादिभिः सह कर्ण्णेन चैव ।
अग्रे ययौ तत्र योद्धुं सुशर्म्मा स गा विराटस्य समाजहार ॥ ३३ ॥

श्रुत्वा विराटोऽनुययौ ससेनस्तं[2] पाण्डवाश्चानुययुर्विनाऽर्ज्जुनम् ।
विजित्य सङ्के[3] जगृहे विराटं तदा सुशर्म्मा तमयाद् वृकोदरः ॥ ३४ ॥

स तस्य सेनां विनिहत्य मात्स्यं विमोच्य जग्राह सुशर्म्मराजम् ।
युधिष्ठिरो मोचयामास तं च ततो रात्रौ न्यवसन् बाह्यतस्ते ॥ ३५ ॥

ततोऽपरदिने सर्वे भीष्मद्रोणपुरस्सराः ।
रहितं कीचकैर्म्मात्स्यं शक्यं मत्वाऽभिनिर्य्ययुः ॥ ३६ ॥

**तेन तद्वार्ताश्रवणेन ॥ ३२–९ ॥**

---

याहीत्यूचे । तां च सुदेष्णां सा द्रौपदी त्रयोदशाहं पालय, ततो मां गन्धर्वा नेष्यन्ति करिष्यन्ति च ते प्रियमित्याह ॥ ३० ॥ प्रविचित्य महता प्रयासेन अन्विष्य । अज्ञातवासाय च्छन्नवेषान् ॥ ३१ ॥ प्रययुः प्रत्याययुः । तेन दूतवचनेन कृतनिगमनो दुर्योधनः द्रौपदीकारणेन द्रौपदीनिमित्तम्, द्रौपदी कीचकवधे कारणं यस्य तेन भीमेन, यस्मात् कुरवो बिभ्यति स्म तं कीचकं हतमवदत् । **'तत्राहं कीचकं मन्ये भीमसेनेन मारितम् । सैरन्ध्रीं द्रौपदीं मन्ये नात्र कार्या विचारणा । शङ्के कृष्णानिमित्तं तु भीमसेनेन कीचकः । गन्धर्वव्यपदेशेन हतो निशि महाबलः'** [३२.२२–२३] इति गोग्रहणे । कर्णेन च सहैव । सुशर्मा असकृत् कीचकेन निकृतस्त्रिगर्तानां राजा ॥ ३२–३ ॥ सुशर्मा विराटं जगृहे । तं सुशर्माणमयाद् वृकोदरः योद्धुम् । तं विराटं वाऽयाद् रक्षितुम् ॥ ३४ ॥ तस्य सुशर्मराजस्य । पृष्ठत एव विद्रुत्य निहत्य । मात्स्यं मत्स्यदेशपतिम् । मत्स्यदेहजातं च । तं च सुशर्माणं त्रिगर्तराजम् । पुरबाह्यतः । रणाङ्गण एव । **'सङ्ग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन्'** [३५.७१] इति च ॥ ३५ ॥ जेतुं शक्यं मत्वा ॥ ३६ ॥

---

१. **'प्रविचिन्त्याखि–'** २. **'ससैन्यस्तम्'** इति क्वचित् । ३. **'सङ्ख्ये'**

**कीचकस्य हिडिम्बस्य बककिर्म्मीरयोरपि ।**
**जरासन्धस्य नृपतेः कंसादीनां च सर्वशः ॥ ३७ ॥**

**न बाधनाय भीष्माद्या अपि शेकुः कथञ्चन ।**
**तस्मात् ते कीचकं शान्तं श्रुत्वा मात्स्यं ययुर्य्युधे[१] ॥ ३८ ॥**

**यतिष्ये रक्षितुं भीमाद् धार्त्तराष्ट्रानिति स्वकाम् ।**
**सत्यां कर्त्तुं प्रतिज्ञां तु ययौ द्रोणः सपुत्रकः ॥ ३९ ॥**

**यदि युद्धाय निर्य्यान्ति ज्ञाताः स्युः पाण्डवास्तदा ।**
**न चेद् विराटमनतं नमयिष्यामहे वयम् ।**
**इति मत्वा विराटस्य जगृहुर्ग्गाः समन्ततः ॥ ४० ॥**

**तदोत्तरः सारथित्वे प्रकल्प्य पार्त्थं ययौ तान् निशाम्यैव भीतः ।**
**ततोऽर्ज्जुनः सारथिं तं विधाय कृच्छ्रेण संस्थाप्य [२]च तं ययौ कुरून् ॥ ४१ ॥**

**आदाय गाण्डीवमथ ध्वजं च हनूमदङ्कं सदरोऽग्रतो गाः ।**
**निवर्त्त्य युद्धाय ययौ कुरूंस्तान् जिग्ये सर्वान् द्वैरथेनैव सक्तान् ॥ ४२ ॥**

**विरा(ट)मभिगच्छतां कौरवाणामभिप्रायमाह– यदीति ॥ ४०–१ ॥ द्वयो रथयोः समाहारो द्वैरथम् ॥ ४२–६ ॥**

---

कंसादीनां च । आदिना कंसभृत्याः केश्यरिष्टादयः । अन्ये च नरकादयः । सर्वशः सर्वेषाम् ॥ ३७ ॥ शान्तं मृतं श्रुत्वा । निवृत्तो हि शान्त उच्यते । तद् यथा– शान्तो रोगः ॥ ३८ ॥ प्रतिज्ञां तु । अयुक्ता निष्फला चेयं प्रतिज्ञेति तुनाऽऽह । पुत्रेण पुत्रकेण वा सहितः सपुत्रकः । मोहपात्रं पुत्र इत्यर्थः । एवं धार्तराष्ट्रेष्वपि मोहमूला स्वकृता प्रतिज्ञेत्यर्थः । स्वार्थे क इति वैयाकरणाः । सुलभोऽयं पन्थाः । स्वेन कृता स्वकेत्यपि शक्यं निर्वक्तुम् । तद्यथा– एष एव करोतीति एकः ॥ ३९ ॥ तदा तर्हि । एतावन्तं कालं कीचकसमाश्रयणेनानतम् । सम्प्रत्यकीचकं तं नमयिष्यामहे । तेनोभयथाऽपि महानस्माकमयं लाभ इत्यात्मनेभाषा ॥ ४० ॥ अन्यप्रेरणया कल्पनं प्रकल्पनम् । गत्यन्तरमदृष्ट्वा कल्पनं प्रकल्पनम् । तं सारथित्वेन विहितं कृच्छ्रेण सारथित्वे संस्थाप्य च । आत्मविश्वासं जनयित्वा राजन्ययोग्ये समीचीने पथि च स्थापयित्वा ॥ ४१ ॥ अथ ध्वजं च । यद्यपि शम्याः शस्त्रादानमेव भारते श्रूयते । न ध्वजस्य, नापि

---

१. 'ययुर्मृधे' २. 'च तान् ययौ'

**एकीभूतान् पुनरेवानुयातान् सम्मोहनास्त्रेण विमोहयित्वा ।**
**जग्राह तेषामुत्तरीयाण्यृते तु भीष्मस्य वेदास्त्रघातं स एव ॥ ४३ ॥**

**विधाय भीष्मं विरथं जगाम तदा श्रुत्वा मत्स्यपतिर्ज्जितान् कुरून् ।**
**मुमोद पुत्रेण जिता इति स्म तदाऽऽह षण्ढेन जितान् युधिष्ठिरः ॥ ४४ ॥**

**तदा क्रुद्धः प्राहरत् तं विराटः सोऽक्षेण तद् भीमधनञ्जयाभ्याम् ।**
**श्रुतं तदा कुपितौ तौ[1] निशाम्य न्यवारयत् तावपि धर्म्मसूनुः ॥ ४५ ॥**

---

शङ्खस्य । अथापि उत्तरवचनादेतदवगम्यते– **'एतद् ध्वजाग्रं पार्थस्य दूरतः परिदृश्यते । मेघः सविद्युत्स्तनितः रोरवीति च वानरः । आस्थाय च रथं याति गाण्डीवं विक्षिपन् धनुः'** [५४.११] इति, **'रथी शरी चारुमाली निषङ्गी शङ्खी पताकी कवची किरीटी । खड्गी च धन्वी च विराजतेऽयं शिखीव यज्ञेषु घृतेन सिक्तः'** [५४.२२] इति च । तदेतत् सर्वं सङ्गमय्योक्तं भगवत्पादेन–हनूमदङ्कं ध्वजं च आदायेति, सदर इति च । देवदत्तं दरं च शमीत एवाऽदायेत्यर्थः । उपलक्षणमेतत् निषङ्गनिस्त्रिंशादेः । वस्तुतस्तु दर इति सर्वायुधसङ्ग्रहः । दरयति भीषयति शत्रूनिति निर्वचनसाम्यात् । दॄ भये । द्वयोर्द्वयोरेव रथस्थयोः सकृद् युद्धमिति द्वैरथं युद्धम् । द्वावेव रथौ यस्मिन् तद् द्विरथम् । द्विरथमेव द्वैरथम् । स्वार्थेऽण् ॥ ४२ ॥ द्वैरथेनाशक्यं जेतुमिति पुनरेकीभूतान् । विसञ्ज्ञतया मोहयित्वा विराटपुत्रद्वारा जग्राह । तथा हि भारते । ऋते भीष्मस्योत्तरीयम् । स किल ससञ्ज्ञ आस । यतः स एवास्त्रघातं वेद । **'भीष्मस्य सञ्ज्ञां तु तथैव मन्ये जानाति मेऽस्त्रप्रतिघातमेषः'** [६७.२०] इति च । ननु द्रोणोऽपि वेदास्त्रप्रतिघातम् । तथा हि वक्ष्यत्याचार्य एवोपरि– **'ततो द्रोणस्तान् समुत्थाप्य सर्वान् विज्ञानास्त्रेण–'** [२५.६१] इति । **'ततः प्रज्ञास्त्रमादाय मोहनास्त्रं व्यनाशयत्'** [भी.प.७७.६१] इति च भारते । सत्यं वेद मोहनास्त्रस्य प्रतिघातम् । कस्य मोहनास्त्रस्य? त्वाष्ट्रस्य मोहनास्त्रस्य । न त्वैन्द्रस्य । भिन्नदैवत्यानि हि बहूनि मोहनास्त्राणि भवन्ति । अत्र पुनरर्जुन ऐन्द्रं सम्मोहनास्त्रं प्रयुयोज । यत्प्रतिघातं विज्ञानास्त्रं केवलं भीष्मो वेद । न द्रोणादयः । तदेतत् सर्वं भारतवचनादेव स्फुटमवगम्यते । तथाहि– **'सम्मोहनं शत्रुसहोऽन्यदस्त्रं प्रादुश्चकारैन्द्रमवारणीयम्'** [६७.१३] इति गोग्रहणे । भारतयुद्धे धृष्टद्युम्नप्रयुक्तं तु त्वाष्ट्रं मोहनास्त्रम् । यद् द्रोणेनैव धृष्टद्युम्नाय दत्तम् । तेन तत्प्रतिघातं विज्ञानास्त्रं स वेदैवेति स्फुटम् । तथाहि– **'स त्वाष्ट्रमस्त्रं सुमहाप्रभावं प्रमोहनं द्रोणदत्तं महात्मा । प्रयोजयामास–'** [७७.५१] इति भीष्मवधे । तस्मान्न कोऽपि विरोधः ॥ ४३ ॥ तदा प्रत्यागमनानन्तरम् । तद् भीष्मविजयवृत्तं आ श्रुत्वा वा । आगतैर्दूतैः कथितमादरेण विस्मयेन च श्रुत्वा ॥ ४४ ॥ सः पुत्रमुग्धो विराटः । तावपि कोपेन साहसं कर्तुं प्रवृत्तावपि ॥ ४५ ॥

---

१. **'तदा तौ कुपितौ निशाम्य'**

**निजस्वरूपेण समास्थितान् नो यदि स्म नासौ प्रणिपातपूर्वकम् ।**
**क्षमापयेद् वद्ध्य इत्यात्मरूपं समास्थितास्तस्थुरथापरे दिने ॥ ४६ ॥**

**तदा विराटासनमास्थितं नृपं युधिष्ठिरं वीक्ष्य विराट आह ।**
**किमेतदित्यूचिवानुत्तरोऽस्मै तान् पाण्डवान् गोग्रहणे च वृत्तम् ॥ ४७ ॥**

**ततो विराटो भयकम्पिताङ्गः प्रणम्य पार्थाञ्छरणं जगाम ।**
**ददौ च कन्यामुत्तरां फल्गुनाय पुत्रार्थमेव प्रतिजग्राह सोऽपि ॥ ४८ ॥**

**एवं विराटं मोचयित्वैव गाश्च तमस्यन्धे कीचकान् पातयित्वा ।**
**प्राप्तो धर्म्मः सुमहान् वायुजेन तस्यानु पार्त्थेन च गोविमोक्षणात् ॥ ४९ ॥**

**अयातयन् केशवायाथ दूतान् सहाभिमन्युः सोऽपि रामेण सार्द्धम् ।**
**आगाद[1]नन्तानन्दचिद् वासुदेवो विवाहयामासुरथाभिमन्युम् ॥ ५० ॥**

**आसीन्महानुत्सवस्तत्र तेषां [2]दशार्हवीरैः सह पाण्डवानाम् ।**
**सपाञ्चालानां वासुदेवेन सार्द्धमज्ञातवासं समतीत्य मोदताम् ॥ ५१ ॥**

**उत्तरः तान् पाण्डवान् ऊचिवान् । उक्त्वा गोग्रहणे वृत्तं च ऊचिवान् ॥ ४७–५४ ॥**

---

अज्ञातवासं समाप्य स्थितान् । तदा वध्य इत्युक्त्वा न्यवारयत् । अथ विराटक्षमापणानन्तरम्, अवसिते पुनरज्ञातवासे । अथेत्यस्य प्रसङ्गस्य माङ्गलिकत्वमाह । पाण्डवानां विजयारम्भं च ॥ ४६ ॥ गोग्रहणे च यद् वस्तुतो वृत्तं तच्चोचिवान् ॥ ४७ ॥ भयेन कम्पितान्यङ्गानि, अङ्गं वा शरीरमस्येति । फल्गुनाय नाट्यगुरवे गुरुदक्षिणात्वेन । पुत्रार्थं पुत्रस्य भार्या भवेदिति ॥ ४८ ॥ गाश्च मोचयित्वैव । निरातङ्कं मोचयित्वेत्येवकारेणाऽह । प्राप्तो धर्मः सुमहान् वायुजेन । एवमस्य पर्वणः वायुमहिमप्रतिपादकत्वादेव भारतसारभूतत्वमुक्तम्–**'विराटोद्योगसारवान्'** इति । द्रोणभीष्मादिभिर्विशिष्य मोक्षणात्, महान् धर्मः प्राप्तः ॥ ४९ ॥ अथ स्वरूपाविष्करणानन्तरमेव सपदि । केशवाय, केशवमाह्वातुमानेतुं वा । न केवलं केशवाय । पाञ्चालेभ्यश्च । वक्ष्यति हि–सपाञ्चालानामिति । अयातयन्नगमयन् । प्रेषयामासुरित्यर्थः । सहाभिमन्युरभिमन्युना सहितः । अथ कृष्णागमनानन्तरम्, तत्सन्निधौ, माङ्गलिकतया विवाहयामासुः ॥ ५० ॥ अज्ञातवासं समग्रतया

---

१. **'अगाद–'** २. **'दाशार्ह–'**

दुर्य्योधनाद्याः सूतपुत्रेण सार्द्धं ससौबलेया युधि पार्त्थपीडिताः ।
भीष्मादिभिः सार्द्धमुपेत्य नागपुरं मन्त्रं मन्त्रयामासुरत्र ॥ ५२ ॥

अज्ञातवासे फल्गुनो नोऽद्य दृष्टस्तस्मात् पुनर्य्यान्तु पार्त्था वनाय ।
इति ब्रुवाणानाह [1]भीष्मोऽभ्यतीतमज्ञातवासं द्रोण आहैवमेव ॥ ५३ ॥

तयोर्वाक्यं ते त्वनादृत्य पापा वनं पार्त्थाः पुनरेव प्रयान्तु ।
इति दूतं[2] प्रेषयामासुरत्र जानन्ति विप्रा इति धर्म्मजोऽवदत् ॥ ५४ ॥

सौरमासानुसारेण धार्त्तराष्ट्रा अपूर्ण्णताम् ।
आहुश्चान्द्रेण मासेन पूर्ण्णः कालोऽखिलोऽप्यसौ ॥ ५५ ॥

दिनानामधिपः सूर्य्यः पक्षमासाब्दपः[3] शशी ।
तस्मात् सौम्याब्दमेवात्र मुख्यमाहुर्म्मनीषिणः ॥ ५६ ॥

**अज्ञातवासोऽतीत इति वदतां भीष्मादीनां नातीत इति वदतां दुर्योधनादीनां चाभिप्रायमाह– सौरेति । रविसङ्क्रमणावधिः सौरमासः । पौर्णम्यवधिश्चान्द्रमासः । दर्शावधिश्चान्द्रमास इति वा । गोदावर्या उत्तरतः पौर्णम्यवधिश्चान्द्रमास इति व्यवहरन्ति । दक्षिणे दर्शावधिश्चान्द्रमास इति व्यवहरन्तीति ॥ ५५–९ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां त्रयोविंशोऽध्यायः

—०—

अतीत्य । पाण्डवानां मोदः सर्वलोकमोदः सञ्जात इत्याह– मोदतामिति ॥ ५१ ॥ केषाञ्चिदमोदोऽप्यासीदित्याह– दुर्योधनाद्याः ॥ ५२–३ ॥ ज्योतिर्विदो विप्राः ॥ ५४ ॥ असौ त्रयोदशवत्सरमितः कालः पूर्णः । अथाप्यपूर्णता-माहुः ॥ ५५ ॥ सूर्यस्योदयादुदयपर्यन्तं हि दिनमुच्यते । तेन सूर्याधीनं दिनम् । पूर्णमासान्तः शुक्लः पक्षः । दर्शान्तः कृष्णः । चन्द्राधीनौ हि दर्शपूर्णमासौ तस्य दर्शनादर्शनाभ्याम् । पूर्णः माश्चन्द्रमा यत्र स किल पूर्णमासः । तदुभयं मिलितं मासपदगदितमिति मासाधिपश्च चन्द्र एव । अब्दश्च द्वादश मासा एवेति पक्षमासाब्दपः शशी । अत्र लौकिक-व्यवहारेषु ॥ ५६ ॥

१. **'भीष्मो ह्यती–'** इति क्वचित् । २. **'इति स्म दूतम्'** । **'इति द्रुतम्'** इति क्वचित् । ३. **'पक्षमासाधिपः'**

सौम्यं कालं[१] ततो यज्ञे गृह्णन्ति नतु सूर्य्यजम् ।
तदेतदविचार्य्यैव लोभाच्च धृतराष्ट्रजैः ॥ ५७ ॥

राज्यं न दत्तं पार्त्थेभ्यः पार्त्थाः कालस्य पूर्ण्णताम् ।
ख्यापयन्तो विप्रवरैरुपप्लाव्यमुपाययुः ॥ ५८ ॥

सवासुदेवा अखिलैश्च यादवैः पाञ्चालमत्स्यैश्च[२] युताः सभार्य्याः ।
उपप्लाव्ये ते कतिचिद् दिनानि वासं चक्रुः कृष्णसंशिक्षितार्त्थाः ॥ ५९ ॥

**इति श्रीमदानन्दतीर्त्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये अज्ञातवाससमाप्तिर्नाम**
**त्रयोविंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **३६३९+५९=३६९८**]

न केवलं लौकिकव्यवहारेषु । वैदिककर्मस्वपि तथेत्याह– सौम्यम् । सोमदेवत्यम् । यज्ञे **'दर्शपूर्णमासाभ्यां यजेत'** इत्यादौ ॥ ५७ ॥ जानन्ति विप्रा इत्युक्तम् । विप्राः पृष्टाः किमाहुरित्याह– कालस्य पूर्णतां विप्रवरैः ख्यापयन्तः । उपप्लाव्यं मत्स्यदेशस्योपनगरम्, उपाययुः । उपप्लाव्येऽपि काञ्चिदुपकार्यामाययुः । दुर्योधनो यदि राज्यं न दद्यात् तदा किं करणीय-मित्युपायचिन्तनार्थमाययुः । मा राजधान्यामुपरोधो भूदित्युपह्वरार्थमाययुः । बहुलोद्यानं बहुकासारं राजविहारार्थमुपनगर-मुपप्लाव्यम् । उपवनेषु पल्वलेषु विहरन्तः प्लवमाना भवन्त्यत्रेति । आप्लवन्त इत्याप्लाव्या इति पाणिनिनोक्तम् [अ.सू.३.४.६८] । न केवलमाङः । उपादपीति वक्तव्यम् ॥ ५८ ॥ पाञ्चालाश्च मत्स्या मत्स्यदेशीयाश्च । स्वत एव शिक्षितार्थाः । पुनः कृष्णेन संशिक्षितपुरुषार्थाः ॥ ५९ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतं त्रयोविंशाध्यायविवरणं सतां हृदयाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां त्रयोविंशोऽध्यायः**

—०—

१. 'सौम्यकालम्' २. '–मात्स्यैश्च'

२२-१०-१२

# चतुर्विंशोऽद्ध्यायः

**[युद्धोद्योगः]**

ॐ ॥ ततः सम्मन्त्र्यानुमते कृष्णस्य स्वपुरोहितम् ।
द्रुपदः प्रेषयामास धृतराष्ट्राय शान्तये ॥ १ ॥

स गत्वा धृतराष्ट्रं तं भीष्मद्रोणादिभिर्य्युतम् ।
उवाच न विरोधस्त उत्पाद्यो धर्म्मसूनुना ॥ २ ॥

यस्य भीमार्ज्जुनौ यौधौ[1] नेता यस्य जनार्द्दनः ।
श्रुतास्ते भीमनिहता जरासन्धादयोऽखिलाः ॥ ३ ॥

**ॐ ॥ शान्तये पाण्डवकौरवविरोधस्य ॥ १–२ ॥ कुत इत्यत आह– यस्येति । किमत इत्यत आह– श्रुता इत्यादिना । भीमेन यथा निसूदिताः तथा श्रुताः ॥ ३–४ ॥**

---

ॐ ॥ अथोत्तरेणाध्यायेनोद्योगपर्वकथां सञ्चिक्षेप । ततः सपरिवारस्य कृष्णस्य द्वारकां प्रति प्रस्थानानन्तरम् । **'भवान् वृद्धतमो राज्ञां वयसा च श्रुतेन च । शिष्यवत् ते वयं सर्वे भवामेह न संशयः । भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते । आचार्ययोः सखा चासि द्रोणस्य च कृपस्य च । स भवान् प्रेषयत्वद्य पाण्डवार्थकरं वचः । सर्वेषां निश्चितं तन्नः प्रेषयिष्यति यद् भवान्'** [उ.प.५.६–८] इति कृष्णस्यानुमते विषये, कृष्णस्यानुमते अनुमतौ च । कृष्णस्यानुमतिं प्राप्येति यावत् । पाण्डवैर्विराटेन च सह मन्त्रयित्वा । सङ्ग्रामविषयं मन्त्रणं च सम्मन्त्रणम् । **'ततः प्रज्ञावयोवृद्धं पाञ्चाल्यः स्वपुरोहितम् । कुरुभ्यः प्रेषयामास युधिष्ठिरमते स्थितः'** [उ.प.५१९] इति च सेनोद्योगे । धृतराष्ट्राय धृतराष्ट्रं बोधयितुम् ॥ १ ॥ तं पुत्रमोहान्धत्वेन प्रसिद्धम् । अत एव न तमेकमुवाच । किन्तु भीष्मद्रोणादिभिर्युतमुवाच । अन्धस्य त एते चक्षूंषि भूयासुरिति ॥ २ ॥ यस्य तेन धर्मसूनुनेति पूर्वान्वयः । युध्येते इति योधौ । योधावेव यौधौ । प्रज्ञादित्वात् [अ.सू.५.४.३८] स्वार्थेऽण् । प्रज्ञ इति विरळः प्रयोगः । प्राज्ञ इति बहळः । तथा योध इति विरळः प्रयोगः । यौध इति बहळः । अतः प्रतना यौध इत्येव प्रायः प्रयुञ्जते, न योध इति ॥ ३ ॥

---

१. **'योधौ'**

**यथा च रुद्रवचनादवद्ध्या राक्षसाधिपाः ।**
**तीर्थविघ्नकराः [१]सर्वतीर्थान्याच्छाद्य संस्थिताः ॥ ४ ॥**

**तिस्रः कोट्यो महावीर्य्या भीमेनैव निसूदिताः[२] ।**
**भ्रातॄणां ब्राह्मणानां च लोकानां च हितैषिणा ॥ ५ ॥**

**ततो हि सर्वतीर्थानि गम्यान्यासन् नृणां क्षितौ ।**
**यथा जटासुरः पापः शर्वाणीवरसंश्रयात् ॥ ६ ॥**

**अवद्ध्यो विप्ररूपेण वञ्चयन्नेव पाण्डवान् ।**
**ज्ञात्वाऽपि भीमसेनेन विप्ररूपस्य नो वधः ॥ ७ ॥**

**लोकानां सर्वजनानाम् ॥ ५–८ ॥**

---

तीर्थानि पुण्यक्षेत्राणि । तत्र यात्रार्थिनां विघ्नकराः हिंसादिना प्रतिरोधकाः । तीर्थमध्वरः । यज्ञकर्मविरोद्धारः । तीर्थान्यृषिजुष्टजलानि । तत्र मिमङ्क्षूणां विघ्नकराः । तीर्थानि शास्त्राणि । तान्यधिजिगांसमानानां विघ्नकराः । सर्वपुण्यक्षेत्राण्याच्छाद्य आवृत्य व्याप्य सङ्घीभूय स्थिताः । पश्चात् संस्थिता मृताः ॥ ४ ॥ कथम्? भीमेनैव निसूदिताः । यथा निसूदिताः, यथा च तीर्थानि नृणां गम्यान्यासन्, यथा जटासुरः पराद्रवत्, यथा च भीमेन कणशश्चूर्णितशिरास्तमो जगाम तत् सर्वं च श्रुतपूर्वं त्वया । ते यथा तथा ते पुत्रा अपि हन्तुं शक्या भीमेनैकेनेति किमु वक्तव्यम्? **'निषूदिताः'** इत्यपपाठः । विशिष्य ब्राह्मणानां ब्रह्मविदां तापसानां तीर्थेषु वसताम् । सामान्यतः सर्वलोकानां च तीर्थेषु चरताम् ॥ ५ ॥ तीर्थानि गम्यान्यासन्नित्यस्य नातिविप्रकृष्टं दृष्टान्तमाह–यथा जटासुरः । एवं वनवासवृत्तं जटासुरहननं तत्रानुक्तमत्र सन्देशमिषेण ग्रथयामास भगवानाचार्यः । किञ्चिदिव भारतेऽपि सूचितमेतत्–**'कृपालुषु परिक्लेशान् पाण्डवीयान् प्रकीर्तयन्'** [६.१४] इति द्रुपदवचनेन, **'वनं गतैः पाण्डवेयैर्विदितं वः पुरा यथा'** [२०.६] इति पुरोहितवचनेन च ॥ ६ ॥ जटासुरः विप्ररूपेण पाण्डवान् वञ्चयन् जटाचार्यो बभूव । वञ्चनार्थं धृतजटो जटः । वस्तुतस्तु जटन्ति सर्वाणि पापान्यत्रेति जटः । जट सङ्घाते । वञ्चयन्नेवेति । दीर्घकालं वञ्चयन्नित्यर्थः । **'ब्राह्मणो मन्त्रकुशलः सर्वास्त्रेष्वस्त्रवित्तमः । इति ब्रुवन् पाण्डवेयान् पर्युपास्ते स्म नित्यदा'** [व.प.१५८.४] इति जटासुरवधे । नायं विप्रः, किन्तु विप्रवेषोऽसुर इति ज्ञात्वाऽपि, तस्य पापमाशयं ज्ञात्वाऽपि, न केवलं विप्रस्य, विप्ररूपस्यापि वधो न योग्य इति न हतः । **'विज्ञातोऽसि मया पूर्वं चेष्टन् शस्त्रपरीक्षणे । आस्था तु त्वयि मे नास्ति यतोऽसि न हतस्तदा । ब्रह्मरूपप्रतिच्छन्नो**

---

१. 'सर्वे तीर्था–' २. 'निषूदिताः'

**योग्य इत्यहतो भीमे मृगयार्त्थं गते क्वचित् ।**
**यमौ युधिष्ठिरं कृष्णां चाऽदायैव पराद्रवत् ॥ ८ ॥**

**दृष्टो भीमेन तांस्त्यक्त्वा संसक्तस्तेन सङ्गरे ।**
**निपात्य भूमौ पादेन सञ्चूर्ण्णितशिरास्तमः ॥ ९ ॥**

**जगाम किमु ते पुत्राः शक्या हन्तुमिति स्म ह ।**
**निवातकवचाश्चैव हताः पार्त्थेन ते श्रुताः ॥ १० ॥**

**जानासि च हरेर्वीर्य्यं यस्येदमखिलं वशे ।**
**सब्रह्मरुद्रशक्राद्यं चेतनाचेतनात्मकम् ॥ ११ ॥**

**तस्मादेतैः पालितस्य धर्म्मजस्य स्वकं वसु ।**
**दीयतामिति तेनोक्तो धृतराष्ट्रो नचाकरोत् ॥ १२ ॥**

**ततः सहैव यदुभिः कृष्णं द्वारवतीं गतम् ।**
**युद्धसाहाय्यमिच्छन्तौ धार्त्तराष्ट्रधनञ्जयौ ॥ १३ ॥**

**यथा सञ्चूर्णितशिराः तमो जगाम तथा त्वया श्रुतः ॥ ९–१० ॥ वशे, स्थितमिति शेषः ॥ ११ ॥ तस्मात् कृष्णभीमार्जुनबलस्यैवं ज्ञातत्वात् ॥ १२–४ ॥**

---

**न नो वदसि चाप्रियम् । प्रियेषु रममाणं त्वां न चैवाप्रियकारिणम् । ब्रह्मरूपेण पिहितं नैव हन्यामनागसम्'** [१५८.३९–४०] इति च । अथच भीमसेनेनाहतो जटासुरः भीमस्यासह्यं बलं ज्ञात्वाऽपि, भीमे मृगयार्थं गते सति, तत् तस्यासन्निधानं ज्ञात्वा ॥ ७ ॥ क्वचित् बदरीप्रान्ते नरनारायणस्थाने वृषपर्वण आश्रमाभ्याशे । **'रहितान् भीमसेनेन कदाचित् तान् यदृच्छया । जहार धर्मराजं वै यमौ कृष्णां च राक्षसः'** [१५८.२] इति च । आदायैव बलादादाय पराद्रवत् पलायत । पराद्रवदेव भीमसेनभयादिति च ॥ ८ ॥ सम्भ्रमेण साध्वसेन सक्तः संसक्तः । मरणभयग्रस्तः सन्नेव नियुद्धायासजदित्यर्थः । बाहुभ्यामुत्क्षिप्य भूमौ निपात्य पादेन निष्पिष्य भीमेन सर्वाङ्गैः सह चूर्णितशिराः । **'तस्य गात्राणि सर्वाणि चूर्णयामास पाण्डवः'** [१५८.७०] इति च ॥ ९ ॥ स्मेति प्रसिद्धौ । हेत्यवधारणेन प्रबोधने । निवातकवचाश्च पार्थेनैव हताः ते श्रुता एव । चकारेण पौलोमाः कालकेयाश्च ॥ १०–१ ॥ एतैः भीमार्जुनाभ्यां कृष्णेन च ॥ १२ ॥ धार्तराष्ट्रधनञ्जयौ । **'भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः'** [अ.सू.२.२.३४] इति वार्तिकम् ॥ १३ ॥

**युगपद् ययतुस्तत्र वेगेनाजयदर्ज्जुनम् ।**
**दुर्य्योधनः शिरस्थान आसीनोऽभूद्धरेस्तदा ॥ १४ ॥**

**दर्प्पान्नाहं राजराज उपास्ये पादयोरिति ।**
**तयोरागमनं पूर्वं ज्ञात्वैव हि हरिः प्रभुः ॥ १५ ॥**

**असुप्तः सुप्तवच्छिश्ये तत्रातिष्ठद् धनञ्जयः ।**
**प्रणम्य पादयोः प्रह्वो भक्त्युद्रेकात् कृताञ्जलिः[1] ॥ १६ ॥**

**तमैक्षत् प्रथमं देवो जानन्नपि सुयोधनम् ।**
**स्वागतं फल्गुनेत्युक्ते पूर्वमागामहं त्विति ॥ १७ ॥**

**आह दुर्य्योधनस्तं च स्वागतेनाभ्यपूजयत् ।**
**तयोरागमने हेतुं श्रुत्वा प्राह जनार्दनः ॥ १८ ॥**

**राजराजोऽहं पादयोः उप समीपे नाऽस्ये नोपविशामि इति दर्पात् ॥ १५–६ ॥ सुयोधनं जानन्नपि, प्रथममागतमिति शेषः ॥ १७–८ ॥**

---

तत्र याने । यदा कृष्णस्य शयनगृहमाप तदा । हेत्वर्थे वा तदा । **'तदा नाऽशंसे विजयाय सञ्जय'** इति प्रयोगात् । यस्माद् वेगेनार्जुनमजयत् तदा तस्मादिति । मा नामार्जुनोऽत्राऽसिष्टेति स्वयमेव शिरःस्थान आसीनोऽभूदित्यर्थः ॥ १४ ॥ इति दर्पात् । पादयोरुप नाऽस्ये नोपवेश्ये केनापि दूतेन । आस उपवेशने । अथवा उपास्ये उपतिष्ठे । असु क्षेपणे । यद्यप्ययं धातुः परस्मैभाषः । अथाप्युपसर्गयोगेनाऽत्मनेभाषा । तथाहि वार्तिकम्–**'उपसर्गादस्यत्यूह्योर्वा वचनम्'**[१.३.३०] इति । यद्वा **'उपासिष्ये'** इति वक्तव्येऽक्षरलोपेन **'उपास्ये'** इत्याह । तेन दुर्योधनस्य प्रह्वतालोपमाह ॥ १५ ॥ प्रभुः सर्वसमर्थोऽपि सुप्तवत् शिश्ये अजानन्निवासमर्थ इव । तत्र शयानस्य कृष्णस्य सविधे । तस्य पादौ प्रणम्य पादयोर्मूले प्रह्वोऽतिष्ठत् । नोपविवेश ॥ १६ ॥ सुयोधनं पूर्वमागतं जानन्नपि । अहं तु । तस्मात् प्रथमं पूजनीयः, राजराजत्वाच्चेति तस्य दर्पविशेषं तुनाऽऽह ॥ १७ ॥ अभ्यपूजयत् । अतिथिपूजामभिनीय दर्शयामासेत्यर्थः ॥ १८ ॥

---

१. **'–द्रेककृताञ्जलिः'**

एकः पूर्वागतोऽत्रान्यः पूर्वदृष्टो मया यतः ।
समं करिष्ये युवयोरेकत्राहं निरायुधः ॥ १९ ॥

अन्यत्र दशलक्षं मे पुत्राः शूराः पदातयः ।
इत्युक्ते फल्गुनः कृष्णं वव्रे तद्भक्तिमान् यतः ॥ २० ॥

अन्यस्तत्राभक्तिमत्त्वाद् वव्रे गोपान् प्रयुद्ध्यतः ।
पार्थानामेव साहाय्यं करिष्यन्नपि केशवः ॥ २१ ॥

तस्याभक्तिं दर्शयितुं चक्रे समवदीश्वरः ।
ततः पार्थेन सहितः पाण्डवान् केशवो ययौ ॥ २२ ॥

दुर्योधनो ययौ रामं स भयात् केशवस्य तम् ।
न साहाय्यं करोमीति प्राह तत्स्नेहवानपि ॥ २३ ॥

उपप्लाव्ये सभायां हि त्वत्पक्षीयं[१] वचो ब्रुवन् ।
निराकृतः सात्यकिना समक्षं केशवस्य च ॥ २४ ॥

**समं करिष्य इत्युक्तम् । तत्समकरणप्रकारमाह– एकत्रेति ॥ १९–२० ॥ अभक्तिमत्त्वात् द्वेषित्वात् ॥ २१–३४ ॥**

अत्र अनयोर्युवयोः । मम शयनगृहे वा । समं उभयोरपि साहाय्यकरणम् ॥ १९ ॥ **'मत्संहननतुल्यानां गोपानामर्बुदं महत् । नारायणा इति ख्याताः सर्वे सङ्ग्रामयोधिनः'** [उ.प.७.१९] इति च । फल्गुनः प्रथमं वव्रे । **'प्रवारणं तु बालानां पूर्वं कार्यमिति श्रुतिः । तस्मात् प्रवारणं पूर्वमर्हः पार्थो धनञ्जयः'** [१८] इति च । बालानामिति कनीयसाम् ॥ २० ॥ अन्यः सुयोधनः । तत्र कृष्णे भक्त्यभावात् भक्तिविरुद्धस्य द्वेषस्य भावाच्च ॥ २१–२ ॥ तं दुर्योधनम् ॥ २३ ॥ **'त्वत्पक्षीयम्'** इति प्राचीनादर्शपाठः । तदा तु– 'उपप्लाव्ये हि सभायां त्वत्पक्षीयं वचो ब्रुवन्, केशवस्य समक्षमेव सात्यकिना निराकृतः' इति च प्राह इति पूर्वान्वयः । **'विदितं ते नरव्याघ्र सर्वं भवितुमर्हति । यन्मयोक्तं विराटस्य पुरा वैवाहिके तदा'** [उ.प.७.२८], **'न च तद्वाक्यमुक्तं वै केशवः प्रत्यपद्यत । नचाहमुत्सहे कृष्णं विना स्थातुमपि क्षणम् । नाहं सहायः पार्थस्य नापि दुर्योधनस्य च'** [३०] इति च बलरामवचनं सेनोद्योगे । न करोमीति

१. 'तत्पक्षीयम्'

**ततो दुर्य्योधनं नायात् स च हार्दिक्यसंयुतः ।**
**जगाम हस्तिनपुरमक्षोहिण्यो[1] दशाभवन्** ॥ २५ ॥

**एका च धार्त्तराष्ट्रस्य नानादेश्यैर्नृपैर्य्युताः ।**
**सप्त पाण्डुसुतानां च मात्स्यद्रुपदकेकयैः[2]** ॥ २६ ॥

**धृष्टकेतुजरासन्धसुतकाशीनृपैर्य्युताः[3] ।**
**पुरुजित् कुन्तिभोजश्च चेकितानश्च सात्यकिः** ॥ २७ ॥

**पाण्डवान् सेनया युक्ताः समीयुर्देवपक्षिणः ।**
**विन्दानुविन्दावावन्त्यौ जयत्सेनोऽन्यकेकयाः[4]** ॥ २८ ॥

---

प्राह । केशवस्य समक्षं निराकृत इति च प्राह । हि यस्मात् निराकृतः तस्मान्न साहाय्यं करोमीति प्राहेति वा । **'तत्पक्षीयम्'** इति पाठे स्वरसोऽर्थः ॥ २४ ॥ ततः कृष्णो न प्रीयत इति हेतोः । स चेति देहल्यां दीपः । यतः दुर्योधनपक्षीयं ब्रुवन् बलरामः सात्यकिना निराकृतः ततः स च सात्यकिरपि दुर्योधनं नायात् । अथ च **'ततो दुर्योधनं नायात्'** इत्येकं वाक्यम् । ततः सात्यकिना कृष्णानुयायिना निराकृतत्वादेव दुर्योधनं नायात्, राम इति वर्तते । अथ स च दुर्योधनः हार्दिक्यसंयुत इत्युत्तरत्रान्वयः । **'सोऽभ्ययात् कृतवर्माणं धृतराष्ट्रसुतो नृपः । कृतवर्मा ददौ तस्य सेनामक्षोहिणीं तदा'** [७.३४] इति च ॥ २५ ॥ मात्स्यो विराटः । पृथानुजायाः पृथुकीर्तेस्तनयाः पञ्चकेकयाः । यदनुजा भद्रा कृष्ण-महिषी । केऽन्तर्मनसि कं यं च येषाम् । सदाऽन्तःसुखिनः ज्ञानिनश्च । केतयन्तीति केकया इति वैयाकरणाः । तन्मते **'कित निवासे'** इत्यतस्तकारस्य कादेशः । अयन्प्रत्ययश्च ॥ २६ ॥ धृष्टकेतुः शिशुपालतनयः । युधिष्ठिरभार्याया देवक्याः सहोदरः । **'चैद्यस्य कन्यां देवकीं नामोपयेमे युधिष्ठिरः'** [आ.प.६३.७५] इति प्राचीनो भारतपाठः । अर्वाचीनास्तु विभ्रान्ताः सर्वमाकुलयन्तः **'शैब्यस्य कन्याम्–'** इत्यादि पठन्ति । धृष्टानां प्रगल्भानां केतुरिवायम् । जरासन्धसुतः सहदेवः । यस्यानुजां पाण्डवः सहदेवो व्युवाह । काशीनृपः भीमभार्यायाः काळ्या जनकः । पुरुजित् कुन्तिभोजश्च कुन्ती-भ्रातरौ । अनयोः पिताऽपि क्वचित् कुन्तिभोज उच्यते । यस्य शूरसुता पृथा दत्तपुत्री । कुन्तिभोजा नाम जनपदाः । जनपदनाम्ना हि राजानः कथ्यन्ते । यथा मत्स्यः । यथावा साल्वः । कुं पृथिवीमुद्दिश्य तिं ततिमानन्दं भोजयन्तीति कुन्तिभोजाः । **'तीत्यानन्दः समुद्दिष्टः'** । कुन्तिश्च भोजश्चेति वा कुन्तिभोजः । कुं तनोतीति कुन्तिः । वैयाकरणास्तु कौतेः कौतीति कुन्तिः । **'कु शब्दे'** इत्यतः क्तिन्प्रत्यय इत्याहुः । चेकितानो यदुप्रवरः । चिकेतीति चेकितानः । कित ज्ञाने करणे वा । सत्यकतनयो युयुधानश्च ॥ २७ ॥ विन्दानुविन्दाविति दुर्योधनभ्रातरौ द्वावभूताम् । तद्व्यावृत्त्यर्थमा-

---

१. **'हास्तिनपुरमक्षौहिण्यो–'** । **'हस्तिनपुरमक्षौहिण्यो–'** इति क्वचित् । २. **'मात्स्यद्रुपदकैकयैः'** । **'मत्स्यद्रुपकैकयैः'** इति क्वचित् ।
३. **'काशिनृपैर्युताः'** ४. **'–कैकयाः'**

**क्षेमधूर्त्तिर्दण्डधारः कलिङ्गोऽम्बष्ठ एव च ।**
**श्रुतायुरच्युतायुश्च बृहद्बलसुदक्षिणौ ॥ २९ ॥**

**श्रुतायुधः सैन्धवश्च राक्षसोऽलम्बुसस्तथा ।**
**अलायुधोऽलम्बलश्च दैत्या दुर्य्योधनं ययुः ॥ ३० ॥**

**गत्वा दुर्य्योधनाहूतो भगदत्तोऽपि तं ययौ ।**
**सपुत्रपौत्रो बाह्लीको भीष्मद्रोणकृपा अपि ॥ ३१ ॥**

---

वन्त्यावित्याह । कुन्त्या अनुजायां राजाधिदेव्यां अवन्तिभूपतेर्जयत्सेनाज्जातावेतौ । ययोरनुजा मित्रविन्दा कृष्णमहिषी । अर्जुनेन हतावेतौ । सात्यकिना हतौ कौचित् कैकेयावपि विन्दानुविन्दौ श्रूयेते । जयत्सेनो जारासन्धिः सहदेवानुजः । अग्रजः पाण्डवपक्षगः । अनुजः कौरवपक्षगः । पञ्चकेकयेभ्योऽन्ये केकयदेशभवाः क्षत्रियाः ॥ २८ ॥ क्षेमधूर्तिरिति सम्प्रति भारते द्वित्रा राजानः पठ्यन्ते । दुर्योधनानुजेष्वप्येकः क्षेमधूर्तिः श्रूयते । अत्र तु विशिष्य भीमेन हतः कुलूताधिपतिरुच्यते । यं देशं सम्प्रति **'कुलु'** इति भणन्ति । करूशाधिपतिरिति दाक्षिणात्याः । कुलूत इत्येव साधीयान् पाठः । क्षेमाय धूर्तिरस्येति क्षेमधूर्तिः । धूर्तिर्वञ्चना हिंसा वा । धुर्वी हिंसायाम् । लोकक्षेमाय दुष्टानां धूर्तिरनेन भूयादिति पिता नाम चक्रे । अयं स्वक्षेमाय धूर्तो बभूव । दण्डधार इति च द्वित्राः पठ्यन्ते । दुर्योधनानुजश्च कश्चित् । अयं तु भीमनिहतो मागधः । कलिङ्गोऽम्बष्ठश्च देशविशेषः । तद्भूभृतौ । कलिं कलहं गच्छन्ति गायन्ति वा कलिङ्गा नाम जनपदाः । कातन्त्रास्तु **'कलेरिङ्गः'** [का.उ.सू.६.५४] इत्याहुः । **'कलेरिङ्गः प्रत्ययो भवति । कल गतौ । कलतीति कलिङ्गो देशः'** इति दुर्गसिंहः । इङ्गक्प्रत्यय इति भोजः [स.कं.२.२.६३] । यं देशभागं सम्प्रति **'ओडिस्सा'** इति व्याहरन्ति । अम्बे नादे तिष्ठन्तीत्यम्बष्ठाः । कोलाहलप्रियाः । अबि शब्दे । अम्बे गजे वा तिष्ठन्तीत्यम्बष्ठाः । गजयुद्धकुशलाः । श्रुतायुरच्युतायुश्च भ्रातरौ प्रायः कलिङ्गदेशजावेव । बृहद्बलः शकुनिभ्राता । यः कोसलेषु राजाऽसीत् । यं कौसल्यं चाऽहुः । सुदक्षिणः कम्बोजानां राजा । यं देशं सम्प्रति **'काबूल्'** इति व्यपदिशन्ति ॥ २९ ॥ श्रुतायुधोऽपि कश्चन कालिङ्गः क्षत्रियः । सैन्धवः सिन्धुसौवीराणां राजा जयद्रथः । दुर्योधनानुजाया दुःशळाया भर्ता । अलम्बुसो बकभ्राता । अलायुधोऽपि । अलम्बलो जटासुरतनयः । अलम्बून् आत्मानमनवलम्बमानान् स्यति नाशयतीत्यलम्बुसः । अलं पर्याप्तं भूमाविवाम्बुन्यपि सरतीति वा । अलं मायां बुस्यत्युत्सृजतीति वा । बुस उत्सर्गे । अलतीत्यलम्बुसः, अलेरम्बुसः प्रत्यय इति भोजः [स.कं.२.३.१८२] । अलं पर्याप्तान्यायुधान्यस्येत्यलायुधः । परेषामायुधान्यलति वारयतीति वा । अल भूषणपर्याप्तिवारणेषु । अलम्बल इति स्फुटम् ॥ ३० ॥ स्वयं गत्वाऽऽहूतः । नतु दूतमुखेन । भगदत्तः प्राग्ज्योतिषस्य, सम्प्रति **'असाम्'** इत्यभिधीयमानस्य जनपदस्य राजा नरकात्मजः । बाह्लीकः प्रतीपतनयः भीष्मपितृव्यः प्रतीपश्वशुरेण बाह्लीकपतिना पुत्रिकापुत्रधर्मेण स्वीकृतो बाह्लीकानां राजा बभूव । यस्य पुत्री रोहिणी बलरामं जनयामास ।

**प्रीत्यर्थं धृतराष्ट्रस्य बभूवुस्तत्सुतानुगाः ।**
**पाण्ड्यश्च वीरसेनाख्यः पाण्डवानेव संश्रितः ॥ ३२ ॥**

**शल्यं च पाण्डवानेव यान्तं ज्ञात्वा सुयोधनः ।**
**सुसभाः कारयामास सर्वभोगसमन्विताः ॥ ३३ ॥**

**ता युधिष्ठिरक्लृप्ताः स मत्वा शल्योऽब्रवीदिदम् ।**
**य एताः[१] कारयामास तदभीष्टं करोम्यहम् ॥ ३४ ॥**

**लीनः श्रुत्वा धार्त्तराष्ट्रः सत्यं कुर्वित्यभाषत ।**
**देहि मे युद्धसाहाय्यमिति सोऽपि यशोऽर्थयन् ॥ ३५ ॥**

**लीनः, सभायामिति शेषः । सभाः कारितवतः अभीष्टं करोमीति तद्वचः श्रुत्वा । सत्यमेव कुर्याम्; तव किं कार्यमिति शल्येन पृष्टः दुर्योधनः, मे युद्धसाहाय्यं देहीति अभाषतेति योज्यम् ॥ ३५–९ ॥**

---

सपुत्रपौत्रः । सोमदत्तः पुत्रः । भूरिर्भूरिश्रवाः शल इति त्रयः पौत्राः । अपि अन्ततः कृष्णभक्ताः प्रियपाण्डवा अपि ॥ ३१ ॥ प्रीत्यर्थं धृतराष्ट्रस्य । तदुपजीवनेनाऽत्मनोऽधमर्णान् मन्यमानास्तत्प्रतिकाराय धृतराष्ट्रं प्रीणयितुकामा इत्यर्थः । पाण्ड्यो द्रमिळः । द्रमिळेष्वपि विशिष्य तं देशभागं पाण्ड्यमाहुर्यं सम्प्रति **'तिरुनलूवेलि'** इति व्याह-रन्ति । पण्डितान् यात्यवगमार्थमिति पाण्ड्यः । गुर्जरदेशे **'पण्ड्य'** इति पण्डित उच्यते । द्रमिळभाषायां **'पाण्डी'** इति नौरुच्यते । नौयानेन वाणिज्यं निर्वहन्तः पाण्ड्या उच्यन्ते । पाणिनीयास्तु–पाण्डुरिति कश्चिज्जनपदः । तद्राजाऽपि पाण्डुः । तस्यापत्यं पाण्ड्य इति निरूचुः । तथाहि वार्तिकम्– [अ.सू.४.१.१७१]–**'पाण्डोर्जनपदशब्दात् क्षत्रियाड् ड्यण् वक्तव्यः'** इति । कदा द्रमिळदेशस्य पाण्डुदेश इति नामाऽसीदिति मृग्यं भवति । वीरसेनाख्यः चित्राङ्गदायाः पिताऽर्जुनश्वशुरः । यं चित्रवाहननाम्नाऽपि व्यपदिशन्ति क्वचित् । मलयध्वज इति च ॥ ३२ ॥ सुसभाः सुरयोग्याः सभाः । मार्गमध्ये विश्रामाय कल्पितानि मनोज्ञानि मन्दिराणि । **'आजगाम सभामन्यां देवावसथवर्चसम्'** [उ.प. ८.१२] इति च ॥ ३३ ॥ क्लृप्ताः निर्मिताः, कारिता इत्येतत् । स पाण्डवप्रियः शल्यः । ऋतायनपुत्रः माद्रीभ्राता ॥ ३४ ॥ 'देहि मे युद्धसाहाय्यम्' इति, 'दत्वा च त्वद्वचनं सत्यं कुरु' इति चाभाषत । आत्मवचनपालनेन यशोऽर्थयन् ॥ ३५ ॥

---

१. 'एतत् कार–'

**रक्षार्थमात्मवाक्यस्य तथेत्येवाभ्यभाषत ।**
**स पाण्डवांस्ततो गत्वा तैरनुज्ञात एव च ॥ ३६ ॥**

**तेजोवधार्थं कर्ण्णस्य धनञ्जयकृतेऽर्त्थितः ।**
**तथेत्युक्त्वा ययौ धर्म्मनन्दनं कौरवान् प्रति ॥ ३७ ॥**

---

तथाऽस्त्विति तदभीष्टमेवाभाषत ॥ ३६ ॥ धनञ्जयकृते कर्णस्य तेजोवधार्थं च धर्मनन्दनेन– **'तेजोवधश्च ते कार्यः सौतेरस्मज्जयावहः'** [८.५०] इत्यर्थितः, तथा करिष्यामीति धर्मनन्दनमुक्त्वा कौरवान् प्रति ययौ । अत्रेदमवधेयम्– अक्षोहिणीपतयोऽर्धाक्षोहिणीपतयश्च राजानः प्रायोऽत्र नामतो निर्दिष्टाः । अण्वीभिः सेनाभिरागता उभयत्राप्यासन् । केचित् केवलं पत्तीन् प्रेषयामासुः । केचित् तुरगान् । केचिद् दन्तिनो यथानुकूलं यथाशक्ति च । तादृश्याः सेनाया नात्राष्टादशस्वन्तर्भावः । तदेतदुपरि स्फुटम् । तथाहि वक्ष्यति– दौर्योधन्यां वाहिन्यां षडक्षोहिणीर्भीमो न्यहन् । पञ्च धनञ्जय इति । किमन्यैर्मशका मक्षिका वा न्यहन्यन्त? नैवं शक्यं वक्तुम् । तर्ह्यसङ्गतं पूर्वसङ्ख्यानं भवति । तदर्थ-मन्यैर्धृष्टद्युम्नादिभिरन्ये सैन्या हता इति वक्तव्यम् । केऽन्ये? एकादशाक्षोहिणीभ्योऽन्ये । अन्यच्च स्फुटमत्र गमकं पश्यामः– दशलक्षं हि कृष्णपुत्राः कौरवाय प्रेषिताः कृष्णेन । एकादशाक्षोहिणीषु न ते परिगणिताः । ते हि केवलं पदातयः । अक्षोहिणी तु चतुरङ्गा भवति । अन्यथा त एव पदातीनां नवाक्षोहिण्यो भवन्ति । एवं पाण्डवसेनायामपि । एवमल्पीयसीः सेना विहाय प्रधानसेनामात्रपरिगणनेनायमत्र सेनासङ्ख्यानक्रमः–

| | | | | |
|---|---|---|---|---|
| कौरवसेनायां रथा गजाश्च | – | २१८७०x११ | = | २४०५७० |
| अश्वाः | – | ६५६१०x११ | = | ७२१७९० |
| पदातयः | – | १०९३५०x११ | = | १२०२८५० |
| पाण्डवसेनायां रथा गजाश्च | – | २१८७०x७ | = | १५३०९० |
| अश्वाः | – | ६५६१०x७ | = | ४५९२७० |
| पदातयः | – | १०९३५०x७ | = | ७६५४५० |
| संहत्याष्टादशाक्षोहिणीषु रथा गजाश्च | – | ३९३६६० | | |
| अश्वाः | – | ११८०९८० | | |
| पदातयः | – | १९६८३०० | | |

एकस्मिन् रथे चत्वारः पुरुषाः– रथी, चक्ररक्षौ, सूतश्चेति । गजे त्रयः–आधोरणोऽग्रे, योद्धा मध्ये, अस्त्रगोपश्च पृष्ठे । प्रत्यश्वमेकः । तेनाष्टादशसु दिनेषु मृता अष्टादशाक्षोहिणीमध्यपतिताः पुरुषाः– नरधूलिरसाभमिताः ४७२३९२० । अत्रागणिता दशलक्षादप्यधिकाः । संहत्य षष्टिर्लक्षाणि पुरुषाणां निहतानीति महदिदं रौद्रं संहारताण्डवम् ॥ ३७ ॥

**सञ्जयं प्रेषयामास धृतराष्ट्रोऽथ शान्तये ।**
**पाण्डवान् प्रत्यधर्म्मं च युद्धं सः[1] प्रत्यपादयत्** ॥ ३८ ॥

**हठवादेऽवदद् भीमो यं धर्म्मं द्रौपदी तथा ।**
**तमेवोक्त्वा धर्म्मजस्तु चकार च निरुत्तरम्** ॥ ३९ ॥

**कृष्णोऽपि तस्य धर्म्मस्य प्रामाण्यं प्रत्यपादयत् ।**
**ततो निरुत्तरः कृष्णं पाण्डवांश्च प्रणम्य सः** ॥ ४० ॥

**धृतराष्ट्रं ययौ तं च विनिन्द्य प्रययौ गृहम् ।**
**निन्दितः सञ्जयेनासावाहूय विदुरं निशि** ॥ ४१ ॥

**पप्रच्छ सोऽवदद् धर्म्मं पार्त्थानां राज्यदापनम् ।**
**ऐहिकस्य सुखस्यापि कारणं तदनिन्दितम्** ॥ ४२ ॥

**प्रामाण्यं प्रमाणविषयत्वम् ॥ ४०—१ ॥ धर्मं पप्रच्छ । सः राज्यदापनं धर्ममवदत् ॥ ४२ ॥**

---

युद्धं चाधर्मं प्रत्यपादयत् । **'भैक्षचर्यामन्धकवृष्णिराज्ये श्रेयो मन्ये नतु युद्धेन राज्यम्'** [२७.२] इति । चकारेण शममाश्रित्य राज्यत्यागं धर्मं चावदत् ॥ ३८ ॥ जीवस्वभावसमर्थनप्रसङ्गे यं धर्मं भीमो द्रौपदी चावदतां तमेवोक्त्वा– **'यदि ह्यहं विसृजन् साम गर्ह्यो नियुध्यमानो यदि जह्यां स्वधर्मम् । महायशाः केशवस्तद् ब्रवीतु वासुदेवस्तूभयोरर्थकामः'** [२८.१०] इति । धर्मजस्तु समर्थमुत्तरमुक्त्वा च निरुत्तरं चकार । पूर्वस्वभावविलक्षणं निर्धारदार्ढ्यं धर्मजस्य तुनाऽऽह ॥ ३९ ॥ कृष्णोऽपीति । **'स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः । यत् कृत्यं धृतराष्ट्रस्य तत् करोतु नराधिपः'** [२९.५९] इत्यादि ॥ ४० ॥ **'अनाप्तानां सङ्ग्रहात् त्वं नरेन्द्र तथाऽऽप्तानां निग्रहाच्चैव राजन् । भूमिं स्फीतां दुर्बलत्वादनन्तामशक्तस्त्वं रक्षितुं कौरवेय'** [३२.३८] इति, **'स त्वं गर्हे भरतानां विरोधादन्तो नूनं भविताऽयं प्रजानाम्'** [३६] इत्यादि च विविधं विविधैर्वचनैर्निन्दित्वा ॥ ४१ ॥ सोऽवदद् धर्मम्– **'प्रदायैषामुचितं तात राज्यं सुखी पुत्रैः सहितो मोदमानः । न देवानां नापि च मानुषाणां भविष्यसि त्वं गर्हणीयो नरेन्द्र'** [३३.१३०] इति । राज्यदापनम् । दुर्योधनेन बलात् स्वायत्तीकृतं तेनैव दापयेत्यर्थः । ऐहिकस्य सुखस्यापि । अपिः समुच्चये । पारत्रिकस्यापि । भारते च **'न देवानां गर्हणीयः'** इति पारत्रिकं सुखम् । **'नापि च मानुषाणाम्'** इत्यैहिकं सुखम् ॥ ४२ ॥

---

१. **'स प्रत्यपादयत्'**

अन्यथा सर्वपुत्राणां नाशं धर्म्मातिलङ्घनम् ।
तत्र भावमकृत्वा स ज्ञानादिच्छन्नघक्षयम् ॥ ४३ ॥

विष्णोः स्वरूपं पप्रच्छ सोऽस्मरच्च सनातनम् ।
स आगत्यावदत् तत्वं विष्णोर्म्मायाविनः शुभा ॥ ४४ ॥

न गतिश्चेत्यथ प्रातः सञ्जयः पाण्डवोदितम् ।
अवदद् धृतराष्ट्राय सभायां कुरुसन्निधौ ॥ ४५ ॥

तच्छ्रुत्वा स तु भीतोऽपि पुत्रस्नेहानुगो नृपः ।
राज्यं नादात् पाण्डवानां ततो धर्म्मसुतो नृपः ॥ ४६ ॥

यदुक्तवान् सञ्जयाय यदि दित्सति नः पिता ।
राज्यं तदा त्वमागच्छ विदुरो वा न चेन्नच ॥ ४७ ॥

तावथानागतौ ज्ञात्वा मन्त्रयामास शौरिणा ।
सोऽप्याहाहं गमिष्यामि सभायामृषिसन्निधौ ॥ ४८ ॥

वक्ष्ये पथ्यानि युक्तानि यदि नासौ ग्रहीष्यति ।
वद्ध्यः सर्वस्य लोकस्य स भवेत् सर्वधर्म्महा ॥ ४९ ॥

**नाशं धर्मातिलङ्घनं चावदत् । भावं मनः ॥ ४३–६ ॥ विदुरो वा आगच्छतु ॥ ४७–८ ॥ (सर्वस्य लोक)स्य**

---

अन्यथा धर्मातिलङ्घनम्, तेन सर्वपुत्राणां नाशं चावदत् । भावं कर्तव्यताबुद्धिम् ॥ ४३ ॥ पप्रच्छ विदुरम् । स विदुरः । सनत्सुजातमस्मरदिति भारते । सनकादिषु चतुर्षु सनत्सुजात इति क उच्यते? सनत्कुमार इत्येके । सनातन इति युक्तमित्याह– सोऽस्मरच्च सनातनम् । **'यः पुराणः सनातनः सनत्सुजातः'** [४१.२] इति हि सनत्सुजातीये । **'किं त्वं न वेद तद् भूयो यन्मे ब्रूयात् सनातनः'** [४] इति च । सनत् ब्रह्मणोऽयं सुजातस्तनयः । **'हंसगो द्रुहिणः सनत्'** इति हि स्मरन्ति । सनत् नित्यं पश्वाब्द इव सुजात इति वा । विष्णोस्तत्वमवदत् । मायाविनः शुभा गतिर्न कदाऽपि स्यादिति चावदत् ॥ ४४–५ ॥ धर्मतस्तु धर्मसुतो नृपः । तथाऽपि सम्प्रत्यनृपः सम्पन्न इति श्लेषेणाऽह– धर्मसुतो[ऽ]नृप इति ॥ ४६ ॥ यदुक्तवान् नचेन्न चेति । तदनुसारेण तावनागतौ ज्ञात्वा । यस्मादुक्तवान् यस्माच्च तावनागतौ तेन ज्ञात्वा, राज्यं न दित्सतीति निश्चित्येति वा । अथ प्रतीक्षितसमयानन्तरमपि ॥ ४७–८ ॥ वक्ष्ये

इत्युक्ते[१] वैरमात्मोत्थं लोकमद्ध्ये प्रहापयन् ।
लोकसङ्ग्रहणार्थाय भीमसेनोऽब्रवीद् वचः ॥ ५० ॥

नास्मन्निमित्तनाशः[२] स्यात् कुलस्यापि वयं कुलम् ।
रक्षितुं धार्त्तराष्ट्रस्य भवेमाधश्वरा इति ॥ ५१ ॥

इच्छताऽप्यखिलान् हन्तुं धार्त्तराष्ट्रान् दृढात्मना ।
भीमेनोक्तो वासुदेवो लोकसङ्ग्रहणेच्छया ॥ ५२ ॥

वधं तेषां धर्म्ममेव लोके ज्ञापयितुं[३] हरिः ।
आक्षिपन्निव भीमं तं युद्धाय प्रेरयद्[४] दृढम् ॥ ५३ ॥

अभिप्रायं केशवस्य जानन् भीमो निजं बलम् ।
राज्ञां मद्ध्येऽवदत् तच्च कृष्णोऽभ्यधिकमेव हि ॥ ५४ ॥

**सम्मत्या ॥ ४९ ॥ आत्मोत्थं आत्मनिर्मितम् । (आत्मनिर्मित)त्वेन ज्ञा(तम्) । प्रहापयन् मोचयन् इति वचः अब्रवीत् इति सम्बन्धः ॥५०॥ अधश्वराः सेवकाः ॥५१॥ दृढात्मना हन्तुमिच्छताऽपि ॥५२–५॥**

---

वक्ष्यामि । एवं शान्तिवचनं स्वस्याप्यभिमतमित्यात्मनेभाषा । पथोऽनपेतानि पथ्यानि । हितानीत्यर्थः । **'धर्मपथ्यर्थन्यायादनपेते'** [अ.सू.४.४.९२] इति यत्प्रत्ययः । दुराशारोगग्रस्तस्य दुर्योधनस्य पथ्यस्थानीयानि । युक्तियुक्तानि न्यायादनपेतानि । सर्वस्य ज्ञानिलोकस्य ऐकमत्येन । सर्वधर्महन्तृत्वात् । **'विष्णुभक्तिपरो धर्मो ह्यधर्मस्तद्विपर्ययः'** इति हि सर्वधर्मनिर्णयः ॥ ४९ ॥ वैरमात्मोत्थमिति लोकमध्ये जनितं प्रवादं हापयन् । धर्म्ये पथि शिक्षापूर्वकमावर्जनं लोकसङ्ग्रहणम् ॥ ५० ॥ **'अपि दुर्योधनं कृष्ण सर्वे वयमधश्वराः । नीचैर्भूत्वाऽनुयास्यामो मा स्म नो भरता नशन्'** [७३.२०] इति च भगवद्याने ॥ ५१ ॥ दृढेन कृतनिश्चयेन मनसा हन्तुमिच्छताऽपि, दृढात्मना अचलनिर्धारेण भीमेन वा ॥ ५२ ॥ वधं धर्ममेव, वधमेव च धर्मम्, न शमम्, इति ज्ञापयितुम् । **'इदं मे महदाश्चर्यं पर्वतस्येव सर्पणम् । यदीदृशं प्रभाषेथा भीमसेनासमं वचः । स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत । उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव'** [७४.२१.२] इत्याक्षिपन्निव युद्धाय प्रैरयत् । प्रेरणं च केवलं लोकदृष्टयेत्यल्लोपेनाऽह ॥ ५३ ॥ युद्धे पाण्डवसहायार्थमागतानां राज्ञां मात्स्यद्रुपदादीनाम् ॥ ५४ ॥

---

१. 'इत्युक्तो वैर–' २. '–मित्तं नाशः'
३. 'लोके ख्यापयितुम्' । 'ज्ञापयितुं प्रभुः' इति क्वचित् । ४. 'प्रैरयद्–'

शशंस सत्यैः सद्वाक्यै राज्ञां मद्ध्ये प्रकाशयन् ।
वधं कुरूणां सद्धर्म्मं गुणान् भीमस्य चामितान् ॥ ५५ ॥

नित्यमेकमनस्कौ तावपि केशवमारुती ।
एवं लोकस्य संवादहेतोः संवादमक्रताम् ॥ ५६ ॥

ततः कृष्णोऽर्ज्जुनं चैव कृपालुं सन्धिकामुकम् ।
हेतुमद्भिः शुभैर्वाक्यैरनुनीय जगत्पतिः ॥ ५७ ॥

उक्तो मानुषया बुद्ध्या नकुलेन सुनीतिवत् ।
शौर्य्यप्रकाशनायैव युद्धं योजयतां[१] भवान् ॥ ५८ ॥

इत्युक्तः सहदेवेन युयुधानेन चाच्युतः ।
दस्यूनां निग्रहो धर्म्मः क्षत्रियाणां यतः परः ॥ ५९ ॥

**अक्रताम् अकुरुताम् ॥ ५६ ॥ (अनुनीय न) युद्धमधर्म इति स्वमतमङ्गीकारयित्वेति भावः । ततः अच्युतो जगत्पतिः कृष्णः अर्जुनमनुनीय नकुलेन सुनीतिवत् उत्तमनीतिज्ञवत् युद्धं योजयतात् योजयतु, (इति**

---

सद्वाक्यैरिति । युद्धस्य सद्धर्मत्वे भीमस्य माहात्म्ये च ये ससंशयास्तेषां संशयच्छेदकैर्वचनैः । अत एव तादृशानां ससन्देहानां राज्ञां मध्ये इति पुनराह । तेषामपि गतसन्देहत्वाय प्रकाशयन् । **'सद्वाक्यैर्व्याकरणविरोधादिरहितै-र्वाक्यैः'** इति तु बालिशं व्याख्यानम् । कुरूणां वधाख्यं भाविसङ्ग्रामं सद्धर्मं श्रुतिस्मृतिविहितं सद्भिराचरितं च धर्मम्, अतः पाण्डवैराचरणीयं च धर्मं शशंस । भीमस्यामितान् गुणांश्च शशंस । **'वेदाहं तव माहात्म्यमुत ते वेद यद् बलम् । उत ते वेद कर्माणि न त्वां परिभवाम्यहम् । यत् किञ्चाऽत्मनि कल्याणं सम्भावयसि पाण्डव । सहस्रगुणम-प्येतत् त्वयि सम्भावयाम्यहम्'** [७६.२–३] इति । **'अस्मिन् युद्धे भीमसेन त्वयि भारः समाहितः'** [१८] इति च ॥ ५५ ॥ समानो वादः संवादः समाख्या । ससंशयस्य सज्जनलोकस्य संवादेन समाख्यया अभिप्रायदार्ढ्यार्थम् । तेन च सतां मध्ये विवादविरहेण संवादार्थमैकमत्यार्थं च केशवमारुती एव विवादगर्भमिव संवादं सरससम्भाषणम-कुरुताम् । **'अक्रताम्'** इति वैदिकं पदम्–**'यत्र धीरा मनसा वाचमक्रत'** इतिवत् । एतादृशानि पदान्यसकृत् प्रयुञ्जानः शोभते परमवैदिक आचार्यः ॥ ५६ ॥ कृपालुं सन्धिकामुकम् । **'स तथा कृष्ण वर्तस्व यथा शर्म भवेत् परैः'** [७७.६] इत्यादि । शुभैः धर्मानुकूलैः –**'यत्तु वाचा मया शक्यं कर्मणा वाऽपि पाण्डव । करिष्ये तदहं पार्थ न त्वाशंसे शमं परैः'** [७८.१८] इत्यादिभिः ॥ ५७ ॥ सुनीतिज्ञेनेव नकुलेन । मानुषया बुद्ध्योक्तः–**'स भवान् कुरुमध्ये तं**

---

१. **'योजयताद्–'** । वे.ती. पाठोऽपि तथा ।

अतो न धार्त्तराष्ट्रैर्न्नः सन्धिः स्यादिति पार्षती ।
जगाद कृष्णं सोऽप्येनामोमित्युक्त्वा विनिर्य्ययौ ॥ ६० ॥

ससात्यकिः स्यन्दनवर्य्यसंस्थितः पृथातनूजैरखिलैः स भूमिपैः[1] ।
अन्वागतो दूरतरं गिरा तान् संस्थाप्य विप्रप्रवरैः कुरून् ययौ ॥ ६१ ॥

एकोऽपि विष्णुः स तु[2] भार्ग्गवात्मा व्यासः सशिष्यस्तदनन्यदृश्यः[3] ।
ययौ तदुक्तेर्हि गुणान् प्रवेत्तुं नान्यो हि शक्तस्तमृते यतः प्रभुम् ॥ ६२ ॥

**मानुषया बु)द्ध्या उक्तः, सहदेवेन युयुधानेन(च) शौर्यप्रकाशनायैव भवान् युद्धं योजयतादित्युक्तः तानोमित्युक्त्वा विनिर्ययौ । पार्षती इति जगाद । स एनामपि ओमित्युक्त्वा विनिर्ययौ[4] ॥ ५७–६१ ॥ स विष्णुः एकोऽपि भार्गवात्मा, सशिष्यो व्यासः व्यासात्मेति भावः, एवं द्विरूपः ययौ । कृष्णेन सहेति शेषः ॥ ६२ ॥**

---

**सान्त्वपूर्वं भयोत्तरम् । ब्रूयाद् वाक्यं यथा मन्दो न व्यथेत सुयोधनः'** [७९.११] इत्यादि । निर्णयेऽप्यनिर्णयदर्शिनी हि मानुषी बुद्धिः । युद्धं योजयताम् । तत् किल तवाप्यभिमतमित्यात्मनेभाषयाऽह ॥ ५८ ॥ सहदेवेन च । **'यथा च युद्धमेव स्यात् तथा कार्यमरिन्दम'** [८०.१] इति सहदेववचनं भगवद्याने । युयुधानेन च युद्धं योजयतामित्युक्तः – **'सत्यमाह महाबाहो सहदेवो महामतिः'** [८०.६] इति । जगत्पतिरच्युतो विनिर्ययौ । दस्यूनां निग्रहः क्षत्रियाणां परो धर्मः । तथाहि द्रौपदीवचनम्–**'तस्मात् तेषु न कर्तव्या कृपा ते मधुसूदन'** [८१.१२], **'क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः । अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता'** [१६], **'धिक् पार्थस्य धनुष्मत्तां भीमसेनस्य धिग् बलम् । यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति'** [३१] इत्यादि ॥ ५९ ॥ स कृष्णः एनामपि ओमित्युक्त्वा युद्धमेव विनिश्चित्य ययौ । **'अचिराद् द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः'** [८१.४४] इति हि कृष्णवचनम् ॥ ६० ॥ अखिलैर्भूमिपैः सह पृथातनूजैरन्वागतः । सभूमिपैरखिलैः पृथातनूजैर्वा । सायुधः स्थितः संस्थितः । तान् पार्थान् गिरा सान्त्ववचनेन संस्थाप्य समाधाय स्थापयित्वा प्रतिनिवर्त्य । अथ पथि सङ्गतैर्विप्रप्रवरैः सह कुरून् ययौ । कैश्चिद् दृश्यतया । कैश्चिददृश्यतया । कैश्चिद् धरागतैः । कैश्चिदम्बरगतैः । विप्रवराः ऋषयः । विप्रप्रवरा महर्षयो देवर्षयश्च । **'नारदप्रमुखाः सर्वे प्रत्यनन्दन्त केशवम्'** [उ.प.८३.२३] इति, **'अपश्यदन्तरिक्षस्थानृषीन् परपुरञ्जयः । ततस्तानभिसम्प्रेक्ष्य नारदप्रमुखानृषीन् । अभ्यभाषत दाशार्हो भीष्मं शान्तनवं शनैः'** [९४.५३] इति च भगवद्याने ॥ ६१ ॥ यद्यप्येकः । अथाप्येकत्वमन्यैर्न दृश्यमास । किन्तु त्रय इमे भिन्ना इत्येव व्यज्ञायन्त । अथ च व्यासः सशिष्यः अनन्यदृश्यः प्राकृतजनैरदृष्टोऽन्तर्हितो

---

१. **'–रखिलैश्च भूमिपैः'**
२. **'एकोऽपि कृष्णः स च भार्ग–'**
३. **'व्यासात्मकश्चानुगतो मुनीन्द्रैः । ययौ'**
४. इतः कानिचनाक्षराण्यादर्शे गलितान्यस्फुटानि च ।

स वन्यमानोऽखिलराष्ट्रवासिभिः प्रसूनवर्षैरभिवर्षितः सुरैः ।
संस्तूयमानः प्रणतोऽब्जजादिभिर्गजाह्वयं प्राप परोऽप्रमेयः ॥ ६३ ॥

स भीष्ममुख्यैः सरसाभियातः[१] सहैव तैः प्रययौ राजमार्ग्गे ।
दिदृक्षवस्तं जगदेकसुन्दरं गुणार्ण्णवं प्राययुरत्र[२] सर्वे ॥ ६४ ॥

सभाजितस्तैः[३] परमादरेण विवेश गेहं नृपतेरनन्तः ।
स भीष्ममुख्यान् पुरतो निधाय वैचित्रवीर्य्येण समर्च्चितोऽजः ।
रौग्मे[४] निषण्णः परमासने प्रभुर्बभौ स्वभासा ककुभोऽवभासयन् ॥ ६५ ॥

यथोचितं तेषु विधाय केशवो दौर्य्योधनं प्राप्य गृहं च पूजितः[५] ।
पूजां तदीयां गुणवद्द्विडित्यसौ जग्राह नो विदुरं चाऽजगाम ॥ ६६ ॥

**अब्जजादिभिः सुरैः ॥ ६३ ॥ सरसाभियातः सस्नेहमभियातः ॥ ६४–५ ॥ तेषु यथोचितम्, नमनादिकमिति शेषः, विधाय ॥ ६६ ॥**

---

ययावित्यर्थः । **'ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः'** [१३१.३४] इति तेषां निर्गमनप्रसङ्गे भारतवचनम् । आगमनप्रसङ्गेऽप्येतदन्वेतव्यमित्यनेनाऽह । किमर्थं ययौ? तदुक्तेर्हि गुणान् प्रवेत्तुम् । नन्वन्येऽपि प्रविद्यासुः? न प्रविद्यासुरित्याह– नान्यो हि शक्तः । हिरवधारणे । नहि नैव शक्त इत्यर्थः । **'हि हेताववधारणे'** इत्यभिदधति । नन्वस्तु स एव शक्त इति । अथापि किमिति ययौ? दूरे स्थित्वाऽपि स गुणान् वेत्तुं प्रभवेदेव । तत् किं तत्र ययौ? तर्हि भवन्तं पृच्छामः–दूरे स्थित्वाऽपि कृष्णः सन्धातुं प्रभवेदेव । तत् किमिति ययाविति । लोकसङ्ग्रहायेति चेत् समं समाधानम् । अत एव प्रवेत्तुमित्याह । प्रकटं सर्वलोकसमक्षमित्यर्थः । ईदृशी च भगवल्लीला लोकशास्त्रप्रथितेत्याह– ययौ हीति ॥ ६२ ॥ राष्ट्रवासिभिः प्रसूनवर्षैरभितो वर्षितः । **'तं किरन्ति महात्मानं वन्यैः पुष्पैः सुगन्धिभिः । स्त्रियः पथि समागम्य सर्वभूतहिते रतम्'** [८४.१२] इति च । अभित इत्युभयपार्श्वयोः । अथ च सुरैरप्यभिमानेन वर्षितः । **'ववर्ष पुष्पवर्षं च'** [८४.१०] इत्यस्येदं व्याख्यानम् । अथ सुरैरब्जजादिभिरदृश्यैः भक्त्या स्तूयमानः प्रणतश्च ॥ ६३ ॥ सरसाभियातः । कैश्चित् सप्रणयमभियातः । कैश्चित् सभक्ति । कैश्चित् सकुतूहलम् । कैश्चित् सगर्वम् ॥ ६४ ॥ अवभासयन्, अवतमसमप्यवधूय भासयन् ॥ ६५ ॥ यथोचितं करणीयं विधाय । स्वागतादिना पूजितः, भोजनादिना पिपूजयिषितश्च ॥ ६६ ॥

---

१. **'–मुख्यैस्तरसाऽभि–'** इति क्वचित् ।
२. **'–र्णवं चाऽययुरत्र'**
३. **'सम्भावितस्तैः'**
४. **'रौक्मे'**
५. गृहं सुपूजितः'

स भीष्मपूर्वैरभियाचितोऽपि जगाम नैषां गृहमादिदेवः ।
उपेक्षिता द्रौपदीत्यप्रमेयो जगाम गेहं विदुरस्य शीघ्रम् ॥ ६७ ॥

स तेन भक्त्याऽभिगतः प्रसन्नः प्रविश्य चान्तर्गृहमीश्वरोऽजः ।
भक्त्याऽभिपूर्णेन ससम्भ्रमेण सम्पूजितः सर्वसमर्प्पणेन ॥ ६८ ॥

परे दिनेऽसौ धृतराष्ट्रसूनुना समानीतः[१] संसदि कौरवाणाम् ।
विवेश दिव्ये मणिकाञ्चनासने सार्द्धं मुनीन्द्रैः परमार्त्थवेदिभिः ॥ ६९ ॥

सम्पूजितो भीष्ममुखैः[२] समस्तै रराज राजीवसमाननेत्रः ।
यथोचितास्तत्र विधाय वार्त्ता जगाद काले कलिकल्मषापहः ॥ ७० ॥

वैचित्रवीर्य्य स्वकुलस्य वृद्ध्यै प्रदेहि राज्यं तव सत्सुताय ।
यशश्च धर्म्मं परमं प्रसादं मम त्वमाप्नोषि तदैव[३] राजन् ॥ ७१ ॥

अतोऽन्यथा यशसो धर्म्मतश्च हीनः प्रतीपत्वमुपैषि मेऽतः ।
इतीरितः प्राह ममातिवर्त्तिनं सुतं स्वयं मे प्रतिबोधयेति ॥ ७२ ॥

**शीघ्रं जगामेत्युक्त्या विदुरेऽनुग्रहाधिक्यं सूचयति ॥ ६७–८ ॥ परमार्थो भगवान् ॥ ६९ ॥ विवक्षित-कथनोचितकाले ॥ ७०–१ ॥ उपैषि यतः अतः प्रदेहि इति पूर्वेण सम्बन्धः । ममातिवर्तिनं मम**

अभिप्रायपूर्वकम्, अभिमानेन च याचितः । अहमग्रपूजामकारयमिति भीष्मस्याभिमानः । अहं ब्रह्मर्षिरिति द्रोणस्य । जगाम गेहं विदुरस्य, अयाचितोऽपि । भक्तानुग्रहे त्वरितो भगवानिति शीघ्रमित्याह ॥ ६७ ॥ अन्तः भक्त्या अभितः पूर्णेन, अतः बहिः ससम्भ्रमेण, किङ्किं करणीयम्, कथङ्कारं करणीयमिति व्यग्रेण, सर्वप्रकारेण पूजितः सम्पूजितः ॥ ६८ ॥ विदुरसदनात् सम्मानपूर्वकमानीतः । परमार्थो भगवान् । तद्वेदिनः । तेन सृष्टं जगदपि परमार्थं सत्यमिति वेदयन्त इति च । किं तथ्यं किमसत्यमिति वेदिभिश्च । ताच्छील्ये णिनिः ॥ ६९ ॥ राजीवसमाननेत्र इति विषमेऽपि काले अव्यग्रतामनुग्रहोन्मुखत्वं चाऽह । वचनसमुचिते काले जगाद । कीदृशः? कलिकल्मषापहः । कलिकालेऽपि कलिकल्मष-मपहन्ति । अथच काले कलिकल्मषापहः । कलिः कलहः । समुदिते काले कलहरूपं किल्बिषमपहन्ति । तदानीं न कलहनिवारणाय च समुचितः कालः । किन्तु कलहसमुचितः काल इत्यर्थः ॥ ७० ॥ प्रदेहि प्रेम्णा देहि । सत्सुताय गुणवते सुताय । सत्सु तताय च ॥ ७१ ॥ मे प्रतीपत्वं प्रतिकूलत्वम्, प्रत्यर्थित्वमित्येतत्, एषि । सतां सरणिमतिहाय

१. **'सम्मानितः'** २. **'भीष्ममुख्यैः समस्तै–'** ३. **'–प्नोषि सदैव'**

स वासुदेवेन विबोधितोऽपि पापाभिसन्धिर्द्धृतराष्ट्रसूनुः ।
उत्थाय तस्मादनुजैरमात्यैर्न्नियन्तुमीशं कुमतिर्व्यधान्मतिम् ॥ ७३ ॥

येये तदा केशवसंयमाय न्यमन्त्रयंस्ते विबुधप्रतीपाः ।
अतो विकर्ण्णप्रमुखा अपि स्म वद्ध्यत्वमायन्नशुभां गतिं च ॥ ७४ ॥

कर्ण्णः सुराग्र्योऽपि[१] सुयोधनार्त्थे न्यमन्त्रयद् भावतो नैव दुष्टः ।
अतो गतिश्चास्य सुशोभनाऽभूद् येऽत्रानुकूलाः परमस्य ते शुभाः ॥ ७५ ॥

ऋषिभिर्ज्जामदग्न्येन व्यासेनाप्यमितौजसा ।
वासुदेवात्मना चैव[२] त्रिरूपेणैव विष्णुना ॥ ७६ ॥

मातापितृभ्यां भीष्माद्यैरनुशिष्टोऽपि दुर्म्मतिः ।
दुर्य्योधनो मन्त्रयते मुकुन्दस्याऽशु बन्धनम्[३] ॥ ७७ ॥

**आज्ञातिवर्तिनम् ॥ ७२–३ ॥ अतोऽपि अस्मादपराधादपि विकर्णप्रमुखाः धार्तराष्ट्राः वध्यत्वमायन् ॥ ७४ ॥ भावतः मनसा ॥ ७५–६ ॥ राज्यं देहीति अनुशिष्टोऽपि तदकृत्वा मन्त्रयते मन्त्रयामास । बन्धनमुद्दिश्य ॥ ७७–८ ॥**

---

वर्तमानं मम सुतं मे मम कृते त्वमेव स्वयं प्रत्याय्यप्रत्याय्य बोधय । तस्यातिवर्तनं प्रतिषिध्य बोधय । सर्वेषा-मस्माकं प्रतिनिधीभूय बोधय । ममातिवर्तिनमित्येकं वा पदम् । निर्मम इत्यत्रेव मम इति ममकार उच्यते । ममेन अति-वर्तमानो ममातिवर्ती ॥ ७२ ॥ तस्मात् नृपसभात्, मुनिसदसः ॥ ७३ ॥ न्यमन्त्रयन् निगूढममन्त्रयन् । शकुनिप्रधानाः शतं कौरवाः । अतस्ते सर्वे विबुधप्रतीपा इत्याह । शुभां गतिं नाऽयन् । अशुभां च गतिमायन् ॥ ७४ ॥ ननु तदा कर्णोऽप्यास? आस देहेन । न मनसेत्याह– कर्ण इति । भावतः स्वभावतश्च नैव दुष्टः । अतः सुरयोग्या शुभा गतिरभूत् ॥ ७५ ॥ ऋषिभिः कण्वादिभिः । अमितौजसा जामदग्न्येनापि, व्यासेनापि । एवकार औपम्ये । एवं वासुदेवात्मना च । द्वितीय एवकारस्त्रिरूपस्यापि विष्णुत्वमवधारयति । एवं त्रिरूपेण साक्षाद् विष्णुना ॥ ७६ ॥ भीष्मद्रोणविदुरैः । मुकुन्दस्य बन्धनान्मोचकस्य बन्धनं मन्त्रयाश्चक्र इति परिहसति । मुकुं मुक्तिं ददातीति हि मुकुन्दः । भोजस्तु मुचेर्डुकुन्दप्रत्ययेन मुञ्चतीति मुकुन्द इति निरुवाच–**'मुचेर्डुकुन्दकुकुन्दौ'** [स.कं.२.२.१२९] इति ॥ ७७ ॥

---

१. 'सुरांशोऽपि' २. '–देवात्मकेनैवं त्रि–' ३. '–स्यानुबन्धनम्'

सात्यकिः कृतवर्म्मा च तच्छुश्रुवतुरञ्जसा ।
संस्थाप्य कृतवर्म्माणं रहः सात्यकिरत्र च ।
अभ्येत्य केशवं प्राह दुर्य्योधनविनिश्चयम् ॥ ७८ ॥

जानन्नप्यखिलं कृष्णस्तच्छुत्वा सात्यकेर्म्मुखात् ।
वैचित्र[1]वीर्य्यमवदत् पश्य मामिति सर्वगम् ॥ ७९ ॥

अथ तेनाऽहुते पुत्रे सामात्ये पुरुषोत्तमः ।
स्वं रूपं[2] दर्शयामास सर्वगं पूर्णसद्गुणम्[3] ॥ ८० ॥

तत् [4]कालसूर्य्यामितदीप्ति सर्वजगद्धरं शाश्वतमप्रमेयम् ।
दृष्ट्वैव चक्षूंषि सुयोधनाद्या न्यमीलयन् दीधितिवारितानि ॥ ८१ ॥

पिधाय रूपं पुनरेव तद्धरिर्वैचित्रवीर्य्येण समर्त्थितः पुनः ।
कृत्वाऽन्धमेव प्रययौ सुयोधनं सहानुगं पापतमं प्रकाश्य ॥ ८२ ॥

अनन्तशक्तिः पुरुषोत्तमोऽसौ शक्तोऽपि दुर्य्योधनचित्तनिग्रहे ।
नैव व्यधादेनमथोक्तकारिणं निपातयन्नन्धतमस्यनन्तः ॥ ८३ ॥

**पश्य मामित्यवदत्, दिव्यदृशं दत्वेति भावः । जानन् इत्यस्योपपादकं सर्वगमिति ॥ ७९ ॥ आहुते आहूते ॥ ८० ॥ तद् रूपम् । कालः प्रळयकालः ॥ ८१–२ ॥ अथ विश्वरूपप्रदर्शनानन्तरमपि ॥ ८३ ॥**

---

सभाद्वारे संस्थाप्य । अत्र सभायां स्थितं केशवं अञ्जसा सपदि अभ्येत्य रहः उपांशु प्राह, यथाऽन्ये न शृणुयुः, नापि जानीयुः किं वृत्तमिति । किं प्राह? दुर्योधनस्य विपरीतं निश्चयम् ॥ ७८ ॥ मां सर्वगं पश्येत्यवदत् ॥ ७९ ॥ आहुते आहूते । विदुरेण चाऽनीते । सामात्ये सशकुनौ । सर्वगम् । सर्वत्र गतम्, सर्वमत्र गतं च– **'तस्य ब्रह्मा ललाटस्थो रुद्रो बक्षसि चाभवत् । लोकपाला भुजेष्वासन्नग्निरास्यादजायत'** [१३१.५] इत्यादि ॥ ८० ॥ अमितसूर्यदीप्ति । प्रळयकालसूर्यस्येव अमिता दीप्तिर्यस्येति वा । सूर्यदीप्त्याऽपि असम्मिता दीप्तिरस्येति वा ॥ ८१ ॥ समर्थितः । सादरमर्थितः सकारणमर्थितः– **'भगवन् मम नेत्राभ्यामन्तर्धानं वृणे पुनः । भवन्तं दृष्टवानस्मि नान्यं द्रष्टुमिहोत्सहे'** [१३१.२७] इति । वैचित्रवीर्यमन्धमेव पुनः कृत्वा ॥ ८२ ॥ अथ स्वमहिमप्रदर्शनानन्तरमपि । बन्धनयत्नस्य वैफल्यानन्तरमपि,

---

१. **'वैचित्र्यवीर्य–'** इति मूलादर्शे पठ्यते । स्खलितं स्यात् ।
२. **'स्वरूपम्'**
३. **'पूर्णषड्गुणम् ।'**
४. **'तद् बालसूर्यामित–'**

**पुनश्च कुन्तीगृहमेत्य कृष्णस्तयोद्योगं धर्म्मसुतस्य शिष्टम् ।**
**श्रुत्वा ययौ सूर्य्यजमात्मयाने निधाय तस्यावददात्मजन्म ॥ ८४ ॥**

**आयाहि पाण्डूनिति[१] तद्वचः स नैवाकरोन्मानितो धार्त्तराष्ट्रैः ।**
**संस्थाप्य तं भगवान् द्रौणये च रहोऽवदन्मित्रभावं पृथाजैः ॥ ८५ ॥**

**यावत् पितुर्म्मरणं सोऽपि मैत्रीं वव्रे पार्त्थैस्तं च विसृज्य कृष्णः[२] ।**
**ययौ कुरून् पूर्वमेवोद्विसृज्य पृथासुतानां स सकाशमीशः ॥ ८६ ॥**

**सम्प्रार्त्थितः पृथया चैव कर्ण्णः पार्त्थैर्य्योगं याहि सूनुर्म्ममासि ।**
**तेनाप्युक्ता वासविना विनाऽहं हन्यां सुतांस्ते न कथञ्चनेति[३] ॥ ८७ ॥**

**'पुनश्च कुन्तीगृहमेत्य' इत्युक्त्या पूर्वमपि कुन्तीगृहं गत इत्यवगम्यते । तया शिष्टं शिक्षितम् । आत्मजन्म अवदत्, पाण्डूनायाहि इति च अवदत् ॥ ८४–८६ ॥ मम सूनुरसि यतः ॥ ८७ ॥**

---

अनन्तशक्तिः सन्नपि, एनं स्वभावतस्तामसं स्वोक्तकारिणं नैव व्यधात् कुतः? अथ द्वेषपरिपाकानन्तरमन्धतमसि निपातयन् ॥ ८३ ॥ पृथयाऽनुशिष्टं युद्धोद्योगम् । **'युद्धयस्व राजधर्मेण मा निमज्जीः पितामहान् । मा गमः क्षीणपुण्यस्त्वं सानुगः पापिकां गतिम्'** [१३२.३४] इति । **'यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः'** [१३७.१०] इति च । सूर्यजं कर्णम् । आत्मजन्म स्वजननवृत्तान्तम् ॥ ८४ ॥ तस्मात् तव भ्रातॄन् पाण्डूनायाहि । धार्त्तराष्ट्रैर्मानितत्वात् तद्विश्वासद्रोहो मा भूदिति । संस्थाप्य समाधानकरैर्वचनैस्तस्य मनःस्थैर्यं सम्पाद्य । **'उपस्थितविनाशेयं नूनमद्य वसुन्धरा । यया हि मे वचः कर्ण नोपैति हृदयं तव । सर्वेषां तात भूतानां विनाशे प्रत्युपस्थिते । अनयो नयसङ्काशो हृदयान्नापसर्पति'** [उ.प.१४३.४६–७] इत्यादिभिः । द्रौणयेऽश्वत्थाम्ने चावदत् । किमिति? पार्थैः मित्रभावं कुर्विति ॥ ८५ ॥ कुरून् पूर्वमेव उद्विसृज्य–**'वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः । आपृच्छे भवतः सर्वान् गमिष्यामि युधिष्ठिरम्'** [उ.प.१३१.४७] इत्युद्घोषपूर्वकं विसृज्य पृथासुतानां सकाशं ययौ ॥ ८६ ॥ ममासीति सम्प्रार्थितः संस्तव-पूर्वकं प्रचोद्य अर्थितः । पृथया च सूर्येण च । तथाहि सूर्यवचनम्–**'सत्यमाह पृथा वाक्यं कर्ण मातृवचः कुरु । श्रेयस्ते स्यान्नरव्याघ्र सर्वमाचरतस्तथा'** [उ.प.१४६.२] इति भगवद्याने । एवौपम्ये । यथा कृष्णेन तथा पृथया च । वासविना विना अन्यान् सुतान् न हन्यामिति । **'न ते जातु नशिष्यन्ति पुत्राः पञ्च यशस्विनि । निरर्जुनाः सकर्णा वा सार्जुना**

---

१. **'पार्थानिति'** २. **'–स्तं विसृज्याथ कृष्णः ।'**

३. **'सुतांस्तेऽम्ब कथञ्च नेति'** इति क्वचित् ।

ततो ययुः कौरवाः पाण्डवाश्च कुरुक्षेत्रं योद्धुकामाः सकृष्णाः ।
चक्रुश्च ते शिबिराण्यत्र सर्वे शुभे देशे पाण्डवाः कृष्णबुद्ध्या ॥ ८८ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्यनिर्णये**
**युद्धोद्योगो नाम**
**चतुर्विंशोऽध्यायः**

—०—

[आदितः श्लोकाः– **३६९८+८८=३७८६**]

**ततः गजपुरात् कृष्णगमनानन्तरम् ॥ ८८ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां
चतुर्विंशोऽध्यायः

—०—

**वा हते मयि'** [उ.प.१४६.२३] इति ॥ ८७ ॥ पाण्डवाः कृष्णबुद्ध्या कृष्णप्रज्ञया । कृष्णे प्रणिहितमनसः । कौरवा राज्यबुद्ध्या । अथापि कृष्णबुद्ध्यनुसारेण । नास्तिका अपि भगवत्प्रेरणयैव हि भगवन्तं निराकुर्वन्ति ॥ ८८ ॥

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
गतं चतुर्विंशाध्यायविवरणं सतां हृदयाभरणम् ॥

इत्याचार्यगोविन्दस्य कृतिषु
महाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायां
चतुर्विंशोऽध्यायः

—०—

२२-१०-१२

# पञ्चविंशोऽद्ध्यायः

**[भीष्मपातः]**

**ॐ ॥ ते सेने समरारम्भे समेते सागरोपमे ।**
**भीमभीष्ममुखे वीक्ष्य प्राह वासविरच्युतम् ॥ १ ॥**

**'सेनयोरुभयोर्म्मद्ध्ये रथं स्थापय मेऽच्युत' ।**
**इत्युक्तः स तथा चक्रे पार्त्थः पश्यंश्च[1] बान्धवान् ॥ २ ॥**

**विससर्ज्ज धनुः पापाशङ्की तत्राऽह माधवः ।**
**स्वधर्म्मो दुष्टदमनं[2] धर्म्मज्ञानानुपालनम् ॥ ३ ॥**

**ॐ ॥ समरे आरम्भः ययोस्ते समरारम्भे । समेते उभयभागे मिलिते । भीमभीष्मौ मुखं नेतारौ ययोस्ते भीमभीष्ममुखे ॥ १–४ ॥**

---

ॐ ॥ अथ भीष्मपर्वकथासङ्ग्रहः पञ्चविंशेऽध्याये । समरस्याऽरम्भे । प्रारब्धे सति समरे । भीमभीष्मौ मुखे अग्रतो ययोः । भीमभीष्मावेव मुखं प्रमुखौ ययोर्वा । **'अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् । पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्'** [भी.प.२५.१०] इति हि भगवद्गीतायाम् । यद्यपि भीष्मो वर्षीयानिति, एकदशाक्षोहिणीप्रणेतेति चाभ्यर्हितः । अभ्यर्हितत्वात् प्रथमनिर्देशमर्हति । भीमः कनीयानिति, सप्ताक्षोहिणीप्रणेतेति, प्रणेतृत्वेऽपि न भीष्म इव सेनापतिरिति परतो निर्देशमर्हति । अथापि भीमभीष्मेति भीमं पूर्वं निर्दिदेश । भीष्मं परतः । किं बीजम्? गीतोक्त-दिशा पर्याप्तबलो जेता चेति भीमस्याभ्यर्हितत्वात् पूर्वनिर्देशः । स्वरूपतोऽभ्यर्हितत्वाच्च । अपर्याप्तबलः पराजितः स्वरूपतोऽवरश्चेति भीष्मस्य परस्तान्निर्देशः । विरोद्धुं समेते ईक्षित्वा । प्रभुः सेवकं प्रतीवाऽह ॥ १ ॥ प्रभुत्वं प्रकट-यन्नाह– **'सेनयोः–'**[२५.२१] इति गीतावचनम् । मे रथमिति स्फुटोऽहङ्कारातिशयः । तथा चक्रे तस्य गर्वनिर्वापणाय ॥२॥ विससर्ज दोष्णि गतं तूष्णीं रथे निदधौ । स्वप्रज्ञामूला आरोपिता शङ्का आशङ्का । आतङ्कजननी शङ्का आशङ्का ।

---

१. **'पार्थोऽपश्यच्च'** २. **'दुष्टनिधनम्'**

क्षत्रियस्य तमुत्सृज्य निन्दितो यात्यधो ध्रुवम् ।
'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥ ४ ॥

'स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' ।
नच शोकस्त्वया कार्य्यो बन्धूनां निधनेक्षया[१] ॥ ५ ॥

देहस्य सर्वथा नाशादनाशश्चेतनस्य च ।
सृष्टिस्थित्यप्ययाज्ञानबन्धमोक्षप्रवृत्तयः ॥ ६ ॥

प्रकाशनियमौ चैव ब्रह्मेशादिक्षरस्य च ।
अक्षरप्रकृतेः सन्तो[२] मत्त एव नचान्यतः ॥ ७ ॥

न मे कुतश्चित् सर्ग्गाद्याः स्वातन्त्र्याद् गुणपूर्त्तितः ।
अतः समाधिकाभावान्मम[३] मद्वशमेव च ॥ ८ ॥

**निधनेक्षया निधनसन्दर्शनेन ॥ ५ ॥ शोकः कुतो न कार्य इत्यत आह–देहस्येति ॥ ६ ॥ अक्षरप्रकृतेः लक्ष्म्याः । सृष्ट्यादिषु ये सन्तो विद्यमानाः स्थिति(प्रवृत्ति)प्रकाशाः नियमनं चेति ते मत्त एव । प्राकृतदेहाभावात् नित्यमुक्तत्वात् सर्वज्ञत्वात् सृष्ट्यप्ययाज्ञानबन्धमोक्षाणामभावात् सन्त इत्युक्तम् ॥ ७–९ ॥**

---

मायाः वेदवाचः प्रमायाश्च धवः सर्वज्ञः । वेदमानिन्या रमाया अपि धवः । क्षत्रियस्य स्वधर्मः स्वभावसहजो धर्मः । दुष्टानां धर्मद्रुहां दमनम् । दमनेन सतां धर्मस्य ज्ञानस्य च अनुरूपं पालनम्, शास्त्रानुगुणं च पालनम् ॥ ३ ॥ **'यतः–'** [३३.४] इति पुनर्गीतावचनम् । **'सम्यक् शमादिभिरर्चनं ह्यभ्यर्चनम् । नच शमादीन् विना सिद्धिं विन्दति । 'यज्ञदानतपःकर्म न त्याज्यम्' इत्युक्तत्वाच्च । 'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः' इति भागवते । नच क्षत्रियादिभिरपि शौचतपःशमादिभिर्हीनैर्भवितव्यमिति तत्तद्धर्मेषूच्यते । युक्ता ह्येतैः सर्वगुणैर्जनकतुलाधारादयः'** इति गीतातात्पर्ये । बन्धूनां निधननिरीक्षया ॥ ४–५ ॥ **'–अनाशाच्चेतनस्य च'** इत्यन्तेन सार्धश्लोकपञ्चकेन गीतायाः प्रथमषट्कार्थः समग्राहि ॥ ६ ॥ सृष्ट्यादिनियमान्तेषु धर्मेषु येऽक्षरप्रकृतेरपि सन्तो धर्माः । स्थितिप्रवृत्तिप्रकाशनियमाः । मत्त एवेत्ययोगव्यवच्छेदः । नचान्यत इत्यन्ययोगव्यवच्छेदः । अथच ब्रह्मेशादिक्षरस्य अक्षरप्रकृतेः सकाशात् सन्तो भवन्तः सृष्ट्यादयः मत्त एव भवन्तीति । **'विश्वस्थितिप्रळयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः । यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि'** इति हि श्रीस्तुतौ ॥ ७ ॥ मम समाधिकाभावात् सर्वं च मद्वशमेव

---

१. 'निधनेच्छया ।' २. '–प्रकृतेश्चैव मत्त–' ३. '–भावात् सर्वं मद्व–'

ज्ञात्वैषां निधनाद्यं च जीवादेरस्वतन्त्रताम् ।
अस्वातन्त्र्यान्निवृत्तौ च 'मामनुस्मर युद्ध्य च' ॥ ९ ॥

'ये तु सर्वाणि कर्म्माणि मयि सन्न्यस्य मत्पराः ।
'अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ १० ॥

'तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
'भवामि नचिरात् पार्थ मय्यावेशितचेतसाम् ॥ ११ ॥

'मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना ।
'मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः' ॥ १२ ॥

सुपूर्ण[१]सत्सर्वगुणदेहोऽहं सर्वदा प्रभुः ।
अस्पृष्टाखिलदोषैकनित्यसत्तनुरव्ययः ॥ १३ ॥

**मयि सन्न्यस्य समर्प्य । नाहं स्वतन्त्रकर्ता, भगवत्प्रेरणया कृतं च तत्पूजार्थमस्त्विति समर्प्य । अहमेव परः सर्वोत्तम इति बुद्धिर्येषां ते मत्पराः । भगवति यादृशो भक्तियोगस्तादृशोऽन्यत्र नास्ति चेत् सोऽनन्य-योगः । तेन अनन्ययोगेन ॥१०–१॥ अहं तेषु भूतेषु नावस्थितः, तदाधारकत्वेनेति भावः ॥१२–३॥**

---

ज्ञात्वा, तत्र चैषां क्षरजीवानां निधनसृष्ट्यादिकं च मद्वशमेव ज्ञात्वा, तत एव जीवजडात्मकप्रपञ्चस्य, जीवाना-मादेरक्षरप्रकृतेश्चास्वतन्त्रतां ज्ञात्वा, अत एव युद्धान्निवृत्तावप्यस्वातन्त्र्यात् **'मामनुस्मर युद्ध्य च'** [३२.७] । अथ च मम समाधिकाभावात्, अन्यस्य सर्वस्य मदधीनत्वात्, एषां युद्धे त्वया हनिष्यमाणानां बन्धूनां निधनमनिधनं वा न त्वदधीनम्, किन्तु मद्वशमेव इति च ज्ञात्वा ॥ ८–९ ॥ **'ये तु–'** इति, **'तेषामहम्–'** इति च श्लोकद्वयं [३६.६–७] गीतावचनम् । भगवन्मात्रविषयेण मनोयोगेन । **'विष्णोरन्यं न स्मरेद् यो विना तत्परिवारताम् । तदधीनतां वाऽनन्ययोगी स परिकीर्तितः'** इति परमश्रुतिवचनं तात्पर्ये ॥१०॥ मृत्युमयात् संसारसागरात् । अथच जन्ममृत्यू उभा-वपि मृत्यू । तथाहि श्रूयते–**'यत् पिता योन्यां रेतः सिञ्चति तत् प्रथमं म्रियते । यज्जायते तद् द्वितीयं म्रियते । यद् दीक्षते तत् तृतीयं म्रियते । अथ यन्म्रियते तच्चतुर्थं म्रियते'** इति तलवकारब्राह्मणे ॥ ११ ॥ **'मया ततम्–'** [३३.४] इति च । अथापि न दृश्ये । न पुनराकाशवदमूर्तित्वात् । किन्तु? अव्यक्तमूर्तित्वात् । मत्स्थानि मामाश्रित्य

---

१. **'सम्पूर्ण–'**

इत्युक्तो वासविः प्राह व्याप्तं[1] ते दर्शयेश मे ।
अथ दिव्यदृशं तस्य दत्वा व्याप्तं निजं वपुः ॥ १४ ॥

देशतः कालतश्चैव पूर्ण्णं सर्वगुणैः सदा ।
दर्शयामास भगवान् यावत्यर्ज्जुनयोग्यता ॥ १५ ॥

तत्प्रार्त्थितः पुनः कृष्णस्तद् रूपं लोकमानतः ।
पूर्ववद् दर्शयामास पुनश्चैनमशिक्षयत् ॥ १६ ॥

ज्ञानज्ञेयप्रकृत्यादि[2] ज्ञापयन् पुरुषोत्तमः ।
तेनानुशिष्टः पार्त्थस्तु सशरं धनुराददे ॥ १७ ॥

**ते, रूपमिति शेषः ॥ १४ ॥ अर्जुनयोग्यता यावती तदनुसारेण ॥ १५ ॥ लोकमानतः लोकप्रत्यक्षानुसारेण । पुनश्च रूपदर्शनानन्तरम(पि)॥ १६–७ ॥**

---

स्थितानि । अथाप्यसङ्गत्वान्नचाहं तेष्ववस्थितः । अवरतयाऽधीनतया स्थितिश्चावस्थितिः ॥१२॥ निरपेक्षं पूर्णं सुपूर्णम् । अन्यत्र सापेक्षा हि पूर्णता भवति । सत्वं च दोषासमानाधिकरणत्वम् । सर्वदाप्रभुरित्येकं वा पदम् । गुणविशेषलाभाय चैवमिष्यते । सर्वाभीष्टप्रदः, आनन्दरूपः प्रभुः । अयमेव सर्वाधिकः प्रभुः, नान्योऽस्य कश्चित् प्रभुरित्यप्रभुर्वा । एकनित्या मुख्यतो नित्या । चतुर्विधनाशविरह एव मुख्यता । सती अप्राकृता तनुरस्य । एका स्वरूपतोऽभिन्ना नित्यसती सदा विद्यमाना तनुरस्येति वा । नित्यं सत्यः अवतारतनवोऽप्यस्येति च । अव्ययो निर्विकारः, न विकारमयत इति ॥ १३ ॥ देहोऽहमित्याह भगवान् । तद् व्याप्तं वपुः दर्शयेत्याह वासविः ॥ १४ ॥ देशतः इत्यादि त्रिविधमानन्त्यमाह । देशतः कालतश्च श्रीरपि पूर्णेति सर्वगुणैः पूर्णमित्याह । तदिदं त्रिविधमानन्त्यं नान्यत्रेत्येवकारेणाऽह । सर्वदेशे सर्वकाले च सर्वगुणैः पूर्णमिति चानुसन्धेयमिति सूचयन्नाह– सदा पूर्णमिति । **'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'** इति हि स्मरन्ति । सत् आनन्दरूपं चेति च सदापदगदितम् ॥ १५ ॥ लोकमानतः मनुष्यपरिमाणतः । मध्यमपरिमाणं रूपमित्येतत् । **'सृष्टिस्थिति–'** इत्यादिभिः, **'पुनश्चैनमशिक्षयत्'** इत्यन्तैः सार्धदशश्लोकैर्द्वितीयषट्कार्थः ॥ १६ ॥ **'ज्ञानज्ञेयप्रकृत्यादि ज्ञापयन् पुरुषोत्तमः पुनश्चैनमशिक्षयत्'** इति तृतीयषट्कसङ्क्षेपः । अनुग्रहपूर्वं शासनमनुशासनम् । शास्त्रानुगुणं क्षत्रधर्मानुगुणं लोकानुगुणं विनेययोग्यतानुगुणं च शासनमनुशासनम् । पार्थस्तु । तुना मोहनाशं स्मृतिलाभं च विशेषमाह । **'नष्टो मोहः स्मृतिर्लब्धा'** इति ह्युक्तम् ॥ १७ ॥

---

१. **'व्याप्तिम्'** २. **'ज्ञानं ज्ञेयं प्रकृत्यादि'** इति क्वचित् ।

अथ व्यूढेष्वनीकेषु नदन् वायुसुतोऽभ्ययात्[1] ।
समितिं धार्त्तराष्ट्राणां ते तं सर्वेऽभ्यवारयन्[2] ॥ १८ ॥

ससृजुः शरवृष्टिं च भीमसेनस्य मूर्द्धनि ।
क्षिप्रं नैव प्रहर्त्तव्यं ज्ञातिषु प्रहरत्स्वपि ॥ १९ ॥

इत्येवाप्रहरत्यस्मिन् शत्रुभिः शरविक्षते ।
अमुचन् धार्त्तराष्ट्रेषु शस्त्रवृष्टिं दुरासदाम् ॥ २० ॥

सौभद्रप्रमुखा वीराः सर्वे पाण्डुसुतात्मजाः ।
अपीडयंस्ताञ्छस्त्रौघैर्[3]र्धार्त्तराष्ट्राः समन्ततः ॥ २१ ॥

ररक्ष तान् वायुसुतो विसृजञ्छरसञ्चयान् ।
तत्र भीमशरैर्नुन्ना धार्त्तराष्ट्राः समन्ततः ॥ २२ ॥

भग्नास्तानथ[4] गाङ्गेयो दिव्यास्त्रविदधारयत् ।
अथ द्वन्द्वानि युद्धानि बभूवुर्विजिगीषताम् ॥ २३ ॥

**अ(नी)केषु (यौधे)षु । अथ विगतमोहेऽर्जुने युद्धार्थं सन्नद्धे सति ॥ १८–२८ ॥**

---

व्यूह्य यथान्यायं विभज्य वृन्दशः स्थितेषु । **'अनीकोऽस्त्री रणे सैन्ये'** इत्यभिधानम् । **'व्यूहः स्याद् बलविन्यासे निर्माणे वृन्दतर्कयोः'** इति च । नदन् । **'सर्वानभ्यभवच्छब्दान् भीमस्य नदतः स्वनः'** [भी.प.४४.१०] इति भीष्मवधे । समितिरिति द्यूतमुच्यते । समितिरिति सङ्ग्राम उच्यते । समितिरिति सङ्गम उच्यते । सङ्ग्रामाख्यं द्यूतमभ्ययात् । तदर्थं धार्तराष्ट्राणां समितिम्, यत्र धार्तराष्ट्राः समेत्य स्थितास्तं देशमभ्ययात् । ते च तमभितः अग्रतः पृष्ठतश्चावारयन् ॥ १८–२० ॥ पाण्डुसुतात्मजाः पञ्च द्रौपदेयाः । **'समं ततः'** इति भिन्ने वा पदे । ततः सौभद्रप्रमुखैः शरवर्षानन्तरं धार्तराष्ट्रा अपि तान् समं युगपदपीडयन्निति ॥ २१ ॥ समन्ततो ररक्ष । समन्ततः पतद्भिर्भीमशरैः । समन्ततो भग्नाः ॥ २२ ॥ अधारयत् युद्धधुरां स्वस्कन्धे धृत्वा तान् ररक्षेत्यर्थः । यत्र द्वौद्वौ परस्परं संयुज्येते तानि द्वन्द्वानि । **'द्वन्द्वमिति द्विशब्दस्य द्विर्वचनम्, पूर्वपदस्य अम्भावः, अत्वं चोत्तरपदस्य निपात्यते'** इति काशिकायां वामनः [अ.सू.८.१.१५] । अथ समष्टियुद्धानन्तरम्, तत्र जयाशामुत्सृज्य ॥ २३ ॥

---

१. **'–ऽभ्यगात् ।'** २. **'सर्वे न्यवारयन्'** ३. **'अपीडयंस्ताञ्छरौघै–'** इति क्वचित् । ४. **'भग्नांस्तानथ'**

द्रोणपार्षतयोश्चैव शैनेयकृतवर्म्मणोः ।
दुःशासनेन वीरस्य माद्रेयस्य यवीयसः ॥ २४ ॥

नकुलस्य विकर्ण्णस्य कार्ष्णेयैर्दुर्म्मुखादिनाम् ।
वृत्ते द्वन्द्वमहायुद्धे[1] तत्र धर्म्मजपक्षगाः ॥ २५ ॥

जिता विनैव शैनेयं सोऽजयद्धृदिकात्मजम् ।
अथ भीष्मद्रोणमुखैर्भगदत्तादिभिस्तथा ॥ २६ ॥

विद्राप्यमाणं[2] स्वबलं स्थापयामास मारुतिः ।
द्रोणं च भगदत्तं च कृपं दुर्य्योधनं तथा ॥ २७ ॥

केवलं बाहुवीर्य्येण व्यजयद् भीमविक्रमः ।
हत्वोत्तरं मद्रराजो व्यद्रावयदनीकिनीम् ॥ २८ ॥

---

द्रोणपार्षतयोश्चैव । **‘धृष्टद्युम्नस्ततो द्रोणमभ्यद्रवत भारत’** [भी.प.४५.३१] इति । शैनेयकृतवर्मणोः । अहो सपक्षौ विपक्षौ सञ्जातौ पक्षमानिनौ । तदिदं चक्रशङ्खयोरायोधनम् । वाय्वोश्च प्रवहसंवहयोः । **‘सात्यकिः कृतवर्माणं कृतवर्मा च सात्यकिम्’** [४५.१२] इति च । दुःशासनेन यवीयसो माद्रेयस्य नकुलस्य । **‘दुःशासनस्तु नकुलं प्रत्युद्याय महाबलम्’** [४५.२१] इति च ॥ २४ ॥ विकर्णस्य दुर्मुखादीनां च कार्ष्णेयैः द्रौपदेयैः । **‘अथ ते द्रौपदीपुत्राः सौभद्रश्च महारथः । नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः । धार्तराष्ट्रान् प्रतिययुः’** [४४.१८] इति च । **‘सुतसोमो विकर्णं च तदद्भुतमिवाभवत्’** [४५.५९] इति च । दुर्मुखादीनामित्यादिपदेनान्ये धृतराष्ट्रपुत्राः शकुन्यादयश्च गृह्यन्ते । तथाहि स्मर्यते– **‘शकुनिः प्रतिविन्ध्यं तु’** [४५.६३] इति, **‘सुदिक्षणस्तु समरे साहदेविं महारथम्’** [६७] इत्यादि च । दुर्मुखादिनामिति दीर्घलोपेन तेषां धर्मलोपमाह । महत् तूष्णीं प्रेक्षकाणामपि भयकम्पजननं युद्धम् । महावीराणां द्वन्द्वयुद्धमिति च महायुद्धम् ॥ २५ ॥ कौरवपक्षगैः पराजिताः ॥ २६–७ ॥ केवलमित्येकत्वमवधारयति– बाहुवीर्येण एकेनैव । न पुरुषान्तरसहायेन । नाप्यायुधसहायेन । व्यजयद् व्यजयत मारुतिर्भीमविक्रमः । स्वीयानां कृते न स्वकृत इति परस्मैभाषा । अथ भीमविक्रमो मद्रराजः शल्यः हत्वोत्तरं विराटतनयं पाण्डववाहिनीं व्यद्रावयत् । भीमविक्रम इति मद्रराजेऽप्यन्वेति । भीमश्च विक्रमोऽस्य । भीमस्येव च विक्रमोऽस्य ॥ २८ ॥

---

१. **‘द्वन्द्वे महायुद्धे’** २. **‘विद्राव्यमाणम्’**

**अथ भीष्ममुदीर्णास्त्रं द्रावयन्तं वरूथिनीम् ।**
**ससौमदत्तिं सौभद्रसहायोऽर्ज्जुन आसदत् ॥ २९ ॥**

**सौभद्रं तत्र विक्रान्तमतीत्य द्युसरित्सुतः ।**
**द्रावयामास पाञ्चालान् पश्यतः सव्यसाचिनः ॥ ३० ॥**

**तस्य विक्रममालक्ष्य पार्त्थं तद्गौरवानुगम् ।**
**दृष्ट्वा युधिष्ठिरो राजा क्रुद्धः सेनामपाहरत् ॥ ३१ ॥**

**रात्रौ युधिष्ठिरश्चिन्तामाप्य पार्त्थं व्यगर्हयत् ।**
**स कृष्णाद्यैः सान्त्वितश्च पुनर्युद्धाय निर्य्ययौ ॥ ३२ ॥**

**एवं भीष्मो दशाहानि सेनापत्यं[1] चकार ह ।**
**कृत्वाऽपि[2] पाण्डवैर्य्युद्धं तत् कर्त्तुमकृतोपमम् ॥ ३३ ॥**

**उदीर्णास्त्रं अतिवीर्यवदस्त्रयुक्तम् ॥ २९ ॥ अतीत्य अनादृत्य[3] ॥ ३०–२ ॥ (एवं उत्त)रत्र वक्ष्यमाणप्रकारेण ॥ ३३ ॥**

अथ श्वेतः प्रजज्वाल । तं भीष्मो जघान ब्राह्मेणास्त्रेण । तदाह–उदीर्णास्त्रमिति । सौमदत्तिर्भूरिश्रवाः । **'भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष । विन्दानुविन्दावावन्त्यौ वामं पार्श्वमपालयन्'** [५१.१७] इति । **'सौभद्रो द्रौपदेयाश्च परिवव्रुर्धनञ्जयम्'** [५२.२९] इति च ॥ २९ ॥ अतीत्य अतिक्रम्य अलक्षयित्वा ॥ ३० ॥ तद्गौरवानुगम् । तद्गौरवम-नुसृत्य प्रवर्तमानम् । अत एव मृदु युद्ध्यमानम् । प्रथमदिवसयुद्धसमाप्तिमाह– सेनामपाहरत् । युद्धरङ्गादपक्रम्य सैन्यस्य शिबिरं प्रत्याहरणमपाहारोऽपहारो वा । निशाविरामः ॥ ३१ ॥ पार्थमर्जुनं व्यगर्हयत्– **'मध्यस्थमिव पश्यामि समरे सव्यसाचिनम् । एको भीमः परं शक्त्या युद्ध्यत्येव महाभुजः'** [५०.१७] इति, **'एकोऽस्त्रवित् सखा तेऽयं सोऽप्यस्मान् समुपेक्षते'**[२०] इति च । कृष्णाद्यैः । आदिना धृष्टद्युम्नादयः । धृष्टद्युम्नस्तु भारते मुखत उक्तः । न केवलम्, भीमादयश्च तं सान्त्वयामासुरिति कृष्णाद्यैरित्याह । निश्चित्य ययौ ॥ ३२ ॥ सेनापत्यं सेनापतेः कर्म भावो वा । ननु **'पत्यन्तपुरोहितादिभ्यो यक्'** [अ.सू.५.१.१२८] इति पाणिनिना पत्यन्तात् प्रातिपदिकाद् भावकर्मणोरर्थयोर्यक् प्रत्ययो विहितः । तेन सेनापतेर्भावः कर्म वा सैनापत्यं भवति । कथमथ सेनापत्यम्? शृणु ।

१. **'सैनापत्यम्'** २. **'कृत्वा तु पाण्डु–'**

३. इतः परं वाक्यमादर्शे गलितम् । **'पश्यतः सव्यसाचिनः पश्यन्तं सव्यसाचिनमप्यनादृत्य'** इति स्यात् ।

**कर्णोऽर्द्धरथ इत्युक्त्वा तावद् युद्धात् प्रयापितः ।**
**यावत् त्वं योत्स्यसे तावन्न योत्स्यामीति[1] निर्ग्गते ॥ ३४ ॥**

**कर्ण्णेऽयुतरथानां[2] स नित्यशो वधमाहवे ।**
**प्रतिजज्ञेऽकरोत् तच्च पुनश्चास्त्रविदां वरः ॥ ३५ ॥**

**सुसमर्थावपि वधे तस्य भीमधनञ्जयौ ।**
**स्नेहेन यन्त्रितौ तस्य गौरवाच्चान्ववर्त्तताम् ॥ ३६ ॥**

**(यावद् योत्स्यसे) तावत्पर्यन्तम् ॥ ३४ ॥ पुनश्च प्रतिज्ञातादधिकं च जघ्ने ॥ ३५–८ ॥**

---

नायं यक् प्रत्ययः । किन्तु **'सख्युर्यः'** [अ.सू.५.१.१२६] इति पठितो यः प्रत्ययः । ननु तत्र सखिशब्दाद् यः प्रत्ययो विहितः । तेन सेनापतिशब्दस्य किमायातम्? निशम्यताम् । सूत्रमिदं पदान्तरोपलक्षकमित्याह वार्तिककारः– **'दूतवणिग्भ्यां चेति वक्तव्यम्'** इति । तेन दौत्यं दूत्यं भवति । वाणिज्यं वणिज्यं भवति । एवं **'सेनापतेश्चेति वक्तव्यम्'** इत्युपस्कर्तव्यम् । तेन सैनापत्यं सेनापत्यं भवति । का गमनिका? तवापि का गमनिका? शिष्टप्रयोग इति वक्तव्यम् । स एव ममापि । विभाषा चेदम्– सेनापत्यं, सैनापत्यम् । अन्यत्र तु नियतम्– गार्हपत्यम्, प्राजापत्यम्, आधिपत्यम् । प्रियपाण्डवस्य भीष्मस्य कौरवसेनापत्यं नामावर्जनीयं प्रारब्धकर्मेत्यनेनाऽह । अहो दुरात्मा दुर्योधनः कलिर्भूत्वा भीष्ममप्याविवेशेति हेति विस्मयते । अथच विस्मयते वृद्धतमोऽपि, यूनोऽपि लज्जाजलधौ निमज्जयन् दशाहानि सेनापत्यं चकारेति । स्वदते च वृद्धस्य युद्धश्रद्धाम् । तदेव स्फुटमाह– कृत्वाऽपि । पाण्डवैरपि विष्णुभक्तैः स्वयमपि विष्णुभक्तः सन् । अन्यैः कृतं युद्धं अस्योपमानं मा स्म भवदित्येतद् युद्धमकृतोपममभूतपूर्वं कर्तुं सेनापत्यं स्वयमङ्गीचकार चकार च ॥ ३३ ॥ कर्णोऽर्धरथ इति । **'रणेरणेऽभिमानी च विमुखश्चापि दृश्यते । घृणी कर्णः प्रमादी च तेन मेऽर्धरथो मतः'** [उ.प.१६८.९] इति रथातिरथसङ्ख्याने । स्वस्य सेनापत्यं यावत् तावत्पर्यन्तं कर्णो युद्धात् प्रयापितः दूरं गमितः । ममायुद्धस्य फलं दुर्योधनगामीति योत्स्यामीत्याह । इति प्रतिज्ञाय कर्णे सभातः निर्गते, युद्धाच्च निर्गते । यद्यपि भारते– **'नाहं जीवति गाङ्गेये योत्स्ये राजन् कथञ्चन'** [उ.प.१६८.२९] इति कर्णप्रतिज्ञा पठ्यते । अथच जीवत्येव भीष्मे कर्णो हि युयुधे । अतः **'जीवति'** इत्यस्य **'युध्यमाने'** इत्येवार्थ इत्युक्तं भवति । शत्रुभिर्जितः जीवन्नपि न जीवतीव । अयुतावराणां रथानाम् रथिकानाम् । नित्यश इति । नित्यशब्दो दिनवचनः । वीप्सायां शः । नित्यंनित्यमिति नित्यशः प्रतिदिनम् । नित्यशब्दादेशो वा । दिनेदिने इति नित्यशः । तच्चाकरोत् । पुनश्च ततोऽधिकं च वधमकरोत् । कर्णाभावेन युद्धे न काचिन्न्यूनता समजनीति दुर्योधनं प्रत्याययितुम् ॥ ३४–५ ॥ अन्येऽपि समर्था भवेयुः । इमौ तु सुसमर्थौ समर्थतरौ । अन्ववर्तताम् । अन्ववर्तेताम् । भीष्मे तयोरनुग्रह एवायमिति परस्मैभाषा ॥ ३६ ॥

---

१. **'योत्स्य इति'** इति क्वचित् । २. **'–नां च नि–'** । **'नां हि नि–'** इति क्वचित् ।

**बभूवुस्तत्र[1] युद्धानि चित्राणि सुबहूनि च ।**
**तान्यम्बरे विमानस्था ब्रह्मरुद्रपुरस्सराः ॥ ३७ ॥**

**अपश्यन् देवताः सर्वा गन्धर्वाप्सरसोऽसुराः ।**
**धृष्टद्युम्नो महेष्वासः प्रतिव्यूह्याऽपगासुतम् ॥ ३८ ॥**

**चक्रे युद्धानि सुबहून्यजेयः शत्रुभी रणे ।**
**तत्रोद्दधार कृष्णोऽपि फल्गुनं मृदुयोधिनम् ॥ ३९ ॥**

**दृष्ट्वा चक्रं तथोद्यम्य बाहुं भीष्माय जग्मिवान् ।**
**तेन स्तुतो गृहीतश्च फल्गुनेन प्रणम्य च ॥ ४० ॥**

**प्रार्थितो रथमारूढः पुनः शङ्खमपूरयत् ।**
**ततो भीष्मोऽर्जुनश्चैव शस्त्रास्त्रैरभ्यवर्षताम् ॥ ४१ ॥**

**चक्रमुद्दधार । बाहुं तथा सचक्रं भीष्माय उद्यम्य ॥ ३९–५० ॥**

---

तत्र तस्मिन्नवसरे । दशस्वपि दिनेष्वित्यर्थः । चित्राणि चित्तरमणानि वीराणाम् । विस्मयावहानि च । बहूनि बहुप्रकाराणि प्रभूतानि च । प्रकारवैविध्यं चान्यत्र क्वाप्यदृष्टमत्राऽसीदिति सुबहूनीत्याह । सङ्ख्यातुमशक्यानीत्यर्थः ॥ ३७ ॥ धृष्टद्युम्नः प्रतिपक्षसेनापतिः । महानिष्वासोऽस्य । महांश्चासाविष्वासश्चेति वा । **'इष्वासो धन्वधन्विनोः'** इत्यभिदधति । महेष्वासनामा भगवांस्तत्र सन्निधाय तस्याजेयं बलं ददाविति च हृदयम् । अत एवाजेयः शत्रुभिरिति वक्ष्यति । **'महेष्वासो महीभर्ता'** इति च विष्णुसहस्रनामसु ॥ ३८ ॥ युद्धानि तेषु दिनेषु । तत्र एकस्मिन् दिने । फल्गुनं मृदुयोधिनं दृष्ट्वा चक्रमुद्दधार । तथा उद्धृतचक्रं बाहुमुद्यम्य भीष्मं हन्तुमिव जग्मिवान् । तेन भगवता स्वयमायुधग्रहणेन कारणेन, तेन भीष्मेण –**'एह्येहि देवेश जगन्निवास नमोऽस्तु ते माधव चक्रपाणे'** इत्यादि स्तुतः । फल्गुनेन प्रथमं बाह्वोः पश्चात् पादयोर्गृहीतश्च, प्रणम्य प्रार्थितश्च । **'रथादवप्लुत्य ततस्त्वरावान् पार्थोऽप्यनुद्रुत्य यदुप्रवीरम् । जग्राह पीनोत्तमलम्बबाहुं बाह्वोर्हरिं व्यायतपीनबाहुः'**[ ५९.९८] इति, **'पार्थस्तु विष्टभ्य बलेन पादौ भीष्मान्तिकं तूर्णमभिद्रवन्तम् । बलान्निजग्राह हरिं किरीटी पदेऽथ राजन् दशमे कथञ्चित्'** [१००] इति च । प्रचलितभारतपाठानुसारेणायं तृतीयदिवसे निर्वृत्तः प्रसङ्गः । नवमदिवसयुद्धेऽपीयं कथा पुनरावर्तते । इयांस्तु विशेषः । तृतीयदिवसे चक्रपाणिर्भीष्माय जग्मिवान् । नवमदिवसे तोत्रपाणिरिति । अन्यत् सर्वं समानम् । अर्जुनश्चैवेत्येवकारेण यः पूर्वं मृदुयोधी बभूव स एव सम्प्रति कठिनो बभूवेत्याह ॥ ३९–४१ ॥

---

१. **'बभूवुस्तस्य युद्धानि'** इति क्वचित् ।

**अयत्नेन जितश्चैव फल्गुनेनाऽपगासुतः ।
अयुतानि बहून्याजौ रथानां निजघान च ॥ ४२ ॥**

**जिताः सेनापहारं च चक्रुर्भीष्ममुखास्ततः ।
कदाचिदग्रगो भीमो भीष्मद्रोणौ विसारथी ॥ ४३ ॥**

**कृत्वा विद्राप्य[1] तानश्वान् भित्त्वा व्यूहं विवेश ह ।
पुनः संस्थापितरथौ विजित्यायत्नतो बली ॥ ४४ ॥**

**यतमानौ महेष्वासौ धार्त्तराष्ट्रान् जघान ह ।
पञ्चविंशद्धतास्तत्र धार्त्तराष्ट्रा महाबलाः ॥ ४५ ॥**

**भगदत्तद्रौणिकृपशल्यदुर्य्योधनादयः ।
सर्वे जिता द्राविताश्च सेना च बहुला हता ॥ ४६ ॥**

**विरथो व्यायुधश्चैव दृढवेधविमूर्च्छितः[2] ।
कृतो दुर्य्योधनः सर्वराज्ञां भीमेन पश्यताम् ॥ ४७ ॥**

**ततोऽपहारं सैन्यस्य जिताश्चक्रुश्च कौरवाः ।
दुर्य्योधनो निशायां च ययौ यत्र नदीसुतः ॥ ४८ ॥**

---

अयत्नेनैव जितश्च । चैवेत्येवकारः परिभवं वा स्फुटयति । **'एवौपम्ये परिभवे'** इत्यभिधानम् । रथानां बहून्ययुतानीति । सम्प्रति भारते–**'रणे रथानामयुतं निहत्य'** [५९.१३६] इति पठ्यते । प्रायः–**'रणे रथानामयुतानि हत्वा'** इत्याचार्यसम्मतः पाठः स्यादिति भाति । निजघान च फल्गुनः ॥ ४२ ॥ जिता इति । अयं तृतीयदिवसयुद्धापहारः । कदाचित् चतुर्थदिवसयुद्धे प्रवर्तमाने ॥ ४३ ॥ शत्रुसेनामध्यं विवेश ह । प्रसिद्धमेतद् भीमसाहसमिति हेत्याह । तेन स्वनेता नृसिंहश्च स्मृतो भवति । नृसिंहो हि हः प्रकीर्तितः । यतमानौ अयत्नतः विजित्य । जघान ह । व्यूहं भित्त्वा प्रवेश एव विस्मयावहः । तत्र भीष्मद्रोणयोः पश्यतोः पञ्चविंशतिर्धार्तराष्ट्रा हता इत्यतिविस्मयः । विंशतिर्विंशदपि भवति, त्रिंशत् त्रिंशतिरपीत्युक्तम् ॥ ४४–६ ॥ विविधायुध एव विगतायुधश्च कृतः । महान्तमनेहसमनुवर्तमाना मूर्च्छा विमूर्च्छा ॥ ४७ ॥ ततोऽपहारम् । अयं चतुर्थोऽपहारः । ततश्च तस्मादेव हेतोः । **'चः पादपूरणे पक्षान्तरे हेतौ विनिश्चये'**

---

१. **'विद्राव्य'**

२. **'दृढवेधी सुमूर्च्छितः'** इति क्वचित् ।

पीडितो भीमबाणैश्च[1] क्षरद्गात्रो ननाम तम् ।
उवाच हेतुना केन वयं क्षीयाम[2] सर्वदा ॥ ४९ ॥

पाण्डवाश्च जयं नित्यं लब्ध्वा हर्षमवाप्नुवन् ।
तमाह भीष्मस्तेऽजेया देवास्ते धरणीं गताः ॥ ५० ॥

विशेषतः केशवेन पालितास्तत्प्रियाः सदा ।
मानसोत्तरशैले हि पुरा ब्रह्मपुरस्सराः ॥ ५१ ॥

स्थिता देवास्तदाऽपश्यद् ब्रह्मैको हरिमम्बरे ।
स्तुत्वा सम्पूज्य भूमेः स भारावतरणाय तम् ॥ ५२ ॥

प्रार्थयामास तेनोक्तं देवानामवदद् विभुः ।
अयं नारायणो देवः पूर्णानन्तगुणार्णवः ॥ ५३ ॥

आज्ञापयति वः सर्वान् प्रादुर्भावाय भूतळे[3] ।
स्वयं च देवकीपुत्रो भविष्यति जगत्पतिः ॥ ५४ ॥

एवं तेन समादिष्टा धर्म्मवाय्वादयोऽखिलाः ।
अभवन् पाण्डवाद्यास्ते सेन्द्राः सहमरुद्गणाः ॥ ५५ ॥

**देवानां धरणीगतत्वे कः प्रसङ्ग इत्यत आह– (मानसेत्यादि) ॥ ५१–९ ॥**

इत्यभिधानम् । निशायां च । तस्यामेव निशायाम् । क्रियासमुच्चये च । चक्रुश्च ययौ चेति ॥ ४८ ॥ क्षरत् नाशोन्मुखं क्षरद्रुधिरं वा गात्रमस्येति क्षरद्गात्रः । भीमबाणैश्च । भीमस्य बाणाः । भीमाश्च ते बाणाः । अन्येषां बाणैश्च । प्राधान्येन भीमबाणैः । **'प्राधान्ये चः प्रकीर्तितः'** । क्षीयाम क्षीयामहे । शक्यं 'क्षीयामहे सदा' इति वक्तुम् । अथापि 'क्षीयाम सर्वदा' इत्याह । तेनाक्षरलोपेन तस्याजस्रं क्षेमलोपमाह । क्षि क्षये, क्षै क्षये वा भ्वादिः । क्षि हिंसायां वा स्वादिः ॥ ४९ ॥ अवाप्नुवन् अवाप्नुवन्ति । अत्राप्यन्त्याक्षरलोपेन तेषां विजयमनन्तमाह । अवधारणेनाऽप्तिः अवाप्तिः ॥५०॥ मानसोत्तरशैले गन्धमादने ॥ ५१ ॥ भूमेः भारावतरणाय । **'तस्माद् भव विशालाक्ष यदुवंशविवर्धनः । धर्मसंस्थापनार्थाय दैत्यानां निधनाय च'** [भी.प. ६५.६७] इति प्रार्थयामास ॥ ५२–४ ॥ मरुद्गणानां देवत्वेऽपि दितिपुत्रत्वाद् पृथग्

१. '–बाणेन क्षर–' २. 'वयं जीयाम' ३. 'भूतले'

**स च नारायणो देवो देवकीनन्दनोऽभवत् ।**
**तेनैते पालिताः पार्त्था अजेया देवसर्ग्गिणः ॥ ५६ ॥**

**तस्मात् तैः सन्धिमन्विच्छ यदीच्छस्यपराभवम् ।**
**इत्युक्तो डम्भबुद्ध्यैव नत्वा विष्णुं ततो ययौ ॥ ५७ ॥**

**प्रातर्न्निर्य्यातयामास सेनां युद्धाय दुर्म्मतिः ।**
**दिव्यौषधेन भीष्मस्य भूत्वा च[1] निरुजस्ततः ॥ ५८ ॥**

**भीष्ममग्रे निधायैव ययौ युद्धाय दंसितः[2] ।**
**तत्राऽसीद् युद्धमतुलं[3] भीमभीष्मानुयायिनाम् ।**
**पाण्डवानां कुरूणां च शूराणामनिवर्त्तिनाम् ॥ ५९ ॥**

ग्रहणम् । देवसामान्यवचनो वा मरुच्छब्दः । **'मरुद् देवे समीरे च'** इत्यभिदधति ॥ ५५ ॥ अजेयाः, नारायणेन पालितत्वात् । देवसर्गित्वाच्च । देवेषु सर्गः सृष्टिरेषामिति देवसर्गिणः । देवत्वेनैव सृष्टा इत्यर्थः । नत्वनन्तरं कर्मणा प्राप्त-देवत्वाः । देवानां सर्गः स्वभाव एषामिति वा । सत्त्वप्रचुरा इत्यर्थः । देवस्वभावत्वादेवैते देवा इति शक्यं निश्चेतुमिति ॥ ५६ ॥ तवामृत्यवे चापराजयाय चानुकूलं सन्धिमिच्छ । अनुसरणेन सन्धिमिच्छ । पूर्वतनेनानुभवेन सन्धिमिच्छ । भीष्मवचनेन दुर्योधनः केशवं पाण्डवांश्च बहुमेन इति भारते पठ्यते– **'केशवं बहुमेने स पाण्डवांश्च महारथान्'** [६८.१३] इति, **'राजा च शिबिरं प्रायात् प्रणिपत्य महात्मने'** [२०] इति च । नेदं वास्तवमिति भ्रमितव्यमित्याह– डम्भबुद्ध्यैव बहुमानं प्रदर्श्य नत्वा च । अन्यथा कथं प्रातरेव सेनां युद्धाय निर्यातयामास? भीष्मोक्तमपि कथं न श्रदधत्त? दुर्मतित्वात् । तेन विज्ञायते तमःप्रचुरोऽयमासुरसर्गीति । भीष्मदत्तेन दिव्येन निश्चप्रचमनामयहेतुना रोग-विजिगीषुणा विशल्यकरणाख्येन मनुष्यलोकदुर्लभतया वा दिव्येन औषधेन निवृत्ता रुजा यस्य तादृशो भूत्वा । **'रुजा त्वामयभङ्गयोः'** इत्यभिधानम् । बाह्यतः निरुजो भूत्वाऽपि भीष्मस्य दिव्यवचनेन निवृत्तमनोरुजो न बभूवेत्यनुकम्पते चकारेण । **'एवमुक्त्वा ददावस्मै विशल्यकरणीं शुभाम्'** [८१.१] इति च । ततः भीष्ममुखादेव पाण्डवानामजेय-त्वश्रवणानन्तरमपि भीष्ममेवाग्रे निधाय युद्धाय दंसितः कवचितः सन्नद्धो बभूव । पाण्डवानां कुरूणां चेति तत्सैन्यानां चोपलक्षणम् । कुरूणामिति कौरव्यशब्दस्य रूपम्– कौरव्यस्य कौरव्ययोः कुरूणामिति । तथाहि पाणिनिः–**'कुरुनादिभ्यो ण्यः'** [अ.सू.४.१.१७२] इति, **'तद्राजस्य बहुषु तेनैवास्त्रियाम्'** [२.४.६२] इति च । जनपदशब्दात् क्षत्रियाभिधायिनः

१. **'भूत्वा स निरुज–'** २. **'दंशितः'**

३. **'तत्राऽसीत् सुमहद् युद्धं भीम–'** । **'युद्धं भीष्मभीमानु–'** इति क्वचित् ।

**धृष्टद्युम्नस्तत्र भीमानुयायी दुर्य्योधनस्यावरजैः प्रयुद्धयन् ।**
**सम्मोहनास्त्रेण विमोहयित्वा विकर्ण्णपूर्वानहनच्च सेनाम् ॥ ६० ॥**

**ततो द्रोणस्तान् समुत्थाप्य सर्वान् विज्ञानास्त्रेणाऽसदत् पार्षतं च ।**
**तं भीमसेनः सूतहीनं विधाय व्यद्रावयच्छत्रुगणाञ्छरौघैः ॥ ६१ ॥**

**अथाऽसदत् कृतवर्म्मा रथेन धृष्टद्युम्नं सोऽभ्ययात् तावुभौ च ।**
**ववर्षतुः शरवर्षैरथोग्रैस्तत्राकरोद् विरथं द्रौपदिस्तम् ॥ ६२ ॥**

**तस्मिन् जिते रथवीरे स्वयं तं[१] दुर्य्योधनः पार्षतमाससाद ।**
**तं भीमसेनो विरथायुधं च कृत्वा बाणेनाहनज्जत्रुदेशे ॥ ६३ ॥**

**(दुर्योधनस्यावर)जैः दुर्योधनस्यानुजैः प्रयुद्धयन् । विकर्णपूर्वान् दुर्योधनावरजान् ॥ ६०–२ ॥ जत्रुदेशे कण्ठोरःसन्धौ ॥ ६३–७४ ॥**

---

कुरुशब्दात् ण्यः प्रत्ययो भवति । कौरव्यो राजा । तस्य **'तद्राज'**सञ्ज्ञस्य प्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य लुग् भवति, तेनैव तद्राजेन कृतं बहुत्वं चेद् भवतीति सूत्रद्धयार्थः । अथवा कुरुशब्द एवायम् । **'अन्धका वृष्णयः कुरव इति वंशाख्याः'** इति जयादित्यः [अ.सू.४.१.११४] ॥ ५७–९ ॥ धृष्टद्युम्नस्तत्र । प्रचलितभारतपाठानुसारेण षष्ठ-दिवसे निर्वृत्तमिदम् । महास्त्राणि प्रयुज्य कृतं युद्धं प्रयुद्धम् । तस्य फलं शत्रुगामि विमोहनादीति प्रयुध्यन्नित्याह । मोहनास्त्रेण वैचित्त्यं भवति । क आत्मीयः कः पर इत्यविवेको वैचित्त्यम् । गाढं दीर्घकालीनं च मोहनास्त्रं सम्मोहनास्त्रम् । तेन सर्वथा प्रज्ञाहानिर्नाम विमोहनं भवति । तदेतदाह–सम्मोहनास्त्रेण विमोहयित्वा ॥ ६० ॥ तं द्रोणं सूतहीनं विधाय । भारते त्विदं विज्ञानास्त्रप्रयोगात् पूर्वं पठ्यते– **'दृढाहतस्ततो भीमो भारद्धाजस्य संयुगे । सारथिं प्रेषयामास यमस्य सदनं प्रति'** [७५.३१] इति । **'व्यत्यासः प्रातिलोम्यं च–'** इति वचनाद् क्वचित् कथा व्यत्यस्य पठ्यन्ते । एवमन्यत्रापि ॥ ६१ ॥ कृतवर्मा धृष्टद्युम्नमासदत् । उपजगाम । स धृष्टद्युम्नश्चैनमभिजगाम । चिरं समानतया युद्ध्वा अथ कृतवर्माणमतिशयानस्तं विरथमकरोत् । द्रुपदस्यापत्यं पुमान् द्रौपदिर्धृष्टद्युम्नः । अपत्यार्थेऽकारान्तात् प्रातिपदिकादिञ्-प्रत्ययः । **'अत इञ्'** [अ.सू.४.१.९५] इति ॥ ६२ ॥ विरथायुधं च । चकारेण व्यश्वसूतध्वजं च । जत्रु ग्रीवाया अधःप्रदेशः । ग्रीवास्थि वा । जायते इति जत्रु इति वैयाकरणाः । जनेस्तकरोऽन्त्यादेशः, रुप्रत्ययश्चेति तन्मतम् । क्रुन्प्रत्यय इति महाराजो भोजः । **'ततोऽस्य कार्मुकं द्वाभ्यां सूतं द्वाभ्यां च विव्यधे । चतुर्भिरश्वान् जवनाननयद् यम-सादनम् । द्वाभ्यां च सुविकृष्टाभ्यां शराभ्यामरिमर्दनः । छत्रं चिच्छेद समरे राज्ञस्तस्य नरोत्तम । षड्भिश्च तस्य**

---

१. **'स्वयं च दु–'** इति क्वचित्।

**विमूर्च्छितं तं रुधिरौघमुच्चैर्वमन्तमाशु स्वरथे निधाय ।**
**कृपो ययौ मारुतिर्धार्त्तराष्ट्रीं व्यद्रावयत् पृतनां बाणपूगैः ॥ ६४ ॥**

**अथेन्द्रसूनुः केशवप्रेरितेन रथेन शत्रून् विधमञ्छरौघैः ।**
**रथान् रणे पञ्चविंशत्सहस्रान् निनाय वैवस्वतसादनाय ॥ ६५ ॥**

**तमन्वयाद् युयुधानः सुधन्वा विद्रावयन् धार्त्तराष्ट्रस्य सेनाम् ।**
**तमभ्ययात् सौमदत्तिस्तयोश्च सुयुद्धमासीदतिभैरवास्त्रम् ॥ ६६ ॥**

**पुत्रान् दशास्याऽशु निहत्य वीरः स सात्यकेः सौमदत्तिः सकाशे ।**
**समर्प्पयामास शरीरदारणैः शरैरुभौ तौ विरथौ च चक्रतुः ॥ ६७ ॥**

---

**चिच्छेद ज्वलन्तं ध्वजमुत्तमम् । छित्वा तं च ननादोच्चैस्तव पुत्रस्य पश्यतः । रथाच्च स ध्वजः श्रीमान् नाना-रत्नविभूषितात् । पपात सहसा भूमौ विद्युज्जलधरादिव । ज्वलन्तं सूर्यसङ्काशं नागं मणिमयं शुभम् । ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्वपार्थिवाः । अथैनं दशभिर्बाणैस्तोत्रैरिव महाद्विपम् । आजघान रणे वीरं स्मयन्निव महारथः । स गाढविद्धो व्यथितो भीमसेनेन संयुगे । निषसाद रथोपस्थे मूर्छाभिहतचेतनः । ततः स राजा सिन्धूनां रथश्रेष्ठो महाबलः । दुर्योधनस्य जग्राह पाणिं स्वपुरुषैर्वृतः । कृपश्च रथिनां श्रेष्ठस्तव पुत्रमचेतनम् । आरोपयद् रथं राजन् दुर्योधनममर्षणम्'** [७९.११–१९] इति च ॥ ६३–४ ॥ विधमन् निरस्यन् । ननु ध्मा शब्दाग्निसंयोगयोरिति धातुपारायणिकाः । तस्य च ध्मातेः शतरि रूपं धमन्निति । न तन्निरसने पठ्यते । तत् कथं विधमन् निरस्यन्निति व्याख्यायते? सत्यं ध्मातिर्निरसने न पठ्यते । धात्वन्तरमिदं **'धमु निरसने'** इति । प्रयोगश्च भवति–**'सं बाहुभ्यां धमति–'** इत्यादिः । अधिकमुपरिष्टात् [२६.४७] । सदनमेव सादनम् । **'सदनं सादनं तथा'** इति द्विरूपकोशः । पापिनः सादयतीत्यन्वर्थं च नाम । **'लोहितायति चाऽदित्ये त्वरमाणो धनञ्जयः । पञ्चविंशतिसाहस्रान् निजघान महारथान्'** [७४.३४] इति च । प्रचलितभारतपाठानुसारेण चेयं पञ्चमदिवसीययुद्धवार्ता ॥ ६५ ॥ सुधन्वा, सु शत्रुनिग्रहक्षमं धन्व यस्य । धनुर्यस्येति वा । **'धनुषश्च'** [अ.सू.५.४.१३२] इति धनुःशब्दान्ताद् बहुव्रीहेरनङादेशः । अपिच सुधन्वनामा भगवतो रूपविशेषस्तदा तस्मिन् कश्चित् काल-माविवेशेत्यनेनाऽह । **'सुधन्वा खण्डपरशुः'** इति विष्णुसहस्रनामसु । एवमुत्तरत्रापि । सौमदत्तिर्भूरिश्रवाः । हरिवरबलः सात्यकिः । हरवरबलः सौमदत्तिः । तत् तयोर्युद्धं वीरजनचेतोहरमासीदित्याह– सुयुद्धम् । घोरं च युद्धं सुयुद्धम् । लोक-सुखाय च युद्धं सुयुद्धम् । भीरूणामिदं भीषणमिति भैरवम् ॥ ६६ ॥ यावदावेशस्तावत् सुयुद्धमासीत् । अथच निवृत्तावेशः सात्यकिः । विवेश च वीरनामा भगवान् सौमदत्तिम् । ततः किमासीत्? आह– पुत्रानित्यादि । अस्य सात्यकेः दश पुत्रान् सात्यकेः सकाशे पुरत एव निहत्य तच्छिरांसि युद्धोपहारत्वेन सात्यकेः समर्पयामास भूरिश्रवाः । प्रचिलतभारत-

अथासिपाणिं युयुधानमाशु महासिहस्तेन च सौमदत्तिना ।
आसादितं वीक्ष्य रथं स्वकीयमारोपयामास सुतोऽनिलस्य ॥ ६८ ॥

सुयोधनः सौमदत्तिं स्वकीयरथे व्यवस्थाप्य च भीमसेनात् ।
अपाद्रवद्[1] वासविर्भीष्ममाजौ समाससादाऽशु महेन्द्रकल्पः ॥ ६९ ॥

उभौ च तावस्त्रविदां प्रबर्हौ शरैर्म्महाशीविषसन्निकाशैः ।
ततक्षतुर्न्नाकसदां समक्षं महाबलौ संयति जातदर्प्पौ ॥ ७० ॥

स्वबाहुवीर्य्येण जितः स भीष्मः किरीटिना लोकमहारथेन ।
सेनामपाहृत्य ययौ निशायामासादितायामथ पाण्डवाश्च ॥ ७१ ॥

ततः परेद्युः पुनरेव भीमभीष्मौ पुरस्कृत्य समीयतुस्ते ।
सेने तदा सारथिहीनमाशु भीष्मं कृत्वा मारुतिरभ्यगात्[2] परान् ॥ ७२ ॥

पाठानुसारेण, अयं च पञ्चमदिवसीयः प्रसङ्गः [भी.प.७४] । अन्योन्यं विरथौ च चक्रतुः ॥६७॥ सात्यकिरसिपाणिः । भूरिश्रवास्तु महासिहस्तः । तेन भूरिश्रवा विजयत इति निश्चित्य भीमस्तं ररक्ष । अन्यच्चात्र गमनीयमस्ति । सात्यकिमसिपाणिमाह, नासिहस्तम् । भूरिश्रवसमसिहस्तमाह, नासिपाणिम् । एकस्मिन् वाक्ये, एकार्थे च पदे प्रयोक्तव्ये कुतोऽयं पदव्यत्यासः? 'पयः पातुमिच्छामि, तस्मात् क्षीरमानय' इति न कोऽपि व्याहरति भाषाभिज्ञः । सत्यम् । एकार्थे पदे प्रयोक्तव्ये न पदान्तरं प्रयुज्यते । अत्र तु महानर्थभेदो विवक्षितः । ननु हस्तः पाणिरित्यनर्थान्तरम् । न भोः । शृणु व्यवधाय स्वान्तम् । स पाणिर्य आत्मानं पाति । स हस्तो यः परं हन्ति । तेनासिपाणिः केवलमात्मरक्षणाय वृथा प्रयतेत । महासिहस्तस्तु वस्तुतः परं हन्तुं प्रभवेदेव । इमं महान्तमर्थभेदं बोधयामास भगवत्पादः पदभेदेन । अहो भाषाशास्त्रचातुरी चतुराननस्य भाविचतुराननस्य ॥ ६८ ॥ व्यवस्थाप्य विरोधिभिरवनपूर्वकं स्थापयित्वा । भीमसेनताडितो यथा न स्यात् तथा व्यवस्थां कृत्वा । महेन्द्रकल्पः मूलरूपात् किञ्चिदूनः । **'ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः'** [अ.सू.५.३.६७] । **'सम्पूर्णता पदार्थानां समाप्तिः । स्तोकेनासम्पूर्णता ईषदसमाप्तिः'** इति जयादित्यः ॥ ६९ ॥ **'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति'** इति जाङ्गुलिकाः । **'आशी'** इतीकारान्तोऽपि पठ्यते । आश्यां विषमस्येत्याशीविषो दन्दशूकः ॥ ७० ॥ लोकविख्यातेन महारथेन । अथ पाण्डवाश्च सेनामपाहृत्य ययुः । पञ्चमः षष्ठश्च सेनापहारोऽत्र समाहृत्य कथित इति युक्तं भाति ॥ ७१ ॥ सारथिहीनमाशु भीष्मं कृत्वा । इदमष्टमदिवसे प्रवृत्तमिति प्रचलित-

१. **'पराद्रवद्–'** इति कश्चित् । २. **'–रभ्ययात्'**

**निपातितास्तेन रथेभवाजिनः प्रदुद्रुवुश्चावशिष्टाः समस्ताः ।**
**दुर्य्योधनाद्येषु पराजितेषु भीष्मद्रोणद्रौणिपुरस्सरेषु ॥ ७३ ॥**

**महागजस्थो भगदत्त आगादायन् बाणं[1] भीमसेनेऽमुचच्च ।**
**तेनातिविद्धे भीमसेनेऽस्य[2] पुत्र उद्यच्छमानं पितरं निवार्य्य ॥ ७४ ॥**

**घटोत्कचोऽभ्यद्रवदाशु वीरः स्वमायया हस्तिचतुष्टयस्थः ।**
**स वैष्णवास्त्रं भगदत्तसंस्थं विज्ञाय विष्णोर्वरतो विशेषतः ॥ ७५ ॥**

**स्वमायया हस्तिचतुष्टयस्थः । स्वयमेव हस्तिचतुष्टयो[3] भूत्वा तत्र स्थितः ॥ ७५–८४ ॥**

---

भारतपाठादवगम्यते । तथाहि– **'भीमस्तु सारथिं हत्वा भीष्मस्य रथिनां वरः'** [८८.१२] इत्यादि ॥ ७२ ॥ निपातिताः, न्यक्कृत्य पातिताः । निरायासं पातिता इत्यर्थः । अपुनरुत्थानाय पातनं च निपातनम् । अत एवावशिष्टाः प्रदुद्रुवुः । यथाकथाच जिजीविषया युद्धरङ्गं प्रहाय यत्रकुत्रापि द्रवणं प्रद्रवणम् ॥ ७३ ॥ महागजः सुप्रतीकः । **'भगदत्तो महेष्वासो भीमसेनमथाद्रवत्'** [९५.३२] इति च । बाणमित्येकत्वं समुदायार्थम् । बाणपरम्पराम् । **'बाणान्'** इति पाठे स्वरसोऽर्थः । **'स भीमं शरधाराभिस्ताडयामास पार्थिवः'** [९५.३५०] इति च । अमुचत् । मुच्लृ मोक्षणे । लुङ् । अस्य भीमसेनस्य पुत्रः घटोत्कचः । **'घचोत्कचोऽथ सङ्क्रुद्धो भगदत्तमपाद्रवत्'** [९५.५८] इति च उद्यच्छमानं उद्युञ्जानम् । यम उपरमे । **'इषु-गमि-यमां छः'** [अ.सू.७.३.७७] । **'समुदाङ्भ्यो यमोऽग्रन्थे'** [१.३.७५] इति कर्त्रभिप्राये क्रियाफल आत्मनेभाषा । कियानयं भगदत्तस्तद्गजो वा भीमसेनस्य । अथाप्यतिविद्ध इव तस्थौ । उदयच्छत च तं प्रतियोद्धुम् । तदिदं सर्वं भगवत्प्रीत्यै लीलैव तस्येत्यात्मनेभाषयाऽऽह । 'न भवानुद्यच्छताम्' इति पितरं वाचा निषिध्य वारयित्वा ॥ ७४ ॥ स्वयमेव हस्तिचतुष्टयं बभूव । चतुर्भी रूपैर्हस्तिचतुष्टयस्थश्च । स मरुत्सुतो भीमः । वैष्णवास्त्रं नरकादागत्य भगदत्ते सम्यक् स्थितम् । कुतः सम्यक् स्थितिः? विष्णोर्विशेषवरतः । अमोघं च हरेरन्यत्र । विष्णोर्विशेषवरत एव । तथाहि संशप्तकवधे–**'देवानां दानवानां च अवध्यस्तनयोऽस्तु मे । उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि । एवं वरमहं श्रुत्वा जगत्यास्तनये तदा । अमोघमस्त्रं प्रायच्छं वैष्णवं परमं पुरा । अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षमे । नरकस्याभिरक्षार्थं नैनं कश्चिद् वधिष्यति'** [द्रो.प.२९.३७–९] इति, **'तस्मात् प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम् । नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष'** [४२] इति च । वासुदेवस्याभ्यधिकादनुग्रहात् स्वात्मानमवध्यं जानन्नपि । अत एव भारते– **'नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु'** इत्युक्तम् । विष्णौ भक्तिविशेषादेव । विशेष एव वैशाष्यम् । स्वार्थे ष्यञ् । **'चातुर्वर्ण्यादीनां स्वार्थ उपसङ्ख्यानम्'** इति हि वार्तिकम्

---

१. **'बाणान् भीम–'** २. **'भीमसेनस्य'** ३. **'हस्तिचतुष्टयम्'** इति युक्तः पाठः ।

**अमोघमन्यत्र हरेर्म्मरुत्सुतः पुत्रे याते न स्वयमभ्यधावत् ।**
**अनुग्रहादभ्यधिकादवद्ध्यं जानन्नपि स्वं वासुदेवस्य नित्यम्** **॥ ७६ ॥**

**तद्भक्तिवैशेष्यत एव तस्य सत्यं वाक्यं कर्त्तुमरिं नचायात्[१] ।**
**यदा स्वपुत्रेण जितो भवेत् स किम्वात्मनेत्येव[२] तदा प्रवेत्तुम्** **॥ ७७ ॥**

**स विस्मृतास्त्रस्तु यदा भवेत तदा भीमो भगदत्तं प्रयाति ।**
**ऋते भीमं वाऽर्ज्जुनं[३] नास्त्रमेष प्रमुश्चतीत्येव हि वेद भीमः** **॥ ७८ ॥**

**चतुर्ग्गजात्मोपरिगात्मकश्च घटोत्कचः सुप्रतीकं च तं च ।**
**नानाप्रहारै[४]र्वितुदंश्चकार सन्दिग्धजीवौ जगतां[५] समक्षम्** **॥ ७९ ॥**

**गजार्त्तनादं तु निशम्य भीष्ममुखाः समापेतुरमुं च दृष्ट्वा ।**
**महाकायं भीमममुष्य पृष्ठगोपं च वाय्वात्मजमत्रसन् भृशम्** **॥ ८० ॥**

---

[अ.सू.५.१.१२४] । तस्य वराहरूपस्य विष्णोः 'एतदस्त्रममोघं भवतु' इति वाक्यं सत्यं कर्तुम् । अरिं भगदत्तम् । आत्मना जितो भवेदिति किमु वक्तव्यमित्येवं सतां प्रकटं वेदयितुम् । तथा असतामसहमानानां निन्दाप्रकारं वेत्तुं च ॥ ७५–७ ॥ ऋते भीमं वाऽर्जुनं वा । न प्रमुश्चति प्रज्ञापूर्वं न मुश्चति ॥ ७८ ॥ चतुर्गजात्मा च, गजोपरिगतः चतुर्धा विभक्तः आत्मा यस्य स च । एतेन– **'ऐरावतं समास्थाय स वै मायाकृतं स्वयम् । तस्य चान्येऽपि दिङ्नागा बभूवुरनुयायिनः । अञ्जनो वामनश्चैव महापद्मश्च सुप्रभः । त्रय एते महानागा राक्षसैः समधिष्ठिताः'** [भी.प. ६४.५६–७] इति नातिस्फुटार्थं भारतवचनं विवृतं भवति । ऐरावत एकः । अञ्जनो वामनो महापद्मश्चेति त्रयः । पुण्डरीकस्यैव महापद्म इति नामान्तरम् । इयमत्र व्यवस्था–सुप्रतीक ऐशान्यदिग्गजः शिवेन धनदाय दत्तः, नरकेन बलादाहृत इति भगदत्तसविध आसीत् । ऐरावतः पूर्वदिगीशो गजः । पुण्डरीकोऽग्निदिगीशः । वामनो याम्यदिगीशः । अञ्जनः पश्चिमदिगीशः । एवं चतुर्णां दिग्गजानां रूपं धृत्वा स्वयमेव चतुर्गजात्मा बभूव । एकदिग्गजं भगदत्तं भीषयितुमयं स्वयं चतुर्दिग्गजात्मा बभूवेत्यर्थः । निर्ऋतिरेव हि घटोत्कचो नाम । अतः मध्यपतितस्य स्वदिग्गजस्य कुमुदस्य रूपं स्वयं न बभार । चतुर्धैव योद्धुमैच्छदिति नावशिष्टयोर्द्वयोः, पुष्पदन्तस्य च सार्वभौमस्य च । सुप्रतीकं गजम्, तं च गजस्थं भगदत्तम् । जगतां समक्षम् । तत्र गतानां वीरजगतां असहायतया चक्षुर्विस्फार्य पश्यताम् । अन्तरिक्षगतानां च देवासुरजगताम् ॥ ७९ ॥ आर्तनादं तु । मरणान्तवेदनावेदकमार्तनादम् । महाकायं भीमं शत्रुभयङ्करं अमुं घटोत्कचम् । अमुष्य पृष्ठगोपं

---

१. **'सत्यं कर्तुं वाक्यमरिं नचागात्'** २. **'किं त्वात्मनेत्येव'** । **'किमात्मनेत्येव'** इति क्वचित् । ३. **'भीमं चार्जुनम्'**
४. **'–प्रकारैर्वितु–'** इति क्वचित् । ५. **'जगतः समक्षम्'**

**ते भीतभीताः पृतनापहारं कृत्वाऽपजग्मुः शिबिराय शीघ्रम् ।**
**दिने परे चैव पुनः समेताः परस्परं पाण्डवकौरवास्ते[1] ॥ ८१ ॥**

**तत्राऽसदन्नागसुतासमुद्भवः पार्थात्मजः शाकुनेयान् षळेकः[2] ।**
**तैः प्रासहस्तैः क्षतकायोऽतिरूढकोपः स खड्गेन चकर्त्त तेषाम् ॥ ८२ ॥**

**शिरांसि वीरो बलवानिरावान् भयं दधद् धार्त्तराष्ट्रेषु चोग्रम् ।**
**दृष्ट्वा तमुग्रं धृतराष्ट्रपुत्रो दिदेश रक्षोऽलम्बुसनामधेयम् ॥ ८३ ॥**

महाकायं वाय्वात्मजं भीमसेनं च दृष्ट्वा अत्रसन् । त्रसी उद्वेगे । लङ् । उद्वेगो भयम् । **'वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः'** [अ.सू.३.१.७०] । टु भ्राशृ टु भ्लाशृ दीप्तौ, भ्रमु अनवस्थाने, भ्रमु चलने, क्रमु पादविक्षेपे, क्लमु ग्लानौ, त्रसी उद्वेगे, त्रुटी च्छेदने, लष कान्तौ एतेभ्यो वा श्यन् । तेन अत्रस्यत् अत्रसद् वा ॥ ८० ॥ पृतनापहार-मिति । अयं सप्तमः सेनापहारः ॥ ८१ ॥ नागसुता । नागस्य ऐरावतकुले जातत्वादैरावतनाम्नः [भी.प.९०.८] कौरव्याभिधानस्य [आ.प.२३४.१८] पन्नगस्य सुता उलूपी । तस्यां समुद्भवः पार्थसुतः इरावान् । शाकुनेयाः शकुनेरा-त्मजाः । शकुनेरनुजा इति प्रचलितो भारतपाठः । तथाहि भारते– **'सौबलस्यानुजाः शूरा निर्गता रणमूर्धनि'** [भी.प.९०.२८] **'गजो गवाक्षो वृषभश्चर्मवानार्जवः शुकः । षडेते बलसम्पन्नाः–'** [३०] इति । **'सुबलस्याऽत्मजा रणे'** [३७] इति, **'सुबलस्याऽत्मजान् रणे'**[४२] इति, **'सर्वे ते सुबलात्मजाः'** [४४;४६] इति च । स्फुटं लिपिकृतः प्रामाद्यन् । **'सौबलस्याऽत्मजाः'** इति तु साधुः पाठः । प्राचीनो दाक्षिणात्यपाठस्तथैव सम्प्रत्यपि पठ्यते । तथा–**'गजो गवाक्षो वृषकः–'** इति दाक्षिणात्यपाठोऽपि भ्रान्तिमूलः । **'गजो गवाक्षो वृषभः–'** इत्यौत्तरः पाठ एव सध्रीचीनः । वृषको हि शकुनेर्भ्राता न पुत्रः । वक्ष्यति हि–**'अथाऽचलं वृषकं चैव हत्वा कनीयसौ शकुनेः–'** [२६.३३] इति ॥८२॥ इरावतो हन्ता आर्श्यशृङ्गिर्नाम राक्षस इति भारते पठ्यते– **'–भीतो दुर्योधनस्ततः । अभ्यधावत सङ्क्रुद्धो राक्षसं घोर-दर्शनम् । आर्श्यशृङ्गिं महेष्वासं मायाविनमरिन्दमम् । वैरिणं भीमसेनस्य पूर्वं बकवधेन वै'** [भी.प.९०.५१–२] इति । कोऽयमृश्यशृङ्गतनयो राक्षस इति न स्फुटम् । अत आह– रक्षोऽलम्बुसनामधेयम् । तथाहि जयद्रथवधे– **'अलम्बुसं राक्षसेन्द्रं दृष्ट्वाऽक्रुध्यन्त पाण्डवाः'** [द्रो.प.१०९.३४] इति, **'स विध्यमानः समरे पाण्डवैर्जितकाशिभिः । नाभ्यपद्यत कर्तव्यमार्श्यशृङ्गिर्महाबलः'** [४८] इति च । अयं बकभ्राता । तथाहि तद्वचनं भीमं प्रति– **'बको नाम सुदुर्बुद्धे राक्षसप्रवरो बली । परोक्षं मम तद् वृत्तं यद् भ्राता मे हतस्त्वया'** [द्रो.प.१०८.२३] इति । किर्मीरोऽपि बकानुज इति वनपर्वणि गतम् । नन्वयमलम्बुसः किर्मीरपुत्रः पठ्यते । तथाहि जयद्रथवधे–**'–कैर्मीरः क्रोधमूर्छितः'** [द्रो.प.१०९.५५] इति, **'कैर्मीरी राक्षसोत्तमः'** [६१] इति च । सत्यं पठ्यते । अथापि निरवकाशपूर्ववचनात् कैर्मीर इति किर्मीरसम्बन्धित्वमेवोच्यत

१. 'पाण्डवाः कौरवास्ते' २. 'षडेकः'

**जह्यार्ज्जुनिं क्षिप्रमिति स्म तच्च समासदन्नागसुतातनूजम् ।**
**तयोरभूद् युद्धमतीव दारुणं मायायुजोर्वीर्य्यवतोर्म्महाद्भुतम् ॥ ८४ ॥**

**ससादिनोऽश्वान् स तु राक्षसोऽसृजत् ते पार्त्थपुत्रस्य च सादिनोऽहनन् ।**
**ततस्त्वनन्ताकृतिमाप्तमार्ज्जुनिं सुपर्ण्णरूपोऽहनदाशु राक्षसः ॥ ८५ ॥**

**हतं निशम्याऽर्ज्जुनिमुग्रपौरुषो ननाद कोपेन वृकोदरात्मजः ।**
**चचाल भूर्न्नानदतोऽस्य रावतः ससागरागेन्द्रनगा भृशं तदा ॥ ८६ ॥**

**अलम्बुसस्तं प्रसमीक्ष्य मारुतेः सुतं बलाढ्यं भयतः पराद्रवत् ।**
**पराद्रवन् धार्त्तराष्ट्रस्य सेनाः सर्वास्तमाराथ सुयोधनो नृपः ॥ ८७ ॥**

**स भीमपुत्रस्य जघान मन्त्रिणो महाबलांश्चतुरोऽन्यांस्तथैव ।**
**हतावशेषेषु च विद्रवत्सु घटोत्कचोऽभ्याहनदाशु तं नृपम् ॥ ८८ ॥**

**स पीड्यमानो युधि तेन रक्षसा प्रवेशयामास शरं घटोत्कचे ।**
**दृढाहतस्तेन तदा बलीयसा घटोत्कचः प्रव्यथितेन्द्रियो भृशम् ।**
**तस्थौ कथञ्चिद् भुवि पात्यमानः पुनः शरानप्यसृजत् सुयोधने ॥ ८९ ॥**

**(सादिनोऽश्वारोहाः ।) अहनन् अघ्नन् ॥ ८५–९ ॥**

---

इति व्याख्येयम् । तेन किर्मीरभ्राता किर्मीरपौत्रो वा कैर्मीरः कैर्मीरिर्वा । क्वचित् पाठान्तरे पुनरेते श्लोका एव भारते न पठ्यन्ते ॥ ८३–८४ ॥ ते राक्षसेन मायया सृष्टाः सादिनः, पार्थपुत्रस्य सादिनश्च परस्परमहनन् अघ्नन् । ते एतानघ्नन्निति वा । **दधार सुमहद् रूपमनन्त इव रूपवान् । ततो बहुविधैर्नागैश्छादयामास राक्षसम् । छाद्यमानस्तु नागैः स ध्यात्वा राक्षसपुङ्गवः । सौपर्णं रूपमास्थाय भक्षयामास पन्नगान्'** [भी.प.९०.७७–८] इति च ॥ ८५ ॥ वृकोदरात्मजः घटोत्कचः । **'नदतस्तस्य शब्देन पृथिवी सागराम्बरा । सपर्वतवना राजंश्चचाल सुभृशं तदा'** [९१.३] इति च । अगेन्द्राः पर्वतोत्तमाः । नगा वृक्षाः ॥८६॥ अलम्बुसः पराद्रवत् । धार्तराष्ट्रस्य सेनाश्च पराद्रवन् । अथ सुयोधनः आर आजगाम ॥८७॥ महाबलांश्चतुरो मन्त्रिणः । **'वेगवन्तं महारौद्रं विद्युज्जिह्वं प्रमाथिनम् । शरैश्चतुर्भिश्चतुरो निजघान महाबलः'** [९१.२०] इति च ॥ ८८–९ ॥

चिरप्रयुद्धौ[१] नृपराक्षसाधिपौ परस्पराजेयतमौ[२] रणाजिरे ।
द्रोणादयो वीक्ष्य रिरक्षिषन्तः सुयोधनं प्रापुरमित्रसाहाः ॥ ९० ॥

स द्रोणशल्यौ गुरुपुत्रगौतमौ भूरिश्रवःकृतवर्म्मादिकांश्च ।
ववर्ष बाणैर्ग्गगनं समाश्रितो घटोत्कचः स्थूलतमैः सुवेगैः ॥ ९१ ॥

तमेकमग्र्यै रथिभिः परिष्कृतं निरीक्ष्य भीमोऽभ्यगमत् समस्तान् ।
द्रोणोऽत्र भीमप्रहितैः शरोत्तमैः सुपीडितः प्राप्तमूर्च्छः पपात ॥ ९२ ॥

द्रौणिं कृपाद्यान् ससुयोधनांश्च चकार भीमो विरथान् क्षणेन ।
निवार्य्यमाणांस्तु वृकोदरेण घटोत्कचस्तान् प्रववर्ष सायकैः ॥ ९३ ॥

तेनाम्बरस्थेन तरुप्रमाणैरभ्यर्द्दिताः कुरवः सायकौघैः ।
भूमौ च भीमेन शरौघपीडिताः पेतुर्न्नेदुः प्राद्रवंश्चातिभीताः ॥ ९४ ॥

सर्वांश्च ताञ्छिबिरं प्रापयित्वा विना भीष्मं कौरवान् भीमसेनः ।
घटोत्कचश्चानदतां महास्वनौ नादेन लोकानभिपूरयन्तौ ॥ ९५ ॥

**प्रयुद्धौ युद्ध्यन्तौ, दृष्ट्वेति शेषः[३] । अमित्रसाहाः अमित्रपराक्रमं सोढुमीशाः । अरिन्दमा इत्यर्थः ॥ ९० ॥ सः घटोत्कचः ॥ ९१–४ ॥ भीमसेनः घटोत्कचश्च तान् सर्वान् शिबिरं प्रापयित्वा ॥ ९५–११० ॥**

---

चिरप्रवृत्तं युद्धं ययोस्तौ अजेयतमौ सर्वथाऽजेयौ । अमित्रसाहाः अमित्रान् सहन्त इति शत्रुभिरनभिभाव्याः । **'अनभिभाव्यत्वं सह इत्युच्यते'** इत्यभिधानम् ॥ ९० ॥ सः घटोत्कचः द्रोणशल्यौ । सद्रोणशल्यावित्येकं वा पदम् ॥ ९१ ॥ परिष्कृतं परिवृतम् । स तैः पुनः परिवारैरलङ्कृत इव बभावित्यर्थः । **'तं प्रत्यविध्यद् दशभिर्भीमसेनः शिलीमुखैः'** [९४.१८], **'स गाढविद्धो व्यथितो वयोवृद्धश्च भारत । प्रनष्टसञ्ज्ञः सहसा रथोपस्थ उपाविशत्'** [१९] इति च ॥ ९२ ॥ प्रकामं प्रभूतं च ववर्ष । क्लेशयामास । वृषु सङ्क्लेशन इत्युक्तम् । स्यन्तीति सायकाः । षो अन्तकर्मणि ॥ ९३–५ ॥

---

१. **'चिरं प्रयुद्धौ'** । वे.ती.पाठोऽपि तथा । २. **'–राजेयतनू रणा–'**

३. एतेन **'द्रोणादयो वीक्ष्य'** इति टीकासम्मतः पाठो नेति भाति । **'द्रोणादयश्चापि'** इति तत्पाठः स्यात् ।

दुर्य्योधनोऽथ स्वजनैः समेतः पुनः प्रायाद् रणभूमिं स भीष्मम् ।
जयोपायं भैमसेनेरपृच्छत् स्वस्यैव स प्राह न तं व्रजेति ॥ ९६ ॥

प्राग्ज्योतिषं चैव घटोत्कचाय सम्प्रेषयामास सुरापगासुतः ।
स प्राप्य[१] हैडिम्बमयोधयद् बली स चार्दयामास सकुञ्जरं तम् ॥ ९७ ॥

तेनार्दितः प्राहिणोच्छूलमस्मै वियत्यभिप्लुत्य[२] तदा घटोत्कचः ।
प्रगृह्य शूलं प्रबभञ्ज जानुमारोप्य देवा जहृषुस्तदीक्ष्य ॥ ९८ ॥

तदा स तस्यैव पदानुगान् नृपो जघान तं मारुतिरभ्ययाद् रणे ।
स प्राहिणोद् भीमसेनाय वीरो गजं तमस्तम्भयदाशु सायकैः ॥ ९९ ॥

संस्तम्भिते बाणवरैस्तु नागे भीमस्याश्वान् सायकैरार्दयत्[३] सः ।
सोऽभ्यर्दिताश्वोऽथ गदां प्रगृह्य हन्तुं नृपं तं सगजं समासदत् ॥ १०० ॥

स हन्तुकामेन रुषाऽभिपन्नो भीमेन राजा पुरतः पृष्ठतश्च ।
कृष्णेनास्त्रं वैष्णवं तद् गृहीतुं[४] सहार्ज्जुनेनापययौ सुभीतः[५] ॥ १०१ ॥

---

स्वस्यैव जयोपायम् । यथा स्वस्यैव जयः स्यात् तदुपायं ब्रूहीति पृष्टः स भीष्मः प्राह 'न त्वं तं स्वयं व्रज' इति । भैमसेनिकर्मको जयो भैमसेनेर्जयः । भैमसेनिं जेतुमुपायमपृच्छदित्यर्थः । इति प्राह ॥ ९६ ॥ ततः घटोत्कचेन योद्धुं प्राग्ज्योतिषमेव समर्थं सम्भाव्य प्रेषयामास च । प्राचीनं स्वायम्भुवमन्वन्तरीयं वराहाख्यं परं ज्योतिरत्र भूम्या संससारेति प्राग्ज्योतिषं पुरम् । यद्यत्वे 'असमराज्यम्' इति व्यवहरन्ति । प्राग्ज्योतिषस्यायं राजा प्राग्ज्योतिषस्तं भगदत्तम् । हस्तिहनू कुञ्जावुच्येते । कुञ्जावस्य स्त इति कुञ्जरः । **'रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम्'** इति वार्तिकम् [अ.सू.५.२.१०७] ॥ ९७ ॥ ग्रहणे सत्वरता प्रकर्षः । भञ्जने पुनरसाध्यं साधयन् विस्मयावहो वीर्यातिशयः प्रकर्षः ॥ ९८ ॥ स भगदत्तः । तस्य घटोत्कचस्य पदानुगान् अनुचरान् पादातान् । यः शूलं बभञ्ज तस्यैव । शूलभञ्जनेनाप्यजातसम्भ्रम इत्येवकारार्थः । गजं सुप्रतीकम् । अस्तम्भयदाशु भीमः । ष्टभि प्रतिबन्धे । स्वार्थे णिच् ॥ ९९ ॥ संस्तम्भिते निष्पन्दे कृते । प्रगृह्य प्रक्षेप्तुमुद्यम्य गृहीत्वा ॥ १०० ॥ अग्रतः भीमेनाभिपन्नः प्रतिरुद्धः, पृष्ठतश्च कृष्णेनाभिपन्नः । अत एव

---

१. **'सम्प्राप्य'** २. **'वियत्यवप्लुत्य'** ३. **'–कैरर्दयत्'**
४. **'तद् ग्रहीतुम्'** ५. **'– ययौ स भीतः'**

**तस्मिन् गते भीमसेनार्ज्जुनाभ्यां विद्राविते राजसङ्घे समस्ते ।**
**भीष्मः सेनामपहृत्यापयातो दुर्य्योधनस्तं निशि चोपजग्मिवान्** ॥ १०२ ॥

**संश्रावितः क्रूरवचः स तेन चक्रे सत्यं[1] मृत्युभयं विहाय ।**
**शक्त्या हनिष्यामि परानिति स्म चक्रे च तत् कर्म्म तथाऽपरेद्युः** ॥ १०३ ॥

**तं शक्तितो जुगुपुर्द्धार्त्तराष्ट्रास्तेनार्द्दिताश्चेदिपाञ्चालमत्स्याः[2] ।**
**पराद्रवन् भीष्मबाणोरुभीताः सिंहार्द्दिताः क्षुद्रमृगा इवाऽर्त्ताः** ॥ १०४ ॥

**संस्थाप्य तान् भीष्ममभिप्रयान्तमलम्बुसोऽवारयत् पार्त्थसूनुम् ।**
**विजित्य तं केशवभागिनेयो ययौ भीष्मं[3] धार्त्तराष्ट्रोऽमुमार** ॥ १०५ ॥

**तद् युद्धमासीन्नृपपार्त्थपुत्रयोर्विचित्रमत्यद्भुतमुग्ररूपम्[4] ।**
**समं चिरं तत्र धनुश्चकर्त्त ध्वजं च राजा सहसाऽभिमन्योः** ॥ १०६ ॥

**अथैनमुग्रैश्च शरैर्ववर्ष सूतं च तस्याऽशु जघान वीरः ।**
**तदाऽऽसदद् भीमसेनो नृपं तं जघान चाश्वान् धृतराष्ट्रजस्य[5]** ॥ १०७ ॥

**द्रोणो द्रौणिर्भगदत्तः कृपश्च सचित्रसेना अभ्ययुर्भीमसेनम् ।**
**सर्वांश्च तान् विमुखीकृत्य भीमः स चित्रसेनाय गदां समाददे** ॥ १०८ ॥

---

सुतरां भीतः ॥ १०१ ॥ सेनामपहृत्य । अयमष्टमः सेनापहारः ॥१०२॥ संशय्य श्रावितः । संवेगेन श्रावितः । सङ्कटायैवा-वाच्यं श्रावितः । क्रूरवचः । **'दयया यदि वा राजन् द्वेष्यभावान्मम प्रभो । मन्दभाग्यतया वाऽपि मम रक्षसि पाण्डवान् । अनुजानीहि समरे कर्णमाहवशोभिनम् । स जेष्यति रणे पार्थान् ससुहृद्गणबान्धवान्'** [९७.४१–२] इत्यादि । सत्यं शपथं चक्रे । **'सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति'** इत्यभिधानम् । अपरस्मिन्नहनि अपरेद्युः ॥ १०३–४ ॥ पार्थसूनुं सौभद्रम् । विजित्य तम् । **'हतमायं ततो रक्षो वध्यमानं च सायकैः । रथं तत्रैव सन्त्यज्य प्राद्रवन्महतो भयात्'** [१०१.२८] इति च ॥ १०५ ॥ विचित्रं विविधचित्तरमणम् । वैविध्योपेतमित्येतत् । भिन्नरुचीनामपि समानं समाराधनम् ॥ १०६ ॥ वीरो दुर्योधनः ॥ १०७ ॥ चित्रसेनो दुर्योधनानुजः ॥ १०८ ॥

---

१. **'चक्रे प्रतिज्ञां मृत्यु–'** २. **'–मात्स्याः'** ३. **'–नेयो भीष्मं ययौ धार्त–'**
४. **'–द्भुतरूपमुग्रम्'** ५. **'धृतराष्ट्रात्मजस्य'** इति क्वचित् ।

तामुद्यतां वीक्ष्य पराद्रवंस्ते स चित्रसेनश्च रथादवप्लुतः ।
सञ्चूर्णितो गदया तद्रथश्च तज्जीवनेनोद्धृषिताश्च कौरवाः ॥ १०९ ॥

भीष्मस्तु[१] पाञ्चालकरूशचेदिष्वहन् सहस्राणि चतुर्दशोग्रः ।
रथप्रबर्हानतितिग्मतेजा विद्रावयामास परानवीनिव ॥ ११० ॥

विद्राप्य[२] सर्वामपि पाण्डुसेनां विश्राव्य[३] लोकेषु च कीर्त्तिमात्मनः ।
सेनां समाहृत्य[४] ययौ निशागमे [५]सम्पूज्यमानो धृतराष्ट्रपुत्रैः ॥ १११ ॥

द्रोणो विराटस्य पुरो निहत्य शङ्खं सुतं तस्य विजित्य तं च ।
विद्राप्य[२] सेनामपि पाण्डवानां ययौ नदीजेन सहैव हृष्टः ॥ ११२ ॥

**(सर्वामपि पाण्डुसेनामिति मत्यैक्यादे)कवद्भावः ॥ १११–२० ॥**

---

प्रचलिते भारतपाठे सौभद्रेण चित्रसेनरथभङ्गः पठ्यते । सौभद्रसुयोधनयोर्युद्धम्, ततश्च भीमसमागमः, तेन च द्रोण-दुर्योधनादिभिर्युद्धम्, चित्रसेनरथभङ्गश्चेति समग्रोऽयं कथाभागः क्वचिदन्तरितः क्वचिद् व्यत्यस्त इति भाति । उद्धृषिताः 'दिष्ट्या चित्रसेनो न ममार' इत्यतितरां हर्षभरिताः । हृष तुष्टौ । 'भीमगदापातमपि वञ्चयित्वा जीवन्निर्जगाम' इति विस्मिताः । **'विस्मितप्रतिघातयोश्चेति वक्तव्यम्'** इति वार्तिकम् [अ.सू.७.२.२९] । **'हृषितो देवदत्तः । विस्मित इत्यर्थः'** इति वामनः । तेन चोद्धर्षेण अन्तरमिमानेन विस्मयेन चोद्गतपुलकाश्च । रोमहर्षोऽपि हि हर्षशब्दार्थः । अत एवाऽह पाणिनिः–**'हृषेर्लोमसु'** [अ.सू.७.२.२९] इति । तेन हृषितलोमानो हृषिता उच्यन्ते ॥ १०९ ॥ **'चेदिकाशिकरूशानां सहस्राणि चतुर्दश'** [भी.प.१०६.१८], **'सङ्ग्रामे भीष्ममासाद्य व्यादितास्यमिवान्तकम् । निमग्नाः परलोकाय सवाजिरथकुञ्जराः'** [१९] इति च । वैयाकरणा भर्गादिगणे करूषपदं पठन्ति । अपपाठोऽयम् । नहि करूषो नाम जनपदः क्वापि पुराणेषु पठ्यते । तेन भर्गादिषु करूश इत्येव पठनीयमिति साधुः पन्थाः । भोजोऽपि स्वकृत उणादि-सूत्रे–**'यूष-शूष-अर्कलूष-कारूष-कोरदूष-आटरूष-शैलूषादयः'** [२.३.१६७] इति ऊषन्प्रत्ययान्तं कारूषशब्दं निपातयन् बभ्रामैव ॥ ११० ॥ सेनां समाहृत्य । अयं नवमः सेनापहारः ॥ १११ ॥ तस्य विराटस्य सुतं निहत्य । तं च विजित्य विद्राप्य । पाण्डवानां सेनामपि विद्राप्य । **'स पपात रणे तूर्णं भारद्वाजशराहतः । धनुस्त्यक्त्वा शरांश्चैव पितुरेव समीपतः । हतं तमात्मजं दृष्ट्वा विराटः प्राद्रवद् भयात् । उत्सृज्य समरे द्रोणं व्यात्ताननमिवान्तकम् । भारद्वाजस्ततस्तूर्णं पाण्डवानां महाचमूम् । द्रावयामास समरे शतशोऽथ सहस्रशः'** [भी.प.८२.२३–५] इति च ।

---

१. **'भीष्मश्च'** इति क्वचित् । २. **'विद्राव्य'** ३. **'–सेनां संश्राव्य'**
४. **'सेनामपाहृत्य'** ५. **'संस्तूयमानो–'**

भीमार्ज्जुनावपि शत्रून् निहत्य विद्राप्य[१] सर्वांश्च युधि प्रवीरान् ।
युधिष्ठिरेणापहृते स्वसैन्ये भीतेन भीष्माच्छिबिरं प्रजग्मतुः ॥ ११३ ॥

युधिष्ठिरो भीष्मपराक्रमेण भीतो भीष्मं स्ववधोपायमेव ।
प्रष्टुं ययौ निशि कृष्णोऽनुजाश्च तस्यान्वयुस्तं स पितामहो यत् ॥ ११४ ॥

भीमार्ज्जुनौ शक्नुवन्तावपि स्म नर्त्तेऽनुज्ञां हन्तुमिमं तदैच्छताम्[२] ।
पूज्यो यतो भीष्म उदारकर्म्मा कृष्णोऽप्ययात्[३] तेन हि पाण्डवार्त्थे ॥ ११५ ॥

प्राप्यानुज्ञां भीष्मतस्ते वधाय शिखण्डिनं तद्वचसाऽग्रयायिनम् ।
कृत्वाऽपरेद्युर्य्युधये विनिर्ग्गता भीष्मं पुरस्कृत्य तथा परेऽपि[४] ॥ ११६ ॥

शिखण्डिनो रक्षकः फल्गुनोऽभूद् भीष्मस्य दुःशासन आस चाग्रे ।
अन्ये च सर्वे जुगुपुर्भीष्ममेव न्यवारयन् भीमसेनादयस्तान् ॥ ११७ ॥

भीष्माय यान्तं युयुधानमाजौ न्यवारयद् राक्षसोऽलम्बुसोऽथ ।
तं वज्रकल्पैरतुदद् वृष्णिवीरः शरैः स मायामसृजत् तदोग्राम् ॥ ११८ ॥

---

परन्तु एतदनुसारेण सप्तमदिवसयुद्धे शङ्खवधः । अयमध्यायः प्रायो नवमदिवसयुद्धे पठनीयः । **‘कुर्युः कचिच्च व्यत्यासं प्रमादात् कचिदन्यथा’** इति स्वयमेवाऽह हि ॥ ११२ ॥ प्रहर्षेणैव जग्मतुः । ननु युधिष्ठिर इव भीष्मभीतौ ॥११३॥ भीष्ममेव प्रष्टुं ययौ । तस्यानुजाश्च तमन्वयुः । यत् यस्मात् स पितामहत्वात् सर्वेषां माननीयः तत् तस्मात् तदा तदनुज्ञामृते न तं हन्तुमैच्छताम् । तेन भीष्मस्य पूज्यत्वेनैव हेतुना लोकसङ्ग्रहार्थं स्वयमपि तथा दर्शयामास । वस्तुतस्तु पाण्डवानुग्रहार्थमयात् । **‘यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशयः । मदर्था भवदर्था ये ये मदीयास्तवैव ते’** [भी.प.१०७.३२] इति हि धर्मराजं प्रति कृष्णवचनम् ॥ ११४–५ ॥ **‘अनुजानामि वः पार्थाः प्रहरध्वं यथा-सुखम् । एवं हि सुकृतं मन्ये भवतां विदितो ह्यहम् । हते मयि हतं सर्वं तस्मादेवं विधीयताम्’** [१०७.७२] इति प्राप्यानुज्ञाम् । **‘अर्जुनः समरे शूरः पुरस्कृत्य शिखण्डिनम् । मामेव विशिखैस्तीक्ष्णैरभिद्रवतु दंसितः’** [१०७.८२] इति तद्वचसा ॥ ११६ ॥ आस बभूव । पाणिनीया अस्तेर्भूभावमाश्रित्य **‘आस’** इति धातुरूपं न पठन्ति । तेषां मते विभक्तिप्रतिरूपकमेतत् । अन्ये तु भूभावं वैकल्पिकं मन्यन्ते ॥ ११७ ॥ अथ दशमदिवसयुद्धारम्भे भीष्माय यान्तम् । अथ अलम्बुसेन वारणे तमतुदत् ॥ ११८–२० ॥

---

१. **‘विद्राव्य’** २. **‘–मिमं समैच्छताम्’** ३. **‘कृष्णोऽप्यायात्’** ४. **‘परे च ।’** इति कचित्

अस्त्रेण मायामपनुद्य वीरो व्यद्रावयद् राक्षसं सात्यकिस्तम् ।
तस्मिन् गते युयुधानो रथेन ययौ भीष्मं पार्त्थमन्वेव धन्वी ॥ ११९ ॥

द्रोणो द्रौणिर्द्धार्त्तराष्ट्रश्च राजा भूरिश्रवा भगदत्तः कृपश्च ।
शल्यो बाह्लीकः कृतवर्म्मा सुशर्म्मा सर्वाश्च सेना वारिता वायुजेन ॥ १२० ॥

स तान् मुहुर्विरथीकृत्य वीरः प्राग्ज्योतिषं सगजं द्रावयित्वा ।
न्यवारयत् फल्गुनं रोद्धुकामं[1] पार्त्थश्च देवव्रतमाससाद ॥ १२१ ॥

युधिष्ठिरं भीष्ममभिप्रयान्तं माद्रीसुताभ्यां सहितं नृवीरम् ।
न्यवारयच्छकुनिः सादिनां च युतोऽयुतेनैव वराश्ववेगेन ॥ १२२ ॥

तान् सादिनोऽश्वांश्च निहत्य सर्वान् विजित्य तं शकुनिं पाण्डवास्ते ।
प्रापुर्भीष्मं द्रौपदेयाश्च सर्वे तथा विराटद्रुपदौ कुन्तिभोजः ॥ १२३ ॥

धृष्टद्युम्नं भीष्ममभिप्रयान्तं न्यवारयत् सैन्धवस्तं स बाणैः ।
हताश्वसूतं सगणं द्रावयित्वा समासदद् भीष्ममेवाऽशु वीरः ॥ १२४ ॥

गुप्तोऽथ पार्त्थेन रणे शिखण्डी भीष्मं समासाद्य शरैरताडयत् ।
भीष्मः स्त्रीत्वं तस्य जानन् न तस्मै मुमोच बाणान् स तु तं तुतोद ॥ १२५ ॥

शिखण्डिनं वारयामास बाणैर्दुर्म्मर्षणोऽमर्षणविह्वलेक्षणः ।
नात्येतुमेनमशकच्छिखण्डी दुःशासनः पार्त्थमवारयत् तदा ॥ १२६ ॥

**बाणैर्हत्वा सगजं द्रावयित्वा ॥ १२१–७ ॥**

---

भीष्ममनुयान्तं फल्गुनं स्वगजेन रोद्धुकामं प्राग्ज्योतिषं द्रावयित्वा न्यवारयत् । निवार्य द्रावयामासेत्यर्थः । तेन निरातङ्कः पार्थश्च देवव्रतमाससाद ॥ १२१ ॥ अभिमुखं प्रसभं यान्तमथापि शत्रुभिः प्रतिरुद्धतया प्रयासेन यान्तम् । **'सादी तुरङ्गमातङ्गरथारोहेषु दृश्यते'** । अतः स्पष्टत्वायाऽह– वराश्ववेगेन ॥ १२२–५ ॥ दुर्मर्षणो दुःशासनभ्राता । अमर्षण-

---

१. 'फल्गुनं योद्धुकामम्'

**स लोकवीरोऽपि दुरात्मनाऽमुना रुद्धोऽशकन्नैनमतीत्य यातुम् ।**
**भीष्मं पार्थः सायकाश्चास्य तस्मिन् ससज्जिरे पर्वतेष्वप्यसक्ताः ॥ १२७ ॥**

**अमर्षयुक्तौ चिरमेव वीरावयुद्ध्यतामर्ज्जुनधार्त्तराष्ट्रौ ।**
**समं तदासीन्महदद्भुतं च दिवौकसां पश्यतां भूभृतां च ॥ १२८ ॥**

**तदा विराट्द्रुपदौ कुन्तिभोजं कृष्णासुतान् [1]केकयांश्चेकितानम् ।**
**भूरिः शलः[2] सोमदत्तो विकर्ण्णः सकेकया[3] वारयामासुरुच्चैः ॥ १२९ ॥**

**जित्वैव तांस्तेऽभिययुश्च भीष्मं [4]ततोऽर्ज्जुनोऽतीत्य दुःशासनं च ।**
**भीष्मं शरैरार्च्छदरिप्रमाथिभिः शिखण्डिनं धार्त्तराष्ट्राद् विमुच्य ॥ १३० ॥**

**(तत्) पार्थस्य दुःशासनेन युद्धं सममासीत् ॥ १२८–९ ॥ आर्च्छत् विव्याध । धार्तराष्ट्रात् दुर्मर्षणात् विमुच्य मोचयित्वा ॥ १३०–४ ॥**

---

ममर्षः क्रोधः । तेन विह्वले विक्लवे विचलिते ईक्षणे यस्य । ह्वल चलने । अथच मर्षणं सहनम् । मृषु सहने । मृष तितिक्षायां वा । अमर्षणेन अक्षमितया परोत्कर्षासहिष्णुतया वा विह्वलेक्षणः । एनमतीत्य भीष्मं यातुं नाशकत् । दुःशासनः पार्थमवारयत्–**'तत्राद्भुतमपश्याम चित्ररूपं विशाम्पते । दुःशासनरथं प्राप्य यत् पार्थो नात्यवर्तत'** [११०. २८] इति, **'तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम् । अयोधयच्च यत् पार्थं जुगोप च पितामहम् । कर्मणा तेन समरे तव पुत्रस्य धन्विनः । दुःशासनस्य तुतुषुः सर्वे लोका महात्मनः'** [११७. १२–३] इति च ॥ १२६ ॥ मूले महात्मन इति व्यङ्ग्चोक्तिरिति द्योतयन् स्वयं 'दुरात्मनाऽमुना' इत्याह । 'लोकेष्वमहात्मनः' इति च गुह्यम् । अस्य पार्थस्य सायकास्तस्मिन् दुःशासने ससज्जिरे । अस्य च दुःशासनस्य सायकास्तस्मिन्नर्जुने । असक्ताः निर्भिद्य गमनशीलाः । वेगोपेता इत्यर्थः ॥ १२७ ॥ अमर्षयुक्तौ परोत्कर्षमसहमानौ, न मामयं कदाऽप्यभिभवेदिति च्छलेन प्रयुध्यमानौ । अर्जुनधार्तराष्ट्रौ अर्जुनदुःशासनौ ॥ १२८ ॥ विराट्द्रुपदौ कुन्तिभोजश्चेकितान इति चत्वारः । कृष्णासुताः पञ्च । पृथुकीर्तितनयाः पञ्च केकयाः । एवमेतान् चतुर्दशवीरान् सोमदत्तसुतौ भूरिशलौ, स्वयं सोमदत्तः, दुर्योधनानुजो विकर्णः, एवमेते चत्वारः सकेकयाः पृथुकीर्तितनयेभ्यः पञ्चकेकयेभ्योऽन्यैः केकयराजभिः सहिताः वारयामासुः ॥ १२९ ॥ तान् भूरिशलादीन् । ते विराट्द्रुपदादयश्चतुर्दश । भीष्मं शरैरार्च्छत् । अर्जुनस्य शरा भीष्ममानर्च्छुरित्यर्थः । ऋ गतिप्रापणयोः । अर्तेः ऋच्छादेशः [अ.सू.७. ३.७८] । अथवा तुदादिरयमृच्छधातुः । ऋच्छ गतौ, इन्द्रियप्रळये, मूर्तिभावे च । आर्च्छत् प्रळीनेन्द्रियं किङ्कर्तव्यमूढं चकारेत्यर्थः ॥ १३० ॥

---

१. **'कैकयांश्चेकितानम्'** २. **'भूरिश्रवाः सोम–'** ३. **'सकैकया–'** ४. **'तदाऽर्जुनो–'**

स तैः समस्तैर्बहु[1]शस्त्रपूगैर्भृशं मर्म्मस्वर्दितश्चापमुक्तैः ।
शरैः समस्तान् विरथांश्चकार शैनेयपाञ्चाल्य[2]युधिष्ठिराद्यान् ॥ १३१ ॥

स चेदिपाञ्चालकरूशमुख्यान् रथोत्तमान्[3] पञ्चविंशत्सहस्रान् ।
सम्प्रेषयामास यमाय बाणैर्य्युगान्तकालेऽग्निरिव[4] प्रवृद्धः ॥ १३२ ॥

निरीक्ष्य तं सूर्य्यमिवाऽतपन्तं[5] सञ्चोदितो वासुदेवेन पार्त्थः ।
चिच्छेद तत्कार्म्मुकं लोकवीरो रणेऽर्द्धचन्द्रेण स चान्यदाददे ॥ १३३ ॥

चिच्छेद तच्चैवमष्टौ धनूंषि शक्तिं च चर्म्मासिवरं पराणि च[6] ।
धनूंषि दत्तानि नृभिर्नृपस्य सर्वाणि चिच्छेद स पाकशासनिः ॥ १३४ ॥

ततः शरैः सूर्य्यकरप्रकाशैर्विव्याध सर्वे च[7] युधिष्ठिराद्याः ।
तैरर्दितो न्यपतद् भूतले[8] स प्राणान् दधारापि तथोत्तरायणात् ॥ १३५ ॥

**सर्वे युधिष्ठिराद्याश्च (विव्यधुः) । (स्वच्छन्दमृत्युत्वात्) स पतित एव प्राणान् दधारापीत्याह ॥ १३५ ॥**

---

पञ्चालानामयं राजा पाञ्चाल्यो द्रुपदः ॥ १३१ ॥ यः पञ्चाल इति जनपदशब्दः क्षत्रियवाची तस्मादपत्यार्थेऽञ्प्रत्यये पञ्चालानामपत्यानि क्षत्राणि पाञ्चालानि । अक्षत्रवचने पञ्चाला इत्येव ॥ १३२ ॥ **'एवमस्य धनूंष्याजौ चिच्छेद सुबहून्यथ । ततः शान्तनवो भीष्मो बीभत्सुं नात्यवर्तत'** [११९.५४] इति च । रथे स्थितान्यष्टौ धनूंषि । पराणि नृपस्य दुर्योधनस्य नृभिरानीय दत्तानि धनूंषि च । शक्तिं शूलविशेषं च । **'शक्तिं भीष्मः स पार्थाय ततश्चिक्षेप भारत । तामस्य विशिखैश्छित्वा त्रिधा त्रिभिरपातयत्'** [६८] इति च । **'चर्माथाऽदत्त गाङ्गेयो जातरूपपरिष्कृतम् । खड्गं चान्यतरप्रेप्सुर्मृत्योरग्रे जयाय वा । तस्य तच्छतधा चर्म व्यधमत् सायकैस्तथा । रथादनवरूढस्य तदद्भुतमिवाभवत्'** [७०–२] इति च । शत्रुदमनाय कर्मणे प्रभवतीति कार्मुकं धनुः । **'कर्मण उकञ्'** [अ.सू. ५.१.१०३] ॥ १३३–४ ॥ पाकशासनिः विव्याध ताडयामास । व्यध ताडने । युधिष्ठिराद्याश्च विव्यधुः । आ उत्तरायणात् ॥ १३५ ॥

---

१. '–र्बहुभिः शस्त्र–' २. '–पाञ्चालयुधि–' ३. 'रथोदारान्' ४. '–कालाग्निरिव'
५. 'सूर्यमिवाऽपतन्तम्' ६. 'पराणि ।' ७. 'सर्वेऽपि युधि–' ८. 'भूतले'

निपातितेऽस्मिन् मारुतिर्द्रोणमुख्यान्[१] विद्राप्य[२] तत्राऽगमदाशु तेऽपि ।
तदाऽऽयुधानि प्रणिधाय वीराः पार्थाः परे चैनमुपासदन् स्म ॥ १३६ ॥

प्रणम्य तं तद्वचनात् समीयुस्तस्मिन् दिने शिबिराण्येव सर्वे ।
परे दिने सर्व एवोपतस्थुर्भीष्मं यदूनाम्पतिना सहैव ॥ १३७ ॥

स पूर्वदिवसे पार्थदत्तबाणोपबर्हणः ।
तदाऽपि तृट्परीतात्मा योग्यं पेयमयाचत[३] ॥ १३८ ॥

धार्त्तराष्ट्रैरविज्ञातं तदभिज्ञाय[४] वासविः ।
वारुणास्त्रेण भित्त्वा स भूमिं[५] वारि सुगन्धि च ॥ १३९ ॥

ऊर्ध्वधारमदादास्ये[६] तर्प्पितोऽनेन सोऽवदत् ।
यादृश्यस्त्वज्ञता पार्थे दृष्टाऽत्र कुरुनन्दनाः ॥ १४० ॥

**पूर्वमन्यत्र युध्यन् मारुतिरपि ॥ १३६–७ ॥ तदाऽपि कुरुपाण्डवागमनसमयेऽपि ॥ १३८ ॥ तत् तद्वचनाभिप्रायम् ॥ १३९–४४ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायां पञ्चविंशोऽध्यायः

—०—

तेऽपि युधिष्ठिराद्या अपि । भीमोऽपि । तदा भीष्मपाते सति । प्रणिधाय तत्पुरतो निधाय । एनं भीष्ममुपासदन् उपातिष्ठन्त ॥ १३६ ॥ परे दिने । ङियोगे विभाषा भवति सर्वनामसञ्ज्ञा । तेन परे परस्मिन् वा । तेन परेद्यवि, अपरेद्युः इत्यत्रापि द्यविद्युसुप्रत्ययावित्येव पर्याप्तम् । एद्यविएद्युसुप्रत्ययाविति च न वक्तव्यम् ॥ १३७ ॥ उपबर्हणं शिरउपाधानम् । तदाऽपि परस्मिन् दिवसेऽपि ॥ १३८ ॥ अभिज्ञाय । अभिप्रायमभिलषितं वा ज्ञात्वा । सुगन्धि । **'गन्धस्येदुत्पूतिसुसुरभिभ्यः'** [अ.सू.५.४.१३५] ॥ १३९–४० ॥

१. **'–द्रौणिमुख्यान्'** इति क्वचित् । २. **'विद्राव्य'**
३. **'योग्यं जलमयाचत'** इति क्वचित् । **'योग्यपेयमयाचत'** इति च । ४. **'तदा विज्ञाय'**
५. **'स भुवं वारि'** । **'भित्त्वा च भूमिम्'** इति क्वचित् । ६. **'ऊर्ध्वधारामधादास्ये'**

याद्दग् बाह्वोर्बलं[1] भीमे संयुगेषु पुनःपुनः ।
याद्दशं चैव माहात्म्यमनन्तमजरं हरेः ॥ १४१ ॥

विज्ञातं सर्वलोकस्य सभायां द्दष्टमेव च ।
उपारमत तद् युद्धं सुखिनः सन्तु भूमिपाः ॥ १४२ ॥

यथोचितविभक्तां[2] च भुङ्ग्ध्वं भूपाः सदा भुवम् ।
इत्युक्तः प्रययौ[3] तूष्णीं धार्त्तराष्ट्रः स्वकं गृहम् ॥ १४३ ॥

व्यासदत्तोरुविज्ञानात् सञ्जयादखिलं पिता ।
श्रुत्वा तदा पर्य्यतप्यत् पाण्डवाः कृष्णदेवताः ।
मुमुदुः शिबिरं प्राप्य सर्वे कृष्णानुमोदिताः ॥ १४४ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये भीष्मपातो नाम**
**पञ्चविंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **३७८६**+१४४=**३९३०**]

---

अजरमक्षीयमाणम् । शश्वदेकप्रकारम् । यादि क्षीयते कथमनन्तं स्यात्? ॥ १४१ ॥ अस्तु लोकवार्ता । युष्माभिः स्वत एव द्दष्टं च शान्तिदूतस्य कृष्णस्य माहात्म्यम् । यस्तत्र राजसभायामन्धस्यापि विश्वरूपं प्रदर्शयामास । यं बन्द्धुं प्रयत्य यूयं मूर्खा अभवत । उपारमत तद् युद्धम् । उपाङ्पूर्वत्वात् परस्मैभाषा । **'व्याङ्-परिभ्यो रमः । उपाच्च'** [अ.सू. १.३.८३–४] इति हि पाणिनिः । उपपूर्वस्यान्तर्भावितण्यर्थतया सकर्मकत्वम् । युद्धमुपरमयतेत्यर्थः । तथाहि काशिकायां जयादित्यः–**'उपपूर्वाद् रमतेः परस्मैपदं भवति । देवदत्तमुपरमति । यज्ञदत्तमुपरमति । उपरमयतीति यावत् । अन्तर्भावितण्यर्थोऽत्र रमिः'** इति । विभिन्नदेशेभ्य आगताः सुखिनः सन्तु भूमिपाः । मा वृथा विनशन् ॥ १४२ ॥ प्रययौ तूष्णीम् । मौनेनैवारुचिं प्रकटयन् ययौ । **'नारोचयत पुत्रस्ते मुमूर्षुरिव भेषजम्'** [१२१.५२] इति च ॥ १४३ ॥ यः पूर्वश्लोके तूष्णीं प्रययावित्युक्तस्तस्य पिता धृतराष्ट्रः । व्यासदत्तमुरु दूरश्रवणदर्शनशक्तिमद् विलक्षणं

---

१. **'बाहुबलम्'** २. **'यथोचितं विभक्ताम्'** ३. **'–क्तः स ययौ'**

ज्ञानं यस्य तस्मात् सञ्जयात् । पर्यतप्यत् पर्यतप्यत पश्चात्तापदग्धोऽभवत् । तप सन्तापे । अस्य भ्वादेस्तपतेः विभाषा श्यंस्तङौ भवतः । क्वचिदुभावपि–परितप्यते पर्यतप्यत । क्वचित् श्यनेव केवलम्–परितप्यति–पर्यतप्यत् । यथा शपतेस्त्रीणि रूपाणि–शपति शप्यति शप्यते– इतीत्याचार्याशयः । तेन भ्वादाविव दिवादिगणेऽप्ययं पठनीय इति ज्ञायते । पाण्डवा मुमुदुः । यतः कृष्णदेवताः ॥ १४४ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतं पञ्चविंशाध्यायविवरणं सतां हृदयाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**पञ्चविंशोऽध्यायः**

—०—

२२-१०-१२

# षड्विंशोऽध्यायः

**[नारायणास्त्रोपशमनम्]**

ॐ ॥ अथाखिलानां पृथिवीपतीनामाचार्य्यमग्रं रथिनां सुविद्यम् ।
रामस्य विश्वाधिपतेः सुशिष्यं चक्रे चमूपं धृतराष्ट्रपुत्रः ॥ १ ॥

कर्ण्णोऽपि[1] भीष्मानुमतो धनुष्मान् युद्धोद्यतोऽभूत् तदसत्कृतः पुरा ।
तस्मिन् स्थितेऽनात्तधनुस्तदैव रथं समास्थाय गुरुं समन्वयात्[2] ॥ २ ॥

**ॐ ॥ अथ भीष्मपतनानन्तरम् ॥ १ ॥ तस्मिन् भीष्मे स्थिते योद्धरि स्थिते ॥ २–३ ॥**

---

ॐ ॥ द्रोणपर्वकथां सङ्गृह्णात्यनेनाध्यायेन– अथेत्यादिना । अथशब्दो मङ्गलार्थः, आनन्तार्यार्थः, कथान्तरारम्भार्थश्च । सुविद्यमधिगततत्वशास्त्रम् । अत एव सुशिष्यम् । शस्त्रे शास्त्रे च शिष्यम् । तत्वमानिनः पतयः । भगवानधिकः पतिः ॥ १ ॥ रामस्य विश्वाधिपतेः शिष्यः कर्णोऽपि । पुरा तेन भीष्मेणार्धरथ इत्युक्त्वाऽसत्कृतोऽवज्ञातः । तथाहि भीष्मवचनम्– **'परुषः कत्थनो नीचः कर्णो वैकर्तनस्तव'** [उ.प.१६८.४], **'एष नैव रथः पूर्णो नचाप्यतिरथो रणे'**[५], **'अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात् । करणानां वियोगाच्च तेन मेऽर्धरथो मतः'**[६] इति । **'यस्मान्मिथ्या विचीर्णोऽहमस्त्रलोभादिह त्वया । तस्मादेतन्न ते मूढ ब्रह्मास्त्रं प्रतिभास्यति'** [शां.प.३.३०] इति रामस्य शापः । रामाश्रमे वसन् कर्णः कदाचित् कस्यचिद् ब्रह्मवादिनो होमधेनुमजानन् यदृच्छया जघान । तदा ब्राह्मण एनं शशाप– **'येन विस्पर्धसे नित्यं यदर्थं घटसेऽनिशम् । युध्यतस्तेन ते पाप भूमिश्चक्रं ग्रसिष्यति । ततश्चक्रे महीग्रस्ते मूर्धानं ते विचेष्टतः । पातयिष्यति विक्रम्य शत्रुर्गच्छ नराधम'** [२.२४–५] इति ब्राह्मणस्य भाषणम् । करणानां कवचादीनां वियोगः । तस्मिन् स्थिते आत्तधनुषि स्वयमनात्तधनुः । **'नाहं जीवति गङ्गेये योत्स्ये राजन् कथञ्चन'** [उ.प.१६८.२९] इति हि कर्णवचनम् । तदैव भीष्मपातानन्तरमेव । भीष्मानुमतः– **'शिवेनाभिवदामि त्वां गच्छ युद्धयस्व शत्रुभिः'** [द्रो.प.४.११] इति । गुरोः सेनापत्येन सन्तुष्ट एव तमन्वयात् ॥ २ ॥

---

१. **'कर्णोऽथ भीष्मा–'**

२. **'समन्वगात्'**

द्रोणो वृतो धार्त्तराष्ट्रेण धर्म्मसुतग्रहे तेन कृते प्रतिश्रवे ।
ज्ञात्वा यत्ताः पाण्डवास्तं समीयुर्य्युद्धाय तत्राभवदुग्रयुद्धम् ॥ ३ ॥

पतत्रिभिस्तत्र दुधाव शात्रवान् द्रोणो धनुर्म्मण्डलमन्त्रनिस्सृतैः ।
तमाससादाऽऽशु वृकोदरो नदन् तमासदन्[1] द्रौणिकृपौ च मद्रराट् ॥ ४ ॥

स तान् विधूयाभ्यपतद् रणेऽग्रणीर्द्रोणं तमन्वार्ज्जुनिरभ्ययात् परान् ।
ववार तं मद्रपतिस्तयोरभूद् रणो महांस्तत्र गदां समाददे ॥ ५ ॥

शल्योऽथ भीमोऽभिययौ गदाधरस्तमेतयोरत्र बभूव सङ्गरः ।
उभावजेयौ [2]गदिनामनुत्तमावतुल्यवीर्य्यौ प्रवरौ बलीयसाम् ॥ ६ ॥

विचेरतुश्चित्रतमं प्रपश्यतां मनोहरं तावभिनर्दमानौ ।
गदाप्रपाताङ्कितवज्रगात्रौ ददर्श लोकोऽखिल एव तौ रणे ॥ ७ ॥

**दुधाव कम्पयामास ॥ ४ ॥ तं द्रोणं यान्तं भीमसेनं मद्रपतिर्ववार ॥ ५–६ ॥ अभिनर्दमानौ गर्जन्तौ ।**

---

तेन द्रोणेन– **'अहं गृहीत्वा राजानं सत्यधर्मपरायणम् । आनयिष्यामि ते राजन् वशमद्य न संशयः'** [१२.३०], **'न चेद् युधिष्ठिरं वीरः पालयेदर्जुनो युधि'** [१२.२४] इति प्रतिश्रवे कृते । द्रोणः सेनापत्ये वृत इति ज्ञात्वा, धर्मसुतग्रहार्थं वृत इति च ज्ञात्वा । तेन प्रतिश्रवः कृत इति च ज्ञात्वा । यत्ताः सन्नद्धाः सङ्गत्य जग्मुः ॥ ३ ॥ तत्र तस्मिन् युद्धे । दुधाव । धूञ् कम्पने । भयकम्पिताः शात्रवा दधावुरित्यर्थः । शत्रुशब्दः प्रज्ञादिषु पठितः । शत्रव एव शात्रवाः । शत्रूणामिमे च शात्रवाः । दुर्योधनशत्रुपक्षीयाः । धनुर्मण्डलनिःसृतैः, मन्त्रनिःसृतैश्च । नदन् वृकोदरो तं द्रोणमाससाद । तं भीमं द्रौणिकृपशल्या आसदन् । नदन् तमिति विश्लिष्य पाठेन भीमस्य शत्रुवीरेभ्यो विलक्षणं शक्तिविशेषमाह । **'तमेवैकं जानथ आत्मानम्'** इतिवत् । **'पशून् तान्'** इतिवच्चायं छान्दसः प्रयोगविशेषः । आसाद्यारौत्सुः ॥ ४ ॥ स भीमः तान् द्रौणिकृपशल्यान् विधूय द्रोणमेवाभ्यपतत् । स्वसेनामग्रे सर्वस्मादुपरि नयतीत्यग्रणीः । आत्मानमग्रतो नयतीति सेनापुरोगामी वा । **'अग्रं पुरस्तादुपरि'** इत्यभिधानम् । तं भीममनु आर्जुनिरभिमन्युः परान् द्रोणादृतेऽपरान् द्रौणिकृपशल्यानभ्ययात् । तदा तं मद्रपतिर्ववार । आववार वारयाञ्चकार । तयोः शल्यसौभद्रयोः । **'आर्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात्'** [द्रो.प.१४.८७] इति द्रोणाभिषेके । तत्र समरे, अथ सौभद्रेण शल्यसूते हते, शल्ये च रथात् पातिते गदां समाददे शल्यः ॥ ५ ॥ अथ तं भीमोऽभिययौ । एतयोः भीमशल्ययोः । अत्र अस्मिन् समागमे । वीर्यं प्रभावस्तेजो वा । बलं सामर्थ्यं स्थिरता वा । भयादचलनमित्येतत् ॥ ६ ॥ समीपे स्थित्वा प्रकटं पश्यतां विस्मयावहं

---

१. **'नदन् तमासदन्'** इति प्राचीनादर्शेषु विश्लिष्य पठ्यते । **'नदन् समासदन्'** इति क्वचित् । २. **'गदिनावनु–'**

गदाभिघातेन वृकोदरस्य विचेतनः प्रापतदत्र मद्रराट् ।
भीमोऽपि कोपात् प्रचलत्पदः क्षितौ निधाय जानुं सहसोत्थितः क्षणात् ॥ ८ ॥

विचेतनं पतितं मद्रराजं विलोक्य भीमं च तमाह्वयन्तम् ।
रथं समारोप्य जनस्य पश्यतः पुरश्च भीमस्य कृपोऽपजग्मिवान् ॥ ९ ॥

विजित्य मद्राधिपमोजसाऽरिहा नदन् रथं प्राप्य निजं स मारुतिः ।
व्यद्रावयद् बाणगणैः परेषामनीकिनीं द्रोणसमक्षमेव ॥ १० ॥

विद्रावयत्याशु कुरून् वृकोदरे विधूय सौभद्रमुखान् ससात्यकीन् ।
द्रोणोऽभिपेदे नृपतिं गृहीतुं[1] तमाससादाऽशु धनञ्जयो रथी ॥ ११ ॥

स वासुदेवप्रयते रथे स्थितः शरैः शरीरान्तकरैः समन्ततः ।
निहत्य नागाश्वनरान्[2] प्रवर्त्तयन्नदृश्यताऽश्वेव च शोणितापगाः ॥ १२ ॥

**तावेव स्थितौ ॥ ७ ॥ जानुं सहसा निधाय क्षणादुत्थितः ॥ ८–१६ ॥**

---

च नयनमनोहरं च । **'ततो गदाग्राभिहतौ क्षणेन रुधिरोक्षितौ । ददृशाते महात्मानौ किंशुकाविव पुष्पितौ'** [१५.२७] इति च । प्रगाढः पातः प्रपातः ॥ ७ ॥ अभीक्ष्णं घातोऽभिघातः । भीमोऽपि गदाभिघातेन मद्रराजः शल्यस्य । सहसा अनभिभाव्येन स्वरूपसामर्थ्येन क्षणादुत्थितः । **'अनभिभाव्यत्वं सह इत्युच्यते'** इत्यभिदधति । सहसा क्षणादिति पुनरुक्तवदाभासः ॥ ८ ॥ तं क्षणादुत्थितं च भीमं पुनर्युद्धाय तं मद्रराजमाह्वयन्तम् । पश्यतः जनस्य भीमस्य च पुरः । मद्रराजं रथं समारोप्य । सत्वरमारोप्य, ससम्भ्रममारोप्य । यद्यपि प्रचलिते भारतपाठे कृतवर्मा मद्रराजमपोवाहेति पठ्यते–**'ततः स्वरथमारोप्य मद्राणामधिपं रणे । अपोवाह रथात् तूर्णं कृतवर्मा महारथः'** [द्रो.प.१५.३६] इति । **'कृतवर्मा कृपस्तदा'** इति प्राचीनपाठः स्यात् । अत आचार्यो निर्णिनाय– धृतकवचः कृपोऽपजग्मिवानिति ॥ ९ ॥ ओजः शत्रूणामभिवनशक्तिः । द्रोणसमक्षमेव । एवकारेण द्रोणस्याकिञ्चित्करतया तूष्णीकत्वम्, भीमस्यानभिभाव्यत्वं चाऽह ॥ १० ॥ धनञ्जयः रथी । वस्तुतः धनञ्जयो न रथी । किन्त्वरथी । अकारवाच्यो भगवानेव रथी यस्य । **'आत्मानं रथिनं विद्धि'** इति ह्यामनन्ति ॥ ११ ॥ तदेव स्फुटमाह– स वासुदेवप्रयते रथे स्थितः । नियन्त्रितं प्रयतमुच्यते । पवित्रं च प्रयतमुच्यते । वासुदेवस्य सन्निधानेन प्रयते पवित्रिते, स्वयं वासुदेवेन प्रयते नियन्त्रिते रथे केवलं स्थितः । 'स वा असुदेवेन' इति च प्रतृण्णम् । असुदेवेन ध्वजगतेन हनुमता च प्रयते पवित्रिते ॥ १२ ॥

---

१. **'ग्रहीतुम्'**

२. **'नागाश्वरथान्'** । **'नागाश्ववरान्'** इति क्वचित् ।

निहन्यमानासु किरीटिना चमूष्वारक्षिते धर्म्मसुते तथाऽऽपदः ।
चमूं च भीमार्ज्जुनबाणभग्नां द्रोणोऽपहृत्यापययौ[1] निशागमे ॥ १३ ॥

स धार्त्तराष्ट्रेण युधिष्ठिराग्रहात् संश्रावितः क्रूरवचो निशायाम् ।
जगाद दूरं समराद् विनीयतां पार्त्थस्ततो धर्म्मसुतं ग्रहीष्ये ॥ १४ ॥

ततः सुशर्म्मा सहितो महारथैः संशप्तकैर्दूरतरं प्रणेतुम् ।
युद्धाय भीमानुजमाशु क्लृप्तो दुर्य्योधनेनोमिति सोऽप्यवादीत् ॥ १५ ॥

समाह्वयामासुरथार्ज्जुनं[2] ते प्रातर्हुताशस्य दिशं रणाय ।
अयोधयत्[3] तान् स च तत्र गत्वा भीमो गजानीकमथात्र चावधीत् ॥ १६ ॥

निहन्यमानेषु गजेषु सर्वशो [4]विद्राप्यमाणेष्वखिलेषु राजसु ।
प्राग्ज्योतिषो धार्त्तराष्ट्रार्त्थितस्तं समासदत्[5] सुप्रतीकेन धन्वी ॥ १७ ॥

**गजेषु राजसु निहन्यमानेषु विद्राव्यमाणेषु धार्तराष्ट्रार्थितः ॥ १७–२९ ॥**

---

आपदः द्रोणग्रहणरूपायाः किरीटिना आ समन्ताद् रक्षिते । निशागमे । अयमेकादशः सेनापहारः ॥ १३ ॥ युधिष्ठिरस्याग्रहणान्निमित्तात् । संश्रावितः, यावत उद्गमनेन किञ्चिदिव चित्तं समाहितं स्यात् तावत् समस्तं श्रावितः । ग्रहीष्य इति जगाद ॥ १४ ॥ सुशर्मा त्रिगर्ताधिपः । महारथैः पञ्चभिः संशप्तकयोधमुख्यैः सुशर्मभ्रातृभिः । भीमानुज-मर्जुनम् । क्लृप्तः अभियाचितः । सोऽपि भ्रातृभिः सह ओमित्यवादीत् । **'एवं सत्यरथश्चोक्त्वा सत्यवर्मा च भारत । सत्यव्रतश्च सत्येषुः सत्यकर्मा तथैवच । सहिता भ्रातरः पञ्च रथानामयुतेन च । न्यवर्तन्त महाराज कृत्वा शपथ-माहवे'** [१७.१७–८] इति संशप्तकवधे । शत्रुनिग्रहे सम्यक् शप्तं शपथो येषां ते संशप्तकाः दृढशपथाः । **'तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः । शृण्वतां सर्वभूतानामुच्चैर्वाचो बभाषिरे । सर्वे धनञ्जयवधे प्रतिज्ञां चापि चक्रिरे'** [१७.२८–९] इति, **'नास्तिकानां च ये लोका येऽग्निमातृपितृत्यजाम् । तानाप्नुयामहे लोकान् ये च पापकृता-मपि । यद्यहत्वा वयं युद्धे निवर्तेम धनञ्जयम्'** [३५] इति च । **'अद्यास्त्वनर्जुना भूमिरत्रिगर्ताऽथवा पुनः । सत्यं ते प्रतिजानीमो नैतन्मिथ्या भविष्यति'** [१६] इति च सुशर्मवचनं दुर्योधनं प्रति ॥ १५ ॥ **'पितृजुष्टां दिशं प्रति'** [१७.३८] इत्यस्य विववणम्– हुताशस्य दिशमिति । दक्षिणाभिमुखं गत्वा हुताशस्य दिशि युयुधिर इत्यर्थः । षळपि समेताः, रथानामयुतेन च समेता आह्वयामासुः । गजानीकं गजसैन्यम् । गजयूथं वा ॥ १६ ॥ सर्वेषु गजेषु निहन्य-

---

१. **'–हृत्याऽशु ययौ'** इति क्वचित् । २. **'–मासुरथोऽर्जुनम्'** ३. **'आयोधयत्'**
४. **'विद्राव्यमाणे–'** । वे.ती. पाठोऽपि तथेति भाति । ५. **'समागमत्'**

**विभीषिताः सुप्रतीकेन भीमहया न तस्थुस्तदनु स्म सात्यकिः ।**
**सौभद्रमुख्याश्च गजं तमभ्ययुश्चिक्षेप तेषां स रथानथाम्बरे ॥ १८ ॥**

**शैनेयपूर्वेषु रथोज्झितेषु भूमाववप्लुत्य कथञ्चिदेव ।**
**स्थितेषु भीमे च विभीषिताश्वान् संयम्य युद्ध्यत्यपि कृष्ण ऐक्षत् ॥ १९ ॥**

**सङ्क्लेशितो वैष्णवास्त्रं प्रमुञ्चेत्[1] प्राग्ज्योतिषो भीमसेने ततोऽहम् ।**
**याम्यर्ज्जुनेनैव तदस्त्रमात्मनः स्वीकर्त्तुमन्येन वरादधार्य्यम् ॥ २० ॥**

**इति स्म सञ्चिन्त्य सहार्ज्जुनेन तत्राऽययावथ पार्त्थं त्रिगर्त्ताः ।**
**न्यवारयंस्त्वाष्ट्रमस्त्रं स तेषु व्यवासृजन्मोहनायाऽशु वीरः ॥ २१ ॥**

**तदस्त्रवीर्येण विमोहितास्ते परस्परं कृष्णपार्त्थाविति स्म ।**
**जघ्नुस्तदा वासविस्तान् विसृज्य प्राग्ज्योतिषं [2]हन्तुमिहाभ्यगाद् द्रुतम् ॥ २२ ॥**

**विसृज्य भीमं स च पार्थमेव ययौ गजस्कन्धगतो गजं तम् ।**
**प्रचोदयामास[3] रथाय तस्य चक्रेऽपसव्यं हरिरेनमाशु ॥ २३ ॥**

---

मानेषु । एवमखिलेषु राजसु विद्राप्यमाणेषु । गजानेव निर्दयं निजघान । राज्ञः सदयं केवलं विद्रावयामास, न निजघान । ये तं दृष्ट्वैव भीताः पराङ्मुखं दुद्रुवुः । सर्वश इति सप्तमीकारकात् शस् । सर्वशब्दश्च बाहुल्यवचनः । न सामस्त्यवचनः । अत एव शस् । **'बाहुल्यार्थाच्छस् कारकादन्यतरस्याम्'** [५.४.४२] इति हि पाणिनिः ॥ १७ ॥ अथ सौभद्रमुख्यैः क्रियमाणमभियानमसहमानः ॥ १८ ॥ युध्यति युध्यमानेऽपि । कृष्णप्रीत्यर्थमिदं युद्धमिति परस्मैभाषा । **'मामनुस्मर युध्य च'** इति हि गीतासु । ऐक्षत् । ऐक्षत । भीमानुग्रहार्थमिदमीक्षणमिति परस्मैभाषा ॥१९॥ विना प्रतीकारममर्षणीयः क्लेशः सङ्क्लेशः । तेन प्रसभं मुञ्चेत् । प्रासभ्यमविमृश्यकारिता । आत्मनः अस्त्रम् । आत्मनः वरादधार्यमन्येन ॥२०॥ समयोचितमनुग्रहोन्मुखं चिन्तनमत्र सञ्चिन्तनम् ॥ २१ ॥ तस्य तत्त्वास्मरणं मोहः । अतस्य तत्त्वावगमो विमोहः । **'अयमर्जुनोऽयं गोविन्द इमौ पाण्डवयादवौ । इति ब्रुवाणाः सम्मूढा जघ्नुरन्योन्यमाहवे'** [१९.१३] इति च ॥२२॥ तस्यार्जुनस्य रथभङ्गाय । एनं रथं सव्यादपक्रान्तं चक्रे । स गजो यत्राभिदधाव तं देशभागं सव्यं कृत्वा ततो दूरमपक्रम्य दक्षिणाहि चक्र इत्यर्थः । **'चोदयामास तं नागं वधायाच्युतपार्थयोः । तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम् ।**

---

१. **'–वास्त्रं विमुञ्चेत्'** २. **'हन्तुमिवाभ्ययात्'** । **'हन्तुमिहाभ्ययात्'** इति क्वचित् । ३. **'सञ्चोदयामास'**

**मनोजवेनैव रथे परेण सम्भ्राम्यमाणे नतु तं गजः सः ।**
**प्राप्तुं शशाकाथ शरैः सुतीक्ष्णैरभ्यर्दयामास नृपं स वासविः ॥ २४ ॥**

**अस्त्रैश्च शस्त्रैः सुचिरं नृवीरावयुद्ध्यतां तौ बलिनां[१] प्रबर्हौ ।**
**अथो चकर्त्तास्य धनुः स पार्थः स वैष्णवास्त्रं च तदाऽङ्कुशेऽकरोत् ॥ २५ ॥**

**तस्मिन्नस्त्रे तेन तदा प्रयुक्ते दधार तद् वासुदेवोऽमितौजाः ।**
**तदंसदेशस्य[२] तु वैजयन्ती बभूव मालाऽखिललोकभर्त्तुः[३] ॥ २६ ॥**

**दृष्ट्वैव तद् धारितमच्युतेन पार्थः किमर्थं विधृतं त्वयेति ।**
**ऊचे तमाहाऽशु[४] जगन्निवासो मयाऽखिलं धार्य्यते सर्वदैव ॥ २७ ॥**

**न मादृशोऽन्योऽस्ति कुतः परो मत् सोऽहं चतुर्द्धा जगतो हिताय ।**
**स्थितोऽस्मि मोक्षप्रळय[५]स्थितीनां सृष्टेश्च कर्त्ता क्रमशः स्वमूर्त्तिभिः ।**
**स वासुदेवादिचतुःस्वरूपः स्थितोऽनिरुद्धो हृदि चाखिलस्य ॥ २८ ॥**

---

**चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः'** [२८.२८] इति च ॥ २३ ॥ परेण परमात्मना । सम्भ्राम्यमाणे सत्वरं भ्राम्यमाणे । वर्मभेदकास्तीक्ष्णाः । मर्मभेदकाः सुतीक्ष्णाः । अभितः आ नखादा शिखाम् ॥ २४ ॥ अस्त्रैश्चिरं शस्त्रैश्च चिरमिति सुचिरमित्याह । **'विद्धस्ततोऽतिव्यथितो वैष्णवास्त्रमुदीरयन् । अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत् पाण्डवोरसि'** [२९.१७] इति च । प्रकटं प्रकर्षेण वा बर्हेते इति प्रबर्हौ श्रेष्ठौ । **'बर्ह प्राधान्ये'** ॥ २५ ॥ तदस्त्रमखिललोकभर्तुरंसदेशसङ्गता माला बभूव । अखिललोकभर्तुः कियदिदमस्त्रमयमालाभरणं नाम । वैजयन्ती विजयसूचनी माला । विजयत इति विजयन्तः । जयतेरन्तच् । झः प्रत्यय इति कातन्त्राः । **'आशिषि झच्प्रत्ययः, जीयादिति जयन्तः'** इत्येके । यः कोऽपि स्यात् । प्रत्ययजनकाः स्वतनयस्य स्वच्छन्दं नाम कुर्यासुः । रूपं तु समानं विजयन्त इति अन्तच्यपि, झच्यपि, झेऽपि । वयं त्वप्रत्यया वैयाकरणेष्वेव । तथाच विजयन्तस्येयं वैजयन्ती माला । **'वैजयन्त्यभवन्माला तदस्त्रं केशवोरसि'** [१९] इति च ॥ २६ ॥ व्यधिकरणं धारणं विधारणम् । मया धर्तव्यं त्वया धृतमिति । सर्वमपि मयैव धर्तव्यमिति न किमपि विधृतमित्यूचे ॥ २७ ॥ सृष्टेः कर्ताऽनिरुद्धः । चकारात् स्थितेश्च कर्ता । **'स्थित्यै पुनः स भगवाननिरुद्धनामा'** [१.८] । सृष्टिकर्ता च विवक्षाभेदेन– निर्देहकानां ब्रह्मवाय्वादीनां देहसर्जनात् [९] । सृष्टेश्च कर्ता प्रद्युम्नः स्थिति-

---

१. **'तौ रथिनाम्'** इति क्वचित् ।
२. **'तदंसदेशेऽस्य'**
३. **'–लोकधर्तुः'** इति क्वचित् ।
४ **'तमाहाथ जग–'** इति क्वचित् ।
५. **'–प्रलय–'**

**स एव च क्रोडतनुः पुराऽहं भूमिप्रियार्थं नरकाय चादाम् ।**
**अस्त्रं मदीयं वरमस्य चादामवद्ध्यतां यावदस्त्रं ससूनोः ॥ २९ ॥**

**अस्त्रस्य चान्यो नतु कश्चिदस्ति योऽवद्ध्य एतस्य कुतश्च मत्तः ।**
**इति स्म तेनैव मया धृतं तदस्त्रं तदेनं जहि चास्त्रहीनम् ॥ ३० ॥**

**इत्युक्तमाकर्ण्य स केशवेन सम्मन्त्र्य बाणं हृदये मुमोच ।**
**प्राग्ज्योतिषस्यापरमुत्तमं शरं गजेन्द्रकुम्भस्थल आश्वमज्जयत् ॥ ३१ ॥**

**उभौ च तौ पेततुरद्रिसन्निभौ महेन्द्रवज्राभिहताविवाऽशु ।**
**निहत्य तौ वासविरुग्रपौरुषो[1] मुमोद साधु स्वजनाभिपूजितः ॥ ३२ ॥**

**इति स्म अस्माद्धेतोः । [2]एतदस्त्रं तेनैव अस्त्रस्य दात्रा अस्त्रावध्येन मया धृतम् ॥ ३०—३१ ॥ महेन्द्रवज्राभिहतौ**

कर्ता च । अत एव पृथगाह । अनिरुद्धस्य कृत्यान्तरमाह–स्थित इति । सृष्टेश्च कर्ता । अखिलस्य हृदि स्थितश्च । **'एका मूर्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता । अपरा पश्यति जगत् कुर्वाणं साध्वसाधुनी । अपरा कुरुते कर्म मानुषं लोकमाश्रिता । शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रकीम्'** [३३–४] इति भारतवचनव्याख्यानमिदम् । तपश्चर्यां कुरुते सृजतीत्यर्थः । **'स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत'** इति ह्यामनन्ति । अथच भवति जीवोऽत्रेति भूर्हृदयमुच्यते । अतः मनःप्रेरकतया भुवि हृदि स्थितः । जीवहृदि च । अपरा प्रद्युम्नाख्या तनुः साध्वसाधुनी कुर्वाणं जगत् पश्यन्ती स्थितिहेतुर्भवति । अपरा मानुषं कर्म मरणम् । तत् सम्पादयति संहारहेतुः सङ्कर्षणमूर्तिः । चतुर्थी ब्रह्मकल्पान्त उत्थाय मोक्षप्रदा वासुदेवमूर्तिः ॥ २८–९ ॥ न केवलमस्त्रिणोऽवध्यत्वम् । एतस्यास्त्रस्य च मत्तोऽन्यः योऽवध्यः, स कश्चिदपि नैवास्ति । कुतश्च कारणान्तरादपि । इति स्म प्रसिद्धमेतत् । तेनैव कारणेन मया धृतम् । तत् तस्मात् तस्येदानीमवध्यत्वाभावात् । **'नास्यावध्योऽस्ति लोकेऽस्मिन् मदन्यः कश्चिदर्जुन । तस्मान्मया कृतं ह्येतन्मा भूत् ते बुद्धिरन्यथा'** [२९.३०] इति च । **'नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष । तन्मया त्वत्कृते चैतदन्यथैवोपनिर्मितम् । वियुक्तं परमास्त्रेण जहि पार्थ महासुरम्'** [२९.४२–३] इति च ॥ ३० ॥ सम्मन्त्र्य वैष्णवमन्त्रैर्मन्त्रयित्वा । प्राग्ज्योतिषस्य हृदये उत्तमं बाणं मुमोच । अपरमुत्तममिति वचनात् पूर्वबाणस्याप्युत्तमत्वमन्वेतव्यमिति गम्यते । शत्रुप्राणहरणदाक्ष्यमेवोत्तमत्वं बाणस्य । बं कामितं लक्षं क्षपयितुमणतीति बाणः । **'ब कामने'** । बं कामितमाणयति प्रापयतीति वा । भगदत्तस्य वरुणांशतया मूलतो विष्णुभक्तत्वात् तस्मिन् विष्णुमन्त्रैः सम्मन्त्रितमत एव कामितार्थदं बाणं मुमोच । सुप्रतीकस्य त्वमन्त्रितम्, अथाप्युत्तमं विपक्षक्षपणक्षमं शृणातीति शरारुं शरं कुम्भस्थलेऽमज्जयत् । तदप्याशु युगपदिव ॥ ३१ ॥ तौ भगदत्तस्तद्गजश्च । उभयपार्श्वगयोः पक्षयोश्छेदाय उभयतो हननम-

१. **'–पौरुषौ मुमोद'** २. एतेन–**'मयैतदस्त्रं धृतं तदेनम्'** इत्यपि टीकासम्मतः पाठः स्यादिति भाति ।

**अथाचलं वृषकं[१] चैव हत्वा कनीयसौ शकुनेस्तं च बाणैः ।**
**विव्याध मायामसृजत् स तां च विज्ञानास्त्रेणाऽशु नाशाय चक्रे ॥ ३३ ॥**

**स नष्टमायः प्राद्रवत् पापकर्म्मा ततः पार्त्थः शरपूगैश्चमूं ताम् ।**
**विद्रावयामास तदा गुरोः सुतो माहिष्मतीपतिमाजौ जघान ॥ ३४ ॥**

**पर्वताविव ॥ ३२ ॥ नाशाय चक्रे नाशाभिमुखं चक्रे । नाशयामासेत्यर्थः ॥ ३३–७ ॥**

---

भिहननम् । तथाह्याह जयादित्यः–**'परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः'** [अ.सू.५.३.९] इति । गाढं हननं चाभिहननम् । आशु शस्त्रवेधोत्तरक्षण एव वज्राभिहतौ पर्वताविव पेततुः । अत एव तावद्रिसन्निभावित्याह । निह-त्येति । निहतो भगदत्तः कुबेरतामाप । ईशानदिग्गजः सुप्रतीकश्चेशानेन कुबेरस्य दत्त इति तस्यैव स्वम् । तेन सुप्रतीकोऽपि निहतः स्वमूलरूपमाप्य कुबेरमेव सिषेवे । स्वजनैरभिमानेन पूजितः ॥ ३२ ॥ अथाचलं वृषकं चैव हत्वा । **'वृषभं चैव'** इति पठन्तो भ्रान्ताः । वृषभो हि शकुनितनयः पूर्वमेवेरावता हतः । अयं तु शकुनिसोदरः । **'ततो गान्धारराजस्य सुतौ परपुरञ्जयौ । अर्देतामर्जुनं सङ्ख्ये भ्रातरौ वृषकाचलौ'** [३०.२] इति संशप्तकवधे । **'तौ रथस्थौ नरव्याघ्रौ राजानौ वृषकाचलौ । संश्लिष्टाङ्गौ स्थितौ राजन् जघानैकेषुणाऽर्जुनः'** [३०.११] इति च । कनीयांसौ भ्रातरौ । ईयसुनि प्रत्यये कनीयानिति रूपम् । ईयसिश्चेत् प्रत्ययः कनीया इति भवति । नन्वीयसिर्न पठ्यते । शृणु सम्प्रति पठ्यमानं सावधानः 'ईयसिरीयसिर्नाम प्रत्ययः' इति । तर्हि सर्वेऽप्यपशब्दाः सुशब्दा भवेयुः । सर्वत्रापि नूतनः कश्चित् प्रत्ययः कल्प्येत । नूतनं च सूत्रम् । न भोः । अविदितहृदयोऽसि । यत्र दृश्यते प्रतनः प्रामाणिकः प्रयोगः, नच विहितः प्रतनैः पदज्ञैः प्रत्ययविशेषः, नच प्रणीतं तद्विधायकं सूत्रम्, तदा नवीना प्रक्रियाऽन्वेष्टव्या भवति । यथा पाणिनाऽनुक्तं पश्चात् कात्यायन उपसञ्जयति । ननु सर्वमिदं प्रामाणिके सति प्रयोगे । न वयं भवदाचार्यप्रयोगं प्रामाणिकमङ्गीकुर्महे । मा स्म नामाङ्गीक्रियत । अङ्गीकारयिष्यामहे । परमवैदिकस्याऽचार्यस्य प्रयोगेऽपि सन्दिहानं तावत् पृच्छामः– किं वेदगतानपि प्रयोगान् सन्देक्षि? न किल । तर्हि स्मारयामस्त्वां बृहदारण्यकप्रयोगस्य–**'कानीयसा देवाः'** इति । तत्र यत् समाधानं तव भवति तदेव ममापि । अपि च कनीयांसाविति वक्तव्ये कनीयसावित्याह । तेनाक्षर-ह्रासेन तेषां गुणह्रासमायुषश्च ह्रासं सूचयति । तं च शकुनिम् । स शकुनिः । तां च मायां पार्थो नाशाय नाशयितुं चक्रे जिहिंस । कृञ् हिंसायाम्, स्वादिः । मायाया हिंसा नाम प्रतिपक्षमोहनशक्तिक्षपणम् । कर्मणि वा चतुर्थी । नाशाय चक्रे, नष्टां चक्रे, नाशयामासेत्यर्थः ॥ ३३ ॥ माहिष्मतीपतिं नीलम् । यद्यपि भारते नीलमश्वत्थामा जघानेतीयदेव पठ्यते । द्वौ नीलौ पुनः श्रूयेते । माहिष्मतीपतिरेकः । अनूपाधिपतिरपरः । तयोः कतरोऽयमिति जिज्ञासायामाह– माहिष्मतीपतिं नीलमाजौ जघानेति । ननु माहिष्मतीपतिः कौरवपक्ष आसीदित्युद्योगे स्फुटम्– **'तथा माहिष्मतीवासी नीलो नीलायुधैः सह । महीपालो महावीर्यैर्दक्षिणापथवासिभिः'** [१९.२४] इति सेनोद्योगे । **'नीलो माहिष्मतीवासी नीलवर्मा रथस्तव । रथवंशेन कदनं शत्रूणां वै करिष्यति'** [१६६.४] इति रथातिरथसङ्ख्याने । अपरश्च पाण्डवपक्षीयः

---

१. 'वृषभम्'

तदा भीमस्तस्य निहत्य वाहान् व्यद्रावयद् धार्त्तराष्ट्रीं चमूं च ।
भीमार्ज्जुनाभ्यां हन्यमानां चमूं तां दृष्ट्वा द्रोणः क्षिप्रमपाजहार ॥ ३५ ॥

२ प्राग्ज्योतिषे निहतेऽथाग्रहाच्च[१] युधिष्ठिरस्याति[२]विषण्णरूपः ।
दुर्य्योधनोऽश्रावयद् दीनवाक्यान्यत्र द्रोणं[३] सोऽपि नृपं जगाद ॥ ३६ ॥

पार्त्थे गते श्वो नृपतिं ग्रहीष्ये निहन्मि वा तत्सदृशं तदीयम् ।
इति प्रतिज्ञां स विधाय भूयः प्रातर्य्ययौ युद्धमाकाङ्क्षमाणः ॥ ३७ ॥

पद्मव्यूहं व्यूह्य परैरभेद्यं वराद् विष्णोस्तस्य मन्त्रं ह्यजस्वा[४] ।
पार्त्थाश्च तं प्रापुरृतेऽर्ज्जुनेन संशप्तकैर्य्युयुधे सोऽपि वीरः ॥ ३८ ॥

**अथ विष्णोर्वरात् तस्य भेदनस्य मन्त्रं अजस्वा परैः शत्रुभिः अभेद्यं पद्मव्यूहं व्यूह्य, तस्थाविति शेषः ॥ ३८–४५ ॥**

---

श्रूयते– **'नीलो यश्चापरो नृप'** [१७१.१५] इति । स चानूपाधिरिति च श्रूयते– **'अनूपाधिपतिः शूरो भीमस्य दयितः सखा । नीलो नीलाम्बुदप्रख्यः सङ्क्रुद्धो द्रौणिमभ्ययात्'** [भी.प.९४.२९] इति । तदेवं सर्वं सम्मुग्धमिव भारते पठित-मिति स्वयं निर्णयमाह– माहिष्मतीपतिमाजौ जघानेति । अयमर्थः– नहि कश्चिदनूपो नाम देशः । नन्वस्ति अनूपो नाम देशः । **'ऊदनोर्देशे'** [अ.सू.६.३.९८] इति हि पाणिनिः स्मरति । **'अनूपो देशः'** इति वामनः । सत्यमाह– अनूपो देश इति । नत्वनूपो नाम देश इति । प्रदेश इत्यर्थः । **'अनूपो महिषे नाऽम्बुप्रायदेशे तु वाच्यवत्'** इति चाभि-धानम् । तेन समृद्धजलो ह्यनूप उच्यते । नर्मदातीरगा माहिष्मत्येवानूपदेश इति चोच्यते । अथ चानूपदेशस्य राजधानी माहिष्मती बभूव । तेनानूपाधिपतिरेव माहिष्मतीपतिः । अयं तु हैहयानां राजा बभूव । अपरः कौरवपक्षीयोऽपि नील इति सम्प्रति भारते पठ्यते, तल्लिपिकराणां प्रमादफलमिति स्फुटम् । नीलोऽयं महारथः भीमप्रियः द्रौणिना सदा स्पर्धमान आसेति सर्वं सुन्दरम् ॥ ३४ ॥ तस्य गुरोः सुतस्य । क्षिप्रमपाजहार । अयं द्वादशः सेनापहारः ॥ ३५ ॥ प्राग्ज्योतिषे निहते, अथ तस्मात् भगदत्तवधात् । अथ कारणान्तरात् युधिष्ठिरस्याग्रहणाच्च । अत्र अस्मिन् विषये । **'नूनं वयं वध्य-पक्षे भवतो द्विजसत्तम । तथाहि नाग्रहीः प्राप्तं समीपेऽद्य युधिष्ठिरम्'** [द्रो.प.३३.७] इत्यादीनि दुःखप्रायाणि दीन-वाक्यानि । दीनानि वाक्यानि । गतस्वो दीन उच्यते । भीतश्च दीन उच्यते । तदुभयं दुर्योधननिष्ठं तद्वाक्येषूपचर्यते ॥३६॥ दुर्योधनप्रत्यायनार्थं भूयः बहुधा क्रियासमभिहारेण प्रतिज्ञां विधाय । **'बहोर्लोपो भू च बहोः'** [अ.सू.६.४.१५८] । दुर्योधनार्थं स्वस्मिन् बलादारोपिता काङ्क्षा आकाङ्क्षा ॥ ३७ ॥ **'पद्मव्यूहो महाराज आचार्येणाभिकल्पितः । तत्र पद्मोपमाः**

---

१. **'निहते चाग्रहाच्च'**
२. **'युधिष्ठिरस्याऽशु विषण्ण–'** इति क्वचित् ।
३. **'द्रोणः सोऽपि'**
४. **'मन्त्रं च जस्वा'** । **'मन्त्रं हि जस्वा'** इति क्वचित् ।

**पार्त्था व्यूहं तु[1] तं प्राप्य नाशकन् भेत्तुमुद्यताः ।**
**जानंश्च प्रतिभायोगात् काम्यं नैवाजपन्मनुम् ॥ ३९ ॥**

**भीमो युधिष्ठिरस्तत्र तज्ज्ञं सौभद्रमब्रवीत् ।**
**भिन्धि व्यूहमिमं तात वयं त्वामनुयामहे ॥ ४० ॥**

**स एवमुक्तो रथिनां प्रबर्हो विवेश भित्त्वा द्विषतां चमूं ताम् ।**
**अन्वेव तं वायुसुतादयश्च विविक्षवः सैन्धवेनैव रुद्धाः ॥ ४१ ॥**

**वरेण रुद्रस्य निरुद्ध्यमानो जयद्रथेनात्र वृकोदरस्तु ।**
**विष्णोरभीष्टं वधमार्ज्जुनेस्तदा विज्ञाय शक्तोऽपि नचात्यवर्त्तत ॥ ४२ ॥**

**जयद्रथस्थेन वृषध्वजेन प्रयुद्ध्यमानेषु वृकोदरादिषु ।**
**प्रविश्य वीरः स धनञ्जयात्मजो विलोळयामास[2] परोरुसेनाम् ॥ ४३ ॥**

---

**सर्वे राजानो विनिवेशिताः'** [३४.२] इति प्रतनो भारतपाठः । औत्तरास्तु वृथा पाठं व्यत्यस्यासङ्गतं किमपि पठन्ति– **'चक्रव्यूहो महाराज आचार्येणाभिकल्पितः । तत्र शक्रोपमाः सर्वे राजानो विनिवेशिताः'** इति । तत्रापि चक्रोपमा इति पठितव्ये शक्रोपमा इति पठन्ति । तस्य विष्णोः मन्त्रमजप्त्वा परैः विष्णोरन्यैः अभेद्यम् । मम मन्त्रजपाद्दते अभेद्योऽयमस्त्विति विष्णोर्वरात् । एतेन ज्ञायते व्यूहमन्त्रस्यास्य पद्मनाभो देवता, पद्मयोनिरभिमानीति ॥ ३८ ॥ भीमः नैवाजपत् ॥ ३९ ॥ तत्र तस्मिन् सङ्कटे । तज्ज्ञम् । अर्जुनेनोपदिष्टमन्त्रो हि सः । **'द्रोणानीकस्य न वयं विद्मो भेदं कथञ्चन । त्वं वाऽर्जुनो वा कृष्णो वा भिन्द्यात् प्रद्युम्न एव वा'** [३५.१४] इत्यभिमन्युं प्रति युधिष्ठिरवचनम् । स्वजयकाङ्क्षया बालं बलिं ददाविति **'अनुयामहे'** इत्यात्मनेभाषा । हे तात वयं त्वामनुयामेति वा ॥ ४० ॥ विविक्षव एव रुद्धाः । नतु प्रवेष्टुं कृतारम्भा अपि ॥ ४१ ॥ वरेण रुद्रस्य । द्रौपदीहरणे भीमसेनेन निर्जितो वृद्धक्षत्रपुत्रः सैन्धवो जयद्रथो देवं शर्वमाराधयामास तत्प्रतीकाराय । भक्तानुकम्पी भगवान् भवः स्वप्नान्ते तस्याऽत्मानं दर्शयामास । आह च **'वरं वृणीष्व प्रीतोऽस्मि'** इति । एवमुक्तः स उवाच प्राञ्जलिः– **'पाण्डवानहं सङ्ख्ये वारयेयं रथेनैकः समस्तान्'** इति । तदा रुद्र आह– **'वारयसि समस्तानेकाहं विना धनञ्जयम्'** इति । तेन वरेण । वरदात् रुद्रात् स्वरूपतोऽधिकोऽपीति विशेषं तुनाऽऽह वृकोदरस्त्विति । अन्ये वरादेव निरुध्यमाना आसन् । वृकोदरस्तु न तथा । विष्णोरभीष्टं विज्ञाय, नात्यवर्तत रुद्रस्य वरम् । नापि पद्मव्यूहम् । नतरां विष्णोरभीष्टम् ॥ ४२ ॥ **'सङ्क्रुद्धान् पाण्डवानेको यद् दधारास्त्र-**

---

१. **'व्यूहं च तम्'** २. **'विलोडयामास'** । **'विलोलयामास'** इति क्वचित् ।

स द्रोणदुर्य्योधनकर्ण्णशल्यैर्द्रौण्यग्रणीभिः[1] कृतवर्म्मयुक्तैः ।
रुद्धश्चचारारिबलेष्वभीतः शिरांसि कृन्तंस्तदनुव्रतानाम्[2] ॥ ४४ ॥

स लक्षणं राजसुतं प्रसह्य पितुः समीपेऽनयदाशु मृत्यवे ।
बृहद्बलं चोत्तमवीर्य्यकर्म्मा वरं रथानामयुतं च पत्रिभिः ॥ ४५ ॥

द्रोणादयस्तं हरिकोपभीताः प्रत्यक्षतो हन्तुमशक्नुवन्तः ।
सम्मन्त्र्य कर्ण्णं पुरतो निधाय चक्रुर्विचापाश्वरथं क्षणेन ॥ ४६ ॥

कर्ण्णो धनुस्तस्य कृपश्च सारथी[3] द्रोणो हयानाशु विधम्य[4] सायकैः ।
सचर्म्मखड्गं रथचक्रमस्य प्रणुद्य हस्तस्थितमेव तस्थुः[5] ॥ ४७ ॥

**प्रत्यक्षतः साक्षात् ॥ ४६–८ ॥**

---

**तेजसा । तत् तस्य कर्म भूतानि सर्वाण्येवाभ्यपूजयन्'** [४३.१६] इति भारतभावमाह– जयद्रथस्थेन वृषध्वजेनेति । प्रयुध्यमानेषु घोरं युध्यमानेषु ॥ ४३–४ ॥ **'पौत्रस्तु तव दुर्धर्षं लक्षणं प्रियदर्शनम् । पितुः समीपे तिष्ठन्तं प्राहिणोद् यमसादनम्'** [४६.१८] इति च । बृहद्बलं शकुनिभ्रातरम् । **'स कोसलानामधिपं राजपुत्रं बृहद्बलम् । हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् । बभञ्ज च सहस्राणि दश राज्ञां महात्मनाम्'** [४७.२२] इति च ॥ ४५ ॥ सम्मन्त्र्य परस्परं मन्त्रयित्वा ॥ ४६ ॥ कृपश्च सारथी इति । **'अश्वानस्यावधीद् द्रोणो गौतमः पार्ष्णिसारथी'** [४८.३२] इति हि भारते । धनुः विधम्य च्छित्त्वा, सारथी हयांश्च विधम्य हत्वा । आशु आत्मरक्षणायाप्यवकाशमदत्वा युगपत् । ननु कथं विधम्य? सत्यमपठो व्याकरणम् । भवदभ्यस्ते धातुपाठे नायं धातुः पठ्यते । यश्च पठ्यते धमतीति ध्माधातो रूपम् । तस्य च ल्यपि कृते विध्मायेति स्यात् । नतु विधम्येति । तस्माद् युक्तस्ते प्रश्नः । अयि वैयाकरणरूप, धातुपारायणिक, बहवो धातुपाठा भवन्ति । तेष्वपि बहवो न पठिताः । पठिता अपि केचिद् भवादृशैरनधीताः । अपारः शब्दजलधिरिति दर्शयन्नाचार्य इमं कञ्चनापूर्वं धातुं बोधयन् करुणयाऽह विधम्येति । किमुक्तं भवति । धमिः प्रकृत्यन्तरमित्युक्तं भवति निरसनेऽर्थे । धमति धाम्यति । तथाहि रामायणे–**'विधमिष्यामि जीमूतान्'** [सुं.कां.६७.१२] । भारते च– **'धम्यमान इवाऽशये'** [क.प.५.८] इति । **'तान् विधम्य महाबाहुः शरजालेन संयुगे'** [क.प.११.३६] इति च । क्षीरस्वामी चाऽह–**'धमिः प्रकृत्यन्तरमित्येके'** इति । सचर्मखड्गमिति । **'तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम् । क्षुरप्रेण महातेजास्त्वरमाणः सपत्नजित् । राधेयो निशितैर्बाणैर्व्यधमच्चर्म चोत्तमम् । व्यसिचर्मेषुपूर्णाङ्गः**

---

१. **'–कर्णशल्यद्रौण्यग्रणीभिः'** २. **'–नुव्रतानाम्'** ३. **'सारथिं द्रोणो–'**
४. **'विधूय'** । **'हयानस्य विधम्य'** इति क्वचित् । ५. **'–मेव चक्रुः ।'**

भीतेषु कृष्णादथ तद्वधाय तेष्वाससादाऽशु गदायुधं गदी ।
दौःशासनिस्तौ युगपच्च मम्रतुर्गदाभिघातेन मिथोऽतिपौरुषौ ॥ ४८ ॥

तस्मिन् हते शत्रुरवं निशम्य हर्षोद्भवं मारुतिरुग्रविक्रमः ।
विजित्य सर्वानपि सैन्धवादीन् युधिष्ठिरस्यानुमते न्यषीदत् ॥ ४९ ॥

व्यासस्तदा तानमितात्मवैभवो युधिष्ठिरादीन् ग्लपितानबोधयत् ।
विजित्य संशप्तकपूगमुग्रो निशागमे वासविराप साच्युतः ॥ ५० ॥

निशम्य पुत्रस्य वधं भृशार्त्तः प्रतिश्रवं सोऽथ चकार वीरः ।
जयद्रथस्यैव वधे निशायां स्वप्नेऽनयत् तं गिरिशान्तिकं हरिः ॥ ५१ ॥

**विजित्य पुनश्च योत्स्यन् अथ युद्धात् प्रयोजनाभावाद् युद्धं न कार्यमिति युधिष्ठिरस्यानुमते न्यषीदत् । युद्धादुपरत इति भावः ॥ ४९–५२ ॥**

---

**सोऽन्तरिक्षात् पुनः क्षितिम् । आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यपद्यत'** [द्रो.प.४८.३७–९] इति च । **'तच्चक्रं भृशमुद्विग्नाः सञ्चिच्छिदुरनेकधा । महारथस्ततः कार्ष्णिः स जग्राह महागदाम्'** [४९.४] इति च । तस्य हस्तस्थितं चक्रमपि प्रणुद्य निरस्य, अथापि हरिकोपभीताः प्रत्यक्षतो हन्तुमशक्नुवन्तः तस्थुरेव तूष्णीम् ॥ ४७ ॥ युगपच्च मम्रतुः । **'तावन्योन्यं गदाग्राभ्यामाहत्य पतितौ क्षितौ । इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परन्तपौ'** [४९.१२] इति । अत्र पुनरितः परं पठ्यमानेन– **'दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः । उत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् । गदावेगेन महता व्यायामेन च मोहितः । विचेता न्यपतद् भूमौ सौभद्रः परवीरहा'** इति श्लोकद्वयेन भ्रमो जायते यद् दौःशासनिर्न मृत इति । अतो भारतार्थं निर्णिनीषुराचार्य आह– युगपच्च मम्रतुरिति । तथाह्युपरिष्टाद् धृतराष्ट्रवचनम्– **'तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः । वर्तमानः पितुः शास्त्रे सौभद्रेण निपातितः । तथा दौःशासनिः शूरो बाहुषाळी रणोत्कटः'** [क.प.२.१५] इति । ननूत्तरवचनेन दौःशासनिः द्रौपदेयेन हत इति गम्यते–**'द्रौपदेयेन सङ्गम्य गमितो यमसादनम्'** [२.१६] इति । न भोः । तदर्धं न पूर्वान्वयि । किन्तूत्तरान्वयि । द्रौपदेयेन द्रौपदीपुत्रपञ्चकेन सङ्गम्य, धनञ्जयेन विक्रम्य भगदत्तो गमितो यमसादनमिति । **'भगदत्तो महीपालः क्षत्रधर्मरतः सदा । धनञ्जयेन विक्रम्य गमितो यमसादनम्'**[२.१८] इति ह्युत्तरं वचनम् । यदि पूर्वत्रैवान्वय इत्यागृह्यते– तदा पुत्रवत् प्रीतिपात्रेण द्रौपद्याः पुत्रतुल्येन सौभद्रेणेति व्याख्यायताम् । स्मरन्ति च–**'व्यत्यासः प्रातिलोम्यं च'** इत्यादि । स्यादपि प्राचीनो भारतपाठः– **'सौभद्रेणैव सङ्गम्य–'** इत्यादिः ॥ ४८ ॥ न्यषीदत् व्यूहाद् बहिरेव । विजित्यापि न व्यूहं भित्त्वाऽन्तर्जगाम । युधिष्ठिरस्य मतमनुसर्तुम् । त्रयोदशादिनयुद्धसमाप्तिरत्र ॥ ४९ ॥ ग्लपितान् प्रापितहर्षक्षयान् । ग्लै हर्षक्षये ॥ ५० ॥ ननु मनस्यन्तः

**स्वयमेवाखिलजगद्रक्षाद्यमितशक्तिमान् ।**
**अप्यच्युतो गुरुद्वारा प्रसादकृदहं त्विति ॥ ५२ ॥**

**ज्ञापयन् फल्गुनस्यास्त्रगुरुं गिरिशमञ्जसा ।**
**प्रापयित्वैनमेवैतत्प्रसादादस्त्रमुद्बणम्[1] ।**
**चक्रे तदर्थमेवास्य रक्षां[2] चक्रे तदात्मिकाम् ॥ ५३ ॥**

**सान्त्वयित्वा सुभद्रां च गत्वोपप्लाव्यमच्युतः ।**
**योजयित्वा रथं प्रातः सार्जुनो [3]युद्धमभ्ययात् ॥ ५४ ॥**

**श्रुत्वा प्रतिज्ञां पुरुहूतसूनोर्दुर्योधनेनार्थितः सिन्धुराजम् ।**
**त्रातास्म्यहं सर्वथेति प्रतिज्ञां कृत्वा द्रोणो व्यूहमभेद्यमातनोत् ॥ ५५ ॥**

**उल्बणं वीर्यवत् । तदर्थमेव उल्बण(त्वा)र्थमेव । तदात्मिकां अस्त्रात्मिकाम् ॥ ५३–७९ ॥**

स्वप्नं दर्शयति तैजसः । **'मनस्यन्तस्तु तैजसः'** इति माण्डूकवचनात् । तत् कथं **'स्वप्नेऽनयत् तं गिरिशान्तिकं हरिः'**? नहि जीवतो देहाद्बहिर्गमनं सम्भवति । नतरां बहिः क्वापि स्वप्नदर्शनम् । न भोः । न तावद् दुःशकः परकायप्रवेशो योगसिद्धानाम् । ननु ब्रूमः स्वप्ने परकायप्रवेशो योगसिद्धानामपि दुःशक इति । कथमेवं भवान् बभ्राम? द्विविधो हि स्वप्नः श्रूयते । देहस्यान्तः, बहिश्चेति । ये निरंशा जीवास्ते देहस्यान्तरेव स्वप्नं पश्यन्ति । ये च सांशजीवाः देवादयस्ते बहिरपि । नन्वस्वप्ना देवाः । ते कथमन्तर्वा बहिर्वा स्वप्नं पश्येयुः । सत्यमस्वप्ना देवाः । किन्तु मूलरूपे । नावतारेषु । देवा अपि भूमाववतीर्णाः स्वप्नं पश्यन्ति । यथा– अश्वत्थामा शिबिरदाहानन्तरं देहस्यान्तर्ददर्श । अर्जुनस्तु बहिः । तथाहि बृहद्भाष्ये महासंहितावचनम्–**'अंशेन जीवमादाय क्वचिदीशो बहिर्नयेत् । स्वप्नेषु फल्गुनं यद्वत् कृष्णः कैलासमानयत्'** इति । तदेतच्छ्रुत्याऽप्यनुमतम्–**'शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एकहंसः । प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा'** [बृ.उ.६.३.१२–३] इत्यादि । शुक्रमादायेति जीवमादायेत्यर्थः । बहिष्कुलायादिति देहाद् बहिरित्यर्थः । तस्माद् युक्तमुक्तम्–**'स्वप्नेऽनयत् तं गिरिशान्तिकं हरिः'** इति ॥ ५१–२ ॥ एनं गुरुं गिरिशमेव प्रकटमापयित्वा, पूर्वं गिरिशात् प्राप्तमेवास्त्रं पुनरुद्बणं व्यक्तसामर्थ्यं चक्रे । तदात्मिकां स्वप्ने गिरिशदर्शनरूपाम् ॥ ५३ ॥ तस्यामेव निशायां अच्युतः उपप्लाव्यं च गत्वा, सुभद्रां पाञ्चालीमुत्तरां च सान्त्वयित्वा, प्रातर्युद्धक्षेत्रमभ्ययात् । अयं चतुर्दशदिवसयुद्धारम्भः ॥ ५४–५ ॥

१. **'–दस्त्रमुल्बणम्'** । वे.ती.पाठोऽपि तथा । २. **'–स्य चक्रे रक्षां तदा–'** ३. **'–र्जुनो योद्धुमभ्ययात्'**

**स दिव्यमग्र्यं शकटाब्जचक्रं कृत्वा स्वयं व्यूहमुखे व्यवस्थितः ।**
**पृष्ठे कर्ण्णद्रौणिकृपैः सशल्यैर्ज्जयद्रथं गुप्तमधात् परैश्च ॥ ५६ ॥**

**अथार्ज्जुनो दिव्यरथोपरिस्थितः [१]सुरक्षितः केशवेनाव्ययेन ।**
**विजित्य दुर्म्मर्षणमग्रतोऽभ्ययाद्[२] द्रोणं सुधन्वा गुरुमुग्रपौरुषः ॥ ५७ ॥**

**प्रदक्षिणीकृत्य तमाश्ववगात् ततः कालात्ययं त्वेव विशङ्कमानः ।**
**रथं मनोवेगमथानयद्धरिर्य्यथा शराः पेतुरमुष्य पृष्ठतः ॥ ५८ ॥**

**विजित्य हार्दिक्यमथाप्रयत्नतः स इन्द्रसूनुः प्रविवेश तद् बलम् ।**
**विलोळयामास[३] च सायकोत्तमैर्य्यथा गजेन्द्रो नळिनीं[४] बलोद्धतः ॥ ५९ ॥**

**स उच्चकाशेऽतिरथो रथोत्तमे सवासुदेवो हरिणा यथेन्द्रः ।**
**चकर्त्त चोग्रो द्विषतां शिरांसि शरैः शरीरान्तकरैः समन्ततः ॥ ६० ॥**

**दृढायुमच्युतायुं च हत्वा विन्दानुविन्दकौ ।**
**शराभ्यां प्रेषयामास यमाय विजयो युधि ॥ ६१ ॥**

---

दिव्यं विजयसाधनं मन्त्रकवचितं च । अत एवाग्र्यं महाव्यूहम् । शकटाब्जचक्रम् । **‘व्यूहस्तु चक्रशकटो भारद्वाजेन निर्मितः’** [८७.२२] इति, **‘पश्चार्धे तस्य पद्मस्तु गर्भव्यूहः कृतः पुनः’** [२४] इति च । पूर्वार्धे चक्राकारगर्भः, पश्चार्धे पद्माकार-गर्भः शकटाख्यो महाव्यूह इत्यर्थः । पद्मस्य मध्ये पुनः सूची नाम गूढव्यूहः यदन्तर्जयद्रथो निगूहितः । **‘सूची पद्मस्य गर्भस्थो गूढो व्यूहः कृतः पुनः । एवमेतं महाव्यूहं कृत्वा द्रोणो व्यवस्थितः’** [२५] इति च ॥ ५६ ॥ केशवेन सदा रक्षितः । अद्य विशेषत इति सुरक्षित इत्याह । दुर्मर्षणं दुर्योधनानुजम् । उग्रेण पौरुषेण गुरुं युद्ध्वा, ततः कालात्ययपरिहाराय **‘गुरुर्भवान् न मे शत्रुः शिष्यः पुत्रसमोऽस्मि ते’** [९१.३६] इति ब्रुवाणः प्रदक्षिणीकृत्य, तमुत्सृज्य व्यूहान्तः प्रविवेश । कालात्ययं त्विति तुना, तेन प्रतिज्ञाभङ्गरूपमापद्विशेषं ततः पुत्रहन्तुः प्रतिकरणासम्भ-वादिकं चेति विविधमपायं शङ्कमानः । एवकारेण शङ्काया दार्ढ्यमाह । अथार्जुनस्य मनसि कीलितं शङ्काशङ्कुमव-गत्य । पेतुरमुष्य पृष्ठतः । **‘रथस्थितोऽग्रतः क्रोशं यानस्यत्यर्जुनः शरान् । रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान्’** [९९.९] इति च ॥ ५७–९ ॥ हरिणा उपेन्द्रेण वामनेन ॥ ६० ॥ दृढायुरच्युतायुश्च भ्रातरौ । श्रुतायुरश्रुतायुरित्यौत्तराः

---

१. **‘संरक्षितः’** इति क्वचित् । २. **‘–मग्रतो ययौ द्रोणं’** इति क्वचित् । ३. **‘विलोडयामास’** ४. **‘नलिनीम्’**

**सुदक्षिणं च काम्बोजं[1] निहत्याम्बष्ठमेव च ।**
**श्रुतायुधं नदीजातं वरुणादाससाद ह ॥ ६२ ॥**

**यस्यादाद् वरुणो दिव्याममोघां महतीं गदाम् ।**
**स तु तेन शरैस्तीक्ष्णैरर्प्पितो विरथं क्षणात् ॥ ६३ ॥**

---

पठन्ति । श्रुतायुरच्युतायुरिति दाक्षिणात्याः । उभयेऽपि भ्रान्ताः । अम्बष्ठानां राजा हि श्रुतायुः । तस्मादेवं प्रतनो भारतपाठः– **'दृढायुरच्युतायुश्च धनञ्जयमयुध्यताम्'** [९३.७] इति, **'दृढायुषश्च निधनं बधश्चैवाच्युतायुषः । लोकविस्मापनमभूत् समुद्रस्येव शोषणम्'** [२५] इति च । कृष्णद्वेषेण कुत्सितौ राजाधिदेवीसुतावावन्त्यौ विन्दानुविन्दौ कृष्णस्यालौ । **'एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप । सहसेनौ समार्च्छेतां पाण्डवं क्लान्तवाहनम्'** [९९.१८] इति, **'ज्येष्ठस्य च शिरः कायात् क्षुरप्रेण न्यकृन्तत'** [२६] । क्षुर इव प्रातीति क्षुरप्रः शरविशेषः । **'विन्दं तु निहतं दृष्ट्वा ह्यनुविन्दः प्रतापवान्'** [२७], **'अभ्यवर्तत सङ्ग्रामे भ्रातुर्वधमनुस्मरन्'** [२८], **'तस्यार्जुनः शरैः षड्भिर्ग्रीवां पादौ भुजौ शिरः । निचकर्त स सञ्छिन्नः पपाताद्रिचयो यथा'** [३०] इति च । यमाय प्रेषणं शिरःकर्तनेनैकेनैव शरेणेति शराभ्यामिति युक्तम् ॥ ६१ ॥ भारते श्रुतायुधहननानन्तरं सुदक्षिणादीनां हननं पठ्यते । **'सुदक्षिणं तं काम्बोजं मोघसङ्कल्पविक्रमम् । बिभेद हृदि बाणेन पृथुधारेण पाण्डवः'** [९२.७१] इति । **'काम्भोज'** इति दाक्षिणात्यानां भ्रान्तः पाठः । अत्रौत्तरः पाठ एव प्रतनः । कम्पयन्त्यरीनोजसेति कम्बोजा नाम जनपदाः । कम्बुवद् धवळदीप्तयो वा । **'ओजो दीप्ताववष्टम्भे प्रकाशबलयोरपि'** इत्यभिधानम् । तेषामयं राजा । ननु **'जनपदशब्दात् क्षत्रियादञ्'** [अ.सू.४.१.१६८] इत्यपत्यार्थे विहितस्याञो लोप उच्यते पाणिनिना–**'कम्बोजाल्लुक्'** [४.१.१७५] इति । तेन कम्बोजानामयं 'कम्बोजो राजा' इत्येव युक्तम् । न काम्बोज इति । शृणु तथ्यम् । स यथा कश्मीरः काश्मीरोऽपि भवति । तथा कम्बोजः काम्बोजोऽपि भवति । तेनोभयथाऽपि साधुः प्रयोगः–राजा कम्बोज इति राजा काम्बोज इति । सूत्रं त्वयोगं व्यवच्छिनत्ति । अम्बष्ठ इति तद्देशपः श्रुतायुः । अम्बे पितरि तिष्ठन्त्यत्रेति वाऽम्बष्ठो देशः । **'तं श्रुतायुस्तथाऽम्बष्ठो व्रजमानं न्यवारयत्'** [९३.६३] इति, **'तस्यार्जुनः क्षुरप्राभ्यां सगदावुद्यतौ भुजौ । चिच्छेदेन्द्रध्वजाकारौ शिरश्चान्येन पत्रिणा'** [९३.७१] इति च । श्रुतायुधं नदीजातमिति । **'वरुणस्याऽत्मजो वीरः स तु राजा श्रुतायुधः । पर्णाशा जननी यस्य शीततोया महानदी'** [९२.४४] इति च ॥ ६२ ॥ दिव्यां मन्त्ररक्षिताम् । श्रुतायुधे जाते माता वरुणमब्रवीत्– 'अवध्यो भवेत् तनयो मम' इति । ततो वरुण आह– 'अवश्यं जातेन जीवजातेन मर्तव्यमेव । अथापि दुर्धर्षः शत्रूणामयं भवति' इति । **'इत्युक्त्वा वरुणः प्रादाद् गदां मन्त्रपुरस्कृताम् । यामासाद्य दुराधर्षः सर्वलोके श्रुतायुधः । उवाच चैनं भगवान् पुनरेव जलेश्वरः । अयुध्यति न मोक्तव्या सा त्वय्येव पतेदिति'** [९२.४९–५०] इति च । स तु अर्जुनस्तु । तेन श्रुतायुधेन । अर्पितः गमितः । अर्दित इति वक्तव्य आलङ्कारिकं वचः । ऋ गतावित्यतो ण्यन्तं रूपम् । ऋच्छति अर्पयति । **'अर्ति-ह्री-ब्ली-री-क्नूयी-क्ष्माय्यातां पुग् णौ'** [अ.सू.७.३.३६] इति णौ परतः

---

१. **'काम्भोजम्'**

**चकार पार्त्थस्य रथमारुह्यारिधराय ताम् ।**
**गदां चिक्षेप सा तस्य वारुणेः शिर एव तु ॥ ६४ ॥**

**बिभेद शतधा शीर्ण्णमस्तिष्कः सोऽपतद् भुवि ।**
**अयुद्ध्यन्तं स्वगदया यदि ताडयसि स्वयम् ॥ ६५ ॥**

**तया विशीर्ण्णमस्तिष्को मरिष्यसि[1] न संशयः ।**
**अमोघा चान्यथा सेयं गदा तव भविष्यति ॥ ६६ ॥**

**इत्यब्रवीत् तं वरुणः पुरा तेन स केशवे ।**
**अयुद्ध्यति गदाक्षेपात् तया शीर्ण्णशिरा अभूत् ॥ ६७ ॥**

**हतेषु वीरेषु निजेषु सङ्घशो विद्रावितेष्वालुळिते[2] च सैन्ये ।**
**दुर्य्योधनो द्रोणमुपेत्य दीनमुवाच[3] हा पार्त्थ उपेक्षितस्त्वया ॥ ६८ ॥**

**इतीरिते[4]ऽभेद्यममुष्य वर्म्म बध्वा महामन्त्रबलात् स विप्रः ।**
**जगाद येनैव बलेन पार्त्थैर्विरुद्ध्यसे तेन हि याहि फल्गुनम् ॥ ६९ ॥**

---

पुगागमः । तं श्रुतायुधं विरथं चकार । विरथः स च पार्थस्य रथमारुह्य अरिधराय अरिधरं हन्तुं गदां चिक्षेप । **'क्रियार्थोपपदस्य च कर्मणि स्थानिनः'** [अ.सू.२.३.१४] इति हि पाणिनिः । तद् यथा– एधेभ्यो व्रजति, एधानाहर्तुं व्रजति । तत् किम-प्रहरन्तं हन्तुमुदयुङ्क? अरिधरत्वात् । य इच्छामात्रेण चक्रं स्वहस्तगतं करोति । अपिचारिं स्वशत्रुमर्जुनं धरति रक्षतीत्येतत् । सा तु गदा वारुणेः वरुणपुत्रस्य श्रुतायुधस्य शिर एव बिभेद । तुना अयुध्यमाने पुनरमोक्तव्यत्वं नाम विशेषमाह । तं हत्वा सा गदा वरुणं ययौ ॥ ६३–४ ॥ मस्तिष्कमिति मस्तकमज्जोच्यते । मस्तकं वा स्यात् इति कोशकाराः । स्यादपि । अत्र तु मस्तिष्कमिति करोटिरुच्यते ॥ ६५–६ ॥ अयुद्ध्यति । तस्य युद्धमिवायुद्धमपि परोत्कर्षायेति परस्मैभाषा ॥ ६७ ॥ निजेषु वीरेषु सङ्घशः सङ्घेषुसङ्घेषु हतेषु । अवशिष्टेषु च सङ्घशो विद्रावितेषु । बाहुल्यवचनो वा सङ्घशब्दः । सङ्घशो बाहुल्येन हतेषु । लुड विलोडने । लुडितमेव लुळितम्, कान्दिशीकमित्येतत् । **'हा विषादे च शोके च कुत्सादुःखार्थयोरपि'** इत्यभिधानम् । उप समीप एवेक्षितः । अथाप्यवज्ञया ग्रहीतुमप्रयत्योपेक्षितस्त्वया ॥ ६८ ॥ महा-मन्त्रः नारायणवर्माख्या हयग्रीवब्रह्मविद्या । बलेन आत्मप्रत्ययेन । बाहुबलेन । सैन्येन च । सैन्यबलेन वा । बलमिह सामर्थ्यम् । विरुध्यसे विरुन्त्से । यद्यपि वैयाकरणाः दिवादौ **'अनो रुध कामे'** इति पठन्ति । तेनानुरुध्यसे इत्यनुपूर्वमेव

---

१. **'–मस्तिस्को भविष्यसि'** २. **'–लुलिते'** ३. **'दीन उवाच'** इति क्वचित् । ४. **'इतीरितोऽभेद्य–'**

**इतीरितो धार्त्तराष्ट्रः स चापमादाय सौवर्ण्णरथोपरिस्थः[1] ।**
**जगाम पार्त्थं तमवारयच्च शरैरनेकैरनलप्रकाशैः** ॥ ७० ॥

**विव्याध पार्त्थोऽपि तमुग्रवेगैः शरैर्न्न ते तस्य च वर्म्मभेदम्[2] ।**
**चक्रुस्ततो वासविर्दिव्यमस्त्रं तद्वर्म्मभेदाय समाददे रुषा** ॥ ७१ ॥

**सन्धीयमानं तु गुरोः सुतस्तच्चिच्छेद पार्त्थोऽथ सुयोधनाश्वान् ।**
**हत्वा [3]तळेऽविद्धयदथैनमुग्रैर्द्रौणिः शरैः पार्त्थमवारयद् युधि** ॥ ७२ ॥

**स द्रौणिकर्ण्णप्रमुखैर्द्धनञ्जयो युयोध ते चैनमवारयञ्छरैः ।**
**बभूव युद्धं तदतुल्यमद्भुतं जयद्रथार्त्थेऽद्भुतवीर्य्यकर्म्मणाम्** ॥ ७३ ॥

**पार्त्थे प्रविष्टे कुरुसैन्यमद्ध्यं द्रोणोऽविशत् पाण्डवसैन्यमाशु ।**
**स तद्रथानीकमुदग्रवेगैः[4] शरैर्विधूय न्यहनच्च वीरान्** ॥ ७४ ॥

**स वीरवर्य्यः स्थविरोऽपि यूनां युवेव मद्ध्ये प्रचचार धन्विनाम् ।**
**प्रपातयन् वीरशिरांसि बाणैर्य्युधिष्ठिरं चाऽसददुग्रवीर्य्यः** ॥ ७५ ॥

---

रूपमनुमन्यन्ते । नतु विरुध्यसे इति विपूर्वम् । ते पुनरत्र वैयाकरणपाशाः प्रतिबोधनीयाः **'वेः रुध अकामे'** इति च पठनीयमिति । हीति दुर्योधनाक्षेपेण व्यथितमनाः सासूयमाह । **'हि पादपूरणे हेतौ विशेषेऽप्यवधारणे । प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि'** इत्यभिधानम् ॥ ६९ ॥ चापयति विरोधं शमयतीति चापश्चापं वा । चपस्य वंशप्रभेदस्य विकारश्चाप इति च निर्वदन्ति ॥ ७० ॥ वर्मभेदमपि न चक्रुः । किं पुनः शरीरभेदम् । समालोच्य आददे ॥ ७१ ॥ अथ तस्मात् मन्त्रपूतस्याप्यस्त्रस्य गुरोः सुतेन च्छेदात् । पुनः प्रयोगस्याशक्यत्वात् । **'नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन । अस्त्रं मामेव हन्याद्धि हन्याच्चापि बलं मम'**[द्रो.प.१०३.२४] इति ह्यर्जुनवचनम् । अथ दुर्योधनस्य सर्वतो वर्मावृतत्वात् वेद्धुमवकाशान्तरमपश्यन् एनं दुर्योधनं हस्ततळद्वयेऽविध्यत् । **'अविध्यद्धस्ततळयोरुभयोरर्जुनस्तदा'** [१०३.३०] इति च । **'तळे'** इति द्विवचनान्तं वा पदम् । असकृदविध्यदिति सूचनायाप्रगृह्य प्रयुयोज । तदा **'अथैनम्'** इत्युत्तरान्वयि । अथ दुर्योधने धनञ्जयशरार्दिते, कृच्छ्रामापदं प्राप्ते, एनं पार्थम् ॥ ७२–३ ॥ **'अनीकोऽस्त्री रणे सैन्ये'** इत्यभिधानम् ॥ ७४ ॥ प्रपातयन् प्रसभं सत्वरं निर्दयं च पातयन् ॥ ७५ ॥

---

१. **'–परिस्थितः ।'** २. **'वर्मभेदनम् ।'** ३. **'तलेऽवि–'** ४. **'–मुदारवैगैः'**

**नृपग्रहेच्छुं तमवेत्य सत्यजिन्यवारयद् द्रौपदिराशु वीर्य्यवान् ।**
**निवारितस्तेन शिरः शरेण चकर्त्त पाञ्चालसुतस्य विप्रः ॥ ७६ ॥**

**निहत्य तं वीरतमं[1] रणोत्कटं युधिष्ठिरं बाणगणैः समार्द्दयत्[2] ।**
**स शक्तितस्तेन विधाय सङ्गरं निरायुधो व्यश्वरथः कृतः क्षणात् ॥ ७७ ॥**

**स ऊर्ध्वबाहुर्भुवि संस्थितोऽपि [3]गृहीतुमाजौ गुरुणाऽभिपन्नः ।**
**माद्रीसुतस्यावरजस्य यानमारुह्य वेगादपजग्मिवांस्ततः ॥ ७८ ॥**

**द्रोणं ततः शैशुपालिः सपुत्रो जारासन्धिः काशिराजः सशैव्यः[4] ।**
**समासदन् कैकयाश्चैव पञ्च समार्द्दयन्[5] बाणगणैश्च सर्वशः[6] ॥ ७९ ॥**

---

द्रौपदिर्द्रुपदात्मजः सत्यजित् । अयं द्वादशदिवसयुद्धे हत इति प्रचलितो भारतपाठः । **'स सत्यजितमालोक्य तथोदीर्णं महाहवे । अर्धचन्द्रेण चिच्छेद शिरस्तस्य महात्मनः'** [द्रो.प.२१.२१] इति संशप्तकवधे ॥ ७६–७ ॥ माद्रीसुतस्यावरजस्य सहदेवस्य । **'ततस्त्वरितमारुह्य सहदेवरथं नृपः । अपायाज्जवनैरश्वैः कुन्तीपुत्रो युधिष्ठिरः'** [१०६.४६] इति च ॥ ७८ ॥ शैशुपालिर्धृष्टकेतुः सपुत्रः । **'धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः । वधायाभ्यद्रवद् द्रोणं पतङ्ग इव पावकम्'** [१२६.२६] इति । **'अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् । तमपि प्रहसन् द्रोणः शरैर्निन्ये यमक्षयम्'** [४०] इति च । जारासन्धिः सहदेवः । **'जरासन्धसुतो वीरः स्वयं द्रोणमुपाद्रवत्'** [४२] इति, **'जारासन्धिं जघानाऽशु मिषतां सर्वधन्विनाम्'** [४५] इति च । काशिराजः प्रायः काळीपिता । **'काशिराजश्च वीर्यवान्'** इति गीतायां गीतः । **'काश्यश्च परमेष्वासः'** इति च । शैव्यः केकयाधिपतिः पञ्चकैकेयानां भद्रायाश्च पिता । **'शैव्यश्च नरपुङ्गवः'** इति गीतोक्तः । सम्प्रति भारतपाठे एतेषामुल्लेखो न दृश्यते । अयं च प्रचलितो भारतपाठः– **'चेदयश्च महाराज सृञ्जयाः काशिकोसलाः । अभ्यद्रवन्त संहृष्टा भारद्वाजं युयुत्सया'** [१२६.५३] इति, **'यतमानांस्तु तान् वीरान् भारद्वाजः शिलीमुखैः । यमाय प्रेषयामास–'** इति च । अयं सम्भावितः प्राचीनपाठः–**'कैकयाः पञ्च राजेन्द्र शैव्यः काशीशकौसलौ । अभ्यद्रवन्त संहृष्टाः–'** इति । केकयस्य अपत्यानि कैकयाः । **'केकयमित्रयुप्रळयानां यादेरियः'** इति इयादेशो नाऽश्रितः । कैकयीतिवत् । पञ्चानां कैकयानां वधश्च स्त्रीपर्वणि उल्लिखितः–**'तथैव निहताः शूराः शेरते रुचिराङ्गदाः । द्रोणेनाभिमुखाः सङ्ख्ये भ्रातरः पञ्च केकयाः'** [स्त्रीप.२५.१५] इति स्त्रीविलापे गान्धारीवचनम् । एवं विक्षिप्य मूले कथितां कथां स्थाने सञ्जग्राह कृपया भगवानाचार्यः । सर्वशः सर्वे । सर्वात्मना च ॥ ७९ ॥

---

१. 'वीरतमो रणो–' २. 'समर्दयत् । स्वशक्ति–' ३. '–तोऽपि ग्रहीतु–'
४. 'सशैव्यः ।' ५. 'समर्दयन्' ६. 'सर्वतः ।'

**स तान् क्रमेणैव निकृत्तकन्धराञ्छरोत्तमैरत्र[1] विधाय विप्रः ।**
**'निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः' ॥ ८० ॥**

**विधूयमाने गुरुणोरुसैन्ये पृथासुतानां पृतनाः परेषाम् ।**
**प्रायो रणे मारुतसूनुनैव हतप्रवीरा मृदिताः पराद्रवन् ॥ ८१ ॥**

**अलम्बुसो नाम तदैव राक्षसः समासदन्मारुतिमुग्रपौरुषम् ।**
**स पीडितस्तेन शरैः सुतेजनैः क्षणाददृश्यत्वमवाप मायया ॥ ८२ ॥**

**सोऽदृश्यरूपोऽनुचरानपीडयद् भीमस्य तद् वीक्ष्य चुकोप मारुतिः ।**
**अस्त्रज्ञतामात्मनि केशवाज्ञया सन्दर्शयन्नागतधर्म्मसङ्कटः ॥ ८३ ॥**

**त्वाष्ट्रास्त्रमादत्त स काम्यकर्म्महीनोऽपि भीमस्तत उत्थिताः शराः ।**
**ते बाणवर्य्यास्तददृश्यवेधिनो रक्षो विदार्य्याऽविविशुर्द्धरातळम्[2] ॥ ८४ ॥**

**परं लोकं निनाय ॥ ८०–११८ ॥**

निनाय परं लोकम्, यमूर्ध्वरेतसः अर्कमण्डलं निर्भिद्य व्रजन्ति । **'निनाय–'**[भाग.४.११.३५] इत्युत्तरार्धं समग्रं व्यास-वचनम् ॥ ८० ॥ पृथासुतानामुरुसैन्ये । परेषां पृतनाः । सैन्य इत्येकवचनेन तस्यैकमत्यमाह । पृतना इति बहुवचनेन तासामनैकमत्यं विक्षिप्ततां च । प्रायो बाहुल्येन ॥ ८१ ॥ अलम्बुसो नाम । **'भीमसेनं तदा क्रुद्धं भीमरूपो भयानकः । प्रत्यवारयदायान्तमाशर्यशृङ्गिर्महाबलः'**[द्रो.प.१०६.१६] इति च । **'अलम्बुसस्तु समरे भीमसेनं महाबलम् । योधयामास सङ्क्रुद्धो लक्ष्मणं रावणिर्यथा'** [१०८.१३] इति च। **'बको नाम सुदुर्बुद्धे राक्षसप्रवरो बली । परोक्षं मम तद् वृत्तं यद् भ्राता मे हतस्त्वया । एवमुक्त्वा ततो भीममन्तर्धानं गतस्तदा'** [२३] इति च। स पीडितस्तेन भीमेन । सुतेजनैरतिनिशितैः । सुष्ठु तेजयन्तीति । तिज निशाने ॥ ८२ ॥ भीमस्यानुचरानपीडयत् । **'सा राक्षस-विसृष्टा तु शरवृष्टिः सुदारुणा । जघान पाण्डुपुत्रस्य सैनिकान् रणमूर्धनि'** [३०] इति च॥ ८३ ॥ **'ततः क्रोधाभिताम्राक्षो निर्दहन्निव पावकः । सन्दधे त्वाष्ट्रमस्त्रं स स्वयं त्वष्टेव मारुतिः'** [३८] इति च । काम्यकर्महीनोऽपि आत्मनोऽस्त्रज्ञतां स्फुटमज्ञानामपि दर्शयितुम्, अनुचररक्षारूपं काम्यमपि कर्म कृपालुना कर्तव्यमिति समेषामपि दर्शयितुं च। हीनोऽपीत्यपिशब्दः गर्हां सम्भावयति । यद्यपि कामनयाऽस्त्रादानं गर्हितमिव भाति अथापि केशवाज्ञयाऽनुचररक्षार्थं च त्वाष्ट्रास्त्रमादत्तेति विरोधमाभासयति । 'जितकामोऽपि चुक्रोध' इतिवत् । **'अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये । तथा**

१. **'–त्तमैस्तत्र'**

२. **'–तलम् ।'**

**तद्धन्यमानं प्रविहाय भीममपाद्रवद् दूरतरं सुभीतम् ।**
**ततस्तु भीमो द्विषतां वरूथिनीं विद्रावयामास शरैः सुमुक्तैः ॥ ८५ ॥**

**तदैव कृष्णातनयाः समेता जघ्नुः शलं संयति सौमदत्तिम् ।**
**अलम्बुसं प्राप तदा घटोत्कचः परस्परं तौ रथिनावयुद्ध्यताम् ॥ ८६ ॥**

**घटोत्कचस्तं विरथं विधाय खस्थं ख एवाभियुयोध संस्थितः ।**
**ततस्तु तं भीमसुतो निगृह्य निपात्य भूमौ प्रददौ प्रहारम् ॥ ८७ ॥**

**पदा शिरस्येव स पिष्टमस्तको ममार मद्ध्ये पृथिवीपतीनाम् ।**
**तस्मिन् हते भैमसेनिः कुरूणां व्यद्रावयद् रथवृन्दं समन्तात् ॥ ८८ ॥**

**तदाऽऽसदत् कृतवर्म्मा रथेन सेनां पाण्डूनां शरवर्षं प्रमुञ्चन् ।**
**ददौ वरं तस्य हि पूर्वमच्युतः प्रीतः स्तुत्या सर्वजयं मुहूर्त्ते ॥ ८९ ॥**

**स तेन पाञ्चालगणान् विजिग्ये यमौ च भीमस्य पुरोऽथ तं च ।**
**विव्याध बाणेन स वासुदेववरं विजानन् न तदा समभ्ययात् ॥ ९० ॥**

---

**युक्तपदार्थे च कामचारक्रियासु च'** इत्यभिधानम् । शराः शत्रुविशरणशीलाः अदृश्यस्यापि वेधिनो भेदका बाणवर्याः । अदृश्यवेधिनो भीमस्य वा बाणवर्याः । तद् रक्षः । **'तदस्त्रं प्रेरितं तेन भीमसेनेन संयुगे । राक्षसस्य महामायां हत्वा राक्षसमार्दयत्'** [४०] इति च ॥ ८४ ॥ प्रविहाय । प्रतिपक्षगतेषु सर्वेषु प्रेक्षमाणेषु प्रहसत्सु च विहाय भीमं विहाय च लज्जामपाधावत् । पूर्वमेव भीतो माययाऽदृश्यो भूत्वा दूरं जगाम । सम्प्रति तु, अदृश्यस्यापि वेधेन सुभीतो दूरतरं द्रुतमपदुद्रावेति सुन्दरम् । ततस्तु । तुना राक्षसापगमेन भीमस्य युद्धे निरायासतामाह । विक्रीडमान इव विकटं विजित्य विधूय द्रावयामास । सुमुक्तैः सुखेन मुक्तैः ॥ ८५ ॥ कृष्णातनयाः समेताः । श्रुतकीर्तिर्हयान् शलस्य जघान । सुतसोमो धनुश्चकर्त । प्रतिविन्ध्यो ध्वजम् । शतानीको यन्तारं जघान । श्रुतकर्मा शलस्य शिरो जहारेति समेताः ॥ ८६ ॥ समानतया स्थितः संस्थितः । खे सम्मुखे स्थितः संस्थितः ॥ ८७ ॥ पिष्टमस्तकः । **'घटोत्कचेन निष्पिष्टो हतः सालकटङ्कटः'** [१०९.७५] इति च । सालकटङ्कट इति तस्यैव नामान्तरम् । युद्धे सालकटं तरुवृष्टिमपि कटति आवृणोतीति सालकटङ्कटः । कटे वर्षणावरणयोः ॥ ८८–९ ॥ **'पाञ्चाला विगतोत्साहा भीमसेनपुरोगमाः । विक्रम्य वारिता राजन् वीरेण कृतवर्मणा'** [११३.७३] इति च । विना विष्णुना कृष्णरूपेण, तद्वरेणेति यावत्, ईर्यते, अत्र

विनैव वृष्णीन् विजये वरो यदमुष्य तेनास्य हयान् स सात्यकिः ।
निहत्य बाणैरतुदत् स यानमन्यत् समास्थाय ततोऽपजग्मिवान् ॥ ९१ ॥

तदा हरिः पाञ्चजन्यं सुघोषमापूरयामास जयेऽभियुद्ध्यति ।
कर्ण्णादिभिर्द्रौणिमुखै रिपूणां बलप्रहाणाय परः परेभ्यः ॥ ९२ ॥

'स पाञ्चजन्योऽच्युतवक्त्रवायुना भृशं सुपूर्ण्णोदरनिस्सृतध्वनिः ।
जगद् विरिञ्चेशसुरेन्द्रपूर्वकं प्रकम्पयामास युगात्यये यथा' ॥ ९३ ॥

गाण्डीवघोषे च तदाऽभिभूते युधिष्ठिरो भीतभीतस्तदेत्य[१] ।
शैनेयमूचे परसैन्यमग्ने पार्त्थे स्वयं युद्ध्यति केशवः स्म ॥ ९४ ॥

न श्रूयते [२]गाण्डीवस्याद्य घोषः संश्रूयते पाञ्चजन्यस्य घोषः[३] ।
तद् याहि जानीहि तमद्य पार्त्थं यदि स्म जीवत्यसहाय एषः ॥ ९५ ॥

---

च युद्धे विशेषसन्निधानेनेर्यत इति वीरपदस्य गूढाभिसन्धिः । अथ तं भीमं च । **'जित्वा पाण्डुसुतान् युद्धे भीमसेनपुरोगमान् । हार्दिक्यः समरेऽतिष्ठद् विधूम इव पावकः'** [११४.१०२] इति च ॥ ९०–१ ॥ जयेऽर्जुने कर्णादिभिरभितो युध्यति । तेषां बलप्रहाणाय परेभ्यः परो हरिः पाञ्चजन्यमापूरयामास स्वत इतरशङ्खेभ्यः सुघोषमधिकघोषम् । श्रुतिसुभग ओङ्कारघोषश्च यस्य । अथच आ समन्तात् अधिकं पूरयामास ॥९२॥ तदेव स्फुटमाहोत्तरपद्येन । **'स पाञ्चजन्यः–'** [द्रो.प.७३.५८] इति समग्रं व्यासवचनम् । भृशं सुपूर्णादुदरान्निःसृतो ध्वनिर्यस्य । भृशं सुपूर्णः पाञ्चजन्यः । तेन दरनिःसृतध्वनिः ईषन्निःसृतध्वनिः प्रकम्पयामासेति वा । पूर्णः देवारिनारीणां गर्भं दारयति । सुपूर्णः देवानपि कम्पयति । भृशं सुपूर्णः ब्रह्मादीनपि प्रकामं कम्पयतीति । सम्प्रत्युत्तरार्धं किञ्चिदन्यथा पठ्यते– **'जगत् सपाताळवियद्दिगीश्वरं प्रकम्पयामास युगात्यये यथा'** इति ॥ ९३ ॥ केशवो युध्यति स्मेति सम्भवनायाम् । मन्ये केशवो युध्यत इति । स्वयं कर्तव्यहीनोऽप्यस्मदर्थे युद्ध्यतीति परस्मैभाषा ॥ ९४ ॥ न श्रूयते गाण्डीवस्याद्य घोषः । यद्यपि **'गाण्डिवस्याद्य घोषः'** इति प्रचलितः पाठ उत्तरपादानुगुण्येन च्छन्दोऽनुगुण इति भाति । वस्तुतस्तु तथा पाठेऽपि भवत्येव च्छन्दोभङ्गः । जगणस्थाने तगणस्यैव श्रवणात् । तेन च्छन्दोभङ्गभीरवः–'न श्रूयते गाण्डिवकस्य घोषः' इति पठेयुः । भगवानाचार्यस्तु न च्छन्दोभङ्गभीरुः । प्रत्युतार्थविशेषलाभाय, च्छन्दसि च लयविशेषलाभाय स्वच्छन्दं च्छन्दांसि भिनत्तीति सुविदितम् । सम्प्रति च छन्दो भित्त्वा **'गाण्डीवस्य'** इति दीर्घमाकृष्योच्चारणेन धर्मराजस्य चिन्ताप्रकर्षः प्रतीयते । चिन्ता-

---

१. **'–स्तदैत्य'** २. **'गाण्डिवस्याद्य'** ३. **'–जन्यस्य रावः ।'**

**इतीरितः सात्यकिरत्र विप्रान् सम्पूज्य वित्तैः परमाशिषश्च ।**
**जयाय तेभ्यः प्रतिगृह्य सेनामुखं ययौ भीमसेनानुयातः ॥ ९६ ॥**

**भीमस्तु सेनामुखमाशु भित्त्वा प्रावेशयद् युयुधानं चमूं ताम् ।**
**स युद्ध्यमानो गुरुणाऽभ्युपेक्षितः सूतं निहत्य द्रावयामास चाश्वान् ॥ ९७ ॥**

**बलं विवृद्धं च तदाऽस्य सात्यकेर्विप्राशीर्भिः कृष्णवरादपि स्म ।**
**बलस्य वृद्धिर्हि पुराऽस्य दत्ता कृष्णेन तुष्टेन दिने हि तस्मिन् ॥ ९८ ॥**

**ततो विवृद्धोरुबलात् स सात्यकिः संस्थाप्य भीमं प्रययौ रथेन ।**
**तं बाणवर्षैः पृतनां[१] समन्तान्निघ्नन्तमाजौ हृदिकात्मजोऽभ्ययात् ॥ ९९ ॥**

**तयोरभूद् युद्धमतीव दारुणं तत्राकरोत् तं विरथं स सात्यकिः ।**
**विजित्य तं सात्यकिरुग्रधन्वा ययावतीत्यैव शिरांसि यूनाम् ॥ १०० ॥**

**कृन्तन् शरैस्तं जलसन्ध आगमद् रणे गजस्कन्धगतोऽभियोद्धुम् ।**
**निवारयन्तं तमसँह्यविक्रमं निहत्य बाणैः समरे स सात्यकिः ॥ १०१ ॥**

---

कुलो हि दीर्घं प्रश्वसन् भणति । तथाचात्र चत्वारश्चरणाश्चतुर्विधाः । प्रथमचरणे तमताश्च गौ च । द्वितीये तततश्च गौ च । तृतीये ततजाश्च गौ च । तुरीये जतजाश्च गौ चेति । एवं प्रतिपादं च्छन्दोभेदेन युधिष्ठिरस्यार्जुनापायशङ्कया मनस आतङ्कातिशयमाह । आतङ्कितं हि मनो वाचमप्यातङ्कयति । संश्रूयते सकर्णताडं श्रूयते । आरादपि परिस्फुटं श्रूयते । यदि स्म जीवति उत नेति । स्मेति विकल्पे । असहायः अकारवाच्यकृष्णसहायः । अथापि सहायरहित इति भगवान् भ्रमो धर्मराजस्य ॥ ९५ ॥ **'आशीर्वादैः परिष्वक्तः सात्यकिः श्रीमतां वरः । कृतस्वस्त्ययनो विप्रैः कवची समलङ्कृतः'**[११२.६८] इति, **'तथैव भीमसेनोऽपि धर्मराजेन पूजितः । प्रायात् सात्यकिना सार्धमभिवाद्य युधिष्ठिरम्'** [११२.७२] इति च ॥ ९६ ॥ सेनामुखप्रवेशानन्तरं धर्मराजरक्षार्थं भीमः प्रतिनिवृत्तः । तेन ज्ञायते सेनामुखभेदनेन सात्यकेः परचमूप्रवेशनमेव भीमानुगमनकारणमिति । फलितमाह– भीमस्तु । स सात्यकिः । गुरुणा युध्यमानः । किमयं बालः कुर्यादिति गुरुणाऽभ्युपेक्षितः । स्वगुरोरर्जुनस्यापि गुरुणा ॥ ९७–८ ॥ संस्थाप्य धर्मराजसंरक्षणार्थं स्थापयित्वा ॥ ९९ ॥ विजित्य तमतीत्यैव । एवकारेणानायासेनेत्याह । शिरांसि यूनां कृन्तन् ॥ १०० ॥ तदा जलसन्धस्तमभियोद्धु-

---

१. **'पृतनां परेषां निघ्नन्त–'** इति कचित् ।

**विलोळयामास[१] बलं कुरूणां निघ्नन् गजस्यन्दनवाजिपत्तिनः ।**
**स पार्वतीयांश्च[२] शिलाप्रवर्षिणो निहत्य विद्राप्य[३] च सर्वसैनिकान् ॥ १०२ ॥**

**समासदत् केशवफल्गुनौ च बली [४]तमाराऽशु च यूपकेतुः ।**
**तयोरभूद् युद्धमतीव घोरं चिरं विचित्रं च महद् विभीषणम् ॥ १०३ ॥**

**परस्परं तौ तुरगान् निहत्य निपात्य सूतौ धनुषी निकृत्य ।**
**समीयतुश्चर्म्ममहासि[५]धारिणौ विचित्रमार्ग्गान् युधि सञ्चरन्तौ[६] ॥ १०४ ॥**

**स सौमदत्तिर्भुवि सात्यकिं रणे निपात्य केशेषु च सम्प्रगृह्य[७] ।**
**पदाऽस्य वक्षस्यधिरुह्य खड्गमुदग्रहीदाशु शिरोऽपहर्त्तुम् ॥ १०५ ॥**

---

मागमत् । जलसन्धः कश्चिन्मगधवीरः ॥ १०१ ॥ गजस्यन्दनवाजिपत्तीनिति वक्तव्ये पत्तिन इत्याह । तदा तु छन्दश्च सुकृतमभविष्यत्– पूर्वार्धे त्रैष्टुभमुत्तरार्धे जागतमिति । अथापि पत्तिन इत्याह । तेनाक्षराधिक्येनोद्वेलोऽयमतिमात्रः संहार इत्याह । अथ कथं रूपोपपत्तिः? नायमिदन्तः पत्तिशब्दः । इन्नन्तोऽयं पत्तिन्शब्द इति गृहाण । तथाहि प्रयुञ्जते पूर्वे– **'पत्तिनो भुवि चैकस्य गोपस्याल्पबलीयसः'** इत्यादि । **'पदातिनं तु कौन्तेयम्–'** [द्रो.प.१००.४] इति च भारते । इदिन्नन्तयोः प्रयोगसङ्करश्च प्रायो दृश्यते । तद्यथा क्षेत्रज्ञसाक्षिणोरिति वक्तव्ये क्षेत्रज्ञसाक्ष्योरिति प्रयुञ्जते । गलिकेशिनोरिति वक्तव्ये **'अथ हतयोर्गलिकेश्योः'** इति प्रयुञ्जते । नृकेसरिणमिति वक्तव्ये नृकेसरिमिति प्रयुञ्जते । इत्यादीनामिति वक्तव्य इत्यादिनामिति । यतीनामिति वक्तव्ये यतिनामिति । **'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्'** [अ.सू.२.४.२] इति स्मरणात् गजानां स्यन्दनानां वाजिनां पत्तीनां च समाहारः गजस्यन्दनवाजिपत्ति । तस्य तदात्मकस्य सैन्यस्य बलं सामर्थ्यं निघ्नन्निति प्रियव्याकरणैः सन्तोष्टव्यमिति प्राचीनटीकाकाराः । पार्वतीयांश्चेति । **'पार्वतीयाश्च राजानः सर्वे पाषाणयोधिनः । अभ्यद्रवन्त शैनेयं राजानमिव मन्त्रिणः'** [१२१.३५] इति च । वैयाकरणास्तु पर्वतात् छप्रत्ययं पठन्ति । तदा पर्वतीया इति स्यात् । अनेनैव ज्ञापकेन पर्वताच्छणपि वक्तव्य इत्युक्तम् । प्रयोगशरणा हि वैयाकरणाः ॥ १०२ ॥ समासदत् । **'अथ पार्थं महाबाहुर्धनञ्जयमुपासदत्'** [१४१.१३], **'तं दृष्ट्वा पुरुषव्याघ्रं युयुधानः समाश्वसत्'** [१४], **'तमायान्तमभिप्रेक्ष्य केशवः पार्थमब्रवीत्'** [१५], **'तव प्राणैः प्रियतमः किरीटिन्नेति सात्यकिः'** [१७] इति च । तमाराऽशु च यूपकेतुः । यूपाङ्कितोऽस्य ध्वज इति यूपकेतुर्भूरिश्रवाः । **'तमापतन्तं सम्प्रेक्ष्य सात्वतं युद्धदुर्मदम् । क्रोधाद् भूरिश्रवा राजन् सहसा समुपाद्रवत्'** [१४२.१] इति च । अस्त्रजालघोरम् । दर्शनमात्रतोऽपि विभीषणम् । महतामपि वीराणां विभीषणमित्येकपदं वा ॥ १०३ ॥ शिक्षापाटवेन प्रत्यर्थिनं वञ्चयितुं मार्गं व्यत्यस्य चरणं सञ्चरणम् ॥ १०४ ॥ निपात्य निहत्य पातयित्वा । **'हाहाकारो महानासीत् सैन्यानां भरतर्षभ । यदुद्यम्य महाबाहुः**

---

१. **'विलोडयामास'** २ **'पार्वतेयांश्च शिलाभिवर्षिणो–'** ३. **'विद्राव्य च'** ४. **'तमाराथ च'**
५. **'–र्मवरासि–'** ६. **'–मार्गानपि दर्शयन्तौ ।'** ७. **'च तं प्रगृह्य'** इति क्वचित् ।

**तद् वासुदेवस्तु निरीक्ष्य विश्वतश्चक्षुर्जगादाऽशु धनञ्जयं रणे ।**
**त्रायस्व शैनेयमिति स्म सोऽपि भल्लेन चिच्छेद भुजं परस्य ॥ १०६ ॥**

**स तेन चोत्कृत्तसखड्गबाहुर्विनिन्द्य पार्थं निषसाद भूमौ ।**
**प्रायोपविष्टः शरसंस्तरे हरिं द्धयायन् विनिन्दन्नसुरप्रवेशात् ॥ १०७ ॥**

**गतेऽसुरावेश उतातिभक्त्या द्धयायत्यमुष्मिन् गरुडध्वजं तम् ।**
**शैनेय उत्थाय निवार्य्यमाणः कृष्णार्ज्जुनाद्यैरहरच्छिरोऽस्य ॥ १०८ ॥**

**तदा स्वकीयं रथमेतदर्थं क्लृप्तं ददौ सात्यकये ससूतम् ।**
**कृष्णोऽथ पार्थस्य हयास्तृषाऽर्दितास्तदाऽसृजद् वारुणास्त्रं स पार्थः ॥ १०९ ॥**

---

**सात्यकिं न्यहनद् भुवि '** [१४२.५५] इति च । शिरस्त्रस्य गलनेन विकीर्णकेशतया गले निस्त्रिंशपातनसौकर्याय केशेषु सम्प्रगृह्य । नियमनार्थं ग्रहणं प्रग्रहणमामनन्ति । परितः प्रकीर्णानां समूह्य ग्रहणं सम्प्रग्रहणम् । संहाराय प्रसभं ग्रहणं सम्प्रग्रहणम् । सम्प्रहाराय ग्रहणं सम्प्रग्रहणम् । पदा वक्षस्यधिरुह्य वक्षसि पदं निधाय । ऊर्ध्वमग्रहीत् ॥ १०५ ॥ विश्वतश्चक्षुस्तत् तत्र तदानीं निरीक्ष्येति विस्मयते । भल्लेन क्षुरप्रेण । परस्य शैनेयशत्रोः भूरिश्रवसः । **'ततः क्षुरप्रं निशितं गाण्डीवे समयोजयत् । पार्थबाहुविसृष्टः स महोल्केव नभश्च्युता । सखड्गं यज्ञशीलस्य बाहुं दक्षिणमच्छिनत्'** [१४२.८६] इति च ॥ १०६ ॥ हरिं नारायणं ध्यायन्, अथाप्यसुरप्रवेशात् हरिं कृष्णात्मनाऽवतीर्णं विनिन्दन् । मनसा ध्यायन् । वाचा विकृतं निन्दन् । ननु यन्मनसा चिन्तयन्ति तदेव वदन्ति । तत् कुत एतत्? आह–वागिन्द्रिये तस्यासुरप्रवेशादिति । यद् दध्यौ तद् यूपकेतुर्दध्यौ । यद् विनिनिन्द तदसुरो विनिनिन्द । ध्यानफलं यूपकेतुमाप । विनिन्दाफलमसुरम् । दृश्यन्ते हि लोकेऽपि वाचा विष्णुस्तुतिं पठन्तः मनसा पुनरन्यदेव किमपि चिन्तयन्तः । **'अल्पस्तवापराधोऽत्र न त्वां तात विगर्हये । वार्ष्णेयापसदं प्राप्य क्षुद्रं कृतमिदं त्वया'** [१४३.१४] इति । अथच हरिं ध्यायन् प्रायोपविष्टः । **'एवमुक्तो महाबाहुर्यूपकेतुर्महायशाः । युयुधानं समुत्सृज्य रणे प्रायमुपाविशत् । शरानास्तीर्य सव्येन पाणिना पुण्यलक्षणः । यियासुर्ब्रह्मलोकाय प्राणान् प्राणेष्वथाजुहोत् । सूर्ये चक्षुः समाधाय प्रसन्नं सलिले मनः । ध्यायन्महोपनिषदं योगयुक्तोऽभवन्मुनिः'** [१४३.३७–९] इति च । महोपनिषदं नारायणोपनिषदं ध्यायन्नित्यर्थः ॥ १०७ ॥ अतिभक्त्या वाचा च हरिगुणान् व्याहरन्, मनसा च ध्यायन् । पूर्वमेव भक्तिरासीत्, गतेऽसुरावेशे साऽतितरां व्यक्ता बभूवेत्यर्थः । तं कृष्णमेव गरुडध्वजं ध्यायति । मामेति निषिध्य सर्वैः समेत्य वार्यमाणः । कृष्णा-र्जुनाद्यैरिति– **'वार्यमाणः स कृष्णेन पार्थेन च महात्मना । भीमेन चक्ररक्षाभ्यामश्वत्थाम्ना कृपेण च'** [१४३.६६] **'प्रायोपविष्टस्य रणे पार्थेन च्छिन्नबाहुनः । सात्यकिः कौरवेयस्य खड्गेनापाहरच्छिरः'** [६८] इति च ॥ १०८ ॥ स्वकीयं रथमेदतर्थं सात्यकिरक्षणार्थं क्लृप्तम् । **'पूर्वमेव हि कृष्णस्य मनोगतमिदं प्रभो । विजेतव्यो यथा वीरः**

**तेनैव तीर्थं परमं चकार तथाऽश्वशालामपि बाणरूपाम् ।**
**ततो विमुच्यात्र हयानपाययद्धरिस्तदा वासविरार्दयत् परान्** ॥ ११० ॥

**युयोज कृष्णस्तुरगान् रथे पुनर्गतश्रमानुद्धृतसायकान् प्रभुः ।**
**प्रचोदिते तेन रथे स्थितः पुनस्तथैव बीभत्सुररीनयोधयत्** ॥ १११ ॥

**शिनिप्रवीरे तु गते युधिष्ठिरः पुनश्च चिन्ताकुलितो बभूव ह ।**
**जगाद भीमं च न गाण्डिवध्वनिः सं श्रूयते पाञ्चजन्यस्य रावः** ॥ ११२ ॥

**मया नियुक्तश्च गतः स सात्यकिर्भारं च तस्याधिकमेव मन्ये ।**
**तत् पाहि पार्थं युयुधानमेव च त्वं भीम**[१] **गत्वा यदि जीवतस्तौ** ॥ ११३ ॥

---

**सात्यकिः सौमदत्तिना । अतीतानागते राजन् स हि वेत्ति जनार्दनः । ततः सूतं समाहूय दारुकं सन्दिदेश ह । रथो मे युज्यतां कल्यमिति राजन् महाबलः'** [१४५.२५–६] **'सात्यकिं विरथं दृष्ट्वा कर्णं चाभ्युद्यतं रणे । दध्मौ शङ्खं महानादमार्षभेणाथ माधवः । दारुकोऽवेत्य सन्देशं श्रुत्वा शङ्खस्य च स्वनम् । रथमन्वानयत् तस्मै सुपर्णोच्छ्रितकेतनम् । स केशवस्यानुमते रथं दारुकसंयुतम् । आरुरोह शिनेः पौत्रो ज्वलनादित्यसन्निभम्'** [२९–३१] इति च । अथेति उत्तरकथायाः भूरिश्रवोवधानन्तरभावित्वमाह । भारते तु पूर्वमुक्ता । तृषा अर्दिता इति भिन्ने पदे । तृषया अर्दिता वा । **'उदपानमिहाश्वानां नालमस्ति रणेऽर्जुन'** [९९.५९] **'इदमस्तीत्यसम्भ्रान्तो ब्रुवन्नस्त्रेण मेदिनीम् । अभिहत्यार्जुनश्चक्रे वाजिपानं सरः शुभम्'**[६०] इति च ॥ १०९ ॥ तीर्थं जलावतारः । ऋषिसेव्यं वा पवित्रं जलम् । बाणै रूप्यत इति बाणरूपां बाणनिर्मिताम् । बाणा एव रूपमस्येति बाणमयीं वा । **'कृते च शरवेश्मनि'** [१००.१] इति च ॥ ११० ॥ तेन रथे प्रचोदिते । कथं रथः प्रचोद्यते? प्रेरणं हि चोदनं चेतनधर्मः । सत्यम् । न रथश्चोद्यते । अश्वाश्चोद्यन्ते । अश्वगतं चोद्यमानत्वं रथेऽप्युपचर्यते । स्वनियन्त्रितगतिमत्त्वं वा चोद्यमानत्वम् । समानं तद्रथेऽपि । अश्वा अपि प्रतोदेन चोद्यन्त इति प्रचोदित इत्याह । प्रणयेन चोदनं च प्रचोदनम् । रथस्य च प्रधनाय चोदनम् । प्रमदेन चोदनम् । अनायासेन स्वाधीनतापादनमित्येतत् । तथैव यथा पूर्वम् ॥ १११ ॥ बभूव हेति धर्मराजस्य निरर्थिकां चिन्तामाक्षिपन् विस्मयते कुत्सयते च । **'ह स्यात् सम्बोधने पादपूरणे च विनिग्रहे । नियोगे च क्षिपायां स्यात् कुत्सायामपि दृश्यते'** इत्यभिधानम् । गाण्डिवध्वनिः नच नैव श्रूयते । पाञ्चजन्यस्य रावः सम्यक् स्फुटतरं श्रूयते । समिति विष्णोर्नाम । **'अकयप्रविसम्–'** इत्यादेः । **'ब्रह्मा देवानां प्रथमः सम्बभूव'** इत्यत्र **'सं बभूव विष्णोर्बभूव'** इति व्याख्यानाच्च । तेन सं पाञ्चजन्यस्य विष्णोः पाञ्चजन्यस्य रावः श्रूयत इति चार्थः ॥ ११२–३ ॥

---

१. **'–मेव त्वं भीम'**

इतीरितः प्राह वृकोदरस्तं न रक्षितं वासुदेवेन पार्थम् ।
ब्रह्मेशानावपि जेतुं समर्थौ किं द्रौणिकर्ण्णादिधनुर्भृतोऽत्र ॥ ११४ ॥

अतो भयं नास्ति धनञ्जयस्य न सात्यकेश्चैव[1] हरेः प्रसादात् ।
रक्ष्यस्त्वमेवात्र मतो ममाद्य[2] द्रोणो ह्ययं यतते त्वां गृहीतुम्[3] ॥ ११५ ॥

इतीरितः प्राह युधिष्ठिरस्तं न जीवमाने युधि मां घटोत्कचे ।
धृष्टद्युम्ने चास्त्रविदां वरिष्ठे द्रोणो वशं नेतुमिह प्रभुः क्वचित् ॥ ११६ ॥

यदि प्रियं कर्त्तुमिहेच्छसि त्वं मम प्रयाह्याशु च पार्थसात्यकी ।
रक्षस्व सञ्ज्ञामपि सिंहनादात् कुरुष्व मे पार्थशैनेयदृष्टौ ॥ ११७ ॥

तथा हते चैव जयद्रथे मे कुरुष्व सञ्ज्ञामिति[4] तेन भीमः ।
उक्तस्तु हैडिम्बममुष्य रक्षणे व्यधाच्च सेनापतिमेव सम्यक् ॥ ११८ ॥

स चाऽह सेनापतिरत्र भीमं प्रयाहि तौ यत्र च केशवार्ज्जुनौ ।
न जीवमाने मयि धर्षितुं क्षमो द्रोणो नृपं मृत्युरहं च तस्य ॥ ११९ ॥

इति ब्रुवाणे[5] प्रणिधाय भीमः पुनःपुनस्तं नृपतिं गदाधरः ।
ययौ परानीकमधिज्यधन्वा निरन्तरं प्रवपन्[6] बाणपूगान् ॥ १२० ॥

**तौ केशवार्जुनौ यत्र तत्र प्रयाहि ॥ ११९–२६ ॥**

---

न रक्षितं वासुदेवेन । **'ब्रह्मेशानेन्द्रवरुणानवहद्यः पुरा रथः । तमास्थाय गतौ कृष्णौ न तयोर्विद्यते भयम्'** [१२७–१] इति भीमवचनमनेन गदिताभिप्रायम् । न समर्थावित्यन्वयः ॥ ११४–७ ॥ हैडिम्बं च, सेनापतिं च धृष्टद्युम्नम् । सम्यगेव रक्षणे ॥ ११८ ॥ युधिष्ठिरजीवनं मानयति मयि जीवमाने जीवति सति । स्वस्य जीवनं तेन युधिष्ठररक्षणं च स्वस्यैव महान् लाभ इति जीवमान इत्याह । एवं पूर्वत्रापि । नृपं धर्षितुं द्रोणो न क्षमः । हेत्वर्थे चः । यतः मृत्यु-रहं तस्य द्रोणस्य । सम्भावनायां वा, अहं किल तस्य मृत्युः । धृष अप्रसहने । प्रसहन इत्यन्ये । धर्षयति धर्षति ॥ ११९ ॥ पुनःपुनः इति ब्रुवाणे धृष्टद्युम्ने नृपतिं प्रणिधाय, रक्षार्थं तद्धस्ते समर्प्येत्यर्थः । निधिवत् प्रच्छन्नं गोपनाय

---

१. **'–केश्चापि हरेः'** २. **'मयाऽद्य'** ३. **'ह्ययं त्वां यतते ग्रहीतुम् ।'**
४. **'सञ्ज्ञामपि तेन चोक्तः । भीमस्तु'** ५. **'ब्रुवाणं प्रणि–'** ६. **'प्रवमन्'**

न्यवारयत् तं शरवर्षधारो द्रोणो वचश्चेदमुवाच भीमम् ।
शिष्यस्नेहाद् वासविः सात्यकिश्च मया प्रमुक्तौ भृशमानतौ मयि ॥ १२१ ॥

स्वीया प्रतिज्ञाऽपि हि सैन्धवस्य गुप्तौ मया पार्थकृते विसृष्टा ।
दास्ये न ते मार्ग्गमहं कथञ्चिद् पश्यास्त्रवीर्यं मम दिव्यमद्भुतम् ॥ १२२ ॥

इत्युक्तवाक्यः स गदां समाददे चिक्षेप तां द्रोणरथाय भीमः ।
उवाच चाहं पितृवन्मानये त्वां सदा मृदुस्त्वां प्रति नान्यथा क्वचित् ॥ १२३ ॥

अमार्द्दवे पश्य च यादृशं बलं ममेति तस्याऽशु विचूर्ण्णितो रथः ।
गदाभिपातेन[1] वृकोदरस्य ससूतवाजिध्वजयन्त्रकूबरः ॥ १२४ ॥

द्रोणो गदामापततीं[2] निरीक्ष्य त्ववप्लुतो लाघवतो धरातळे[3] ।
तदैव दुर्य्योधनयापितं रथं परं समास्थाय शरान् ववर्ष ह ॥ १२५ ॥

शरैस्तदीयैः परमास्त्रमन्त्रितैः प्रवृष्यमाणो जगदीरणात्मजः ।
शिरो निधायाऽशु पुरो वृषो यथा तमभ्ययादेव रथादवप्लुतः ॥ १२६ ॥

---

निधानं प्रणिधानम् । प्रवपन् क्षेत्रे बीजानीव निबिडं निरन्तरं च निक्षिपन् ॥ १२०–१ ॥ सैन्धवस्य गुप्त्यर्थं कृता प्रतिज्ञा ॥ १२२ ॥ पितृवदिति । **'पिता नस्त्वं गुरुर्बन्धुस्तदा पुत्रा हि ते वयम् । इति मन्यामहे सर्वे भवन्तं प्रणताः स्थिताः । तदद्य विपरीतं ते वदतोऽस्मासु दृश्यते । यदि शत्रुं त्वमात्मानं मन्यसे तत् तथाऽस्त्विह । एष ते सदृशं कर्म शत्रोर्भीमः करिष्यति'** [१२७.६४–५] इति च ॥१२३॥ विश्लथाङ्गश्चूर्णितः । वृकोदरस्य गदाया अभिपातेन । एकैव गदा अभीक्ष्णं पपातेव । अभितः पपातेव । 'एष गदां पातयामि, रक्षाऽत्मानं यदि शक्नोषि' इत्यभिधाय पातनमभिपातनम् । अभ्यवस्कन्दाय पातनमभिपातनम् । अभ्यर्हितं पातनमभिपातनम् । यन्त्रं नियन्त्रणरज्जुः । निषदन-स्थानं वा । कूबरो युगन्धरः । 'ನೊಗ' इति भाषायाम् ॥ १२४ ॥ आपततीम्, आत्माभिमुखं पतन्तीम् । आत्मानमभिव्याप्य पतन्तीम् । स्ववाहनमाच्छाद्य पतन्तीम् । आरादेव पतन्तीम् । अथापि गुरुविषये ईषत्कृपावानेव पातयामासेति नुम्-लोपेन सूचयामास । निरीक्ष्य तु निरीक्ष्यैव व्यवधानमन्तरा । हेति वृद्धस्य गुरोर्लाघवं विस्मयते ॥ १२५ ॥ प्रकर्षेण निरन्तरं वृष्यमाणः । वृषो यथा । **'अंसे शिरो भीमसेनः करौ कृत्वोरसि स्थिरौ । वेगमास्थाय बलवान् मनोनिल-**

---

१. **'गदाभिघातेन'** २. **'गदामापतन्तीम्'** इति क्वचित् । ३. **'–तले ।'**

मनोजवादेव तमाप्य भीमो रथं गृहीत्वाऽम्बर[1] आक्षिपत् क्षणात् ।
शक्तोऽप्यहं त्वां न निहन्मि गौरवादित्येव सुज्ञापयितुं[2] तदस्य ॥ १२७ ॥

सवाजिसूतः स रथः क्षितौ पतन् विचूर्णितोऽस्माद् गुरुरप्यवप्लुतः ।
तदा विशोकोऽस्य रथं समानयत् तमारुहद् भीम उदारविक्रमः ॥ १२८ ॥

द्रोणोऽपि दुर्य्योधनदत्तमन्यं रथं समास्थाय युधिष्ठिरं ययौ ।
गृहीतुकामं[3] नृपतिं प्रयान्तं न्यवारयत् संयति वाहिनीपतिः ॥ १२९ ॥

विदारितां[4] द्रोणशरैः स्वसेनां संस्थाप्य भूयो द्रुपदात्मजः शरैः ।
द्रोणं निवार्य्यैव चमूं परेषां विद्रावयमास च तस्य पश्यतः ॥ १३० ॥

तयोरभूद् युद्धमतीव रौद्रं जयैषिणोः पाण्डवधार्त्तराष्ट्रयोः ।
अत्यद्भुतं सन्ततबाणवर्षमनारतं सुचिरं निर्विशेषम् ॥ १३१ ॥

**इति तदस्य (सु)ज्ञापयितुमेव ॥ १२७–९ ॥ [5]भीमो भयङ्करः द्रुपदात्मजः ॥ १३०–१४७ ॥**

---

**गरुत्मताम् । यथा हि गोवृषो वर्षं प्रतिगृह्णाति लीलया । तथा भीमो नरव्याघ्रः शरवर्षं समग्रहीत्'** [१२८. १६–७] इति च ॥ १२६ ॥ **'शक्तोऽपि नावधीत् कर्णं समर्थः पाण्डुनन्दनः'** [१३९.८९] इति वक्ष्यमाणमत्राप्यनुसन्धेयम्– **'शक्तोऽपि नावधीद् द्रोणं समर्थः पाण्डुनन्दनः'** इतीत्याह– शक्तोऽपीति । सुखेन ज्ञापयितुम् । ननु हिंसित्वा । स्फुटं ज्ञापयितुं च ॥ १२७ ॥ **'एवमष्टौ रथाः क्षिप्ता भीमसेनेन लीलया । व्यदृश्यत निमेषेण पुनः स्वरथमास्थितः'** [१२८.२२] इति च ॥ १२८ ॥ परस्परं समेत्य यतन्तेऽत्र विजयायेति संयत् सङ्ग्रामः । वाहिनीपतिः धृष्टद्युम्नः । नृपतिं गृहीतुकामम् । अत एव नृपतिं प्रयान्तम् ॥ १२९ ॥ भूयो बहुशः । सङ्कटान्निवार्य प्रोत्साहेन धैर्यं जनयित्वा स्थापनं संस्थापनम् । 'मा स्म निवर्तध्वम्' इति सम्बोध्य स्थापनं संस्थापनम् । शरैः द्रोणं निवार्यैव । द्रोणनिवारणेनैव सेना भीता पलायितुमारब्धा, अतस्तामनायासेन दूरं द्रावयामासेत्यर्थः । पलायने ऐकमत्यं चमूमित्येकवचनार्थः ॥ १३० ॥ तयोः धृष्टद्युम्नस्य द्रोणस्य च । जयैषिणोः पाण्डवधार्तराष्ट्रयोरिति व्यधिकरणे पदे । पाण्डवजयैषिणो धृष्टद्युम्नस्य । धार्तराष्ट्रजयैषिणो द्रोणस्य । अतीव सर्वाण्यन्यानि रौद्राण्यतिगतमिव । रौद्रमुग्रं रुद्रदैवतम् । **'स्याद् रौद्रो रुद्रदैवतः'** इति भरतः । अत्यद्भुतमतिविस्मयावहम् । **'विस्मयपर्यायोऽयमद्भुतशब्दः । यथाकथञ्चिद् व्युत्पत्तिः । तेन क उपपदार्थः, कोऽपि**

---

१. **'–म्बरमाक्षिपत्'** इति क्वचित् । २. **'सञ्ज्ञापयितुम्'** ३. **'ग्रहीतुकामम्'**
४. **'विद्रावितम्'** ५. एतेन ज्ञायते–**'संस्थाप्य भीमो द्रुपदात्मजः'** इति वे.ती.सम्मतः पाठ इति ।

**ततः प्रायाद् भीमसेनोऽमितौजा मृद्नञ्छरैः कौरवराजसेनाम् ।**
**विन्दानुविन्दप्रमुखा धार्त्तराष्ट्रास्तमासेदुर्द्वादश वीरमुख्याः ॥ १३२ ॥**

**विद्धः शरैस्तैर्बहुभिर्वृकोदरः शिरांसि तेषां युगपच्चकर्त्त ।**
**हतेषु तेषु प्रवरेषु धन्विनां सत्यव्रतः पुरुमित्रो जयश्च ॥ १३३ ॥**

**वृन्दारकः पौरवश्चेत्यमात्याः समासेदुर्धार्त्तराष्ट्रस्य भीमम् ।**
**स तैः पृषत्कैरवकीर्य्यमाणः [१]शितान् विपाठान् युगपत् समाददे ॥ १३४ ॥**

**जहार तैरेव शिरांसि तेषां हतेषु तेष्वेव परे प्रदुद्रुवुः ।**
**स सिंहवत् क्षुद्रमृगान् समन्ततो विद्राप्य[२] शत्रून् हृदिकात्मजं रणे ॥ १३५ ॥**

**अभ्यागमत् तेन निवारितः शरैः क्षणेन चक्रे विरथाश्वसूतम्[३] ।**
**स गाढविद्धस्तु वृकोदरेण रणं विसृज्यापययौ क्षणेन ॥ १३६ ॥**

---

**प्रकृत्यर्थः, कश्च प्रत्ययार्थ इत्यभिनिवेशो न कार्यः । अत्तीति अत् । क्विप्'** इति श्वेतवनवासी । **'अद्युपपदे भुवो धातोर्डुतच् प्रत्ययो भवति । भू सत्तायाम् । अत्पूर्वः । अद्भवति, अद्भूयते वा अद्भुतम्'** इति दशपादिकावृत्तिः [६. २२] । **'अदित्याश्चर्यार्थेऽव्ययम् । तस्य भवनम्'** इत्यन्ये । अदिभूभ्यां समुदिताभ्यां डुतजिति श्रीजयतीर्थमतम् । अथचैवं शक्यं निर्वक्तुम्– कश्चनापूर्वं भावविकारमत्ति अनुभवतीति अत् । तस्मिन्नदि भूतं सञ्जातं चित्तचक्षुषोर्विकसनमद्भुतमिति । अनारतमविश्रान्तम् । प्रायो नान्तोऽस्य विद्यत इति प्रेक्षकाणां सम्भ्रमजननात् सुचिरम् ॥ १३१ ॥ ततः द्रोणरथपातनानन्तरम् । भीमः परसेनामध्यं प्रविश्याऽयात् । द्वादश वीरमुख्याः । साम्प्रते भारतपाठेऽत्र भीमनिहता धार्तराष्ट्रा एकादशैव पठ्यन्ते– 'विन्दानुविन्दौ, कुण्डभेदी, सुषेणः, दीर्घलोचनः, वृन्दारकः, अभयः, रौद्रकर्मा, दुर्विमोचनः, सुवर्मा, सुदर्शनश्चेति । एकं नाम लिपिकृत्प्रमादेन लुप्तमिति भाति । **'क्वचिदन्तरितानपि कुर्युः'** । शरैस्तैर्बहुभिः । बहुभिः शरैः । बहुभिस्तैः ॥ १३२–३ ॥ अमात्या इति । एतन्नामानो दुर्योधनानुजा अपि सन्तीत्यमात्या इत्याह । पृषन्तः विद्धमरिमसृजा सिञ्चन्तः कषन्ति हिंसन्तीति पृषत्का बाणाः । विपाः गृध्रादयः अठन्ति परितोऽस्य मांसजिघत्सयेति विपाठाः नाराचविशेषाः । अठ गतौ । विपक्षान् विपन्नान् पाठयन्ति शासयन्तीति वा । **'विपाठक्षुरनाराचान् गृध्रपक्षैरलङ्कृतान्'** [आ.प.१३३.५४] इति सम्भवे । विपाठं विपाटं पठन्ति कोशकाराः ॥ १३४ ॥ तेष्वेव । एवेति परिभवे । **'एवौपम्ये परिभवे'** इत्युक्तम् । तेन परिभवेन भीताः परे प्रदुद्रुवुरेवेति च ॥ १३५ ॥ क्षणेन क्षणयुद्धेन, क्षणेन अनायासेन वा,

---

१. **'सितान् विपाटान्'** २. **'विद्राव्य शत्रून्'** ३. **'विरथाश्वसारथिम् ।'** इति क्वचित् ।

**विजित्य हार्दिक्यमथाऽशु भीमो विद्रावयामास वरूथिनीं ताम् ।**
**सम्प्रेषयन् सर्वनराश्वकुञ्जरान्[१] यमाय यातो हरिपार्थपार्श्वम् ॥ १३७ ॥**

**दृष्ट्वैव कृष्णविजयौ परमप्रहृष्टस्ताभ्यां निरीक्षित उत प्रतिभाषितश्च ।**
**सञ्ज्ञां नृपस्य स ददावपि सिंहनादान्[२] श्रुत्वा परां मुदमवाप स चाग्र्यबुद्धिः ॥ १३८ ॥**

**भीमस्य नानदत एव महास्वनेन विण्मूत्रशोणितमथो मृतिमापुरेके ।**
**भीतेषु सर्वनृपतिष्वमुमाप तूर्णं कर्णो विकर्णमुखरा अपि धार्त्तराष्ट्राः ॥ १३९ ॥**

---

विरथाश्वसूतं चक्रे । स तु क्षणेन सपदि अपययौ । क्षणेन गाढविद्धतया किमपि कर्तुमप्रभवन् निर्व्यापारत्वेनापययाविति वा । **'क्षणो व्यापारशून्यत्वमुहूर्तोत्सवपर्वसु'** इत्यभिधानम् ॥ १३६ ॥ सङ्घशः प्रेषयन् ॥ १३७ ॥ कृष्णार्जुनदर्शनजं हर्षं वसन्ततिलकयाऽऽह–दृष्ट्वैव । तौ दृष्ट्वैव हृष्टः । ताभ्यां निरीक्षितः सन् प्रहृष्टः । भाषणप्रतिभाषणाभ्यां परमप्रहृष्टः । सर्वस्य जगतोऽग्रे भवतीति अग्र्यो नारायणः । **'अग्राद् यत्'** [अ.सू.४. ४.११६] । तत्र निषण्णा बुद्धिरस्य सञ्जाता भीमकृतसिंहनादं श्रुत्वा । स्वभावतोऽग्र्या च बुद्धिरस्य ॥ १३८ ॥ भीमस्येति । नानदत एव । नतु सम्प्रहारतः । तथाहि वक्ष्यति कर्णपराजये–**'पुनर्घोरेण नादेन पाण्डवस्य महात्मनः । समरे सर्वयोधानां धनूंष्यभ्यपतन् क्षितौ । शस्त्राणि न्यपतन् दोर्भ्यः केषाञ्चिच्चासवोऽद्रवन् । वित्रस्तानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः । वाहनानि च सर्वाणि बभूवुर्विमनांसि च'** [द्रो.प.१२९.१६–८] इति । पूर्वत्र चोक्तम्–**'भीमसेनो महाबाहुः प्राणदद् गोवृषो यथा । शङ्खदुन्दुभिनिर्घोषं वारणानां च बृंहितम् । सिंहनादं च सैन्यानां भीमसेनरवोऽभ्यभूत् । हयानां हेषमाणानामनीकेषु सहस्रशः । सर्वानभ्यभवच्छब्दान् भीमस्य नदतः स्वनः । तं श्रुत्वा निनदं तस्य सैन्यास्तव वितत्रसुः । जीमूतस्येव नदतः शक्राशनिसमस्वनम् । वाहनानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः । शब्देन तस्य वीरस्य सिंहस्येवेतरे मृगाः'** [भी.प.४४.८–१२] इति प्रथमदिवसयुद्धारम्भे । बलरामेणाप्युक्तम्– **'श्रुत्वैव शब्दं हि वृकोदरस्य मुञ्चन्ति सैन्यानि शकृत् समूत्रम्'** [व.प.१२०.१४] इति तीर्थयात्रायाम् । महता स्वनेनैव, सिंहनादश्रवणमात्रेण विण्मूत्राभ्यां सह शोणितमापुः । प्रसुस्रुवुरित्येतत् । अथो इति पक्षान्तरे । अथो पुनरेके मृतिमेवाऽपुरिति । अथच **'विण्मूत्रशोणितमथः'** इति प्रतृण्णम् । विण्मूत्रशोणितैः समराङ्गणं मन्थन्ति विलोळयन्ति, हिंसन्ति क्लेशयन्ति वेति विण्मूत्रशोणितमथो गजाश्वपदातयः । **'मन्थ विलोळने'** इत्यतः, **'मथि हिंसाक्लेशनयोः'** इत्यतो वा क्विपि मत् मथौ मथ इति रूपम् । तेष्वेके केचन विण्मूत्रशोणितानि मुञ्चन्त एव मृतिमापुः । विकर्णमुखराः सप्त । **'शत्रुञ्जयः शत्रुसहश्चित्रश्चित्रायुधो दृढः । चित्रसेनो विकर्णश्च सप्तैते विनिपातिताः'** [१३७.३०] इति च ॥ १३९ ॥

---

१. **'सर्वनरांश्च कुञ्जरान्'** इति क्वचित् । २. **'सिंहनादाच्छ्रुत्वा'**

**हत्वा विकर्ण्णमुत तत्र च चित्रसेनं सञ्चूर्ण्णितं[1] च विदधे रथमर्कसूनोः ।**
**घोरैः शरैः पुनरपि स्म समर्द्यमानः[2] कर्ण्णोऽपयानमकरोद् द्रुतमेव भीमात् ॥ १४० ॥**

**आश्वास्य चैव सुचिरं पुनरेव भीमं युद्धाय याति धृतराष्ट्रसुतैस्तथाऽन्यैः ।**
**तांश्चैव तत्र विनिहत्य तथैव कर्ण्णो व्यश्वायुधः कृत उतापययौ क्षणेन ॥ १४१ ॥**

**विकर्ण्णचित्रसेनाद्या एवं वीरतमाः सुताः ।**
**कर्ण्णस्य पश्यतो भीमबाणकृत्तशिरोधराः ॥ १४२ ॥**

**निपेतुर्धृतराष्ट्रस्य रथेभ्यः पृथिवीतले[3] ।**
**त्रयोविंशतिरेवात्र कर्ण्णसाहाय्यकाङ्क्षिणः[4] ॥ १४३ ॥**

**एकविंशतिवारं च व्यश्वसूतरथध्वजः ।**
**गाढमभ्यर्द्दितस्तीक्ष्णैः शरैर्भीमेन संयुगे ॥ १४४ ॥**

**प्राणसंशयमापन्नः सर्वलोकस्य पश्यतः ।**
**रणं त्यक्त्वा प्र दुद्राव रुदन् दुःखात् पुनःपुनः ॥ १४५ ॥**

**द्वाविंशतिमयुद्धे तु रामदत्तं सुभास्वरम् ।**
**अभेद्यं रथमारुह्य विजयं धनुरेव च ॥ १४६ ॥**

---

चित्रसेनं च हत्वा । समं सहैव अर्द्यमानः । समन्तादर्द्यमानः । भीमाद् भीतः । **'स विह्वलो महाराज कर्णो भीमशराहतः । प्राद्रवज्जवनैरश्वैः रणं हित्वा महाभयात्'** [१३४.३३] इति च ॥ १४० ॥ आश्वास्य विश्रम्य । भीमेन क्षणेन अनायासेन, लीलया व्यश्वायुधः कृतः । कर्णोऽपि प्रतियोद्धुमशक्तः क्षणमात्रेणापययौ । क्षणेन प्रतिक्रियाशून्यत्वेन वा ॥ १४१ ॥ वीरतमाः सुता धृतराष्ट्रस्य । पश्यतः कर्णस्य पुरतः निपेतुः । पश्यन्तं कर्णमनादृत्य ।**'षष्ठी चानादरे'** [अ.सू.२.३.३८] । भीमस्य बाणैः कृत्तशिरोधराः । भीमेन वा बाणैः कृत्तशिरोधराः । त्रयोविंशतिरेवेति । भारते तु सम्प्रति– **'एकत्रिंशन्महाराज पुत्रांस्तव निपातितान् –'**[१३७.४१] इत्यादि पठ्यते । **'त्रयोविंशन्महाराज–'** इति तु सम्भावितः प्रतनः पाठः ॥ १४२–३ ॥ व्यश्वसूतरथध्वजः कर्णः । प्रदुद्राव दूरं दुद्राव । यत्र द्रुते भीमो न पश्यति, न दृश्यते च । प्ररुदन् दुद्रावेति । प्रकटमुच्चै रुदन् । साश्रुमोक्षं रुदन् ॥ १४४–५ ॥ द्वाविंशतिमयुद्धे तु । छान्दसानां

---

१. **'–तं प्रविदधे'** २. **'स मृद्यमानः'** ३. **'–तले ।'** ४. **'–कारिणः'**

**तद्दत्तमेव सङ्गृह्य तूणी[1] चाक्षयसायकौ ।**
**आससाद रणे भीमं कर्ण्णो वैकर्त्तनो वृषा[2]** ॥ १४७ ॥

**सुघोर आसीत् स तयोर्विमर्द्दो[3] भीमस्य कर्ण्णस्य च दीर्घकालम् ।**
**आकाशमाच्छादयतोः शरौघैः परस्परं चैव सुरक्तनेत्रयोः** ॥ १४८ ॥

**ततो भीमो महाबाहुः सहजाभ्यां च संयुतम् ।**
**त्वां तु कुण्डलवर्म्मभ्यां शक्नुयां हन्तुमञ्जसा** ॥ १४९ ॥

**तयोः परस्परं स विमर्दः सुघोर आसीत् ॥ १४८–५१ ॥**

---

मते अनान्तादेरपि सङ्ख्यादेरपि मड् भवतीत्यनेनाऽह । अथापि **'नान्तादसङ्ख्यादेर्मट्'** [अ.सू.५.२.४९] इत्याह नियमार्थम् । तेन विंशतेर्विंशत्यन्तस्य च डड् वा स्यात्, मड् वा, डमड् वा । विंशः द्वाविंशः । विंशतिमः द्वाविंशतिमः । विंशतितमः द्वाविंशतितमः । **'एकोनविंशे विंशतिमे'** [१.३.२३] इति च भागवते । येन विजयत एव न विजीयते तद् विजयं धनुः । तदिदम् **'एव च'** इत्येवकारेणाऽह । धनुश्च तद्दत्तमेव । तूणी तूणौ । **'अभेद्ये कवचे दिव्ये तूणी चाक्षयसायकौ'** [अ.कां.३१.२०] इति हि रामायणे । तेन तूणस्तूणिरिति पुंसि तूणा तूणीति स्त्रियामिति चत्वारि रूपाणि । वैकर्तन इति तदानीं सौरशक्तेः विशेषतः प्राकट्यमाह । वृषेति कर्णस्य नामान्तरम् । वदान्यत्वादभिमतं वर्षतीति वृषेः कनिन् । कनिरिति कातन्त्राः । तत्पुण्यफलं चामुं भीमाद् ररक्षेत्यर्थः । निर्वचनान्तरं चात्र भवति । **'उत्कृत्य कवचं यस्मात् कुण्डले विमले च ते । प्रादाच्छक्राय वै कर्णस्तस्माद् वैकर्तनः स्मृतः'** [१८१.२८] इति, **'ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः । रिपुष्वपि दयावांश्च तस्मात् कर्णो वृषा स्मृतः'** [१८१.३३] इति चोपरि । वै प्रसिद्धमस्य कर्तनं कवचकुण्डलयोरिति वैकर्तनः । विकर्तन एव वा वैकर्तनः ॥ १४६–७ ॥ आकाशमाच्छादयतोः । **'न स्म सूर्यस्तदा भाति न स्म वाति समीरणः । शरजालवृते व्योम्नि न प्राज्ञायत किञ्चन'** [१३९–४५] इति च । लाक्षणिकत्वात् स्वत आरक्तनेत्रौ । सम्प्रति तु रोषोन्मेषात् सुरक्तनेत्रौ ॥ १४८ ॥ सहजाभ्यां वर्मकुण्डलाभ्यां देहसम्बद्धतया युतमपि हन्तुं शक्नुयामिति ज्ञापयितुम् । सम्प्रति विद्यमाने कुण्डले न सहजे । कवचं च । इन्द्राय दत्तत्वात् । अथापि भूतळे पातयामास । एवमेव सहजेन वर्मणा कुण्डलाभ्यां च रक्षितमपि त्वां विजयेयेति ज्ञापयितुमेव । **'स कुण्डलं महच्चारु कर्णस्यापातयद् भुवि'** [१३९.४] इति । **'अथापरेण भल्लेन सूतपुत्रं स्तनान्तरे । आजघान भृशं क्रुद्धो हसन्निव वृकोदरः'** [५] इति च । स्तनान्तर आजघानेति हि कवचभेदनमुक्तम् । **'शक्तोऽपि नावधीत् कर्णं समर्थः पाण्डुनन्दनः'** [१३९.८९] इति च । ननु **'अल्पाच्तरम्'** [अ.सू.२.२.३४] इति स्मरणात् वर्मकुण्डलाभ्यामिति वक्तव्यम्? वक्तव्यम् । अथापि **'अभ्यर्हितं च पूर्वं निपततीति वक्तव्यम्'** इति कात्यायनस्मरणात् कुण्डल-

---

१. **'तूणौ चाक्षय–'** २. **'–नो रुषा'** ३. **'ततो विमर्दो–'** इति क्वचित् ।

इति ज्ञापयितुं तस्य कुण्डले कवचं तथा ।
शरैरुत्कृत्य समरे पातयामास भूतळे[1] ॥ १५० ॥

एवं तान्यपकृष्याहं हन्यां त्वामिति वेदयन् ।
पुनश्च बहुभिस्तीक्ष्णैः शरैरेनं समार्दयत्[2] ॥ १५१ ॥

ततस्तु भीमस्य बभूव बुद्धिरस्पर्द्धिनः सर्वजयो हि दत्तः ।
अमुष्य रामेण नच स्पृधाऽयं कर्ण्णो मया युद्ध्यति कृच्छ्रगो ह्ययम् ॥ १५२ ॥

तथाऽपि मे भगवानत्यनुग्रहाज्जयं ददात्यात्मवचोऽपहाय[3] ।
मया तु मान्यं वचनं हरेः सदा तस्माद् दास्ये विवरं त्वद्य शत्रोः ॥ १५३ ॥

एवं स्मृत्वा तेन रन्ध्रे प्रदत्ते कर्ण्णोऽस्त्रवीर्य्येण धनुर्न्यकृन्तत् ।
रश्मीन् हयानां च ततो रथं स तत्याज नैजं बलमेव वेदयन् ॥ १५४ ॥

**बुद्धिः इत्थं बभूव । अयं कृच्छ्रगो हि । कृच्छ्रगतो ननु ॥ १५२–४ ॥**

---

वर्मभ्यामित्याह । कथमभ्यर्हिते कुण्डले, यावता युद्धकाले वर्मैवाभ्यर्हितम् । सत्यम् । युद्धकाल एव वर्माभ्यर्हितम् । कुण्डले तु संस्कारान्तर्गते सर्वकालभूषणे इति सर्वदाऽभ्यर्हिते । अतः साधूक्तम्–कुण्डलवर्मभ्यामिति ॥ १४९ ॥ तानि कुण्डले च वर्म च । तर्हि पूर्वं द्विवचनं कथम्–'कुण्डलवर्मभ्याम्' इति? समुदितं वचनं भवति । कुर्वन्ति चैवंविधान् व्याहारान् बहुलं भाषाशास्त्रविदः कवयः । स यथा–उन्नतेन कुचेन शोभते कन्या । उन्नताभ्यां कुचाभ्यामित्येव तदुक्तं भवति ॥ १५१ ॥ बुद्धिरध्यवसायो बभूव । विचिन्त्य निश्चिकायेत्यर्थः । अमुष्य अस्पर्धिनः । नचायं कर्णः स्पृधा युद्ध्यति । यतोऽयं कृच्छ्रगः । अथवा अयं जयाख्यं शुभावहं विधिं प्रति स्पृधा । आयं यङ्क्श्चन लाभमुद्दिश्य वा ॥ १५२ ॥ आत्मवचोऽपहाय । यथा 'इतः परं नास्त्रं गृह्णीयाम्' इति स्ववचोऽपहाय भीष्मानुग्रहाय रथादवप्लुत्य रथाङ्गपाणिर्बभूव । भीष्म एवैतावाननुग्रहः । किमु भीमे । तस्माद् दास्ये विवरं त्वद्य शत्रोरिति बुद्धिर्बभूव । विवरं तु, हरीच्छानुगुणमवकाशम् ॥ १५३ ॥ प्रदत्ते प्रहर्षेण दत्ते, प्रकामं दत्ते, प्रकटं दत्ते । हयानां रश्मींश्च न्यकृन्तत् । ततो विहयं रथं स भीमस्तत्याज ॥ १५४ ॥

---

१. 'भूतले ।' २. 'समर्दयत्' ३. '–वचो विहाय'

न मे रथाद्यैर्द्धनुषाऽपि[१] कार्य्यमित्येव स ख्यापयितुं[२] वृकोदरः ।
खमुत्पपातोत्तमवीर्य्यतेजा रथं च कर्ण्णस्य समास्थितः क्षणात् ॥ १५५ ॥

भीतस्तु[३] कर्ण्णो रथकूबरे तदा व्यलीयतातः[४] स वृकोदरो रथात् ।
अवप्लुतो ज्ञापयितुं स्वशक्तिं निरायुधत्वेऽप्यरिनिग्रहादौ ॥ १५६ ॥

नैच्छद्[५] गृहीतुं विनिहन्तुमेव वा रथं धनुर्वाऽस्य रणेऽपहर्त्तुम् ।
द्रोणस्य यद्वत् पूर्वमतीव शक्तोऽप्यमानयद् रामवचोऽस्य भक्त्या ॥ १५७ ॥

सत्यां कर्त्तुं वासवेश्च प्रतिज्ञां सम्मानयन् वैष्णवत्वाच्च कर्ण्णम् ।
दातुं रन्ध्रं सूर्य्यजस्य प्रयातः शरक्षेपार्त्थं दूरमतिष्ठदत्र ॥ १५८ ॥

ततः कर्ण्णो दूरगतं वृकोदरं सम्मानयन्तं रामवाक्यं विजानन् ।
शरैरविद्ध्यत् स च तानवारयद् गजैर्म्मृतैस्तांश्च चकर्त्त कर्ण्णः ॥ १५९ ॥

**भीमः कर्णस्य रथं क्षणात् समास्थितः ॥ १५५ ॥ भीमः भयङ्करः वृकोदर इति वा । कर्णरथारोहावरोहौ किमर्थमकरोदित्याकाङ्क्षायामाह– ज्ञापयितुमिति ॥ १५६ ॥ गृहीतुं जीवग्राहं गृहीतुं विनिहन्तुं वा, कर्णमिति शेषः । नैच्छदेव ॥ १५७ ॥ रथादवप्लुतः किमकरोदित्यत आह– दातुमिति ॥ १५८–६३ ॥**

---

खमुत्पपात । **'वैहायसं प्राक्रमद् वै कर्णस्य रथमाविशत्'** [१३९.७४] इति च । समारुह्य स्थितः ॥ १५५ ॥ **'सोऽतिविद्धो भृशं कर्णः पाण्डवेन तरस्विना । रथकूबरमालम्ब्य न्यमीलयत लोचने'** [१३९.९] इति । **'तमदृष्ट्वा रथोपस्थे निलीनं व्यथितेन्द्रियम् । ध्वजमस्य समारुह्य तस्थौ भीमो महीतळे'** [७६] इति च ॥ १५६ ॥ रामे भक्त्या अस्य रामेण दत्तं वचोऽमानयत् ॥ १५७ ॥ वासवेरर्जुनस्य **'अहं कर्णं हन्ता'** इति प्रतिज्ञाम् । चकारेण **'कर्णं हन्ता धनञ्जयः'** इति द्रौपद्याः स्वस्य च प्रतिज्ञां सत्यां कर्तुम् । सूर्यजस्य शरक्षेपार्थं रन्ध्रमवकाशं दातुं स्वयं दूरं प्रयातः । अत्र दूर एवातिष्ठदयुध्यमानः ॥ १५८ ॥ रामवाक्यं गौरवेण मानयन्तं विजानन् अत एव दूरे स्थित्वा स्वं च प्रीत्या मानयन्तम् । तान् शरान् अवारयत् । **'भीमस्य मतमाज्ञाय कर्णो बुद्धिमतां वरः । विरराम रणात् तस्मात् पश्यतां सर्वधन्विनाम्'** [१४०.१०९] इति च । अथापि लीलया स भीमः गजैर्मृतैः कर्णप्रयुक्तान् शरान् चकर्त । चकारेणाश्वरथाङ्गादिभिश्च । **'हस्त्यङ्गान्यथ कर्णाय प्राहिणोत् पाण्डुनन्दनः । चक्राण्यश्वांस्तथा चान्यद् यद्यत् पश्यति भूतळे'** [१३९.८६] इति च ॥ १५९ ॥

---

१. **'–र्धनुषा वाऽपि'** २. **'सञ्ज्ञापयितुम्'** ३. **'भीमस्तु'** इति क्वचित् । वे.ती. पाठोऽपि तथा ।
४. **'–लीयताधः स–'** ५. **'ग्रहीतुम्'**

व्यसून् गजान् प्रक्षिपन्तं समेत्य संस्पृश्य चापेन वचश्च दुष्टम् ।
संश्रावयामास सुयोधनस्य प्रीत्यै प्रजानन्नपि[१] तस्य वीर्य्यम् ॥ १६० ॥

संश्रावयन्तं वचनानि रूक्षाण्यपाहनद् [२]बाणवरैस्तदाऽर्ज्जुनः ।
स वर्म्महीनः पार्त्थबाणाभितप्तो व्यपागमद् भीम आपाऽत्मयानम् ॥ १६१ ॥

कर्ण्णो भीमे वासवीं नैव शक्तिं विमोक्तुमैच्छन्नैव बीभत्सुतोऽन्यान् ।
हन्यामिति प्राह यतः स कुन्त्यै यद्यप्यवद्धद्यः स तयाऽपि भीमः ॥ १६२ ॥

नारायणास्त्रं शिरसि प्रपातितं न यस्य लोमाप्यदहच्चिरस्थितम्[३] ।
किं तस्य शक्तिः प्रकरोति वासवी तथाऽन्यदप्यस्त्रशस्त्रं महच्च ॥ १६३ ॥

भीमः कर्ण्णरथं प्राप्तः शक्तिं नाऽदातुमैच्छत ।
अभिप्रायं केशवस्य जानन् हैडिम्बमृत्यवे ॥ १६४ ॥

**इयं शक्तिः हैडिम्बमृत्यवे भवेदिति केशव(स्या)भिप्रायं जानन् ॥ १६४–५ ॥**

---

सहसा समीपमेत्य, अभिद्रुत्येत्येतत् । अवमाननार्थं चापेन तदङ्गं संस्पृश्य ससम्भ्रमं स्पृष्ट्वा । किञ्चित् साध्वसम्, अन्तर्गतश्चाऽदरः, उभयमिश्रा च त्वरा सम्भ्रम उच्यते । **'धनुषोग्रेण तं कर्णः सोऽभिद्रुत्य परामृशत्'** [९१] इति च । धनुषः अग्रेण । उग्रेण धनुषा वा । **'विहसन्निव राधेयो वाक्यमेतदुवाच ह । पुनःपुनस्तूबरक मूढ औदरिकेति च । अकृतास्त्रक मा योत्सीर्बाल सङ्ग्रामकातर । यत्र भोज्यं बहुविधं भक्ष्यं पेयं च पाण्डव । तत्र त्वं दुर्मते योग्यो न युद्धेषु कदाचन'** [९३–५] इत्यादि दुष्टं वचः क्रियासमभिहारेण श्रावयामास ॥ १६० ॥ अपवार्य अहनत् । भीमेन च्छिन्नवर्मा । पार्थं विहाय, युद्धरङ्गं च, दूरमपागमत् । प्रथमं आत्मीयस्य सात्यकेर्यानम् । ततः आत्मनो यानम् । **'भीमोऽपि सात्यकेर्वाहं समारुह्य नरर्षभः । अन्वयाद् भ्रातरम्–'** [११९] इति च ॥ १६१ ॥ तया वासवदत्तया शक्त्याऽपि । यद्यपि कर्णोऽप्येतज्जानाति । अथापि मोहजालव्याकुलितेन मनसैवं चिन्तयामास– भीमे शक्तौ विमुक्तायां यदि कश्चनापायः स्यात् तदा 'बीभत्सुतोऽन्यान् नैव हन्याम्' इति व्याहन्येत स्ववचनम् । अथ भीमः स्वशक्त्या वासवीं शक्तिमेव निरोत्स्यति तदा व्यर्थं भवेच्छक्राच्छक्तिस्वीकरणमित्युभयथाऽपि भीमे न युक्तः शक्तिप्रयोग इति ॥ १६२ ॥ मैवमन्तेवासनिामपि भूदाशङ्केति स्वयमाचार्यः प्रत्याययति– नारायणास्त्रमित्यादिना । प्रपातितं हनिष्याम्येवेति निश्चयेन पातितम् । चिरकालं शिरसि स्थितम् । प्रकरोति कर्तुं प्रभवतीत्यर्थः ॥ १६३ ॥ ऐच्छत । तेन भगवदनुग्रहातिशय आत्मगामि फलमित्यात्मने-

---

१. **'प्रीत्यै विजानन्नपि'** इति क्वचित् । २. **'बाणगणैस्तदा–'** ३. **'–दहच्छिरःस्थितम्'**

**ततः कण्र्णोऽन्यमास्थाय रथमर्ज्जुनमभ्ययात् ।**
**दिव्यं रथं धनुश्चैव कृष्णबुद्ध्याऽर्ज्जुनो हरेत्** **॥ १६५ ॥**

**इति भीतस्तु तां शक्तिमादायार्ज्जुनमृत्यवे ।**
**युद्धायायाद् रथं चापं शक्तिं चैकत्र नाकरोत्** **॥ १६६ ॥**

**एकं हृतं चेदन्यत् स्यादिति मत्वा भयाकुलः ।**
**बिभेति सर्वदा नीतेः कृष्णस्यामिततेजसः** **॥ १६७ ॥**

**निश्चितो मरणायैव मृतिकाले तु तं रथम् ।**
**आरुह्यागाद्धि पूर्वं तु न कालं मन्यते मृतेः** **॥ १६८ ॥**

**शक्तिं तु तद्रथगतां प्रसमीक्ष्य कृष्णः संस्थाप्य पार्थमपि सात्यकिमेव योद्धुम् ।**
**दत्वा स्वकीयरथमेव विरोचनस्य पुत्रेण सोऽदिशदमुष्य बलं प्रदाय** **॥ १६९ ॥**

**युगपन्नेतुं भयाकुलः । इति मत्वा रथादिकं एकत्र नाकरोत् ॥ १६६–७ ॥ यस्मिन् दिने रथादिकं युगपदादायागात् ततः पूर्वं मृतेः कालं न मन्यते ॥ १६८–७१ ॥**

---

भाषा । हैडिम्बमृत्यवे सा शक्तिरुपयोक्तव्या कर्णेनेति केशवस्याभिप्रायं जानन् । क इति वायुः । तस्यायमीष्टे, प्रवर्तयति च तमिति केशवः ॥ १६४ ॥ भार्गवदत्तादभेद्याद् रथादन्यम् । धनुश्चान्यदादाय । कुतः? यतः दिव्यमपि तं रथं तद् धनुश्च कृष्णप्रज्ञया दर्शितोपायः पार्थो हरेदेव इति भीतः । अर्जुनमृत्यवे रक्षितां तां शक्तिं केवलमादाय । **'अनया शक्त्याऽर्जुनं हन्तुं शक्नुयाम्'** इति स्वप्रज्ञामात्रेण सम्भाविताय सङ्कल्पिताय चार्जुनमृत्यवे । ननु तदपि कृष्णबुद्ध्याऽर्जुनो हरेदेव । हरेदेवेति भयादेव त्रयमेकत्र नाकरोदित्याह– रथमिति । एकस्यैकदा वैफल्ये अन्यत्रान्यत् स्यादिति दुराशया । भीतस्तु भीत एव । नतु वास्तवज्ञः ॥ १६५–७ ॥ यद्यहं म्रिये किमनेन रथेन स्थितेन गतेन वेति बुद्ध्या तं दिव्यं रथमारुह्य ॥ १६८ ॥ कृष्णः कर्णरथगतां शक्तिं प्रज्वलन्तीं समीक्ष्य, घटोत्कचाय क्लृप्तामेतां मा साहसादर्जुने प्रयोक्षीदिति । सत्यसङ्कल्पस्यापि लोकनीतिप्रदर्शनमिदम् । कर्णेन सह योद्धुमुद्यतमपि पार्थं संस्थाप्य ततो निवर्त्य । पार्थशिष्येणापि योद्धुमप्रभवन् कथं पार्थं विजिघृक्षसीति कर्णं बोधयितुं च । विहायसि रोचत इति विरोचनस्य सूर्यस्य पुत्रेण सह योद्धुम्, अर्जुनमिव स्वप्रेमपात्रं सात्यकिमेवादिशत् । स्वकीयमेव रथं तस्य दत्वा, यत्र स्थितो न कदाऽपि पराजीयते, किन्तु विजयत एव । विशेषावेशेन बलं च प्रकृष्टं दत्वा । **'नच तावत् क्षमः पार्थ तव कर्णेन सङ्गरः । प्रज्वलन्ती महोल्केव तिष्ठत्यस्मिन् हि वासवी । त्वदर्थं पूज्यमानैषा रक्ष्यते परवीरहन्'** [१४५.१७] इति च । **'स केशवस्यानुमते रथं दारुकसंयुतम् । आरुरोह शिनेः पौत्रो ज्वलनादित्यसन्निभम्'** [३१] इति च ॥ १६९ ॥

शिष्यं त्वशक्तमिह मे प्रतियोधनाय पार्थो ह्यदादिति स सात्यकिमीक्षमाणः ।
संस्पर्द्धयैव युयुधे विरथं चकार तेनैव सात्यकिरमुं हरियानसंस्थः ॥ १७० ॥

न केशवरथे कश्चित् स्थितो याति पराजयम् ।
अतश्च सात्यकिर्न्नाऽप कर्ण्णेनात्र पराजयम् ॥ १७१ ॥

शस्त्रसङ्ग्रहकाले तु कुमाराणां व्रतं भवेत् ।
इत्युक्तं जामदग्न्येन धनुर्विद्यापुराकृता ॥ १७२ ॥

तच्छत्रुवधरूपं च पूर्वासिद्धं च गूहितम् ।
अविरुद्धं च धर्म्मस्य कार्य्यं रामस्य तुष्टिदम् ॥ १७३ ॥

अनुपद्रवं च[1] लोकस्येत्यतो भीमो व्रतं त्विदम् ।
चकार तूबरेत्युक्ते[2] हन्यामिति रहः प्रभुः ॥ १७४ ॥

अनुपद्रवाय लोकस्य [3]सुव्यञ्जच्छ्मश्रुमण्डलः ।
सुश्मश्रुं मां न कश्चिद्धि तथा ब्रूयादिति स्फुटम् ॥ १७५ ॥

**धनुर्विद्यापुराकृता धनुर्विद्यायाः प्रथमकर्त्रा ॥ १७२ ॥ तद् व्रतं पूर्वासिद्धं पूर्वं केनाप्यकृतम् । इत्यादिरूपं कार्यम् ॥ १७३ ॥ स्फुटं सुश्मश्रुं मां कश्चित् तथा न ब्रूयात् इति मत्वा सुव्यञ्जछ्मश्रुमण्डलः भीमः (लोकस्य)**

कियानस्य जये श्रम इत्यवज्ञया कृष्णेन स्वरथं दत्वा प्रेषित इति सम्भ्रमेण जनितया सहजया स्पर्धया, यथाकथाच जेतव्यमेवेति दृढबुद्ध्या च स्पर्धया । तेन संस्पर्धया युद्धकरणेन । हरियानसंस्थत्वाच्च सात्यकेः । **'चकार विरथं कर्णं तव पुत्रस्य पश्यतः'** [१४५.४९] इति च । **'अजय्यं वासुदेवस्य रथमास्थाय सात्यकिः । विरथं कृतवान् कर्णं वासुदेवसमो युधि'** [६२] इति च धृतराष्ट्रवचनम् ॥ १७०–१ ॥ शस्त्रसङ्ग्रहकाले शस्त्राभ्यासकाले । पुराकृत् पुराणः कर्ता । अत्र कर्तेत्युपदेष्टोच्यते ॥ १७२ ॥ शत्रुवधरूपम् । अतूबरं तूबर इति कोऽन्यः कथयेद्दते मत्सरग्रस्ताच्छत्रोः । पूर्वासिद्धं पूर्वं केनाप्यकृतम् ॥ १७३ ॥ अशृङ्गो बलीवर्दः, अश्मश्रुश्च पुरुषस्तूबर उच्यते तूवरश्च । पुंस्त्वहीन इति ध्वनिः ।

१. 'अनुपद्रवाय लोक–' २. '–त्युक्तो हन्या–' ३. 'सुव्यक्तश्मश्रु–'

**तदर्ज्जुनो विजानाति स्नेहाद् भीमोदितं रहः ।**
**अर्ज्जुनस्यापि गाण्डीवं देहीत्युक्तो निहन्म्यहम्**[1] **॥ १७६ ॥**

**इति तच्च विजानाति भीम एको न चापरः ।**
**गाण्डीवस्याऽगमं पूर्वं जानात्येव हि नारदात्** **॥ १७७ ॥**

**प्रतिज्ञां भीमसेनस्य ब्रुवतः फल्गुने रहः ।**
**दुर्य्योधनस्तु शुश्राव तां च कर्ण्णाय सोऽब्रवीत्** **॥ १७८ ॥**

**अनुपद्रवाय तूबरेत्युक्ते हन्याम्, तथोक्तवन्तमिति शेषः । (प्रभुः) साधयितुमिति शेषः । रहः चकार, इति व्रतमिति शेषः ॥ १७४–९ ॥**

---

**'तूबरोऽश्मश्रुपुरुषे प्रौढाशृङ्गगवेऽपि च । पुरुषे व्यञ्जनत्यक्ते स्यात् कषायरसेऽपि च'** इत्यभिदधति । मुखे वृद्धानि लोमानि श्मश्रु । समृद्धानि श्मश्रूण्यस्येति सुश्मश्रुः । सुव्यञ्जच्छ्मश्रुमण्डलः । **'शश्छोऽटि'** [अ.सू.८.४.६३] इत्यत्र **'छत्वममीति वक्तव्यम्'** इति वार्तिकम् । **'किं प्रयोजनम्? तच्छ्लोकेन, तच्छ्मश्रुणेत्येवमर्थम्'** इति वामनः । सुव्यञ्जत् अतिप्रकटं श्मश्रुमण्डलमस्येति तादृशः । अञ्जू व्यक्तिम्रक्षणगतिषु । व्यक्तिः प्राकट्यम् । म्रक्षणं स्निग्धद्रव्यसेकः । इत्येतत् स्फुटमतिस्पष्टम् । तेन लोकस्य नोपद्रवावकाशः । अतः प्रभुर्भीमः, लोकस्यानुपद्रवाय 'केनचित् तूबरेत्युक्ते तं हन्याम्' इति व्रतं प्रतिज्ञां चकार । तु गताविति सौत्रो धातुः । तौति तनोतीति वा तूबरः । वरच् प्रत्यय इति वैयाकरणाः । तूलं वरयति लघुतया स्वात्मनः सादृश्यार्थमिति तूबर इति तु तत्ववादिनः । प्रतिज्ञापालनार्थं कर्णं हन्तुं समर्थोऽपि अर्जुनकृपावशंवदो न स्वयं जघान, किन्त्वर्जुनेन घातयामासेति सूचयन् प्रभुर्भीम इत्याह । कर्णस्य च प्रभुर्हि सः । अर्जुनस्य च ॥ १७४–५ ॥ स्नेहाद् भीमेन रहस्युदितम् । गाण्डीवं देहीत्युक्तः केनचिच्चेत् तथा वदन्तमहं हन्मीति अर्जुनस्यापि व्रतम् । अहमेव हन्मि, न त्वन्येन घातयामि । कर्णेन तूबरेत्युक्तस्तमर्जुनेन घातयामास भीमो न स्वयं जघान । **'अन्यस्मै देहि गाण्डीवमिति मां यः प्रचोदयेत् । भिन्द्यामहं तस्य शिरः इत्युपांशु व्रतं मम'** [क.प.७२.१०] इति चोपरि । गाण्डीवं देहीति । गाण्डीवशब्दार्थ उक्तो द्वितीयाध्याये [२.१७७] । अस्त्राभ्यासकाले गाण्डीवं नाऽसीत् । तत्कथं प्रतिजज्ञ इत्यत आह– गाण्डीवस्येति । जननकालेऽभिनन्दितुमागतस्य नारदस्य वचनादिति भाति । अशरीरवाण्या च । तथाहि भारते–**'एतस्य भुजवीर्येण खाण्डवे हव्यवाहनः । मेदसा सर्वभूतानां तृप्तिं यास्यति वै पराम्'** [आ.प.१३२.२३] इति । हव्यवाहनः खाण्डवदाहाय हि गाण्डीवं ददाविति ॥ १७६–७ ॥ दुर्योधनस्तु । परेषामुपह्वरवचनश्रवणपैशुन्यं तस्य दुःस्वभावविशेष इत्यर्थः । भीमसेनस्य स्वप्रतिज्ञां रहः फल्गुने ब्रुवतः दुर्योधनः शुश्राव ॥ १७८ ॥

---

१. **'देहीत्युक्ते निहन्मि तम्'** । **'देहीत्युक्ते निहन्म्यहम्'** इति क्वचित् ।

अतूबरोऽपि तेनासौ तस्मात्[1] तूबर इत्यलम् ।
उक्तः प्रकोपनायैव तस्मादर्ज्जुनमब्रवीत् ॥ १७९ ॥

जानासि मत्प्रतिज्ञां त्वं त्वत्प्रतिज्ञामहं तथा ।
तत्र हन्तव्यतां[2] प्राप्तो मम वैकर्त्तनोऽत्र हि ॥ १८० ॥

प्रतिज्ञातो वधश्चास्य त्वयाऽपि मदनुज्ञया ।
अतस्त्वया मया [3]वाऽयं हन्तव्यः सूतनन्दनः ॥ १८१ ॥

इत्युक्तो वासविः प्राह हन्तव्योऽयं मयैव हि ।
त्वदीयोऽहं यतस्तेन मत्कृतं त्वत्कृतं भवेत् ॥ १८२ ॥

न त्वत्कृतं मत्कृतं स्याद् गुरुर्म्मम यतो भवान् ।
अतो मयैव हन्तव्य इत्युक्त्वा कर्ण्णमब्रवीत् ॥ १८३ ॥

रूक्षा वाचः श्रावितोऽयं भीमः कृष्णस्य शृण्वतः ।
यच्चाभिमन्युर्य्युष्माभिरेकः सम्भूय पातितः ॥ १८४ ॥

**त्वत्प्रतिज्ञां (अहं जानामि) ॥ १८०–८ ॥**

---

तस्मात् भीमस्य रहः प्रतिज्ञायाः कर्णेन ज्ञातत्वात् । तेन कर्णेन । अलमिति पुनःपुनः । प्रभूतं कोपनं तदुद्देशः ॥ १७९ ॥ तथा जानामि । **'पुनःपुनस्तूबरक मूढ औदरिकेति च । अकृतास्त्रक मा योत्सीर्बाल सङ्ग्रामकातर । इति मामब्रवीत् कर्णः पश्यतस्ते धनञ्जय । एवं वक्ता च मे वध्यस्तेन चोक्तस्तथा ह्यहम् । एतद् व्रतं महाबाहो त्वया सह कृतं मया । तथैतन्मम कौन्तेय यथा तव न संशयः । तद्वधाय नरश्रेष्ठ स्मरैतद् वचनं मम । यथा भवति तत् सत्यं तथा कुरु धनञ्जय'** [१४६.३–६] इति च । तमसो विकर्तनाद् विकर्तनस्य सूर्यस्य सुतो वैकर्तनः कर्णः । निर्वचनान्तरं पूर्वमुक्तम् [१४७] ॥ १८०–८३ ॥ कृष्णस्य शृण्वतः । कृष्णनिन्दां भीमो न क्षमते । कृष्णभक्त-त्वात् । भीमनिन्दां कृष्णोऽपि न क्षमते । भीमस्य स्वभक्तत्वादेवेत्यनेन सूचयति । **'यदवोचोऽप्रियं भीमं नैतत् सत्यं वचस्तव । पश्यतां सर्वसैन्यानां केशवस्य ममैव च'** [१७] इति च ॥ १८४ ॥

---

१. **'तेनासौ यस्मात्'** इति क्वचित् । २. **'तथा । अतो हन्तव्यताम्'** ३. **'मया चायम्'** इति क्वचित् ।

अतस्त्वां निहनिष्यामि त्वत्पुत्रं च तवाग्रतः ।
इत्युक्तोऽन्यरथं[1] प्राप्य कर्ण्ण आवीज्जयद्रथम् ॥ १८५ ॥

द्रौणिकर्ण्णाभिगुप्तं तं नाशकद्धन्तुमर्ज्जुनः ।
तत्र वेगं परं चक्रे द्रौणिः पार्त्थनिवारणे ॥ १८६ ॥

नचैनमशकत् तर्त्तुं यत्नवानपि फल्गुनः ।
तयोरासीच्चिरं युद्धं चित्रं लघु च सुष्ठु च ॥ १८७ ॥

तद् दृष्ट्वा भगवान् कृष्णो लोहितायति भास्करे ।
अजिते द्रोणतनये त्वहते च जयद्रथे ।
अर्ज्जुनस्य जयाकाङ्क्षी ससर्ज्ज तम ऊर्ज्जितम् ॥ १८८ ॥

तमोव्याप्ते गगने सूर्य्यमस्तं गतं मत्वा द्रौणिपूर्वाः[2] समस्ताः ।
विशश्रमुः सैन्धवश्चार्ज्जुनस्य हतप्रतिज्ञस्य मुखं समैक्षत ॥ १८९ ॥

तदा हरेराज्ञया शक्रसूनुश्चकर्त्त बाणेन जयद्रथस्य ।
अग्निं[3] विविक्षन्निव दर्शितः शिरस्तदा वचः प्राह जनार्द्दनस्तम् ॥ १९० ॥

**(तमोव्याप्ते गगने), कृष्णेन लोकनाथेनेति शेषः ॥ १८९–९२ ॥**

---

यतः कृष्णमप्यनादृत्य भीमो रूक्षा वाचः श्रावितः, अतस्त्वां निकृत्या हनिष्यामि । यतोऽभिमन्युरेकः सम्भूय पातितः, अतः त्वत्पुत्रं च वृषसेनं त्वां न्यक्कृत्य हनिष्यामि ॥ १८५ ॥ द्रौणिकर्णाभ्यामभित उभयतो गुप्तम् ॥ १८६ ॥ कर्णार्जुनसमरे यदुक्तं भारते– **'विध्येतां समरे वीरौ चित्रं लघु च सुष्ठु च'** [९२] इति तद् द्रौण्यर्जुनसमरेऽपि समानमित्याह– चित्रं लघु च सुष्ठु च । लघु क्षिप्रतमम् ॥ १८७ ॥ लोहितो भवति लोहितायति । ततः शतृप्रत्ययः । **'लोहितादि-डाज्भ्यः क्यष्'** [अ.सू.३.१.१३] इति पाणिनिः । द्रोणतनये तु । तुना तस्य शिवावतारत्वमाह । जयद्रथे तु । तुना तस्य शिववररक्षितत्वमाह । अथापि **'अर्जुनादृते'** इति शिववचनात् स हन्तव्य इत्यपि शिवसङ्कल्प एवेति च । चकारस्त्व-जयस्याहननस्य च समुच्चये । ऊर्जितं बलिष्ठम् । ऊर्ज बलप्राणनयोः । आदित्यप्रभानाशनं सर्वग्रासि सर्वतो व्यापि च । **'जनार्दनेन सृष्टं वै तम आदित्यनाशनम्'** [१४७.६७] इति च ॥ १८८ ॥ विशश्रमुः युद्धाद् विरेमुः ॥१८९॥ हरेराज्ञया अग्निं विविक्षन्निव दर्शितः । शत्रुवञ्चनाय हरेराज्ञया स्वयमग्निं विविक्षन्निवाऽत्मानं दर्शयामासेत्यर्थः । शक्रसूनुः

---

१. **'–क्तोऽन्यं रथम्'** २. **'द्रोणपूर्वाः'** १. **'–थस्य । वह्निं वि–'**

नैतच्छिरः पातय भूतळे[१] त्वमितीरितः पाशुपतास्त्रतेजसा ।
दधार बाणैरनुपुङ्खपुङ्खैः पुनस्तमूचे गरुडध्वजो वचः ॥ १९१ ॥

इदं पितुस्तस्य करे निपात्यतां वरोऽस्य दत्तो हि पुराऽमुनाऽयम्[२] ।
शिरो निकृत्तं भुवि पातयेद् यस्तवास्य भूयाच्च शिरः सहस्रधा ॥ १९२ ॥

इति स्म वद्धचः स [३]पिताऽपि तेनेत्युदीरिते तस्य सन्ध्याक्रियस्य ।
अङ्के व्यधात् तच्छिर आशु वासविः स सम्भ्रमात् तद् भुवि च न्यपातयत् ॥ १९३ ॥

ततोऽभवत् तस्य शिरः सहस्रधा हरिश्च चक्रे तमसो लयं पुनः ।
तदैव सूर्ये सकलैश्च दृष्टे हाहेति वादः सुमहानथाऽसीत् ॥ १९४ ॥

भीमस्तदा शल्यसुयोधनादीन्[४] कृपं च जित्वा व्यनदत् सुभैरवम् ।
कुर्वन् साहाय्यं[५] फल्गुनस्यैव तुष्टो बभूव शैनेय[६] उतो हते रिपौ ॥ १९५ ॥

**इति वरो दत्तः । (यत्) यस्मात् तेन कारणेन अस्य स पिता(ऽपि) वध्यः । सन्ध्याक्रियस्य । सन्ध्यायां क्रिया यस्य स तथोक्तः[७] ॥ १९३–२२० ॥**

---

हरेराज्ञया जयद्रथस्य शिरश्चकर्त ॥ १९० ॥ पुङ्खः काण्डमूलम् । पुङ्खमनु पुङ्खः येषां तैर्बाणैः । अविच्छिन्नया बाणपरम्परयेत्यर्थः ॥ १९१ ॥ इदं शिरस्तस्य जयद्रथस्य पितुर्वृद्धक्षत्रनाम्नः । ध्यानकाले अङ्कोपरिनिहिते करे । **'अङ्के व्यधात्'** इति हि वक्ष्यति । **'उत्सङ्गे पातयस्वास्य वृद्धक्षत्रस्य भारत'** [१४८.१३] इति च भारते । तव शिरः यो भुवि पातयेदस्य पातयितुश्च शिरः सहस्रधा भूयात् इत्ययं वरोऽस्य जयद्रथस्य अमुना तत्पित्रा दत्तो हि । योऽयं भुवि पातयेदिति वाऽन्वयः । **'धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः । तस्यापि शतधा मूर्धा फलिष्यति न संशयः'** [८–९] इति च । शतधा सहस्रधेति बहुत्वमात्रवचनः । फलिष्यति । ञि फला विशरणे ॥ १९२ ॥ तेन कारणेन । तेन तद्दत्तेनैव वरेण । तेनैव तत्पुत्रशिरसा सोऽपि वध्यः । समन्तपञ्चकाद् बहिर्वने सन्ध्याक्रियस्य । सन्ध्याकालीना क्रिया यस्य । सन्ध्यामुपासीनस्य । **'उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम् । सिन्धुराजस्य मूर्धानमुत्सङ्गे समपातयत्'** [२०] इति च । स वृद्धक्षत्रः सम्भ्रमात् प्रसङ्गस्यातर्किततया, मनसश्चानवस्थानेन अविचार्यैव सहसा । हस्तान्निरस्य भुव्यपातयत् ॥ १९३ ॥ तमो हरतीति हरिरित्यन्वर्थनामा । सुमहान् वाद आक्रन्दनरूपं वचः ॥ १९४ ॥ वीराणां

---

१. **'भूतले'**
२. **'पुराऽमुना यत् ।'** इति क्वचित् । वे.ती. पाठोऽपि तथा स्यात् ।
३. **'वध्योऽस्य पिताऽपि'**
४. **'शल्यदुर्योधनादीन्'**
५. **'कुर्वन् सहायम्'**
६. **'शैनेययुतो–'**
७. इतः परमादर्शे कतिचन वाक्यानि लुप्तानीति भाति ।

**अपूरयत् पाञ्चजन्यं च कृष्णो मुदा तदा देवदत्तं च पार्थः ।**
**भीमस्य नादं सहपाञ्चजन्यघोषं श्रुत्वा निहतं सिन्धुराजम् ।**
**ज्ञात्वा राजा धर्म्मसुतो मुमोद दुर्य्योधनश्चाऽस सुदुःखितस्तदा ॥ १९६ ॥**

**ततो द्रौणिमुखां सेनां सर्वां भीमोऽभ्यवर्त्तत ।**
**पार्थः कर्ण्णमुखाञ्छिष्टान्[1] ततोऽभज्यत तद् बलम् ॥ १९७ ॥**

**शीर्ण्णां सेनां प्रविविशुर्द्धृष्टद्युम्नपुरोगमाः ।**
**ततस्तं देशमापुस्ते यत्र भीमधनञ्जयौ ॥ १९८ ॥**

**तत एकीकृताः सर्वे पाण्डवाः सहसोमकाः ।**
**परान् विद्रावयामासुस्ते भीताः प्राद्रवन् दिशः ॥ १९९ ॥**

**विद्राप्यमाणं सैन्यं तं[2] दृष्ट्वा दुर्य्योधनो नृपः ।**
**जयद्रथवधाच्चैव कुपितोऽभ्यद्रवत् परान् ॥ २०० ॥**

---

स्वानां सुखदम्, भीरूणां भैरवं भयकम्पदम्, अतिभीरूणां सुतरां भैरवम्, शकृन्मूत्रदं क्वचिन्मृतिदं च । फल्गुनस्य प्रोत्साहनेन साहाय्यं कुर्वन्नेव सिंहनादं व्यनदत् । उतो इत्यप्यर्थे । शैनेयः सात्यकिरपि सम्प्रति रिपौ सैन्धवे हते उतो अतिशयेन तुष्टो बभूव ॥ १९५ ॥ सहपाञ्चजन्यघोषं सदेवदत्तघोषं च । **'स्वैः समेतः समुदितैः पाञ्चजन्यं व्यनादयत्'** [१४९.६३] इति सङ्ग्रहोक्तिर्भारते । भगिनीपतिर्हत इति दुःखितः । महता प्रयत्नेन सुरक्षितोऽपि हत इति सुदुःखितः ॥ १९६ ॥ **'सात्यकिः पार्थमभ्यायाद् भीमसेनश्च पाण्डवः । युधामन्यूत्तमोजौ च पाञ्चालस्याऽत्मजावुभौ । ते निवार्य शरैर्द्रौणिं कर्णं च सहभूमिपैः । आगच्छन् रथिनश्चैव यत्र राजा युधिष्ठिरः'** [१४९.६४–५] इति कथा-भागं स्फुटयति–तत इत्यादिना । **'अनोजः समः पादः'** इत्यादिप्रयोगादोज इत्यदन्तोऽपि । **'ओजभृदौरसः'** इति तन्त्रसार-सङ्ग्रहे । तेन उत्तमोजा उत्तमोजोऽपि । **'शिष्टान् ततः'** इति विसन्धिः पाठो मूलादर्शे । यद्वा वैदिकी सरणिरियम् । **'उभयथर्क्षु'**[अ.सू.८.३.८] इति हि पाणिनिः । **'नकारान्तस्य पदस्य छवि परतोऽम्पर उभयथा ऋक्षु भवति, रुर्वा नकारो वा । तस्मिंस्त्वा दधाति तस्मिन्त्वा दधाति'** इति काशिका । वस्तुत ऋक्ष्वित्यपि न वक्तव्यम् । छन्दसीति पर्याप्तम् । **'एषा ते कुलपा राजन्तामु ते परिदद्मसि'** [१. १४.३] इति चाथर्वसंहितायाम् । **'यदुक्तं लौकिकायेह तद् वेदे बहुलं भवेत्'** इत्यनुभूतिस्वरूपाचार्यः । यद् वेदे बहुलं भवेद् तद् वैदिकाग्रण्य आचार्यस्य प्रयोगेष्वपि बहुलं भवेत् ॥ १९७–८ ॥ सोमकाः पाञ्चालाः । विकटं द्रावयामासुः । प्रकटमद्रवन् ॥ १९९ ॥ द्रवतेर्णौ स्वरेणाव्यवहितस्य

---

१. **'–मुखां शिष्टां ततो–'**

२. **'विद्राव्यमाणं सैन्यं तद् दृष्ट्वा'**

स भीमसेनं च धनञ्जयं च युधिष्ठिरं माद्रवतीसुतौ च ।
धृष्टद्युम्नं सात्यकिं द्रौपदेयान् सर्वानेकः शरवर्षैर्ववर्ष ॥ २०१ ॥

ते विव्यधुस्तं[१] बहुभिः शिलीमुखैः स ताननादृत्य चकर्त्त बाणैः ।
धनूंषि चित्राणि महारथानां चकार सङ्ख्ये[२] विरथौ यमौ च ॥ २०२ ॥

आदाय चापानि पराणि तेऽपि दुर्य्योधनं ववृषुः सायकौघैः ।
अचिन्तयित्वैव शरान्त्स एको न्यवारयत् तानखिलांश्च बाणैः ॥ २०३ ॥

तं गाहमानं द्विषतां बहूनां मद्ध्ये[३] द्रोणद्रौणिकृपप्रधानाः ।
दृष्ट्वा सर्वे जुगुपुः[४] स्वात्तचापा अनारतं बाणगणान् सृजन्तः ॥ २०४ ॥

सुयोधनः[५] कर्ण्णमाह जहि भीममिमं[६] युधि ।
स आह नैष शक्यो हि जेतुं देवैः सवासवैः ॥ २०५ ॥

---

वकारस्य पकार आदेशो भवति । विद्राप्यते, विद्राप्य, विद्राप्यमाणम् । स्वरेण व्यवधाने तु न भवति–द्रावयति, द्रावयित्वा । सैन्यं विद्राप्यमाणं तं प्रत्यर्थिसार्थं दृष्ट्वा । यद्वा **'सेनाया वा'** [अ.सू.४.४.४५] इति स्मरणात् सेनां समवेतीति सैन्यः सेनाया एकदेशः । तं सैनिकगणं भीमादिभिर्विद्राप्यमाणं दृष्ट्वा । **'तथा प्रयुध्यमानेषु पाण्डवेयेषु भारत । दुर्योधनो महाराज व्यवागाहत तद् बलम् । सैन्धवस्य वधेनैव भृशं दुःखसमन्वितः । मर्तव्यमिति सञ्चिन्त्य प्राविशच्च द्विषद्बलम्'** [१५४.११–१२] इति, **'स सन्निपातस्तुमुलस्तस्य तेषां च भारत । अभवत् सर्वसैन्यानामभावकरणो महान्'** [१४] इति च ॥ २०० ॥ स भीमसेनं च । **'स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः । विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम् । धृष्टद्युम्नं च सप्तत्या धर्मपुत्रं स सप्तभिः । केकयांश्चैव चेदींश्च बहुभिर्निशितैः शरैः । सात्वतं पञ्चभिर्विध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः । घटोत्कचं च समरे विद्ध्वा सिंह इवानदत्'** [१५४.३३–५] इति च । ववर्ष विव्याध । वृषु सङ्क्लेशन इत्युक्तम् ॥ २०१ ॥ तदेव स्फुटयति– ते विव्यधुः ॥ २०२–४ ॥ **'दृढलक्षेण वीरेण भीमसेनेन धन्विना । भृशं भिन्नतनुः सङ्ख्ये शरजालैरनेकशः । स्थातव्यमिति तिष्ठामि रणे सम्प्रति मानद । नाङ्गमिङ्गति किञ्चिन्मे सन्तप्तस्य महेषुभिः'** [१४६.४१–२], **'यत्तु भक्तिमता कार्यं सततं हितकाङ्क्षिणा । तत् करिष्यामि कौरव्य जयो दैवे प्रतिष्ठितः'** [४६] इति पूर्ववचनमत्र सङ्गमय्य व्याख्याति– नैष इत्यादिना । असकृत्

---

१. **'तं विव्यधुस्ते बहुभिः'** २. **'सङ्ख्ये'** ३ **'मध्यं द्रोण–'**
४. **'जुगुपुश्चाऽत्त–'** ५. **'दुर्योधनः'** इति क्वचित् । ६. **'भीममम् युधि'** इति क्वचित् ।

**दैवाज्जीवाम्यहं राजन् [१]युद्ध्यनेनातिपीडितः ।**
**अतो घटामहे शक्त्या जयो दैवे[२] समाहितः ॥ २०६ ॥**

**दुर्य्योधनो द्रोणमाह सैन्धवस्त्वदुपेक्षया ।**
**पार्त्थेन निहतो भीमसात्यकिभ्यां च मे बलम् ॥ २०७ ॥**

**प्रतिज्ञा च परित्यक्ता पाण्डवस्नेहतस्त्वया ।**
**इत्युक्तः कुपितो द्रोणः प्रतिज्ञामकरोत् ततः ॥ २०८ ॥**

**इतः परं नैव रणाद् रात्रावहनि वा क्वचित् ।**
**गच्छेयं नच[३] मोक्ष्यामि वर्म्म बद्धं कथञ्चन ॥ २०९ ॥**

**मत्पुत्रश्च त्वया वाच्यः पाञ्चालान् नैव शेषयेः[४] ।**
**सदौहित्रानितीत्युक्त्वा[५] विजगाहे निशागमे ॥ २१० ॥**

---

जातं कर्णदुर्योधनसम्भाषणं भारते विश्लिष्य कथितमाचार्य एकत्र संयुज्य कथयामास । तेन भीममिमं जहीत्येतदपि भारतानुगुणतया द्वेधा व्याख्येयम् । भीमसेनं जहि । भीमं शत्रुभयङ्करमर्जुनं च जहीति ॥ २०५ ॥ दैवादिति । **'दैवं प्रमाणं सर्वस्य सुकृतस्येतरस्य वा । अनन्यकर्म दैवं हि जागर्ति स्वपतामपि'** [१५३.३६] इत्यादि च । घटामहे चेष्टामहे । घट चेष्टायाम् ॥ २०६ ॥ मे बलं निहतम् । त्वदुपेक्षया । **'भवानुपेक्षां कुरुते शिष्यत्वादर्जुनस्य हि'** [१५१.३१] इति च । पाण्डवेषु, विशिष्य च पाण्डवे स्नेहतः ॥ २०७–८ ॥ **'नाहत्वा सर्वपाञ्चालान् कवचस्य विमोक्षणम् । कर्ताऽस्मि–'**[१५२.३५] इति, **'रात्रावपि च योद्धव्याः संरब्धाः कुरुसृञ्जयाः'** [४१] इति च । रणात् रणं विहाय नान्यत्र क्वचिद् गच्छेयम् । मोक्ष्यामि **'मुच्लृ मोक्षणे'** लृट् ॥ २०९ ॥ पाञ्चालान् पञ्चालदेशभवान् क्षत्रियान् । **'राजन् ब्रूयाः सुतं मे त्वमश्वत्थामानमाहवे । न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता'** [३६] इति च । शेषयेः । शिष असर्वोपयोगे । नैव शेषयेः निःशेषं नाशयेत्यर्थः । सदौहित्रान् सद्रौपदेयान् । पञ्चालदुहिता हि द्रौपदी । पाञ्चालस्य वा द्रुपदस्य । इति मत्पुत्रश्च त्वया वाच्य इत्युक्त्वा विविधं जगाहे । विकटं जगाहे । गाहू विलोडने । **'विलोडनं परिमलनम्'** इति क्षीरस्वामी । अन्तः प्रविश्य परेषां चमूं विमर्दयामासेत्यर्थः ॥ २१० ॥

---

१. **'युध्यंस्तेनाति–'** २. **'दैवसमा–'** ३. **'–यं नैव मो–'**
४. **'शेषय ।'** ५. **'–निति प्रोक्त्वा'**

**चमूं परेषामभ्यागाद् धृष्टद्युम्नस्तमाशु च ।**
**द्रौणिदुर्य्योधनौ तत्र विरथीकृत्य मारुतिः ॥ २११ ॥**

**द्रावयामास तत् सैन्यं पश्यतां सर्वभूभृताम् ।**
**अक्षोहिण्यस्तु[1] सप्तैव सेनयोरुभयोरपि ॥ २१२ ॥**

**हतास्तासां च भीमेन तिस्रो द्वे फल्गुनेन च ।**
**सौभद्रसात्यकिमुखैस्तन्मद्ध्ये षोडशांशकः ॥ २१३ ॥**

**हैडिम्बपार्षतमुखैस्त्रयाच्च दशमांशकः ।**
**भीष्मद्रोणद्रौणिभिश्च द्वे समं निहते तदा ॥ २१४ ॥**

**तदन्यैर्म्मिळितैः[2] सर्वैस्तच्चतुर्त्थांश एव च ।**
**ततो रात्रौ पञ्चभिश्च पार्त्थाः[3] षड्भिश्च कौरवाः ॥ २१५ ॥**

---

तं च धृष्टद्युम्न अभ्यागात् पञ्चालानां वधमसहमानः । तत्र तस्मिन् प्रसङ्गे द्रोणसहायार्थमागतौ द्रौणिदुर्योधनौ ॥२११॥ **'अक्षोहिणीः सप्त हत्वा हतो राजा जयद्रथः'** [१५१.१५] इति दुर्योधनवचनेन कौरवसेनायामेव सप्ताक्षोहिण्यो हता इति भाति । अत आह– अक्षोहिण्यस्तु सप्तैव सेनयोरुभयोरपि संहत्य हता इति । कैःकैः कियत्कियदिति विश्लिष्याऽह– भीमेन तिस्र इत्यादिना । द्वे चाक्षोहिण्यौ फल्गुनेन हते । तत्राप्यवान्तरविशेषमाह– तन्मध्ये अर्जुनहतत्वेनोक्तस्याक्षोहिणीद्वयस्य मध्ये षोडशोंऽशः सौभद्रसात्यकिमुखैरर्जुनानुयायिभिर्हतः । पञ्चदश भागा अर्जुनेन हताः । इतरहतानामत्यल्पत्वात् तदविगणय्य फल्गुनेन द्वे हते इत्युक्तमिति कनाऽऽह– षोडशांशक इति । स्थूलतया षोडशांश इत्यर्थः । तदेतदपि कप्रत्ययेनाऽह । तथाचैवं गणना– अक्षोहिणीद्वये गजाश्च रथाश्च–४३७४० । तुरगाः १३१२२० । पदातयः२१८७०० । तत्र सौभद्रादिभिर्हतः स्थूलगणनया षोडशांशकः– २७३३ गजा रथाश्च । ८२०१ तुरगाः । १३७०० पदातयः । अवशिष्टा अर्जुनेन हताः–४१००७ गजाश्च रथाश्च । १२३०२०तुरगाः । २०५०००पदातय इति । एवं दशमांशक इत्यत्रापि । भीमहतादक्षोहिणीत्रयाच्च दशमोंऽशः हैडिम्बधृष्टद्युम्नमुखैर्भीमानुयायिभर्हतः । नवांशा भीमेन । तथाहि– अक्षोहिणीत्रये गजाश्च रथाश्च–६५६१० । तुरगाः– १९६८३० । पदातयः–३२८०५० । तत्र हैडिम्बादिर्भिर्हतो दशांशः– ६५६१ गजाश्च रथाश्च । १९६८३ तुरगाः । ३२८०५ पदातयः । ततश्च भीमेन नाशिताः–५९०४९ गजाश्च रथाश्च । १७७१४७ तुरगाः । २९५२४५ पदातय इति । विस्तारे त्वेवम् । सङ्क्षेपे द्वे अक्षोहिण्यावर्जुनपातिते तिस्रोऽक्षोहिण्यो भीमपातिता इत्युच्यन्त इति । अनुगैः कृतमप्यग्रण्या कृतमिति हि व्यवहरन्ति । सैनिकेषु विजयमानेषु राजा

---

१. **'अक्षौहिण्यस्तु'** २. **'तदन्यैर्मिलितैः'** ३. मूलादर्शे–**'पार्था षड्भिश्च'** इति पठ्यते । विसर्गस्खलनं सम्भाव्यते ।

**अक्षोहिणीभिः[१] संव्यूह्य युद्धं चक्रुः सुदारुणम् ।**
**भीमं सेनां द्रावयन्तं पुनः कर्ण्णः समासदत् ॥ २१६ ॥**

**स कर्ण्णपुरतो भीमो दुष्कर्ण्णं कर्ण्णमेव च ।**
**दुर्य्योधनस्यावरजौ निष्पिपेष पदा क्षणात् ॥ २१७ ॥**

**रथाश्वध्वजसूतैश्च सह तौ[२] न व्यदृश्यताम् ।**
**निरायुधोऽहमिति मां त्वमात्थ परुषं वचः ॥ २१८ ॥**

**निरायुधः पदैवाहं त्वां हन्तुमशकं तदा ।**
**इति कर्ण्णस्य तौ भीमः सञ्ज्ञया ज्ञापयन् भुवि ॥ २१९ ॥**

**पदा पिपेष कालिङ्गं मुष्टिनैव जघान ह ।**
**मुष्टिना त्वद्वधायाहं समर्त्थ इति किं वदे ॥ २२० ॥**

विजयत इत्येवाऽहुः । द्वे समं निहते । त्रिभिः प्रत्येकं समानतया २/३ मिताऽक्षोहिणी निहता । नात्र स्थूलगण-नेत्यर्थः । तत्रापि चतुर्थोऽशोऽन्यवीरैः । त्रयोंऽशा भीष्मादिभिः । तद्यथा– अक्षोहिणीद्वयस्य ४३७४० गजरथे भीष्मादिभिस्त्रिभिः संहत्य ३२८०५ गजरथं क्षपितम् । १३१२२० तुरगेषु ९२४१५ तुरगाः । २१८७०० पत्तिषु च १६४०२५ पत्तयः । तदन्यैः सर्वैर्मिलित्वा १०९३५ गजरथम् । ३२८०५ तुरगाः । ५४६७५ पदातयः । भीष्मादि-ष्वेकैकोऽपि तावदेव । यावतीं सेनां कृपशल्यभगदत्तादयः संहत्य सञ्जह्रुस्तावतीं भीष्मादिष्वेकैकः सञ्जहारेत्यर्थः ॥ २१२–५ ॥ समन्तात् सर्वतोभद्रं व्यूह्य । दुर्जयत्वाद् दारुणम् । संव्यूहेन दुष्प्रवेशत्वात् सुदारुणम् ॥ २१६ ॥ साम्प्रते महाभारतपाठे अत्र भीमेन मृतौ दुष्कर्णदुर्मदौ धार्तराष्ट्रौ पठ्येते । **'ततः सुतौ ते बलिनौ शूरौ दुष्कर्णदुर्मदौ । मुष्टिनाऽऽहत्य सङ्क्रुद्धो ममर्द चरणेन ह'** [१५६.३] इति । अनेन दुर्योधनानुजस्य कर्णस्यैव दुर्मद इति नामान्तरमिति ज्ञायते ॥ २१७ ॥ रथाश्वध्वजसूतैश्च । **'दुर्मदस्य च वीरस्य दुष्कर्णस्य च तं रथम् । पादप्रहारेण धरां प्रावेशयदरिन्दमः'** [१५६.४३] इति च । व्यदृश्यतां व्यदृश्येताम् । **'अदृश्यद् वै लाघवात् सूतपुत्रः'** [१८०.२३] इतिवच्छान्दसं रूपम् । दुरन्तं तत्फलं दुर्योधनस्येति परस्मैभाषा ॥ १८ ॥ इति कर्णस्य ज्ञापयन् तौ पदा पिपेष । ततः कालिङ्गं मुष्टिनैव जघान । अयं कलिङ्गभूपतेः केतुमतस्तनय इत्युत्तरवचने स्फुटम् । इति ज्ञापयितुं प्रभुः मुष्टिनैव जघानेत्यन्वयः ॥ २१९–२१ ॥

१. **'अक्षौहिणीभिः'** २. **'सहितौ'**

**तस्मान्मया रक्षितस्त्वमिति ज्ञापयितुं प्रभुः ।**
**साश्वसूतध्वजरथः कालिङ्गो मुष्टिचूर्ण्णितः ॥ २२१ ॥**

**केतुमांश्च पिता तस्य शक्रदेवः श्रुतायुधः ।**
**अक्षोहिण्या[1] सेनया च सह भीमेन पातिताः ॥ २२२ ॥**

**खड्गयुद्धे पुरा भीष्मे सेनापत्यं[2] प्रकुर्वति ।**
**कर्ण्णानुजान् ध्रुवाद्यांश्च बहून् जघ्ने स वै निशि ॥ २२३ ॥**

**सञ्ज्ञां भीमकृतां ज्ञात्वा शक्तिं चिक्षेप चापराम् ।**
**कर्ण्णः शक्तिर्म्मया दिव्या न मुक्ता तेन जीवसि ॥ २२४ ॥**

**(भीमस्यातिमानुषं बलं कर्माणि) चाऽह– साश्वसूतध्वजरथ इति ॥ २२१–५ ॥**

---

भीष्मसेनापत्ये निर्वृत्तं कथाभागं प्रसङ्गादत्राह– केतुमांश्च पिता तस्य । तथाहि भीष्मवधे– **'केतुमन्तं रणे भीमोऽगमयद् यमसादनम्'** [भी.प.५४.७७] इति । शक्रदेवः श्रुतायुधश्च कालिङ्गौ । शक्रदेवः केतुमतस्तनयः । श्रुतायुधस्तत्सम्बन्धी कालिङ्गः । अयं श्रुतायुधोऽन्यो नदीजाद् वारुणेः श्रुतायुधात् । तथाहि–**'ततः श्रुतायुधः क्रुद्धो राज्ञा केतुमता सह । आससाद रणे भीमम्–'**[५४.६] इति । **'अयुतेन गजानां च निषादैः सह केतुमान् । भीमसेनं रणे राजन् समन्तात् पर्यवारयत्'** [७] इति । **'कालिङ्गस्तु महेष्वासः पुत्रश्चास्य महारथः । शक्रदेव इति ख्यातो जघ्नतुः पाण्डवं शरैः'** [१८] इति च । एते भीमेनैव निहताः । तथाहि तत्रैव– **'स तथा निहतो राजन् कालिङ्गतनयो रथात् । सध्वजः सह सूतेन जगाम धरणीतलम्'** [२४] इति शक्रदेववधः । **'क्रुद्धश्च चापमानम्य बलवद् बलिनां वरः । कलिङ्गमवधीत् पार्थो भीमः सप्तभिरायसैः'** [७५] इति श्रुतायुधवधः । अयं कलिङ्गः श्रुतायुरिति च क्वचिदुच्यते । **'दिष्ट्या कलिङ्गराजश्च राजपुत्रश्च केतुमान् । शक्रदेवश्च कालिङ्गः कलिङ्गाश्च मृधे हताः'** [१२१] इति च ॥ २२२ ॥ खड्गयुद्धे । **'ततो भीमो महावेगां त्यक्त्वा गुर्वीं महागदाम् । निस्त्रिंशमाददे घोरं चिकीर्षुः कर्म दारुणम्'** [५४.२७] इति च । सेना-पत्यम् । रूपनिष्पत्तिरुक्ता पुरस्तात् [२५.३३] । ध्रुवाद्यांश्च । **'तं कर्णो भ्रातरश्चास्य नामृष्यन्त परन्तप । ते भीमसेनं नाराचैर्जघ्नुराशीविषोपमैः । ततः शत्रुरथं त्यक्त्वा भीमो ध्रुवरथं गतः । ध्रुवं चास्यन्तमनिशं मुष्टिना समपोथयत्'** [१५६.२६–७] इति च । तमिमं कर्णानुजमाधिरथिं द्रुममाचक्षते दाक्षिणात्याः । **'द्रुमरथं गतः'** इति च भारतपाठं पठन्ति । भ्रान्तिरियम् । ध्रुव इत्यौत्तराः । साधुस्तेषां पाठ इत्यचार्यवचनादवसीयते । यद्यपि ध्रुवो जयरातश्च द्वावेव कर्णानुजौ भीमेन हतौ भारते श्रूयेते । तथाऽपि **'तं कर्णो भ्रातरश्चास्य–'** इत्युपक्रमे श्रवणात् बहूननुजानित्याह ॥ २२३ ॥ मुष्टिनैव कालिङ्गं ध्रुवादींश्च हत्वा 'निरायुधोऽप्यहं त्वां निग्रहीतुं समर्थः' इति भीमकृतां सञ्ज्ञाम् । **'कर्णस्तु**

---

१. **'अक्षौहिण्या'** २. **'सैनापत्यम्'**

**इति ज्ञापयितुं तां तु ज्ञात्वा भीमः क्षणात् तदा ।**
**खमुत्पत्य गृहीत्वा च कर्ण्णे चिक्षेप सत्वरः ॥ २२५ ॥**

**यदि त्वया तदा मुक्ता शक्तिस्त्वां सा हनिष्यति ।**
**इति ज्ञापयितुं सा च कर्ण्णरक्षणकाङ्क्षिणा ॥ २२६ ॥**

**मुक्ता दक्षभुजे साऽथ विदार्य्य धरणीं तथा[1] ।**
**भित्त्वा विवेश कर्ण्णस्य दर्शयन्ती निदर्शनम् ॥ २२७ ॥**

**ततो भीमः पुनः स्वं तु[2] रथमास्थाय चापभृत् ।**
**कर्ण्णस्य पुरतः शत्रून् द्रावयामास सर्वतः[3] ॥ २२८ ॥**

**तं कर्ण्णो वारयामास शरैः सन्नतपर्वभिः ।**
**भीमः कर्ण्णरथायैव गदां चिक्षेप वेगितः[4] ॥ २२९ ॥**

**सा च कर्णरक्षणकाङ्क्षिणा दक्षभुजे मुक्ताऽभूत् । विदार्य दक्षभुजं विदार्य, धरणीं भित्त्वा विवेश, धरणीमिति शेषः ॥ २२६–४८ ॥**

---

**पाण्डवे शक्तिं काञ्चनीं समवासृजत्'** [३३] इति । अपरां इन्द्रदत्ताया अन्याम् । तां हि घटोत्कचे क्षेप्स्यति । इति ज्ञापयितुं कर्णश्चिक्षेप । तां तु कर्णकृतां सञ्ज्ञां ज्ञात्वा । यदि त्वया तदा इन्द्रदत्ता शक्तिर्मुक्ताऽभविष्यत्, तर्हि सा त्वामेवाहनिष्यत्, यदि त्वितः परमपि त्वया मुक्ता भविष्यति, तदाऽपि त्वामेव हनिष्यति न मामिति ज्ञापयितुं तां कर्णे चिक्षेप । तर्हि कथं सा न कर्णं जघान? ज्ञापयितुं किल क्षिप्ता, न हन्तुमित्याह–सा च । कर्णरक्षणकाङ्क्षिणा भीमेन सा कर्णस्य दक्षभुजे मुक्ता मा स्म कर्णमियं हन्निति । अथ च सा कर्णस्य दक्षभुजं विदार्य सव्रणं विधाय, तथा धरिणीं च भित्त्वा धरणीमेव विवेश ॥ २२४–७ ॥ **'पुनः स्वरथमास्थाय दुद्राव तव वाहिनीम्'** [११६.३५] इति च । पुरतः । पूर्वशब्दस्य पुरःशब्दस्य वा पुर् इत्ययमादेशः । अतसुच्च प्रत्ययः । अवश्यं चैतदभ्युपेयं प्रयोगशरणैः । प्रयोगो दृश्यत इति सूत्रं प्रणयन्ति । नहि न सूत्रमस्तीति न प्रयुञ्जते । सर्वतः । सार्वविभक्तिकोऽयं तसिः श्रूयते । सर्वतः सर्वान् शत्रून् । सर्वतः सर्वस्मादपि रणक्षेत्रात् । यत्रयत्र द्रुतास्तत्र सर्वत्र च ॥ २२८ ॥ शरा वेणवः । तन्निर्मिता बाणा अपि शरा उच्यन्ते । पर्वाणि परूंषि सन्नतानि समीकृतानि अकुटिलीकृतानि येषाम् । वेगितः । ओ विजी

---

१. **'तदा ।'** इति क्वचित् ।
२. **'पुनस्तं तु'** । **'पुनः स्वं च'** इति क्वचित् ।
३. **'सर्वशः ।'** इति क्वचित् ।
४. **'वेगतः'**

स तद्गदाविघाताय[1] स्थूणाकर्णास्त्रमासृजत् ।
तेनास्त्रेण प्रतिहता सा गदा भीममाव्रजत्[2] ॥ २३० ॥

भीमो गदां समादाय कर्ण्णस्य रथमारुहत् ।
तया सञ्चूर्ण्णयामास कर्ण्णस्य रथकूबरम् ॥ २३१ ॥

एवं त्वच्चूर्ण्णने शक्तो मत्कामात् त्वं हि जीवसि ।
एवं निदर्शयित्वैव पुनः स्वं रथमाव्रजत्[2] ॥ २३२ ॥

पुनः कर्ण्णपुरः सेनां जघान बहुशो रणे ।
कर्ण्णस्तु तं परित्यज्य सहदेवमुपाद्रवत् ॥ २३३ ॥

स तु तं विरथीकृत्य धनुः कण्ठेऽवसज्य च ।
कुत्सयामास बहुशः स तु निर्वेदमागमत् ॥ २३४ ॥

न हन्तुमैच्छत् तं कर्ण्णः पृथायै स्वं वचः स्मरन् ।
तं विजित्य[3] रणे कर्ण्णो जघ्ने पार्त्थवरूथिनीम् ॥ २३५ ॥

---

भयचलनयोः । वेगः सञ्जातोऽस्य वेगितः । **'तारकादित्वादितच्'** [अ.सू.५.२.३६] । स्वस्य वेगेन सञ्जातवेगां गदां चिक्षेपेत्यर्थः ॥ २२९ ॥ विघातो वैफल्यम् । स्थूणाकर्णस्तुम्बुरुस्तद्देवताकं गान्धर्वमस्त्रम् ॥ २३०–२ ॥ महाभारते विश्लिष्य कथितां कथां क्रमशः संयोज्य कथयति– कर्णस्तु ॥ २३३ ॥ स तु कर्णः तं सहदेवम् । **'विरथः सहदेवस्तु खड्गं चर्म समाददे'**[१६८.६], **'वार्यमाणस्तु विशिखैः सहदेवो रणं जहौ'** [१४], **'अथैनं धनुषोऽग्रेण तुदन् भूयोऽब्रवीद् वचः । एषोऽर्जुनो रणे तूर्णं युध्यते कुरुभिः सह । तत्र गच्छस्व माद्रेय गृहं वा यदि मन्यसे'** [१७–१८] इति च । **'सहदेवस्ततो राजन् विमनाः शरपीडितः । कर्णवाक्शरतप्तश्च जीवितान्निरविद्यत'**[२१] इति च ॥ २३४ ॥ **'वधं प्राप्तं तु माद्रेयं नावधीत् समरेऽरिहा । कुन्त्याः स्मृत्वा वचो राजन् सत्यसन्धो महायशाः'**[२०] इति च । कुन्त्या वचः, कुन्त्यै दत्तं स्वं च वचः स्मरन् । **'एवमुक्त्वा तु तं कर्णो रथेन रथिनां वरः । प्रायात् पाञ्चालपाण्डूनां सैन्यानि प्रदहन्निव'**[१९] इति च । अत्र मध्ये भीमसेनगदापातकथाभागः सम्प्रति भारतेऽन्तरितः ॥ २३५ ॥

---

१. **'–दाभिघाताय'** २. **'–माव्रजत्'** ३. **'विसृज्य रणे'**

**ततो द्रौणिर्विविधैर्बाणसङ्घैर्जघान पार्थस्य चमूं समन्ततः ।**
**सा हन्यमाना रणकोविदेन न शं[1] लेभे मृत्युनाऽऽर्त्ता प्रजेव ॥ २३६ ॥**

**दृष्ट्वा सेनां द्रौणिबलाभिभूतां तमाह्वयामास घटोत्कचो युधे[2] ।**
**द्रौणिस्तमाहाऽलमलं न वत्स पुत्रस्तातं योधयस्वाद्य मां त्वम् ॥ २३७ ॥**

**इत्युक्त ऊचे न पिता मम त्वं सखा पितुर्य्यद्यपि शत्रुसंश्रयात् ।**
**अरिश्च मेऽसीति तमाह यद्यरिं मां मन्यसे तद्वदहं करोमि[3] ते ॥ २३८ ॥**

**इत्यूचिवाञ्छक्रधनुप्रकाशं[4] विष्फार्य्य चापं प्रकिरञ्छरौघान् ।**
**अभ्यागमद् राक्षसमुग्रवेगः स्वसेनया सोऽपि तमभ्यवर्त्तत ॥ २३९ ॥**

**स रक्षसां लक्षसमावृतो बली नृभिश्च वीरैर्बहुभिः सुशिक्षितैः ।**
**अक्षोहिणी[5]मात्रबलेन राक्षसः सङ्क्षोभयामास गुरोः सुतं शरैः ॥ २४० ॥**

**स तेन बाणैर्बहुभिः प्रपीडितो[6] विभिन्नगात्रः क्षतजाप्लुताङ्गः[7] ।**
**व्यावृत्य नेत्रे कुपितो महद् धनुर्विष्फार्य्य बाणै रजनीं चकार ॥ २४१ ॥**

---

न शं सुखं लेभे । किन्तु नशं दुःखमेव लेभे । यतः नशं नाशमेव लेभे ॥ २३६ ॥ अलमलं न वत्स । **'गच्छ वत्स सहान्यैस्त्वं युध्यस्वामरविक्रम । नहि पुत्रेण हैडिम्ब पिता न्याय्यः प्रबाधितुम्'** [द्रो.प.१५७] इति च ॥ २३७ ॥ पितुर्भीमस्य । **'भीमात् खलु समुत्पन्नः कुरूणां विपुले कुले । पाण्डवानामहं पुत्रः समरेष्वनिवर्तिनाम् । रक्षसा-मधिराजोऽहं दशग्रीवसमो बले । तिष्ठतिष्ठ न मे जीवन् द्रोणपुत्र गमिष्यसि'** [१५७.९७–८] इति च ॥ २३८ ॥ शक्रधनुवत् प्रकाशत इति शक्रधनुप्रकाशश्चापः । इन्द्रायुधतुल्य इत्यर्थः ॥२३९–४०॥ निशामुख एव रजनीं चकार । तथाहि भारते–**'अथास्त्रसम्मर्दकृतैर्विष्फुलिङ्गैस्तदा बभौ । विभावरीमुखे व्योम खद्योतैरिव चित्रितम्'**[१६५.२७] इति । अथच बाणै रजनीं चकार जनयामास, बाणजनितैर्विष्फुलिङ्गै रजनीं तारकितां चकार; विष्फुलिङ्गस्फुटित-

---

१. **'नाशम्'** २. **'युधि ।'** ३. **'करोमि ।'** इतीयदेव क्वचित् ।

४. **'धनुःप्रकाशम्'** । उदन्तोऽपि धनुशब्दः पठ्यते कोशेष्वित्युक्तम् । तेन धनुरिति नस्त्रियामिति युक्तम् ।

५. **'अक्षौहिणी–'** ६. **'–भिः सुपीडितो–'** ७. **'क्षतजाभिप्लुताङ्गः ।'**

**सोऽक्षोहिणीं[1] तां क्षणमात्रतः क्षरन् महाशरांस्तानपि राक्षसान् क्षयम् ।**
**निनाय पुत्रं च घटोत्कचस्य [2]निष्टयं पुरा योऽञ्जनवर्म्मनामकः ॥ २४२ ॥**

**निरीक्ष्य सेनां स्वसुतं च पातितं घटोत्कचो द्रोणसुतं शरेण ।**
**विव्याध गाढं स तु विह्वलो[3] ध्वजं समाश्रितश्चाऽशु ससञ्ज्ञकोऽभवत् ॥ २४३ ॥**

**उत्थाय बाणं यमदण्डकल्पं सन्धाय चापे प्रविकृष्य राक्षसे ।**
**मुमोच तेनाभिहतः पपात विनष्टसञ्ज्ञः स्वरथे घटोत्कचः ॥ २४४ ॥**

**विमूर्च्छितं सारथिरस्य दूरं निनाय युद्धाज्जगतो विपश्यतः[4] ।**
**द्रौणिश्च सेनां निशितैः शरोत्तमैर्व्यद्रावयत् पाण्डवसोमकानाम् ॥ २४५ ॥**

---

ज्योतिषा रजनीं चकार नाशयामास । कृञ् हिंसायामिति धातोः क्र्यादे रूपं चकारेति ॥ २४१ ॥ महाशरान् क्षरन् निरन्तरं वर्षन्, तामक्षोहिणीमितां घटोत्कचसेनां तानपि राक्षसान् क्षयं निनाय । पुत्रं च निष्टयम् । पुरा योऽञ्जनवर्मनामा कश्चिद् देवयोनिरासीत् । तथाह्यम्बोपाख्याने– **'–हैडिम्बश्च महाबलः । पुत्रोऽस्याञ्जनवर्मा तु महाबलपराक्रमः'** [उ.प.
४ १९४.२०] इति । अर्वाचीनास्तु नामभ्रान्ताः–**'पुत्रोऽस्याञ्जनपर्वा तु'** इति पाठं पठन्ति । अञ्जनवदसितमायसं वर्मास्येत्यञ्जनवर्मा । तथाहि घटोत्कचवधे–**'तमयस्मयवर्माणं द्रौणिर्भीमात्मजात्मजम् । जघानाञ्जनवर्माणं महेश्वर इवान्धकम्'** [द्रो.प.१५७.८९] इति । प्रायस्तस्य पुरातननाम्नैव भारते व्यपदेशः । आचार्यः करुणया स्वपूर्वरूपे पौत्रस्य तस्य नाम निर्दिदेश निष्टय इति । नितरां स्त्यायतीति निष्टयः । स्त्यै शब्दसङ्घातयोः । यद्यपि वैयाकरणा वर्णबाह्यं निष्टय-माहुः । तथाहि **'व्ययात् त्यप्'** [अ.सू.४.२.१०४] इत्यत्र वार्तिकम्–**'निसो गते'** इति । **'निर्गतो वर्णाश्रमेभ्यो निष्टयश्चण्डालादिः'** इति जयादित्यः । स्याद् वर्णबाह्यो निष्टयपदार्थः । अन्योऽप्यर्थ इष्यते । तथाहि वाजसनेय-संहितायाम्–**'यं मे निष्टयो यममात्यो निचखान'** [५.२३] इति । **'निष्टयः पुत्रादिः'** इति व्याख्यातारः । नेदिष्ठो बन्धुजन इत्येतत् । **'यो नः स्वो अरणो यश्च निष्टयो जिघांसति'** [ऋ.सं.६.७५.१९] इत्यृग्वेदे । **'निष्टयो दूरस्थितः'** इति व्याख्यातारः । **'यो न इन्द्राभिदासति सनाभिर्यश्च निष्टयः'** [ऋ.सं.१०.१३३.५] इति च । **'निष्टयो निकृष्टजन्मा'** इति व्याख्यातारः । सर्वेऽपि मनागर्थस्पृशः । वर्णबाह्यता च युक्ता घटोत्कचतनयस्य । राक्षसकुलजत्वात् ॥२४२–४॥ व्यसनेन मूर्छितम् । विक्लवतया मूर्छितम् । विस्मयेन पश्यतः । **'निशि'** इति भिन्नं च पदम् । निशि रात्रियुद्धे तैः रात्रि-समरयोग्यैः प्रायः शब्दवेधिभिः शरोत्तमैः । अथच निशितैः तीक्ष्णैः शरोत्तमैः ॥ २४५ ॥

---

१. **'चकार । अक्षौहिणीम्'**
२. **'निष्ठयम्' । 'निष्ठयः'** इति क्वचित् ।
३. **'स सुविह्वलो–'**
४. **'–तोऽभिपश्यतः ।'**

सञ्ज्ञामवाप्याथ घटोत्कचोऽपि क्रुद्धोऽविशत् कौरवसैन्यमाशु ।
विद्रावयामास स[१] बाणवर्षैः प्रकम्पयामास महारथांस्तथा[२] ॥ २४६ ॥

तदैव पार्थं प्रति योद्धुमागतं वैकर्त्तनं वीक्ष्य जगत्पतिर्हरिः ।
घटोत्कचं प्राहिणोच्छक्तिमुग्रां तस्मिन् मोक्तुं पार्थरक्षार्थमेव ॥ २४७ ॥

स कर्ण्णमाहूय युयोध तेन तस्यानु दुर्य्योधनपूर्वकाश्च ये ।
द्रोणेन चैतान् समरे स एको निवारयामास ममर्द्द चाधिकम् ॥ २४८ ॥

ते बाद्ध्यमाना बहुशो बलीयसा कर्ण्णं पुरोधाय तमभ्ययोधयन् ।
न विव्यथे तत्र रणे स कर्ण्णः स्ववीर्य्यमास्थाय महास्त्रवेत्ता ॥ २४९ ॥

निवारयामास गुरोः सुतं तदा भीमस्त्रिगर्त्ताञ्छतमन्युनन्दनः ।
अलम्बलो नाम तदैव राक्षसः समागमद्[३] भीमसुतं निहन्तुम् ॥ २५० ॥

युध्वा प्रगृह्यैनमथो निपात्य घटोत्कचो भूमितलेऽ[४]सिनाऽस्य ।
उत्कृत्य शीर्षं तु सुयोधनेऽक्षिपद् विषेदुरत्राखिलभूमिपालाः ॥ २५१ ॥

अलायुधोऽथाऽगमदुग्रवीर्य्यो नराशनस्तं स घटोत्कचोऽभ्ययात् ।
युध्वा मुहूर्तं स तु तेन भूमौ निपात्य तं यज्ञपशुं चकार ॥ २५२ ॥

**स्ववीर्यमास्थाय (अवलम्ब्य) ॥ २४९–७२ ॥**

ये धैर्येण न विद्रुतास्तान् महारथानपि प्रकम्पयामास । स्वेदादिना प्रकटं कम्पयामास ॥ २४६–७ ॥ दुर्योधनपूर्वका ये तैश्च द्रोणेन च ॥ २४८ ॥ बहुशः बहुधा बहुलं च ॥ २४९ ॥ अलम्बलो नाम जटासुरसुतः । **'जाटासुरिर्भैमसेनिं नानाशस्त्रैरवाकिरत्'** [१७५.१२] इति च ॥ २५० ॥ **'शिरस्तच्चापि सङ्गृह्य केशेषु रुधिरोक्षितम् । ययौ घटोत्कचस्तूर्णं दुर्योधनरथं प्रति'** [१७५.३८], **'शिरो रथेऽस्य निक्षिप्य विकृताननमूर्धजम् । प्राणदद् भैरवं नादं प्रावृषीव बलाहकः'** [४०] इति च ॥ २५१ ॥ अलायुधः । अयमप्यलम्बुस इव बकभ्राता । पर्याप्तायुधोऽलायुधः । शत्रुनिग्रहाय न लात्यायुधानि

१. '–मास च बाण–' २. '–रथांस्तदा ।'
३. 'समासदद्–' ४. '–तलेऽसिना–'

अथास्य शिर उद्धृत्य[1] क्रोधाद् दुर्य्योधनोरसि ।
चिक्षेप तेन सम्भ्रान्ताः सर्वे दुर्य्योधनादयः ॥ २५३ ॥

घटोत्कचबलख्यात्यै समर्त्थेनापि यो रणे ।
न हतो भीमसेनेन हतेऽस्मिन् भैमसेनिना ॥ २५४ ॥

सर्वे सञ्चोदयामासुः कर्ण्णं शक्तिविमोक्षणे ।
अस्मिन् हते हतं सर्वं किं नः पार्त्थः करिष्यति ॥ २५५ ॥

एवं सञ्चोद्यमानः स धार्त्तराष्ट्रैः पुनःपुनः ।
हैडिम्बेनार्द्द्यमानैस्तु[2] स्वयं च भृशपीडितः ।
आदत्त शक्तिं विपुलां पाकशासनसम्मताम् ॥ २५६ ॥

तामम्बरस्थाय घटोत्कचाय शैलोपमायातुलविक्रमाय ।
चिक्षेप मृत्यो रसनोपमामलं प्रकाशयन्तीं प्रदिशो दिशश्च ॥ २५७ ॥

निर्भिण्णवक्षाः[3] स तया पपात [4]विचूर्ण्णयञ्छत्रुबलं हतोऽपि ।
तस्मिन् हते जहृषुर्द्धार्त्तराष्ट्रा उच्चुक्रुशुर्दुधुवुश्चाम्बराणि ॥ २५८ ॥

---

किन्तु नखैरेव क्षपयतीति वा । **'युयुधे राक्षसेन्द्रेण बकभ्रात्रा घटोत्कचः'** [१७९.४] इति च ॥ २५२ ॥ **'अलायुधस्य तु शिरो भैमसेनिर्महाबलः । दुर्योधनस्य प्रमुखे चिक्षेप गतचेतसः'** [१७९.३७] इति च । भीमसेनमहं हन्तेति तेन प्रतिज्ञातम् । दुर्योधनश्च तां प्रतिज्ञां श्रदधत्त । स इदानीं मृत इति सम्भ्रान्ताः सर्वे दुर्योधनादयः ॥ २५३–४ ॥ सर्वे समं चोदयामासुः । **'ततोऽब्रुवन् कुरवः सर्व एव कर्णं दृष्ट्वा घोररूपां च मायाम् । शक्त्या रक्षो जहि कर्णाद्य तूर्णं नश्यन्त्येते कुरवो धार्तराष्ट्राः । करिष्यतः किं च नो भीमपार्थौ तपन्तमेनं जहि पापं निशीथे'** [१८०.४८–९] इति च ॥ २५५ ॥ शक्तितो गात्रतश्च विपुलां महतीम् ॥ २५६ ॥ **'तां वै शक्तिं लेलिहानां प्रदीप्तां पाशैर्युक्तामन्तकस्येव जिह्वाम् । मृत्योः स्वसारं ज्वलितामिवोल्कां वैकर्तनः प्राहिणोद् राक्षसाय'** [५४] इति च ॥२५७॥ निर्भिण्णवक्षाः । **'कृत्स्थले णत्वे निर्विण्णस्योपसङ्ख्यानं कर्तव्यम्'** [८.४.२९] इति वार्तिके निर्भिण्णस्य चोपसङ्ख्यानं

---

१. 'उत्कृत्य' २. '–मानैश्च स्वयम्' ३. 'निर्भिन्नवक्षाः' ४. 'पपात व्यचूर्णयच्छत्रु–'

**तदा ननर्त्त केशवः समाश्लिषच्च फल्गुनम् ।**
**ननाद शङ्खमाधमज्जहास चोरुनिस्वनः ॥ २५९ ॥**

**तमपृच्छद् गुडाकेशः किमेतदिति दुर्म्मनाः ।**
**हते सुतेऽग्रजेऽस्माकं वीरे किं नन्दसि प्रभो ॥ २६० ॥**

**तमाह भगवान् कृष्णो दिष्ट्या जीवसि फल्गुन ।**
**त्वदर्त्थं निहिता शक्तिर्विमुक्ताऽस्मिन् हि राक्षसे ॥ २६१ ॥**

**ततो युधिष्ठिरो दुःखादमर्षाच्चाभ्यवर्त्तत ।**
**कर्ण्णं प्रति तमाहाथ कृष्णद्वैपायनः प्रभुः ॥ २६२ ॥**

**ययाऽर्ज्जुनो निहन्तव्यस्तयाऽसौ राक्षसो हतः ।**
**तन्मा शुचस्त्वं राजेन्द्र दिष्ट्या जीवति फल्गुनः ।**
**इत्युक्त्वा प्रययौ व्यासस्ततो युद्धमवर्त्तत ॥ २६३ ॥**

**भीमार्ज्जुनाभ्यामिह हन्यमाने[१] बले कुरूणामितरैश्च पाण्डवे[२] ।**
**प्रदीपहस्ता अथ योधकाश्च सर्वेऽपि निद्रावशगा बभूवुः ॥ २६४ ॥**

---

कर्तव्यम्– **‘निर्भिण्णस्य वा’** इति । **‘मुखतस्तालु निर्भिण्णम्’** [२.१०.१८], **‘निभिण्णे अक्षिणी तस्य’** इत्यादि च भागवते । **‘स तद् रूपं भैरवं भीमकर्मा भीमं कृत्वा भैमसेनिः पपात । हतोऽप्येवं तव सैन्यैकदेशमपोथयत् स्वेन देहेन राजन्’** [६१] इति च ॥ २५८ ॥ **‘वासुदेवस्तु हर्षेण महताऽभिपरिप्लुतः’** [१८१–१०] **‘ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः । ततः परिष्वज्य पुनः पार्थमास्फोट्य चासकृत् । रथोपस्थगतो धीमान् प्राणदत् पुनरच्युतः’** [१२–१३] इति च ॥ २५९ ॥ गुडा स्नुही । तद्वत् केशा अस्य गुडाकेशः । गुडाकाया निद्राया ईशो जितनिद्रश्च । सुतेऽग्रजेऽस्माकम् । घटोत्कचो हि पाण्डवानां प्रथमजः सुतः ॥ २६० ॥ **‘दिष्ट्याऽपनीतकवचो दिष्ट्याऽपहृतकुण्डलः । दिष्ट्या सा व्यंसिता शक्तिरमोघाऽस्य घटोत्कचे’** [१८१.२३] इति च ॥ २६१ ॥ अमर्षाच्च घटोत्कचहन्तरि कर्णे क्रोधाच्च ॥ २६२ ॥ **‘कर्णमासाद्य सङ्ग्रामे दिष्ट्या जीवति फल्गुनः’** [१८४.५८], **‘मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः’** [६३] **‘पञ्चमे दिवसे तात पृथिवी ते भविष्यति’** [६५] **‘इत्युक्त्वा पाण्डवं व्यासस्तत्रैवान्तरधीयत’** [६७] इति च ॥ २६३ ॥ इतरैः कौरवैश्च पाण्डवे बले । पाण्डवानामिदं पाण्डवम् । प्रदीपो दीपवृक्षः दीपाटिका ।

---

१. **‘–नाभ्यामभिहन्यमाने’** २. **‘–मितरैश्च पाण्डवैः ।’**

दृष्ट्वैव तानाह धनञ्जयस्तदा स्वप्स्यन्तु यावच्छशिनः प्रकाशः ।
इतीरिता आशिषः फल्गुनाय प्रयुज्य सर्वे सुषुपुर्यथास्थिताः ॥ २६५ ॥

पुनश्च चन्द्रेऽभ्युदिते युधे ते समाययुः शस्त्रमहास्त्रवर्षाः ।
तत्राऽयातः सात्यकिं सोमदत्तो भूरिश्च ताभ्यां युयुधे स एकः ॥ २६६ ॥

हतौ च तौ पेततुस्तेन भूमौ बाह्लीक एनं समरे त्वयोधयत् ।
स सात्यकिं विरथीकृत्य बाणं वधाय तस्याऽशु मुमोच वीरः ॥ २६७ ॥

चिच्छेद तं भीमसेनस्त्रिधैव तस्मै शतघ्नीं प्रजहार बाह्लिकः ।
तया हतो विह्वलितो वृकोदरो जघान तं गदया सोऽपतच्च ॥ २६८ ॥

बाह्लीकः प्रार्थयामास पूर्वं स्नेहपुरस्सरम् ।
भीमं त्वयैव[1] हन्तव्यो रणेऽहं प्रीतिमिच्छता ॥ २६९ ॥

---

‘ದೊಂದಿ’,‘ದೀವಟಿಗೆ’ इत्यादि भाषायाम् । योधका इत्यनुकम्पायाम् । **‘व्यदीप्यन्त दिशः सर्वाः प्रदीपैस्तैः समन्ततः । वर्षाप्रदोषे खद्योतैर्वृता वृक्षा इवाऽबभुः’** [१६५.६] इति च ॥ २६५ ॥ स्वप्स्यन्तु । लोलृडयमित्युक्तम् । यथा-स्थिताः । गजस्थिता गजेषु हयस्थिता हयेषु रथस्थिता रथेषु भूमौ स्थिता भूमावेव सुषुपुः ॥ २६५ ॥ **‘ततः कुमुदनाथेन कामिनीगण्डपाण्डुना । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता’** [१८५.४७], **‘ततः प्रववृते युद्धं पुनरेव विशाम्पते । लोके लोकविनाशाय परं लोकमभीप्सताम्’**[५७] इति च । अथ भारते प्रघसनयेन पूर्वोक्तां कथां क्रमिकतया सञ्चिक्षेप– तत्राऽयातः सात्यकिं सोमदत्तो भूरिश्च पितापुत्रौ । **‘सोऽतिविद्धो महाराज सात्वतेन महारथः । सोमदत्तो महाबाहुर्निपपात ममार च’** [१६३.३३] इति च । **‘भूरिस्तु समरे राजन् शैनेयं रथिनां वरम् । आपतन्तमपा-सेधत् प्रयाणादिव कुञ्जरम्’** [१६७.१] **‘छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्छितः । प्रजहार महावेगां शक्तिं तस्य महोरसि । स तु शक्त्या विभिन्नाङ्गो निपपात रथोत्तमात्’** [११–२] इति च । **‘व्यामोहिते तु तनये बाह्लीक-स्तमुपाद्रवत्’**[१५८.११] **‘भीमोऽथ सात्वतस्यार्थे बाह्लीकं नवभिः शरैः । प्रातिपेयं महात्मानं विव्याध रण-मूर्धनि । प्रातिपेयस्तु सङ्क्रुद्धः शक्तिं भीमस्य वक्षसि । निचखान महाबाहुः पुरन्दर इवाशनिम् । स तथाऽभिहतो भीमश्चकम्पे च मुमोह च । प्राप्य चेतश्च बलवान् गदामस्मै ससर्ज ह । सा पाण्डवेन प्रहिता बाह्लीकस्य शिरोऽ-हरत् । स पपात हतः पृथ्व्यां वज्राहत इवाद्रिराट्’** [१२–१५] इति च ॥ २६६–८ ॥ नन्वस्मिन् महाप्रधने न भीमः

---

१. ‘भीम त्वयैव’

**तदा यशश्च धर्म्मं च लोकं च प्राप्नुयामहम् ।**
**इत्युक्त आह तं भीमो नितरां व्यथितस्तदा　　　　　　॥ २७० ॥**

**हन्यां नैवान्यथा युद्धे तत् ते शुश्रूषणं भवेत् ।**
**इति तेन हतस्तत्र भीमसेनेन बाह्लिकः　　　　　　॥ २७१ ॥**

**हते बाह्लीके कौरवा भीमसेनमभ्याजग्मुः कर्ण्णदुर्य्योधनाद्याः[1] ।**
**द्रौणिं पुरस्कृत्य गुरुं च पार्षतः सभ्रातृकः सात्यकिना समभ्ययात्　　॥ २७२ ॥**

**संशप्तकैरेव पार्त्थो युयोध तद् युद्धमासीदतिरौद्रमद्भुतम् ।**
**अक्षोहिणी[2] तत्र भीमार्ज्जुनाभ्यां निसूदिता[3] रात्रियुद्धे समस्ता[4]　　॥ २७३ ॥**

**ततः सूर्य्यश्चाभ्युदितस्तदाऽतिघोरं द्रोणः कर्म्म युद्धे चकार ।**
**स पाञ्चालानां रथवृन्दं[5] प्रविश्य जघान हस्त्यश्वरथान् नरांश्च　　॥ २७४ ॥**

**अक्षोहिणी समस्ता सम्पूर्णा निसूदिता ॥ २७३–९४ ॥**

---

कमपि स्वकुलवृद्धं जघान । तत् किमिति भीष्मस्यापि ज्येष्ठं पितृव्यं स्वभार्याया देव्या जनन्या रोहिण्या अपि जनकं तेन पितामहं च प्रपितामहं च बाह्लीकं जघानेति सात्विकानां संशीतिं वारयन् रहस्यमुद्घाटयति– बाह्लीकः प्रार्थयामास पूर्वम् ॥ २६९ ॥ इत्युक्तः, इति तेनोक्ते सति वा, तदा तस्मिन् सङ्कटे प्रसक्ते तेन नितरां व्यथितो भीम आह । किमिति? हन्याम् । त्वया कुलवृद्धेनोक्तमिति वृद्धानामाज्ञा कनीयसा पालनीयेति हन्याम् । अन्यथा त्वया न प्रार्थितश्चेत् सर्वथा न हन्याम् । तत् तस्मात् तत् त्वदपेक्षापूरणरूपं त्वद्धननं कुलवृद्धस्य ते शुश्रूषणमेव स्यादिति हन्यामित्याह । अथच इत्युक्त आह तं भीमः । किमिति? नितरां व्यथित इत्यादि भवेदित्यन्तम् । तदा तर्हि वृद्धाज्ञेति त्वां हन्याम् । किन्तु नितरां व्यथित एव हन्यां निरुपायतया । नान्यथा, न सन्तोषेण । अथच यदि तत् ते हननं तव मनःप्रीतिकरं शुश्रूषणं भवेत् तदैव हन्याम् । नान्यथा । एवं बह्वर्थानि महतां वचनानि भवन्ति । तेन बाह्लीकेनैव प्रार्थितमिति हेतुना तेन कुलवृद्धानघ्नताऽपि भीमसेनेन बाह्लीको हतः ॥ २७०–१ ॥ कर्णदुर्योधनाद्याः कौरवा द्रौणिं पुरस्कृत्य भीमसेनमभ्याजग्मुः । सभ्रातृकः सशिखण्डी पार्षतो धृष्टद्युम्नः सात्यकिना समेत्य गुरुं द्रोणमभ्ययात् ॥ २७२–३ ॥ तत इति पञ्चदशादिवसयुद्धारम्भः ॥ २७४–५ ॥

---

१. **'कर्णसुयोधनाद्याः ।'**　　२. **'अक्षौहिणी'**　　३. **'निषूदिता'**
४. **'समन्ताद् ।'** इति क्वचित् ।　　५. **'रथबृन्दम्'**

**विद्रावितास्तेन महारथाश्च नैवाविन्दञ्छर्म्म बाणान्धकारे ।**
**युवेव वृद्धोऽपि चचार युद्धे स उग्रधन्वा[1] परमास्त्रवेत्ता ॥ २७५ ॥**

**रथार्बुदं तेन हतं च तत्र ततः सहस्रं गुणितं नराणाम् ।**
**ततो दशांशो निहतो हयानां गजार्बुदं चैव रणोत्कटेन ॥ २७६ ॥**

**तथा विराटद्रुपदौ शराभ्यां निनाय लोकं परमाजिमद्ध्ये ।**
**ततो विजित्यैव गुरोः सुतादीन् धृष्टद्युम्नं भीमसेनो जुगोप ॥ २७७ ॥**

**धृष्टद्युम्नो भीमसेनाभिगुप्तो द्रोणं हन्तुं यत्नमुच्चैश्चकार ।**
**निवारयामास गुरुः शरौघैर्धृष्टद्युम्नं सोऽपि तं सायकेन ।**
**विव्याध तेनाभिहतः स मूर्च्छामवाप विप्रो निषसाद चाऽशु ॥ २७८ ॥**

---

विनेयानां गणितप्रज्ञां परीक्षमाण इवाऽह– रथार्बुदमित्यादि । तत्र रात्रियुद्धे । दश कोटयोऽर्बुदम् । अष्टादशस्वक्षोहिणीषु सङ्कलय्य ३,९३,६६० रथा गजाश्च भवन्ति । अक्षोहिणीगणाप्रविष्टानां केषाञ्चनापि सङ्ग्रहे संहत्य चत्वारि लक्षाणि भवेयुः । तत् कुत आनीयतां रथानां गजानामर्बुदम्? दशसहस्रकोटयश्च नराणाम्? सहस्रकोटयश्चाश्वानाम्? ततो मुखतः सर्वमिदमसङ्गतं भाति । गुह्यभाषेयम् । गुह्यभेदनेन सर्वं सङ्गमनीयम् । तथाह्यर्बुदमित्यनियता सङ्ख्या भवति । केवलं बहुत्ववचनं दश शतं सहस्रमितिवत् । अरं बुद्ध्याऽवच्छेद्यमर्बुदमिति । प्रकरणवशाच्च निर्णेयं भवति । अत्र शतेन गुणितं शतमर्बुदमुच्यते [१००x१००=१००००] । अयुतमित्येतत् । तथाहि भारते– **'हस्तिनामयुतं हत्वा–'** [१९१.३०] इति । अत्र तदेव गजार्बुदमित्युक्तम् । इदं च शते पञ्चाशन्न्यायेन । द्वे अयुते इति परमार्थः । **'हत्वा विंशतिसाहस्रान् पाञ्चालानां रथव्रजान्'** [२८] इति पूर्ववचनादेवैतदवसीयते । तथाच रथार्बुदद्वयं तेन नाशितमित्यर्थः । तदेतत् **'तेन हतं च'** इति चकारेण सूचितम् । पुनरेकं चार्बुदमिति । एवं शतेन गुणितं सहस्रं नराणाम् । लक्षमित्येतत् । ततो दशांशः पुनरयुतमेव । **'जघानाश्वायुतं पुनः'** [३०] इति भारतवचनं च संवदते । दशस्वेकोंऽशः दशांशः । गजानामर्बुदमेव, न पुना रथानामिवार्बुदद्वयमिति **'चैव'** इत्येवकारेणाऽह । अर्बुदशब्दस्यानियतसङ्ख्यावाचित्वं भारतादेवावगम्यते । तथाहि– **'हतः शान्तनवो राजन् दुराधर्षः प्रतापवान् । हत्वा पाण्डवयोधानामर्बुदं दशभिर्दिनैः'** [२.६] इति कर्णपर्वणि । ''भीष्मेण निहता योधा ईषदधिकलक्षार्धमिता इति **'भीष्मद्रोणद्रौणिभिश्च द्वे समं निहते तदा'** इत्याचार्यवचनादेवावसीयते ॥ २७६ ॥ विराटो वयसा ज्यायानिति तं पूर्वं निर्दिदेश–विराटद्रुपदाविति । **'ततो द्रोणः सुपीताभ्यां भल्लाभ्यामरिमर्दनः । द्रुपदं च विराटं च प्रेषयामास मृत्यवे'** [१८७.४२] इति च ॥ २७७ ॥ सोऽपि धृष्टद्युम्नोऽपि

---

१. **'उच्चधन्वा'** इति क्वचित् ।

**धृष्टद्युम्नः सत्वरं खड्गचर्म्मणी आदाय[1] तस्याऽरुरुहे रथोत्तमम् ।**
**सञ्ज्ञामवाप्याथ गुरुः शरौघैः प्रादेशमात्रैर्व्यथयामास तं च ॥ २७९ ॥**

**स तैरतिव्यथितस्तद्रथाच्च परावृत्तः स्वं रथमारुरोह[2] ।**
**सुसंरब्धौ तौ पुनरेव युद्धं सञ्चक्रतुर्वृष्टशराम्बुधारौ ॥ २८० ॥**

**निवार्य्य शत्रुं[3] स शरैर्ब्रह्मास्त्रमसृजद् द्विजः ।**
**तेन सन्दाहयामास पाञ्चालान् सुबहून् रणे ॥ २८१ ॥**

**पुरुजित् कुन्तिभोजश्च तेनान्ये च[4] हतास्तदा ।**
**भीमोऽर्ज्जुनः सात्यकिश्च पर्य्यायेण गुरोः सुतम् ॥ २८२ ॥**

**दूरतो वारयामासुर्म्महत्या सेनया सह ।**
**कर्ण्णदुर्य्योधनादींश्च शल्यं भोजं कृपं तथा ॥ २८३ ॥**

**भीमार्ज्जुनौ शरौघेण वारयामासतू रणे ।**
**तत्र भीमो गजानीकं जयत्सेनं च मागधम् ॥ २८४ ॥**

---

तं गुरुं द्रोणं सायकेन विव्याध ॥ २७८ ॥ विततयोरङ्गुष्ठतर्जन्योर्मानं प्रादेशः । अङ्गुष्ठमध्यमयोस्तालः । अङ्गुष्ठा-नामिकयोर्गोकर्णः । अङ्गुष्ठकनिष्ठयोर्वितस्तिः ॥ २७९ ॥ अहं पूर्वं परं निगृह्णीयामित्यहमहमिका संरम्भः । तत्राभिनिवेशः सुसंरम्भः । अत एव सञ्चक्रतुः समस्पर्धं चक्रतुः । अम्बूनामिव शराणां धारा वृष्टा याभ्याम् ॥ २८० ॥ यथा दग्ध-स्याभिज्ञानमपि न भवेत् तथा समग्रदाहः सन्दाहः । भस्मावशेषान् चकारेत्यर्थः । सुबहून् । यावन्तो बहव एकस्मिन् दिने महताऽपि संरम्भेणान्यवीरैः संह्रियेरन् ततोऽप्यधिकान् बहूनित्यर्थः । यकंयकं पुरः पश्यति तकन्तकं जघानेत्यर्थः । **'पुरुजित् कुन्तिभोजश्च मातुलौ सव्यसाचिनः । सङ्ग्रामनिर्जितान् लोकान् गमितौ द्रोणसायकैः'** [क.प.३.२२] इत्युपरि पठ्यते । कदा गमिताविति न स्फुटम् । अत आह– पुरुजित् कुन्तिभोजश्च । अन्ये च बहवः पाञ्चालमुख्याः । विशेषतश्च द्रुपदपौत्रास्त्रयः[१८७.३३], वसुदानश्च कश्चित् पाञ्चालमुख्यः [१९१.२९] ॥ २८२ ॥ भोजं कृतवर्माणम् ॥२८३॥ जयत्सेनं च मागधम्, जरासन्धसुतं सहदेवानुजम् । यद्यप्ययमभिन्युना हत इति सम्प्रति भारते पठ्यते– **'जयत्सेनस्तथा राजन् जारासन्धिर्महाबलः । मागधो निहतः सङ्ख्ये सौभद्रेण महात्मना'** [क.प.२.३३] इति । सुभद्र एव सौभद्रो

---

१. 'खड्गचर्मण्यादाय'
२. 'स्वरथं चाऽरुरोह'
३. 'शत्रून् स–'
४. '–न्येऽपि हता–'

**जघान सुबहूंश्चैव मागधानां रथव्रजान् ।**
**अथ माळवराजस्य[1] त्वश्वत्थामाभिधं गजम् ॥ २८५ ॥**

**भीमसेनहतं दृष्ट्वा वासुदेवप्रचोदितः ।**
**अश्वत्थामा हत इति प्राह राजा युधिष्ठिरः ॥ २८६ ॥**

**अश्वत्थामवधं श्रुत्वा नाहं योत्स्य इति स्वयम् ।**
**पुरोक्तं धर्म्मजायैव तेन द्रोणो युधिष्ठिरम् ॥ २८७ ॥**

**ब्रूहि सत्यमिति प्राह सत्यमित्येव सोऽब्रवीत् ।**
**उपांशु कुञ्जरश्चेति द्रोणोऽतो[2] व्यथितोऽभवत् ॥ २८८ ॥**

**तस्य भीमो रथेषां च गृहीत्वा न तवेदृशम् ।**
**योग्यं गुणवतो नित्यं परधर्म्मोपजीवनम् ॥ २८९ ॥**

**इत्याह खस्था मुनयश्चालमेहीति तं तदा ।**
**ऊचुस्तदखिलं ज्ञात्वा द्रोणः शस्त्रमवासृजत् ॥ २९० ॥**

---

भीमसेन इति व्याख्येयम् । अर्वाचीनानां प्रमादात् पाठव्यत्यासोऽपि सम्भाव्यते । **'भीमेनासौ महात्मना'** इति प्रायः प्रतनः पाठः । **'असौ भद्रेण'** इति वा प्रतृण्णम् ॥ २८४ ॥ माळवा नाम जनपदाः । येषां राजधानीमुज्जयिनी-माहुः । मालयन्तीति मालवाः । मल धारणे धर्षणे वा । मळ धर्षणे इति च पठनीयम् । मालेरवक्प्रत्यय इति भोजः [स.कं.२.३.१३४] । न किल पाणिनीया ळकारं पठन्ति । तेन तेषामास्ये माळवा मालवा बभूवुः । मा डवन्ते ध्वनन्तीति माडवा एव माळवाः । मितभाषिणः । उपांशु च भाषन्त इत्यर्थः । माळवानां राजा माळवराजः । तस्येन्द्रवर्मणः । **'ततो भीमो महाबाहुरनीकेषु महागजम् । जघान गदया राजन्नश्वत्थामानमित्युत । परप्रमथनं घोरं माळवस्येन्द्रवर्मणः'** [द्रो.प.१९१.१४] इति च ॥ २८५ ॥ प्राह उच्चैराह । **'अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह । अव्यक्तमब्रवीद् राजन् हतः कुञ्जर इत्युत'** [१९१.५४] इति च ॥२८६–८॥ रथस्य ईषां लाङ्गलदण्डम् । **'ततो भीमो दृढक्रोधो द्रोण-स्याऽश्लिष्य तं रथम् । शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत् । यदि नाम न युद्ध्येरन् शिक्षिता ब्रह्मबन्धवः । स्वकर्मभिरसन्तुष्टा न स्म क्षत्रं क्षयं व्रजेत् । अहिंसां सर्वभूतेषु धर्मं ज्यायस्तरं विदुः । तस्य च ब्राह्मणो मूलं भवांश्च ब्रह्मवित्तमः'** [१९३.३६–८] **'स्वकर्मस्थान् विकर्मस्थो न व्यपत्रपसे कथम्'** [४०] इति च ॥ २८९ ॥ खस्था

---

१. **'मालवराजस्य'** २. **'द्रोणोऽतिव्यथितो–'** । **'द्रोणोऽथो'** इति कचित् ।

**स न्यस्य कर्म्माणि तदाऽखिलानि योगारूढः परमं वासुदेवम् ।
सर्वेश्वरं नित्यनिरस्तदोषं ध्यायन् मुक्त्वा देहमगात् स्वधाम ॥ २९१ ॥**

**तं केशवः पाण्डवा गौतमश्च यान्तं स्वलोकं ददृशुर्विहायसा ।
धृष्टद्युम्नः पाण्डवैर्वार्य्यमाणोऽप्यगात् खड्गं चर्म्म चाऽदाय तत्र ॥ २९२ ॥**

**छित्वाऽसिना तस्य शिरः पुनश्च रथं स्वकीयं त्वरया समास्थितः ।
दृष्ट्वा कृपस्तं सुभृशं भयार्दितः सम्प्राद्रवद् वाजिनमेकमास्थितः ॥ २९३ ॥**

**सञ्छिन्ने द्रोणशिरसि गर्हयामास वासविः ।
युधिष्ठिरं च[1] पाञ्चाल्यं सात्यकिश्चापि कोपितः[2] ॥ २९४ ॥**

---

मुनयश्चोचुः । अलं युद्धेन । एहि ब्रह्मलोकम् । निवर्तस्व युद्धादिति । **‘विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । वसिष्ठः काश्यपोऽत्रिश्च ब्रह्मलोकं निनीषवः’** [१९१.३२] **‘त एनमब्रुवन् सर्वे द्रोणमाहवशोभिनम् । अधर्मतः कृतं युद्धं समयो निधनस्य ते । न्यस्याऽयुधं रणे द्रोण समीक्षास्मानवस्थितान् । नातः क्रूरतरं कर्म पुनः कर्तुमिहार्हसि । वेद-वेदाङ्गविदुषः सत्यधर्मरतस्य च । ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते । त्यजायुधममोघेषो तिष्ठ वर्त्मनि शाश्वते । परिपूर्णश्च कालस्ते वस्तुं लोकेऽद्य मानुषे । ब्रह्मास्त्रेण त्वया दग्धा अनस्त्रज्ञा नरा भुवि । यदेतदीदृशं विप्र कृतं कर्म न साधु तत् । न्यस्याऽयुधं रणे विप्र द्रोण मा त्वं चिरं कृथाः । मा पापिष्ठतरं कर्म करिष्यसि पुनर्द्विज’** [३४–९] इति च ॥ २९० ॥ अखिलानि कर्माणि भगवति न्यस्य । तस्मिन्नर्पयित्वा तत्पूजाऽस्त्विति । **‘परमं पुरुषं विष्णुं जगाम मनसा परम्’** [१९३.५२] इति, **‘जगाम परमं स्थानं देहं न्यस्य रथोत्तमे’** [५५] इति च । स्वधाम स्वलोकम् ॥ २९१ ॥ तं केशवः पाण्डवा गौतमश्च । **‘वयमेव तदाऽद्राक्ष्म पञ्च मानुषयोनयः । योगयुक्तं महात्मानं गच्छन्तं परमां गतिम् । अहं धनञ्जयः पार्थः कृपः शारद्वतो द्विजः । वासुदेवश्च वार्ष्णेयो धर्मपुत्रश्च पाण्डवः’** [५९–६०] इति सञ्जयवचनम् । भारते धनञ्जयधर्मपुत्रयोर्ग्रहणमुपलक्षणमिति भावेन **‘पाण्डवाः’** इत्याह ॥ २९२ ॥ समागत्य रथमारुह्य स्थितः । तं निकृत्तशिरसं द्रोणम् । शिरश्छिन्दन्तं धृष्टद्युम्नं वा । स्वावुत्तस्य वधेन भयार्दितः । सेनापतेर्निधनेन सेना विनायका जातेति भृशं भयार्दितः । विकृतमारणेन च सुभृशम् । सम्प्राद्रवत् अश्वत्थाम्ने पितृवधवार्तां श्रावयितुम्, सम्भ्रान्तः सत्वरः ससाध्वसकम्पः प्रश्वसन्नद्रवत् । एकम्, यङ्कश्चनाभ्यर्णगतं चक्षुःपतितम् ॥ २९३ ॥ सञ्छिन्ने सर्वसमक्षं छिन्ने । अनेन प्रसङ्गेन कोपितो वासविर्युधिष्ठिरं च पाञ्चाल्यं च गर्हयामास । पाञ्चाल्यं पाञ्चालराजस्य तनयम् । अपिच, सात्यकिरपि कोपितः । गर्हयामास च । **‘उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात् । धर्मज्ञेन सता नाम सोऽधर्मः सुमहान् कृतः’**

---

१. ‘युधिष्ठिरश्च’

२. **‘सात्यकिश्चातिकोपितः’** इति क्वचित् ।

धृष्टद्युम्नस्तु तावाह कथं भूरिश्रवा हतः ।
इति तं सात्यकिः क्रुद्धो गदापाणिः समभ्ययात् ॥ २९५ ॥

आह्वयामास पाञ्चाल्यस्तं धृतासिरविस्मयः ।
तदा जग्राह शैनेयं भीमः कृष्णप्रचोदितः ।
शमयामास पार्थं च पाञ्चाल्यस्नेहयन्त्रितः ॥ २९६ ॥

ते वासुदेवेन तदाऽनुशिक्षिताः[१] स्नेहं पुनः पूर्ववदापुरुत्तमम् ।
यत्ताश्च युद्धाय समुद्यताश्च तदाऽऽगमद् द्रौणिरप्यात्तधन्वा ॥ २९७ ॥

आश्रुत्य तातं निहतं प्रतिज्ञां चकार निःशेषरिपुप्रमाथने ।
नारायणास्त्रं विससर्ज्ज कोपात् तदा भीता भीममृते समस्ताः ॥ २९८ ॥

युधिष्ठिरः प्राह विषण्णचेतनः शैनेयपूर्वाः प्रतियान्तु सर्वे ।
सभ्रातृकोऽहं द्रौणिवरास्त्रमग्नो[२] भवेयमित्यत्र जगाद केशवः ॥ २९९ ॥

**तौ अर्जुनसात्यकी ॥ २९५–९ ॥**

---

[१९७.३६] इति, **'न्यस्तशस्त्रमधर्मेण पातयित्वा गुरुं भवान् । रक्षत्विदानीं सामात्यो यदि शक्तोऽसि पार्षतम्'** [४२] इत्यादि युधिष्ठिरं गर्हयामास वासविरर्जुनः । **'गुरुं मे यत्र पाञ्चाल्यः केशपक्षे परामृशत् । तन्न जातु क्षमेद् द्रौणिर्जानन् पौरुषमात्मनः'** [१९७.३५] इत्यादि पाञ्चाल्यम् । अपि च सात्यकिः–**'अनार्यं तादृशं कृत्वा पुनरेवं गुरुं क्षिपन् । वध्यस्त्वं न त्वयाऽर्थोऽस्ति मुहूर्तमपि जीवता'** [१९९.१४] इत्यादि पाञ्चाल्यम् । अर्जुनः युधिष्ठिरं पाञ्चाल्यं च गर्हयामास । सात्यकिः पाञ्चाल्यमिति वाऽन्वयः ॥ २९४ ॥ **'परान् क्षिपन्ति दोषेण स्वेषु दोषेष्वदृष्टयः । यः स भूरिश्रवाश्छिन्नभुजः प्रायगतस्त्वया । वार्यमाणेन हि हतस्ततः पापतरं नु किम्'** [२००.३०] इति धृष्टद्युम्न-वचनम् ॥ २९५ ॥ अविस्मयः किमिदमतर्कितमापतितमिति विस्मयरहितः, असम्भ्रान्तः । अथ स्मयो गर्वः । विगतगर्वो विस्मय उच्यते । स न भवतीत्यविस्मयः सगर्व एव ॥ २९६ ॥ यत्ताः यतनवन्तः । **'अकर्मकाद् यततेः कर्तरि क्तः'** [अ.सू.३.४.७२] । यती प्रयत्न इति धातोरीदित्त्वान्निष्ठायामिडागमो न भवति [७.२.१४] । समुद्यताः सन्नद्धाः ॥ २९७ ॥ कृपादान्तं श्रुत्वा कोपात् । तातम् । **'दुतनिभ्यां दीर्घश्च'** [६.१०] इति दशपादिका । दीर्घश्च क्तश्च । दुनोतीति दूतः । तनोतीति तातः । छन्दस्यदीर्घश्च–**'तत कस्मै मां दास्यसि'** । प्रमाथनं मारणम् । भीममृते । **'पाण्डुसैन्यमृते भीमं सुमहद् भयमाविशत्'** [२००.६८] इति च ॥ २९८ ॥ द्रौणिवरास्त्रमग्नः । **'सङ्ग्रामस्तु न कर्तव्यः सर्वसैन्यान्**

---

१. 'तदा सुशिक्षिताः'
२. **'–स्त्रभग्नो–'**

नमध्वमस्त्रस्य ततो विमोक्ष्यथेत्यथ प्रणेमुश्च धनञ्जयादिकाः ।
सर्वे न भीमस्तदमुष्य मूर्ध्नि पपात सोऽग्नाविव संस्थितोऽग्निः ॥ ३०० ॥

अदह्यमाने भीमेऽपि वह्नौ वह्निरिव स्थिते ।
अवेष्टयद्[१] वारुणेन पार्थोऽत्राऽत्मप्रपत्तये ॥ ३०१ ॥

न देहे पतितास्त्रस्य बहिर्वेष्टनतः फलम् ।
तथाऽपि स्नेहवशगो वेष्टयामास फल्गुनः ॥ ३०२ ॥

अमोघत्वं निजास्त्रस्य भीमस्यावद्ध्यतामपि ।
साधयन् सार्ज्जुनः कृष्णो भीमस्य रथमारुहत् ॥ ३०३ ॥

वेष्टितं वारुणास्त्रेण प्रविष्टं बाह्यतस्तदा ।
सहितत्वात् केशवेन नरत्वादथ फल्गुनम् ॥ ३०४ ॥

**स भीमः अग्नौ अग्निरिव संस्थितः । अस्त्रेणाऽवृतस्तेनादह्यमानः स्थितः ॥ ३०० ॥ अदह्यमाने, अस्त्रेणेति शेषः । स्थिते, अस्त्रावृतत्वेनेति शेषः । आत्मप्रपत्तये (ज्येष्ठभ्रातृ)निमित्तं स्वकर्तव्याय ॥३०१॥ भीमहितार्थं कुतो नेत्यत आह– नेति ॥ ३०२–३ ॥ बहिरस्त्रत्वात् । नरत्वात् नरावेशत्वात् ॥ ३०४ ॥**

---

**ब्रवीमि वः । अहं हि सह सोदर्यैः प्रवेक्ष्ये हव्यवाहनम्'** [२००.३०] इति युधिष्ठिरवचनम् । नारायणास्त्ररूपं हव्यवाहनम् ॥ २९९ ॥ **'येऽञ्जलिं कुर्वते वीर नमन्ति च विवाहनाः । तान् नैतदस्त्रं सङ्ग्रामे निहनिष्यति मानवान्'** [२००.४७] इति च । अस्त्रस्य पुरः स्वयमेव नमध्वम् । वाहनेभ्योऽवरुह्य प्रह्वीभवत स्तुवत च । अथ अतः कृष्णादेशात् । प्रकृष्टं नारायणं नेमुः । मनसा कायेन च नेमुः । **'तेषु निक्षिप्तशस्त्रेषु वाहनेभ्यश्च्युतेषु च । तदस्त्रवीर्यं विपुलं भीममूर्धन्यथापतत्'** [२००.७०] इति च । **'अग्नावग्निरिव न्यस्तो ज्वालामाली सुदुर्दृशः'** [२०१.३] इति । **'सूर्यमग्निः प्रविष्टः स्याद् यथा चाग्निं दिवाकरः । तथा प्रविष्टं तत् तेजो नचाज्ञायत पाण्डवः'** [७] इति च ॥ ३०० ॥ **'भीमसेनं समाकीर्णं दृष्ट्वाऽस्त्रेण धनञ्जयः । तेजसः प्रतिघातार्थं वारुणेन समावृणोत्'** [२००.१] इति च । आत्मनः कर्तव्याय गुरुसेवनाय ॥ ३०१–३ ॥ **'न्यस्तशस्त्रौ ततस्तौ तु नादहत् सोऽस्त्रजोऽनलः । वारुणास्त्रप्रयोगाच्च वीर्यवत्त्वाच्च कृष्णयोः'** [२०१.१३] इति वचनस्याऽशयमाह– वेष्टितं वारुणास्त्रेण ॥ ३०४ ॥

---

१. 'आवेष्टयद्–'

तदस्त्रं नादहत् ताभ्यां स्वरथादवरोपिते ।
भीम आच्छिन्नहेतौ च तदस्त्रं शान्तिमागमत् ॥ ३०५ ॥

शुद्धक्षत्रियधर्म्मेषु निरतत्वाद्[१] वृकोदरः ।
वाहनादवतीर्य्यान्यैः प्रणतेऽपि निरायुधैः ।
सायुधः सरथोऽयुद्ध्यदविषह्यमपीश्वरैः[२] ॥ ३०६ ॥

स्वधर्म्महानौ मित्राणां कर्त्तव्यं यन्निषेधनम् ।
अतः सोऽन्यानपि प्राह मा गमध्वमिति[३] स्वयम्[४] ॥ ३०७ ॥

नमस्कार्य्यमपि ह्यस्त्रं न नम्यं जीवनेच्छया ।
समरे शत्रुणा मुक्तं तस्मात् तन्न[५] चकार सः ॥ ३०८ ॥

अस्त्राभिमानी वायुर्हि देवताऽस्य हरिः स्वयम् ।
तस्माद्[६] भीमं स्वरूपत्वान्नादहच्चाग्निमग्निवत् ॥ ३०९ ॥

मनसैवाऽदरं चक्रे भीमोऽस्त्रे च हरौ तदा ।
क्षत्रधर्म्मानुसारेण न ननाम च बाह्यतः ॥ ३१० ॥

वासुदेवः स्वकीयास्त्रं भीमं चामोघमेव तु ।
साधयित्वाऽनन्तशक्तिः पुनरश्वानचोदयत् ॥ ३११ ॥

**आच्छिन्नहेतौ आकृष्टायुधे ॥ ३०५ ॥ ईश्वरैः अविषह्यमपि अस्त्रमयुध्यत् ॥ ३०६–७ ॥ नमस्कार्यं नमस्कारयोग्यम् । तत् नमनम् ॥ ३०८–१७ ॥**

---

आच्छिन्नहेतौ । आक्षिप्य भुवि न्यासितायुधे ॥ ३०५ ॥ अविषह्यमस्त्रं प्रत्ययुध्यत् ॥ ३०६–७ ॥ तत् नमनम् । '**तं न**' इति वा प्रतृण्णम् । तं नमस्कारम् ॥ ३०८–११ ॥

---

१. '**निरतो यद्–**' २. '**–मपीश्वरः ।**' ३. '**मा नमध्वमिति**'
४. '**–मिति स्फुटम् ।**' इति क्वचित् । ५. '**तं न**' ६. '**भीमस्वरूप–**'

पुनः प्रयोक्तुमस्त्रं तं[1] धार्त्तराष्ट्रोऽभ्यचोदयत् ।
द्रौणिर्न्न शक्यमित्युक्त्वा धृष्टद्युम्नं समभ्ययात् ॥ ३१२ ॥

आयान्तमीक्ष्यैव गुरोः सुतं तं धृष्टद्युम्नं सात्यकिरन्वयाद् रणे ।
उभौ च तौ सायकाभ्यामविद्ध्यन्निपेततुस्तौ च विमूर्च्छितौ रणे ॥ ३१३ ॥

भीमस्याभ्यागतस्याश्वान् द्रौणिर्व्यद्रावयद् रणे ।
संस्थापयति तान् भीमे ददर्श द्रौणिमर्ज्जुनः ॥ ३१४ ॥

ततोऽर्ज्जुनस्तं प्रतियोद्धुमागमद् रूक्षा वाचः श्रावयन् क्रुद्धरूपः ।
तत्राऽग्नेयं द्रौणिरमुञ्चदस्त्रं तेन व्याप्ता पृतना पाण्डवानाम् ॥ ३१५ ॥

अक्षोहिणी[2] निहता चात्र सेना पार्त्थं सयानं हरिरुज्जहार ।
जीवन्तमालोक्य सुरेन्द्रनन्दनं द्रौणिः कोपात् कार्म्मुकं चापहाय ।
ययौ तमागत्य जगाद कृष्णो वेदान्तकृत् पूर्णषाड्गुण्यदेहः ॥ ३१६ ॥

---

तमश्वत्थामानम् । न शक्यमिति । **'नैतदावर्तते राजन्नस्त्रं द्विर्नोपपद्यते । आवृत्तं हि निवर्तेत प्रयोक्तारं न संशयः'** [२०१.२८] इति च ॥ ३१२ ॥ तं विफलनारायणास्त्रं गुरोः सुतं धृष्टद्युम्नमभ्यायान्तमीक्षित्वैव स्वयं सात्यकिः धृष्टद्युम्नमन्वयात् । अविध्यत् गुरोः सुतः । विद्धौ च तौ निपेततुः ॥ ३१३–४ ॥ रूक्षा वाचः श्रावयन् । **'तस्मादनर्हमश्लीलमप्रियं द्रौणिमुक्तवान् । मान्यमाचार्यतनयं रूक्षं कापुरुषं यथा'** [२०२.१३] इति च । क्रुद्धरूपः अर्जुनः प्रतियोद्धुमागमत् । क्रुद्धरूपः द्रौणिराग्नेयमस्त्रममुञ्चत् । **'द्रौणिश्चुकोप पार्थाय कृष्णाय च विशेषतः । स तु यत्तो रथे स्थित्वा वार्युपस्पृश्य वीर्यवान् । देवैरपि सुदुर्धर्षमस्त्रमाग्नेयमाददे । दृश्यादृश्यानरिगणानुद्दिश्याऽचार्यनन्दनः'** [१५–६] इति च ॥ ३१५ ॥ निहता अनभिज्ञेयरूपा हता । **'तत्राद्भुतमपश्याम कृत्स्नामक्षोहिणीं हताम् । अनभिज्ञेयरूपां च प्रदग्धामस्त्रतेजसा'** [२०२.३८] इति च । तमागत्य जगाद कृष्णः । **'ततः स्निग्धाम्बुदाभासं वेदावासमकल्मषम् । वेदव्यासं सरस्वत्यावासं व्यासं ददर्श ह'** [२०२.४७] इति । वेदं व्यस्यन् वेदव्यासः । विशिष्टः पूर्णषाड्गुण्यदेह आसेति व्यासः ॥ ३१६ ॥

---

१. 'तद् धार्त–'  २. **'अक्षौहिणी'**

मा याहि साक्षाद् गिरिशः सुराणां कार्य्याय भूमौ बलवानजायथाः ।
महच्च कार्य्यं पुनरस्ति दृष्टं तवाऽशु तच्च प्रतिपादयेति ॥ ३१७ ॥

तथोदितः प्रातरिति ब्रुवाणो ययौ प्रणम्याखिलवेदयोनिम् ।
ययुस्तमन्वेव सुयोधनादयो दुःखानतास्ते शिबिराय भीताः ॥ ३१८ ॥

पार्त्थाश्च सर्वे मुदिता जनार्द्दनं परं स्तुवन्तः शिबिराय जग्मुः ।
तत्रापि रात्रावमितान्[१] हरेर्ग्गुणाननुस्मरन्तो मुमुदुः समेताः ॥ ३१९ ॥

**इति श्रीमदानन्दतीर्त्थभगवत्पादकृते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये नारायणास्त्रोपशमनं नाम**
**षड्विंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **३९३०**+३१९=**४२४९**]

**प्रातर्युद्धमस्तु इति ब्रुवाणः शिबिरं ययाविति सम्बन्धः ॥ ३१८–९ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायां षड्विंशोऽध्यायः

—०—

---

साक्षात् स्वरूपतः । न त्वावेशतः । इति जगाद ॥ ३१७ ॥ वेदानां योनिरभिव्यक्तिकारणम् । वेदाः योनिर्ज्ञप्तिकारणमस्य ॥ ३१८ ॥ अनुरूपं स्मरन्तः । अनुभूय स्मरन्तः ॥ ३१९ ॥

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
प्रगतं षड्विंशाध्यायविवरणं सतां हृदयाभरणम् ॥

इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयभावपञ्चिकायां तात्पर्यचन्द्रिकायां
षड्विंशोऽध्यायः

—०—

---

१. 'रात्रावपि तान्'

# सप्तविंशोऽध्यायः

**[कर्ण्णवधः]**

**ॐ ॥ अथानुज्ञामुपादाय द्रौणेर्दुर्य्योधनो नृपः ।**
**कर्ण्णं सेनापतिं चक्रे सोऽगाद् युद्धाय दंसितः[1] ॥ १ ॥**

**तत्राभवद् युद्धमतीव दारुणं पाण्डोः सुतानां धृतराष्ट्रजैर्ग्गजे ।**
**तत्रोदयाद्रिप्रतिमे प्रदृश्यते भीमो यथोद्यन्[2] सविताऽतिनिर्म्मलः ॥ २ ॥**

**तं कालयन्तं नृपतीन् क्षेमधूर्त्तिरभ्यागमत् तस्य गजं जघान च ।**
**तं वीर्य्यमत्तं प्रतिलभ्य भीमो निनाय मृत्योः सदनाय शीघ्रम् ॥ ३ ॥**

---

ॐ ॥ अथ कर्णपर्वकथां सङ्क्षिप्य निर्णिनाय सप्तविंशे । द्रौणेः द्रोणपुत्रस्य । द्रोणपुत्राद् वा । अनुकूला मतिरनुज्ञा– 'ममापीदमिष्टम्, एवं क्रियताम्' इति । तामनुज्ञामुपादाय अग्रतोऽङ्गीकृत्य । **'ते वयं प्रवरं पुंसां सर्वैर्योधगुणैर्युतम् । कर्णमेवाभिषेक्ष्यामः सेनापत्येन भारत'**[क.प.७.१७] इत्यश्वत्थामवचनम् । दंसितः व्यूढकवचः । दंसं कवचमाहुः प्राश्चः । दंशमर्वाश्चः । **'दसि दशि दंशनस्पर्शनयोः'** इति धातुपाठं च पठन्ति । **'दसि आवरणे'** इति तु युक्तम् ॥ १ ॥ तत्र षोळशदिनारम्भे । तत्र कर्णं पुरोधाय प्रवृत्ते युद्ध इति द्वितीयतत्रपदार्थः । उदयाद्रिप्रतिमे गजे । **'स नागप्रवरोऽत्युग्रो विधिवत् कल्पितो बभौ । उदयाग्राद्रिभवनं यथाऽभ्युदितभास्करम्'** [९.२२] इति च । प्रकाशमानो दृश्यते । अतिनिर्मलः मेघाद्यावरणरहितत्वात् सविता । स्वयं निर्मलोऽप्यावरणापगमेनातिनिर्मलो भासते । ग्रैष्मः सूर्य इत्यर्थः । परशुक्लत्रयान्तर्भावाद् भीमः । स्वयं प्रोद्यदादित्यवर्णश्च भीमः । युद्धकृतवैवर्ण्यादिविरहाच्चातिनिर्मलः । सूर्योऽपि ग्रैष्मत्वादधिकं तपन् भीमः ॥ २ ॥ क्षेमधूर्तिरिति कश्चित् कुलूतदेशपो भूपतिरित्युक्तम् । अभ्यागत्य तस्य भीमस्य गजं जघान च । स भीमः तस्य क्षेमधूर्तेः गजं च जघान । **'स पपात महानागो भीमसेनस्य भारत । पुरा नागस्य पतनाद-वप्लुत्य स्थितो महीम् । भीमसेनोऽपि तन्नागं गदया समपोथयत्'** [९.४२–३] इति च । गजमिव तं क्षेमधूर्तिमपि वीर्यमत्तं प्रतिलभ्य अवगत्य निनाय मृत्योः सदनाय । **'उद्यतायुधमायान्तं गदयाऽहन् वृकोदरः'** [४४] इति च । क्षेम-धूर्तिरिति कश्चिद् वीरः सात्यकिना हत इत्युपरि पठ्यते । तथाहि शल्यवधपर्वणि–**'तेन शब्देन वित्रस्तान् पाञ्चालान्**

---

१. **'दंशितः'** २. **'यथोद्यत्सविता'**

निहत्य तं मारुतिरभ्यकृन्तच्छिरांसि यूनां परपक्षपातिनाम् ।
विक्षोभयामास च शत्रुसैन्यं सिंहो यथैव श्वसृगालयूथम् ॥ ४ ॥

सङ्क्षोभ्यमाणं तदनीकमीक्ष्य द्रौणी रथेन प्रतिजग्मिवांस्तम् ।
तद् युद्धमासीदतिघोरमद्भुतं पुरा यथा नाऽस च कस्यचित् क्वचित् ॥ ५ ॥

दृष्ट्वैव तद् देवगन्धर्वविप्रा ऊचुर्नेदृग् दृष्टपूर्वं सुयुद्धम् ।
नचोत्तरं वाऽपि भविष्यतीदृक् कलां च सर्वाणि न षोडशीमियुः[1] ॥ ६ ॥

नैतादृशी ज्ञानसम्पद् बलं वा द्वयं कुतो वायुमृते शिवं तथा ।
द्वयोः समाहार इह द्वयोरपि ज्ञानस्य बाह्वोश्च बलस्य सूर्जितः[2] ॥ ७ ॥

**ॐ ॥ १–६ ॥ वायुं शिवं (तथा ।) तथा शब्दश्चार्थः । ऋते । एतादृशी ज्ञानसम्पत् एतादृशं बलं वा**

---

**भरतर्षभ । शिनेर्नप्ता महाबाहुरन्वपद्यत सात्यकिः । स समासाद्य राजानं क्षेमधूर्तिं महाबलम् । सप्तभिर्निशितैर्बाणैर-नयद् यमसादनम्'** [श.प.२०.७–७] इति । नायं कुलूताधिपतिः । कश्चिदन्यो राजन्यः स्यात् ॥ ३ ॥ परपक्षः शत्रु-पक्षः । तं शत्रुपक्षं पतितुं स्वयमनुगन्तुं शीलमेषामिति परपक्षपातिनः । परेषु कौरवेषु पक्षपातिनश्च । उभयोरयं श्रेयानित्य-भिमानः पक्षपातः । अत एव तेषां शिरांसि मारुतिरभितः इतस्ततः अन्वेषमन्वेषमकृन्तत् । विक्रम्य क्षोभयामास । विद्राव्य क्षोभयामास । विदार्य क्षोभयामास । क्षुभ सञ्चलने । प्रकृतिविपर्ययो मथनं च सञ्चलनम् । त्यक्तसहजधैर्यान् कान्दिशीकान् ममाथेत्यर्थः । वनशुनां सृगालानां च यूथम् । श्वयति मांसखण्डार्थं यत्रकुत्रापि गच्छतीति श्वा कुक्कुरः । श्वयतेः कनिन् । **'कुक्कुरस्तु शुनि श्वानः कपिलो मण्डलः शुनः'** इत्यभिधानम् । सृजति मायामिति सृगालः । अथच असृगा-लातीति असृगालं सन्तं सृगालमाहुः । **'तालव्या अपि दन्त्याश्च शाम्बशम्बरशूकराः । रशनाऽपि च जिह्वायां शृगालः कलशोऽपि च'** इति च । तिरश्चां समूहो यूथो यूथं वा । यौतेस्थक् । वस्तुतस्तु यत्र स्थिरं युवन्ति, युतास्तिष्ठन्ति तद् यूथम् । **'यूथं तिर्यक्समूहेऽस्त्री'** इत्यभिधानम् ॥ ४ ॥ एवं समष्ट्या समन्तात् क्षोभ्यमाणम् । क्षोभ्यमाणं समीक्ष्य वा । प्रतिरोधाय गमनं प्रतिगमनम् । अभीरूणामपि घोरं भयजननमतिघोरम् । वीराणामद्भुतम् । कस्यचित् केन-चिच्च । नेतः पूर्वं प्राणशिवयोस्तत्समयोर्वा युद्धमास क्वचित् । न परस्ताद् भविष्यति ॥ ५ ॥ विप्रा इत्यृषयः । असदृशं सदृशयोगश्च धर्मयुद्धमिति सुयुद्धम् । शिक्षापाटवेन प्रेक्षमाणानां पुलकभेदनं च । उत्तरमुत्तरकालभावि । सर्वाणि भूतानि भावीनि च सुयुद्धानि । इयुः गच्छेयुः । इण् गतौ, विधिलिङ् । **'तत्र सिद्धा महाराज सम्पतन्तोऽब्रुवन् वचः । युद्धा-नामति सर्वेषां युद्धमेतदिति प्रभो । सर्वयुद्धानि चैतस्य कलां नार्हन्ति षोडशीम् । नेदृशं च पुनर्युद्धं भविष्यति कदाचन'** [१२.२७–९] इति च ॥ ६ ॥ **'अहो ज्ञानेन सम्पन्नावुभौ ब्राह्मणक्षत्रियौ । अहो शौर्येण सम्पन्नावुभौ**

---

१. **'–शीमयुः'**

२. **'–स्य पूर्तितः'** इति क्वचित् ।

**इतीर्य्यमाणे विबुधैर्न्नरोत्तमौ दिशः समस्ता गगनं च पत्रिभिः ।**
**निरन्तरं चक्रतुरुत्तमोजसौ[1] दृष्ट्वैव तद्[2] भीतिमगुर्म्महारथाः ॥ ८ ॥**

**शरासने मारुतिना निराकृतो[3] द्रौणिर्म्महास्त्राणि मुमोच तस्मिन् ।**
**तान्यस्त्रवर्य्यैर्[4]बलवानविस्मयः संशामयामास सुतोऽनिलस्य ॥ ९ ॥**

**पुनः शरैरेव परस्परं तावयुद्ध्यतां चित्रमलं च सुष्ठु ।**
**तदा तु भीमस्य शरैर्भृशार्त्तो[5] द्रौणिः पपाताऽशु दृढं विचेतनः ॥ १० ॥**

**भीमश्च विह्वलतनुः स तु किञ्चिदेव पूर्वं गते गुरुसुते प्रययौ क्षणेन ।**
**निर्द्धूतयुद्धश्रम आत्तधन्वा योद्धुं गजौघं प्रतिनादिताशः ॥ ११ ॥**

**न, अन्यस्येति शेषः । द्वयं मिलितं कुतः? ॥ ७ ॥ दिशो निरन्तराः गगनं (च) निरन्तरं चक्रतुः ॥ ८–१८ ॥**

---

**चोग्रपराक्रमौ । अहो भीमबलो भीम एतस्य च कृतास्त्रता । अहो वीर्यस्य सारत्वमहो सौष्ठवमेतयोः'** [२९–३१] इति च । एकैकमपि नेतरत्र । द्वयं पुनः कुतः? द्वयोः वायुशिवयोः । द्वयोरपि ज्ञानस्य च बाह्वोर्बलस्य च । सूर्जितः अत्युद्रिक्तः ॥ ७ ॥ नरोत्तम इति मुख्यतो भीमः । उत्तमो नर इति द्रौणिश्च । उत्तमोजसौ । पररूपम् । **'ओमाङोश्च'** [अ.सू.६.१.९५] इत्यत्र **'ओकारे वा'** इत्युपस्कर्तव्यम् । अत एव **'तद्गुणोततान्'** इत्याहानुभाष्ये ॥ ८ ॥ शरासने छिन्ने शराणामसने कर्मणि मारुतिना निराकृतः । संशामयामास । शम आलोचने । चुरादिः । शामयते । समित्युपसर्ग-बलादुपशमार्थता । अथवा संशामयामास । समग्रं शमयामास । शमु उपरमे । दर्शनादन्यत्रापि क्वचिन्मित्सञ्ज्ञा न भवती-त्यनेन ज्ञापयति । तथाचैवं व्यवस्था–दर्शनेऽर्थे न मित्सञ्ज्ञा– पश्यति निशामयति । अन्यत्रापि श्रवणेऽर्थे नियता मित्सञ्ज्ञा– शृणोति निशमयति । तदितरत्र विभाषा भवति– क्रुद्धं शमयति शामयति वा ॥ ९ ॥ अलं चित्रमलं सुष्ठु कौशलोपेतं च । अथच चित्रा मला असृगश्रुस्वेदादयो यथा स्युस्तथा । **'वसा शुक्रमसृङ् मज्जा कर्णविण्मूत्रविण्नखाः । श्लेष्माश्रुदूषिकाः स्वेदो द्वादशैते नृणां मलाः'** । विचेतनः । **'ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्रमचेतनम् । अपोवाह रणाद् राजन् सर्वसैन्यस्य पश्यतः'** [४३] इति च ॥ १० ॥ **'तथैव पाण्डवं राजन् विह्वलन्तं मुहुर्मुहुः । अपोवाह रथेनाजौ विशोकः शत्रुतापनम्'** [४४] इत्यत्र 'मुहुर्मुहुः शत्रुतापनम्, इत्यन्वयविशेषं सूचयन् अर्थविशेषमाह– भीमश्च

---

१. **'–रुत्तमौजसौ'** २. **'तत् प्रीति–'** ३ **'निराकृते द्रौणि–'**
४. **'–वर्षैर्बल–'** इति क्वचित् । ५. **'–शार्दितो द्रौणिः'**

**तस्मिन् गजान् मर्दयति धार्त्तराष्ट्रो युधिष्ठिरम् ।**
**अगाद्[१] युद्धाय तौ युद्धं राजानौ चक्रतुश्चिरम्** ॥ १२ ॥

**तत्र तं विरथं चक्रे सहसैव युधिष्ठिरः ।**
**स गदामाददे गुर्वीं तं भीमोऽभ्यपतद् गदी** ॥ १३ ॥

**दृष्ट्वा कृपस्तं स्वरथमारोप्यापययौ ततः ।**
**तदैव कर्ण्णनकुलौ भृशं बाणैरयुद्ध्यताम्** ॥ १४ ॥

**नकुलं विरथं कृत्वा कर्ण्णोऽथ प्रपलायितम्[२] ।**
**अनुद्रुत्य च वेगेन कण्ठे धनुरवासृजत्** ॥ १५ ॥

---

विह्वलतनुर्बभूव । किन्तु किञ्चिदेव । नाश्वात्थामेव सर्वात्मनेति तुनाऽऽह । अत एवाश्वत्थामानं सारथी रणादपोवाह । भीमं तु विशोक आजावेवान्यत्रापोवाह । पूर्वार्धे वसन्ततिलका नाम शक्करी । उत्तरार्द्धे इन्द्रवज्रा नाम त्रिष्टुप् । अपूर्वेयमुपजातिः । यथा नखस्तुतौ शार्दूलविक्रीडितस्रग्धरयोः । भीमः पूर्वं पुष्पितस्तरुरिव वसन्ततिलकायते । पश्चादिन्द्रवज्रायत इत्याशयः । अथच पूर्वार्द्धे सोल्लासा चोदात्ता च, उत्तरार्द्धे दृढा चोद्धता च च्छन्दोगतिर्भीमगतिमनुकरोतीव ॥ ११ ॥ राजानौ । परस्परमन्यस्य राजत्वमसहमानौ । तथाहि भारते– **'तत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः । ध्रियमाणातपत्रेण राजा राजति दंसितः । स सूतश्चोदितो राज्ञा राज्ञः स्यन्दनमुत्तमम् । युधिष्ठिरस्याभिमुखं प्रेषयामास संयुगे'** [२०.७–८] इति ॥ १२ ॥ सहसेत्यविचारितमित्यर्थे पठन्ति । प्रयुञ्जते च–**'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्'** इति । अनिरीक्षितमित्यर्थे साप्द्यार्थे च पठनीयम् । तद्यथा–सहसाऽऽगतः, अनिरीक्षितमागतः । सहसा भुङ्क्ते, सपदि भुङ्क्ते । अत्रापि सहसैव क्षणमात्रेण विरथं चक्रे । तावता वेगेन विरथीकरणं दुर्योधनस्याप्यनिरीक्षितमासीदित्यर्थः । अथच सहो बलम् । सहसा सामर्थ्येनैव, नतु यादृच्छिकतया । गुर्वीमाकारेण भारेण च ॥ १३ ॥ दृष्ट्वा कृपस्तम् । साम्प्रते भारतपाठे कृतवर्मा तमपोवाहेति पठ्यते– **'ततस्त्वरितमागम्य कृतवर्मा तवाऽऽत्मजम् । प्रत्यपद्यत राजानं निमग्नं व्यसनार्णवे'** [२०.३५] इति । **'कृपस्त्वरितमागम्य'** इति प्रतनः पाठ इति भाति । कृप एव धृतकवचः कृतवर्मा ॥ १४ ॥ जीवन् भिक्षामटानीति द्रुतं परागयनं प्रपलायनम् । **'उपसर्गस्यायतौ'** [अ.सू.८.२.१९] इति लत्वम् । अवासृजत् अवमन्तुं लगनमवसृजनम् । **'स हन्यमानः समरे कृतास्त्रेण बलीयसा । प्राद्रवत् सहसा राजन् नकुलो व्याकुलेन्द्रियः'** [१५.४५] इति, **'सज्यमस्य धनुः कण्ठे व्यवासृजत भारत'** [४६] इति च ॥ १५ ॥

---

१. **'आगात्'** । **'आयात्'** इति कचित् ।

२. **'–प्रपलायिनम् ।'**

**उक्त्वा च परुषा वाचः कुन्त्या वचनगौरवात् ।**
**न जघानैव नकुलं[1] विसृज्य च ययौ परान्[2] ॥ १६ ॥**

**विन्दानुविन्दावथ कैकयौ रणे समासदत् सात्यकिरुग्रविक्रमः ।**
**तयोरमुष्याभवदुग्रवैशसं प्रवर्षतोरुत्तमसायकान् बहून् ॥ १७ ॥**

**ताभ्यां निरुद्धः सहसा जहार तत्रानुविन्दस्य शिरोऽथ विन्दः ।**
**युयोध शैनेयमथारथावुभौ परस्परं चक्रतुरुत्तमाहवे ॥ १८ ॥**

**ततश्च चर्म्मासिधरौ प्रचेरतुः श्येनौ यथाऽकाशतळे[3] कृतश्रमौ ।**
**निकृत्य चान्योन्यमुभौ च चर्म्मणी[4] वरासिपाणी युगपत् समीयतुः ॥ १९ ॥**

**तत्रापहस्तेन शिरः सकुण्डलं जहार विन्दस्य मृधे स सात्यकिः ।**
**निहत्य तं[5] बन्धुजनैः सुपूजितो जगाम शत्रूनपरान् प्रकम्पयन् ॥ २० ॥**

**कृपमायान्तमीक्ष्यैव तपसा मां प्रपीडयेत् ।**
**इति मत्वा पार्षतस्तु भीमं शरणमेयिवान् ॥ २१ ॥**

**कृतश्रमौ कृताभ्यासौ ॥ १९–२३ ॥**

---

उक्त्वा च परुषा वाचः– **'मा योत्सीः कुरुभिः सार्धं बलवद्भिश्च पाण्डव'** [५०], **'गृहं वा गच्छ माद्रेय यत्र वा कृष्णफल्गुनौ'** [५१] इति, **'स्मृत्वा कुन्त्या वचो राजंस्तत एनं व्यसर्जयत्'** [५२] इति च । वचने गौरवात् ॥ १६ ॥ दुर्योधनानुजौ विन्दानुविन्दौ स्तः । आवन्त्यौ विन्दानुविन्दौ स्तः । तदुभयव्यावृत्त्यर्थं विन्दानुविन्दावथ कैकया-वित्याह । **'विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत्'** [१०.६] इति च । वैशसं युद्धम् । शसु हिंसायाम् । यत्र विशसन्ति तद्विशसमेव वैशसम् । प्रवर्षतोः निरन्तरं वर्षतोः । उत्तमाः लक्ष्यवेधेऽप्रतिहताः ॥ १७ ॥ तत्र उग्रवैशसे । निरुद्धः सात्यकिरनुविन्दस्य शिरो जहार । अथ विन्दो युयोध । अथ चिरं युद्धानन्तरम् । परस्परमतिशायनेऽप्रभवन्तौ ॥ १८ ॥ कृतश्रमौ कृताभ्यासौ परस्परं जनितखेदौ च । **'श्रमु तपसि खेदे च'** । चर्मणी इति । **'कैकेयस्य द्विधा चर्म ततश्चिच्छेद सात्वतः । सात्यकेस्तु तथैवासौ चर्म चिच्छेद पार्थिवः'** [१०.३२] इति च । एतेन **'वर्मणी'** इति पठन्तोऽनभ्यस्तभारता भ्रान्ता इति स्फुटम् ॥ १९ ॥ **'तं चरन्तं महारङ्गे निस्त्रिंशवरधारिणम् । अपहस्तेन चिच्छेद**

---

१. **'गौरवात् । जघान नैव नकुलम्'** इति क्वचित् । २. **'च परान् ययौ ।'** ३. **'–तले'**
४. **'च वर्मणी'** ५. **'–त्य तौ बन्धु–'**

कर्ण्णं समन्तात् प्रतिकालयन्तं वरूथिनीमिन्द्रसुतः समभ्ययात् ।
क्षणात् तमाजौ विरथं च चक्रे ततोऽपहारं स चकार चम्वाः ॥ २२ ॥

पराजितः संयति सूर्य्यसूनुः सुतेन शक्रस्य स धार्त्तराष्ट्रम् ।
जगाद बाहुं प्रतिगृह्य पार्त्थो जिगाय मामन्यमनस्कमाजौ ॥ २३ ॥

कामं रथो मे धनुरप्यभेद्यं दत्तं भृगूणामधिपेन दिव्यम् ।
यन्ता न तादृङ् मम यादृशो हरिः शल्यो यदि स्यात् त्वदरिं निहन्याम् ॥ २४ ॥

इतीरिते सौत्यकृते स शल्यं प्रोवाच स क्रुद्ध इवाभवत् तदा ।
दुर्य्योधनो रथिनः सारथेस्तु [१]व्यावर्ण्णयन्नुत्तमतामशामयत् ॥ २५ ॥

बुद्ध्या बलेन ज्ञानेन धैर्य्याद्यैरपि योऽधिकः ।
रथिनः सारथिः स स्यादर्ज्जुनस्य यथा हरिः ॥ २६ ॥

**यादृशो हरिः, पार्थस्य इति शेषः ॥ २४ ॥ रथिनः सारथेरुत्तमताम् ॥ २५ ॥ यो रथिनः सकाशात् बुद्ध्याद्यैः अधिकः सः ॥ २६–३६ ॥**

---

**शैनेयस्त्वरयाऽन्वितः'** [१०.३४] अपसव्यं प्रसारितेन हस्तेन खड्गं प्रयुज्येत्यर्थः । सुपूजितः असाध्यं साधयामासेति अतितरामाराधितः । दिङ्मूढताजनकः कम्पोऽत्र प्रकम्पः ॥ २० ॥ तपसा शिक्षापाटवेन, ब्रह्मचर्यादिना च प्रबलमप्रतीकारं पीडयेत् । पार्षतो धृष्टद्युम्नः । तुना सेनापतिरपि बिभायेत्याह । कृपोऽपि सेनापतिं भीमाभिरक्षितं निरीक्ष्य निर्ययौ ॥२१॥ प्रतिकालयन्तम्, प्रतिक्षिपन्तम्, परलोकं प्रति निनीषन्तमित्येतत् । कल क्षेपे । क्षेपः प्रेरणं निरसनं च । ततोऽपहारं चकार स कर्णः । पराजितः प्रथमं सेनामपहरति । ततः पार्थोऽपि स्वसेनामपजहार । अयं षोडशः सेनापहारः ॥ २२ ॥ बाहुं प्रतिगृह्य । प्रीत्या प्रत्ययार्थं ग्रहणं प्रतिग्रहणम् । स्नेहप्रदर्शनस्य सान्त्वनस्य च सरणिरियम् । बाहुं प्रतिगृह्य किं जगाद कर्णः? पार्थो जिगाय मामित्यादि ॥ २३ ॥ रथः भृगूणामधिपेन दत्तः अभेद्यः । दिव्यश्च सदाजयप्रदः । धनुरपि । शल्यो हि यदि यन्ता स्यात् । **'सारथिस्तस्य गोविन्दो मम तादृङ् न विद्यते'**[२२.५६] इति, **'अयं तु सदृशः शौरेः शल्यः समितिशोभनः । सारथ्यं यदि मे कुर्याद् ध्रुवस्ते विजयो भवेत्'** [६२] इति च ॥ २४ ॥ प्रोवाच प्रार्थ्यमान उवाच । क्रुद्ध इव । नतु वस्तुतः क्रुद्धः । प्रार्थितं धर्मराजेन, स्वीकृतं च हि तेन कर्णसारथ्यं कर्णपराभवायैव । अतोऽन्तर्हृष्टः स्वेष्टलाभेन, बहिः क्रुद्ध इव । रथिनोऽपि सारथेरेवोत्तमताम् । अशामयत् क्रोधम् । क्रुद्धं वा । मित्सञ्ज्ञा विभाषा भवतीत्याचार्याणामाशय इत्युक्तम् । व्याख्यानपूर्वकं वर्णनं व्यावर्णनम् ॥ २५ ॥ तदेव विशिष्टमाख्यानमाह–

---

१. **'–स्तु विवर्णय–'** इति क्वचित् ।

**यथा शिवस्य ब्रह्माऽभूद् दहतस्त्रिपुरं पुरा ।**
**इत्यादिवाक्यैः संशान्त इव शल्योऽस्य सारथिः ॥ २७ ॥**

**बभूव तेन सहितः सेनां व्यूह्य रवेः सुतः ।**
**गच्छन् युद्धाय दर्प्पेण प्राह यो मेऽर्ज्जुनं[1] पुमान् ॥ २८ ॥**

**दर्शयेत् तस्य दास्यामि प्रीतो वित्तमनर्ग्गळम्[2] ।**
**इति ब्रुवन्तं[3] बहुशः प्राह शल्यः प्रहस्य च ॥ २९ ॥**

**निवातकवचा येन हता दग्धं च[4] खाण्डवम् ।**
**को नाम तं जयेन्मर्त्त्यो दृष्टो वोऽपि[5] स गोग्रहे ॥ ३० ॥**

**काकगोमायुधर्म्मा त्वं हंससिंहोपमं रणे ।**
**मा याहि पार्त्थं मा याहि हतोऽनेन यमक्षयम् ॥ ३१ ॥**

---

बुद्ध्येत्यादिना । इदमित्थमित्यध्यवसायो बुद्धिः । वस्तुतत्वावगमो ज्ञानम् । तद्यथा–शत्रोरियत्तापरिज्ञानं ज्ञानम् । कदा कथं प्रत्यवस्थातव्यमिति प्रतिभानं बुद्धिः ॥ २६ ॥ **'सारथित्वं करिष्यामि शङ्करस्य महात्मनः । सर्वथा रथिनः श्रेयान् कर्तव्यो रथसारथिः'** [२७.१९] इति त्रिपुरदाहे ब्रह्मवचनम् । संशान्त इव । वस्तुतः पूर्वमेव शान्तः प्रसन्नमनाः, दुर्योधनवाक्यैः सञ्जातप्रत्ययः सम्प्रति शान्तमिवाऽत्मानं दर्शयामास ॥ २७–८ ॥ अर्गळं कपाटरोधनी शलाका । 'ಅಗುಳಿ' इति भाषायाम् । अनर्गळमवारितं यथेच्छं दास्यामि । बहूनि श्लाघावचनानि ब्रुवन्तम् । अनर्गळं च ब्रुवन्तम् । परिहास-गर्भो हासः प्रहासः ॥ २९ ॥ अलमितिहासरोमन्थेन । वर्तमानकथां शृणु– दृष्टो वोऽपि । वो युष्माकं प्रत्यक्षतोऽप्य-वगतः । **'मतिबुद्धिपूजार्थेभ्यश्च'** [अ.सू.३.२.१८८] इति वर्तमाने क्तः । अनुक्तसमुच्चयार्थः सौत्रश्चकारः । तेनान्यत्रापि भवति । **'क्तस्य च वर्तमाने'** [२.३.६७] इति षष्ठी । यद्वा षष्ठीस्थान् तेमे इत्यादीनादेशान् बहुलं तृतीयास्थानपि प्रयुञ्जते प्रतनाः । तेन 'दृष्टो वोऽपि', युष्माभिरपि दृष्ट इत्यर्थः ॥ ३० ॥ गोमायुधर्मा त्वम् । अर्जुनः सिंहोपमः । **'नित्यमेव सृगालस्त्वं नित्यं सिंहो धनञ्जयः'** [क.प.३३.३६] इति च । अथ काकधर्मा त्वम् । हंसोपमः सः । तथाहि भारते कथा– कश्चिद् वैश्यः समुद्रान्ते बभूव प्रभूतधनधान्यवान् । तस्याऽरामे कश्चित् काको बभूव तत्पुत्राणामुच्छिष्टेन कृतोदर-पोषणः । ते च वैश्यकुमाराः तस्मै मांसोदनं दधि क्षीरं च प्रयच्छन्ति स्म । स च काको वैश्यपुत्रैरुच्छिष्टभृतः दृप्तः

---

१. **'प्राह मे योऽर्जुनम्'** इति क्वचित् । २ **'–मनर्गलम्'** ३. **'ब्रुवाणं बहुशः'** । **'इत्युक्तवन्तं बहुशः'** इति च क्वचित् ।
४. **'दग्धं हि खा–'** ५ **'वाऽपि'**

इत्युक्ते[१] रविजो मद्रान् नितरां पर्य्यकुत्सयत् ।
शल्योऽपि सर्वदेशेषु नीचमद्ध्योत्तमा नराः ।
सन्तीत्युक्त्वाऽस्य सारथ्यं चक्रे पार्त्थहितेप्सया[२] ॥ ३२ ॥

कर्ण्णोऽथ[३] शल्यनियतेन रथेन पार्त्थसेनामवाप्य विदुधाव शरैः समन्तात् ।
संरक्षितो युधि सुयोधनगौतमाद्यैराचार्य्यजेन च महास्त्रविदां वरेण ॥ ३३ ॥

सन् सदृशान् श्रेयसश्च पक्षिणोऽवमेने । अथ हंसाः समुद्रान्ते प्रजग्मुरतिपातिनः । तदा कुमारकाः काकमब्रुवन्– त्वमेव विशिष्टोऽसि एभ्योऽतिशीघ्रपातिभ्यो हंसेभ्योऽपि । त्वमेतान् किमिति नातिपतसीति । तद्वचः सत्यमित्येव मेने काको मौर्ख्यात् । स हंसान् अतिपाते स्पर्धितुमाह्वयामास । अथ हंसा ऊचुः– वयं मानसौकसः दूरपातेन पक्षिभिः पूजिताः । त्वं तु कथं बलिनं हंसं काको भूत्वाऽतिपतने हन्त समाह्वयसीति । अथ कत्थनः काक ऊचे– शतमेकं च पातानां कर्ताऽस्मि मिषतां वः । ततो द्रक्ष्यथ मे बलम् । अथ ब्रूतेदानीं केन हंसाः पताम्यहमिति । एवमुक्ते तु काकेन प्रहस्यैको हंसः काकमुवाच– पत त्वं शतमेकं च पातानाम् । एकमेव च पातमहं पतामि । नान्यमहं जानामीति । ततस्तौ हंसवायसौ स्पर्धया पेततुः । अथ हंसः सागरस्योपरि प्रापतत् पश्चिमां दिशं तरसा । अथाचिरेण कालेन काको वेगाद्-हीयत । स पक्षाभ्यां तुण्डेन च जलं स्पृशन्नार्तः पपात । तदा हंस आह– 'स त्वमेकशतं पातं पतन्मत्तोऽभ्यधिकः कथमेवं परिश्रान्तः पतितोऽसि महार्णवे' इति । ततः काकः करुणं सासद्यमान इदं विललाप–'उच्छिष्टान्नेन पुष्टोऽहम् । वृथा दर्पेण नष्टोऽहम् । इदानीं त्वां शरणं प्रपन्नोऽहम् । यदि नाम पुनर्जीवन् गच्छेयं स्वं निकेतनम्, नैवं पुनस्तव क्षेप्ता भवेयम्' इति । तमेवं विलपन्तम्, काकाकाकेति वाश्यमानम्, निमज्जन्तं महार्णवे स हंसः करुणया पद्भ्यामुत्क्षिप्य पृष्ठमा-रोपयत् । तीरमेत्य चाऽह– 'मैवं पुनः कुर्याः' इति । एतां कथामुक्त्वा शल्य आह– **'उच्छिष्टभोजनः काको यथा वैश्य-कुले पुरा । एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः । सदृशान् श्रेयसश्चापि सर्वान् कर्णावमन्यसे । द्रोणद्रौणिकृपै-र्गुप्तो भीष्मेणान्यैश्च कौरवैः । विराटनगरे पार्थमेकं किं नावधीस्तदा । यत्र व्यस्ताः समस्ताश्च निर्जिताः स्थ किरीटिना । सृगाला इव सिंहेन क्व ते वीर्यं तदा गतम्'** [३५.७१–३] इत्यादि । तदेतत् सर्वं मनसि निधायाऽह– काकगोमायुधर्मा त्वं हंससिंहोपममर्जुनं रणे मा याहि, अर्जुनेन हतः पुनर्यमसदनं मा याहीति । क्षयो वासस्थानम् । क्षि निवासे गतौ च । मा याहि पार्थं मा याहि यमक्षयमिति लाटानुप्रासः ॥ ३१ ॥ पर्यकुत्सयत् । कुत्स अवक्षेपणे । परि बहुप्रकारं अकुत्सयत । 'ಜ೦ಜ೦ಯಾ೧ ' इति भाषायाम् । कुत्सा च पार्थहितेप्सयेति परस्मैभाषा । हितप्राप्ती-च्छया । **'सर्वत्र सन्ति राजानः स्वंस्वं धर्ममनुव्रताः । दुर्मनुष्यान् निगृह्णन्ति सन्ति सर्वत्र धार्मिकाः । न कर्ण देशसामा-न्यात् सर्वः पापं निषेवते । यादृशाः स्वस्वभावेन देशांस्तांस्तादृशान् विदुः'** [३८.४३–४] इति शल्यवचनम् ॥३२॥ नियतेन नियन्त्रितेन । विदुधाव विद्रावयामास । धूञ् कम्पने । धुञ् इत्येके । स्वादिः । धूनोति धुनोति वा । क्र्यादि-र्वा । धूञ् कम्पने । धुनाति । धू विधूनने वा । तुदादिः । धुवति । सर्वथा लिटि दुधावेत्येव रूपम् ॥ ३३ ॥

१. 'इत्युक्तो–' २. '–हितेच्छया' ३. 'कर्णोऽपि शल्य–'

**तं भीमपार्षतशिनिप्रवराभिगुप्ता सा पाण्डवेयपृतनाऽभिववर्ष बाणैः ।**
**तां सूर्य्यसूनुरथ बाणवरैर्विदार्य्य [1]सम्प्रार्दयच्छितशरैरपि धर्म्मसूनुम् ॥ ३४ ॥**

**कृत्वा तमाशु विरथं धनुरस्य कण्ठे सज्यं निधाय परुषा गिर आह चोच्चैः ।**
**दृष्ट्वैव मारुतिरमुं भृशमातुतोद दुर्य्योधनं विरथकार्म्मुकमत्र[2] कृत्वा ॥ ३५ ॥**

**तं प्राणसंशयगतं नृपतिं निरीक्ष्य कर्ण्णं जगाद युधि मद्रपतिः प्रदर्श्य ।**
**यस्यार्त्थ एव[3] समरस्त्वमियं च सेना तं त्वं यमस्य सदनं प्रयियासुमद्य ॥ ३६ ॥**

**भीमेन पीडितममुं परिपाहि शीघ्रं किं ते युधिष्ठिरमिमं हि [4]मुधाऽभिपीड्य ।**
**श्रुत्वाऽस्य वाक्यमतिहाय[5] युधिष्ठिरं तं कर्ण्णो ययौ नृपतिरक्षणतत्परोऽलम् ॥ ३७ ॥**

**मुधा व्यर्थम् ॥ ३७–८ ॥**

---

तां पाण्डवसेनां विदार्य धर्मसूनुमपि सङ्कटं प्रापय्यार्दयामास । सङ्कटे प्रक्षिप्यार्दयामास । **'विदार्य कर्णस्तां सेनां युधिष्ठिरमथाद्रवत् । रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः'** [४४.१] इति च । स्वयं च हस्त्यश्वरथपादातैः संवृतः प्रार्दयत् । सर्वेषां मिषतां सम्मुख एव प्रकर्षेणाऽर्दयत् । प्रमुखे वा सम्यगार्दयत् ॥ ३४ ॥ **'न भवान् क्षत्रधर्मेषु कुशलोऽसीति मे मतिः । ब्राह्मे बले भवान् युक्तः स्वाध्याये यज्ञकर्मणि । मा स्म युध्यस्व कौन्तेय मा स्म वीरान् समासदः'** [४४.७४–५] इत्याद्याः परुषा गिरः । उच्चैः । सर्वेषां शृण्वताम् । धर्मराजग्रहणं द्रोणेन प्रतिज्ञातम् । अथापि न शशाक कर्तुम् । तेन यन्न कृतं तदहमकरवमिति सम्भ्रमातिशयेनेत्यर्थः । तस्येममहङ्कारं विफलयामास भीमः स्वयुद्धतन्त्रेणेत्याह– दृष्ट्वैव मारुतिरमुम् । अमुं कर्णं निगृहीतधर्मराजं दृष्ट्वा, धर्मराजं वा कर्णपीडितं दृष्ट्वैव, सपदि तत्प्रतीकारतया दुर्योधनमातुतोद आ समन्तात् प्रहितैः शरैः व्यथयामास । अत्र धर्मराजसङ्कटे, तन्मोचनाय दुर्योधनं तुतोदेत्यर्थः । दुर्योधनसङ्कटे कर्णस्तद्रक्षार्थं धर्मराजमुत्सृज्याऽयातीति जानन् । रणतन्त्रविशेषोऽयम् । द्वयं चात्र प्रयोजनम्– मोचनं धर्मराजस्य, निग्रहणं च कर्णदुर्योधनयोरिति ॥ ३५ ॥ नृपतिं स्वयं निरीक्ष्य कर्णस्य च प्रदर्श्य । यस्यार्थे प्रयोजने । यत्कारणं वा । **'अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने'** इत्यभिधानम् । तममुं परिपाहीत्युत्तरश्लोकान्वयः ॥ ३६ ॥ मुधा निष्फलम् । अकिञ्चित्करं हि युधिष्ठिरपीडनं दुर्योधननाशे । अभ्यग्रे पीडनमभिपीडनम् । नहि दूरे स्थित्वा सायकैः पीडनम् । किन्तु समीप एव कण्ठे धनुरवसज्येत्यर्थः । तं हस्तग्राहं गृहीतं युधिष्ठिरमतिहाय । तमित्युत्तरान्वयि वा– तं दुर्योधनमातुदन्तं भीमं ययौ ॥ ३७ ॥

---

१. **'सम्प्राद्रवच्छितशरैरथ धर्म–'** २. **'–कार्मुकमाशु कृत्वा'** ३. **'यस्यार्थमेष स–'** । **'यस्यार्थमेव'** इति क्वचित् ।
४. **'–ष्ठिरममुं हि युधा–'** ५. **'वाक्यमपहाय'** इति क्वचित् ।

दृष्ट्वैव तं पवनसूनुरभि त्वियाय क्रोधाद् दिधक्षुरिव कर्ण्णममेयधामा ।
राजावनाय शिनिपुङ्गवपार्षतौ च सन्दिश्य कर्ण्णमभिगच्छत आस रूपम् ॥ ३८ ॥

अन्ते कृतान्तनरसिंहतनोर्य्यथैव विष्णोर्हरं ग्रसत आत्तसमस्तविश्वम् ।
तद्वेगतः प्रतिचचाल धरा समस्ता विद्राविता च सकला [1]प्रतिवीरसेना ॥ ३९ ॥

वैकर्त्तनेन शरसञ्चयताडितः स
बाणं च वज्रसदृशं प्रमुमोच तस्मिन् ।
तेनाऽहतो मृतकवत् स पपात कर्ण्णो
भीमः क्षुरं च जगृहेऽभिययौ[2] च पद्भ्याम् ॥ ४० ॥

निन्दां हरेस्तु[3] विदधाति परोक्षगोऽपि[4] यस्तं प्रगृह्य करवाणि विजिह्वमेव ।
एवं हि वायुतनयस्य महाप्रतिज्ञा[5] छेत्तुं स तेन रविजस्य ससार जिह्वाम् ॥ ४१ ॥

**अन्ते प्रळये । आत्तसमस्तविश्वं हरं ग्रसतः कृतान्तनरसिंहतनोर्विष्णोः रूपं यथा, भयङ्करमिति शेषः । आस, कर्णमभिगच्छतः भीमस्य रूपं तथा भयङ्करमासेति सम्बन्धः ॥ ३९–६३ ॥**

---

अभि त्वियाय । तेनोपसर्गस्य धातुना सहैकपद्यनियतिं निराह । विभाषा चैकपद्यं भवतीत्युक्तं भवति । अभिमुखमेवाभीत इयाय । पवनसूनुस्तु इति वाऽन्वयः । तेन कियानयं तपनतनयः पवनतनयस्य पुरत इत्याह । तदेव स्फुटमाह– अमेय-धामा । अमेयमपरिच्छेद्यं धाम शक्तिः प्रभावस्तेजो वा । **'धाम शक्तौ प्रभावे च तेजोमन्दिरजन्मसु'** इत्यभिधानम् । शिनिपुङ्गवपार्षतौ च । **'सोऽब्रवीत् सात्यकिं वीरं धृष्टद्युम्नं च पार्षतम् । यूयं रक्षत राजानं धर्मात्मानं युधिष्ठिरम्'** [४५.८] इति च ॥ ३८ ॥ अन्ते कृतान्तनरसिंहतनोः । कृतोऽन्तः सर्वसंहारो यया, तादृशी नरसिंहाख्या तनुर्यस्य । कृतान्तो नरसिंह इति तनुर्यस्य वा । अथच कृतान्तस्य नरसिंहस्य नरोत्तमस्य वायोस्तनुरिव तनुर्यस्य । कीदृशस्य वायोः? हरं ग्रसतः । कस्येव? हरं ग्रसतो विष्णोर्यथा । तदेतद् **'युगान्ताग्निसमप्रभम्'** इति भारतवचनसूचितम् । प्राणनारा-यणौ ह्यग्नी उच्येते । तथाहि शल्यवचनम्–**'ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन । अभिमन्यौ हते कर्ण राक्षसे च घटोत्कचे । त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे । बिभर्ति सदृशं रूपं युगान्ताग्निसमप्रभम्'** [४५.१६–७] इति ॥ ३९ ॥ मृतकवत् कुणपवत् । **'स भीमसेनाभिहतः सूतपुत्रः कुरूद्वह । निषसाद रथोपस्थे विसञ्ज्ञः पृतनापतिः'** [४५.४७] इति च ॥ ४० ॥ **'एतस्मिन्नन्तरे दृष्ट्वा मद्रराजो वृकोदरम् । जिघांसुं छेत्तुमायान्तं साधयन्निदमब्रवीत्'**

---

१. **'सकला परवीर–'** इति कचित् । २. **'– हे प्रययौ'** इति कचित् । ३. **'हरेश्च वि–'**
४. **'परोक्षतोऽपि'** इति कचित् । ५. **'–स्य सदा प्रतिज्ञा'**

**आयान्तमन्तिकममुं प्रसमीक्ष्य शल्यो नेत्याह हेतुभिरहो न मृषा प्रतिज्ञा ।**
**कार्य्या त्वयैव पुरुहूतसुतस्य जिँह्वां मा तेन पातय मरुत्सुत सूतसूनोः　　॥ ४२ ॥**

**इत्युक्त्वा प्रमुखात् तस्य रथेनैव तु मद्रराट् ।**
**वैकर्त्तनमपोवाह सर्वलोकस्य पश्यतः　　॥ ४३ ॥**

**जित्वा सूर्य्यसुतं भीमः कौरवाणामनीकिनीम् ।**
**सर्वां विद्रावयामास द्रौणिदुर्य्योधनावृताम्　　॥ ४४ ॥**

**अक्षोहिणी[१]त्रयं तेन तदा विलुळितं[२] क्षणात् ।**
**तदैव गुरुपुत्रोऽयात् पाण्डवानामनीकिनीम्　　॥ ४५ ॥**

[४५.४८] इत्यस्पष्टार्थं वचनं स्पष्टं व्याचष्ट– निन्दां हरेस्तु । प्रगृह्य प्रकटं निगृह्य । रविजस्य जिह्वां च्छेत्तुं रविजं ससार । **‘जिह्वोद्धरणमेवास्य प्राप्तकालं मतं मम । अनेन सुनृशंसेन समवेतेषु राजसु । अस्माकं शृण्वतां शल्य यानि वाक्यानि मातुल । असहेयानि नीचानि बहूनि श्रावितानि भोः । नूनं चैतत् प्रतिज्ञातं दूरस्थस्यापि पार्थिव । छेदनं चास्य जिह्वायास्तदैवाऽकाङ्क्षितं मया’** [४५. ५२–४] इत्यादि च । असहेयानि असहनीयानि । अकारवाच्येन विष्णुना सह तत्सङ्गतत्वेनावधेयानि । विष्णुना सह तत्सङ्गततया न ज्ञेयानि चेति निगूढं वचनम् । अत एव कस्य निन्देति मूले न स्फुटमित्येव–**‘निन्दां हरेस्तु’** इति मूलं विवृतम् । तुना स्वस्य **‘प्रेष्ठप्रेष्ठतमो हरिः’** इति सूचयाम्बभूव ॥ ४१ ॥ प्रसमीक्ष्य प्रागल्भ्यसम्भ्रमाभ्यामीक्षित्वा, किमत्र प्रतिकरणीयमिति समीक्ष्य च । हेतुभिर्नेत्याह । तथाहि शल्यवचनम्– **‘भीमसेन महाबाहो यत् त्वां वक्ष्यामि तच्छृणु । वचनं हेतुसम्पन्नं श्रुत्वा चैतत् तथा कुरु । अर्जुनेन प्रतिज्ञातो वधः कर्णस्य शुष्मिणः । तां तथा कुरु भद्रं ते प्रतिज्ञां सव्यसाचिनः’**[४५.५०] । त्वया हते कर्णे अर्जुनस्य प्रतिज्ञा व्याहन्यते । अर्जुनेन हते, तस्य त्वद्विनेयतया त्वयैव कृतं स्यात्, भृत्यजये राजा जिगायेतिवत्, अतस्ते न प्रतिज्ञाभङ्ग इत्यादिहेतुभिः । **‘वाक्यं हेत्वर्थसंहितम्’** [५५] इति चोपरि भीमवचनम् । पुरुहूतसुतस्य प्रतिज्ञा । तेन सूतसूनोः जिह्वां मा पातय । अहो विस्मयोऽयं यत् स्वप्रतिज्ञां पिपालयिषता स्वानुजप्रतिज्ञा न गणितेति ॥ ४२ ॥ प्रमुखात् पुरोभागात् । **‘एवं मद्राधिपः श्रुत्वा विसञ्ज्ञं सूतनन्दनम् । अपोवाह रथेनाऽजौ कर्णमाहवशोभिनम्’** [४५.५९] इति च । रथेनैव तु । मद्रराट् तु इत्यन्वयः । स्वप्रार्थनया जिह्वापातनान्निवृत्तं भीमं दृष्ट्वा हृष्यन्नन्तः, बहिश्च विसञ्ज्ञं कर्णं दृष्ट्वा जागृतसारथिप्रज्ञो मद्रराडित्यर्थः । विसञ्ज्ञस्य प्राणापायभयात् तं रथेनापोवाहैवेत्येवकारान्वयः । तेन रथेनैव यत्र कर्णः पतितः । न रथान्तरेण । विलम्बासहत्वात् ॥ ४३ ॥ आवृतां रुद्धामपि रुध्वा रक्षितामपि, द्रौणिदुर्योधनौ सर्वथा रक्षिष्यत इति मिथ्याप्रत्ययेनैकीभूतामपि सेनाम् ॥ ४४ ॥ अक्षोहिणीत्रयम् ।

१. **‘अक्षौहिणी–’**　　　　२. **‘विलुलितम्’**

विमृद्य सकलां सेनां कृत्वा च विरथं नृपम् ।
धृष्टद्युम्नं यमौ चैव सात्यकिं द्रौपदीसुतान् ।
क्षणेन विरथीकृत्य सर्वांश्चक्रे निरायुधान् ॥ ४६ ॥

तान् भग्नदर्प्पान् रणतोऽपयातानन्वेव बाणावृतमन्तरिक्षम् ।
कुर्वन् ययौ धर्म्मराजस्तमाह किं नः स्वधर्म्मे निरतान् विहन्सि ॥ ४७ ॥

क्षत्रियान् परधर्म्मस्थो मा हिंसीरिति चोदितः ।
प्रहस्य तान् विहायैव ययौ यत्राच्युतार्ज्जुनौ ॥ ४८ ॥

संशप्तकैस्तत्र संयुद्ध्यमानं समाह्वयामास सुरेशसूनुम्[1] ।
स बाणयुक्तं भुजगेन्द्रकल्पमुन्नम्य बाहुं युधये सुशूरम् ॥ ४९ ॥

**'अक्षोहिण्यस्तथा तिस्रो धार्तराष्ट्रस्य सङ्गताः । क्रुद्धेन भीमसेनेन नरसिंहेन वारिताः'** [६२.६७] इति श्रीकृष्ण-वचनम् ॥ ४५ ॥ चैवेति समुदितं समुच्चयावधारणे । क्षणेनैवेति वा ॥ ४६ ॥ ययौ द्रौणिः । तं धर्मराज आह– किमित्यादि । विहन्सि हिनत्सि विघ्नयसि वा । हन हिंसागत्योः ॥ ४७ ॥ परधर्मे उत्तमे ब्राह्मणधर्मे स्थितः स्व-भावतः । सम्प्रति परकीये क्षत्रियधर्मे स्थितः सन् । किं विहन्सीति, मा हिंसीरिति च उदितः । हिसि हिंसायाम् । चोदितः प्रेरितो वा । वस्तुतस्तु शिवस्य क्षत्रियमानित्वात् संहारकत्वाच्च विष्णुप्रीत्यै हिंसाऽपि परमो धर्मः । अथाप्यस्मान् स्वधर्मस्थान् मा हिंसीरिति परमार्थः । तद्वचनमङ्गीकृत्य प्रशंसागर्भः प्रशस्तो हासः प्रहासः । तान् धृष्टद्युम्नादीन् । **'ब्राह्मणेन तपः कार्यं शमश्च दम एव च । क्षत्रियेण धनुर्नाम्यं स भवान् ब्राह्मणब्रुवः'** [५०.३८] इति च । **'एवमुक्तो महाराज द्रोणपुत्रः स्मयन्निव । युक्तं तत्वं च सञ्चिन्त्य नोत्तरं किञ्चिदब्रवीत्'** [५०.४०] इति च । धर्मराजवचनं तस्यापि सम्मतमासीदिति विहानमवधारयति– विहायैवेति ॥ ४८ ॥ परबलं सङ्क्षोभ्य युध्यमानम् । परेषां अङ्गानि सञ्छिद्य, भूमौ संस्तीर्य युध्यमानम्, परेषामस्त्राणि संवार्य युध्यमानम् । आत्मेच्छया युध्यते । परहितेप्सया युध्यति । युधये समाह्व-यामास । बहुमानपूर्वकमाह्वानं समाह्वानम् । तथाहि भारते– **'अथ पाण्डवमस्यन्तममित्रान्तकराञ्छरान् । सेषुणा पाणिनाऽऽहूय प्रहसन् द्रौणिरब्रवीत् । यदि मां मन्यसे वीर प्राप्तमर्हमिहातिथिम् । ततः सर्वात्मना त्वद्य युद्धा-तिथ्यं प्रयच्छ मे'** [५२.२१–२] इति । सुखेन शूरयते विक्रमत इति सुशूरः । शूर विक्रान्तौ । सुखेन शत्रून् शूर्यते हिनस्ति स्तम्भयति वा । शूरी हिंसास्तम्भनयोः ॥ ४९ ॥

१. 'सुरेन्द्रसूनुम्'

पार्त्थः संशप्तकगणैः संसृष्टः[1] समरार्त्थिभिः ।
आहूतो द्रौणिना चैव कार्य्यं कृष्णमपृच्छत ।
चोदयामास च हयान् कृष्णो द्रौणिरथं प्रति ॥ ५० ॥

उभौ च तावस्त्रविदां प्रधानौ महाबलौ संयति जातदर्प्पौ ।
शरैः समस्ताः प्रदिशो दिशश्च [2]द्रोणेन्द्रसूनू तिमिराः प्रचक्रतुः ॥ ५१ ॥

द्रौणिस्तदा स्यन्दनवाजिरोमस्वरोमकूपध्वजकार्म्मुकेभ्यः ।
शरानमोघान् सततं सृजानो बबन्ध पार्त्थं शरपञ्जरेण ॥ ५२ ॥

तस्मिन् निबद्धे हरिरप्रमेयो विबोधयामास सुरेन्द्रसूनुम् ।
आलिङ्गनेनास्य ददौ बलं च स उत्थितोऽस्त्राण्यमुचन्महान्ति ॥ ५३ ॥

निवार्य्य तान्यस्त्रवरैर्ग्गुरोः सुतश्चिच्छेद च ज्यां युधि गाण्डिवस्य ।
ववर्ष पार्त्थं च शरैरथाऽन्या ज्याऽऽसीत् तया गाण्डिवं सोऽप्ययुङ्क्त ॥ ५४ ॥

---

**‘एवमाचार्यपुत्रेण समाहूतो युयुत्सया । बहुमेनेऽर्जुनोऽत्मानमिति चाऽह जनार्दनम् । संशप्तकाश्च मे वध्या द्रौणिराह्वयते च माम् । यदत्रानन्तरं प्राप्तं शंस मे तद्धि माधव । आतिथ्यकर्माभ्युत्थाय दीयतां यदि मन्यसे । एव-मुक्तोऽवहत् पार्थं कृष्णो द्रोणात्मजान्तिके’** [५२.२३–५] इति च । द्रौणिना चैवेत्येवकारेण द्रौण्याह्वानस्वीकारे स्वस्य पक्षपातमवधारयति । कार्यं द्वयोः प्रथमकर्तव्यम् । अपृच्छत । स्वयं निर्णेतुमप्रभवत इयं ज्ञीप्सेत्यात्मने-भाषयाऽऽह । समपृच्छतेत्यर्थः । समस्यापरिहारायापृच्छदित्यर्थः । एवमुपसर्गगर्भिणी चेयं लकारललनेति च युक्तमात्मने-भाषत्वम् । **‘समो गम्यृच्छिप्रच्छि–’** [अ.सू.१.३.२९] इत्यादि हि स्मरन्ति ॥ ५० ॥ द्रोणसूनुश्च इन्द्रसूनुश्च । तिमिरास्तिमिरावृताः, मत्वर्थीयोऽच् । तिमिरमस्त्यासामिति ॥ ५१ ॥ प्रचक्रतुरित्युभयोः प्रकर्षसाम्ये प्राप्ते सम्प्रति द्रौणेः प्रकर्षातिशयमाह– द्रौणिस्तदेति । **‘इषुधेर्धनुषो ज्यायास्त्वङ्गुलिभ्यश्च मारिष । बाह्वोः कराभ्यामुरसो वदनाद् घ्राण-नेत्रतः । कर्णाभ्यां शिरसोऽङ्गेभ्यो रोमकूपेभ्य एव च । रथध्वजाभ्यां च शरा निष्पेतुर्ब्रह्मवादिनः’** [५२.३४–५] इति च । **‘रोमकूपेभ्य एव च’** इति भारतवचनस्य विवरणम्–स्ववाजिरोमकूपेभ्यः स्वरोमकूपेभ्यश्चेति । रोम-कूपो रोमगर्तः । यत्र रोमाण्युद्भिद्यन्ते ॥ ५२ ॥ विजयाय बोधयामास । **‘गुरुपुत्र इति ह्येनं मानयन् पाण्डवर्षभ । उपेक्षां मा कृथाः पार्थ नायं काल उपेक्षितुम्’** [५२.५२] इति ॥ ५३ ॥ अन्या ज्या प्रादुरासीत् । सम्प्रति भारते

---

१. **‘सन्दष्टः’** इति क्वचित् ।
२. **‘द्रौणीन्द्रसूनू’**

ततः शरेण कुपितः शितेन द्रौणिसारथेः ।
शिरो जहार कौन्तेयः सारथ्यं सोऽकरोत् स्वयम् ॥ ५५ ॥

शरान् विसृजता तेन सारथ्यमपि कुर्वता ।
शरकूटेन पार्थः स पुनर्बद्धो द्विजन्मना ॥ ५६ ॥

पुनरालिङ्ग्य कृष्णस्तमधाच्छत्रुविघातकम् ।
बलमस्मिंस्ततः पार्थ उत्तस्थौ शरचापभृत्[1] ॥ ५७ ॥

ववर्ष च शरान् भूयो द्रोणपुत्रेऽरिमर्द्दनः ।
पुनस्तस्य नुनोद[2] ज्यां द्रौणिः सन्धाय तां पुनः ॥ ५८ ॥

पार्थो द्रोणसुतस्याश्वरश्मींश्चिच्छेद सायकैः ।
विरश्मयो हया द्रौणेः पुनः पार्थशराहताः ॥ ५९ ॥

अपोहुर्दूरमेतस्मात्[3] सोऽपि संस्थाप्य[4] तान् पुनः ।
चिन्तयामास नैतस्मादधिकं शक्यतेऽर्ज्जुने ॥ ६० ॥

सारथित्वात् केशवस्य ध्वजस्थत्वाद्धनूमतः ।
गाण्डिवत्वात्[5] कार्म्मुकस्य चेषुध्द्योरक्षयत्वतः ॥ ६१ ॥

---

नेदं पठ्यते ॥ ५४–६ ॥ तमालिङ्ग्य अस्मिन् बलमधात् । तमिति मनसा कृष्णाद् दूरस्थम् । द्रौणिरेव हि तदा तस्य मन आचक्राम । पुनरालिङ्गनेन सञ्जातकृष्णस्मृतिर्मनसा कृष्णसमीपमाजगामेत्यस्मिन्नित्याह ॥ ५७ ॥ द्रौणिः ज्यां नुनोद चकर्त । पार्थः पूर्ववत् पुनः सन्धाय ॥ ५८–९ ॥ एतस्माद् रणक्षेत्रात् । अपोहुः रणादपक्रम्य दूरमूहुः । संस्थाप्य रश्मिसन्धानेन स्थापयित्वा ॥ ६० ॥ यद्यप्युपक्रमानुसारेण **'कार्मुकत्वाद् गाण्डिवस्य'** इति वक्तव्यम् । न भोः, विशिष्टे सामान्यधर्मः पूर्वार्धविषयः । सामान्ये विशेषधर्मविधानमुत्तरार्धविषय इति विषयभेदात् ॥ ६१–२ ॥

---

१. **'–चापधृत् '** इति क्वचित् ।
२. **'–स्य तुतोद'**
३. **'–दूरमेवास्मात्'**
४. **'सन्धाय तान्'**
५. **'गाण्डीवत्वात्'**

**अवद्ध्यत्वात् तथाऽश्वानामभेद्यत्वाद् रथस्य च ।**
**अतो योद्धुं समर्त्थोऽपि नाद्य यामि धनञ्जयम् ॥ ६२ ॥**

**एवं स मत्वा प्रविवेश सेनां पाण्डोः सुतानामथ तं समभ्ययात् ।**
**पाण्ड्यस्तयोरास सुयुद्धमद्भुतं प्रवर्षतोः सायकपूगमुग्रम् ॥ ६३ ॥**

**अष्टावष्टशतान्यूहुः[१] शकटानि यदायुधम् ।**
**अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप तत्र ह[२] ॥ ६४ ॥**

**अथ तं विरथं कृत्वा[३] छित्वा कार्म्मुकमाहवे ।**
**सकुण्डलं शिरो द्रौणिर्ज्जहार [४]मकुटोज्ज्वलम् ॥ ६५ ॥**

**अथ विद्रावयामास पृतनां पाण्डवीं शरैः ।**
**तदा जघान पार्त्थोऽपि दण्डधाराख्यमागधम् ॥ ६६ ॥**

**अह्नश्चत्वारो यामाः । तत्राष्टभागः यामार्धम् ॥ ६४–१०६ ॥**

---

पाण्ड्यो वीरसेनश्चित्राङ्गदापिता । यं चित्रवाहनं मलयध्वजं चाऽहुः ॥ ६३ ॥ **'अष्टावष्टगवान्यूहुः शकटानि यदायुधम् । अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष'** [५६.३०] इति साम्प्रतो भारतपाठः । **'अष्टावष्टगवान्यूहुः'** इत्येव साम्प्रतस्तात्पर्यनिर्णयपाठश्च । एकैकं शकटमष्टगवैरुह्यमानमासीदिति च व्याचक्षते । यत्र प्रतनानामेव द्वौ पन्थानौ हन्त वयं कं पन्थानं निषेधाम कं वा स्वीकरवाम । **'अष्टशतानि'** इति प्राचीनादर्शपाठः । पुरा मुद्रितः भारतदाक्षिणात्यपाठोऽपि तथैव । तस्मात् **'अष्टशतानि'** इत्येव पाठः साधीयान् । अष्टौ शतानि अष्टौ च शकटानि । अष्टोत्तराणि अष्टशतानि [८०८] । यस्य पाण्ड्यस्य आयुधजातम् । यत् पाण्ड्यसम्बन्धि आयुधजातमिति वा । आयुध्यन्तेऽनेनेत्यायुधम् । एतदादाय युध्यन्ते वा । अह्नः अष्टमो भागः ३॥ घटिकाः । अर्वाचीनानां परिभाषया ९० निमेषाः । हेति गुरुपुत्रस्य शत्रुनिग्रहलाघवं विस्मयते ॥ ६४ ॥ आहूयन्तेऽस्मिन्नित्याहवो युद्धम् । मङ्कतेऽनेनेति मकुटं किरीटम् । मकि मण्डने । अर्वाचीनास्तु मकुटं मुकुटमाहुः । **'धनुश्छित्वाऽर्धचन्द्रेण तिलशो व्यधमद् रथम्'** [५६.३५] इति, **'शिरश्च तत् पूर्णशशिप्रभाननं सरोषताम्रायतनेत्रमुन्नसम् । क्षितावपि भ्राजति तत् सकुण्डलं विशाखयोर्मध्यगतः शशी यथा'** [४५] इति च ॥ ६५ ॥ दण्डधाराख्यमागधम् । **'मागधोऽसावतिक्रान्तो द्विरदेन प्रमाथिना । भगदत्तादनवमः शिक्षया च**

---

२. **'–ष्टगवान्यूहुः'** इति क्वचित् ।
२. **'–श्चिच्छेद तत्र हि'** । **'–श्चिच्छेद पत्रिभिः'** इति क्वचित् ।
३. **'विरथीकृत्य छित्वा'**
४. **'मुकुटोज्ज्वलम्'**

विद्राप्यमाणां[१] पृतनां निरीक्ष्य गुरोः सुतेनाभ्यगमत् त्वरावान् ।
धृष्टद्युम्नस्तं स ऊचे सुपापं हनिष्ये त्वामद्य युद्धे गुरुघ्नम् ॥ ६७ ॥

इत्युक्तो दर्शयामास पार्षतः खड्गमुत्तमम् ।
अयं तव पितुर्हन्ता वदिष्यति तवोत्तरम् ॥ ६८ ॥

इत्युक्त्वा धनुरादाय ववर्ष च शरान् बहून् ।
तयोः समभवद् युद्धं तुमुलं रोमहर्षणम् ॥ ६९ ॥

तत्र पार्षतं[२] द्रौणिः क्षणेन विरथायुधम् ।
कृत्वाऽन्ताय शरांस्तीक्ष्णान् मुमोच नच तस्य ते ॥ ७० ॥

त्वचं च चिच्छिदुर्द्रौणिः खड्गहस्तोऽभिजग्मिवान् ।
खड्गेन सास्त्रैः शस्त्रैरप्यनिर्भिण्णत्वचं[३] तदा ॥ ७१ ॥

मौर्व्या ममन्थ धनुषः पातयित्वा धरातळे[४] ।
आकृष्यमाणं पार्षतं[५] दृष्ट्वा कृष्णप्रचोदितः ॥ ७२ ॥

पार्थो भीमश्चोभयतः शरैरभिनिजघ्नतुः[६] ।
स ताभ्यां वज्रसदृशैः[७] शरैरभिहतो भृशम् ॥ ७३ ॥

---

**बलेन च'** [५४.३] इति कृष्णवचनम् ॥ ६६ ॥ तं धृष्टद्युम्नं स गुरोः सुत ऊचे । गुरुघ्नमत एव सुपापं महापातकिनम् ॥ ६७ ॥ **'एष ते प्रतिवाक्यं वै असिर्दास्यति मामकः । येन कृत्तं तव पितुर्यतमानस्य तच्छिरः'** [५८.२] इति च ॥ ६८ ॥ तुमुलं व्याकुलम् । कः किं करोति कुत्र किं भवतीत्यपरिच्छेद्यम्, कोलाहलमयम् ॥ ६९ ॥ **'तत्र पार्षतम्'** इति क्षैप्रविश्लेषेण छन्दःपूर्तिः ॥ ७० ॥ त्वचतीति त्वक् त्वचं वा । त्वच संवरणे । **'त्वक्त्वचचोचशब्दाः स्युर्वल्के चर्मणि पत्रके'** इत्यभिधानम् ॥ ७१ ॥ ममन्थ । क्षोभयामास । **मन्थ विलोडने ।** ममन्थ जिहिंस च क्लेशयामास च । **मथि मन्थ वा हिंसासङ्क्लेशनयोः । 'विकृष्यमाणं दृष्ट्वैव धृष्टद्युम्नं जनेश्वर । शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति**

---

१. **'विद्राव्यमाणाम्'** २. **'तत्र तं पार्षतम्' । 'स तत्र पार्षतम्'** इति क्वचित् ।
३. **'खड्गेन सोऽस्त्रशस्त्रैरप्यनिर्भिन्नत्वचम्'** ४. **'धरातले ।'** ५. **'पार्षतं तं दृष्ट्वा'**
६ **'–भिविजघ्नतुः'** ७. **'–समितैः शरै–'**

**विसृज्य पार्षतं स्वीयमारुरोह रथं पुनः ।**
**जगाम च ततोऽन्यत्र पाश्चाल्योऽपि रथं पुनः ॥ ७४ ॥**

**आरुँह्यान्यं स्वात्तधन्वा कृतवर्म्माणमभ्ययात् ।**
**तयोरासीत् सुतुमुलं युद्धमद्भुतदर्शनम् ॥ ७५ ॥**

**तत्र नातिप्रयत्नेन पाश्चाल्यो विरथायुधम् ।**
**चकार कृतवर्म्माणं तमपोवाह गौतमः ॥ ७६ ॥**

**अथ दुर्य्योधनो राजा माद्रेयावभ्ययाद् रथी[1] ।**
**ताभ्यां तस्याभवद्[2] घोरं युद्धमद्भुतदर्शनम् ॥ ७७ ॥**

**तत्र नातिप्रयत्नेन तेन तौ विरथीकृतौ ।**
**स्वयं युधिष्ठिरो राजा तदा तं समवारयत् ।**
**व्यश्वसूतध्वजं चक्रे तं च दुर्य्योधनो रणे ॥ ७८ ॥**

---

**महारथः'** [५८.२५] इति च । भीमश्च । यद्यपि नेदं भारते पठ्यते । अन्तरितं स्यात् । अथवा **'भीमसेनः कुरून् सर्वान् पुत्रांश्च तव मारिष । सहानीकान् महाबाहुरेक एव न्यवारयत्'**[६३.१९] इति, **'भीमसेनस्य तत् कर्म राजन्नेकस्य धीमतः । निघ्नतः सर्वभूतानि रुद्रस्येव च निर्बभौ'** [६४.४३] इति च वक्ष्यमाणं स्मारयन्नपेक्षितं पूरयति भीमश्चेति । **'धृष्टद्युम्नमुखान् सङ्ख्ये भीमसेनाभिरक्षितान्'** [४१. १८] इति च धृतराष्ट्रवचनम् । अभिनिजघ्नतुः । अभीति स्ववचनस्यैव विवरणम्–उभयतो निजघ्नतुरिति । **'परितः, सर्वतः । अभितः, उभयत इत्यर्थः'** इति जयादित्यः [अ.सू.५.३.९] इति ह्युक्तम् । अभिगम्य निकामं जघ्नतुर्वा ॥ ७२–३ ॥ पाश्चालाः जनपदाः । पाश्चालो राजा । तत्तनयः पाश्चाल्यः ॥ ७४ ॥ पुनरन्यं रथमारुह्य । सुदृढमात्तधन्वा । शत्रुनिग्रहे दृढमनसा धनुर्जग्राहेत्यर्थः । **'धृष्टद्युम्नं तु समरे सन्निवार्य महारथः । कृतवर्माऽब्रवीद्धृष्टस्तिष्ठतिष्ठेति भारत । तदभूत् तुमुलं युद्धं वृष्णिपार्षतयो रणे'** [४९.३१] इति च । सुतुमुलम् । सुष्ठु कौशलोपेतम्, अथापि भयानकतया हृदयविद्रावकम् ॥ ७५ ॥ **'गदां गृह्य पुनर्वेगात् कृतवर्माणमाहनत् । सोऽतिविद्धो बलवता न्यपतन्मूर्च्छया हतः'** [४९.४५] इति च । अपोवाह गौतमः कृपः । सम्प्रति भारते–**'श्रुतर्वा रथमारोप्य अपोवाह रणाजिरात्'** [४९.४७] इति पठ्यते । श्रुतर्वा रथमारोप्य कृपेण सहापोवाह । अयं श्रुतर्वा दुर्योधनानुजः । **'गौतमो रथमारोप्य–'** इत्यपि प्राचीनपाठः स्यात् ॥ ७६ ॥ दुर्योधनस्य माद्रेयाभ्यां युद्धं पाश्चाल्यकृतवर्मणोर्युद्धेन समानमासीदित्यक्षरशः दर्शयति–**'युद्धमद्भुतदर्शनम्'** इति, **'तत्र नातिप्रयत्नेन'** इति पादद्वय-

---

१. 'यद् रणे ।' २. **'–वद् युद्धं घोरमद्भु–'**

अथाऽगतं सूर्य्यसुतं पुनश्च जगाम भीमो रभसो रथेन ।
दुर्य्योधनं चास्य समक्षमेव चकार वीरो विरथं क्षणेन ॥ ७९ ॥

निवार्य्य कर्ण्णं च शरैरमुष्य सूनोः सुषेणस्य शिरश्चकर्त्त ।
पपात भूमौ स पितुः समीपे यथा हतः सत्यसेनोऽमुनैव ।
यथैव कर्ण्णावरजौ पुरैव निशायुद्धे कर्ण्णपुरः प्रपातितौ ॥ ८० ॥

हतं तमीक्ष्यैव विकर्त्तनात्मजः क्रोधान्वितो भीमसेनं विहाय ।
ययौ प्रमृद्यैव चमूं युधिष्ठिरं रथेऽपरे स्वश्वयुते व्यवस्थितः ॥ ८१ ॥

---

मुभयत्रापि निक्षिपन् । **'तस्य सायकसञ्छन्नौ माद्रेयौ न विरेजतुः । मेघच्छन्नौ यथा व्योम्नि चन्द्रसूर्यौ गतप्रभौ'** [५१.१६] इति च । समवारयत्, यमौ संरक्षितुमवारयत्, सङ्क्रुद्धोऽवारयत्, सन्नद्धोऽवारयत् । अथ च तं दुर्योधनं प्रति राजा स्वयं समवारयत् । सङ्ग्रामं स्वयं वरयामासेत्यर्थः । व्यश्वसूतध्वजं रथं चक्रे । तेन तं च रथस्थं व्यश्वसूतध्वजं चक्रे । **'मृत्योर्मुखगतं मन्ये कुन्तीपुत्रं युधिष्ठिरम् । हुतमग्नौ च कौन्तेयं दुर्योधनवशं गतम्'** [६१.११] इति श्रीकृष्ण-वचनम् ॥ ७७–८ ॥ **'भीमसेनं तव सुतो वारयामास संयुगे । तं तु भीमो मुहूर्तेन व्यश्वसूतरथध्वजम् । चक्रे लोकेश्वरं तत्र तेनातुष्यन्त वै जनाः'** [६४.२१] इति च ॥ ७९ ॥ **'दृष्ट्वा दुर्योधनं चैव भीमग्रस्तं महाहवे'** [६६.२९] **'तव पुत्रं परित्रातुमभ्यधावत वीर्यवान्'** [३१] इति च । यथा पूर्वं सत्यसेनश्चक्ररक्षः सुतोऽस्य पुर एव हतः– **'सत्यसेनं च दशभिः साश्वसूतायुधध्वजम् । पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत्'** [क.प.४३.२७] इति च । यथा निशायुद्धे कर्णावरजौ कर्णपुर एव प्रपातितौ ध्रुवश्च जयरातश्च । प्रपातितौ पादयोः प्रगृह्य भूमावाविध्य पातितावित्यर्थः । **'पादयोर्गृह्य तौ वीरौ भीमः कर्णस्य पश्यतः । भूमावाविध्य जघ्ने स तौ च प्राणैर्वियुज्यताम्'** [द्रो.प.१५६.३२] इति च । एतेनोपरि पठ्यमानः नकुलकृतः सत्यसेनवधः लिपिकृत्प्रमादमूल इति सूचितम् । तथाहि भारते– **'समुद्यम्य च चिक्षेप सत्यसेनस्य संयुगे । सा तस्य हृदयं गत्वा बिभेद शतधा नृप । स पपात रथाद् भूमिं गतसत्वोऽल्पचेतनः'** [श.प.९.४०–१] इति । सप्तदशदिवसयुद्धे भीमेन हतः पुनरदष्टादशदिवसयुद्धे कथं नकुलेन युयुधे? । अन्य एवायं सत्यसेनः, सत्यशर्मा वा स्यात् । एवं सुषेणमुत्तमोजा जघानेति भारते पठ्यते– **'कर्णात्मजं तत्र जघान वीरस्तथाऽच्छिनच्चोत्तमोजाः प्रसह्य । तस्योत्तमाङ्गं निपपात भूमौ निनादयद् गां निनदेन खं च । सुषेणशीर्षं पतितं पृथिव्यां विलोक्य कर्णोऽथ तदाऽऽर्तरूपः'** [क.प.७९.१३–१४] इति । लिपिकृतः प्रामाद्यन् । अयं प्राचीनो भारतपाठः– **'दुःशासनो भारत भारतं तु व्यात्ताननं क्रूरमिवान्तकाभम् । भीमं रणे शस्त्रभृतां वरिष्ठं समासदद् भारत भीमसेनम्'** इति प्रस्तूय ततः पठ्यते– **'कर्णात्मजं तत्र जघान शूरस्तनुच्छदा सोत्तमोजाः प्रसह्य–'** इति । पाठेऽस्मिन् स्फुटमेतद् यद् भीमः सुषेणं जघानेति । तदा उत्तमोजास्तदनुग आसीदिति च । तस्मात् सुष्ठूक्तमाचार्येण–भीमसेनः सुषेणस्य शिरश्चकर्तेति ॥८०॥ हतं सुषेणमीक्षित्वैव सपदि । रथेऽपरे स्वश्वयुते व्यवस्थित इति । पूर्वरथस्य हयानां च सुषेणवधसमये भीमेन निकृत्तत्वात्

**न्यवारयेतां शिनिपौत्रपार्षतौ कृष्णासुताः सोमकसङ्घयुक्ताः ।**
**स तान् समस्तान् विरथान् विधाय युधिष्ठिरं प्राप युतं यमाभ्याम् ॥ ८२ ॥**

**निहत्य सोऽश्वान् युधि धर्म्मसूनोर्न्निरायुधौ तौ च यमौ चकार ।**
**तानेकयानोपगतान् पुनश्च ममर्द्द बाणैश्च वचोभिरुग्रैः ॥ ८३ ॥**

**तदैव मोक्षाय नृपस्य भीमो दुर्य्योधनं विरथं संविधाय ।**
**विव्याध मर्म्मस्वतितीक्ष्णसायकैस्तं दर्शयामास रवेः सुताय ॥ ८४ ॥**

**शल्यस्तदा धर्म्मसुतं विहाय कर्ण्णो ययौ तत्र युधिष्ठिरोऽपि ।**
**गत्वा शनैः शिबिरं तत्र शिश्ये कर्ण्णो यदा राजगृध्नी[1] जगाम ॥ ८५ ॥**

पुनरन्यं रथमादाय धर्मराजं ययावित्यर्थः । तथाहि भारते सुषेणवधानन्तरं पठ्यते–**'क्रोधाद्धयांस्तस्य रथं ध्वजं च बाणैः सुधारैर्निशितैर्न्यकृन्तत्'** [७९.१४] इति । अत्र कस्य रथं को न्यकृन्तदित्यस्फुटम् । अत आहाऽचार्यः–अपरस्मिन् रथे स्थित इति । तेन ज्ञायते कर्णस्य रथं भीमो न्यकृन्तदिति ॥ ८१ ॥ युतं यमाभ्यामिति । चक्ररक्षाभ्यामित्यर्थः । **'चक्ररक्षौ नृपसुतौ माद्रीपुत्रौ परन्तपौ । तावप्यधावतां कर्णं राजानं मा वधीदिति'** [६६.८] इति च ॥ ८२ ॥ **'दन्तवर्णांस्तु राधेयो निजघान मनोजवान् । युधिष्ठिरस्य सङ्ग्रामे कालवालान् हयोत्तमान् । ततोऽपरेण भल्लेन शिरस्त्राणमपातयत्'** [६६.११–२] इति । **'तथैव नकुलस्यापि हयान् हत्वा महारथः । ततोऽपरेण भल्लेन भृशं तीक्ष्णेन भारत । धनुश्चिच्छेद वीरस्य माद्रीपुत्रस्य धीमतः । तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ । भ्रातरावारुरुहतुः सहदेवरथं तदा'**[६६.१३–४] इति च । वचोभिरुग्रैः–**'न भवान् क्षत्रधर्मेषु कुशलोऽस्तीति मे मतिः । ब्राह्मे बले भवान् युक्तः स्वाध्याये यज्ञकर्मणि'** [४४.७४],**'स्वगृहं गच्छ कौन्तेय यत्र वा केशवार्जुनौ । नहि त्वां समरे राजन् हन्यात् कर्णः कथञ्चन'** [७७] इत्यादिभिः ॥ ८३ ॥ संविधाय चक्ररक्षादीनां समक्षमेव विधाय । तं भीमपीडितं दुर्योधनं शल्यः रवेः सुताय दर्शयामास । **'पश्यैनं भीमसेनेन ग्रस्तमाहवशोभिना'** [६६.२७] **'किं नु माद्रीसुतौ हत्वा राजानं वा युधिष्ठिरम्'** [२८] इति । कर्णो यदा राजगृध्नी जगाम । **'इति शल्यवचः श्रुत्वा राधेयः पृथिवीपते । दृष्ट्वा दुर्योधनं चैव भीमग्रस्तं महाहवे । राजगृध्नी भृशं चैव शल्यवाक्यप्रचोदितः । अजातशत्रुमुत्सृज्य माद्रीपुत्रौ च पाण्डवौ । तव पुत्रं परित्रातुमभ्यधावत वीर्यवान्'** [२९–३१] इति च । **'अवतीर्य रथात् तूर्णमाविशच्छयनं शुभम्'** [३४] इति च । राजगृध्नी राजरक्षाकाङ्क्षी । गृधु अभिकाङ्क्षायाम् । का व्युत्पत्तिः? गृध्यतीति गृध्नी । गर्धनशीलः । ननु पाणिनिस्ताच्छील्यादिषु गृधेः क्नुं प्रत्ययमाह । तेन गृध्नुरिति निष्पद्यते । गृध्नीति पुनः कथम्? कः प्रत्ययः? क्निनिः प्रत्ययः । गृधेः क्नुवत् क्निनिश्च

१. **'राजगर्द्धी'**

**द्रौणिः कृपश्चात्र तदैव जग्मतुस्तदा भीमो द्रौणिकर्ण्णौ जगाम ।**
**यदा भीमो द्रौणिकर्ण्णौ जगाम कृपो नृपं रथमारोपयच्च[1] ॥ ८६ ॥**

**नृपं समादाय कृपेऽपयाते भीमार्दितौ द्रौणिकर्ण्णौ शरौघैः ।**
**विहाय तं जग्मतुः सोमकानां चमूं शरौघैरभिपातयन्तौ ॥ ८७ ॥**

**अथात्र राजानमचक्षमाणो धनञ्जयो वासुदेवप्रणुन्नः ।**
**अभ्याययौ पार्षतः स्वां तु सेनां कर्ण्णाहतां वीक्ष्य कुरूनपीडयत् ॥ ८८ ॥**

**न्यवारयत् समायान्तं[2] कपिप्रवरकेतनम् ।**
**द्रौणिर्दुःशासनश्चैव धृष्टद्युम्नमवारयत् ॥ ८९ ॥**

---

प्रत्ययो भवतीति । तथाच **'त्रसि-गृधि-धृषि-क्षिपेः क्नुः'** [अ.सू.३.२.१४०] इत्यतः परम्–**'गृधेः क्रिनिर्वा'** इत्युपस्कर्तव्यम् । ननु नैवं पाणिनिः पपाठ । नापि कात्यायनः । सत्यम्, तौ न पेठतुरिति सम्प्रति पाणिनिमुग्धः स भवान् पाठ्यते **'गृधेः क्रिनिर्वा'** इति । न हि द्वाभ्यामेव सर्वं पठनीयमिति राज्ञामाज्ञाऽस्ति । कांश्चित् पाणिनिः पपाठ । तेनापठितान् कांश्चित् कात्यायनः पपाठ, ये पाणिनिकाले न प्रचुरास्ततः कात्यायनकाले प्रचुरं प्रायुज्यन्त । प्रयोगशरणा हि वैयाकरणाः । ये कात्यायनेनाप्यनुक्ताः ये च पुराणैः प्रायुज्यन्त तस्य साधुत्वनिष्पादनमस्माभिः करणीयं भवति । एवं प्रयोगोऽस्तीति केषाञ्चिदपशब्दानामपि साधुत्वं क्वचिदङ्गचक्रियत प्रतनैर्वैयाकरणैः । अक्षौहिणीति साधुपदमित्याह कात्यायनः । सङ्ख्चमिति युद्धवचनमिति प्रायः सर्वे वैयाकरणाः । अक्षोहिणीत्येव प्रतनः प्रयोगः । सङ्ख्मित्येव । तेन वैयाकरणैरङ्गीकृता अपि केचनास्माभिः प्रत्याख्येया भवन्ति । अपूर्वमिदं पदमपरिचितं वैयाकरणपाशानाम् । एतत् प्राचीनरूपमजानन्तः केचिद् वैयाकरणम्मन्याः भारतपाठमपि व्यत्यस्य पठन्ति–**'राजगृद्धी भृशं चैव–'** इत्येके । **'राजगृध्नुर्भृशं चैव–'** इत्यपरे । सर्वं भ्रान्तिमूलम् । अतः शुद्धं मूलपाठं दर्शयन्नाचार्यः शिष्यशिक्षायै स्वयमपि तथैव पपाठ **'राजगृध्री'** इति । अहो करुणापारवश्यमाचार्यस्य ॥ ८४–५ ॥ द्रौणिः कृपश्चात्र यत्र कर्णो जगाम । यत्र राजा दुर्योधनो भीमग्रस्तो बभूव । नृपं दुर्योधनम् ॥ ८६ ॥ शरौघैः भीमार्दितौ । **'भीमसेनः कुरून् सर्वान् पुत्रांश्च तव मारिष । सहानीकान् महाबाहुरेक एव न्यवारयत्'** [६३.१९] इति, **'भीमसेनस्य तत् कर्म राजन्नेकस्य धीमतः । निघ्नतः सर्वभूतानि रुद्रस्येव च निर्बभौ'** [६४.४३] इति च । अभितः उभयतः, अग्रतः पृष्ठतश्च, वामतो दक्षिणतश्च वा, पातयन्तौ । **'संशप्तकांस्तु कौन्तेयः कुरूंश्चापि वृकोदरः । सूतपुत्रस्तु पाञ्चालांस्त्रयोऽघ्नंस्त्वरिताः शरैः'** [५१.१२३] इति च ॥ ८७ ॥ प्रतनाः क्वचिद् धातोरनुक्तमपि शानचि मकारादेशमुशन्ति । तद् यथा– जानमानः, चक्षमाणः । तेनाक्षराधिक्येन तदचक्षणमक्षममाणश्चाऽसेत्याह ॥ ८८ ॥ कपिप्रवरकेतनं द्रौणिर्न्यवारयत् । महता रथवंशेन सह । **'द्रौणिस्तु रथवंशेन महता**

---

१. **'कर्णौ जगाम । कृपो नृपं रथमारोपयच्च विद्धं शरैर्भीमबाहुप्रमुक्तैः । नृपं समा–'** २. **'समायातम्'**

**उभावतिरथौ तौ तु शस्त्रास्त्रैरभ्यवर्षताम् ।**
**दुःशासनः पार्षतश्च कुर्वन्तौ बाणजं तमः ॥ ९० ॥**

**तत्र दुःशासनेनाऽजौ स्तम्भितो द्रुपदात्मजः ।**
**यतमानोऽपि निर्य्यत्नः कृतो युद्धे निरायुधः ॥ ९१ ॥**

**तदाऽभवद् युद्धमतीव दारुणं द्रौणेस्तनूजेन तु वज्रपाणेः ।**
**तत्रापि बद्धः शरपञ्जरेण पार्त्थोऽपनुत्ताऽपि हि[१] गाण्डिवज्या ॥ ९२ ॥**

**पार्त्थोऽथ [२]कृष्णेधितबाहुवीर्य्यो निहत्य सूतं गुरुपुत्रकस्य ।**
**छित्वा च रश्मींस्तुरगानमुष्य विद्रावयामास शरैः सुदूरम् ॥ ९३ ॥**

**परिवारितः । अपतत् सहसा राजन् यत्र पार्थो व्यवस्थितः'** [६७.१] इति च । दुःशासनश्च एक एव धृष्टद्युम्नमवारयत् । **'धृष्टद्युम्नं तु पश्याम घटमानं महाबलम् । दुःशासनेन संरुद्धं सिंहेनेव महागजम्'** [६३.३७] इति च । एतं विशेषमवगमयितुमेव द्रौणिः न्यवारयदित्याह । रथैर्निरुध्यावारयदित्यर्थः । दुःशासनश्चैव, एवकारेणैकाकित्वमाह, अवारयदेव केवलम्, न न्यवारयदिति ॥ ८९ ॥ तौ तु । तुना परस्परं स्पर्धातिशयमाह । न केवलमतिरथौ । अतिस्पर्धमानौ च । उभौ तु उभावेव केवलमिति च । न ससैन्यौ । अभितः परस्परम्, अवर्षतामक्लेशयताम् । असिश्नतां वा । वर्षणकर्मणि करणानि शस्त्रास्त्राण्येवेति तानि वर्षति तैर्वर्षतीत्युभयमपि साधु ॥ ९०–१ ॥ वज्रपाणेस्तनूजेन सह । द्रौणेस्तु । तुना तस्य शिवावतारत्वेन स्वरूपतोऽर्जुनादुत्तमत्वमाह । **'वज्रपाणेस्तनूजेन तु'** इत्यन्वयेनार्जुनस्य नराविष्टत्वं कृष्णसारथ्यादि च विशेषमाह । **'तयोस्तु व्याकुले युद्धे द्रौणेः पार्थस्य दारुणे । अमर्यादं योधयन्तः पर्यधावन्त पृष्ठतः'** [६७.१२] इति च । **'स द्रोणपुत्रः सदृशं महात्मा मामप्यरौत्सीत् तदनीकमध्ये'** [७०.६] इति, **'सव्येन वा यदि वा दक्षिणेन न ज्ञायते कतरेणास्यतीति । आचार्यवत् समरे पर्यवर्तयन्महच्चित्रं दर्शयन् सर्वतः सः'** [९] इति चार्जुनवचनम् । गाण्डीवस्यापि ज्या अपनुत्ता अपास्ता हि द्रौणिना । विन्तेरिव नुदतेरपि निष्ठानत्वं विभाषा भवति [अ.सू.८.२.५६] । तेन विन्नो वित्तो भवति । नुन्नो नुत्तो भवति ॥ ९२ ॥ कृष्णेधितेति । **'एङि पररूपम्'** [अ.सू.६.१.९४] । यद्यपि वैयाकरणाः सूत्रार्थमन्यथा वर्णयन्ति–**'अवर्णान्तादुपसर्गात् एङादौ धातौ पूर्वपरयोः पररूपमेकादेशो भवति'** इति । सत्यं वर्णयन्ति यदधिगतं परम्परया । अनुपसर्गादपि अधातावपि विभाषा भवत्येङि पररूपमिति प्रतनः सम्प्रदाय इत्याचार्याशयः । विभाषा च व्यवस्थया भवति । शराणामोघः शरौघ एव । न शरोघः । गुणैरोतो गुणोत एव । न गुणौतः । उत्तममोजोऽस्येति उत्तमोजा उत्तमौजा वा । तत्रापि व्यवस्थीयते सञ्ज्ञायामुत्तमोजाः, असञ्ज्ञायामुत्तमौजा वेति । तथाच कृष्णालिङ्गनेन

१. **'–ऽपि च गाण्डि–'** २. **'कृष्णैधित–'**

अतीत्य पुत्रं तु गुरोः समागते पार्थे कर्ण्णो द्रावयामास सेनाम् ।
पाण्डोः सुतानां शरवर्षधारो दुर्य्योधनश्चानु ययौ तमेव ॥ ९४ ॥

कर्ण्णमायान्तमालोक्य द्रावयन्तं निजां चमूम् ।
धनुरन्यत् समादाय धृष्टद्युम्नो न्यवारयत् ॥ ९५ ॥

तयोरासीन्महद् युद्धं चिरं सममविश्रमम् ।
तदैव सात्यकिर्वीरो दुर्य्योधनमवारयत् ॥ ९६ ॥

निवारितः सात्यकिना रणे दुर्य्योधनो नृपः ।
निहत्य सात्यकेरश्वान् द्रौपदेश्चापमच्छिनत् ॥ ९७ ॥

तदन्तरैव कर्ण्णोऽपि पार्षताश्वानपातयत् ।
तयोर्विरथयोरेव[1] भग्नं तत् पाण्डवं बलम् ॥ ९८ ॥

बलं स्वकीयं बहुधा विभिन्नं समीक्ष्य भीमो मृगराजकेतुः ।
कृत्वा धराकम्पकमुग्रनादं रणेऽभ्ययात् कौरवराजसैन्यम् ॥ ९९ ॥

नादेन बाणैश्च वृकोदरेण भग्नं तदा कौरवसैन्यमाशु ।
दिशो विदुद्राव सुयोधनोऽपि कृतो रणे तेन विवाहनायुधः ॥ १०० ॥

---

समेधितबाहुवीर्यः । निहत्य सूतं गुरुपुत्रकस्य । अनुकम्पनीयस्य गुरुपुत्रस्य [अ.सू.५.३.७६] । **'सारथिं चास्य भल्लेन रथनीडादपातयत्'** [६७.२८] इति, **'क्षिप्रं रश्मीनथाश्वानां क्षुरप्रैश्चिच्छिदे जयः । प्राद्रवंस्तुरगास्तस्य शरवेगप्रपीडिताः'** [३२] इति च ॥ ९३–९७ ॥ तदन्तरा तन्मध्ये । तयोरिति कयोः? दुर्योधनकृतस्य सात्यकेरश्वानां निहननस्य द्रौपदेश्चापच्छेदस्य च मध्ये । एवकारेण व्यवधानं विनेति सत्वरतामाह । दुर्योधनो धृष्टद्युम्नस्य चापमच्छिनत् । ततः पूर्वमेव कर्णस्तदश्वानपातयदित्यर्थः । एवमश्वपातेन विरथयोस्तयोः पश्यतोरेव कर्णदुर्योधनाभ्यां भग्नं तत् पाण्डवं बलम् ॥९८॥ स्वकीयं बलं सैन्यम् । उग्रं सिंहनादं ज्यातळनादं च । **'महाभुजगसङ्काशौ चन्दनागरुरूषितौ । अपश्यं भीमसेनस्य धनुर्विक्षिपतो भुजौ । तस्य ज्यातळनिर्घोषं श्रुत्वाऽशनिसमस्वनम् । विमुञ्चन्तः शकृन्मूत्रं गजाः प्रादुद्रुवुर्भृशम्'** [६४.४१–२] इति च ॥ ९९–१०० ॥

---

१. **'–योरेवम्'** इति क्वचित् ।

**दृष्ट्वैव तत् पाण्डवानां च सेना समावृत्ता क्षिप्रमवार्य्यवेगा[1] ।**
**तया पुनः कौरवाणां बलं तद् भग्नं दूराद् दूरतरं प्रदुद्रुवे ॥ १०१ ॥**

**हन्यमानं दिशो यातं[2] पाञ्चालैर्भीमसंश्रयात् ।**
**[3]सुयोधनबलं दृष्ट्वा जज्वालाऽधिरथिः क्रुधा ॥ १०२ ॥**

**सोऽमोघं [4]रामदेवत्यमस्त्रं भार्ग्गवसञ्ज्ञितम् ।**
**सर्वास्त्रनाशकं दिव्यमप्रतिद्वन्द्वमाददे ॥ १०३ ॥**

**तच्च भीमपुरोगेषु सैन्येष्वमुचदुद्ब्लणम्[5] ।**
**तदस्त्रं वर्ज्जयामास भीमं रामप्रसादतः ॥ १०४ ॥**

**अन्ये तु दुद्रुवुः केचिच्छिष्टाः प्रापुर्य्यमक्षयम् ।**
**नह्यस्त्रं द्रवमाणांस्तद्धन्ति तेन सपार्षताः ॥ १०५ ॥**

**पाञ्चाला द्रौपदेयाश्च शैनेयाद्याश्च सर्वशः ।**
**पलायनेनोर्वरिता अर्ज्जुनोऽप्यस्त्रमुद्यतम् ॥ १०६ ॥**

---

प्राणपरीप्सया द्रवणं प्रद्रवणम् । जीवन् भिक्षमाणो भवेयमिति जिजीविषायामात्मनेभाषा ॥ १०१ ॥ **'तावकी चतुरङ्गैषा पाण्डवैस्तु महाचमूः । पुनःपुनरथो वीरैः प्रभग्ना जितकाशिभिः'** [६७.३५] इति च ॥ १०२ ॥ **'प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः'** [६७.४८] इति च । रामदेवतायै इदं रामदेवत्यम् । तथाहि पाणिनिः–**'देवतान्तात् तादर्थ्ये यत्'** [अ.सू.५.४.२४] इति । **'रामदैवत्यम्'** इति पठन्तो भ्रान्ताः । भार्गवस्येदमिति हेतोर्भार्गवमिति सञ्ज्ञितम् ॥१०३॥ उद्ब्लणम् । उद् व्रणयतीति । उद्व्रणमेव उद्ब्लणम् । वबयो रलयोश्चाभेदात् । **'यज्ञैः सम्मिश्लः–'** [अथ.सं.२०.६७.४] इत्यादिवत् । एतेन उल्बणोद्व्रणशब्दयोर्मूलरूपं निर्वचनं च दर्शयामासाऽचार्यः । भीमं रामप्रसादतः । **'प्रत्यनीकमवस्थाप्य भीमं भीमपराक्रमम् । अलं विषहितुं ह्येष कुरूणां सम्प्रपश्यताम्'** [६८.२]इति । भीमः भार्गवास्त्रमपि विसोढुमलम् । कथम्? रामप्रसादत इत्यर्थः ॥ १०४ ॥ द्रवमाणान् आत्मरक्षार्थं द्रवतः ॥ १०५ ॥ सर्वशः सर्वे । सर्वत्र पलायनेन वा ॥ १०६ ॥

---

१. **'–मवार्यविक्रमा ।'** २. **'यान्तं पाञ्चाल्यैर्भीम–'** ३. **'दुर्योधन–'**
४. **'रामदैवत्य–'** ५. **'–दुल्बणम्'**

वीक्ष्य प्रत्यस्त्रहीनं तदप्राप्यैव रवेः सुतम् ।
वासुदेवमिदं प्राह वर्ज्जयित्वैव सूतजम् ॥ १०७ ॥

अन्यत्र यामि नैवास्मादस्त्राज्जीवनमन्यथा ।
इत्यूचिवांसं पार्त्थं तं कृष्णोऽप्राप्यैव सूतजम् ॥ १०८ ॥

अन्येनैव पथा भीमं प्रापयामास विश्वकृत् ।
तत्रार्ज्जुनोऽवदद् भीमं याहि द्रष्टुं युधिष्ठिरम् ॥ १०९ ॥

प्रवृत्तिं विद्धि भूपस्य मां तु संशप्तका युधे ।
आह्वयन्ति हतोच्छेषास्तानहं यामि तद् युधे ॥ ११० ॥

इत्यूचिवांसं तमुवाच भीमो जानन् स्वबाह्वोर्बलमप्रमेयम् ।
संशप्तकान् सूतजं कौरवांश्च[१] योत्स्येऽहमेकस्त्वमुपैहि भूपम् ॥ १११ ॥

त्यक्त्वा रणं नाहमितो व्रजेयं न मां वदेत् कश्चन युद्धभीतम् ।
इति ब्रुवाणं तमनन्तशक्तिः प्रीतः कृष्णः प्रशशंसाधिकेष्टम् ॥ ११२ ॥

**रवेः सुतमप्राप्यान्यत्र युध्यन् अर्जुनः ॥ १०७–२० ॥**

---

वर्जयित्वैव सूतजम् । **'एष कर्णो रथे भाति मध्याह्न इव भास्करः । निवर्तय रथं कृष्ण जीवन् भद्राणि पश्यति'** [६७.६५] इति च ॥ १०७–८ ॥ याहि द्रष्टुं युधिष्ठिरम् । **'तस्माद् भवान् शीघ्रमितः प्रयातु ज्ञातुं प्रवृत्तिं पुरुषर्षभस्य'** [६८.१३] इति, **'ज्ञातुं प्रयाह्याशु तमद्य भीम स्थास्याम्यहं शत्रुगणान् निरुध्य'** [१५] इति च ॥ १०९ ॥ यस्मा-दाह्वयन्ति तत् तस्मात् तानहं यामि । 'तद्युधे' इत्येकं वा पदम् । तैः सह युद्धाय । **'त्वमेव जानीहि महानुभाव राज्ञः प्रवृत्तिं भरतर्षभस्य । अहं हि यद्यर्जुन याम्यमित्रा वदन्ति मां भीत इति प्रवीराः । ततोऽब्रवीदर्जुनो भीम-सेनं संशक्तकाः प्रत्यनीकस्थिता मे । एतानहत्वाऽद्य मया न शक्यमितोऽपयातुं रिपुसङ्घमध्यात् । अथाब्रवीदर्जुनं भीमसेनः स्ववीर्यमासाद्य कुरुप्रवीर । संशप्तकान् प्रतियोत्स्यामि सङ्ख्ये सर्वानहं याहि धनञ्जय त्वम्'** [६८.१६–८] इति ॥ ११०–१ ॥ प्रीतः कृष्णः प्रशशंस । तथाहि कृष्णवचनम्– **'नैतच्चित्रं तव कर्माद्य भीम यास्यावहे जहि**

---

१. **'–कान् कौरवान् सूतजं च'** इति क्वचित् ।

**ययौ युधिष्ठिरं द्रष्टुं शिबिरं सार्ज्जुनो हरिः ।**
**दृष्ट्वा तौ नृपतिः कर्ण्णं हतं मत्वा शशंस ह ॥ ११३ ॥**

**अभिवाद्य हनिष्यामीत्युक्तः पार्त्थेन स क्रुधा ।**
**भृशं विनिन्द्य बीभत्सुमाह[1] कृष्णाय गाण्डिवम् ॥ ११४ ॥**

**देहि पुत्रं स राधाया हनिष्यति न संशयः ।**
**अथवा भीम एवैनं निवृत्ते त्वयि पातयेत् ॥ ११५ ॥**

**त्वं तु कुन्त्या वृथा सूतः क्लीबो मिथ्याप्रतिश्रुतः[2] ।**
**अहं हि[3] सूतपुत्रेण क्लिष्टो मारुतितेजसा ॥ ११६ ॥**

---

**पार्थारिसङ्घान्'** [२२] इति । ननु भीमोऽर्जुनमाह– 'त्वमेव याहि । यद्यहं यामि माममित्रा भीतं वदेयुः' इति । ननु समानमेतदर्जुनेऽपि । यदि स याति तममित्रा भीतं वदेयुः । तेनार्जुनेनापि शक्यं प्रतिवक्तुम्–'त्वमेव याहि । यद्यहं यामि माममित्रा ननु भीतं वदेयुः' इति । अनभिज्ञोऽसि प्रसङ्गस्य । अर्जुनो हि भार्गवास्त्रभीतः तदपवार्य भीमं द्रष्टु-मागतः । **'अपयातो रणाद् वीरं राजानं द्रष्टुमेव च'**[६८.३] इति हि सञ्जय उवाच । भीमस्तु स्वयं रणादनपगतो युध्यन्नेवाऽस । अतः स आह–'अहं रामप्रसादतः भार्गवास्त्रात् स्वतो मुक्तः । अतोऽभीतः शत्रून् निघ्नन्नेवास्मि । यद्यहं यामि, भार्गवास्त्राद् बिभायेति परे भ्रमेयुः । मा तत् तथा भूत् । त्वं तु भार्गवास्त्रवारणाय रणं विहायापगत इहाऽ-गच्छः । तदपि राजानं द्रष्टुमेव । तद् यदर्थं त्वं रणादपगतस्तत्पूरयित्वैवाऽगच्छ' इति । अपि च यदि भीमो याति नूनं भीत्या यातं ब्रूयुः । यद्यर्जुनो याति तदा कृष्णनीत्या यातं ब्रूयुः । नतु भीतं ब्रूयुः । कृष्णनेत्रो हि सः । अत एव भीमाशयं जानन् कृष्णः प्रशशंस तम् ॥ ११२ ॥ कर्णं हतं मत्वा शशंस । **'अन्तकं मम मित्राणां हत्वा कर्णं महामृधे । दिष्ट्या युवामनुप्राप्तौ हत्वाऽसुरमिवामरौ'** [६९.११] । हेति धर्मराजस्य हर्षातिशयमाह । विस्मयते च तस्य सम्भ्रमातिशयं कर्णहनने ॥ ११३ ॥ हनिष्यामीत्युक्तः । **'हनिष्येऽहं भारत सूत्रपुत्रमस्मिन् सङ्ग्रामे यदि दृश्यतेऽद्य'** [७०.१७] इति च । **'सौतिं हनिष्यामि नरेन्द्रसिंह सैन्यं तथा शत्रुगणांश्च सर्वान्'** [७०.२३] इति च । **'स गाण्डीवं केशवाय प्रदाय यन्ता भवेस्त्वं यदि केशवस्य । ततस्तरेत् केशवः कर्णमुग्रं मरुत्सखो वृत्रमिवाऽत्तवज्रः'** [७१.३३]इति च । **'एकः स मे भीमसेनोऽद्य नाथो येनाभिपन्नोऽस्मि रणे महाभये । विमोच्य मां चापि रुषाऽन्वितस्ततः शरेण तीक्ष्णेन बिभेद कर्णम्'** [७१.२३] इति च ॥ ११४–५ ॥ वृथा सूतः । **'मासेऽपतिष्यो यदि पञ्चमे त्वं न वा गर्भे यद्यभवः पृथायाः । मत्तः श्रेयान् राजपुत्रोऽभविष्यन्न ते यशः फल्गुन इत्यपेयात्'** [७१.३४]

---

१. **'बीभत्सुं प्राह'** इति क्वचित् । २. **'–प्रतिश्रवः ।'** ३. **'अहं तु सूत–'**

**जीवामीत्यग्रजेनोक्त उद्धबर्हासिमुत्तमम् ।**
**वासुदेवस्तदाऽऽहेदं[१] किमेतदिति सर्ववित्** ॥ ११७ ॥

**तमाह गाण्डिवं दातुं यो वदेत् तद्वधो मया ।**
**प्रतिज्ञातस्ततो हन्मि नृपमित्याह तं हरिः** ॥ ११८ ॥

**सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम् ।**
**यत् सतां हितमत्यन्तं तत् सत्यमिति निश्चयः** ॥ ११९ ॥

**धर्म्मस्य चरणं[२] श्रेयो धर्म्मज्ञानं तु दुष्करम्[३] ।**
**यः सतां धारको नित्यं स धर्म्म इति निश्चयः** ॥ १२० ॥

**कौशिकाख्यो ब्राह्मणो हि लीनं ग्रामजनं क्वचित् ।**
**तस्करेष्वभिधायैव निरयं प्रत्यपद्यत** ॥ १२१ ॥

**ग्रामजनः वणिक् ॥ १२१–३० ॥**

---

इति च । स तु जात्या सूतोऽप्यवृथा सूतः । त्वं तु वृथा सूतः । स सूतोऽप्यसूत इव । त्वं जातोऽप्यजात इव ॥ ११६ ॥ उद्धबर्ह कोशादुच्चकर्ष । बृहु उद्यमे तुदादिः । **'उद्यमः उद्धरणम्'** इति क्षीरतरङ्गिणी । उत्तममव्यभिचरित-लक्ष्यवेधम् । इदं पुरः प्रवर्तमानं एतदस्युद्धर्हणं किन्निमित्तमित्याह पप्रच्छ सर्वविदपि अजानन्निव । इदं वक्ष्यमाणं वचन-माहेति वा । **'युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः । असिं जग्राह सङ्क्रुद्धो जिघांसुर्भरतर्षभम् । तस्य कोपं समाज्ञाय चित्तज्ञः केशवस्तदा । उवाच किमिदं खड्गं गृह्णास्यर्जुन शंस मे । नेह पश्यामि योद्धव्यं त्वया किञ्चिद् धनञ्जय । नेहाऽगता धार्तराष्ट्राः सर्वे भीमेन वारिताः'** [७२.१–३] इति च ॥ ११७ ॥ नृपमिति तं कृष्णमाहा-र्जुनः । तदा हरिस्तमर्जुनमाह वक्ष्यमाणम् । **'अन्यस्मै देहि गाण्डीवमिति मां यः प्रचोदयेत् । भिन्द्यामहं तस्य शिर इत्युपांशु व्रतं मम'** [७२.१०] **'तस्मादेनं वधिष्यामि राजानं धर्मचारिणम्'** [१२] इति च ॥११८॥ सत्यस्य । सम्प्रत्ययं श्लोकः किञ्चिदिव व्यत्यस्य पठ्यते– **'सत्यस्य वचनं साधु न सत्याद् विद्यते परम् । सुदुर्विदं हि तत्वेन तत् सत्यमिति मे मतिः'** [७२.३२] इति । **'भवेत् सत्यमवक्तव्यं वक्तव्यमनृतं भवेत् । यत्रानृतं भवेत् सत्यं सत्यं चाप्यनृतं भवेत्'** [३३] इति च ॥ ११९–२० ॥ कौशिकाख्यः कश्चिद् ब्राह्मण आसीद् बहुश्रुतः । स प्रतिजज्ञे– सत्यमेव सदा

---

१. **'–स्तमाहेदम्'** २. **'–स्य वचनं श्रे–'** ३. **'–ज्ञानं सुदुष्करम्'** इति क्वचित् ।

**कश्चिद् व्याधो मृगं हत्वा मातापितृनिमित्ततः ।**
**भक्षार्थमभ्यगात् स्वर्ग्गमसुरोऽसौ मृगो यतः ॥ १२२ ॥**

**उपद्रवाय लोकस्य तपश्चरति दुर्म्मतिः ।**
**तस्मात् सद्धारको धर्म्म इति कृत्वा विनिश्चयम् ॥ १२३ ॥**

**मा नृपं जहि सत्यां त्वङ्कुरु वाचं ततः कुरु[1] ।**
**इत्युक्तो बहुधाऽनिन्दत् क्रोधादेवार्ज्जुनो भृशम्[2] ॥ १२४ ॥**

**त्वं नृशंसोऽकृतज्ञश्च[3] निर्वीर्य्यः परुषंवदः ।**
**त्वत्तः सुखं नास्ति किञ्चिन्न मां गर्हितुमर्हसि ॥ १२५ ॥**

---

वदामीति । अथ दस्युभयात् केचिद् ग्रामीणा जना धावन्तो वनमाविशन् । तान् मार्गमाणा दस्यवोऽपि तत्राऽगत्य कौशिकं पप्रच्छुः–**'कतरेण पथा याता भगवंस्ते जनाः'** इति । सत्यासत्यविवेकमविदन् स कौशिक आह–**'बहुवृक्षलतागुल्ममेतद् गहनमाश्रिताः'** [७२.५१] इति । ततस्ते तान् समासाद्य क्रूरा जघ्नुः । कौशिकश्च तेन सत्यवचनेन घोरं निरयमापेति कथा ॥ १२१ ॥ कश्चिद् व्याधोऽभवद् बलाको नाम । स मृगान् हत्वा वृद्धौ च मातापितरौ बिभर्त्यन्यांश्च संश्रितान् । स कदाचिन्मृगं नाविन्दत् । अथ च कश्चित् पीवानमदृष्टपूर्वं घ्राणचक्षुषं मृगमपश्यत् । अपूर्वं तत् सत्वं दृष्ट्वा जघान । ततो व्योम्नः पुष्पवर्षं पपात । व्याधश्च तेन पुण्येन स्वर्गमाप । यतस्तत् सत्वं सर्वभूतानामभावाय तपस्तप्यमानं रक्षः स्वयम्भुवा चान्धं कृतमिति व्याधकथा ॥ १२२ ॥ सद्धारक इति । **'धारणाद् धर्ममित्याहुर्धर्मो धारयते प्रजाः'** [७२.५८] इति च ॥ १२३ ॥ नृपं मा जहि । किन्तु त्वङ्कुरु । **'त्वमित्यत्रभवन्तं हि ब्रूहि पार्थ युधिष्ठिरम् । त्वमित्युक्तो हि निहतो गुरुर्भवति भारत'** [७२.८३] इति हि श्रीकृष्णवचनम् । तेन ते वाचं सत्यां कुरु । गुरुवधप्रतिनिधिना गुरौ त्वङ्कारेण सत्यप्रतिज्ञो भव ॥ १२४ ॥ त्वं नृशंसोऽकृतज्ञश्च । नॄन् शंसति हिनस्तीति नृशंसः क्रूरः । **'शंसु स्तुतौ च'** इति दुर्गः । चात् हिंसायां च । अत एव शंस्तेति पशुविशासितोच्यते । **'त्वन्मूलमस्माभिरिदं हि वैरं प्राप्तं तथा व्यसनं चातिघोरम् । द्यूतप्रमत्तेन कृतं त्वयाऽसकृत् कस्मादुपालब्धुमिहार्हसि त्वम् । त्वमेव राजन् सततं प्रमत्तस्त्वमेव मूढो भरतानामसाधुः । त्वां प्राप्य राज्यं च विनष्टमेतत् प्राप्ता महत् पाण्डवाश्चापि दास्यम् । त्वत्तः कृतोऽस्मद्वनवासदुःखं राज्यस्य नाशो ह्यभिमन्योश्च घोरः । आत्मानमेवं सुनृशंसरूपं ज्ञात्वा किमर्थं गर्हसे माऽद्य वीर । लज्जस्व राजन् यदि तेऽस्ति लज्जा तूष्णीम्भूतः पश्य सर्वं कृतघ्नः'** [७३.२२–५] **'त्वं वाग्बलो भारत निष्ठुरोऽसि त्वमेव मां वेत्सि**

---

१. 'सत्यां त्वं कुरु वाचं तिरस्कुरु' २. '–नो नृपम् ।' ३. 'नृशंसः कृतघ्नश्च'

भीमो मां गर्हितुं योग्यो यो ह्यस्माकं सदा गतिः ।
यो युद्ध्यते सर्ववीरैरद्यापि त्वं तु निन्दकः ॥ १२६ ॥

इत्याद्युक्त्वाऽऽत्मनाशाय विकोशं चकृवानसिम्[1] ।
पुनः कृष्णेन पृष्टः सन्[2] स्वाभिप्रायमुवाच सः ॥ १२७ ॥

तच्छ्रुत्वा गर्हयित्वैनं पुनराह जनार्दनः ।
मतिपूर्वं देहहानात्[3] पापं महदवाप्यते ॥ १२८ ॥

धर्म्मार्त्थकाममोक्षाणां साधनं देहतोऽस्ति यत् ।
अतो मा त्यज देहं तु कुरु चाऽत्मप्रशंसनम् ॥ १२९ ॥

वधो गुरूणां त्वङ्कारः स्वप्रशंसैव चाऽत्मनः ।
इत्युक्तः स त्वहङ्काराच्छशंस स्वगुणानलम् ॥ १३० ॥

---

**यथाविधोऽहम्'** [२७] **'एवं च मां वाक्छलाकैर्हिनस्सि त्वत्तः सुखं न वयं विद्म किञ्चित् । मा माऽवमंस्था द्रौपदीतल्पसंस्थो महारथान् प्रतिहन्मि त्वदर्थे'** [२८] **'त्वं देविता त्वत्कृते राज्यनाशस्त्वत्सम्भवं व्यसनं नो नरेन्द्र । माऽस्मान् क्रूरैर्वाक्प्रतोदैस्तुदस्त्वं भूयो राजन् कोपयस्यल्पबुद्ध्या'** [३५] इत्यादि बहुधाऽनिन्दत् ॥१२५॥ भीमो माम् । **'मा त्वं राजन् व्याहरस्वाद्य पापं त्वं तिष्ठसि क्रोशमात्रे व्यपेत्य । भीमस्तु मामर्हति गर्हणाय यो युध्यते सर्वलोकप्रवीरैः'** [७३.२] इत्यादिभिः चतुर्दशभिः पद्यैर्भीमं बहुधा प्रशस्याऽह– **'तेनास्मि वाच्यो न त्वयाऽहं कदाचिन्मा मा वोचः क्रूरमिहाद्य पार्थ । नास्मद्विधो वै भवता तु वाच्यो यथा भवान् मर्त्यलोकस्य वाच्यः'** [१६]इत्यादि ॥ १२६ ॥ इत्याद्युक्त्वा–**'विनिःश्वसन् ज्येष्ठमनिष्टमुक्त्वा ततस्तु कोशादसिमुद्बबर्ह'** [७३.३६] । स्वाभिप्रायमुवाच सः– **'अहं हनिष्ये स्वशरीरमेतत् प्रसह्य येनाहितमुक्तवान् गुरुम्'** [७३.३८] इति ॥ १२७–८ ॥ कुरु चाऽत्म-प्रशंसनम् । येन गुरुनिन्दामकृथास्तेनैवाऽत्मप्रशंसनं च कुरु । **'प्रब्रूहि पार्थ स्वगुणानिहाऽत्मनस्ततो हतात्मा भवसीति निश्चयः'** [३९] इति च ॥ १२९ ॥ आत्मनो वधः । शशंस स्वगुणानलम् । **'न मादृशोऽन्यो नरदेव विद्यते धनुर्धरो देवमृते पिनाकिनम् । अहं हि तेनानुमतो महात्मना क्षणेन हन्यां सचराचरं जगत्'** [७३.४१] इति, **'हता उदीच्या निहताः प्रतीच्याः प्राच्या निरस्ता दाक्षिणात्या विशस्ताः । संशप्तकानां किञ्चिदेवावशिष्टं सर्वस्य लोकस्य हतं मयाऽर्धम्'** [४४] इत्यादि शशंस । अलं विद्यमानादपि किञ्चिदधिकतया ॥ १३० ॥

---

१. '–कोशं कृतवानसिम् ।' २. 'स स्वाभिप्रायमुवाच तम् ।' ३. 'देहनाशात्' इति क्वचित् ।

गुरुनिन्दाऽऽत्मपूजा च न धर्म्माय भवेत् क्वचित् ।
तथाऽप्यर्ज्जुनहार्दं तत् सम्प्रकाश्य जनार्दनः ॥ १३१ ॥

तस्य लज्जां समुत्पाद्य नाशयित्वा च तं मदम् ।
नाहं वेद परं धर्म्मं कृष्ण एव गतिर्म्मम ॥ १३२ ॥

इति भावं समुत्पाद्य दोषान् नाशयितुं हरिः ।
कारयामास तत् सर्वमर्ज्जुनेन जगत्पतिः ॥ १३३ ॥

तत एतदविज्ञानात् कुपितो नृपतिर्भृशम् ।
आहास्तु राजा भीमस्त्वं युवा मां जहि च स्वयम् ।
वनं वा विफलो यामीत्युक्त्वोत्तस्थौ स्वतल्पतः ॥ १३४ ॥

तं वासुदेवः प्रतिगृह्य हेतुमुक्त्वा सर्वं शमयामास नेता ।
पार्थश्च भूपस्य पपात पादयोः क्षमापयन् सोऽपि सुप्रीतिमाप ॥ १३५ ॥

**तत् अर्जुनहार्दं अर्जुनाभिप्रायम् ॥ १३१–३ ॥ विफलः अप्रयोजकः ॥ १३४–६ ॥**

---

मनःशास्त्रविदग्रणीर्भगवान् अर्जुनस्यान्तर्निलीनं भावं बहिर्निष्कास्य प्रकाशयितुमेव लीलानाटकमेतद् रचयामासेत्याह– गुरुनिन्देत्यादि । हृदयस्येदं हार्दम् । अन्तर्लीनो भावः [अ.सू.६.३.५०] ॥ १३१–३ ॥ युवा युवराजः । विफलो व्यर्थजीवनः क्लीबो वा । उक्त्वोत्तस्थौ स्वतल्पतः । इति वदन्नुत्तस्थावित्यर्थः । **'उत्थाय तस्माच्छयनादुवाच'** [७४.१] इति च । उत्तिष्ठन्नुवाचेत्यर्थः । मुखं व्यादाय स्वपितीतिवत् । **'योग्यो राजा भीमसेनो महात्मा क्लीबस्य किंवा मम राजकृत्यम्'** [४] इति, **'तस्माच्छिरश्छिन्धि ममैतदद्य कुलान्तकस्याधमपूरुषस्य'**[२] इति, **'गच्छाम्यहं वनमद्यैव पापः सुखं भवान् वर्ततां मद्विहीनः'**[४] इति च । शिरो वा छिन्धि वनं वा गच्छामि ॥ १३४ ॥ **'ततः सत्यां प्रतिज्ञां तां पार्थेन प्रतिरक्षता । मच्छन्दादवमानोऽयं कृतस्तव महीपते । गुरूणामवमानो हि वध इत्यभिधीयते । तस्मात् क्षम महाबाहो मम पार्थस्य चोभयोः'**[७४.९–१०] इति हेतुमुक्त्वा । प्रतिगृह्य वनगमनान्निवार्य प्रणयेन प्रणामादिना प्रतोष्य च । पार्थश्च, वासुदेवश्च लीलानाटकसूत्रधारः । **'क्षन्तुमर्हसि मे राजन् प्रणतस्याभियाचतः । राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम्'**[१२] इति हि श्रीकृष्णवचनम् । **'तं वासुदेवः प्रणतोऽभ्युवाच'**[६] इति च पूर्वत्र । **'इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः । ससम्भ्रमं हृषीकेशमुत्थाप्य प्रणतं तदा । कृताञ्जलिमुवाचेदं वाक्यं यत् समनन्तरम्'**[१४] इति च । क्षमापयन् क्षम्यतामिति विज्ञापयन् पपात । पूर्वमपि कोपलीना प्रीतिरास । अत एव चुकोप । इदानीं गलितकोपतया सुव्यक्तां प्रीतिमाप ॥ १३५ ॥

**तौ भ्रातरौ वासुदेवप्रसादान्महापदो मुक्तिमाप्यातिहृष्टौ ।**
**भक्त्या समस्ताधिपतिं शशंसतुस्त्वया समः को नु हरे हितो नः ॥ १३६ ॥**

**ततः प्रणम्य बीभत्सुरग्रजं परिरम्भितः ।**
**तेनाभिनन्दितः प्रीत्या चाऽशीर्भिः प्रययौ युधे ॥ १३७ ॥**

**तं शङ्कितं कर्ण्णजये स्विन्नगात्रं हरिस्तदा ।**
**सङ्कीर्त्त्य पूर्वकर्म्माणि नरावेशं विशेषतः ।**
**व्यञ्जयामास धैर्य्यं च तस्याऽसीत् तेन सुस्थिरम् ॥ १३८ ॥**

**भीमस्तदा शत्रुबलं समस्तं विद्रावयामास जघान चाऽजौ ।**
**वीरान् रणायाभिमुखान् स्वयन्त्रा कुर्वंश्च वार्त्ता[1] रममाण एव ॥ १३९ ॥**

**तेन परिरम्भितः आशीर्भिरभिनन्दितश्च ॥१३७–८॥ तदा नृपं द्रष्टुमर्जुनगमनानन्तरम् ॥ १३९–४१ ॥**

---

शशंसतुः । **'भवन्तं नावमासाद्य ह्यावां व्यसनसागरात् । घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ'** [१६] इति च ॥ १३६ ॥ अग्रजं प्रणम्य तेन परिरम्भितः । **'उत्थाप्य भ्रातरं राजा धर्मराजो धनञ्जयम् । समाश्लिष्य च सस्नेहं प्ररुरोद महीपतिः'** [७५.१३] इति च । प्रीत्या चाऽशीर्भिरभिनन्दितः । **'तमुत्थाप्य ततो राजा परिष्वज्य च पीडितम् । मूर्ध्न्युपाघ्राय चैवैनमिदं पुनरुवाच ह । धनञ्जय महाबाहो मानितोऽस्मि दृढं त्वया । माहात्म्यं विजयं चैव भूयः प्राप्नुहि शाश्वतम्'** [७५.३६–७] इति, **'अहं त्वामनुजानामि जहि कर्णं धनञ्जय'** [७५.३४] इति च । **'प्रयाहि वृद्धिं च दिशन्तु देवता यथाऽहमिच्छामि तवास्तु तत् तथा । प्रयाहि शीघ्रं जहि कर्णमाहवे पुरन्दरो वृत्रमिवाऽत्मवृद्धये'** [७५.४३] इति च ॥ १३७ ॥ तं शङ्कितं कर्णजये स्विन्नगात्रम् । **'प्रयातस्याथ पार्थस्य महान् स्वेदो व्यजायत । चिन्ता च विपुला जज्ञे कथं चेदं भविष्यति । विषण्णं तु ततो ज्ञात्वा सव्यसाचिनमच्युतः । सञ्चोदयति तेजस्वी मधुहा वानरध्वजम्'**[७६.८–९] इति च । **'को हि शान्तनवं भीष्मं द्रोणं वैकर्तनं कृपम् । द्रौणिं च सौमदत्तिं च कृतवर्माणमेव च । सैन्धवं मद्रराजं च राजानं च सुयोधनम्'**[७७.१३] **'त्वामृते पुरुषव्याघ्र जेतुं शक्तः पुमानिह'** [१५] इत्यादिना सङ्कीर्त्य पूर्वकर्माणि । **'शक्तस्त्वं हि रणे जेतुं ससुरासुरमानुषान् । त्रीन् लोकान् समरे युक्तान् किं पुनः कौरवं बलम्'** [७७.८] इत्यादिना नरावेशं च विशेषतो व्यञ्जयामास । तेन तस्य धैर्यं सुस्थिरमासीत् ॥ १३८ ॥ भीमस्तदा शत्रुबलं समस्तं विद्रावयामास च जघान च । **'ततोऽभियाते तव सैन्ये स भीमः प्रादुश्चक्रे वेगमनन्तवेगः'**[८०.७] **'तस्यातिवेगस्य रणेऽतिवेगं नाशक्नुवन् धारयितुं त्वदीयाः'**[८०.८]

---

१. 'कुर्वन् स वार्तां रम–'

तदाऽऽसदत् तं शकुनिः ससैन्यो दुर्य्योधनस्यावरजैरुपेतः ।
तं भीमसेनो विरथं निरायुधं विधाय बाणैर्भुवि च न्यपातयत् ॥ १४० ॥

न जघ्निवांस्तं सहदेवभागं प्रकल्पितं स्वेन तदाऽक्षगोष्ठ्याम् ।
तं मूर्च्छितं श्वासमात्रावशेषं[1] दुर्य्योधनः स्वरथेनापनिन्ये ॥ १४१ ॥

दुर्य्योधनस्यावरजा दशात्र प्रदुद्रुवुर्भीमसेनं विहाय ।
तदाऽर्ज्जुनं[2] वासुदेवं च दृष्ट्वा प्रीतः श्रुत्वा धर्म्मराजप्रवृत्तिम् ॥ १४२ ॥

पुनश्च निघ्नन्तमरिप्रवीरान् विद्रावयन्तं च निजां वरूथिनीम् ।
ससार दुःशासन आत्तधन्वा भीमोऽपि तं सिंह इवाभिपेतिवान्[3] ॥ १४३ ॥

**धर्मराजप्रवृत्तिं क्षेमवार्त्तां श्रुत्वा प्रीतः ॥ १४२ ॥ सिंहो मृगमिव ॥ १४३–५ ॥**

---

इति च । **'सर्वांस्तूणान् सायकानामवेक्ष्य किं शिष्टं स्यात् सायकानां रथे मे । का वा जातिः किं प्रमाणं च तेषां ज्ञात्वा व्यक्तं तन्ममाऽचक्ष्व सूत । कति वा सहस्राणि कति वा शतानि ह्याचक्ष्व मे सारथे क्षिप्रमेव'** [८०.१५] इत्यादि स्वयन्त्रा वार्ताश्च कुर्वन् रममाण एव वीरान् जघान ॥ १३९ ॥ तदासदत् तं शकुनिः । **'स वायुवीर्यप्रतिमो वायुवेगसमो जवे । वायुवद् व्यचरद् भीमो वायुपुत्रः प्रतापवान्'** [८१.२५] **'दुर्योधनो महाराज शकुनिं वाक्यमब्रवीत् । जहि मातुल सङ्ग्रामे भीमसेनं महाबलम् । अस्मिन् जिते जितं मन्ये पाण्डवेयं महाबलम् । ततः प्रायान्महाराज सौबलेयः प्रतापवान् । रणाय महते युक्तो भ्रातृभिः परिवारितः'** [८१.४७] इति च । **'भ्रातृभिः परिवारितः'** इत्यत्र शकुनिः स्वभ्रातृभिः परिवारित इति मा कोऽपि शङ्किष्टेति स्फुटं व्याख्याति– दुर्योधनस्यावरजैः समेत इति । तं भीमसेनः । **'सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः । निपपात तदा भूमौ किञ्चित्प्राणो नराधिपः'** [६८] इति च ॥ १४० ॥ सहदेवभागं स्वेन प्रकल्पितम्– शकुनिं चाक्षकितवं सहदेवो वधिष्यतीति । तं मूर्छितम् । **'ततस्तं विह्वलं ज्ञात्वा पुत्रस्तव विशाम्पते । अपोवाह रथेनाजौ भीमसेनस्य पश्यतः'** [६९]इति च ॥ १४१ ॥ दुर्योधनस्यावरजाः । **'शकुनिं विह्वलं दृष्ट्वा धार्तराष्ट्राः पराङ्मुखाः । प्रदुद्रुवुर्दिशो भीता भीमसेनभयात् प्रभो'** [७०] इति च । तदाऽर्जुनं वासुदेवं च दृष्ट्वा । **'समागत्य च भीमेन मन्त्रयित्वा च फल्गुनः । विशल्यमरुजं चास्मै कथयित्वा युधिष्ठिरम् । भीमसेनाभ्यनुज्ञातस्ततः प्रायाद् धनञ्जयः'** [८४.२३] इति च ॥ १४२ ॥ भीमोऽपि । **'तमभ्यधावत् त्वरितो वृकोदरो महारुरुं सिंह इवाभिपेतिवान्'** [८६.३१] इति च ॥ १४३ ॥

---

१. '–वशिष्टं दु–' २. 'ततोऽर्जुनम्' ३. '–पेदिवान्'

तं रूक्षवाचो मुहुरर्प्पयन्तं विधाय भीमो विरथं क्षणेन ।
प्रगृह्य भूमौ विनिपात्य वक्षो विदारयामास गदाप्रहारतः ॥ १४४ ॥

आक्रम्य कण्ठं च पदोदरेऽस्य निविश्य पश्यन् मुखमात्तरोषः ।
विकोशमाकाशनिभं विधाय महासिमस्योरसि सञ्चखान ॥ १४५ ॥

कृत्वाऽस्य वक्षस्युरुसत्तटाकं पपौ निकामं तृषितोऽमृतोपमम् ।
तच्छोणिताम्भो भ्रमदक्षमेनं संस्मारयामास पुराकृतानि ॥ १४६ ॥

वाक्सायकांश्चास्य पुरा समर्प्पितान् संस्मारयामास पुनःपुनर्भृशम् ।
दन्तान्तरं न प्रविवेश तस्य रक्तं ह्यपेयं पुरुषस्य जानतः ॥ १४७ ॥

तथाऽपि शत्रुप्रतिभीषणाय पपाविवाऽस्वाद्य पुनःपुनर्भृशम् ।
स्मरन् नृसिंहं भगवन्तमीश्वरं स मन्युसूक्तं च ददर्श भक्त्या ॥ १४८ ॥

'यस्ते मन्यो' इत्यतो नारसिंहं सोमं तस्मै [१]चार्प्पयच्छोणिताख्यम् ।
युद्धाख्ययज्ञे सोमबुद्ध्याऽरिवक्ष इहेति साम्ना गदया विभिन्दन् ॥ १४९ ॥

**तृषितः अमृतोपमं अमृतमिव तच्छोणिताम्भः पपौ पपाविव ॥ १४६–७ ॥ स ईश्वरं नृसिंहं भगवन्तं**

---

रूक्षवाचो मुहुरर्पयन्तम्– **'मायां यूयं कामपि सम्प्रविष्टा यतो वृतः कृष्णया फल्गुनो वः'** [८६.४०] **'एका वृता पञ्चभिः साऽभिपन्ना ह्यलज्जमानैश्च परस्परस्य'** [४१] इत्याद्याः । **'निपातयित्वा पृथिवीतळे भृशं स ताडयामास वृको-दरो बली । अतीव सन्ताडितभिन्नगात्रो दुःशासनो वै निपपात भूमौ'** [८७.१०] इति च ॥ १४४ ॥ कण्ठं पदा आक्रम्य । उदरे निविश्य महासिं विकोशं विधाय । आकाशनिभम् । शरन्नभोनिभम् । विमलमित्यर्थः । **'असिं विकोशं विमलं चकार'** [१५] इति च । **'आकाशसङ्काशमसिम्–'** [८८.४३] इति च भारते ॥ १४५ ॥ पपाविव । तृषित इव । अमृतोपममिव । संस्मरयामास पुराकृतानि–**'ये राजसूयावभृथे पवित्रा जाताः कचा याज्ञसेन्या दुरात्मन् । ते पाणिना कतरेणावकृष्टास्तद् ब्रूहि त्वां पृच्छति भीमसेनः'** [२२] इत्यादि । संस्मारयामास पौनःपुनिकतया स्मारयामास ॥ १४६ ॥ वाक्सायकांश्च–**'एष ते रुधिरं तीव्रं पिबामि पुरुषादवत् । वदेदानीं सुसंरब्धः पुनर्गौरिति गौरिति'** [८८.२] इत्यादि अनूद्यानूद्य स्मारयामास ॥ १४७ ॥ **'यस्ते मन्यो'** इत्याद्यं मन्युसूक्तं [ऋ.सं.१०.८१] च ददर्श । अतः नारसिंहं

---

१. **'तस्मै प्रार्प–'** इति क्वचित् । वे.ती. पाठोऽपि तथा ।

उवाच वाचं पुरुषप्रवीरः सत्यां प्रतिज्ञां लोकमद्ध्ये विधाय ।
याः सपतयस्ता अपतयो हि जाता [१]यासाऽपतिः सा सपतिश्च जाता ॥ १५० ॥

**मन्युसूक्तप्रतिपाद्यं भक्त्या स्मरन् । यस्ते मन्यो इति 'यस्ते मन्योऽविधद्वज्र सायक' इत्यादिकं मन्युसूक्तं मन्युनाम्नो नृसिंहस्य प्रतिपादकं मन्त्रं ददर्श । अतः तत्सूक्तदर्शनानन्तरं इहेति साम्ना मन्त्रेण गदाकारेण अरिवक्षः सोमबुद्ध्या सोमं भि(नद्मि) इति बुद्ध्या विभिन्दन् नारसिंहं नरसिंहदेवताकं शोणिताख्यं सोमं तस्मै नृसिंहाय प्रार्पयत् ॥ १४८–९ ॥ 'दुःशासनस्यास्य विदार्य वक्षः पिबामि रक्तं जगतः समक्षम्' (२१.३६०) इति प्रतिज्ञाम् । याः धार्तराष्ट्रपत्न्यः सपतयः, पूर्वमिति शेषः । ताः अपतयः जाताः, इदानीमिति शेषः । यासा द्रौपदी अपतिः 'अपतिर्ह्यसि कल्याणि'(२१–३८२) इत्युक्ता सा सपतिर्जाता ॥ १५० ॥**

---

नसिंहदेवत्यं सोमं चार्पयत् । सूक्तार्थस्त्वस्मत्कृतसूक्तभाष्ये द्रष्टव्यः ॥ १४८ ॥ इहेति साम्ना । इहेति स्तोभाक्षरेण सह यत् साम गीयते तदिहेतिसाम । इह मद्धृदयगते नारायणे इदमर्पितमस्त्विति भावेन गीयमाने साम्नि इहेति स्तोभाक्षरं पठित्वा शोणिताख्यं सोमं नरसिंहायाऽर्पयदित्यर्थः । तथा दुःशासनवक्षसि स्थितस्य नृहर्यक्षस्येयं पूजाऽस्त्वित्य-नुसन्धाय तद्वक्षो गदया विभिन्दन् इहेति स्तोभाक्षरमगासीदित्यर्थः । त इमे त्रयोदश स्तोभाः– हावु, हायि, अथ, इह, ई, ऊ, ए,औहोयि, हिम्, स्वरः, याया, विराट्, हुप्–इति । तथाहि च्छन्दोगोपनिषदि–**'अयं वाव लोको हावुकारः, वायुर्हायिकारः, चन्द्रमा अथकारः, आत्मेहकारः, अग्निरीकारः, आदित्य ऊकरः, निहव एकारः, विश्वे देवा औहोयिकारः, प्रजापतिर्हिङ्कारः, प्राणः स्वरः, अन्नं याया, वाग् विराट्, अनिरुक्तस्त्रयोदशः स्तोभः सञ्चारो हुप्कारः'** [छ.उ.३.६] इति । तत्र द्वावेव स्तोभौ केवलं विष्णुवचनौ इहकारो हुप्कारश्च । इहेति **'एष त आत्माऽन्तर्याम्यमृतः'** इत्युक्तमन्तर्यामिणं नारायणमाह । हुबिति सर्वगतम् । तथाहि भाष्ये माहात्म्यवचनम्–**'हूयतेऽत्राग्निहोत्रादिर्हावुकार-स्त्वियं ततः । हेत्याश्चर्यवदायाति हेति वा सुखकृत्त्वतः । हायिकारस्ततो वायुरथेत्युक्तमनन्तरम् । आनन्तर्यात् प्रकाशस्य सूर्याचन्द्रस्त्वथेरितः । सर्वसामीप्यतो विष्णुरिहेति कथितः सदा । इन्धनादग्निरीकार ऊकारः सूर्य उष्टितः । नितरा-माह्वयन्त्येनमितीन्द्रो निहवः स्मृतः । एतीत्येकार एवासावौहोयीत्यखिलाः सुराः । उच्चत्वाद् विष्णुरुः प्रोक्तो हूयन्तेऽस्मिन् यतोऽखिलाः । मुक्तावौहोयिनस्तस्मात् सर्वे देवाः प्रकीर्तिताः । हीति निश्चय उद्दिष्टो निश्चयज्ञानतः सदा । ब्रह्मा हिङ्कार इत्युक्तो वायुः प्राणः शरीरगः । स्वे विष्णौ रमयत्येनं जीवं तस्मात् स्वरः स्मृतः । ययिर्नित्य-गतेर्वायुस्तदा याया सरस्वती । सैवान्नदेवता प्रोक्ता याऽत्रा प्राणेन नीयते । सर्ववागात्मिका या तु श्रीर्विशेषेण राजनात् । विराडुक्ताऽनिरुक्तस्तु व्याप्तो नारायणस्तु यः । आहूत एव पातीति हुप्कार इति कीर्तितः । हुबित्याक्रियते यस्माद्धुप्कारस्तज्जनार्दनः । अनिरुक्तस्त्ववाच्यत्वात् परमः पुरुषो हरिः'** इति ॥ १४९ ॥ **'यासाऽपतिः सा सपतिर्हि जाता यास्ताः सपत्योऽपतयस्तु जाताः'** [८८.१४] इति च । यासेति समस्तं पूर्वपरामर्शी । **'यत्तत् सास्नादिमत् सा गौः'** इत्यादिवदित्युक्तम् ॥ १५० ॥

---

१. **'या चापतिः'** इति क्वचित् ।

पश्यन्तु चित्रां परमस्य शक्तिं ये वै तिलाः षण्ढतिला बभूवुः ।
एनं गृहीतं च[1] मया यदीह कश्चित् पुमान् मोचयतु स्ववीर्य्यात् ॥ १५१ ॥

इति ब्रुवाणः पुनरेव रक्तं पपौ सुधां देववरो यथा दिवि ।
पुनश्च सप्राणममुं विसृज्य नदन् ननर्त्तारिबले निरायुधः ॥ १५२ ॥

प्रत्यनृत्यन् पुरा येऽस्मान् पुनर्ग्गौरिति गौरिति ।
तान् वयं प्रतिनृत्यामः पुनर्ग्गौरिति गौरिति ॥ १५३ ॥

इति ब्रुवन् नृत्यमानोऽरिमद्ध्य आस्फोटयच्छत्रुगणानजोहवीत् ।
शशाक च[2] द्रष्टुममुं न कश्चिद् वैकर्त्तनद्रौणिसुयोधनादिषु ॥ १५४ ॥

**पूर्वं ये धार्तराष्ट्राः तिलाः वीर्यवन्तो वयमिति स्वयमभिमता इदानीं षण्ढतिला निर्वीर्या बभूवुः । पूर्वं ये पाण्डवाः षण्ढतिलाः इदानीं ते तिला बभूवुः । परमस्य चित्रां शक्तिं पश्यन्तु इति योजना । इह सेनायां यदि कश्चित् पुमान् पुंस्त्ववानिति भावः । तर्हि एनं स्ववीर्यान्मोचयतु । स्ववीर्यादित्युक्त्या न मच्छरणास्येत्युक्तं भवति ॥ १५१ ॥ सप्राणममुं विसृज्य (अवज्ञा)येत्यर्थः ॥ १५२–३ ॥ अजोहवीत् आह्वयत् ॥ १५४ ॥**

---

**'पश्यन्तु चित्रं विविधं हि लोके ये वै तिलाः षण्ढतिला बभूवुः'**[८८.१५] इति च । ये पूर्वं स्नेहसत्त्वोपेतास्तिलास्त इदानीं षण्ढतिलाः निःसारा वन्यतिला बभूवुः । ये पूर्वं वीर्यवतां तिलकायितास्त इदानीं षण्डतिलका बभूवुः । परमस्य पुरुषस्य, ततः परं पुनरस्य भीमस्य शक्तिं पश्यन्तु । यदि कश्चित् पुमान् पुरुषत्ववानस्ति तर्हि मोचयतु ॥ १५१–२ ॥ प्रतीकारायावमानाय च नर्तनं प्रतिनर्तनम् । कृतस्यावमानस्य प्रत्युत्तरणार्थं नर्तनं च प्रतिनर्तनम् । पुनरिति पुनःपुनः । गौः पशुतुल्य इत्यर्थः । **'ये चास्मान् प्रतिनृत्यन्ति तदा गौरिति गौरिति । तान् वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति'** [८८.३] इति साम्प्रतो भारतपाठः । प्रायः प्रतनो भारतपाठ एवाऽचार्यपठितः ॥ १५३ ॥ **'महद् भयं चाऽधिरथिं विवेश । जये निराशाश्च सुतास्त्वदीयाः'** [८८.१७] इति च । आस्फोटयत् सशब्दं भुजावास्फालयत् । **'एवं ब्रुवाणं पुनरुत्थितं तमास्फोट्य वल्गन्तमतिप्रहृष्टम् । ये भीमसेनं ददृशुस्तदानीं प्रायेण तेऽपि व्यथिता निपेतुः । ये चापि नाऽसन् व्यथिता मनुष्यास्तेषां करेभ्यः पतितं तु शस्त्रम् । भयाच्च सञ्चुक्रुशुरस्वरैस्तदा निमीलिताक्षा मुमुहुश्च तत्र'**[८७.३३–४] इति च । शत्रुगणानजोहवीत् प्रतिकर्तुमाह्वयामास–**'भीमो बलात् तं प्रतिपद्य दोर्भ्यामुच्चैर्ननादाथ समस्तयोधान् । उवाच यस्यास्ति बलं स रक्षत्वसौ भवेदद्य निरस्तबाहुः'** [२६] इति च । वैकर्तनद्रौणिसुयोधनादिषु । सेनापतित्वात् कर्णः प्रथममुक्तः । गुरुपुत्रत्वाद् द्रौणिस्ततः ॥ १५४ ॥

---

१. '–तं हि मया' २. 'शशाक तं द्रष्टु–' इति क्वचित् ।

भयाच्च[१] कर्ण्णस्य पपात कार्म्मुकं निमीलयामास तदाऽक्षिणी च ।
सम्बोधितो मद्रराजेन युद्धे स्थितः कथञ्चित् स तु पार्त्थभागः ॥ १५५ ॥

द्रौणिर्विहायैनमपाजगाम दूरं तदा भीमसेनो जगाद ।
पीतः सोमो युद्धयज्ञे मयाऽद्य वद्ध्यः पशुर्म्मे हरये सुयोधनः ॥ १५६ ॥

इति ब्रुवन् मृतमुत्सृज्य शत्रुं दुर्य्योधनं चाऽशु रुषाऽभिदुद्रुवे ।
आयान्तमीक्ष्यैव तमुग्रपौरुषं दुद्राव भीतः स सुयोधनो भृशम् ॥ १५७ ॥

बलद्वयं चापययौ विहाय भयाद् भीमं कृष्णपार्त्थौ विनैव ।
आयोधनं [२]शून्यमभून्मुहूर्त्तं ननर्त्त भीमो व्याघ्रपदेन हर्षात् ॥ १५८ ॥

सङ्कल्प्य शत्रून् गोवदेवाऽजिमद्ध्ये शार्द्दूलवत् तच्चरितं निशाम्य ।
जहास कृष्णश्च धनञ्जयश्च शशंसतुश्चैनमतिप्रहृष्टौ ॥ १५९ ॥

यदा स रङ्गः पवमानसूनुना शून्यः कृतस्तत्र मुहूर्त्तमात्रात् ।
दुर्य्योधनस्यावरजाः शरौघैरवीवृषन् भीममुदारसत्त्वम् ॥ १६० ॥

**पार्थभागः हननविषय इति भावः । सः मद्रराजेन सम्बोधितः युद्धे कथञ्चित् स्थितः ॥ १५५ ॥ हरये हरिप्रीत्यर्थम् ॥ १५६ ॥ मृतं शत्रुमुत्सृज्य (दुर्योधनं प्रत्यभिदुद्रुवे) ॥ १५७ ॥ व्याघ्रपदेन पदद्वयवद्धस्तावपि भूमौ निधायेत्यर्थः ॥ १५८–६१ ॥**

---

भयाच्च कर्णस्य । **'ततः कर्णं महाराज प्रविवेश महद् भयम् । दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव'** [८८.२५] इति च । सम्बोधितः सम्बोध्य राधेयेति सम्यग् प्राप्तकालं हितं बोधितः । **'मा व्यथां कुरु राधेय नैतत् त्वय्युपपद्यते'** [२७] **'उपासते त्वामेते हि परिवार्य महारथाः'** [३०] इत्यादि । **'भारो हि धार्तराष्ट्रेण त्वयि सर्वः समाहितः । तमुद्वह महाबाहो यथाशक्ति यथाबलम्'** [३३] इति च ॥१५५–७॥ व्याघ्रपदेन ननर्त । पादाविव हस्तावपि भूमौ निक्षिप्य यथा नटो नाट्ये व्याघ्रगतिमभिनीय दर्शयति तथा ननर्तेत्यर्थः ॥१५८॥ व्याघ्रनर्तनस्य भावमाह–सङ्कल्प्य शत्रून् । उक्तं हि स्वेनैव–**'प्रतिनृत्यामः पुनर्गौरिति गौरिति'** इति । तदिदानीं व्याघ्रचर्यामभिनीय दर्शयामास । ते च पलायनेन भीमोक्तं स्वीयं गोत्वं समर्थयन्ति स्म ॥१५९॥ उदारसत्त्वं महावीर्यम् । **'दुःशासने तु निहते पुत्रास्तव महारथाः । महत् क्रोधविषं वीरा धारयन्तो महाबलाः । ते तु राजन् महावीर्या भीमं प्राच्छादयन् शरैः'** [८८.१८] इति च ।

---

१. **'भयात्तु'** इति कचित् । २. **'शून्यमासीन्मु–'** इति कचित् ।

**तान् मारुतिर्बाणवरैर्न्निकृत्तशीर्षान् यमायानयदाशु वीरः ।**[1]
**तस्मिन् दिने विंशतिर्धार्त्तराष्ट्रा हतास्तदन्ये समरात् प्रदुद्रुवुः ॥ १६१ ॥**

**कर्म्माण्यनन्यौपयिकानि भीमे कुर्वत्येवं भीतभीतेऽरिसङ्घे ।**
**निमीलिताक्षे च भयेन कर्ण्णे कर्ण्णात्मजो नकुलं प्रत्यधावत् ॥ १६२ ॥**

**माद्रीसुतो वृषसेनं शरौघैरवारयत् तं विरथं चकार ।**
**कर्ण्णात्मजः सोऽप्यसिचर्म्मपाणिस्तस्यानुगांस्त्रिसहस्रं जघान ॥ १६३ ॥**

**कर्ण्णात्मजस्तस्य सञ्छिद्य चर्म्म भीमार्ज्जुनादीनपि बाणसङ्घैः ।**
**अवीवृषत् तस्य पार्त्थः शरेण[2] ग्रीवाबाहूरून् युगपच्चकर्त्त ॥ १६४ ॥**

**एकेन बाणेन सुते हते स्वे वैकर्त्तनो वासविमभ्यधावत् ।**
**तयोरभूद् द्वैरथयुद्धमद्भुतं सर्वास्त्रविद्वरयोरुग्ररूपम् ॥ १६५ ॥**

**अनन्यौपयिकानि अन्येन कर्तुमशक्यानि ॥ १६२–७१ ॥**

---

अत्र दुःशासनेन सहाऽगतास्तदवरजा नव निषङ्गी, कवची, खड्गी, दण्डधारः, धनुर्धरः, अलम्बुः, जलसन्धः, वातवेगः, सुवर्चा इति । दुःशासनेन सह दश । दुःशासनात् पूर्वमागताः दश दुर्योधनस्यावरजाः शकुनिना सह ये दुःशासनवधात् पूर्वमेव हताः [क.प.८४], एवं तस्मिन् दिने विशंतिर्धार्तराष्ट्रा हताः ॥ १६०–१ ॥ अनन्यौपयिकानि । उपेतुं योग्यमौपयिकम् । अनन्यसाध्यानि । **'विनयादिभ्यष्ठक्'** [अ.सू.५.४.३४] । तेनौपायिकमित्यायातम् । **'उपायाद् ह्रस्वत्वं च'** इति गणसूत्रेण पकारदीर्घलोपे सत्यौपयिकमिति रूपम् । कर्णात्मजो वृषसेनः ॥ १६२ ॥ सोऽपि विरथीकृतः नकुलोऽपि । **'जघान चाश्वान् नकुलस्य वीरो रणाजिरे सूतपुत्रस्य पुत्रः । ततो हताश्वादवरुह्य यानाच्चर्माऽददे रुचिरं बर्हिचित्रम् । आकाशसङ्काशमसिं प्रगृह्य प्रकाशमानः खगवच्चचार'** [८८.४२–३] इति च । त्रिसहस्रं जघान । प्रचलिते भारतपाठे– **'ततोऽस्य पक्षाननयद् यमाय द्विसाहस्रान्नकुलः क्षिप्रकारी'** [४४] इति पठ्यते । स्फुटं लिपिकृतां प्रमादः । अन्यथा **'द्विसाहस्रे'** इत्यवक्ष्यत् ॥ १६३ ॥ भीमार्जुनादीनपि । **'स भीमसेनस्य रथं च गत्वा ववर्ष वै शरवर्षं सुघोरम्'**[८८.५१] इति च । **'ततः शतानीकमविध्यदायसैस्त्रिभिः शरैः कर्णसुतोऽर्जुनं त्रिभिः । त्रिभिश्च भीमं नकुलं च सप्तभिर्जनार्दनं द्वादशभिश्च सायकैः'** [८९.१८] इति च । **'पुनः स पार्थं वृषसेन उग्रैर्बाणैरविध्यद् भुजमूले तु सव्ये । तथैव कृष्णं नवभिः समार्दयत् पुनश्च पार्थं दशभिर्जघान'**[९०.५] इति च । युगपच्चकर्त– **'स पार्थबाणाभिहतः पपात रथाद् विबाहुर्विशिरा धरायाम्'** [९०.१४] इति च ॥ १६४ ॥ सुते हते स्वे । **'तं पार्थबाणाभि-**

---

१. **'–र्बाणगणैर्नि–'** इति क्वचित् ।

२. **'तस्य शरेण पार्थो ग्रीवा–'**

पक्षग्रहास्तत्र सुरासुरास्तयोरन्ये च जीवा गगनं समास्थिताः[१] ।
महान् विवादोऽप्यभवत् तयोः कृते तदा गिरीशोऽवददब्जयोनिम् ॥ १६६ ॥

सुरासुराणां भीमदुर्य्योधनौ[२] द्वौ समाश्रयौ तत्प्रियौ कर्ण्णपार्त्थौ ।
प्राणोपमौ तेन चैतत्कृते ते सुरासुराः कर्त्तुमिच्छन्ति युद्धम् ।
तदा[३] विनाशो जगतां महान् स्यात् तेनानयोः[४] सममेवास्तु युद्धम् ॥ १६७ ॥

इतीरिते वासवः पद्मयोनिं जगाद कृष्णो यत्र जयश्च तत्र ।
कामो न कृष्णस्य मृषा भवेद्धि कामोऽस्य पार्त्थस्य जयं प्रदातुम् ॥ १६८ ॥

इत्यूचिवान् वासवः फल्गुनस्य जयोऽस्तु कर्ण्णस्य वधस्तथेति ।
उक्त्वाऽनमत् कञ्जभवस्तथेति[५] प्राहासुरान् देवताश्चाऽबभाषे ॥ १६९ ॥

---

**हतं पतन्तं सम्प्रेक्ष्य कर्णः सुतमाशुकारी । रथं रथेनाऽशु जगाम रोषात् किरीटिनः पुत्रवधाभितप्तः'** [९०.१५] इति च ॥ १६५ ॥ पक्षग्रहास्तत्र सुरासुराः । **'विमानानि विचित्राणि गुणवन्ति च सर्वशः । समारुह्य समाजग्मुर्द्वैरथं कर्णपार्थयोः । अन्तरिक्षे महाराज देवगन्धर्वराक्षसाः'** [९१.५९] । **'प्रजापतिस्तु तं दृष्ट्वा देवभागं समागतम् । अब्रवीत्तु ततो राजन् पश्यतो वै स्वयम्भुवः'** [९२.१] इति भारते पठ्यते । ननु स्वयम्भूरेव प्रजापतिः । तत् कथं स एव तमाह । न भोः । प्रजापतिरिति लिङ्गात्मा शिव उच्यत इत्याह–गिरिशोऽवददब्जयोनिम् ॥१६६॥ कर्णपार्थौ । पाठक्रमादर्थक्रमो बलीयान् । भीमस्य पार्थो दुर्योधनस्य कर्ण इति पार्थकर्णावित्यर्थः । तर्हि तथैव किमिति नोवाच–पार्थकर्णाविति । सत्यम् । शक्यं वक्तुं पार्थकर्णाविति । तथाऽपि कर्णस्य ज्येष्ठभ्रातृत्वं पार्थस्याप्यबुद्धं बोधयन्नेवाह–कर्णपार्थाविति । तथाहि वार्तिकम्–**'भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः'** [अ.सू.२.२.३४] इति । वक्ष्यति च पूर्वं कर्णनामोपर्यपि–**'न कर्णार्जुनयोरर्थे–'**[१७०] इति । एतेन पूर्वनिर्देशेनाश्वत्थामसपक्षे कर्णे शिवस्य कमपि पक्षपातलेशं च सूचयति । **'अहो बत महद् युद्धं कर्णार्जुनसमागमे । भविष्यति महाघोरं वृत्रवासवयोरिव । प्रजापतिरथोक्त्वैवं स्वयम्भुवमचोदयत् । समोऽस्तु विजयः काममनयोर्नरसिंहयोः । कर्णार्जुनविवादेन मा नश्येदखिलं जगत् । स्वयम्भो ब्रूहि तद् वाक्यं समोऽस्तु विजयोऽनयोः'** [९२.३५] इति च ॥ १६७ ॥ **'ततः प्रजापतिं तत्र सहस्राक्षोऽभ्यचोदयत् । विजयो ध्रुव एवास्तु पाण्डवस्य महात्मनः'** [९२.८] इत्यत्र तु प्रजापतिरिति न शिव उच्यते, किन्तु पद्मयोनिरेव । **'तत् तथाऽस्तु नमस्तेऽस्तु प्रभो ब्रूहि पितामह'** [१९] इत्युत्तरवचनसंवादादित्याह– इतीरिते वासवः पद्मयोनिम् ॥ १६८ ॥ इत्युक्त्वाऽनमत् कञ्चभवं सहस्राक्षः । कञ्जभवः सहस्राक्षं प्रकटमाह– **'तथाऽस्तु'**

---

१. **'समाश्रिताः ।'** २. **'–भीमसुयोधनौ'** ३. **'यदा'**
४. **'तेनैतयोः'** इति क्वचित् । ५. **'कञ्जभवं तथेति'**

न कर्ण्णार्ज्जुनयोरर्त्थे विरोधं कुरुत कचित् ।
भीमदुर्य्योधनार्त्थे वा पश्यन्त्वेव च संयुगम्[१] ।
इत्युक्ते शान्तिमापन्ना ददृशुः संयुगं[१] तयोः ॥ १७० ॥

ववर्षतुस्तौ च महास्त्रशस्त्रैर्भीमो रथस्थोऽवरजं जुगोप ।
शैनेयपाञ्चालमुखाश्च पार्त्थमावार्य्य तस्थुः प्रसभं नदन्तः ॥ १७१ ॥

दुर्य्योधनो [२]द्रौणिमुखाश्च कर्ण्णं ररक्षुरावार्य्य तदाऽऽस युद्धम् ।
तत्रार्ज्जुनं बाणवरैः[३] स कर्ण्णः [४]समर्दयामास विशेषयन् रणे ॥ १७२ ॥

तदा नदन् भीमसेनो जगाद गदां समादाय समात्तरोषः ।
अहं वैनं[५] गदया पोथयामि त्वं वा जहीमं समुपात्तवीर्य्यः ॥ १७३ ॥

कृष्णोऽपि तं बोधयामास सम्यङ् नरावेशं व्यञ्जयन् भूय एव ।
समृद्धवीर्य्यः स तदा धनञ्जयः सुयोधनद्रौणिकृपान् सभोजान् ।
साकं च बाणैर्विरथांश्चकार विव्याध तानप्यरिहा सुपुङ्खैः ॥ १७४ ॥

**रणे विशेषयन् (अर्जुनतोऽपि) विशेषं कुर्वन् ॥ १७२ ॥ पोथयामि प्रहरामि ॥ १७३ ॥ 'तं शङ्कितं**

इति । **'विजयो ध्रुव एवास्तु पाण्डवस्य महात्मनः'** [९२.२२] इति, **'विजयस्तु नरे ध्रुवः'**[२६] इति च । ननु नेदं केवलं ब्रह्मणो वचनम् । शिवस्यापि । तथाहि भारते– **'ब्रह्मेशानौ ततो वाक्यमूचतुर्भुवनेश्वरम्'** [२२] इति । न भोः । नह्युभावपि सकृदेवाभाषेताम् । किन्तु ब्रह्मा प्राह । ईशानस्त्वन्वमोदतेति हि तदर्थः । पूर्वं प्रस्तुतौ प्रजापतिः स्वयम्भूश्च ब्रह्मेशानाविति ग्राहयितुमत्रोभयोर्ग्रहणम् । अथ कञ्भवः इन्द्रमुक्त्वा, पुनरसुरान् देवताश्च समष्ट्येदमाह समाधानम् ॥ १६९ ॥ किमाह? न कर्णार्जुनयोरर्थे । अथवा कञ्जभवः वासवं तथेति प्राह । वासवः असुरान् देवताश्चाऽबभाषे । तथाहि भारते–**'तथोक्ते देवदेवाभ्यां सहस्राक्षोऽब्रवीद् वचः । आमन्त्र्य सर्वभूतानि ब्रह्मेशानानुशासनात्'** [९२.२७] इति । युज्यन्तेऽत्र सम्पदे संहाराय वेति संयुगं युद्धम् ॥ १७०–१ ॥ विशेषयन् अतिशय्य तिष्ठमानः । अर्जुनाद् विशिष्टो भवन् । अर्जुनादधिकं कौशलविशेषमात्मनि दर्शयन् । **'पार्थस्य तान् बाणगणान् समग्रान् व्यनाशयद् युध्यत एव कर्णः'** [९५.२८] इति च ॥ १७२ ॥ भीमसेनो जगाद । **'धृत्या तया सूतपुत्रं जहि त्वमहं वैनं गदया पोथयिष्ये'** [९५.३१] इति च ॥१७३॥ कृष्णोऽपि तं बोधयामास–**'छिन्ध्यस्य मूर्धानमरेः प्रसह्य वज्रेण**

१. 'सङ्गरम् ।' २. 'दुर्योधनद्रौणि–' ३. 'बाणगणैः स–' ४. 'सम्मर्दया–' ५. 'अहं चैनम्'

ते किञ्चिद् दूरतस्तस्थुः पश्यन्तो युद्धमुत्तमम्[१] ।
अमानुषं तत् पार्त्थस्य दृष्ट्वा कर्म्म गुरोः सुतः ।
गृहीत्वा पाणिना पाणिं दुर्य्योधनमभाषत ॥ १७५ ॥

दृष्टं हि भीमस्य बलं त्वयाऽद्य तथैव पार्त्थस्य यथा जिता वयम् ।
अलं विरोधेन समेत्य पाण्डवैः प्रशाधि राज्यं च मया समेतः ॥ १७६ ॥

'धनञ्जयस्तिष्ठति वारितो मया जनार्द्दनो नैव विरोधमिच्छति ।
वृकोदरस्तद्वचने स्थितः सदा युधिष्ठिरः शान्तमनास्तथा यमौ' ॥ १७७ ॥

हितार्त्थमेतत् तव वाक्यमीरितं गृहाण मे नैव भयादुदीरितम् ।
अहं ह्यवद्ध्यो मम चैव मातुलो न शङ्कितुं मे वचनं त्वमर्हसि ॥ १७८ ॥

इतीरितः प्राह सुयोधनस्तं दुःशासनस्याद्य पपौ हि शोणितम् ।
शार्द्दूलचेष्टामकरोच्च भीमो न मे कथञ्चित् तदनेन सन्धिः ॥ १७९ ॥

**कर्णजये'(२७.१३०) इत्यत्र नरावेशाभिव्यञ्जनस्य पूर्व(मुक्तत्वात् भूय एवेत्युक्तम्) ॥ १७४–६ ॥ तथा शान्तमनसौ ॥ १७७–८२ ॥**

---

**शक्रो नमुचेरिवारेः । किरातरूपी भगवान् यया च त्वया महात्मा परितोषितोऽभूत् । स तां पुनर्वीर धृतिं गृहीत्वा सहानुबन्धं जहि सूतपुत्रम्'** [९६.४–५] इत्यादि । भोजः कृतवर्मा । पुङ्खः बाणमूलम् । क्षिप्रतायै पक्षिणां पक्षग्रथनेन शोभमानमूलैर्बाणैः ॥ १७४ ॥ ते सुयोधनद्रौणिकृपाः सभोजाः । गृहीत्वा पाणिना पाणिम् । **'अथाब्रवीद् द्रोणसुतस्तवाऽत्मजं करं करेण प्रतिपीड्य सान्त्वयन्'** [९४.२०] इति च ॥१७५॥ किमभाषत? दृष्टं हि भीमस्य बलम् । **'प्रसीद दुर्योधन शाम्य पाण्डवैरलं विरोधेन धिगस्तु विग्रहम्'** [९४.२०] इत्यादि । समेत्य सन्धिमेत्य ॥ १७६ ॥ **'धनञ्जयः–'** इति तु समग्रं भारतवाक्यम् [९४.२२] । अर्वाचीनाः किञ्चिद् व्यत्यस्य पठन्ति– **'धनञ्जयः स्थास्यति वारितो मया जनार्दनो नैव विरोधमिच्छति । युधिष्ठिरो भूतहिते रतः सदा वृकोदरस्तद्वशगस्तथा यमौ'**[२२] इति । भगवती भ्रान्तिरदम्या लिपिकृताम्, भगवान् दुराग्रहश्च ॥ १७७ ॥ **'अहं त्ववध्यो मम चैव मातुलः प्रशाधि राज्यं सह पाण्डवैश्चिरम्'** [९४–२१] इति च । **'न चेद् वचः श्रोष्यसि मे नराधिप ध्रुवं हि तप्तासि हतोऽरिभिर्युधि'** [२३] इति च ॥ १७८ ॥ सुयोधनस्तं द्रौणिं प्राह सनिर्धारमाह । किमिति? न मे कथञ्चित् तदनेन सन्धिरिति ।

---

१. 'युद्धमद्भुतम् ।'

इत्युक्तो द्रौणिरासीत् स तूष्णीं कर्णधनञ्जयौ ।
महास्त्रशस्त्रवर्षेण चक्रतुः खमनन्तरम्[1] ॥ १८० ॥

आग्नेयवारुणैन्द्रादीन्येतान्यन्योन्यमृत्यवे ।
ब्रह्मास्त्रमप्युभौ तत्र प्रयुज्याऽनदतां रणे ।
अन्योन्यास्त्रप्रतीघातं कृत्वोभौ च विरेजतुः[2] ॥ १८१ ॥

क्रमेण वृद्धोरुबलेन तत्र सुरेन्द्रपुत्रेण विरोचनात्मजः ।
निराकृतो नागमयं शरोत्तमं ब्रह्मास्त्रयुक्तं विससर्ज्ज वासवौ ॥ १८२ ॥

तं वासुदेवो रथमानमय्य मोघं चकारार्ज्जुनतः किरीटम् ।
चूर्णीकृतं तेन सुरेन्द्रसूनोर्दिव्यं[3] ययौ बाणगतश्च नागः ॥ १८३ ॥

नमिते वासुदेवेन रथे पश्चाङ्गुलं भुवि ।
अपाङ्गदेशमुद्दिश्य मुक्ते नागे किरीटिनः ॥ १८४ ॥

**दिव्यं किरीटम् ॥ १८३–४ ॥**

---

**‘निहत्य दुःशासनमुक्तवान् बहु प्रसह्य शार्दूलवदेष दुर्मतिः । वृकोदरस्तद्धृदये मम स्थितं न तत् परोक्षं भवतः कुतः शमः’** [९४.४१] इति च ॥ १७९ ॥ खमनन्तरं निरवकाशम् ॥ १८० ॥ एतानि महास्त्राणि ॥ १८१ ॥ नागमयं शरोत्तमम् । **‘ततस्तु पाताळतळे शयानो नागोऽश्वसेनः कृतवैरोऽर्जुनेन । राजंस्तदा खाण्डवदाहमुक्तो विवेश कोपाद् वसुधातळे यः । अथोत्पपातोर्ध्वगतिर्जवेन सन्दृश्य कर्णार्जुनयोर्विमर्दम् । अयं हि कालोऽस्य दुरात्मनो वै पार्थस्य वैरप्रतियातनाय । सञ्चिन्त्य तूणं प्रविवेश चैव कर्णस्य राजन् शररूपधारी’** [९७.१२–१४] इति, **‘ततो रिपुघ्नं समधत्त कर्णः सुसञ्चितं सर्पमुखं ज्वलन्तम्’** [२०] इति । **‘प्रदीप्तमैरावतवंशसम्भवं शिरो जिहीर्षुर्युधि सव्यसाचिनः’** [२२] इति च ॥ १८२ ॥ तं वासुदेवो रथमानमय्य । **‘तमापतन्तं ज्वलितं निरीक्ष्य वियद्गतं वृष्णिकुलप्रवीरः । रथस्य चक्रं सहसा निपीड्य पञ्चाङ्गुलं सज्जयति स्म वीरः’** [९७.३०] इति च । अर्जुनतः अर्जुने विषये मोघं चकार । अर्जुनतः अर्जुनस्य रथं वा । सुरेन्द्रसूनोरर्जुनस्य दिव्यं दिवि भवं सुरेन्द्रदत्तं किरीटं चूर्णीकृतम् । **‘ततः किरीटं बहुरत्नचित्रं जघान नागोऽर्जुनमूर्धतो बलात्’** [३२] **‘निजघ्नते देवरिपून् सुरेश्वरः स्वयं ददौ यद्धि मुदाऽर्जुनाय’**[३५] **‘पपात पार्थस्य किरीटमुत्तमं दिवाकरोऽस्तादिव पर्वताज्ज्वलन्’** [३८] इति च । ययौ बाणगतश्च नागः । **‘महोरगः**

---

१. ‘खं निरन्तरम् ।’ २. ‘विचेरतुः ।’ ३. ‘–र्दिवं ययौ’

भङ्क्त्वा किरीटं वियति गच्छति प्रभुणोदितः ।
बाणैस्तक्षकपुत्रं तं वासविः पूर्ववैरिणम् ॥ १८५ ॥

हत्वा निपातयामास भूमौ कर्ण्णस्य पश्यतः ।
ब्रह्मास्त्रस्यातिवेगित्वं प्राप्तं कर्ण्णेन भार्ग्गवात् ॥ १८६ ॥

पुनश्च पार्त्थेन महास्त्रयुद्धं प्रकुर्वतः सूर्य्यसुतस्य चक्रम् ।
रथस्य भूमिर्ग्रसति स्म शापादस्त्राणि दिव्यानि च विस्मृतिं ययुः ॥ १८७ ॥

उद्धर्त्तुकामो रथचक्रमेव पार्त्थं ययाचेऽवसरं प्रदातुम् ।
नेत्याह कृष्णोऽञ्जलिकं सुघोरं त्रिनेत्रदत्तं जगृहे च पार्त्थः ॥ १८८ ॥

सत्येन धर्म्मेण च सन्नियोज्य मुमोच कर्ण्णस्य वधाय बाणम् ।
चिच्छेद तेनैव च तस्य शीर्षं सन्धित्सतो बाणवरं सुघोरम् ॥ १८९ ॥

**'खाण्डवदाहे तव पूर्ववैरी तक्षकपुत्रः गगने गच्छति, तं पातय' इति प्रभुणोदितः ॥ १८५ ॥ ननु ब्रह्मास्त्रयुक्तनागबाणविसर्गानन्तरमेव तमखण्डयित्वा स्वकिरीटभङ्गानन्तरं कुतोऽखण्डयदित्याशङ्कायामाह– (ब्रह्मास्त्रस्येति । ब्रह्मास्त्रस्या)तिवेगित्वेन तन्मोक्षानन्तरमेव तत्खण्डनावसराभावात् पश्चादखण्डयदिति भावः ॥ १८६ ॥ ग्रसति (स्म) अग्रसत् । शापात् 'प्रमादी त्वं भविता चास्त्रसङ्घे' (१९.५८) इति रामशापात् ॥ १८७–९ ॥**

---

कृतवैरोऽर्जुनेन किरीटमाहृत्य खमुत्पपात' [४२] इति च ॥ १८३–५ ॥ 'ततः स जिष्णुः परिवृत्य रोषाच्चिच्छेद षड्भिर्निशितैः सुघोरैः । नागं वियत् तिर्यगिवोत्पतन्तं स च्छिन्नगात्रो निपपात भूमौ' [९७.४७] इति च । ननु कर्णप्रयुक्तेन ब्रह्मास्त्रेण स्वकिरीटपातनात् पूर्वमेव किमिति नार्जुनः प्रत्यस्त्रेण तन्न्यरुणत्? आह– ब्रह्मास्त्रस्यातिवेगित्वम् ॥ १८६ ॥ 'नचास्य घोरं प्रतिभाति चास्त्रं यद् भार्गवोऽस्मै प्रददौ महात्मा । चक्रं च वामं ग्रसते भूमिरस्य प्राप्ते तस्मिन् वधकाले नृवीर' [९७.७६] इति च । शापात् कर्णेनाकस्मान्निहतधेनोर्ब्राह्मणस्य शापात् । तच्च पूर्वं विवृतम् ॥ १८७ ॥ ययाचेऽवसरम् । 'यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज । न मां रथस्थो भूमिष्ठं विकलं हन्तुमर्हसि' [९७.१०७] इति ययाचे । नेत्याह कृष्णः । 'प्रायेण नीचा व्यसनेषु मग्ना निन्दन्ति दैवं नतु दुष्कृतं स्वम्' [९८.२] 'यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम् । सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः' [८] 'यदाऽभिमन्युं बहवो युद्धे जघ्नुर्महारथाः । परिवार्य रणे बालं क्व ते धर्मस्तदा गतः' [१२] इति च ॥ १८८–९ ॥

अपराह्णेऽपराह्णस्य [1]सूतजस्येन्द्रसूनुना ।
छिन्नमञ्जलिकेनाऽजौ सोत्सेधमपतच्छिरः ॥ १९० ॥

तस्मिन् हते दीनमुखः सुयोधनो ययौ समाहृत्य बलं सशल्यः ।
युधिष्ठिरः कर्ण्णवधं निशम्य तदा समागत्य ददर्श तत्तनुम् ॥ १९१ ॥

शशंस कृष्णं च धनञ्जयं च भीमं च येऽन्येऽपि[2] युधि प्रवीराः ।
गत्वा च ते शिबिरं मोदमाना ऊषुः सकृष्णास्तदनुव्रताः सदा[3] ॥ १९२ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरिचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये कर्ण्णवधो नाम**
**सप्तविंशोऽध्यायः**

—०—

[आदितः श्लोकाः– **४२४९**+१९२=**४४४१**]

**अपराह्णस्य वृद्धस्य। सोत्सेधं सोत्प्लवनम्। सशरीरमिति वा। अस्मिन्नर्थे (शिरसा सह कबन्धश्च युगपदपत) दित्यर्थः ॥ १९०–२ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां सप्तविंशोऽध्यायः

—०—

**'अपराह्णेऽपराह्णस्य सूतपुत्रस्य मारिष । छिन्नमञ्जलिकेनाऽजौ सोत्सेधमपतच्छिरः'** [९८.६४] इति साम्प्रतो भारत-पाठः । अपराह्णे काले । अपराह्णस्य अपरवयसः । यद्यपि **'सूर्यजस्येन्द्रसूनुना'** इति वक्तुमुचितम्–सूर्यपुत्रमिन्द्रपुत्रो जघानेति । तथैव च मूलं पठन्ति केचिदमूलदर्शिनोऽपपाठबद्धादरा दुराग्रहिणः । आचार्यस्तु **'सूतपुत्रस्य मारिष'** इति व्यासवचनमनुसरन्नेवाऽह–**'सूतजस्येन्द्रसूनुना'** इति । युक्तं चैतत् । नहि सूर्यांशस्येवास्य वर्तनमास । असुरावेशात् केवलं दुर्योधनस्य स्तुतिपाठक इव जिजीवेति । सूतोऽपि हि स्तुतिपाठकेषु गण्यते–**'सूतमागधवन्दिनः'** इति । **'उत्सेध उन्नतौ काये'** इति रत्नमाला । **'उत्सेधौ वपुरुन्नती'** इति मङ्खः । वपुषि प्रयोगश्च–**'स्थूलोत्सेधव्यवहितरविस्यन्दनः कुम्भकर्णः'** इति । च्छिन्नमुण्डं रुण्डमपि पपातेत्यर्थः ॥ १९० ॥ **'तेषां तु मतमाज्ञाय पुत्रस्ते भरतर्षभ । अपहारं ततश्चक्रे**

१. **'सूर्यजस्येन्द्र–'** २. **'येऽन्ये च युधि'** इति क्वचित् । ३. **'–व्रतास्तदा'** इति क्वचित् ।

**शल्यस्यानुमतेन च'** [१०१.४] इति च । सप्तदशोऽयं सेनासमाहारः । **'छिन्नध्वजेन शल्यस्तु रथेन रथिनां वरः । प्रययौ शिबिरायैव वीक्षमाणो दिशो दश'** [१०१.१०] इति च । **'सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः । प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ'** [१०१.४०] इति च ॥ १९१–२ ॥

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
गतं सप्तविंशाध्यायविवरणं सतां हृदयाभरणम् ॥

इत्याचार्यगोविन्दस्य कृतिषु
महाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायां
सप्तविंशोऽध्यायः

—०—

२२-१०-१२

# अष्टाविंशोऽध्यायः

**[पाण्डवराज्यलाभः]**

**ॐ ॥ प्रभातायां तु शर्वर्य्यां गुरुपुत्रानुमोदितः ।**
**शल्यं सेनापतिं कृत्वा योद्धुं दुर्य्योधनोऽभ्ययात्** ॥ १ ॥

**तमभ्ययुः पाण्डवाश्च हृष्टा युद्धाय दंसिताः[1] ।**
**तत्राऽसीत् सुमहद् युद्धं पाण्डवानां परैः सह** ॥ २ ॥

**अग्रे भीमः पाण्डवानां मद्ध्ये राजा युधिष्ठिरः ।**
**पृष्ठे गाण्डीवधन्वाऽऽसीद् वासुदेवाभिरक्षितः** ॥ ३ ॥

**चक्ररक्षौ यमौ राज्ञो धृष्टद्युम्नश्च सात्यकिः ।**
**नृपस्य पार्श्वयोरास्तामग्रेऽन्येषां गुरोः सुतः[2]** ॥ ४ ॥

---

ॐ ॥ शल्यसौप्तिकस्त्रीपर्वणां कथामत्र सङ्क्षिप्याऽह । आदितः १२१ श्लोकैः शल्यपर्वनिर्णयः । तत एकोनाशीत्या श्लोकैः [१२२–२००] सौप्तिकनिर्णयः । तत एकचत्वारिंशता [२०१–२४१] श्लोकैः स्त्रीपर्वनिर्णयः । शर्वर्याम् । शृणन्ति शीर्यन्ते वाऽस्यां जना इति शर्वरी रात्रिः । शॄ हिंसायाम् । **'सर्वैर्गुणैः समुदितः शल्यो नोऽस्तु चमूपतिः'** [श.प.५.१९] इति गुरुपुत्रानुमोदितः ॥ १ ॥ दंसितः कवचितः । दसि आवरणे । आवृतः सुरक्षित इत्येतत् । भासार्थ इत्येके । भाषार्थ इत्यन्ये । भाषार्थ इत्येव युक्तम् । यकेषुयकेष्वर्थेषु भाषन्ते सकःसकोऽस्यार्थ इति । सुष्ठु कौशलोपेतं रोमहर्षणं महद् भयानकं च ॥ २ ॥ **'चक्ररक्षाविमौ वीरौ मम माद्रवतीसुतौ'** [१५.१९] । **'शैनेयो दक्षिणं पार्श्वं धृष्टद्युम्नस्तथोत्तरम् । पृष्ठगोपो भवत्वद्य मम पार्थो धनञ्जयः । पुरःसरो ममाद्यास्तु भीमः शस्त्रभृतां वरः'** [२४–५] इति च । अन्येषां कौरवाणाम् ॥ ३–४ ॥

---

१. **'दंशिताः'**

२. **'पार्श्वयोरास्तामन्येषां च गुरोः सुतः'** इति क्वचित् ।

**मद्ध्ये शल्यः पृष्ठतोऽभूद् भ्रातृभिश्च सुयोधनः ।**
**चक्ररक्षौ तु शल्यस्य[१] शकुनिस्तत्सुतस्तथा ॥ ५ ॥**

**कृपश्च कृतवर्म्मा च पार्श्वयोः समवस्थितौ ।**
**तत्राभवन्महद् युद्धं भीमस्य द्रौणिना सह ॥ ६ ॥**

**राज्ञः शल्येन च तथा घोररूपं भयानकम् ।**
**तत्र नातिप्रयत्नेन द्रौणिर्भीमेन सायकैः ॥ ७ ॥**

**विरथीकृतस्तथा धर्म्मसूनुः शल्येन तत्क्षणात् ।**
**आससाद तदा शल्यं कपिप्रवरकेतनः ॥ ८ ॥**

---

तत्सुतः उलूकः । ननु व्यत्यस्य पठ्यते भारते । अग्रे शल्यः पृष्ठतोऽश्वत्थामा मध्ये दुर्योधन इति । तथाहि–**'प्रयाणे मद्रराजोऽभून्मुखं व्यूहस्य दंसितः । मद्रकैः सहितो वीरैः कर्णपुत्रैश्च दुर्जयैः । सव्येऽभूत् कृतवर्मा च त्रिगर्तैः परिवारितः । गौतमो दक्षिणे पार्श्वे शकैश्च यवनैः सह । अश्वत्थामा पृष्ठतोऽभूत् काम्बोजैः परिवारितः । दुर्योधनोऽभवन्मध्ये रक्षितः कुरुपुङ्गवैः'** [७.२३–५] इति । अयि आरम्भशूर, उपरितनो भागः पठ्यताम् । इदं प्राथमिकं व्यूहनम् । पाश्चात्यमुपरि पठ्यते । शृणु तानि वचनानि–**'ततो दृष्ट्वा वार्यमाणं शल्यं पार्थैः समन्ततः । कृतवर्मा कृपश्चैव सङ्क्रुद्धावभ्यधावताम् । उलूकश्च महावीर्यः शकुनिश्चापि सौबलः । समागम्याथ शनकैरश्वत्थामा महाबलः । तव पुत्राश्च कात्स्न्र्येन जुगुपुः शल्यमाहवे'** [१०.३४–५] इति । अत्रास्फुटमाचार्यः स्फुटीचकार । तथाहि शल्यं समन्ततः जुगुपुरित्यनेन शल्यस्य मध्यगतत्वमवगम्यते । तर्हि कः पुरःसरः? नहि दुर्बलः पुरःसरो भवति । तेन महाबलोऽश्वत्थामा सेनामुखे बभूव । आरम्भवचनेनाथशब्देन चैतत् सूचितम्–**'समागम्याथ शनकैरश्वत्थामा'** इति । **'समागम्य'** इत्यस्य च **'सम्मुख आगम्य'** इत्येव किलार्थः । सम्मुखे स्थितोऽप्यसम्भ्रान्त इति शनकैरित्याह । युक्तं च भीमं पुरोधाय प्रवृत्तायाः पाण्डवसेनायाः प्रतिभटनं धार्तराष्ट्रैरश्वत्थामानमेव पुरोधाय । अहो समीरणस्य सदाशिवस्य च प्रतापसदनं प्रधनमेतत् । मध्यगताः सुयोधनादयः शल्ये मध्यगते पृष्ठगता बभूवुरिति स्फुटम् । अहो भगवानाचार्य एवेष्टे भारतभावमेवं विवरीतुम् ॥ ५–६ ॥ राज्ञः शल्येन । **'ततः शल्यो महाराज धर्मपुत्रं युधिष्ठिरम् । विव्याध निशितैर्बाणैर्हन्तुकामो महारथम्'** [११.४८] **'युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः'** [१५.४७] । **'तत्राऽश्चर्यमपश्याम कुन्तीपुत्रे युधिष्ठिरे । पुरा भूत्वा मृदुर्दान्तो यत् तदा दारुणोऽभवत्'** [४८] इति च । द्रौणिर्भीमेन सायकैर्विरथीकृतः । तत्क्षणात् यस्मिन् क्षणे द्रौणिर्भीमेन विरथीकृतस्तत्क्षणावच्छेदेनैव धर्मसूनुः शल्येन विरथीकृतः । यस्मिन् क्षणे धर्मसूनुः शल्येन विरथीकृतस्तदा तस्मिन्नेव क्षणे कपिप्रवरकेतनः शल्यमाससाद ॥ ७–८ ॥

---

१. **'चक्ररक्षौ तु तस्याऽस्तां शकुनि–'** इति क्वचित् ।

तयोरासीन्महद्[1] युद्धमद्भुतं रोमहर्षणम् ।
रथमन्यं समास्थाय द्रौणिर्भीमं समभ्ययात् ॥ ९ ॥

दुर्य्योधनश्च भीमस्य शरैरावारयद् दिशः ।
तावुभौ शरवर्षेण वारयामास मारुतिः ॥ १० ॥

ताभ्यां तस्याभवद् युद्धं सुघोरमतिमानुषम् ।
दुर्य्योधनस्यावरजान् द्रौपदेया युयुत्सुना ॥ ११ ॥

शिखण्ड्याद्यैर्म्मातुलैश्च सह सर्वान् न्यवारयन् ।
सहदेवस्तु शकुनिमुलूकं नकुलस्तदा[2] ॥ १२ ॥

धृष्टद्युम्नश्च[3] हार्दिक्यं सात्यकिः कृपमेव च ।
तेषां तदभवद् युद्धं चित्रं लघु च सुष्ठु च ॥ १३ ॥

शल्यस्तु शरसङ्घातैः पार्त्थस्याऽवारयद् दिशः ।
सोऽपि विव्याध विशिखैः शल्यमाहवशोभिनम् ॥ १४ ॥

**ॐ ॥ १–११ ॥ सहदेवाद्याश्चत्वारः शकुन्यादींश्चतुरो न्यवारयन्निति क्रमेणोत्तरत्रापि योज्यम् । चित्रम् आश्चर्यम् । लघु हस्तलाघवोपेतम् । सुष्ठु (द्रष्टृणां मनोहरम्) ॥ १२–४ ॥**

---

अथ भीमेन विरथीकृतो द्रौणी रथमन्यं समास्थाय सुदृढोऽयं रथः, अत्र स्थितः सुखं भीमेन युत्सीयेति समाहित आस्थाय, तेनैव सम्भ्रमेण भीममभ्ययात् ॥ ९ ॥ भीमस्य दिशोऽवारयत् । या भीमस्याग्रगास्तस्य पुरोगमनाय मार्गं दिशन्ति ता दिश उच्यन्ते । ताः पुरोगा भीमपरिवारभूताः सेना अवारयत् । सर्वतोदिशं भीमं चावारयत् । द्रौणिः समभ्ययात् । दुर्योधनश्च । दुर्योधनः समभ्ययात् अवारयच्च । दुर्योधनश्चावारयत् द्रौणिश्चेति बह्वर्थश्चकारः ॥ १० ॥ युयुत्सुना सह । शिखण्ड्याद्यैर्मातुलैश्च सह ॥ ११ ॥ सहदेवश्च नकुलश्च युधिष्ठिररथस्य चक्ररक्षौ शकुनिमुलूकं च शल्यरथचक्ररक्षौ न्यवारयताम् ॥ १२ ॥ एवं पाश्वर्रक्षौ धृष्टद्युम्नसात्यकी कृपकृतवर्माणौ च । पाश्वर्रक्षः पाश्वर्रक्षमेव, चक्ररक्षः चक्ररक्षमेव न्यवारयदिति सुव्यवस्थितं युद्धमासीदित्येवकारेणाऽह । सुतिष्ठतीति सुष्ठु । **'अपदुःसुषु स्थः'** [१.११०] इति दशपादिका । सुस्थिरं सुष्ठु ॥ १३ ॥ आहवेषु सदा विजयमानः शोभते ॥ १४ ॥

---

१. **'तयोरभून्महद्–'** इति कचित् । २. **'नकुलस्तथा ।'** ३. **'–द्युम्नस्तु हार्दिक्यं'** इति कचित् ।

तयोः[१] सुसममेवाऽसीच्चिरं देवासुरोपमम् ।
ततः शरं वज्रनिभं मद्रराजः समाददे ॥ १५ ॥

तेन विव्याध बीभत्सुं हृदये स मुमोह च ।
उपलभ्य पुनः सञ्ज्ञां वासविः शत्रुतापनः ॥ १६ ॥

चिच्छेद कार्म्मुकं सङ्ख्ये[२] मद्रराजस्य धीमतः ।
सोऽन्यत् कार्म्मुकमादाय मुमोचास्त्राणि फल्गुने ॥ १७ ॥

सौरं याम्यं च पार्ज्जन्यं तान्यैन्द्रेण जघान सः ।
पुनर्न्यकृन्तत् तच्चापमिन्द्रसूनुरमर्षितः ॥ १८ ॥

शल्यो गदां समाविद्ध्य[३] चिक्षेपार्ज्जुनवक्षसि ।
तदा मुमोह बीभत्सुस्तत उच्चुक्रुशुः परे ॥ १९ ॥

प्राप्य सञ्ज्ञां[४] पुनः पार्त्थः शल्यं विव्याध वक्षसि ।
स विह्वलितसर्वाङ्गः शिश्रिये ध्वजमुत्तमम् ॥ २० ॥

समाश्वस्तः पुनर्बाणं यमदण्डनिभं रणे ।
मुमोच पार्त्थस्य स च निर्बिभेद स्तनान्तरम् ॥ २१ ॥

तेन विह्वलितः पार्त्थो ध्वजयष्टिं समाश्रितः ।
समाश्वस्तः प्रचिच्छेद मद्रराजस्य कार्म्मुकम् ॥ २२ ॥

**देवासुरोपमं देवासुरयुद्धोपमम् ॥ १५–२६ ॥**

---

सुसमं सौष्ठवे समानम् । देवाश्चासुराश्चात्र युध्यमाना भवन्तीति देवासुरं देवासुरयुद्धम् ॥ १५–८ ॥ चक्रवन्नभसि सम्यग्-वेगेन भ्रामयित्वा, आवीज्य व्यधनं समावेधः । समाविध्य चिक्षेप समाक्षिप्य विव्याधेत्यर्थः । उच्चुक्रुशुरानन्दातिशयेन ॥१९–२०॥ वैह्वल्यात् सपदि समुत्थानं समाश्वासः ॥२१॥ चित्तं समाधाय पादयोरप्रकम्पताप्रदमाश्रयणं समाश्रयणम् ।

---

१. 'तयोस्तु सम–' २. 'सङ्ख्ये' ३. 'समादाय चि–' ४. 'प्राप्तसञ्ज्ञः पुनः'

छत्रं ध्वजं च तरसा सारथिं च न्यपातयत् ।
तदाऽन्यं रथमास्थाय धर्म्मराजः शरोत्तमैः ॥ २३ ॥

चतुर्भिश्चतुरो वाहाञ्छल्यस्य निजघान ह ।
शल्योऽन्यं रथमास्थाय सर्वांस्ताञ्छरवृष्टिभिः ॥ २४ ॥

छादयामास राजानं विरथं च चकार ह ।
निहत्याश्वान् सात्यकेश्च धृष्टद्युम्नस्य चाभिभूः ।
चापे च्छित्वा च यमयोर्दध्मौ शङ्खं [1]महास्वनम् ॥ २५ ॥

ततस्तु शल्यं समुदीर्य्यमाणं दृष्ट्वा रणे भीमसेनस्तरस्वी ।
न्यवारयद् [2]बाणवरैरनेकैश्चकार चैनं विरथं क्षणेन ॥ २६ ॥

आस्थाय चान्यं रथमापतन्तं पुनश्च शल्यं भृशमेव मर्म्मसु ।
निर्भिद्य बाणैर्विरथं चकार पुनस्तृतीयं च रथं रुरोज[3] ॥ २७ ॥

**रुरोज बभञ्ज ॥ २७–३१ ॥**

---

प्रतिकर्तुमप्यनवकाशप्रदः सत्वरच्छेदः प्रच्छेदः ॥ २२ ॥ छत्रं ध्वजं च प्रचिच्छेद । तदा पूर्वं शल्येन विरथीकृतो धर्मराजोऽन्यं रथमास्थाय । आरुह्यावस्थानमास्थानम् । हेति धर्मराजस्य युद्धलाघवं स्वदते । ऋते भीमाच्च बलभद्राच्च यस्य गदायुद्धे न प्रतियोद्धाऽस्ति तस्य शल्यस्य वाहान् निजघान हेति । सर्वांस्तान् । राजानं चक्ररक्षौ पाश्वर्रक्षौ च ॥ २४ ॥ राजानं शरवृष्टिभिश्छादयामास च विरथं चकार च । हेति वृद्धस्य लाघवातिशयं स्वदते । सात्यकेर्धृष्टद्युम्नस्य च पाश्वर्गयोः । यमयोश्चक्ररक्षयोः । अभिभवति सर्वानित्यभिभूः ॥ २५ ॥ समुदीर्यमाणं समुच्छ्रीयमाणम् । वर्धमानं बलेन च वेगेन च । अत एव तरस्वी भीम आगतः । तरो बलं च वेगश्चातिशयेनास्य स्त इति तरस्वी । **'तरस्वी शूरवेगिनोः'** इत्यभिधानम् । **'अस्-माया-मेधा-स्रजो विनिः'** [अ.सू.५.२.१२१] । **'नहि मद्राधिपादन्यो रामाद्वा यदुनन्दनात् । सोढुमुत्सहते वेगं भीमसेनस्य संयुगे । तथा मद्राधिपस्यापि गदावेगं महात्मनः । सोढुमुत्सहते नान्यः पुमान् युधि वृकोदरात्'** [श.प.११.६–७] इति च । **'भीमश्च बलभद्रश्च मद्रराजश्च वीर्यवान् । अन्योन्यानन्तरबलाः'** इति च पूर्वमुक्तम् ॥ २६ ॥ रुरोज रुग्णं चकार । भग्नं चकारेत्यर्थः । रुजो भङ्गे ॥ २७ ॥

---

१. **'यमयोः शङ्खं दध्मौ महा–'** इति क्वचित् । २. **'बाणगणैरनेकै–'** इति क्वचित् ।

३. **'–स्तृतीयं रथमारुरोज'** । **'–स्तृतीयं रथमारुरोह'** इति क्वचित् ।

**आत्तान्यात्तान्यायुधान्यस्य भीमः सर्वाणि चिच्छेद बिभेद चास्य ।**
**मर्म्माणि बाणैर्न्नितरां पुनश्च स मुष्टिमुद्यम्य[1] जगाम धर्म्मजम् ॥ २८ ॥**

**तं भीमभिन्नमर्म्माणं विवर्म्माणं निरायुधम् ।**
**श्वासमात्रावशिष्टं च मरणायैव केवलम् ॥ २९ ॥**

**आत्मानमभिगच्छन्तं दृष्ट्वाऽन्यं रथमास्थितः ।**
**हन्तुकामो रणे वीरममोघां शक्तिमाददे ॥ ३० ॥**

**दिव्यास्त्रैरपि[2] संयोज्य तां तदा धर्म्मनन्दनः ।**
**सत्यधर्म्मफलैश्चैव चिक्षेपास्य हृदि त्वरन् ॥ ३१ ॥**

**स भिन्नहृदयो भूमौ पपाताभिमुखो नृपम् ।**
**सत्यधर्म्मरतः शल्य इन्द्रस्यातिथितामगात् ॥ ३२ ॥**

**मद्रराजे हते वीरे सुशर्म्माऽर्ज्जुनमभ्ययात् ।**
**संशप्तकावशिष्टैस्तमनयन्मृत्यवेऽर्ज्जुनः ॥ ३३ ॥**

**इन्द्रस्यातिथितामगादिति । मध्याह्नसमये युधिष्ठिरेण युधि पातितः इन्द्रलोकमगादिति भावः ॥३२–६॥**

---

आत्तानि प्रयोगार्थं स्वीकृतानि । **‘अच उपसर्गात् तः’** [अ.सू.७.४.४७] । अत्र प्रथमपादे शालिनी । दीर्घत्वरितगमना सा । द्वितीयतृतीययोर्मध्यमगतिरिन्द्रवज्रा । तुरीये पुनर्लघुप्रारम्भं मन्दगति च वंशस्थम् । अपूर्वश्छन्दसां त्रयाणां समागमः । अनेन च्छन्दोविलासेन भगवानाचार्यः समग्रां युद्धवार्तां नेत्रयोः पुरतः प्रादुर्भावयतीव । तथाहि शालिन्याऽऽयुधशातने भीमस्य सात्वर्यम्, तत इन्द्रवज्रया भीमस्य स्थैर्यम्, अन्ते पुनर्वंशस्थेन मरणोन्मुखस्य शल्यस्य मन्दगतिरभिनीय प्रदश्यत इव । चित्तरसायनमिदं छन्दःपारावारे विहरतां विदुषाम् । एवं भीमेन भिन्नमर्माऽपि मृदितसर्वसंहननोऽपि गलितसन्नहनोऽपि पुनश्च स शल्यो मुष्टिमुद्यम्य जगाम । अहो बलवती जयाशा ॥ २८–९ ॥ **‘स धर्मराजो निहताश्वसूतो रथे तिष्ठन् शक्तिमथान्वकर्षत्’** [३२] इति भारतवचने किञ्चिदस्फुटम्– किं निहताश्वसूते रथ एव तिष्ठन्, उतान्यस्मिन् रथे । अतस्तदाशयं स्फुटमाह– अन्यं रथमास्थितः ॥ ३० ॥ दिव्यास्त्रैरपि संयोज्य । **‘मन्त्रैश्च घोरैरपि पूरयित्वा’** [४२] इति च । धर्मराजस्य हनने त्वराऽपि लोकहितार्थमिति त्वरन्नित्याह । स्वानपेक्षिताद् दुर्योधनपक्षस्वीकरणदुरितात् त्वरितं शल्यं मोचयितुमियं त्वरा शल्यहितायैव ॥ ३१–२ ॥ सुशर्माऽर्जुनमभ्ययात्–**‘ततस्ते सहिता भूत्वा त्रिगर्तानां**

---

१. **‘मुष्टिमानम्य’** इति क्वचित् ।
२. **‘दिव्यास्त्रैरभिसंयोज्य’**

**दुर्य्योधनस्यावरजानवशिष्टान् वृकोदरः ।**
**सर्वान् जघान सेनां च [1]निश्शेषमकरोद् रणे ॥ ३४ ॥**

**उलूकं सहदेवोऽथ शकुनिं चातिपापिनम् ।**
**जघान द्रौणिहार्द्दिक्यकृपान् भीमार्ज्जुनौ ततः ॥ ३५ ॥**

**बहुशो विरथीकृत्य पीडयित्वा पुनःपुनः ।**
**द्रावयामासतुस्ते तु भीषिता विविशुर्वनम् ॥ ३६ ॥**

**शैनेयेन गृहीतोऽथ सञ्जयोऽनन्तशक्तिना ।**
**व्यासेन मोचितोऽथैकः पार्त्थान् दुर्य्योधनोऽभ्ययात्[2] ॥ ३७ ॥**

**एकः असहायः ॥ ३७–४१ ॥**

---

**महारथाः । अर्जुनं वासुदेवं च शरवर्षैरवाकिरन्'** [२६.३६] इति, **'तं निहत्य ततः पार्थः सुशर्माणं त्रिभिः शरैः । विद्ध्वा तानहनत् सर्वान् रथान् रुग्मविभूषितान्'** [४०] इति च । **'सुशर्माणं रणे हत्वा पुत्रानस्य महारथान् । सप्त चाष्टौ च त्रिंशच्च सायकैरनयत् क्षयम्'** [४६] इति च ॥ ३३ ॥ दुर्योधनस्यावरजान् । **'समेत्य समरे राजन् हतशेषाः सुतास्तव । अदृश्यमाने कौरव्ये पुत्रे दुर्योधने तव । सोदर्याः सहिता भूत्वा भीमसेनमुपाद्रवन् । श्रुतर्वा सञ्जयश्चैव जयत्सेनः श्रुतान्तकः । दुर्विमोचनकश्चैव तथा दुर्विषहो बली । दुर्मर्षणः सुजातश्च जैत्रो भूरिबलो रविः'** [श.प.२५.३–५] इति च । उत्तरत्र दुष्प्रधर्षहननमुच्यते । [१६] अतोऽत्र सुजातश्चेति चशब्देन सोऽपि गृह्यते । अत्रोक्तस्य सञ्जयस्य हननमुपरि न पठ्यते । **'दुष्प्रधर्षं ततश्चैव सुजातं च'** [१६] इति चकारेण सञ्जयोऽप्युपसङ्गृह्यते । ततश्च द्वादश सम्पद्यन्ते । अपरश्च तद्दिने हतः सुदर्शनः [२६.२६–९] । निःशेषमिति क्रियाविशेषणम् ॥ ३४ ॥ **'ततोऽस्याऽपततः शूरः सहदेवः प्रतापवान् । उलूकस्य महाराज भल्लेनापाहरच्छिरः'** [२७. ३१] इति च । **'ततो भूयो महाराज सहदेवः प्रतापवान् । शकुनेः प्रेषयामास शरवृष्टिं दुरासदाम्'** [२७.५६] इति, **'भल्लेन सर्वावरणातिगेन शिरः शरीरात् प्रममाथ भूयः'** [५९] इति च । यद्यपि पूर्वमक्षद्यूते नकुलेनोलूकवधः प्रतिज्ञातः– **'नकुलः प्रतिजज्ञेऽथ शाकुनेयवधं प्रति'** [२१.३६६] इति । भारते चैवम् । तथाऽप्युभयोरेकतरेण हननेऽपि स्यात् प्रतिज्ञापूर्तिर्यमळत्वादिति सहदेव उलूकं जघान । अन्वमन्यत च नकुलः ॥ ३५–६ ॥ शैनेयेन गृहीतः । युद्धस्य चरमदिने रणदिदृक्षया कुरुक्षेत्रे सञ्जयस्तस्थौ । तत्र अश्वत्थाम्ना, कृपेण, कृतवर्मणा, सौबलेन च मिमिले । तदैव च तत्राऽजग्मुः पाण्डवाः पुरस्कृत्य धृष्टद्युम्नम् । तदा चतुर्भिरश्वत्थामादिभिः साकं सञ्जयोऽपि पाञ्चालस्य बलेनायुध्यत । ततः किमासीदिति सञ्जय उवाच–

---

१. **'निश्शेषामक–'** २. **'–ऽभ्यगात् ।'**

**तेषामभूत् तस्य च घोररूपं युद्धं स बाणैर्बहुशोऽर्ज्जुनं च ।**
**चकार मूर्च्छाभिगतं युधिष्ठिरं यमावयत्नाद् विरथांश्चकार ॥ ३८ ॥**

**तं भीमसेनो विरथं चकार गजं समारुह्य पुनः समभ्ययात् ।**
**पुनश्च शैनेयशिखण्डिपार्षतान् यमौ नृपं च व्यदधान्निरायुधान् ॥ ३९ ॥**

**गजे च[1] भीमेन शरैर्न्निपातिते समारुहद् वाजिवरं सुनिर्भयः ।**
**स तेन च प्रासकरो रणेऽरिहा चचार शैनैयमताडयच्च ॥ ४० ॥**

**मुमोह तेनाभिहतः स सात्यकिर्य्यमावपि प्रासनिपीडितौ रथे ।**
**निषीदतर्द्धर्म्मसुतं प्रयान्तं [2]समीक्ष्य भीमोऽस्य जघान वाजिनम् ॥ ४१ ॥**

---

**'सम्प्रद्रुता वयं पञ्च किरीटिशरपीडिताः । धृष्टद्युम्नं महारौद्रं तत्र नोऽभूद् रणो महान् । जितास्तेन वयं सर्वे व्यपयाम रणात् ततः । अथापश्यं सात्यकिं तमुपायातं महारथम् । रथैश्चतुःशतैर्वीरो मामभ्यद्रवदाहवे । धृष्टद्युम्नादहं मुक्तः कथञ्चिच्छ्रान्तवाहनात् । पतितो माधवानीकं दुष्कृती नरकं यथा । तत्र युद्धमभूद् घोरं मुहूर्तमतिदारुणम् । सात्यकिस्तु महाबाहुर्मम हत्वा परिच्छदम् । जीवग्राहमगृह्णान्मां मूर्छितं पतितं भुवि'** [२४.५२–७] इति । अस्य प्रसङ्गस्यावशिष्टो भाग उपरि वक्ष्यते २९तमेऽध्याये । अनन्तशक्तिना व्यासेन मोचितः । **'धृष्टद्युम्नस्तु मां दृष्ट्वा हसन् सात्यकिमब्रवीत् । किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता । धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः । उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा । तमागम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् । मुच्यतां सञ्जयो जीवन्न हन्तव्यः कथञ्चन । द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः । ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय'** [२९.१८–२१] इति सञ्जयवचनं ह्रदप्रवेशे । अथेति युद्धान्तरारम्भः ॥ ३७ ॥ तेषामभूत् तस्य च घोररूपं युद्धम्– **'तदद्भुतमपश्याम तव पुत्रस्य पौरुषम् । यदेकं सहिताः पार्था न शेकुरतिवर्तितुम्'** [१८.५७] इति धृतराष्ट्रं प्रति सञ्जयवचनम् । **'तत्राद्भुतमपश्याम तव पुत्रस्य विक्रमम् । यदेकं सहिताः पार्था नाभ्यवर्तन्त भारत'** [२१.८] इति च । बहुशः बहुधा । प्रकारार्थे शस् । सार्वविभक्तिकश्च । बहुशः बहुभिर्बाणैः । अर्जुनसहायान् धृष्टद्युम्नादीन् बहून्, अर्जुनं च । युधिष्ठिरं च यमौ च विरथांश्चकार ॥ ३८ ॥ भारते पूर्वापरीकारेण विक्षिप्य कथितां युद्धकथां वृत्तक्रमेणाऽह– तं भीमसेनः । **'दुर्योधनस्तु द्विरदमारुह्याचलसन्निभम् । छत्रेण ध्रियमाणेन वीज्यमानश्च चामरैः । न गन्तव्यं न गन्तव्यमिति मद्रानवारयत्'** [१७.२] इति च । जेतव्यमेवेति च्छलेन समेधित आरोहः समारोहः । हताशत्वेऽपि पुनरङ्कुरितया जयाशया सहाभियानं समभियानम् ॥ ३९ ॥ समारुहद् वाजिवरम् । तेन वाजिवरेण चचार । **'असौ दुर्योधनः पार्थ वाजिमध्ये व्यवस्थितः । छत्रेण ध्रियमाणेन प्रेक्षमाणो मुहुर्मुहुः'** [२६.७] इति भगवद्वचनम् । प्रभूतेऽपि भयकारणे निर्भय इति सुनिर्भय

---

१. **'गजे तु'** इति क्वचित् । २. **'–यान्तं निरीक्ष्य'** इति क्वचित् ।

प्रासे निकृत्ते च[१] वृकोदरेण विवाहनः सोऽपययौ[२] सुयोधनः ।
आदाय गुर्वीं च गदां प्रयातो द्वैपायनस्योरु सरो विवेश ॥ ४२ ॥

एवमक्षोहिणी[३]षट्कं भीमेन निहतं रणे ।
पञ्च पार्त्थेन निहता अर्द्धं कालिङ्गकानृते ॥ ४३ ॥

एकादशाक्षोहिणी[३]भ्यः शिष्टमन्यैर्निसूदितम्[४] ।
अक्षोहिणी[३]चतुष्कं च पार्त्थानां द्रौणिना हतम् ॥ ४४ ॥

**प्रासे च निकृत्ते ॥ ४२ ॥ पञ्च, अक्षोहिण्य इति शेषः । ननु कौरवसेनायामर्धं पार्थेनार्धं भीमेन निहतमिति ग्रन्थान्तरोक्तम् । (तत्) कथं भीमेनाक्षोहिणीषट्कं निहतं पार्थेन पञ्चाक्षोहिण्यो निहता इत्युक्तिर्घटत इत्यत आह– अर्धमिति । एकाक्षोहिणीसङ्ख्याकान् भीमनिहतान् कालिङ्गकानृते अर्धं भीमनिहतमर्धमर्जुन-निहतमिति ग्रन्थान्तरोक्तेर्न विरोध इति भावः । अत्र तु कालिङ्गकैः सह भीमेनाक्षोहिणीषट्कं निहतमित्युक्तिः ॥ ४३–६ ॥**

---

इत्याह । यः शत्रोरुपरि प्रास्यते स प्रासः । 'ಪ್ಲ' इति भाषायाम् ॥ ४० ॥ धर्मसुतं प्रहर्तुं यान्तं दुर्योधनं समीप एवेक्षित्वा ॥ ४१ ॥ गुर्वीं गदाम् । **'वोतो गुणवचनात्'** [अ.सू.४.१.४४] इति स्मरणात् । उकारान्ताद् गुणवचनाद् स्त्रियां वा ङीष् । तेन गुरुः गुर्वी । पटुः पट्वी । मृदुः मृद्वी । लघुः लघ्वी । द्वैपायनस्योरु सरो विवेश । उरु विशालम् । **'–प्राविशत् तं महाह्रदम् । अस्तम्भयत तोयं च मायया मनुजाधिपः'** [२९.४४] इति च । **'रथानां द्वे सहस्रे तु सप्त नागशतानि च । पञ्च चाश्वसहस्राणि पत्तीनामयुतानि च । एतच्छेषमभूद् राजन् पाण्डवानां महद् बलम् । परिगृह्य हि यद् युद्धे धृष्टद्युम्नो व्यवस्थितः । एकाकी भरतश्रेष्ठ ततो दुर्योधनो नृपः । नापश्यत् समरे कञ्चित् सहायं रथिनां वरः । नर्दमानान् परान् दृष्ट्वा स्वबलस्य च सङ्क्षयम् । दृष्ट्वा भरतशार्दूलः कश्मलेनाभिसंवृतः । हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद् भयाद् । एकादशचमूभर्ता पुत्रो दुर्योधनस्तव । गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम्'** [२९.३–७] ॥४२॥ अक्षोहिणीषट्कम् १३१२२० रथा गजाश्च । ३९३६६० अश्वाः । ६५६१०० पादातम् । पञ्च पार्थेन । १०९३५० रथा गजाश्च । ३२८०५० अश्वाः । ५४६७५० पादातम् । कालिङ्गकानामेकामक्षोहिणीमृते अवशिष्टासु दशस्वक्षोहिणीषु पञ्च भीमेन निहताः, पञ्च पार्थेन । एतद्विवक्षया क्वचिदर्धं भीमेन निहतमर्धमर्जुनेनेत्युच्यते – किमित्येकामक्षोहिणीं विहाय परिगणना कृतेति कारणं वक्तव्यं भवति । शृणु कारणम् । दशाक्षोहिण्यो भीमार्जुनाभ्यां सङ्कीर्णतया निहताः । कालिङ्गकानां सेना तु केवलं भीमेन निहतेति पृथग् ग्रहणमिति ॥ ४३ ॥ शिष्टमतिरिक्तम् । एकादशाक्षोहिणीष्वन्तर्गतत्वेन न परिगणितम् । तद् यथा दश लक्षाणि कृष्णपुत्रा इत्यादि । भीमार्जुनाभ्यामन्यैर्धृष्ट-द्युम्नादिभिः । निसूदितमित्येव साधु रूपम् । **'यमिन्द्रशब्दार्थनिसूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते'** इति हि माघः ।

---

१. '–त्ते तु वृको–' २. 'सोऽपि ययौ' ३. '–क्षौहिणी–' ४. '–र्निषूदितम्'

**अन्यैरन्याः समस्तैश्च[1] द्रोणकर्ण्णमहाब्रताः[2] ।**
**दुर्य्योधनो भौमसूनुः[3] प्रायः सेनाहनः क्रमात् ॥ ४५ ॥**

**जयं लब्ध्वा नदत्सूच्चैः पाण्डवेषु महात्मसु ।**
**दुर्य्योधनो जलस्तम्भं कृत्वा मन्त्रान् जजाप ह[4] ॥ ४६ ॥**

**मन्त्रा दुर्वाससा दत्ता मृतसञ्जीवनप्रदाः ।**
**जले स्थित्वा जपन् सप्तदिनैः सर्वान्[5] मृतानपि ॥ ४७ ॥**

**उद्धरेद् धार्त्तराष्ट्रोऽयं स्युरवद्ध्याश्च ते पुनः ।**
**इति विद्याबलं तस्य ज्ञात्वा पाण्डुसुतास्ततः ॥ ४८ ॥**

**मन्त्राः केन दत्ताः किम्फलदा इत्यत आह—मन्त्रा इति । मृतसञ्जीवनप्रदाः वह्न्यादिस्तम्भादिदा इत्यपि गृह्यते । 'वीर्यदा विजयदाः'(१९.१७) इत्यादिनोक्तत्वात् । तान् मन्त्रानिति शेषः ॥ ४७–५१ ॥**

---

**'बलनिसूदनमर्थपतिं च यम्'** इति च काळिदासः । निषूदनमित्यर्वाचीनम् । **'उपसर्गात् सुनोति–'** [अ.सू.८.३.६५] इत्यादिष्वपरिगणनात् । पार्थानां सेनायां अक्षोहिणीचतुष्कं च । ८७४८० रथा गजाश्च । २६२४४० अश्वाः । ४३७४०० पादातम् ॥ ४४ ॥ अन्यास्तिस्रोऽक्षोहिण्यः, सप्ताक्षोपिणीभ्योऽन्या अल्पत्वेन विशिष्यापरिगणिताश्च सेनाः । अन्यैः समस्तैर्मिळितैर्द्रोणादिभिः । महाब्रतो भीष्मः । भौमसूनुर्भगदत्तः । प्राय इति बाहुल्यवचनम् । ये पुनरर्धाक्षोहिणीतोऽनूनां सेनां जघ्नुस्तेषामेवात्र नामग्रहणं कृतम् । ये तत ऊनसेनाहन्तारो दुःशासनादयस्तेषां नाम नात्र निर्दिष्टमिति । क्रमादिति । हननक्रमोऽपि निर्देशक्रममनुसृत्यैवेत्यर्थः । पूर्वःपूर्वोऽधिकमधिकं जघान । भगदत्तादधिकं दुर्योधनः । ततोऽधिकं महाब्रतः । ततोऽपि कर्णः । ततोऽपि द्रोण इति । सेनां हतवन्त इति सेनाहनः । नैतत् पाणिनीया मन्यन्ते । **'ब्रह्मभ्रूणवृत्रेषु क्विप्'** [अ.सू.३.२.८७] इति पाणिनिः । **'ब्रह्मादिष्वेव हन्तेः नान्यस्मिन्नुपपदे । ब्रह्मादिषु हन्तेरेव, नान्यस्मात्, ब्रह्मादिषु हन्तेर्भूतकाले क्विबेव, नान्यः प्रत्ययः । तथा भूतकाल एव नान्यस्मिन्'** इति च जयादित्यः । ब्रह्मादिषु क्विप् भवत्येव इत्ययोगव्यवच्छेद एवेति भगवत्पादाशयः । न भवति च क्वचित् । अत एव ब्रह्मघ्नः, वृत्रघ्न इत्याद्यपि प्रयुञ्जते प्रतनाः । अन्यत्रापि भवति–पितृहा, मातृहा, सेनाहनः, आत्महनः । **'मा क्रुध्यस्व प्रलम्बहन्'** [श.प.६१.२०] इति भारते । तदेवं वैयाकरणानां नियमाः सर्वत्रापि सापवादा एव । रूपभेदास्तु प्रयोगतोऽनुगन्तव्याः ॥ ४५ ॥ मन्त्रान् जजाप ह । **'अस्तम्भयत तोयं च मायया मनुजाधिपः'** [२९.४४] इति ह्रदप्रवशे । मायया मन्त्रमहिम्ना च । तमेव मन्त्रमहिमानं हेत्यास्वदते । विस्मयते च दुर्योधनस्य दौरात्म्यम् ॥ ४६–८ ॥

---

१. **'समस्ताश्च'** २. **'–महाब्रताः'** । **'–महाब्रतैः'** इति क्वचित् । ३. **'भौमसुतः'** इति क्वचित् ।
४. **'जजाप च ।'** ५. **'सर्वमृतानपि'** इति क्वचित् ।

**अन्वेषन्तः[1] शुश्रुवुश्च व्याधेभ्यस्तं जले स्थितम् ।**
**अगच्छंश्च[2] ततस्तत्र पुरस्कृत्य जनार्दनम् ॥ ४९ ॥**

**तदा जलात् समुन्मज्ज्य त्रिभिर्द्रौणिपुरस्सरैः ।**
**मन्त्रयन्तं स्म ददृशुस्तान् दृष्ट्वा ते प्रदुद्रुवुः ॥ ५० ॥**

**दुर्य्योधनोऽविशत् तोयं दृष्ट्वा तं केशवाज्ञया ।**
**युधिष्ठिरः सुपरुषैर्वाक्यैरेनमथाऽह्वयत् ॥ ५१ ॥**

**अमर्षितोऽसौ धृतराष्ट्रपुत्रः[3] श्वसंस्तदा दण्डहतो यथाऽहिः ।**
**उवाच शाठ्यात् तपसे वनाय यायां भवाञ्छासतु सर्वपृथ्वीम् ॥ ५२ ॥**

**तदाऽसौ धृतराष्ट्रपुत्रः दण्डहतोऽहिर्यथा तथा श्वसन् शाठ्यादुवाच ॥ ५२–५ ॥**

---

अन्वेषन्तः अन्वेषमाणाः । एषृ गतौ । लोकहितार्थं तदन्वेषणमिति परस्मैभाषा । व्याधेभ्यः, ये–‘**भीमसेनस्य लुब्धकाः । मांसभारानुपाजहुर्भक्त्या परमया–**’[३०.२५], ‘**ते तत्र धिष्ठितास्तेषां सर्वं तद्वचनं रहः । दुर्योधनवचश्चैव शुश्रुवुः सङ्गता मिथः**’ [२६], ‘**ते तु पाण्डवमासाद्य भीमसेनं महाबलम् । तस्मै तत् सर्वमाचख्युर्यद् वृत्तं यच्च वै श्रुतम् । ततो वृकोदरो राजन् दत्वा तेषां धनं बहु । धर्मराजाय तत् सर्वमाचचक्षे परन्तपः**’ [४४.५] इति च ॥ ४९ ॥ ‘**युधिष्ठरश्च राजेन्द्र तं ह्रदं सह सोदरैः । आजगाम महाराज तव पुत्रवधाय वै**’[श.प.३०.६०] इति, ‘**यौधिष्ठरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः । कृतवर्मा कृपो द्रैणी राजानमिदमब्रुवन् । इमे ह्यायान्ति संहृष्टाः पाण्डवा जितकाशिनः**’ [६२–३] इति, ‘**ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः । जग्मुर्दूरे महाराज कृपप्रभृतयो रथाः**’ [६५] इति च ॥ ५० ॥ ‘**जहि त्वं भरतश्रेष्ठ मायात्मानं सुयोधनम्**’ [३१.७] इति केशवाज्ञया । ‘**सर्वे त्वां शूर इत्येवं जना जल्पन्ति संसदि । व्यर्थं तद् भवतो मन्ये शौर्यं सलिलशायिनः**’[३१.२०] इत्यादिभिः सुपरुषैः । रूक्षैरथापि यथार्थैरित्यर्थः । अतिपरुषैः । दुर्बलेनापि दुःसहैः । किमुत वीरेण दुर्योधनेन ॥ ५१ ॥ उवाच शाठ्यात्– ‘**अहं वनं गमिष्यामि ह्यजिनैः प्रतिवासितः । रतिर्हि नास्ति मे राज्ये हतपक्षस्य भारत**’ [३१.४९] ‘**वनमेव गमिष्यामि वसानो मृगचर्मणी । नहि मे निर्जनस्यास्ति जीवितेऽद्य स्पृहा विभो । गच्छ त्वं भुङ्क्ष्व राजेन्द्र पृथिवीं निहतेश्वराम् । हतयोधां नष्टरत्नां शीर्णक्षत्रां यथासुखम्**’ [५१–२] इति च । शासतु शास्तु । शासतिरपि प्रकृत्यन्तरमित्युक्तम् । अथच शास्तु इति पर्याप्तम् । अथापि ‘**शासतु**’ इत्याह । तेनाक्षराधिक्येन दीर्घकालं शाधीति परिहसतीव ॥ ५२–६ ॥

---

१. ‘**अन्विष्यन्तः**’ २. ‘**आगच्छंश्च**’ ३. ‘**धृतराष्ट्रसूनुः**’ इति क्वचित् ।

तमाह धर्म्मजो राजा यस्त्वं कृष्णे समागते ।
सूच्यग्रवेद्ध्यां पृथिवीं[1] दातुं नैच्छः कथं पुनः[2] ॥ ५३ ॥

घातयित्वा सर्वपृथ्वीं भीष्मद्रोणमुखानपि ।
दातुमिच्छसि सर्वां च[3] पृथ्वीं नाद्य वयं पुनः ॥ ५४ ॥

अहत्वा प्रतिगृह्णीम एहि युद्धे स्थिरो भव ।
न कुरूणां कुले जातस्त्वं यो[4] भीतो ह्यपोऽविशः ॥ ५५ ॥

इत्यादि रूक्षवचनं श्रुत्वा दुर्य्योधनो रुषा[5] ।
जलस्तम्भात् समुत्तस्थौ श्वसन्नाशीविषो यथा ॥ ५६ ॥

उवाच चैक[6] एवाहमकिरीटो विवर्म्मकः ।
भवन्तो बहवो वर्म्मशिरस्त्राणयुता अपि ॥ ५७ ॥

यद्येवमपि मे युद्धं भवद्भिर्म्मन्यसे समम् ।
सर्वैरेकेन वा युद्धं करिष्ये नच भीर्म्मम ॥ ५८ ॥

इत्युक्त आह धर्म्मात्मा वर्म्माद्यं च ददामि ते ।
वृणीष्व प्रतिवीरं च[7] पञ्चानां यं त्वमिच्छसि ॥ ५९ ॥

**आशीविषो यथा तथा श्वसन् ॥ ५६–६१ ॥**

---

अकिरीटः । द्विविधं किरीटं भवति । एकं शिरोभूषणमपरं शिरोरक्षणम् । अत्र शिरस्त्राणं किरीटमुच्यते ॥ ५७ ॥ समं समुचितम् ॥ ५८ ॥ वर्माद्यं च ददामि ते । **'आमुञ्च कवचं वीर मूर्धजान् यमयस्व च । यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत'** [३२. ६०] इति च । **'इदमेकं च ते कामं वीर भूयो ददाम्यहम् । पञ्चानां पाण्डवेयानां**

---

१. **'–वेधितां पृथ्वीम्'** २. **'कथञ्चन ।'** ३. **'सर्वां त्वं पृथ्वीम्'**
४. **'जातो यस्त्वं भीतो–'** । **'जातस्त्वं हि भीतो–'** इति क्वचित् । ५. **'–नो नृपः ।'** इति क्वचित् ।
६. **'उवाच एक एवाह–'** इति क्वचित् । ७. **'प्रतियोद्धारं पञ्चानां त्वं यमिच्छसि'**

हत्वैकं[1] त्वं भुङ्क्ष्व राज्यमन्ये याम वयं वनम् ।
हते वा त्वयि तेनैव भुञ्जीमश्चाखिलां भुवम् ।
आदत्स्व[2] चाऽयुधं येन जेतुमिच्छसि शात्रवान् ॥ ६० ॥

इत्युक्त ऊचे नहि दुर्बलैरहं योत्स्ये चतुर्भिर्भवदर्ज्जुनादिभिः ।
भीमेन योत्स्ये गदया सदा हि मे प्रिया गदा नान्यदथाऽयुधं स्पृशे ॥ ६१ ॥

श्रुत्वाऽस्य वाक्यं रभसो[3] वृकोदरो गदां [4]तदाऽद्ध्यर्द्धभराधिकां मुदा ।
राज्ञो गदायाः परिगृह्य[5] वीरः समुत्थितो युद्धमनाः समुन्नदन् ॥ ६२ ॥

अथाऽह नारायण आदिदेवो युधिष्ठिरं कष्टमिदं कृतं त्वया[6] ।
नह्येष राजा गदया रणे चरन् शक्यो विजेतुं निखिलैः सुरासुरैः ॥ ६३ ॥

**तत् तदा । राज्ञः गदायाः अध्यर्धभाराधिकाम् ॥ ६२–३ ॥**

---

**येन त्वं योद्धुमिच्छसि । तं हत्वा वै भवान् राजा हतो वा स्वर्गमाप्नुहि'** [३२.६१–२] इति च ॥ ५९ ॥ भुङ्क्ष्व राज्यम् । प्रजावनादपि तव स्वभोगो मुख्य इत्यात्मनेभाषा । भुञ्जीम इति परस्मैभाषस्य लटः, आत्मनेभाषस्य विधिलिङश्च संहतं रूपम् । 'भुञ्ज्मः' इति लट् । 'भुञ्जीमहि' इति लिङ् । तेन सङ्गतोभयभाषोऽयं ललिङ् । निमन्त्रणे लिङ् । भगवन्नियुक्ता वयं भगवत्पूजेति भोगान् भुञ्जानाः, । भुवं भुञ्ज्मः पालयाम इति परमार्थः । ईकारप्रक्षेपेण, ईश्वरेच्छया दीर्घकालं भुञ्ज्म इति वा । **'आधिक्येऽधिकम्'** ॥ ६० ॥ भवांश्च अर्जुनश्च आदी येषां चतुर्णां ते । भवता अर्जुनादिभिश्च वा । आदिपदग्राह्यतावच्छेदकमाह– चतुर्भिरिति । तेनात्राऽदिमन्तौ यमाविति स्फुटम् । तद्गुणसंविज्ञानोऽयमिति बहुवचनोपपत्तिरादिभिरिति । न स्पृशे, न स्वेच्छया स्पृशामि, ऋते भवदुपरोधात् ॥ ६१ ॥ राज्ञो दुर्योधनस्य गदया अध्यर्धभराधिकाम् । अर्धेनाधिकमेकमध्यर्धम् । तावता भारेणाधिकाम् । **'अप्यर्धेन गुणेनेयं गदा गुरतरा मम । न तथा धार्तराष्ट्रस्य मा कार्षीर्माधव व्यथाम्'** [३३.१९] इति च । परिग्रहः स्वीकरणम् । सन्तुष्टतया उच्चैर्नदन् ॥ ६२ ॥ कष्टं कृच्छ्रम् । **'कृच्छ्रगहनयोः कषः'** [अ.सू.७.२.२२] इति कषेर्धातोः कृच्छ्रेऽर्थे निष्ठायामिडागमाभावः । **'कृच्छ्रं दुःखम् । तत्कारणमपि कृच्छ्रमित्युच्यते'** इति वामनः । निखिलैः सुरासुरैः । **'नहि पश्यामि तं लोके योऽद्य दुर्योधनं रणे । गदाहस्तं विजेतुं वै शक्तः स्यादमरोऽपि हि'** [३३.११] इति च ॥ ६३ ॥

---

१. 'हत्वैकं भुङ्क्ष्व राज्यं त्वमन्ये याम वनं वयम् ।'
२. 'आधत्स्व'
३. 'रभसा वृको–'
४. 'तदध्यर्ध–' इति वे.ती.सम्मतः पाठ इति भाति ।
५. '–याः प्रतिगृह्य'
६. '–मिदं त्वया कृतम् ।'

स निश्चयाद् वश्चतुरो निहन्यात् सहार्ज्जुनान् भीमसेनः कथञ्चित् ।
हन्तैनमाजौ नहि भीमतुल्यो बले क्वचिद् धार्त्तराष्ट्रः कृती च ॥ ६४ ॥

ऊरू भीमेन भेत्तव्यौ प्रतिज्ञां रक्षता रिपोः ।
नाभेरधस्ताद्धननं जना आहुर्गदामृधे ॥ ६५ ॥

अधर्म्म इति तत् कृष्णो लोकनिन्दानिवृत्तये ।
आपद्धर्मं दर्शयितुं किञ्चिद् व्याजेन संयुतः ॥ ६६ ॥

भीमो हन्याद् धार्त्तराष्ट्रमित्यूचे यद्यपि स्फुटम् ।
अव्याजेनापि शक्तोऽसौ बलं निस्सीममाह च ॥ ६७ ॥

आह शिक्षामप्यनूनां यत्नं दुर्य्योधनेऽधिकम् ।
नहि भीमोऽतिप्रयत्नं कुर्य्यादिति गुणो ह्ययम् ॥ ६८ ॥

प्रतिज्ञापालनं धर्म्मो दुष्टेषु तु[१] विशेषतः ।
इति धर्म्मरहस्यं तु वित्तः कृष्णवृकोदरौ ॥ ६९ ॥

**धार्तराष्ट्रश्च कृती गदाशिक्षाबलवान् ॥ ६४ ॥ असौ भीमः अव्याजेनापि हन्तुं शक्तः यद्यपि तथा(ऽपि) कृष्णः (तत्) तस्मात् लोकनिन्दानिवृत्तये आपद्धर्मं दर्शयितुम्, भीमस्येति शेषः । अव्याजेनाप्यस्य हननशक्तिं सूचयितुमिति भावः । भीमस्य शिक्षां गदाशिक्षामपि अनूनामाह । दुर्योधनेऽधिकं यत्नमाह । भीमादिति शेषः । अतिप्रयत्नम्, कृतं दुर्योध(ने)न गदाशिक्षायामिति शेषः । कार्योपयोगिप्रयत्नादधिकं प्रयत्नं**

स निश्चयाद् वश्चतुरो निहन्यात् । **'फल्गुनो वा भवान् वाऽथ माद्रीपुत्रावथापि वा । न समर्थानहं मन्ये गदाहस्तस्य संयुगे'** [३३.१२] इति च । **'बली भीमः समर्थश्च कृती राजा सुयोधनः । बलवान् वा कृती वेति कृती राजन् विशिष्यते'** [३३.८] इति च । कृती कृताभ्यासः । **'कृती च'** इत्यन्तं नारायण आह ॥ ६४ ॥ **'न त्वं भीमो न नकुलः सहदेवोऽथ फल्गुनः । जेतुं न्यायेन शक्तो वै कृती राजा सुयोधनः'** [३३.१३] इति कृष्णवचनस्याऽशयमाह– ऊरू भीमेन । गदायुद्धे नाभेरधस्ताद्धननं जना अधर्म इत्याहुः । आह च बलं निस्सीमम् । **'त्वया विनिहताः सर्वे धृतराष्ट्रसुता रणे । राजानो राजपुत्राश्च नागाश्च विनिपातिताः'** [३३.२४] **'हत्वा दुर्योधनं चापि प्रयच्छोर्वीं ससागराम् । धर्मराजाय कौन्तेय यथा विष्णुः शचीपतेः'** [३३.२६] इति च ॥ ६५–७ ॥ आह च शिक्षामप्यनूनां भीमस्य–

१. 'दुष्टेषु च वि–'

नान्यस्ततो लोकनिन्दां व्यपनेतुमुभावपि ।
अनापद्यापदिव च दर्शयेतां जनस्य तु ॥ ७० ॥

ततो भीमः सर्वलोकस्य धर्म्मं प्रकाशयन् वाक्यमिदं जगाद ।
ऊरू तवाहं हि यथाप्रतिज्ञं[1] भेत्स्यामि नैवात्र विचारणीयम् ॥ ७१ ॥

इत्युक्तवन्तं[2] प्रससार चाऽजौ दुर्य्योधनस्तत्र बभूव युद्धम् ।
भीमस्तदाऽग्र्यप्रकृतिं विधित्सुर्म्मन्दः स आजौ[3] व्यचरज्जनार्त्थे ॥ ७२ ॥

दर्शयन्तौ [4]गदामार्ग्गं चित्रं तौ प्रविचेरतुः ।
बलभद्रोऽप्याजगाम तदा तौ प्रतिवारितुम् ॥ ७३ ॥

वारितावपि तेनोभौ नैव युद्धं [5]प्रमुञ्चताम् ।
ततो ददर्श तद् युद्धं मानितः कृष्णपूर्वकैः ॥ ७४ ॥

**न कुर्यादिति तु अयं गुणो हि । स्वरूपसामर्थ्यवत इति भावः ॥ ६५–७० ॥ ततः गदामादायोत्थानानन्तरम् ॥ ७१ ॥ तदा स भीमः जनार्थे दिदृक्षुजनार्थे अग्र्यप्रकृतिं प्रकृष्टशिक्षां विधित्सुः प्रदर्शयितुमिच्छन्निति भावः । मन्दः अव्यग्रः आजौ व्यचरत् ॥ ७२ ॥ तदा बलभद्रोऽपि तौ निवारयितुं आजगाम, तीर्थयात्रां कृत्वेति शेषः ॥ ७३–६ ॥**

---

**'उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः'**[५९.३] इति च । दुर्योधने केवलं यत्नमधिकमाह ॥ ६८–९ ॥ आपदिव आपदमिव दर्शयेताम् । सप्तसु प्रथमा । इयमापत् प्राप्तेतीतीव दर्शयेतामिति वा । अथच **'आपदि'** इति भिन्नं पदम् । वकार इवार्थे । अनापद्यपि आपदि व आपदीव धर्मं दर्शयेताम् ॥७०–१॥ प्रसह्य ससार । मन्दः असम्भ्रमोऽत्वरः । अग्र्याणामग्र्या च प्रकृतिरियं यदसम्भ्रमोऽत्वरा च ॥ ७२ ॥ गदायुद्धे परव्यामोहनाय स्वरक्षायै च क्रियमाणो गतिविशेषो गदामार्गः । स मुख्यतस्त्रिधा वक्ष्यते– मण्डलमभिसारोऽपसारश्चेति । गोमूत्रिकं समपादं विषमपादमुत्प्लुतमित्यादयोऽवान्तर-प्रभेदाः । **'चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै । पुष्येण सम्प्रयातोऽस्ति श्रवणे पुनरागतः । शिष्ययोर्वै गदायुद्धं द्रष्टुकामोऽस्मि माधव'** [३४.६] इति वदतोऽपि बलरामस्य हृदये **'युद्धं मा भूत्'** इत्येवाऽसीदित्याह– प्रतिवारितुम् । उभावपि प्रत्येकं निरुध्य वारयितुम् । अक्षरलोपेनायुक्तमशक्यं च वारणमित्याह ॥ ७३ ॥ प्रमुञ्चताम् ।

---

१. **'यथा प्रतिज्ञा'** इति क्वचित् । २. **'इति ब्रुवन्तम्'** ३. **'आदौ व्यच–'**
४. **'गदायुद्धं चित्रं परिविचेरतुः'** इति क्वचित् । ५. **'युद्धं व्यमुञ्च–'** । **'युद्धममुञ्च–'** इति क्वचित् ।

तौ शिक्षाबलसंयुक्तौ मण्डलानि विचेरतुः ।
ततो[1] भीमं वञ्चयितुं धार्त्तराष्ट्रः शिरः क्षितौ ॥ ७५ ॥

न्यधादुच्छ्रितसक्थीकस्तदा कृष्णाभ्यनुज्ञया ।
पृष्ठमूलेऽहनद् भीमो भिन्नसक्थिश्च सोऽपतत् ॥ ७६ ॥

प्रतिज्ञापालनार्त्थाय नाभेर्न्नोपर्य्यधस्तदा ।
गदायुद्धस्य मर्य्यादां यशश्चाप्यभिरक्षितुम् ॥ ७७ ॥

नाधस्तान्मद्ध्य एवासौ निजघ्ने तं वृकोदरः ।
एवं प्रतिज्ञायुग्मार्त्थं भग्नं[2] सक्थियुगं रणे ॥ ७८ ॥

**तदा वृकोदरः तं नाभेः अधस्तात् न निजघ्ने नाताडयत् । नाभेरुपर्यपि न निजघ्ने इति वाक्यशेषः । तर्हि कुत्राताडयदित्यत आह– मध्य एव नाभेर्मध्य एवेति । नाभेरुपर्यधो वा कुतो न निजघ्ने मध्य एव कुतो निजघ्न इत्यतस्तदभिप्रायमाह– प्रतिज्ञेति । प्रतिज्ञापालनार्थाय ऊरू भेस्त्य इति प्रतिज्ञां साधयितुं नाभेरुपरि न निजघ्ने । नाभेरुपरि हनने ऊरुभङ्गासम्भवादिति भावः । गदायुद्धस्य मर्यादां यशश्चाभिरक्षितुं नाभेरधस्तान्न निजघ्ने ॥ ७७–७८ ॥**

---

छान्दस अडभावः । प्रामुश्चताम् । सम्प्रत्येव प्रतिज्ञापूरणाय प्रारब्धं किलेति प्रेत्याह । उभावपि जयप्रत्ययेन प्रज्ञापूर्वं नामुञ्चताम् । एतेन प्रत्यक्षरमनेकाकूतगर्भितोऽयं ग्रन्थ इत्याह । अन्यथा किमर्थोऽयमडभावमाश्रित्य प्रेत्युपसर्गयोगप्रयासः? अपरथा सहजतया 'युद्धममुञ्चताम्' इत्येवावक्ष्यत् ॥ ७४ ॥ **'तमापतन्तं सम्प्रेक्ष्य संरब्धममितौजसम् । मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ । अवस्थाने मतिं कृत्वा पुत्रस्तव महामनाः । इयेषोत्पतितुं राजन् छलयिष्यन् वृकोदरम् । अक्रुध्यद् भीमसेनस्तु राज्ञस्तस्य चिकीर्षितम् । अथास्य समभिद्रुत्य समुत्पत्य च सिंहवत् । गत्या वञ्चयतो राजन् पुनरेवोत्पतयिष्यतः । ऊरुभ्यां प्राहिणोद् राजन् गदां वेगेन पाण्डवः'** [५९.४२–५] इति श्लोकसमुदायस्य तात्पर्यमाह– ततो भीमम् । यस्मिन् स्त्रीपुंसौ सजतः तत् सक्थि । ऊर्वोरुपरितनो यः पृष्ठभागः । ऊरुरेव वा । षन्ज सङ्गे । **'असिसञ्जिभ्यां क्थिन्'**[१.१०] इति दशपादिका । उच्छ्रिते सक्थिनी यस्यासावुच्छ्रितसक्थीकः । दीर्घेण दयते । कना कुत्सयते । प्रतिज्ञापालनार्थाय नाभेरुपरि अधो वा नाहनत्, किन्तु पृष्ठमूले नाभिपृष्ठेऽहनत् । ननु प्रतिज्ञापालनार्थाय नोपर्यहनदिति युक्तम् । नह्युपरि हननेन भज्येते ऊरू । किमित्यधो नाहन्? अधोहननेनापि भज्येयातामूरू । सत्यं भज्येया-ताम् । तथाऽप्यनधिगतगदायुद्धतन्त्रो जल्पसि । अधोहनने एकेन गदापातेनैक ऊरुर्भज्यते । प्रतिज्ञा चोरुद्वयभङ्गे । तस्मादेका क्रिया द्व्यर्थकरी भूयादिति लाघवाय नाधो जघान । अथच कारणान्तरमप्यस्तीत्याह– अधो हननस्य निषिद्धत्वात् तद्वारणेन

---

१. **'तत्र भीमम्'** २. **'भग्नसक्थियुगम्'** । **'भिन्नसक्थि–'** इति क्वचित् । वे.ती. पाठोऽपि तथा ।

कृष्णं द्यूते निधेहीति यदवादीत् सुयोधनः ।
तत्प्रतिज्ञानुसारेण भीमो मूर्द्धानमक्रमीत् ।
'ऋषभं मा समानानाम्' इति सूक्तं ददर्श च[१] ॥ ७९ ॥

तेषां पुण्यानि विद्याश्च समादायैव सर्वशः ।
तांश्चकार तमोगन्तॄंस्तस्य मूर्ध्नि पदाऽऽक्रमन्[२] ॥ ८० ॥

स्मारयामास कर्म्माणि यानि तस्य कृतानि च ।
कृष्णबन्धे कृतो मन्त्र[३] इति मूर्ध्नि पदाऽहनत् ॥ ८१ ॥

**यद् यदा सुयोधनः कृष्णं द्यूते निधेहीत्यवादीत् तत्प्रतिज्ञानुसारेण तस्मिन्काले कृतप्रतिज्ञायाः 'भूतळे निपात्य शिरो मृदिष्ये'(२१.३५२) इति प्रतिज्ञाया अनुसारेण, भीमः प्रतिज्ञायुग्मार्थं एवं उक्तरीत्या भिन्नसक्थि-युगं दुर्योधनं मूर्धानमक्रमीत् । पदाऽताडयदिति भावः । तमसि पततां तामसानां सुकृतं (असुहृत्)जनो गृह्णाति, दुष्कृतं (न) गृह्णाति । संसारान्मुच्यमानानां सतां सुकृतं सुहृत्सज्जनः संसारी प्राप्नोति । दुष्कृतं द्विषन् पापीयान् प्राप्नोति । (अ)यम(स्य) द्विडसुहृत् तेषां सुयोधनादीनां पुण्यानि विद्याश्च समादाय तान् तमोगन्तॄन् चकार । विद्याः, फलसहिता इति शेषः ॥ ७९–८० ॥ तानि तस्य स्मारयामास ।(पुनः)पुनः अहनत् इति सम्बन्धः ॥ ८१–५ ॥**

---

गदायुद्धस्य मर्यादां धारणां न्याय्यादनपेततामात्मनो यशश्च सर्वात्मना रक्षितुं नाधस्तान्निजघ्ने, किन्तु मध्य एव निजघ्ने । प्रतिज्ञायुग्मार्थम् । द्यूतसभायां कृता प्रतिज्ञैका यदा दुर्योधनो द्रौपद्याः सव्यमूरुमदर्शयत् । वनगमनवेलायां चापरा यदा दुर्योधनो भीमगतिमनुकुर्वन् परिजहास ॥ ७५–८ ॥ **'शिरश्च राजसिंहस्य पादेन समलोडयत्'** [६०.५] इति भारते । तत्रानुक्तं पूरयन् समग्रां कथामाह– कृष्णं द्यूते निधेहीति यस्मात् सुयोधनोऽवादीत् तस्मिन् प्रसङ्गे या प्रतिज्ञा शिरो मृद्नामीति तदनुसारेण भीमो मूर्धानमक्रमीत् । तदा **'ऋषभं मा समानानाम्'** इति सूक्तं च ददर्श । **'आ वो मूर्धानमक्रमीम्'** [ऋ.सं.१०.१६६.५] इति मन्त्रानुपूर्वीं स्मारयन्नाह– भीमो मूर्धानमक्रमीत् । अक्रमीमित्यक्रमिष-मित्यर्थः । सपत्नघ्नं नाम सूक्तमेतत् पञ्चर्चं नरसिंहदेवत्यमृषभस्याऽर्षम् । आद्याश्चतस्रोऽनुष्टुभः । अन्त्या महापङ्क्तिः । ऋषभ इति कश्चनर्षिरिति वैदिकाः । अस्तु नाम । प्रकृते तु नरर्षभो भीम ऋषिः । मन्त्रार्थस्तु मत्कृते सूक्तभाष्ये द्रष्टव्यः ॥ ७९ ॥ मन्त्रे **'आ वः'** इति बहुवचनप्रयोगस्य तात्पर्यमाह– तेषामिति । दुर्योधनमूर्धानमाक्रम्य तद्व्याजेन वः सर्वेषां पुण्यहरणेनाधःपातनेन च मूर्धानमक्रमीमेवेति भीम आहेत्यर्थः । तेषां दुर्योधनस्य तदनुजानां तदनुगानां च । **'योगक्षेमं व आदाय–'** [१०. १६६.५] इति च ॥ ८० ॥ तस्य कृतानि । तृतीयार्थे षष्ठी । तेन कृतानि । तृतीयया केवलमुपकरणत्वं

---

१. 'ददर्श ह ।' । 'ददर्श हि ।' इति क्वचित् । २. 'पदाऽऽक्रमत् ।' ३. '–तो यत्न इति' इति क्वचित् ।

**पुनःपुनश्च तद् वीक्ष्य चुक्रोध मुसलायुधः ।**
**चुक्रोश नैव धर्म्मोऽयमित्यसावूर्ध्वबाहुकः ॥ ८२ ॥**

**पुनः [1]क्रोधाभिताम्राक्ष आदाय मुसलं हलम् ।**
**अभिदुद्राव भीमं तं न चचाल वृकोदरः ॥ ८३ ॥**

**अभये संस्थिते भीमे रामं जग्राह केशवः ।**
**आह धर्म्मेण निहतो भीमेनायं सुयोधनः ॥ ८४ ॥**

**न मण्डलेऽभिसारे वा नापसारे च नाभितः ।**
**अधो हन्याद् वञ्चयन्तमधो हत्वा न दुष्यति ॥ ८५ ॥**

**कृता प्रतिज्ञा च वृकोदरेण भेत्स्ये तवोरू इति युक्तिपूर्वम्[2] ।**
**संश्रावयानेन तदेष धर्म्मतो जघान दुर्य्योधनमग्र्यकर्म्मा ॥ ८६ ॥**

**संश्रावयानेन दुर्योधनं संश्रावया(नेन) । दुर्योधनसमक्षमेवेति भावः ॥ ८६–९ ॥**

---

बोध्यते, न पापलेपः । यथा **'बाणेन हतः शत्रुः'** इति । अतः षष्ठ्या पापलेपं स्फुटमाह तत्सम्बद्धतया कृतानीति ॥ ८१–२ ॥ **'ततो लाङ्गलमुद्यम्य भीममभ्यद्रवद् बली'** [६१.९] इति, **'न विव्यथे महाराज दृष्ट्वा हलधरं बली'** [११] इति च ॥ ८३ ॥ निश्चलतया स्थितः संस्थितः । सम्मुखे स्थितः संस्थितः । रामं जग्राह बाहुभ्याम् । गृहीत्वा निजग्राह । **'अथ रामं निजग्राह केशवो विनयान्वितः । बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद् बलवद् बली'** [१२] इति च ॥८४॥ मण्डलाकारेण सरणे, अभिमुखं सरणे, अपद्रुत्य सरणे च वा । न नाभितः अधो हन्यात् । **'बिभेद गदया चोरू न स्थाने न च मण्डले'** [६१.३३] इति च ॥ ८५ ॥ युक्तिपूर्वं संश्रावयानेन सर्वसमक्षं स्वप्रतिज्ञां श्रावयमाणेन । मकारलोपश्छान्दसः । अणत्वं च । अर्थान्तरं चात्र भवति । कृष्ण आह– हे बलभद्र संश्रावय संशृणुष्व, श्रुत्वा च वस्तुतत्वमवधारय । स्वार्थे णिच् । ण्यन्तप्रिया हि विदन्तो भवन्ति । तद्यथा रामो राज्यमकरोदिति वक्तव्ये **'रामो राज्यमकारयत्'** इत्याचक्षते । भाषायामपि 'ಹೇಳು' इति वक्तव्ये 'ಹೇಳಿಸಿದ' इत्याचक्षते । अनेन प्राणावतारेण अनेन वृकोदरेण प्रतिज्ञा च कृतेति पूर्वान्वयः । हे अनेन, संश्रावय इति सम्बोधनं वा । अनः मुख्यप्राणः इनः स्वामी यस्येति मूलरूपापेक्षया । अथचावतारापेक्षया अनस्य प्राणावतारस्य भीमस्य इनः प्रभुः विद्यागुरुत्वात् । **'दुष्टदारो नचाऽप्नोति लोकानर्धो हि दूषितः'**[२१.३७०] इत्याद्या युक्तिः ॥ ८६ ॥

---

१. 'क्रोधातिता–' २. 'युक्तिपूर्वकम् ।'

वासुदेववचः श्रुत्वा धर्म्मच्छलमिति ब्रुवन् ।
रौहिणेयो जगामाऽशु स्वपुरीमेव सानुगः[1] ॥ ८७ ॥

तस्मिन् गते वासुदेवं समपृच्छद् युधिष्ठिरः ।
धर्म्मोऽयमथवाऽधर्म्म इति तं प्राह केशवः ॥ ८८ ॥

न साक्षाद् धर्म्मतो वद्ध्या ये तु[2] पापतमा नराः ।
देवैर्हि वञ्चयित्वैव हताः पूर्वं सुरारयः ॥ ८९ ॥

अतोऽयमप्यधर्म्मेण हतो नात्रास्ति दूषणम् ।
भीष्मद्रोणौ च कर्ण्णश्च यदैवोपधिना[3] हताः ॥ ९० ॥

को नु दुर्य्योधने पापे हते दोषः कथञ्चन ।
प्रतिज्ञापालनायापि बिभेदोरू वृकोदरः ॥ ९१ ॥

**उपाधिना व्याजेन ॥ ९०–१ ॥**

धर्मच्छलं धर्मस्खलनम् । धर्माच्चलनम् । कपटधर्मो वा । धर्मडाम्भिकता । **'छलं छद्मस्खलितयोः'** इत्यभिदधति । स्वपुरीमेव द्वारकाम् । सानुगः । अनुगा ये तीर्थयात्रायां तमनुगतास्तैः सहितः । **'ऋत्विग्भिश्च सुहृद्भिश्च तथाऽन्यैर्द्विजसत्तमैः । रथैर्गजैस्तथाऽश्वैश्च प्रेष्यैश्च भरतर्षभ । गोखरोष्ट्रप्रयुक्तैश्च यानैश्च बहुभिर्वृतः'** [श.प.३५.२३] इति हि ह्रदप्रवेशे बलरामतीर्थयात्राप्रसङ्गे ॥ ८७–८ ॥ **'मायया निर्जिता देवैरसुरा इति नः श्रुतम्'** [५९.५] इत्यर्जुनं प्रति कृष्णवचनम् । **'मायाविनं तु राजानं माययैव निकृन्ततु'** [८] इति च । **'निकृत्या निकृतिप्रज्ञं यो हन्याद् वैरिणं रणे । अधर्मो विद्यते नात्र यद् भीमो हतवान् रिपुम्'** [६१.२८] इत्यादि च बलभद्रं प्रति । **'नैतन्मनसि कर्तव्यं यदयं निहतो नृपः । मिथ्याचर्याच्छलोपायैर्बहवः शत्रवो हताः । पूर्वैरनुगतो मार्गो देवैरसुरघातिभिः । सद्भिश्चानुगतः पन्थाः सर्वैरनुगमिष्यते'** [६२.७५–६] इति च पाण्डवान् प्रति । अथापि विशिष्य धर्मराजं प्रत्येवैतानि वचनान्याहेत्यर्थः ॥ ८९ ॥ उपधिना व्याजेन । असहजेन विधानेन ॥ ९०–१ ॥

१. **'–जगामाऽशु पुरीमेव सहानुगः'** इति क्वचित् । २. **'ये च पाप–'**

३. **'यदैवोपाधिना'** । उपलब्धादर्शे वे.ती. पाठोऽपि तथा दृश्यते । वस्तुतस्तु **'उपधिना'** इत्येव तत्सम्मतः पाठ इति युक्तम् । **'व्याजेन'** इति व्याख्यानात् ।

धर्म्मतश्च प्रतिज्ञेयं कृता[1] तेनानुरूपतः ।
लोकतोऽपि न धर्म्मस्य हानिरत्र कथञ्चन ॥ ९२ ॥

ये भीमस्याप्रभावज्ञा आपद्धर्मं च मन्वते ।
अवद्ध्यत्वे शिववराद् गदाशिक्षाबलादपि ॥ ९३ ॥

जरासन्धोपमो यस्माद् धार्त्तराष्ट्रः सुविश्रुतः ।
तस्मात् सद्धर्म्म एवायं[2] भीमचीर्ण्ण इति ब्रुवन् ॥ ९४ ॥

अपि संशयिनं चक्रे धर्म्मराजं जगत्पतिः ।
भूभारक्षतिजो धर्म्मो मच्छुश्रूषात्मकस्तु[3] यः ॥ ९५ ॥

भीमस्यैव भवेत् सम्यगिति बुद्ध्या परः प्रभुः ।
स्वेनैव बलभद्राय जनाय च पुनःपुनः ॥ ९६ ॥

श्रुत्वाऽप्युक्तं न तत्याज संशयं धर्म्मजो यतः ।
ततोऽप्यसंशयं कृष्णो न चकार युधिष्ठिरम् ॥ ९७ ॥

**गदयोरुभेदनप्रतिज्ञाया अधर्मत्वात् 'तवोरुमेनं गदयोरुवेगया विभेत्स्ये' (२१.३५१) इति प्रतिज्ञा पूर्वं भीमेन कथं कृतेत्यत आह–धर्मत इति । इयं प्रतिज्ञा गदयोरुभेदप्रतिज्ञा धर्मतश्च धर्मत एव तेन कृता । कुतः? अनुरूपतः । कृष्णाया ऊरुसन्दर्शनसमये ऊरुभेदनप्रतिज्ञाया एवानुरूपत्वादिति भावः ॥९२–१०३॥**

---

अनुरूपतः । प्रसङ्गानुरूपा प्रतिज्ञा धर्मानुरूपा च भवति ॥९२–३॥ विततं श्रुतो विश्रुत उच्यते । विख्यात इत्यर्थः । न केवलं तत्पक्षगेषु । विपक्षेष्वपि विख्यातः सुविश्रुतः । सतां विदुषामभिमतो धर्मः सद्धर्मः, अविदुषामधर्म इत्यापाततः प्रतीयमानोऽपि । न धर्मकैतवम् ॥ ९४–५ ॥ भीमस्यैव भवेत् । भूभारक्षपणे प्रधानाङ्गं हि मारुतिः । बलभद्रसान्त्वनाय बलभद्रं ग्राहयितुमित्येतत् । **'अतो दोषं न पश्यामि मा क्रुध्यस्व प्रलम्बहन्'** [६१.२०] इति बलभद्रसान्त्वनाय । **'निकृत्या निकृतिप्रज्ञं यो हन्याद् वैरिणं रणे । अधर्मो विद्यते नात्र यद् भीमो हतवान् रिपुम्'** [२८] **'नैतन्मनसि कर्तव्यं यदयं निहतो नृपः ।** [६२.७५–६] इत्यादि तत्रत्यजनाय चाऽह । एवं पुनःपुनः स्वेनोक्तं श्रुत्वाऽपि न धर्मजः संशयं तत्याज, प्रायोऽधर्ममेव कृष्णो धर्मं ब्रूते मयि स्नेहभरेणेति । तेन भगवत्यप्यविश्वासाद् भगवच्छुश्रूषणात्मको धर्मोऽपि तस्मिन् किञ्चिदिवाहीयत ॥ ९६–७ ॥

---

१. **'कृताऽनेनानु–'** २. **'स धर्म एवायम्'** ३. **'–त्मकश्च यः'**

मुख्यं धर्म्मं[1] हि भगवान् बलायाऽह जनाय च ।
धर्म्मेणैव हतो राजा धार्त्तराष्ट्रः सुयोधनः ।
इति यद् वक्ष्यति पुनर्न्निश्चयार्त्थेऽर्ज्जुनाय च ॥ ९८ ॥

पुनःपुनर्द्धर्म्मत एष भीमो जघान राजानमिति ब्रुवन्तम्[2] ।
जगाद कृष्णं स्फुरिताधरोष्ठः क्रोधात् सुपापो धृतराष्ट्रसूनुः ॥ ९९ ॥

त्वयैव पापे निहिता हि पार्त्थाः पापाधिकस्त्वं हि सदैक एव ।
इत्यूचिवांसं प्रजगाद कृष्णो न त्वत्समः पापतमः कदाचित् ॥ १०० ॥

भीष्मादिहत्याऽपि[3] तवैव पापं यदन्वयुस्त्वामतिपापनिश्चयम्[4] ।
पापं च पापानुगतं च हत्वा कथञ्चनाप्यस्ति नचैव पापम् ॥ १०१ ॥

न पाण्डवेष्वस्ति ततो हि किञ्चित् पापं प्रयत्नाच्च निसर्ग्गतोऽपि ।
गुणाधिकास्ते मदपाश्रयाच्च[5] को नाम तेष्वण्वपि पापमाह ॥ १०२ ॥

---

धर्मेणैव धार्तराष्ट्रो हत इति मुख्यं धर्मम् । अर्जुनाय च । **'दैवं पुरुषकारेण न शक्यमनुवर्तितुम् । भूतं भव्यं भविष्यच्च निमेषाद् यो हनिष्यति । कृतान्तमन्यथा कर्तुं नेच्छेत् सोऽयं धनञ्जय'** [६२.७७–८] इति ॥ ९८ ॥ पुनःपुनः–**'अनक्षज्ञं च धर्मज्ञं सौबलेनाक्षवेदिना । निकृत्या यत् पराजैषीस्तस्मादसि हतो रणे'** [६२.४४], **'अभिमन्युश्च यद् बाल एको बहुभिराहवे । त्वद्दोषैर्निहतः पाप तस्मादसि हतो रणे'** [४६], **'अधर्मो नात्र गान्धारे पाण्डवैर्यत् कृतं त्वयि'** [५४], **'स्वबाहुबलमास्थाय स्वधर्मेण परन्तपाः । जितवन्तो रणे वीराः पापोऽसि निधनं गतः'** [५५] इत्यादि ॥ ९९ ॥ त्वयैव । **'त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः । स्वधर्ममनुतिष्ठन्तो वयं चान्ये च घातिताः'** [३७] इति च । स्ववचने स्वात्मानमेव विश्वासयितुम्–**'निहिता हि पार्थाः पापाधिकस्त्वं हि'** इति द्विर्हिश्चकार, सर्व-लोकप्रसिद्धमेतत्, सर्वशास्त्रप्रसिद्धमेतदित्याम्रेडयन् ॥ १०० ॥ भीष्मादीनां हत्या हननमपि तवैव पापहेतुः । अथवा भीष्मादीनां हत्या हननेनापि तवैव पापम् । नचैव पापम् । पापं नास्त्येव, न केवलम्, पुण्यं चास्ति ॥ १०१ ॥ निसर्गतः स्वभावतोऽपि पापं पाण्डवेषु । यतस्ते निसर्गत एव गुणाधिकाः, उद्रिक्तसत्वाः । नापि युद्धादिषु प्रयतनाच्च पापम् ।

---

१. **'मुख्यधर्मम्'** २. **'ब्रुवाणम्'** इति क्वचित् । ३. **'–हत्या च'** इति क्वचित् ।
४. **'–स्त्वामपि पाप–'** ५. **'मदुपाश्रयाश्च'** । **'मदपाश्रयाश्च'** इति क्वचित् ।

निसर्ग्गतः पापतमस्त्वमन्यान् धर्म्मस्थितान् पापपथे निधाय ।
स्वयं च पापे निरतः सदैव पापात् सुपापां गतिमेव यासि ॥ १०३ ॥

इति ब्रुवन्तं पुनराह कृष्णं दुर्य्योधनः पापकृतां प्रधानः ।
स्वन्तोत्तमो नाम क एव मत्तः को नाम दोषोऽस्ति मया कृतोऽत्र ॥ १०४ ॥

इष्टं च यज्ञैश्चरितं च पूर्त्तैः पदं रिपूणां निहितं हि[1] मूर्ध्नि[2] ।
मृत्युश्च सङ्ग्रामशिरस्यवाप्तो रणोन्मुखेनैव[3] मया किमन्यत् ॥ १०५ ॥

इष्टा भोगा मया भुक्ताः प्राप्ता च परमा गतिः ।
दुःखिनो दुःखमाप्स्यन्ति पार्त्थास्ते कूटयोधिनः ॥ १०६ ॥

चन्द्रसूर्य्यनिभैः[4] [5]शूरैर्द्धार्म्मिकैः सद्भिरुज्झिता ।
केवला रत्नहीनेयं पाण्डवैर्भुज्यतां मही ॥ १०७ ॥

इत्युक्तवत्येव नृपे सुरेशैः प्रसूनवृष्टिर्विहिता पपात[6] ।
तामेव बुद्धिं धृतराष्ट्रसूनोः कृत्वा दृढां पातयितुं तमोऽन्धे ॥ १०८ ॥

**शोभनः अन्तः मरणं स्वन्तः । तेनोत्तमः स्वन्तोत्तमः ॥ १०४ ॥ मया यज्ञैरिष्टं इत्यादि योज्यम् । अन्यत् अतोऽन्यत् किम्, परलोकार्थं कार्यमिति शेषः ॥ १०५–६ ॥ अत एव (केवला) धनरहिता मही ॥ १०७–९ ॥**

---

दुर्योधनप्रयतनमूलत्वात् तेषां प्रयतनस्य । तस्मात्तदपि पापं दुर्योधनगामि । हरिपूजाऽस्त्वित्येव ते युयुधिरे, न स्वार्थमित्यतश्च तेषां न पापमित्याह– मदपाश्रयाच्च । अनन्यमाश्रयणमपाश्रयणम् । अपगतस्वार्थमाश्रयणमपाश्रयणम् । अपचित्या आश्रयणमपाश्रयणम् ॥ १०२ ॥ पापादपि पापा पापीयसी । सुपापा पापिष्ठाऽन्धन्तमोरूपा ॥ १०३ ॥ **'अधीतं विधिवद् दत्तं भूः प्रभुक्ता ससागरा । मूर्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया । यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् । तदिदं निधनं प्राप्तं को नु स्वन्ततरो मया'** [६२.५९–६०] इत्यादि च । चरितं च पूर्तैः । **'पुष्करिण्यः सभावापीदेवतायतनानि च । आरामाश्च विशेषेण पूर्तं कर्म विनिर्दिशेत्'** इति स्मरन्ति ॥ १०४–७ ॥ **'अस्य वाक्यस्य**

---

१. **'–तं च मूर्ध्नि'** २. **'मूर्धनि'** इति क्वचित् । ३ **'रणोत्कटेनैव'** इति क्वचित् ।
४. **'चन्द्रार्कसन्निभैः'** ५. **'–भैः शुभ्रैर्धा–'** इति क्वचित् । ६. **'पपात ह ।'**

सम्भावयत आत्मानं वासुदेवं विनिन्दतः ।
तत्परांश्च कथं न स्यात् तमोऽन्ते च विशेषतः ॥ १०९ ॥

यदैकैकमलं तत्र दुःखाधिक्यं समुच्चयात् ।
इति तत् कारयित्वेश आह मोघं तवाखिलम् ॥ ११० ॥

नृशंसस्य कृतघ्नस्य गुणवद्द्वेषिणः सदा ।
यदि धर्म्मफलं ध्वान्तं सूर्य्यवत् स्यात् प्रकाशकम् ॥ १११ ॥

वदन् पुनःपुनरिदं धर्म्मतो हत इत्यपि ।
ख्यापयामास भगवान् जने निजजनेष्टदः ॥ ११२ ॥

प्रख्यापिते वासुदेवेन धर्म्मे सतां सर्वेषां हृद्यमासीत् समस्तम् ।
हतं च धर्म्मेण नृपं व्यजानन् पापोऽयमित्येव[1] च निश्चितार्थाः ॥ ११३ ॥

युधिष्ठिरोऽपायदर्शी[2] सदैव ससंशयोऽभूत् सुमनोऽभिवृष्ट्या ।
स्नेहाद् द्रौणिः सञ्जयो रौहिणेयो दौर्य्योधनात् पापमित्येव चोचुः ॥ ११४ ॥

ततः कृष्णः पाण्डुपाञ्चालकैस्तैर्भृशं नदद्भिर्हर्षितैः समेतः ।
ययौ विरिञ्चेशसुरेन्द्रमुख्यैः सम्पूजितस्तैश्च रणाङ्गणात्[3] स्मयन् ॥ ११५ ॥

**अखिलं (इष्टं च यज्ञैरित्याद्युक्तम्) ॥ ११०–३ ॥ (अपा)यो व्यसनं पापमिति यावत् ॥ ११४ ॥ ततः**

---

**निधने कुरुराजस्य धीमतः । अपतत् सुमहद् वर्षं पुष्पाणां पुण्यगन्धिनाम्'** [६२.६४] इति च । ननु पापे सुयोधने कुतः पुष्पवृष्टिः पपात । तत् किं देवा अपि कृष्णाशयं विरुरुधुः? नेत्याह– तामेव बुद्धिम् । तमसाऽन्धयतीति तमोऽन्धमन्धन्तमः ॥ १०८ ॥ आत्मानं सम्भावयतः, पार्थेभ्योऽधिकं सुभगं भावयतः । तत्परान् वासुदेवभक्तांश्च विनिन्दतः ॥ १०९ ॥ एकैकं तमसि दुःखायालम् । आत्मसम्भावनाया वासुदेवनिन्दायास्तत्परनिन्दायाश्चेति सर्वदोषाणां समुच्चयात् तत्र तमसि दुःखाधिक्यम् ॥ ११० ॥ तत्रापि यदि धर्मफलं स्यात् तर्हि ध्वान्तमपि प्रकाशकं स्यात् ॥ १११–३ ॥ अपायदर्शी दोषदर्शी । गुणेष्वपि दोषशङ्की । तेन चानिष्टशङ्की । दौर्योधनात् दुर्योधनसम्बद्धात् स्नेहात् ॥ ११४ ॥ पाण्डु-

---

१. **'–मित्येव विनि–'** २. **'युधिष्ठिरोऽपापदर्शी'** । **'युधिष्ठिरः पापदर्शी'** इति च क्वचित् । ३. **'रणाङ्कणात्'** इति क्वचित् ।

**ततः श्रुत्वा सञ्जयाद् दुःखतप्तं सम्बोधयिष्यन् पितरं युयुत्सुः ।**
**कृष्णस्य राज्ञश्च मतेन यातो[१] जगाम चान्वेव जनार्दनश्च ॥ ११६ ॥**

**धर्म्मयुक्तैश्च तत्वार्त्थैर्लोकवृत्तानुदर्शकैः ।**
**वाक्यै राजानमाश्वास्य प्रायात् पार्त्थान् पुनर्हरिः ॥ ११७ ॥**

**कालानुसारतो[२] दैवांश्चोपसंहर्त्तुमच्युतः ।**
**ययौ सपार्त्थशैनेयः कुरूणां शिबिरं निशि ॥ ११८ ॥**

**कृष्णः तैः प्राप्तजयत्वादत[३] एव हृषितैः । युद्धदिदृक्षार्थमागतैः विरिञ्चेशसुरेन्द्रमुख्यैश्च सम्पूजितः ॥११५॥ श्रुत्वा, पुत्रादिवधमिति शेषः ॥ ११६–२० ॥**

पाञ्चालकैस्तैः । कुरव इतिवत् पाण्डुशब्दः सन्ततिवचनः । पाण्डुभिः पाण्डवैः पाञ्चालकैश्च । तैर्हतावशिष्टैर्जित-काशिभिः । **'वासुदेववचः श्रुत्वा तदानीं पाण्डवैः सह । पाञ्चाला भृशसंहृष्टा विनेदुः सिंहसङ्घवत्'** [६२.८०] इति च । प्रायो द्रोणनिहतत्वात् केचनैवाद्यापि श्वसन्तीत्यनुकम्पया पाञ्चालकैरित्याह । हृषितैः रोमाञ्चितसर्वगात्रैः । हृषु अलीके । हृष तुष्टौ वा । अलीकमानन्द इति केचित् । **'हृषेर्लोमसु'** [अ.सू.७.२.२९] इति हि स्मरन्ति । अथच हृषितैः सन्तुष्टैः विस्मितैश्च । **'विस्मितप्रतिघातयोश्चेति वक्तव्यम्'** इति हि वार्तिकम् । **'हृषितो देवदत्तः । विस्मित इत्यर्थः'** इति वामनः । सम्पूजितस्तैश्च समेतः । रणाङ्गणात् । केचिद् वैयाकरणपाशा अङ्गनमिति पठन्ति, नाङ्गण-मिति । तेषां भ्रमं वारयितुं रणाङ्गणादित्याह । अङ्गणमित्येव प्रतनाः प्रयुञ्जते, नाङ्गनमिति । अथ कथमङ्गणम्? यदि वदनमस्तीति वदसे वयमपि पृच्छामः 'कथमाचार्यानी' इति । ननूक्तम्–**'आचार्यादणत्वं च'** इति । तर्हि वक्तव्यम्– **'अङ्गाण्णत्वं च'** इति । अन्ये तु पृषोदरादित्वं मन्यन्ते । स्मयन् पाण्डुपाञ्चालेषु विश्वासवर्धनाय स्मयमानः । ष्मिङ् ईषद्धसने ॥ ११५ ॥ यद्यपि युयुत्सुर्धृतराष्ट्रपुत्रः । अथापि स पाण्डवपक्षगो भूत्वा युयुधे । अतः स पितरं सान्त्वपूर्वं बोधयितुं न प्रभवेत् । गान्धारीं तु न सर्वथा । अतः स्वयं जनार्दनश्च गान्धारीधृतराष्ट्रौ सम्बोधयिष्यन् तमनुजगाम । लृट् भविष्यन्तीं क्रियामिव पूर्वभाविनीमिच्छामप्याह । यथा–**'अहं काशीं गमिष्यामि'** । अहं काशीं जिगमिषामीत्येव तदाह । एवं सम्बोधयिष्यन्निति, सम्बुबोधयिषन्नित्येव तदाह । सम्बोध्य बोधनं सम्बोधनम् । समाधाय बोधनं सम्बो-धनम् । समुचितं बोधनं सम्बोधनम् ॥ ११६ ॥ **'तवापराधान्नृपते सर्वं क्षत्रं क्षयं गतम्'** [६४.४४], **'मा च दोषान् महाप्राज्ञ पाण्डवेषु निवेशय । अल्पोऽप्यतिक्रमो नास्ति पाण्डवानां महात्मनाम् । धर्मतो न्यायतश्चैव स्नेहतश्च परन्तप'** [४७–८],**'कुलं वंशश्च पिण्डाश्च यच्च पुत्रकृतं फलम् । गान्धार्यास्तव वा नाथ पाण्डवेषु प्रतिष्ठितम्'** [५०] इत्यादिभिर्धर्मयुक्तैस्तत्वार्थैर्लोकवृत्तानुदर्शकैश्च वाक्यैः । तत्वमेवार्थः अभिधेयं येषाम् ॥ ११७ ॥ दैवान् देवांशान्

१. **'मतेऽनुयातो–'**

२. **'–तो देवांश्चो–'** । **'लोकानुसारतो देवांश्चो–'** इति क्वचित् ।

३. **'तैः प्राप्तजयैः, अत एव हृषितैः'** इति साधीयान् पाठः ।

**तदैव हार्दिक्यकृपान्वितोऽयात् सुयोधनं द्रौणिरमुं शयानम् ।**
**प्रभग्नसक्थिं च[1] सृगालभूतैः सम्भक्ष्यमाणं ददृशे श्वसन्तम् ॥ ११९ ॥**

**स दुःखशोकाभिहतो विनिन्द्य पार्थान् मया भूप किमत्र कार्य्यम् ।**
**इत्याह निष्पाण्डवतां कुरुष्वेत्यमुं व्यधात् पांस्वभिषेकिणं नृपः ॥ १२० ॥**

**उच्छिद्य सन्ततिं पाण्डोः कृत्वा स्वक्षेत्रसन्ततिम् ।**
**तया भूरक्षणहृदा सोऽभिषिक्तस्तथेत्यगात् ॥ १२१ ॥**

**स कृष्णभीमपार्थानां भयादेव पुनर्वनम् ।**
**कृपसात्वतसंयुक्तो विवेश गहनं रथी ॥ १२२ ॥**

**(पांस्वभिषे)कं कुर्वतोऽभिप्रायमाह–उच्छिद्येति । तथेति (तव क्षेत्रे पुत्रमुत्पादयामीत्युक्त्वा) ॥१२१–३॥**

---

पाण्डवसेनायामवशिष्टान् धृष्टद्युम्नादीन् ॥ ११८ ॥ **'अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः । त्वरिता जवनैरश्वैरायोधनमुपागमन् । तत्रापश्यन्महात्मानं धार्तराष्ट्रं निपातितम् । प्रभग्नं वायुवेगेन महासालं यथा वने'** [६६.२–३] इति च । सृगालैश्च भूतैश्च समन्ताद् भक्ष्यमाणम् । **'वृतं भूतगणैर्घोरैः क्रव्यादैश्च समन्ततः'** [७] इति च । सृगालभूतैर्भूतैरिति वा । सृगाला एव दृश्यन्ते, न भूतानीति ॥ ११९ ॥ दुःखं मनोवेदना । अहह एवमापन्नमिति मनस्तापः शोकः । अभिहतः एकतो दुःखेनापरतः शोकेनेत्युभयतःपाशया रज्ज्वा पीडितः । स द्रौणिः । विनिन्द्य पार्थान् । **'पिता मे निहतः क्षुद्रैः सुनृशंसेन कर्मणा । न तथा तेन तप्यामि यथा राजंस्त्वयाऽद्य वै'** [६६.३३] इत्यादि । इत्युक्त्वा पांस्वभिषेकिणम् । सम्प्रति जलाभिषेकः श्रूयते–**'आचार्य शीघ्रं कलशं जलपूर्णं समानय । स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः । कलशं पूर्णमादाय राज्ञोऽन्तिकमुपागमत्'** [६६.३७–८] इति, **'राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्ततः । द्रौणिं राज्ञो नियोगेन सेनापत्येऽभ्यषेचयत्'** [४१] इति च । इयमत्र व्यवस्था– दुर्योधनः स्वयमुत्थायाभिषेक्तुमप्रभवन् पश्चार्धेन किञ्चिदुर उन्नमय्य रणभूमेः पांसून् कृच्छ्रेण पाणिभ्यामुद्धृत्य प्रथमं तं पांस्वभिषेकिणं व्यधात् । विलक्षणोऽयमभूतोऽभिषेक इति 'व्यधात्' इत्याह । ततस्तस्य नियोगेन कृपः स्वभागिनेयं कलशजलेनाभ्यषेचयदिति । ननु कलशः काऽसीत्? अज्ञातविप्रचर्यः पृच्छसि । विप्रधर्मा कृपः कमण्डलुपाणिरेव चरति स्म ॥ १२० ॥ तया स्वसन्तत्या भुवो रक्षणं भूयादिति हृदा आशयेन । तथाऽस्त्विति तदुक्तमभ्युपेत्यागात् । स्वक्षेत्रे स्वभार्यायाम् । **'क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः'** । इति शल्यपर्वकथासङ्ग्रहः ॥ १२१ ॥ अथ सौप्तिकपर्वकथामाह– स कृष्णभीमपार्थानां भयादेव । **'विमुच्य वाहांस्त्वरिता भीताः समनुबोधनात् । गहनं देशमासाद्य प्रच्छन्ना न्यविशन्त ते'**

---

१. **'–सक्थिं श्वसृगाल–'** । **'श्वसृगालयूथैः'** इति क्वचित् ।

**तस्य चिन्तयतो द्रोणवधं दुर्य्योधनस्य च ।**
**नाऽगान्निद्रा निशीथे च [१]ध्वाक्षान् न्यग्रोधवासिनः ॥ १२३ ॥**

**हतान् सुबहुसाहस्रानेकेनातिबलेन तु ।**
**कौशिकेन निरीक्ष्यैव प्राह तौ कृपसात्वतौ ॥ १२४ ॥**

**निदर्शनेन ह्येनेन[२] प्रेरितः परमात्मना ।**
**यामि पाण्डुसुतान् हन्तुमित्युक्त्वाऽऽरुरुहे रथम् ॥ १२५ ॥**

**(परमात्मना कर्त्रा) एतेन निदर्शनेन करणेन प्रेरितः सन् । पाण्डुसुतान् हन्तुं पाण्डवानां शिबिरं प्रति यामि, युवामप्यभिगच्छतमिति वाक्यशेषः । (तौ) कृपसात्वतौ प्राह, शिबिरं जगाम चेति वाक्यशेषः ॥ १२४–२८ ॥**

---

[सौ.प.१.२] इति च । गहनं दुर्गमं वनम् ॥ १२२ ॥ दुर्योधनस्य च वधम् । **'वध हिंसायाम्'** इति प्रतनाः । **'शकुनिं चाक्षकितवं सहदेवो वधिष्यति'** इत्यादिप्रयोगात् । पाणिनिस्तु हन्तेर्वधादेशं मन्यते–**'हनश्च वधः'** [अ.सू.३.३.७६] इति । तत्ववादिनस्तु धात्वन्तरवादिनः । कथं ध्वाक्षान् ? ध्वाङ्क्षन्ति घोरं वाश्यन्त इति हि ध्वाङ्क्षा उच्यन्ते । ध्वाक्षि घोरवाशिते । काङ्क्षायामित्यन्ये । ननु त्वमपि पृच्छ्यसे कथं तर्हि द्राक्षाः? इति । द्राक्षि वाञ्छायामिति हि धातुं पठन्ति । द्राङ्क्ष्यत इति द्राङ्क्षा स्यात् । कथं द्राक्षा स्यादिति पर्यनुयुक्तः किमुत्तरं ब्रूषे ? ननु यवादिगणे द्राक्षापदं पठ्यते । तदिदं ज्ञापकमनुनासिकलोपस्य । तर्हि यत् प्रतनैः पठितं तदसूत्रितमप्यङ्गीकरोषि । एवं ध्वाक्षोऽपीति मन्यस्व । कस्ते हस्तं बध्नाति । ध्वनतीति ध्वाङ्क्ष इत्यन्ये । तत्रापि समः समाधिः । अपिच निर्वचनान्तरमत्रास्ति– ध्वस्तमेकमक्षि यस्य स ध्वस्ताक्ष एव ध्वाक्ष इति । वयं मा नाम ध्वाक्षा भूमेति माध्वाक्षा अभूम ॥ १२३ ॥ सहस्राणां समूहः साहस्रम् । सहस्रशब्दो भिक्षादिगणपठितः । ततः समूहार्थेऽण्–**'भिक्षादिभ्योऽण्'** [४.२.३८] इति । सु सुखसुतं बहु साहस्रं येषां परिमाणं ते बहुसाहस्राः । अथवा बहूनि सहस्राणि परिमाणत्वेन सन्त्येषामिति बहुसाहस्राः । **'तपः-सहस्राभ्यां विनीनी'** [अ.सू.५.२.१०२], **'अण् च'** [१०३] इति मत्वर्थेऽण्प्रत्ययः । कौशिक उलूकः । **'विश्वामित्रे च कोशज्ञोलूकयोरपि कौशिकः'** इत्यभिधानम् । स्वतो बलाधिकः । निशीथकालत्वादतितरामिति तुनाऽऽह । अश्वत्थामा निद्रामलभमानो वनोद्देशं वीक्षमाणः कञ्चन न्यग्रोधं वायसावृतमपश्यत् । तत्र काकसहस्राणि तां निशां पर्यणामयन् । तदा कश्चनोलूक आयातः । स न्यग्रोधशाखायां सन्निपत्य सुप्तान् वायसान् जघान । तदिदं काकोलूकीयं नाम । तेनाधिगतकर्तव्योऽश्वत्थामा प्राह–**'उपदेशः कृतोऽनेन पक्षिणा मम संयुगे । शत्रूणां क्षपणं युक्तं प्राप्तः कालश्च मे मतः'** [सौ.प.१.४६] इति ॥ १२४ ॥ एतेनेत्यन्वादेशे । ननु कोऽत्रान्वादेशः? शृणु–अनेन निदर्शनेन लब्धोत्तरः । अथो एनेन निदर्शनेन द्वारभूतेन परमात्मना च प्रेरित इत्ययमन्वादेशो भवति । केवलं स्वयमेको निर्दधार, स्वमात्रगामि

---

१. 'ध्वाङ्क्षान्'

१. **'ह्येतेन'** । वे.ती. पाठोऽपि तथेति भाति ।

**निवारितोऽपि ताभ्यां सः[1] प्राद्रवच्छिबिरं प्रति ।**
**अनुजग्मतुस्तावपि तं शिबिरद्वारि चैक्षत ॥ १२६ ॥**

**उग्ररूपधरं रुद्रं स्वकीयां तन्वमेव[2] सः ।**
**परीतं वासुदेवं च[3] बहुकोटिस्वरूपिणा ॥ १२७ ॥**

**दृष्ट्वैव वासुदेवं तमत्रसद् गौतमीसुतः ।**
**वासुदेवाज्ञयैवात्र स्वात्मनाऽपि[4] सदाशिवः ॥ १२८ ॥**

**अयुद्ध्यदग्रसच्चाऽशु द्रौणेः सर्वायुधान्यपि ।**
**अचिन्त्या हरिशक्तिर्य्यद्[5] दृश्यन्तेऽत्महनोऽपि हि ॥ १२९ ॥**

**हरिशक्तेरचिन्त्य(त्वे लिङ्गमाह– दृश्यन्त इति ।) आत्महनः ॥ १२९ ॥**

---

च फलमिति आरुरुह इत्यात्मनेभाषा । **'मामेवाद्य प्रतीक्षेतां रथवर्यौ परन्तपौ । इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान् । तमन्वगात् कृपो राजन् कृतवर्मा च सात्वतः'** [५.३७–८] इति च ॥ १२५–६ ॥ **'उतो त्वस्मै तन्वं विसस्रे'** इति वैदिकप्रयोगं स्मारयन्नाह– स्वकीयां तन्वम् । स्वकीयमेव रूपान्तरम् । बहुकोटिस्वरूपिणा स्वेनैव परीतं च वासुदेवम् ॥१२७॥ तर्हि कथं युयुधे–वासुदेवाज्ञयैव । तथाहि भारते–**'तत्र भूतं महाकायं चन्द्रार्कसदृशद्युतिम् । सोऽपश्यद् द्वारमावृत्य तिष्ठन्तं रोमहर्षणम् । वसानं चर्म वैयाघ्रं वसारुधिरविस्रवम् । कृष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनम्'** [सौ.प.६.३–४] **'बद्धाङ्गदमहासर्पं ज्वालामालाकुलाननम् । दंष्ट्राकरालवदनं व्यादितास्यं भयानकम् । नयनानां सहस्रैश्च विचित्रैरभिभूषितम्'** [५–६] इति । किं तद् भूतमिति मूले न स्फुटम् । अतो भगवत्पादः स्पष्टमाचष्ट– उग्ररूपधरं रुद्रमिति । तत उपरि इदं पठ्यते– **'तस्यास्य नासिकाभ्यां च श्रवणाभ्यां च सर्वशः । तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन्महार्चिषः । तथा तेजोमरीचिभ्यः शङ्खचक्रगदाधराः । प्रादुरासन् हृषीकेशाः शतशोऽथ सहस्रशः'** [८–९] इति । अत्र हृषीकेशा इति स्फुटवचनान्न संशयावकाश इत्याह– वासुदेवं च तस्य रुद्रस्य परितो व्याप्तमिति । **'तदत्यद्भुतमालोक्य भूतं लोकभयङ्करम् । द्रौणिरव्यथितो दिव्यैरस्त्रवर्षैरवाकिरत्'** [१०] इति च । वासुदेवाज्ञयेदं करोमीति बुद्ध्या पापचरणनिमित्तव्यथारहितः । अथापि वासुदेवं दृष्ट्वैव अत्रसद् बिभाय । त्रसी उद्वेगे । **'उद्वेगो भयम्'** इति क्षीरस्वामी । **'वा भ्राशभ्लाश–'** [अ.सू.३.१.७०] इति श्यनो विकल्पेन त्रसेर्लङि रूपद्वयम् – अत्रसत्, अत्रस्यदित्युक्तम् । सदाशिवोऽपि वासुदेवाज्ञयैव स्वस्यैव रूपान्तरेणाश्वत्थाम्ना अयुध्यत् विष्णुप्रीत्यर्थमयुध्यत ॥ १२८ ॥ **'द्रौणिमुक्तान् शरांस्तांस्तु तद्भूतं महदग्रसत्'** [११] इति च । दृश्यन्ते त्महनः । **'मन्त्रेष्वाङ्यादेरात्मनः'**

---

१. **'स प्राद्रव–'** २. **'तनुमेव सः'** । **'तनुमेव च'** इति क्वचित् । ३. **'वासुदेवेन बहु–'**
४. **'स्वात्मना च सदा–'** इति क्वचित् । ५. **'–शक्तिर्हि दृ–'** इति क्वचित् ।

अतस्तया प्रेरितेन स्वात्मनैवाखिलेष्वपि ।
आयुधेषु निगीर्णेषु द्रौणिर्य्यज्ञं तु मानसम् ।
चक्रेऽत्मानं पशुं कृत्वा स्वात्मस्थायैव विष्णवे ॥ १३० ॥

यज्ञतुष्टेन[१] हरिणा प्रेरितः शङ्करः स्वयम् ।
आत्मने द्रोणपुत्राय ददौ सर्वायुधानि च ॥ १३१ ॥

उवाच चाहमादिष्टो विष्णुना प्रभविष्णुना ।
अरक्षं पार्थशिबिरमियन्तं कालमेव तु ॥ १३२ ॥

तदिच्छयैव निर्दिष्टो दास्ये मार्ग्गं तवाद्य च ।
आयुधानि च सर्वाणि हन्तुं सर्वानिमान् जनान् ॥ १३३ ॥

**(विष्णवे विष्णुप्रीत्य)र्थं ॥ १३० ॥ यज्ञे मानसयज्ञे ॥ १३१–६ ॥**

---

[अ.सू.६.४.१४१] इति वैयाकरणाः । आङीति न वक्तव्यम् । **'मन्यतेऽत्मनः'** इत्यादिप्रयोगदर्शनात् । आत्मन्शब्दः अत्मन्शब्दवत् सन्धिकार्यं भजते बहुलं वेदेषु चेति स्वरसं वचनम् । आप्नोतीत्यात्मा । आदत्त इत्यात्मा । अत्तीति अत्माऽपि स्यात् । अततीति च । आत्मा हि स्वस्य प्रियतमः । अथाप्यात्मानं घ्नन्ति । हरिशक्तिरेवं कारयति बलात् । अन्यथा को यतेताऽत्मनाशाय । आत्महन इत्यपाणिनीयमपि साध्विति पूर्वमुक्तम् ॥ १२९ ॥ आयुधेषु निगीर्णेषु भक्षितेषु । **'ततः सर्वायुधाभावे वीक्षमाणस्ततस्ततः । अपश्यत् कृतमाकाशमनाकाशं जनार्दनैः'** [६.१७] । तेन तं विष्णुं ज्ञात्वा स्वात्मस्थायैव विष्णवे यज्ञं चक्रे । एतेन– **'सोऽहमद्य महादेवं प्रपद्ये शरणं विभुम् । दैवदण्डमिमं घोरं स हि मे नाशयिष्यति । कपर्दिनं प्रपद्येऽहं देवदेवमुमापतिम् । कपालमालिनं रुद्रं भगनेत्रहरं हरम्'** [६.३२–३] इति भारतवचनं गदिताशयम्– सोऽहमद्य महादेवान्तर्यामिणं विष्णुं शरणं प्रपद्य इति । नहि स्वयमेव स्वात्मानं प्रपद्यत इति युक्तम् । चक्रेऽत्मानमित्युक्तार्थम् । आत्मानं पशुं कृत्वा । **'ततः सौम्येन मन्त्रेण द्रोणपुत्रः प्रतापवान् । उपहारं महामन्युरथाऽत्मानमुपाहरत्'** [७.५३] इति च । अयं रुद्रान्तर्गतो हरिरिति चोत्तरत्र अच्युतपदेन सूचयाम्बभूव– **'तं रुद्रं रौद्रकर्माणं रौद्रैः कर्मभिरच्युतम् । अभिष्टुत्य महात्मानमित्युवाच कृताञ्जलिः । द्रौणिः– इममात्मानमद्याहं जातमाङ्गिरसे कुले । स्वग्नौ जुहोमि भगवन् प्रतिगृह्णीष्व मां बलिम्'** [७.५४–५५] इति ॥ १३०–१ ॥ **'यथावदहमाराद्धः कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते'** [७.६२] **'कृतस्तस्यैव सम्मानः पाञ्चालान् रक्षता मया । अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम्'** [६४] इति वचनजातस्याभिप्रायमाह– उवाच चेत्यादिना ॥ १३२ ॥ तदिच्छयैवेयन्तं कालं त्वां निरुध्यायुधानि च ग्रसित्वा शिबिरमरक्षम् । सम्प्रति तदिच्छयैव तेन

---

१. **'यज्ञे तुष्टेन'** इति वे.ती. पाठः स्यादिति भाति ।

इत्युदीर्य्य प्रदायाऽशु सर्वा हेतीर्वृषध्वजः ।
तत्रैवान्तर्द्दधे सोऽपि प्रोवाच कृपसात्वतौ ॥ १३४ ॥

ये निर्य्यास्यन्ति[1] शिबिराज्जहितं तांस्तु[2] सर्वशः ।
इत्युक्त्वा प्रविवेशान्तर्द्धन्वी खड्गी कृतान्तवत् ॥ १३५ ॥

पारावताश्वं स तदा शयानमुपेत्य पद्भ्यां समताडयच्च ।
वक्षस्यसाववदद् वीतनिद्रो जाने भवन्तं हि गुरोस्तनूजम् ॥ १३६ ॥

समुत्थितं मां जहि शस्त्रपाणिं शस्त्रेण वीरोऽसि स वीरधर्म्मः ।
लोकाश्च मे सन्त्वथ शस्त्रपूता इति ब्रुवाणं स रुषा जगाद ॥ १३७ ॥

न सन्ति हि ब्रह्महणां सुलोका विशेषतश्चैव गुरुद्रुहां पुनः ।
न धर्म्मयुद्धेन वधार्हकाश्च ये त्वद्विधाः पापतमाः सुपाप ॥ १३८ ॥

[3]अवश्यभाविनं मृत्युं धृष्टद्युम्नो विचिन्त्य तम् ।
तूष्णीं बभूव स्वप्नेऽपि नित्यं पश्यति तां मृतिम् ॥ १३९ ॥

**शस्त्रेण जहि वीरोऽसि । (शस्त्रेण वधस्य वीरस्वभा)वत्वादिति भावः । अथ तस्मात् शस्त्रपाणित्वेन हतत्वात् लोकाः (पुण्यलोकाः) इत्यर्थः ॥ १३७–८ ॥ धृष्टद्युम्नः मृत्युं अवश्यम्भाविनं अपरिहार्यं विचिन्त्य निश्चित्य**

निर्दिष्ट एव मार्गमायुधानि च दास्ये । तदादेशपालनं स्वस्य महान् धर्म इत्यात्मनेभाषा ॥ १३३ ॥ घ्नन्तीति हेतयः । हन्यते वैभिः । हिन्वन्ति प्रहीयन्ते वा । हि गतौ । सोऽश्वत्थामाऽपि ॥१३४॥ जहितम् । ओहाक् त्यागे । हननार्थेऽपि पठनीयः । तेन निहतमित्यर्थः सम्पद्यते । 'जहि' इति हनधातोर्लोटि मध्यमपुरुषस्यैकवचनम् । 'जहितम्' इति, 'जहीतम्' इति च जहातोर्लोटि मध्यमपुरुषस्य द्विवचनम् । 'हतम्' इति हनधातोः । तेन 'शिबिरान्निहतं तांस्तु सर्वशः' इति वक्तुं युक्तमित्यापाततः प्रतीयते । अथापि हन्तेः 'जहि' इति, जहातेः 'जहितम्' इति रूपयोः साधर्म्यात् श्रवणमात्रेण हननार्थत्वं प्रतीयत इति सोऽप्यर्थः साधुरेवेत्याचार्याशयः । अपूर्वोऽयं प्रयोगः – नाशयतमित्यर्थे जहितमिति ॥ १३५ ॥ पारावताश्वं धृष्टद्युम्नम् । पारावतः कपोतः । कपोतसवर्णा अस्याश्वाः ॥ १३६ ॥ शस्त्रेण जहि । अथ शस्त्रपाणेः शस्त्रेण हतत्वात् ॥ १३७ ॥ ब्राह्मणं हतवानिति ब्रह्महा । **'ब्रह्मभ्रूणवृत्रेषु क्विप्'** [अ.सू.३. २.८७] इत्युक्तम् । सुलोकाः पुण्य-लोकाः । सुपापः स्वेच्छया कृतपापत्वादक्षम्यं पापमस्येति ॥ १३८ ॥ स्वप्नेऽपि । **'कालीं रक्तास्यनयनां रक्तमाल्या-**

१. **'ये निर्यान्तीह शिबि–'** इति क्वचित् । २. **'तांश्च सर्वशः'** ३. **'अवश्यम्भाविनम्'** इति वे.ती. पाठः स्यात् ।

द्रौणिं च काळरात्रिं[१] च द्रोणपातादनन्तरम् ।
विशसन्तं कृषन्तीं च स्वप्नेऽपश्यद्धि[२] पार्षतः ॥ १४० ॥

समाक्षिपद् द्रोणसुतोऽस्य कण्ठे निबद्ध्य मौर्वीं धनुषोऽप्युरस्थः ।
ममन्थ कृच्छ्रेण विहाय देहं ययौ निजं[३] स्थानमसौ च वह्निः ॥ १४१ ॥

ततः शिखण्डिनं हत्वा युधामन्यूत्तमोजसौ[४] ।
जनमेजयं च पाञ्चालीसुतानभिययौ ज्वलन् ॥ १४२ ॥

तैरुत्थितैरस्यमानः शरैः खड्गेन जघ्निवान् ।
सर्वान् सव्यापसव्येन तथाऽन्यान् पाण्डवात्मजान् ॥ १४३ ॥

ऋत एकं भैमसेनिं काशिराजात्मजात्मजम्[५] ।
तं तदाऽन्तर्हितः शर्वः कैलासमनयत् क्षणात् ॥ १४४ ॥

**तूष्णीं बभूव । कुतोऽस्य निश्चय इत्यत आह– स्वप्नेऽपीति । (पश्यति अ)पश्यत् यस्मादित्यर्थः ॥१३९॥ स्वप्नेऽपीत्युक्तमेव विवृणोति– द्रौणिं चेति । द्रौणिं विशसन्तम्, काळरात्रिं महाकाळीं (कृषन्तीम्), आत्मानमिति शेषः । हिशब्दो हेतौ ॥ १४० ॥ द्रोणसुतः अस्य कण्ठे धनुषः मौर्वीं समाक्षिपत् । उरस्थः निबध्य ममन्थ, कण्ठमिति शेषः ॥१४१–२॥ (खड्गे)न सव्यापसव्येन सव्यापसव्यताडनेन ॥१४३–६॥**

---

नुलेपनाम् । रक्ताम्बरधरां घोरां पाशहस्तां कुटुम्बिनीम् । ददृशुः काळरात्रिं ते स्मयमानामिव स्थिताम् । नराश्वकुञ्जरान् पाशैर्बध्वा घोरैः प्रतस्थुषीम् । वहन्तीं विविधान् प्रेतान् पाशबद्धान् विमूर्धजान् । तथैव च सदा राजन् न्यस्तशस्त्रान् महारथान् । स्वप्ने सुप्तान् नयन्तीं तां रात्रिष्वन्यासु मारिष । ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिं च नित्यदा' [८.७६–९] इति च । एतेन पार्षत इत्यन्येषां पञ्चालवीराणामुपलक्षणमिति ज्ञायते । इयांस्तु विशेषः । केषाञ्चन सङ्ग्रामारम्भादेव काळीदर्शनम् । पार्षतस्य तु द्रोणपातादनन्तरमिति । तथाहि सौप्तिके– **'यतः प्रभृति सङ्ग्रामः कुरुपाण्डवसेनयोः । ततः प्रभृति तां कन्यामपश्यन् द्रौणिमेव च'** [८०] इति ॥ १३९–१४० ॥ ममन्थ । **'तमाक्रम्य पदा राजन् कण्ठे चोरसि पादयोः । नदन्तं विस्फुरन्तं च पशुमारममारयत्'** [८.२४] इति च । कृच्छ्रेण देहं विहाय ॥१४१॥ शिखण्डी युधामन्यूत्तमोजसौ जनमेजयश्च धृष्टद्युम्नभ्रातरः । पाञ्चालीसुताः पञ्च प्रतिविन्ध्यादयः ॥ १४२ ॥ अन्यान् पाण्डवानामितर-भार्यासु जातानात्मजान् शिशुपालपुत्र्यां देवक्यां जातं युधिष्ठिरात्मजं सुहोत्रम्, रौहिणेय्यां बलरामानुजायां देव्यां जातं भीमात्मजं सर्वोत्तुङ्गम्, यमयोः सुतौ च । बभ्रुवाहनस्य तत्रासन्निधान्न सर्वपदेन समाहारः ॥ १४३ ॥ सर्वानित्यस्यैकम-

---

१. 'कालरात्रिम्' २. 'स्वप्ने पश्यति पा–' ३. 'निजस्थान–'
४. '–मन्यूत्तमौजसौ' ५. '–राजसुतात्मजम्' इति क्वचित् ।

स शर्वत्रातनामाऽऽसीदतस्तत्रैव सोऽवसत् ।
पुराऽर्थितः स्वदौहित्रस्यामरत्वाय शङ्करः ॥ १४५ ॥

काशिराजेन तेनासौ जुगोपैनं कृपायुतः ।
वासुदेवमतं ज्ञात्वा [1]साम्राज्याय परीक्षितः ॥ १४६ ॥

वारयामास भूलोकं नैव याहीत्यमुं शिवः ।
सामान्यतोऽपाण्डवाय द्रौणिनाऽप्यभिसन्धितम् ॥ १४७ ॥

तद्रूपेणैव रुद्रेण विनैनमिति चिन्तितम् ।
अस्त्रं ब्रह्मशिरश्चैनं न जघानैक्यतस्तयोः ।
चेकितानादिकांश्चैव जघानान्यान् स[2] सर्वशः ॥ १४८ ॥

स चेदिपाञ्चालकरूशकाशीनन्यांश्च सर्वान् विनिहत्य वीरः ।
शिशून् स्त्रियश्चैव निहन्तुमुग्रः प्राज्वालयत् तच्छिबिरं समन्तात् ॥ १४९ ॥

**अपाण्डवाय अपाण्डवत्वाय । अभिसन्धितं अभिप्रेतमपि ब्रह्मशिरः अस्त्रं रुद्रेण एनं विनेति चिन्तितं एनं न जघान । चेकितानादिकांश्चान्यान् सर्वशः जघान, द्रौणिरिति शेषः ॥ १४७–५३ ॥**

---

पवादमाह– ऋत एकम् । काशिराजात्मजा काळी ॥ १४४ ॥ अतः शर्वेण कैलासं नीत्वा त्राणात् शर्वत्रातनामा । अतः शर्वेण कैलासं प्रति नयनादेव, अतः परं तत्रैव सोऽवसत् । पुराऽर्थितः काशीशः काशिराजेन ॥ १४५ ॥ परीक्षितः साम्राज्यलाभाय ॥ १४६ ॥ पाण्डवानामभावोऽपाण्डवम् । यद्यपि दधातेः तकारादौ किति प्रत्यये परतः हीत्ययमादेशो भवति–**'दधातेर्हिः'** [अ.सू.७.४.४२] इति । तेनाभिप्रेतमभिसंहितं भवति । कथमभिसन्धितम्? शृणु व्याकरणमुग्ध, भवत्पूर्वजा अप्यङ्गीचक्रुः । सुहितं छन्दसि सुधितं भवति; वसुहितं वसुधितम् [अ.सू.७.४.४५] । तेनैव न्यायेन सन्धितमप्युपसङ्ख्यायताम् । अपिच तुष्यतु भवान् । शक्यं प्रकृत्यन्तरेणापि भवदाशङ्काशङ्कुः प्रत्याख्यातुम् । धि धारणे इत्यस्येदं रूपम् । सेयं व्याकरणमुग्धमुखमुद्रा ॥ १४७ ॥ नन्वस्तु शर्वत्रातं ब्रह्मशिरो न जघानेति । बभ्रुवाहनं किमिति न जघान । सोऽपि किल पाण्डवः । न भोः । पुत्रिकापुत्रधर्मेण किल चित्राङ्गदामर्जुन उदुवाह । तस्मात् स वीरसेनस्य पुत्र इति पाण्ड्यो बभूव, न पाण्डवः । विशिष्य वक्तव्यमुक्त्वाऽथ प्रसक्तमाह– स द्रौणिः शिबिरस्थानन्यान् चेकितानादिकांश्च सर्वान् निर्दयं जघानैवेति ॥ १४८ ॥ शिशुपाले हते तत्तनयं धृष्टकेतुं पुरोधाय चेदयः पाण्डवपक्षगा

---

१. **'ज्ञात्वा स्वाराज्याय'** इति कचित् । २. **'जघानान्यांश्च सर्वशः'**

**जिजीविषूंस्तत्र पलायमानान् द्वारि स्थितो गौतमः सात्वतश्च[1] ।**
**निजघ्नतुः सर्वशः[2] पार्षतस्य सूतस्त्वेकः शेषितो दैवयोगात् ॥ १५० ॥**

**खड्गेन प्रहृतं दृष्ट्वा हार्दिक्येन पपात ह ।**
**भूमौ प्रागेव संस्पर्शान्न ज्ञातस्तमसाऽमुना ॥ १५१ ॥**

**अन्यासक्ते समुत्थाय प्राद्रवद् यत्र पार्षती ।**
**तस्या अकथयत् सर्वं सा भीमायाऽह दुःखिता ।**
**प्राद्रवद् रथमारुह्य स धन्वी गौतमीसुतम् ॥ १५२ ॥**

**तदन्तरे द्रौणिरपि प्रयातः कृष्णासुतानां मुदितः शिरांसि ।**
**आदाय हार्दिक्यकृपानुयातो दुर्योधनं सन्निकृष्टप्रयाणम् ॥ १५३ ॥**

---

बभूवुः । शिशुपालतनया देवकी धर्मराजभार्या बभूवेति च तेषां पाण्डवेषु महान् पक्षपातः । दन्तवक्रे विडूरथे च निहते करूशाश्च कुन्तीभगिन्या दन्तवक्रस्य जनन्याः श्रुतदेवाया मतेन पाण्डवानेव समाशिश्रियन्त । काशयः काशीदेशीय-सैन्याः ॥ १४९ ॥ सात्वतः कृतवर्मा च । पार्षतस्य पृषतपौत्रस्य धृष्टद्युम्नस्य सूतः । **'अहमेकोऽवशिष्टस्तु तस्मात् सैन्यान्महीपते । मुक्तः कथञ्चिद् धर्मात्मन् व्यग्राच्च कृतवर्मणः'** [१०.६] इत्यैषीके ॥ १५० ॥ हार्दिक्येन कर्त्रा खड्गेन करणेन प्रहृतम् । हेति प्रहरणादुन्मुच्य जीवतः पतनं विस्मयावहमित्याह । भूमौ पपात । आयुधसंस्पर्शात् प्रागेव । छेदहेतुः स्पर्शः संस्पर्शः । अमुना हार्दिक्येन ॥ १५१ ॥ अन्यासक्ते अन्यान् हन्तुमन्यत्र दत्तगमने हार्दिक्ये । तस्या अकथयत् । धर्मराजस्य शृण्वत इत्युपस्कर्तव्यम् । धर्मराजमुखेन तां श्रावयन्नाहेत्यर्थः । तथाह्यैषीके– **'–धृष्ट-द्युम्नसारथिः । गत्वा शशंस पाण्डुभ्यः'** [१०.१] इति, **'द्रौपदेया हता राजन् द्रुपदस्याऽत्मजैः सह'** [२] इति, **'तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः । पपात मह्यां धर्मात्मा–'**[७] इति च । यद्यपि भारते व्यत्यस्य पठ्यते । प्रथमं दूतः शिबिरदाहवार्तां धर्मराजायाऽह । ततः पाञ्चाली उपप्लाव्यादागतेति । आचार्यस्तु वस्तुगतिमाह– प्रथमं पाञ्चाली उपप्लाव्यादागता । पश्चाद् दूत आजगामेति । युक्तं चैतत् यद् धृष्टद्युम्नदूतः प्रथमं द्रौपद्या एव तत्सुतानां तद्भ्रातॄणां च विनाशमाचष्टेति । सा भीमायाऽह । **'भीमसेनकरे स्पृष्ट्वा कुपिता वाक्यमब्रवीत् । त्रातुमर्हसि मां भीम क्षत्रधर्म-मनुस्मरन् । जहि तं पापकर्माणं शम्बरं मघवानिव । नहि ते विक्रमे तुल्यः पुमानस्तीह कश्चन'** [११.२२–४] इति च । प्राद्रवद् रथमारुह्य । **'स काञ्चनविचित्राङ्गमारुरोह महारथम् । आदाय रुचिरं चित्रं समार्गणगुणं धनुः । नकुलं सारथिं कृत्वा द्रोणपुत्रवधे धृतः'** [११.२९–३०] इति च ॥ १५२ ॥ कृष्णासुतानां शिरांस्यादाय दुर्योधनं प्रयातः । सन्निकृष्टप्रयाणं सन्निहितमरणम् ॥ १५३ ॥

---

१. **'स्थितौ गौतमसात्वतौ च ।'** २. **'सर्वतः'** इति क्वचित् ।

दृष्ट्वा तदुक्तं च निशम्य पापस्तुष्टोऽत्यजत् साध्विति देहमाशु ।
भीमार्जुनाभ्यामथ केशवाच्च भीताः पृथग् द्रौणिमुखाः प्रयाताः ॥ १५४ ॥

तत्रैकलं द्रोणसुतं रथेन यान्तं रथी मारुतिरन्वधावत् ।
तमाद्रवन्तं[१] प्रसमीक्ष्य भीतः पराद्रवद् द्रौणिरतिद्रुताश्वैः ॥ १५५ ॥

आद्रवन्तं पुनर्दृष्ट्वा भीमं द्रोणात्मजो रुषा ।
आवृत्य युद्धयन् विजितोऽस्त्रं ब्रह्मशिर आददे ॥ १५६ ॥

एतस्मिन्नन्तरे कृष्णो धर्म्मजेनार्ज्जुनेन च ।
तत्राऽगमत् तदस्त्रं च भीमं चाव्यर्थतां[२] नयन् ॥ १५७ ॥

अवद्ध्यो भीमसेनस्तदस्त्रं चामोघमेव यत्[३] ।
विष्णुनैवोभयं यस्मात् क्लृप्तं[४] भीमोऽस्त्रमेव तत् ॥ १५८ ॥

**पृथक्पृथक् ॥ १५४–६ ॥ तदस्त्रमव्यर्थतां अमोघतां नयन्, भीमं च अवध्यतां नयन्निति योजना ॥१५७॥ तयोरव्यर्थता कुतो नेत्यत आह–अवध्य इति । यद् यस्मात् तस्मात् उभयमपि अव्यर्थतां नयन् इति**

---

कृष्णासुतानां शिरांसि दृष्ट्वा,'**कृते प्रतिकृतं पश्य हतपुत्रा हि पाण्डवाः । सौप्तिके शिबिरं तेषां हतं सनरवाहनम्'** [९.५१] इति तदुक्तं च निशम्य, साधु कृतमिति तानभिनन्द्य देहमत्यजत् । **'न मेऽकरोत् तद् गाङ्गेयो न कर्णो न च ते पिता । यत् त्वया कृपभोजाभ्यां सहितेनाद्य मे कृतम्'** [५४] इति च ॥ १५४ ॥ रथेन यान्तम् । साम्प्रते भारतपाठे भागीरथीतीरे व्याससविध आसीनं ददर्शेति पठ्यते– **'स ददर्श महात्मानमुदकान्ते यशस्विनम् । कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह । तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम् । रजसा ध्वस्तमासीनं ददर्श द्रौणिमन्तिके'** [१३.१४–५] इति । नहि व्यासनिकटे स्थितस्याश्वत्थाम्नो भीमाद् भयम् । नह्यश्वत्थामाऽपि व्यासाश्रमे ब्रह्मशिरः प्रयुयोजेति साम्प्रतम् । तस्मात् तदिदं भीमस्य मानसं दर्शनमिति वास्तवं दर्शनमाह– रथेन यान्तं मारुतिरन्वधावदिति । ब्रह्मशिरःप्रयोगानन्तरं व्यासस्तत्राऽजगामेत्युत्तरवचनविरोधाच्च नेदं व्यासाश्रमे समघटतेति ज्ञायते । तथाहि भारते–**'महर्षी सहितौ तत्र दर्शयामासतुस्तदा । नारदः सर्वधर्मात्मा भरतानां पितामहः'** [१४.११–२] इति ॥ १५५–६ ॥ भीमं चाव्यर्थतां नयन् । अस्त्रस्यामोघत्वं भीमस्य चावध्यत्वं मा स्म नाम भज्येतामिति । **'स संरम्भी**

---

१. **'समाद्रवन्तम्'** इति क्वचित् ।
२. **'चामोघताम्'** इति क्वचित् ।
३. **'–मेव च ।'** इति क्वचित् ।
४. **'कृतं भीमो–'** इति क्वचित् ।

गायत्री तत्र मन्त्रो यद् ब्रह्मा तद्ध्यानदेवता[1] ।
ध्येयो नारायणो देवो जगत्प्रसविता स्वयम् ॥ १५९ ॥

ऊचे च पार्थयोः कृष्णो यत् कृतं द्रौणिना पुरा ।
स्वायुधानां याचनं चाप्यशक्तेन तदुद्धृतौ ॥ १६० ॥

पृष्टेनोक्तं त्वया हीनां कृत्वा दुर्य्योधनाय गाम् ।
दातुं त्वदायुधं मेऽद्येत्येवमुक्ते त्मनोदितम् ॥ १६१ ॥

मैवं कार्षीः पुनरिति ध्यायताऽब्धेस्तटे स्वमु ।
तदस्त्रं प्रज्वलद् दृष्ट्वाऽपाण्डवत्वविधित्सया ॥ १६२ ॥

**सम्बन्धः । उभयोरवध्यतादिकं कुत इत्यत आह–विष्णुनेति । उभयं भीमस्यावध्यत्वमस्त्रस्यामोघत्वं चेत्युभयम् । यस्मात्, तस्मात् अवध्यत्वमोघत्वं च नियतमुभयोरिति वाक्यशेषः । प्रकारान्तरेणावध्यत्वादिकं वक्तुं प्रकृतास्त्रस्वरूपमाह– भीम इत्यादिना । तदस्त्रं भीम एव भीमेनाभिमन्यमानमेव । भीमस्यास्त्राभिमानिब्रह्मणा साम्यात् भीम एवेत्युक्तिः । भीमास्त्रयोरभिमान्यभिमन्यमानभावात् परस्परं न वध्यघातकभाव इति भावः[2] ॥ १५८–६१ ॥ स्वमु स्वमेव ॥ १६२–३ ॥**

---

**दुरात्मा च चपलः क्रूर एव च । वेद चास्त्रं ब्रह्मशिरस्तस्माद् रक्ष्यो वृकोदरः'** [१२.४१] इति श्रीकृष्णवचनमनेन विवृतम् ॥ १५७–८ ॥ तद्ध्यानदेवता । गायत्रीध्याने ब्रह्माऽभिमानिदेवता । ध्यानकाले ध्येयस्य भगवतो रूपदर्शनाय ध्यातुश्चित्तप्रवर्तक इत्यर्थः ॥ १५९ ॥ द्रौणिना पुरा पाण्डवानां वनवाससमये । **'ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत । अवसद् द्वारकामेत्य वृष्णिभिः परमार्चितः'** [१२.११] इति । आयुधानामुद्धृतावशक्तेनापि, स्वायुधानां चक्रादीनां याचनं च, नीचं याचनं यत् कृतं तदूचे । **'नीचत्वे चः प्रयुज्यते'** इत्यभिदधति । **'भारताचार्यपुत्रस्त्वं मानितः सर्वयादवैः । चक्रेण रथिनां श्रेष्ठ कं नु तात युयुत्ससे'** [१२.३५] इति मया पृष्टेन तेन यदुक्तं त्वद्विनाशाय त्वदायुधं मेऽभिलषितमद्येति तदप्यूचे । **'प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वया सह । प्रार्थितं ते मया चक्रं देवदानवपूजितम् । अजेयः स्यामिति विभो सत्यमेतद् ब्रवीमि ते'** [१२.३६–७] इति च । एवं तेनोक्ते अब्धेस्तटे स्वात्मानमेव ध्यायता यदात्मनोदितं तदप्यूचे । **'स कदाचित् समुद्रान्ते वसन् द्वारवतीमनु । एक एकं समागम्य मामुवाच हसन्निव'** [१२.१२] इति च ॥ १६०–१ ॥ प्रसक्तं ब्रह्मशिरोस्त्रवृत्तमाह–तदस्त्रमिति । धरायामपाण्डवत्वविधित्सया । तेनापि

---

१. **'ब्रह्माऽत्र ध्यान–'** इति क्वचित् ।

२. इतः परमादर्शे–**'स्वे दुःस्वप्नमेव'** इति पठ्यते । किमप्यनन्वितम् । प्रायः **'स्वप्नेऽपश्यद्धि'** (१४०) इत्यस्य व्याख्याने पठनीयमत्र लिपिकृता भ्रान्त्या लिखितिमिति भाति । तथाच तत्रैवं पाठः स्यात्–**'स्वप्नेऽपीति । स्वप्ने दुःस्वप्ने पश्यति अपश्यत् यस्मादित्यर्थः'** इति ।

धरायां द्रौणिना मुक्तं कृष्णेन प्रेरितोऽर्ज्जुनः ।
स्वस्त्यस्तु द्रोणपुत्राय भूतेभ्यो मह्यमेव च ॥ १६३ ॥

इति ब्रुवंस्तदेवास्त्रमस्त्रशान्त्यै व्यसर्ज्जयत् ।
अनस्त्रज्ञेषु मुक्तं तद्धन्यादस्त्रमुचं यतः ॥ १६४ ॥

गुरुभक्त्या ततो द्रौणेः स्वस्त्यस्त्वित्याह वासविः ।
तदाऽस्त्रयोस्तु[1] संयोगे भूतानां संहृतिर्भवेत् ॥ १६५ ॥

भूतानां स्वस्तिरप्यत्र काङ्क्षिता करुणात्मना ।
तथाऽप्यस्त्रद्वयं युक्तं भूतानां नाशकृद् ध्रुवम् ॥ १६६ ॥

तस्मान्निवारयन् योगं तयोर्म्मद्ध्येऽभवत् क्षणात् ।
निस्सीमशक्तिः परमः कृष्णः सत्यवतीसुतः ॥ १६७ ॥

संस्थाप्यास्त्रद्वयं दूरे तावाह पुरुषोत्तमः ।
सन्ति ह्यस्त्रविदः पूर्वं प्रायश्चैतन्न तैः कृतम् ॥ १६८ ॥

**भीमार्जुनयोरस्त्रज्ञत्वे सत्यपि युधिष्ठिरादीनामनस्त्रज्ञत्वात् सामान्यतस्तद्विषयेऽपि मुक्तमस्त्रमुचं द्रौणिं हन्यायतः ततः ॥ १६४ ॥ भवेत् यतः ततः करुणात्मना पार्थेन भूतानामपि स्वस्तिः काङ्क्षिता यद्यपि तथाऽपि युक्तं तदस्त्रद्वयं भूतानां नाशकृत् भवेत् । यस्मात् तस्मात् तयोर्योगं निवारयन् कृष्णः तयोर्मध्ये क्षणा-(दभवत्) ॥ १६५–७ ॥ अस्त्रविदः त्वदस्त्रसंयोगात् पूर्वमभवन्, इदानीं सन्तीति योज्यम् ॥१६८–७०॥**

---

शर्वत्रातो नास्त्रविषयः । स हि तदा धरायां न बभूव । कारणान्तरं च पूर्वमुदितम्–पाण्डवेषु शर्वत्रातं विनाऽन्यानेव हन्त्विति शिवेन चिन्तितत्वादिति [१४८] । पूर्वं शिवेन 'तं विना' इति चिन्तितम् । ततोऽश्वत्थाम्ना भगवत्सङ्कल्पानुसारेणाजानताऽपि 'धरायामपाण्डवत्वाय' इति चिन्तितम् । येन भाविकालेऽपि तस्य धरायामागमनं निवारितं स्यात् । **'पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने । भ्रातृभ्यश्चैव सर्वेभ्यो स्वस्तीत्युक्त्वा परन्तपः । देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः । उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम्'** [१४.५–६] इति च ॥ १६२–५ ॥ तथाऽपि स्वस्त्यस्तु इति, अस्त्रमस्त्रेण शाम्यतामिति प्रार्थनेऽपि, विधिनोपसंहारं विना भूतानां नाशकृदेव ॥ १६६–७ ॥ सन्ति आसन् ॥ १६८–९ ॥

---

१. 'तदस्त्रयोस्तु'

लोकोपद्रवकृत् कर्म्म सन्तः कुर्य्युः कथं क्वचित् ।
इत्युक्ते फल्गुनः प्राह मया मुक्तं महापदि ॥ १६९ ॥

शान्त्यर्थमेव च विभो क्षन्तव्यं भवता ततः ।
द्रौणिरप्येवमेवाऽह तौ वेदपतिरब्रवीत् ॥ १७० ॥

निवर्त्यतामस्त्रमिति शक्रसूनुस्तथाऽकरोत् ।
निवर्त्तनाप्रभुं द्रौणिं वासुदेवोऽभ्यभाषत[1] ॥ १७१ ॥

क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः ।
निवर्त्तने ततः शक्तो नायं द्रोणात्मजोऽपि सन् ॥ १७२ ॥

अब्रह्मचर्य्यादित्युक्ते व्यासो द्रौणिमभाषत ।
निवर्त्तनासमर्थस्त्वं देहि नैसर्ग्गिकं मणिम् ॥ १७३ ॥

जितः प्रागेव भीमेन भीमायैव महाप्रभम् ।
अपि केवलया वाचा पार्थेभ्योऽस्त्रं निवर्त्तय ॥ १७४ ॥

**द्रौणिम्, दृष्ट्वेति शेषः ॥ १७१ ॥ अयमश्वत्थामा द्रोणात्मजः सन्नपि अब्रह्मचर्यात् न, अस्त्रनिवर्तने प्रभुरिति शेषः ॥ १७२–५ ॥**

---

एवमेव 'मयाऽपि महापदि मुक्तम्' इत्याह । अतः निवर्त्यतामस्त्रमिति वेदपतिरब्रवीत् ॥ १७०–१ ॥ **'सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः । गुरुवर्ती च तेनास्त्रं सञ्जहारार्जुनः पुनः'** [१५.१०] इति च ॥१७२॥ अब्रह्मचर्यात् । स किल द्रौपदेयान् हत्वा दुर्योधनभार्यायां पुत्रमुत्पाद्य तं कुरुराज्येऽभिषेक्ष्यामीति दुर्योधनस्य पुरः प्रतिजज्ञे । तस्मिन्नेव क्षणे तस्य नष्टं ब्रह्मचर्यम् । अर्जुनस्तु भार्याभिरभिगतोऽपि प्राजापत्यब्रह्मचर्यं पालयन् ब्रह्मचार्येव बभूव । स्वभार्यागमनमृतौ हि ब्रह्मचर्यमेव प्राजापत्यं नाम । देहि नैसर्गिकं मणिम्– **'मणिं चैव प्रयच्छाद्य यस्ते शिरसि तिष्ठति । एतदादाय ते प्राणान् प्रतिदास्यन्ति पाण्डवाः'**[१५.२७] इति च ॥ १७३ ॥ अस्त्रं निवर्तय । **'पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव नः । तस्मात् संहर दिव्यं त्वमस्त्रमेतन्महाभुज । अरोषस्तव चैवास्तु पार्थाः सन्तु निरामयाः'**

---

१. '–देवोऽप्यभाषत'

इत्युक्तो मूर्द्धजं रत्नं जरामरणनाशनम् ।
क्षुत्तृट्श्रमापहं दिव्यगन्धं[1] ध्वान्तहरं शुभम् ॥ १७५ ॥

उत्कृत्य भीमाय ददौ मुक्ताः पञ्चैव पाण्डवाः ।
अस्त्रादिति ततो वेदभर्त्ता वासविमब्रवीत् ॥ १७६ ॥

तात मुक्तं द्रौणिनाऽपि त्वमेवास्त्रं निवर्त्तय ।
इत्युक्तस्तं प्रणम्याऽशु सञ्जहारार्ज्जुनोऽपि तत् ॥ १७७ ॥

यादवेशोऽथ गौतम्याः सुतमाहैकसन्ततेः ।
वाचा निवर्त्तयास्त्रं ते[2] इत्युक्तो द्रौणिरब्रवीत् ॥ १७८ ॥

पक्षपातादिच्छसि त्वं भागिनेयस्य सन्ततिम् ।
तत्रैव पातयाम्यस्त्रमुत्तरागर्भकृन्तने ॥ १७९ ॥

**अस्त्रात् पञ्च पाण्डवा एव मुक्ता इति, अब्रवीदिति शेषः ॥ १७६ ॥ अर्जुनः तत् अस्त्रमपि सञ्जहार ॥ १७७–८ ॥ उत्तरागर्भकृन्तने उत्तरागर्भकृन्तनार्थम् ॥ १७९ ॥**

---

[१५.२५–६] इति च । ननु पूर्वमेव–**'अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे । द्रौणिर्दीनमना राजन् द्वैपायनमभाषत'** [१५.१२] इत्युक्तम् । तत् कथं पुनर्व्यास उवाच त्वमस्त्रं संहरेति? अत उपयुक्तं पूरयन् वाक्यार्थमाह– अपि केवलया वाचेति ॥ १७४–५ ॥ अस्त्रादित्युक्त्वा भीमाय ददौ ॥ १७६ ॥ **'प्रजोपप्लवमालक्ष्य लोकव्यतिकरं च तम् । मतं च वासुदेवस्य सञ्जहारार्जुनो द्वयम्'** [१.७.३२] इति भागवते ॥ १७७ ॥ केवलं गर्भस्थाया एकस्याः सन्ततेः सन्तानात् तेऽस्त्रं वाचा निवर्तय ॥ १७८ ॥ भागिनेयस्य सुभद्रातनयस्याभिमन्योः । तत्र गर्भस्थायां भागिनेयसन्ततावेव । उत्तरागर्भस्य कृन्तनार्थं नाशनार्थम् । कृती च्छेदने । केचिद् वैयाकरणाः कृन्तनमिति रूपं नाभ्युपयन्ति । कर्तनमिति पठितव्यं न कृन्तनमितीति । अभ्युपगमेऽनभ्युपगमे वा के ते? यावता महान्तः प्रयुञ्जते । तथाहि प्रयोगः–**'कृन्तनं नखकेशानाम्'** इति नारदः । **'विरहिनिकृन्तनकुन्तमुखाकृतिकेतकिदन्तुरिताशे'** इति जयदेवः । **'नखनिकृन्तनेन'** इति श्रौतः प्रयोगः । **'नातः परं कर्मनिबन्धकृन्तनम्'** [६.२.४९] इति भागवते ॥ १७९ ॥

---

१. **'–श्रमहरं दिव्यं गन्धध्वान्त–'** । **'–श्रमापहं दिव्यं गन्धध्वान्त–'** इति क्वचित् । २. **'–यास्त्रं त्वमित्युक्तो–'**

वासुदेवः पुनः प्राह यदि हन्तव्य एव ते ।
गर्भस्तथाऽपि नैवास्त्रं पातयास्मिन् कथञ्चन ॥ १८० ॥

अभिमन्योर्मृतस्यैव देहे पातय मानद ।
एवं त्वदस्त्रनिहतं गर्भमुज्जीवयाम्यहम् ॥ १८१ ॥

पातये गर्भ एवाहमित्यूचे गौतमीसुतः ।
अथाऽह वासुदेवस्तमीषत्क्रुद्ध इव प्रभुः ॥ १८२ ॥

दुर्म्मते पश्य मे वीर्य्यं यत् ते शक्यं कुरुष्व तत् ।
उज्जीवयाम्यहं गर्भं यततः शक्तितोऽपि ते ॥ १८३ ॥

सन्ततिर्वर्षसाहस्रं पाण्डवानां भवेद् भुवि ।
मत्पालितां न कश्चित् तां तावद्धन्तुं क्षमः क्वचित् ॥ १८४ ॥

**यदि ते गर्भः हन्तव्य एव इत्यभिप्रायः तथाऽपि अस्मिन् गर्भे अस्त्रं कथञ्चन न पातय, मदाज्ञयेति शेषः ॥ १८० ॥ यदि पश्च पाण्डवा एवास्त्रान्मुक्ता इति वदतस्तव पाण्डवेभ्योऽन्यत्रास्त्रं पातनीयमिति निर्बन्धस्तर्हि हे मानद, मृतस्याभिमन्योः देहे पातय इति परिहासोक्तिरियम् । एवं गर्भं पातयामीति निर्बन्धात् त्वया गर्भे अस्त्रे मुक्तेऽपि ॥ १८१–२ ॥ शक्तितः यततोऽपि ते सकाशात् ॥ १८३–८५ ॥**

---

'गर्भो हन्तव्य एवेति यद्याग्रहः, तर्हि भ्रूणे कृपया त्यज दुराग्रहम् । त्यक्त्वा नैवास्मिन् भ्रूणेऽस्त्रं पातय । तेन तवैव महान् लाभः । अथच गर्भो हन्तव्य एवेति तव दुराशा सावकाशेति परिहसति । गर्भ इति भ्रूण उच्यते । गर्भ इत्यर्भक उच्यते । गर्भ इति कुक्षिरुच्यते । यदि हन्तव्य एव गर्भः । तदाऽपि प्रतीक्षस्व । जायतामयं गर्भगोऽर्भकः । ततो यथेच्छं पातय ॥ १८० ॥ अथच, यदि गर्भेऽस्त्रं पातनीयमेव, तर्हि सुभद्राया गर्भे तनयेऽभिमन्यौ पातय । ननु स मृतः? भवतु मृतस्यैव देहे पातय । सर्वथा त्वयाऽस्त्रमोचनं मृतस्य मारणमिवार्थशून्यमित्यर्थः । अथच एवमपि त्वदाग्रहमेव पुरस्कृत्य उत्तराया गर्भे एवास्त्रमोचनेऽपि न काऽपि क्षतिः । यतः गर्भमुज्जीवयाम्यहम् ॥ १८१–२ ॥ **'अहमेनं मृतं जातं जीवयिष्यामि बालकम्'** [१५.४१], **'षष्टिं वर्षाणि धर्मात्मा वसुधां पालयिष्यति । इतश्चोर्ध्वं महाबाहुः कुरुराजो भविष्यति । परीक्षिन्नाम नृपतिर्मिषतस्ते सुदुर्मते । पश्य मे तपसो वीर्यं सत्यस्य च नराधम'** [११–२] इति च । तं हन्तुं यथाशक्ति यतमानस्यापि ते पुरत एव ॥ १८३ ॥ सहस्राणां समुदायः साहस्रम् । वर्षाणां साहस्रं वर्षसाहस्रम् । त्रीणि वर्षसहस्राणीति स्फुटमुपरि ॥ १८४ ॥

जानामि ते मतिं दुष्टां जिघांसोः पार्थसन्ततिम् ।
चिकीर्षोर्द्धार्त्तराष्ट्रस्य तन्तुं भूयः सुदुष्करम् ॥ १८५ ॥

मदाज्ञया सा विफला भवित्री वाञ्छा मुमुक्षा विमुखस्य[१] विष्णोः ।
यथैव तेनैव नराधिरूढो गम्यस्तव स्यान्नच भूमिभागः ॥ १८६ ॥

दुर्गन्धयुक्तो व्रणसञ्चिताङ्गः सदा चरः स्या विपिनेषु मन्द[२] ।
यावद् भुवि स्यादिह पार्थतन्तु[३]र्व्यासोऽपि तं प्राह तथेति देवः ॥ १८७ ॥

रूपद्वयेनापि हरेस्तथोक्तो जगाद काळीतनयं[४] स कृष्णम् ।
त्वया सह स्यान्मम सङ्गमो विभो यथेष्टतः स्यान्नच मेऽत्र विघ्नः ॥ १८८ ॥

**मदाज्ञया तव सा वाञ्छा विफला भवित्री । विष्णोर्विमुखस्य मुमुक्षा मोक्षेच्छा यथा तथैवेति योजना । तेनैव मन्मतविरुद्धपाण्डवसन्ततिलोपादिकामनेनैव ॥ १८६ ॥ सदा व्रणसञ्चिताङ्गः अत एव दुर्गन्धयुक्तः । मन्द निःस(त्व) । विपिनेषु चरः । तथेति । यथा कृष्णेनोक्तं तथेति ॥ १८७–२०० ॥**

---

सुदुष्करम्, सर्वात्मना दुष्करम् ॥ १८५ ॥ यथा विष्णोर्विमुखस्य मुमुक्षा विफला तथैव ते वाञ्छा विफला भवित्री । तेनैव मद्विरोधाचरणेनैव । नराधिरूढः नरैरध्युषितः । **'तस्मात् त्वमस्य पापस्य कर्मणः फलमाप्नुहि । त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् । अप्राप्नुवन् क्वचित् काञ्चित् संविदं जातु केनचित् । निर्जनानसहायस्त्वं देशान् प्रविचरिष्यसि । भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः । पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः । विचरिष्यसि पापात्मंश्चिरमेको वसुन्धराम्'** [१६.६–८] इति च । एतेन–**'त्वं नराधिरूढ एव भविष्यसीति योग्यसुप्तिङोरध्याहारेण योजना । सहस्रं जना यत्र तिष्ठन्ति तत्र कोलाहलरूपेण नादं कुर्वन् द्रौणिस्तेषां शिरांस्यारूढस्तिष्ठतीति पौराणिकी कथा । अतो नराधिरूढ इत्युक्तम्'** इति भावप्रकाशिकावचनं प्रक्षिप्तमिति स्फुटम् । सर्वप्रमाणविरोधादनन्वयाच्च । त्रीणि वर्षसहस्राणीत्येतत् स्पष्टमाचष्ट– यावद् भुवि स्यादिह पार्थतन्तुरिति । व्यासोऽपि तं प्राह–**'यस्मादनादृत्य कृतं त्वयाऽस्मान् कर्म दारुणम् । ब्राह्मणस्य सतश्चेदं वृत्तमन्यायवर्तिनः । तस्माद् यद् देवकीपुत्र उक्तवानुत्तमं वचः । आलोकात् तव तद् भावि क्षुद्रकर्मन् व्रजेति ह'** [१६.१३–४] इति च ॥ १८७ ॥ जगाद काळीतनयम् । **'सहैव भवता ब्रह्मन् स्थास्यामि पुरुषेष्विह । सत्यवागस्तु भगवानयं च पुरुषोत्तमः'** [१६ .१५] इति च ॥ १८८ ॥

---

१. **'मुमुक्षोर्विमुखस्य'** २. **'विपिनेषु मन्दः ।'**
३. **'पार्थसन्ततिर्व्या–'** इति क्वचित् । ४. **'कालीतनयम्'**

**इत्युक्त ओमिति प्राह भगवान् बादरायणः ।**
**तं प्रणम्य ययौ सोऽपि स्वप्नदृष्टमनुस्मरन्** ॥ १८९ ॥

**स्वप्ने हि द्रौपदेयानां वधो दृष्टोऽत्मना निशि ।**
**अर्ज्जुनेन प्रतिज्ञानं[1] द्रौपद्यै स्ववधं प्रति** ॥ १९० ॥

**निबध्याऽनयनं चैव तेनैव शिबिरं प्रति ।**
**मुञ्चेति द्रौपदीवाक्यं नेति भीमवचस्तथा** ॥ १९१ ॥

**कृष्णवाक्यान्मणिं हृत्वा देशान्निर्यातनं[2] तथा ।**
**इत्यादि स्वप्नदृष्टं यत् प्रायः सत्यमभूदिति** ॥ १९२ ॥

**चिन्तयन् प्रययौ दावं[3] द्रौणिः शस्त्रभृतां वरः ।**
**स कृष्णोक्तमपि प्राप्य बादरायणशिष्यताम्** ॥ १९३ ॥

**प्राप्योत्तरद्वापरे च वेदान् संविभजिष्यति ।**
**ततः [4]सप्तर्षिर्भूत्वा पाराशर्य्यप्रसादतः** ॥ १९४ ॥

**एकीभावं स्वरूपेण यास्यत्यच्युतनिष्ठया ।**
**कृपोऽथ पाण्डवान् प्राप्य गौरवात् पूजितश्च तैः** ॥ १९५ ॥

---

भागवतीं कथां सङ्गमयन्नाह– स्वप्नदृष्टमनुस्मरन्निति । भारतोक्ता कथा सेयं जाग्रद्दर्शनभाषया । या तु भागवते प्रोक्ता स्वप्नदर्शनभाषया ॥ १८९–९२ ॥ दावमरण्यम् । **‘काननेऽपि दवदावौ’** इत्यभिधानम् । **‘जगाम विमनास्तेषां सर्वेषां पश्यतां वनम्’** [१६.१६] इति च । कृष्णोक्तं सदा विपिनचरत्वादि । बादरायणशिष्यतां च प्राप्य ॥ १९३ ॥ उत्तर-द्वापरे एकोनत्रिंशे । पाराशर्यप्रसादतः व्यासो भूत्वा तेन सन्दर्शितदिशा वेदान् विभजिष्यति विभक्ष्यति । अनिटमपि लृटि सेटं प्रयुञ्जते महान्तः स्पष्टत्वाय । यथा निर्वक्ष्यतीति वक्तव्ये निर्वहिष्यतीत्याचक्षते । विभक्ष्यतीति वक्तव्ये विभजिष्यती-त्याचक्षते । तेन **‘ऋद्धनोः स्ये’** [अ.सू.७.२.७०] इत्यत्र **‘भजादेश्च’** इति पूरणीयम् । आगामिनि च मन्वन्तरे व्यास-प्रसादत एव सप्तर्षिर्भूत्वा । सप्तस्वेकः ऋषिः सप्तर्षिः । **‘सप्तऋषिर्भूत्वा’** इति विश्लिष्य पाठेन छन्दःपूर्तिः । व्यासप्रसादतः अच्युते निष्ठया मनोयोगेन स्वरूपेणैकीभावं यास्यति ॥ १९४–६ ॥

---

१. **‘प्रतिज्ञातं द्रौ–’** २. **‘न्निर्यापणं तथा’** ३. **‘देवम्’** ४. **‘सप्तऋषिर्भूत्वा’** इति विश्लिष्य पठनीयम् ।

**अभूदाचार्य्य एवासौ राज्ञां तत्तन्तुभाविनाम् ।**
**बादरायणशिष्यत्वं पुनः प्राप्य भजन्नमुम् ॥ १९६ ॥**

**साकं स्वभागिनेयेन भाव्येको मुनिसप्तके ।**
**कृतवर्म्मा द्वारवतीं ययौ कृष्णानुमोदितः ॥ १९७ ॥**

**कृष्णायै तं मणिं दत्वा भीमस्तां पर्य्यसान्त्वयत् ।**
**विकोपा भीमवाक्येन राज्ञे सा च मणिं ददौ ॥ १९८ ॥**

**राजार्हे हि[1] मणौ दत्ते मह्यं भीमेन लौकिकाः ।**
**स्त्रीपक्षपातं राजा च शङ्केयुर्म्मारुतेरिति ॥ १९९ ॥**

**मणिं राज्ञे ददौ कृष्णा भर्त्तृप्रियहिते रता ।**
**सोऽप्याबद्ध्य मणिं मूर्ध्नि रेजे राजा गवामिव ॥ २०० ॥**

**वेदेश्वरेणापि यदूत्तमेन कृष्णेन युक्तास्तत आशु पार्त्थाः ।**
**ययुः सभार्य्या निजराजधानीं [2]हत्वैव सन्तोऽन्तररीन् स्वराज्यम् ॥ २०१ ॥**

**अन्तररीन् हत्वेत्युपलक्षणम् । भगवदपरोक्षेण चेति ग्राह्यम् ॥ २०१ ॥**

---

स्वभागिनेयेन द्रौणिना ॥ १९७ ॥ राज्ञे सा च मणिं ददौ । **'शिरस्येतं मणिं राजा ग्रहीतुमनघोऽर्हति'** [१६.३०] इति च द्रौपदीवचनम् ॥ १९८ ॥ लौकिका नागरिकाः, राजा च मारुतेर्भीमस्य स्त्रीपक्षपातं शङ्केयुः शङ्केरन्निति ॥१९९॥ राजा गवामिव । गाव इति रश्मयः । गवां राजा सूर्य इव । गाव इति स्वर्गलोकाः । गवां राजा इन्द्र इव ॥२००॥ समाप्तं सङ्ग्रहसौप्तिकम् । अथ स्त्रीपर्वकथां सङ्क्षिप्याऽह । वेदेश्वरेणापि कृष्णेन । यदूत्तमेनापि कृष्णेन । अन्तररीन् अविद्या-कामादीन् हत्वा सन्तः ज्ञानिनः अपरोक्षज्ञानिन इत्येतत् । **'सन् विद्वान्'** इति चाभिधानम् । स्वराज्यं मोक्ष-राज्यमिव । अत्र प्राचीनादर्शे **'हत्वैव'** इति पठ्यते । इवार्थोऽयमेवकारः । **'एवौपम्येऽवधारणे'** इति चाभिधानम् । न केवलं बाह्यानरीन्, अन्तररीन् कामादींश्च हत्वैव स्वराज्यं ययुः प्रापुः । निजराजधानीं च ययुरिति वा । **'हत्वेव'** इति पाठे स्वरसोऽर्थः ॥ २०१ ॥

---

१. **'राजार्हे च मणौ'** २. **'हत्वेव'**

**युधिष्ठिरस्यानु विचित्रवीर्य्यसुतस्य पादावभिवन्दमानम् ।**
**आकृष्य भीमं परमेश्वरोऽयमयाकृतिं[1] धात् पुरतो नृपस्य ॥ २०२ ॥**

**भीमाकृतिं तां स सुयोधनेन [2]कारापितामभ्यसने गदायाः ।**
**आश्लिष्य[3] चूर्णीकृतवानसृग् वमन् हा तात भीमेति वदन् पपात ॥ २०३ ॥**

**तमाह कृष्णो न हतोऽद्य भीमो नच त्वयाऽन्यैरपि शक्यतेऽसौ ।**
**हन्तुं स्वबुद्धिः प्रथिता त्वयाऽद्य पापा हि ते बुद्धिरद्यापि राजन् ॥ २०४ ॥**

**स्वबुद्धिदोषादतिपापशीलपुत्राख्यपापानि विवर्द्धयित्वा ।**
**नीतो वशं तैः फलमद्य भुञ्जन् न क्रोधितुं चार्हसि भीमसेने ॥ २०५ ॥**

**धात् अधात् ॥ २०२–१० ॥**

---

युधिष्ठिरकर्तृकात् पादाभिवन्दनादनन्तरम् । प्राचीनादर्शे **'परमेश्वरोऽयमयाकृतिम्'** इति पठ्यते । **'परमेश्वरः, अयम्, अयाकृतिम्'** इति प्रतृण्णम् । अयमर्थः– धृतराष्ट्रस्य पादावभिगत्य नामाभिधानपूर्वं वन्दितुमुद्युक्तं भीममाकृष्य पाणिभ्या-मपसार्य परमेश्वरः सर्वसमर्थः सर्वविदयं कृष्णः अयाकृतिं अयसा निर्मितां भीमस्य आकृतिं प्रतिकृतिं धृतराष्ट्रस्य पुरतो धात् न्यधात् । ननु तर्हि **'अयआकृतिम्'** इति वक्तव्यम् । सत्यं वक्तव्यं भवादृशैः । महान्तः पुनः सन्धिगर्भं सन्धिं कृत्वा प्रयुञ्जते–शिरोपधानमिति, शिरोरुबाहव इति । तथा भगवत्पादोऽत्र 'अयाकृतिम्' इत्याह । अनुभूतिस्वरूपाचार्यः स्वकृते सारस्वतव्याकरणे **'लोपशि पुनः सन्धिं'** स्फुटमुदघोषयत् । **'अयस्मयाकृतिम्'** इति पाठः स्फुटार्थः । **'तस्य सङ्कल्पमाज्ञाय भीमं प्रत्यशुभं हरिः । भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम्'** [स्त्री.प.११.१५] इति च ॥२०२॥ कारापितां कारयित्वा लम्भिताम् । कारुभिरापितां वा । शब्दापयति सुखापयतीत्यादिवत् कारापयतीत्यपि रूपम् । तेन करोतेर्णिचि स्वार्थे आपुग् वक्तव्यः । **'तस्मात् पुत्रेण या तेऽसौ प्रतिमा कारिताऽऽयसी । भीमस्य सेयं कौरव्य तवैवोपहृता मया'** [११.२७] इति । **'उपगृह्यैव पाणिभ्यां भीमसेनमयस्मयम् । बभञ्ज बलवान् राजा मन्यमानो वृकोदरम् । नागायुतसमप्राणः स राजा भीममायसम् । भङ्क्त्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् । ततः पपात मेदिन्यां तथैव रुधिरोक्षितः'** [१७–८] इति । **'हतो भीम इति ज्ञात्वा गतमन्युर्महामनाः । हाहा भीमेति चुक्रोश नृपः शोकसमन्वितः'** [२१] इति च ॥ २०३ ॥ **'न त्वेतत् ते क्षमं राजन् हन्यास्त्वं यद् वृकोदरम्'** [११.२९] इति वचनाभिप्रायमाह– नच त्वयाऽन्यैरपि शक्यतेऽसौ हन्तुमिति । न क्षमं न शक्यमित्यर्थः । **'योग्ये शक्ते हिते क्षमम्'** इत्यभिधानम् ॥ २०४ ॥ पुत्राख्यस्य वस्तुतः शत्रोः । विगतनियन्त्रणं विपुलं वर्धयित्वा । भुञ्जन्, पराधीनो भोग इति परस्मैभाषा । भीमसेनाय क्रोद्धुं नार्हसि । अक्षराधिक्येन क्रोधस्य व्यर्थं दीर्घकालीनत्वं ध्वनयति ॥ २०५ ॥

---

१. **'–ऽयस्मयाकृतिम्'** । **'–ऽयोमयाकृतिम्'** इति क्वचित् । २. **'कारायिता–'** ३. **'आलिङ्ग्य'** इति क्वचित् ।

**इत्युक्ते शान्तबुद्ध्यैव राज्ञाऽऽहूतो वृकोदरः ।**
**अभ्यवन्दत तत्पादावनुजाद्याश्च तस्य ये ॥ २०६ ॥**

**वज्राच्च दृढदेहत्वादविकारे वृकोदरे ।**
**न दोषो विवृतोऽस्य स्यादिति कृष्णेन वञ्चितः ॥ २०७ ॥**

**सर्वानाश्लिष्य च प्रेम्णा युयोज नृप आशिषः ।**
**कुलनाशकरः पापः शापयोग्यस्तव ह्यहम् ॥ २०८ ॥**

**इत्युक्त्वैव प्रणमतो गान्धारी सुपदाङ्गुलीः ।**
**ददर्श धर्म्मराजस्य पट्टान्तेन[1] प्रकोपिता ॥ २०९ ॥**

**तस्याः क्रोधाग्निनिर्दग्धनखः स कुनखोऽभवत् ।**
**वन्दमानं पुनर्भीममाह सा क्रोधविह्वला ॥ २१० ॥**

**अधर्म्मतः कथं भीम सुतं मे त्वं निजघ्निवान् ।**
**इत्युक्तोऽस्याः[2] शमयितुं क्रोधमग्रे वृकोदरः ॥ २११ ॥**

**अग्रे प्रथमतः ॥ २११–२२ ॥**

---

अनुजाद्याश्च अभ्यवन्दन्त । अनुजा अर्जुनाद्यास्त्रयः । आद्यपदेन युयुधानो युयुत्सुः द्रौपदी पाञ्चालयोषितश्च । तथाहि जल-प्रदानिके–**'सोऽभ्ययात् पुत्रशोकार्तं पुत्रशोकपरिप्लुतः । शोचमानो महाराज भ्रातृभिः सहितस्तदा । अन्वीयमानो वीरेण दाशार्हेण महात्मना । युयुधानेन च तथा तथैव च युयुत्सुना । तमन्वगात् सुदुःखार्ता द्रौपदी शोक-कर्शिता । सहपाञ्चालयोषिद्भिर्यास्तत्राऽसन् समागताः'** [स्त्री.प.११.२–४] इति ॥ २०६–७ ॥ कुलनाशकरः । **'पुत्रहन्ता नृशंसोऽहं तव देवि युधिष्ठिरः । शापार्हः पृथिवीनाशे हेतुभूतः शपस्व माम्'** [१५.३] इति च । शोभनलक्षणयोः पदयोः सुलक्षणा अङ्गुलीः । पट्टान्तेन ददर्श । **'अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा'** [१५.७] इति च । पट्टं बन्धनपट्टिका । **'पट्टः पेषणपाषाणे व्रणादीनां च बन्धने'** इत्यभिधानम् । भीमेन निहताः सुता इति श्रुत्वैव कुपिता बभूव । इदानीं पाण्डवानां नमनार्थमागमनेन, पट्टान्तेन धर्मराजपदाङ्गुलिदर्शनेन च प्रज्वलितकोपा बभूवेत्याह– प्रकोपिता ॥ २०८–९ ॥ कुनखोऽभवत् । **'ततः स कुनखीभूतो दर्शनीयनखो नृपः'** [७] इति च । क्रोधविह्वला । क्रोधस्यान्तर्मनसि नियन्तुमक्षमत्वं वैह्वल्यम् । ह्वल चलने । अन्तरमिमानः क्रोधो वाग्रूपेण बहिर्निश्चक्रामेत्यर्थः ॥ २१० ॥ **'अधर्मो यदि**

---

१. **'पटान्तेन'** २. **'इत्युक्तेऽस्याः'**

प्राह न प्राणसन्देहे पापं स्यात् पापिनो वधे ।
इत्युक्त्वा तां पुनः प्राह प्रतिज्ञाहानिमन्तरा ॥ २१२ ॥

न मेऽस्ति प्राणसन्देह इति जानन् वृकोदरः ।
यथाप्रतिज्ञं भ्रातृव्यान् रणे मम निजघ्नुषः ॥ २१३ ॥

काधर्म्मः[1] क्षत्रजातेस्तु तद्धानौ जीवितं[2] नहि ।
पापा न शुद्धधर्म्मेण हन्तव्या इति च श्रुतिः ॥ २१४ ॥

अन्यवत् पापहननं पापायेत्याह हि श्रुतिः ।
अतोऽसुरान् नैकृतिकान् निकृत्या घ्नन्ति देवताः ॥ २१५ ॥

'निकृत्या निकृतिं हन्यान्निकृत्या नैव धार्म्मिकम्'[3] ।
इति श्रुतिर्हि परमा पठ्यते पैङ्गिभिः सदा ॥ २१६ ॥

इत्युक्ता तं पुनः प्राह कथं ते नरशोणितम् ।
पीतं नरेणैव सता न पीतमिति सोऽब्रवीत् ॥ २१७ ॥

दन्तान्तरं न मे प्राप शोणितं तत् सुतस्य ते[4] ।
प्रतिज्ञापालनायापि प्रतिकर्त्तुं च तत् कृतम् ॥ २१८ ॥

---

**वा धर्मस्त्रासात् तत्र मया कृतः । आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि'** [१४.२] इति भीमवचनाशय-माह– क्रोधमस्याः शमयितुमिति ॥ २११–२ ॥ भ्रातॄनथापि भ्रातृव्यान् शत्रून् । **'व्यन् सपत्ने'** [अ.सू.४.१.१४५] इति पाणिनिः । **'भ्रातृशब्दाद् व्यन् प्रत्ययो भवति । समुदायेन चेदमित्रः सपत्न उच्यते'** इति जयादित्यः ॥२१३॥ तद्धानौ भ्रातृव्यहननरूपधर्मत्यागे ॥ २१४–७ ॥ **'शत्रूणां तु प्रहृष्टानां त्रासः सञ्जनितो मया । स प्रतिज्ञामकरवं पिबाम्यसृगरेरिति । रुधिरं नातिचक्राम दन्तोष्ठादम्ब मा शुचः'** [१४.१५–६] इति च । **'मा कृथा हृदि तन्मातर्न तत् पीतं मयाऽनघे'** [१८] इति च ॥ २१८–९ ॥

---

१. **'कोऽधर्मः'**
२. **'जीवनं नहि'**
३. **'धार्मिकान् ।'**
४. **'शोणितं त्वत्सुतस्य तत्'** । **'त्वत्सुतस्य यत्'** इति क्वचित् ।

भीषणाय च शत्रूणां पीतवच्च प्रदर्शितम् ।
वेददृष्टश्च [1]धर्म्मोऽयमतिपापजनं प्रति ॥ २१९ ॥

इत्युक्तोवाच नैवान्धद्वयस्यास्य वृकोदर ।
घ्नता पुत्रशतं यष्टिमात्रं चोर्वरितं त्वया ॥ २२० ॥

तामाह भीमः पापिष्ठा वधयोग्यापराधिनः ।
सर्वे हता इति पुनः साऽऽह येनाकृतस्तव ॥ २२१ ॥

अपराधः स एकोऽपि किं नास्तीत्यवदत् स ताम् ।
सर्वैः समेतैः कृष्णस्य बन्धनाय विनिश्चितम् ॥ २२२ ॥

अन्यानि च सुपापानि कृतान्यत्र पुराऽपिच[2] ।
वासुदेवं सभासंस्थं ब्रुवाणं धर्म्मसंहितम्[3] ॥ २२३ ॥

पुनःपुनरवज्ञाय यान्तं दुर्योधनं बहिः ।
सर्वेऽन्वगच्छन्नित्यादीन्यभिप्रेत्य वृकोदरः ॥ २२४ ॥

नैकोऽप्यनपराधी मे स्वयंताननुशिक्षितुम् ।
असमर्था मयि क्रोधं किं करोषि निरर्थकम् ॥ २२५ ॥

इत्युक्ता साऽभवत् तूष्णीं क्रमात् सर्वैश्च पाण्डवैः ।
वन्दिता व्यासवाक्याच्च किञ्चिच्छान्ताऽथ[4] साऽभवत् ॥ २२६ ॥

**धर्मसंहितः धर्मसम्बद्धः यथा भवति तथा ब्रुवाणम् ॥ २२३–७ ॥**

---

यष्टिमात्रं च नोर्वरितम् । **'नाशेषयः कथं यष्टिमेकां वृद्धयुगस्य वै'** [१४.२३] इति च ॥ २२०–२ ॥ धर्मसंहितं धर्मसम्मतं हितं च ॥ २२३–४ ॥ नैकोऽपि । **'अनिगृह्य पुरा पुत्रानस्मास्वनपकारिषु । न मामर्हसि कल्याणि दोषेण परिशङ्कितुम्'** [१४.२१] इति च ॥ २२५ ॥ **'न कोपः पाण्डवे कार्यो गान्धारि शममाप्नुहि'** [१३.७] **'अधर्मं जहि**

---

१. 'धर्मोऽयमिति' २. 'पुराऽपि हि ।' इति क्वचित् । ३. 'धर्मसंहिताम् ।' ४. '–च्छान्ता च सा'

तस्या याश्च स्नुषाः सर्वास्ताभिः सह पुरस्कृताम् ।
कृत्वा तं धृतराष्ट्रं च विदुरादींश्च सर्वशः ॥ २२७ ॥

पाण्डवाः प्रधनस्थानं सभार्य्याः पृथया सह ।
कृष्णाभ्यां च ययुस्तत्र गान्धार्य्यास्तपसो बलम् ॥ २२८ ॥

जानन् पाण्डवरक्षार्थं चिकीर्षुस्तत्तपोव्ययम् ।
वेदेश्वरो ददौ दिव्यं चक्षुः[1] सत्यवतीसुतः ॥ २२९ ॥

तेन दृष्ट्वा प्रेतदेहान् सर्वांस्तत्र समाकुला[2] ।
शशाप यादवेशानं त्वयाऽस्मत्कुलनाशनम् ॥ २३० ॥

यत् कृतं तत् तव कुलं गच्छत्वन्योन्यतः क्षयम् ।
इत्युक्तो भगवान् कृष्णः स्वचिकीर्षितमेव तत् ॥ २३१ ॥

अस्त्वेवमित्याह विभुरीश्वरोऽप्यन्यथा कृतौ ।
तेन तस्यास्तपो नष्टं हीना साऽतो हि भर्त्तृतः ॥ २३२ ॥

**गान्धार्याः दिव्यं चक्षुर्ददौ । दिव्यचक्षुरभावे युगपत् साकल्येन सर्वमृतकदर्शनानुपपत्तेः दिव्यचक्षुर्ददाविति ॥ २२८–३१ ॥ तपोनाशनमेकं कारणम् । कारणान्तरमाह– हीनेति । अतो हि (तेन हरये) शापेन**

---

**धर्मज्ञे यतो धर्मस्ततो जयः । सा त्वं धर्मं परिस्मृत्य वाचं चोक्तां मनस्विनि । कोपं संयच्छ गान्धारि पाण्डवेषु सुतेषु ते'** [१३.१२–३] इत्यादिव्यासवाक्याच्च ॥ २२६ ॥ पुरस्कृतां पुरोगां गान्धारीं कृत्वा । धृतराष्ट्रं विदुरादींश्च पुरस्कृतान् कृत्वा । सर्वशः सर्वान् ॥ २२७ ॥ प्रधनस्थानं युद्धभूमिम् । धनमिति निधनमुच्यते । प्रकामं निधनमत्रेति प्रधनम् । अथच विजयमानानां प्रकृष्टं धनं सम्पदप्यत्र । **'युद्धं महाधनं त्वर्भं प्रसिद्धं धनमेव हि'** इत्यृग्भाष्ये । कृष्णाभ्यां वासिष्ठयादवाभ्याम् ॥ २२८ ॥ दिव्यं चक्षुर्ददौ यथा पट्टबद्धनयनैव सर्वं दूरे समीपे च पश्येत् ॥ २२९ ॥ **'इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन । यस्मात् त्वया महाबाहो फलं तस्मादवाप्नुहि'** [२५.४१] **'तवाप्येवं हतसुता निहत-ज्ञातिबान्धवाः । स्त्रियः परिपतिष्यन्ति यथैता भरतस्त्रियः'** [४६] इत्यादि च ॥ २३०–१ ॥ अस्त्वेवमित्याह ।

---

१. **'ददौ चक्षुर्दिव्यं सत्य–'** २. **'समाकुलान् ।'** इति क्वचित् ।

नाशयेद्धि सदा[1] विष्णुः स्वयोग्यादधिकान् गुणान् ।
तत अश्लिष्य भर्त्तॄणां देहान् प्ररुदतीः स्त्रियः ॥ २३३ ॥

सर्वा दुर्य्योधनादीनां दर्शयामास केशवः ।
कृष्णायै सा च तं देवमस्तुवत् पूर्ण्णसद्गुणम्[2] ॥ २३४ ॥

ततो देहान् प्रसिद्धानां पार्त्थाः समदहन् सताम् ।
अन्येषां धृतराष्ट्रादीन् पुरस्कृत्यैव कांश्चन ।
सूतैः पञ्चभिरेव स्वैः सरस्वत्यां प्रचिक्षिपुः ॥ २३५ ॥

स्नेहान्नृपो यमौ च स्वान्[3] नाऽजौ तस्मिन् ह्ययोजयन् ।
शवाः प्रायो बहुत्वेन तत्रतत्रैव संस्थिताः ॥ २३६ ॥

ततो ददत्सु पानीयं गङ्गायां स्वजनस्य तु ।
पृथा कर्ण्णाय दत्तेति पार्त्थानाहाग्रजं च तम् ॥ २३७ ॥

**तपोनाशादेवेत्यर्थः । भर्तृतो हीना । अयं भावः– पूर्वं स्वयोग्यातिरिक्ततपोबलेन भर्तुरधिका सती स्वयोग्यातिरिक्ततपोनाशेनेदानीं हीनाऽऽसीदिति ॥ २३२–४ ॥ अन्येषां असताम् । प्रसिद्धानां कांश्चन, देहानिति शेषः ॥ २३५–६ ॥ दत्तेति पार्थानाह । तं चाग्रजमाह ॥ २३७ ॥**

---

**‘जानेऽहमेतदप्येवं चीर्णं चरसि क्षत्रिये । दैवादेव विनश्यन्ति वृष्णयो नात्र संशयः । संहर्ता वृष्णिचक्रस्य नान्यो मद् विद्यते शुभे । अवध्यास्ते नरैरन्यैरपि वा देवदानवैः’** [२५.४८–९] इति स्त्रीविलापे । अतः सा भर्तुर्योग्यताया हीना बभूव पूर्वमुन्नता सती ॥ २३२–४ ॥ अन्येषां देहान् सरस्वत्यां प्रचिक्षिपुः ॥ २३५ ॥ ननु भीमस्य विशोकः कृष्णोऽर्जुनस्येति द्वावेव सूतेषु युद्धात् प्रत्यागतौ । कथमथ तदितरेषां धर्मराजादिसूतानां मृतानामाहवे संस्कारकर्मणि नियोजनम्? एतामाशङ्कां परिहरति– स्नेहादिति । भीम एव केवलं स्वसारथिं विशोकं युद्धायोद्योजयामास । नान्ये । तत्र तावदर्जुनस्य स्वसारथिप्रहाणं कृष्णस्वीकरणं च सिद्धमेव । धर्मजादिभिस्त्रिभिरपि स्वसूता युद्धे नोद्योजिता एव । अन्यैरेव युद्धशौण्डैः सूतैर्निर्वाहात् । तेन पश्चापि सूताः पाण्डवानां जीवन्त्येव । तैः अन्येषां कांश्चन देहान् सरस्वत्यां प्राक्षिपन्निति । अप्रक्षिप्तानां देहानां का गतिः? आह– तत्रतत्रैव संस्थिताः ॥ २३६ ॥ **‘कर्णस्य सत्यसन्धस्य**

---

१. **‘–द्धि स्वयं विष्णुः’** २. **‘पूर्णषड्गुणम्’** ३. **‘स्वानाजौ तस्मिन् न्ययोजयन् ।’**

ततो हाहेति विलपन् राजा परमदुःखितः ।
शशाप सर्वनारीणां गुह्यं हृदि न तिष्ठतु ॥ २३८ ॥

हा मातस्तव धृत्यैव वयं सर्वे भृशं हताः ।
ज्येष्ठं पितृसमं हत्वा प्रतिपत्स्याम कां गतिम् ॥ २३९ ॥

एवं वदन्तं कौन्तेयं वासुदेवः सनारदः ।
शमयामास सद्वाक्यैर्गुणान् कर्ण्णस्य चाब्रवीत् ॥ २४० ॥

ततस्ते प्रेतकार्य्याणि चक्रुः सर्वेऽपि सर्वशः ।
सर्वेषामाधिराज्ये[1] च स्थितोऽभूत् पाण्डवाग्रजः ॥ २४१ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये[2]**
**अष्टाविंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **४४४१**+२४१=**४६८२**]

**ततः राजा युधिष्ठिरः परमदुःखितः हाहा इति विलपन् ॥ २३८–४१ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायामष्टाविंशोऽध्यायः

—०—

**सङ्ग्रामेष्वपलायिनः । कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः । स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत’** [२७.१२–३] इति श्राद्धे कुन्तीवचनम् ॥ २३७ ॥ **‘पापेनासौ मया श्रेष्ठो भ्राता ज्ञातिर्निपातितः । अतो मनसि यद् गुह्यं स्त्रीणां तन्न भविष्यति’** [२७.३२] इति च ॥ २३८–९ ॥ समाप्तः स्त्रीपर्वसङ्ग्रहः । अथ शान्तिपर्वकथामुपक्षिपति– एवं वदन्तमित्यादिना । **‘नेदानीमतिनिर्बन्धं शोके त्वं कर्तुमर्हसि । यदाह भगवान् व्यासस्तत् कुरुष्व नृपोत्तम । ब्राह्मणास्त्वां महाबाहो भ्रातरश्च महौजसः । पर्जन्यमिव घर्मान्ते नाथमाना उपासते । हतशिष्टाश्च राजानः कृत्स्नं**

१. **‘सर्वेषामधि–’**
२. मूलकोशेषु एतदध्यायनाम न निर्दिष्टम् । **‘पाण्डवराज्यलाभो नाम’** इति प्रचलितं नाम ।

**चैव समागतम्। चातुर्वर्ण्यं महाराज राष्ट्रं ते कुरुजाङ्गलम्। प्रियार्थमपि चैतेषां ब्राह्मणानां महात्मनाम्। नियोगादस्य च गुरोर्व्यासस्यामिततेजसः। सुहृदामस्मदादीनां द्रौपद्याश्च परन्तप। कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु'** [शां.प.३६.२१–५] इत्यादिभिः सद्वाक्यैः वासुदेवः शमयामास। **'एवं शप्तस्तव भ्राता बहुभिश्चापि वञ्चितः। न शोच्यः पुरुषव्याघ्र युद्धे हि निधनं गतः'** [शां.प.५.१५] इत्यादिना नारदः शमयामास। अत्र वासुदेव इति भगवान् बादरायणोऽपि। सोऽपि सनारदः शमयामास–**'एष धर्मः क्षत्रियाणां प्रजानां परिपालनम्। उत्पथेभ्यो महाराज मा स्म शोके मनः कृथाः'** [शां.प.२३.५२] इत्यादिसद्वाक्यैः। वेदमूलत्वं शिष्टाचारमूलत्वं च सत्त्वम्॥ २४०॥ सर्वशः सर्वाणि प्रेतकार्याणि सर्वेषां बन्धूनाम्। आधिराज्ये सर्वपृथ्वीपतित्वे॥ २४१॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतमष्टाविंशाध्यायविवरणं सतां हृदयाभरणम्॥**

**इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायामष्टाविंशोऽध्यायः**

—०—

२२-१०-१२

# एकोनत्रिंशोऽध्यायः

**[समस्तधर्म्मसङ्ग्रहः]**

**ॐ ॥ यदैव कृष्णौ सकलाधिराज्ये युधिष्ठिरं यौवराज्ये च भीमम् ।**
**विप्रैर्युतावभिषिच्याऽशिषश्च युक्ता दत्वा हर्षयामासतुस्तौ ॥ १ ॥**

**तदैव चार्वाक इति प्रसिद्धं रक्षस्त्रिदण्डी यतिरेव भूत्वा ।**
**युधिष्ठिरं गर्हयामास विप्रास्त्वां गर्हयन्तीति सुपापशीलम्[1] ॥ २ ॥**

**श्रुत्वैव तद् दुःखितमाशु धर्म्मजं दृष्ट्वा विप्राः शेपुरमुं भृशार्त्ताः ।**
**अगर्हितं नित्यमस्माभिरेनं यतोऽवोचो गर्हितमद्य पाप ।**
**भस्मीभवाऽश्वेव ततस्त्वितीरिते क्षणादभूत् पापतमः स भस्मसात् ॥ ३ ॥**

**ॐ ॥ १ ॥ प्रसिद्धं रक्षः । तत एव च (यतिर्भूत्वा) ॥ २–७ ॥**

---

ॐ ॥ अथ शान्त्यनुशासनपर्वणोः सारसङ्ग्रहोऽस्मिन्नध्याये । वासिष्ठयादवौ कृष्णौ । **‘यौवराज्येन कौन्तेयं भीमसेनमयोजयत्’** [शां.प.४०.९] इति च । विप्रैः धौम्यपुरोगैः । युक्ता अनुरूपा आशिषः । तौ व्यासकृष्णौ तौ युधिष्ठिरभीमौ हर्षयामासतुः ॥ १ ॥ आपातदर्शिनां चार्वी वागस्येति चारुवागेव चार्वाकः । **‘चारोरन्त्यलोपः वाचोऽन्त्यस्याकश्च’** । **‘राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् । तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः । साङ्ख्यः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः’** [३७.२२–३] इति च । त्रीन् दण्डानाबद्ध्य करे गृहीत्वा चरन् बाह्यतस्त्रिदण्डी । अन्तर्दण्डसङ्केतोऽयम् । त्रिकरणशुद्धिरन्तर्दण्डः । **‘वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च । यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते’** [म.स्मृ.१२.१०] इति मानवे । गर्हयन्तीति । **‘धिग् भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै । किं ते राज्येन कौन्तेय कृत्वेमं ज्ञातिसङ्क्षयम् । घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम्’** [२६–७] इति च । ‘विप्राः सुपापशीलं त्वां गर्हयन्ति’ इति सुपापशीलं रक्षो युधिष्ठिरं गर्हयामास ॥ २ ॥ आशु

---

१. **‘सुपापशीलः ।’**

**भस्मीकृतेऽस्मिन् यतिवेषधारिणि युधिष्ठिरं दुःखितं वृष्णिसिंहः ।**
**प्रोवाच नायं यतिरुग्रकर्म्मा सुयोधनस्यैव सखा सुपापः ॥ ४ ॥**

**रक्षोधमोऽयं निहतोऽद्य विप्रैस्तन्मा शुचः कृतकार्य्योऽसि[१] राजन् ।**
**इतीरितः शान्तमनाः स विप्रान् सन्तर्प्पयामास धनैश्च भक्त्या ॥ ५ ॥**

**असान्त्वयच्च बान्धवान् स पौरसंश्रितादिकान्[२] ।**
**ददौ यथेष्टतो धनं ररक्ष चानु पुत्रवत्[३] ॥ ६ ॥**

**स भीष्मद्रोणकर्ण्णानां वधाद् दुर्य्योधनस्य च ।**
**पापाशङ्की[४] तप्यमानो राज्यत्यागे मनो दधे ॥ ७ ॥**

---

शेपुरमुं चार्वाकम् । ततस्तु अगर्हितस्य गर्हणादेव । अगर्ह्यगर्हणमेव प्रथमं महत् पातकम् । सर्वे विप्रा गर्हयन्तीति मिथ्याभिशंसनं द्वितीयम् । सतां ब्राह्मणानामपवादारोपणं तृतीयम् । एकैकमपि शापदानायालम् । किमु समुदित-मिति तुनाऽऽह । पापतमः महापातकी । आश्वेव तस्मिन्नेव क्षणे । **'ततस्ते ब्राह्मणाः सर्वे हुङ्कारैः क्रोधमूर्छिताः । निर्भत्सयन्तः शुचयो निजघ्नुः पापराक्षसम्'** [३७.३५] इति च ॥ ३ ॥ नायं यतिः । किन्तूग्रकर्मा सुपापः पापतमो रक्षोधमः ॥ ४ ॥ मा शुचः मा शोचीः । अशुचदिति लुङि रूपान्तरं प्रतना मन्यन्ते । अरुहदितिवत् । **'मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव'**[भी.प.४०.५] इति भगवद्गीतायाम् [१६.५] । **'अशुचज्जातवेदाः'** [ऋ.सं.७.९.४] इति च श्रुतिः । मा शुचः मा शूशुच इति वाऽक्षरलोपेन । यद्वा **'ई शुचिर् पूतिभावे'** इति दिवादेर्धातोरिदं लुङि रूपम् । नन्वयं शुच्यतिः पूतिभावे पठ्यते । पूतिभावश्च क्लेदः । सत्यम्, पूतिभावे पठ्यते । शोकेऽपि पठनीयम् । तद्यथा शोचतिं शोके पठन्ति । दीप्तावपि प्रयुञ्जते । धनैस्तर्पयामास । भक्त्या सन्तर्पयामास ॥ ५ ॥ असान्त्वयत् असामयत्, साधुवचनैः समाधत्त । **'सान्त्व सामप्रयोगे'** । 'षान्त्व' इत्यन्ये । पौरा ये राजधान्यां वसन्ति । संश्रिता ये राजगृहेऽधि-कृताः । आदिना जानपदाः । सपौरसंश्रितादिकानित्येकं वा पदं बान्धवानित्यस्य विशेषणम् । **'दीनान्धकृपणानां च गृहाच्छादनभोजनैः । आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः'** [शां.प.४१.११] इति च । अनु अनुगुणं धनं ददौ । प्रजानामनुकूलो भूत्वा ररक्ष पिता पुत्रानिव, क्वचिच्च वृद्धान् पितॄन् पुत्र इव ॥६॥ दुर्योधनस्य च, नीचस्य दुर्यो-धनस्य वधादपि पुण्यकर्मणः पापाशङ्की । अत एव तस्य पृथगुक्तिः । भीष्मद्रोणकर्णानां शल्यस्य च वधात् पापमा समन्तात् शशङ्के । दुर्योधनस्य वधादपि पापमा ईषच्छशङ्के । तप्यमान इति तपतिरत्रानुतापे । पश्चात्तापेन दह्यमानः ॥ ७ ॥

---

१. **'–कार्योऽद्य राजन् ।'** २. **'–वान् स्वपौरसंश्रयादिकान् ।'**

३. **'चानु पूर्ववत् ।'** ४. **'पापशङ्की'**

**सोऽनुजैः कृष्णया विप्रैरप्युक्तो धर्म्मशासनम् ।**
**भीमं सम्प्रार्थयित्वैव न वेत्थ्सीत्याह फल्गुनम्** ॥ ८ ॥

**तस्मिन् क्रुद्धे नृपं प्राहुर्विप्रास्त्वत्तोऽपि तत्ववित्[1] ।**
**शक्रोऽर्ज्जुन इति श्रुत्वाऽप्येतद्धर्म्मे ससंशयम्** ॥ ९ ॥

**मत्स्नेहादेव सर्वेऽपि धर्म्मोऽयमिति वादिनः ।**
**इत्येवं शङ्कमानं तमूचतुर्विप्रयादवौ** ॥ १० ॥

**कृष्णौ धर्म्मोऽयमित्येव शास्त्रयुक्त्या पुनःपुनः ।**
**नातिनिश्चितबुद्धिं तं तदाऽपि पुरुषोत्तमौ** ॥ ११ ॥

**हतपक्षगतत्वेन तच्छङ्काया[2] अगोचरः ।**
**यतो भीष्मस्ततो याहि तमित्यूचतुरव्ययौ** ॥ १२ ॥

**धर्मशासनम् (धर्मैकपरं वचनम् । न वेत्सि), धर्मानिति शेषः ॥ ८–१६ ॥**

---

विप्रैः । विशिष्य देवस्थानेन नारदेन व्यासेन च । धर्मशासनं वचनम् । सम्प्रार्थयित्वैव । तदुक्तवचनानां सम्प्रतिपत्तिपूर्वकम्, अथापि मा स्म मां निर्बध्ना इति प्रार्थयित्वैव तं तूष्णीं कृत्वा, न वेत्सीत्याह फल्गुनम् । **'युद्धशास्त्रविदेव त्वं न वृद्धाः सेवितास्त्वया । समासविस्तरविदां न तेषां वेत्सि निश्चयम्'** [१९.१२] इति च । **'वेत्थ्सि'** इति वैदिका लिखन्ति व्याहरन्ति च । **'तथ् सवितुर्वरेण्यम्'** इतिवत् । प्रतना आचार्या एवं द्वितीयभावं मन्यन्त इत्याह वार्तिककारोऽपि–**'चयो द्वितीयाः शरि पौष्करसादेः'** इति [अ.सू.८.४.४८] इति । व्याचख्यौ च वामनः–**'चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन । तकारस्य थकारः–वथ्सः । ककारस्य खकारः–ख्षीरम् । पकारस्य फकारः–अफ्सराः'** । अत्र तु न तस्य थः । किन्तु तथौ सहैव पठ्येते इति विशेषः । तथाच तकारस्य द्वित्वम्, द्वितीयस्य थभावः ॥ ८ ॥ एवं तस्मिन् धर्मराजेऽर्जुनोपरि क्रुद्धे सति, ज्येष्ठवचनेन तस्मिन्नर्जुने च ईषत् क्रुद्धे सति सोदरयोः सामरस्याय विप्राः प्राहुः । त्वत्तोऽप्यधिकमर्जुनस्तत्ववित् । यतः स शक्रावतार इति । एतच्छ्रुत्वाऽपि ससंशयं विप्रयादवौ वासिष्ठवासुदेवौ कृष्णौ । शास्त्रवचनैर्युक्त्या च । शास्त्रसम्मतया युक्त्या च । पुनःपुनरूचतुः । तच्छङ्कायाः स्नेहादेव वदतीति शङ्कायाः यतोऽगोचरः ततस्तं याहि इत्यूचतुः । अव्ययौ शाश्वतधर्मगोप्तारौ । न व्ययधर्मौ, नापि जना धर्माद् व्ययन्त आभ्यामिति ॥ ९–१२ ॥

---

१. '–पि धर्मवित् ।'

२. 'त्वच्छङ्काया–'

**स ताभ्यां भ्रातृभिश्चैव मुनिभिश्च समन्वितः ।**
**भीष्मं ययौ लज्जितेऽस्मिंस्तं भीष्मायाऽह केशवः ॥ १३ ॥**

**पृच्छेत्युक्तः स भीष्मेण पप्रच्छाखिलमञ्जसा ।**
**[1]तत्रोवाचाखिलान् धर्म्मान् कृष्णो भीष्मशरीरगः ॥ १४ ॥**

**[2]भीष्मो ह्याह हरिं पार्था बोधनीयास्त्वयैव हि ।**
**का शक्तिर्म्मम देवेश पार्थान् बोधयितुं प्रभो ॥ १५ ॥**

**इत्युक्तो भगवानाह त्वत्कीर्त्यै त्वयि संस्थितः ।**
**प्रवक्ष्याम्यखिलान् धर्म्मान् सूक्ष्मं तत्वमपीति ह[3] ॥ १६ ॥**

---

मुनिभिश्च नारदादिभिः । तथाहि भारते–**'व्यासेन देवश्रवसा नारदेन सुरर्षिणा । देवस्थानेन वात्स्येन तथाऽश्मकसुमन्तुना । तथा जैमिनिना चैव पैलेन च महात्मना । शाण्डिल्यदेवलाभ्यां च मैत्रेयेण च धीमता । असितेन वसिष्ठेन कौशिकेन महात्मना । हारीतलोमशाभ्यां च तथाऽऽत्रेयेण धीमता'** [४६.६–८] इत्यादि । प्रतने दाक्षिणात्यपाठेऽन्यादृशी श्लोकानुपूर्वी–**'व्यासेन देवश्रवसा नारदेन सुरर्षिणा । तथा जैमिनिना चापि पैलेन च महात्मना । शाण्डिल्यगौतमाभ्यां च भारद्वाजेन धीमता । देवस्थानेन वात्स्येन तथाऽश्मेन सुमन्तुना । एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः । श्रद्धादमपुरस्कारैर्वृतश्चन्द्र इव ग्रहैः'** इति । सुन्दरः प्रतनः पाठः । अर्वाचीनाः व्यत्यस्यव्यत्यस्य पठित्वा सर्वमाकुलयन्ति । भीष्मायाऽह । धर्मजिज्ञासयाऽऽगतमथापि लज्जया नोपसर्पन्तमाह । **'लज्जया परयोपेतो धर्मराजो युधिष्ठिरः । अभिशापभयाद् भीतो भवन्तं नोपसर्पति'** [५४.११] इति च ॥ १३ ॥ पृच्छेत्युक्तः । **'तमुवाचाथ गाङ्गेयो वृषभः सर्वधन्विनाम् । मां पृच्छ तात विस्रब्धं मा भैस्त्वं कुरुसत्तम'** [२२] इति च । अञ्जसा विस्रब्धम्, यया छिद्येरन् सर्वसंशयाः । धर्मराजस्य न केवलम् । सर्वलोकस्यापि । भीष्मो वसुष्वेक इत्यश्वितुल्यः । स कथं स्वरूपोत्तमानां धर्मराजादीनां धर्मानाह? नायं दोषः । यतो भीष्मशरीरगः कृष्ण एवाऽह ॥ १४ ॥ पार्थाः, येषु भीम एकः, अतस्त्वयैव बोधनीया हि । सर्वशास्त्रसिद्धमेतत् । इति भीष्मोऽप्याह हि । लोके महाज्ञानित्वेन प्रथितो भीष्मः स्वयमाह । त्वं तु ब्रह्मादीनां देवानामीशः । अतस्त्वं पार्थान् बोधयितुं प्रभवसि । मम तु का शक्तिः? त्रिभिः कारणैः । पारयन्तीति हि पार्थाः । शास्त्रपारगामिनः पार्थान् बोधयितुं का मे शक्तिः । तत्राप्यासन्नमरणस्य । तदपि कृष्णस्य सन्निधौ । **'किञ्चाहमभिधास्यामि वाक्पते तव सन्निधौ । यदा वचोगतं सर्वं तव वाचि समाहितम्'** [५१.३], **'शराभितापाद् व्यथितं मनो मे मधुसूदन । गात्राणि चावसीदन्ति नच बुद्धिः प्रसीदति'** [६] इत्यादि च ॥ १५ ॥ त्वत्कीर्त्यै । **'आधेयं तु मया भूयो यशस्तव महाद्युते । ततो मे विपुला बुद्धिस्त्वयि भीष्म समाहिता'** [५३.२७] इति च ।

---

१. 'अत्रोवाचा–' २. 'भीष्मोऽस्याऽह' ३. '**–मपि त्विह ।**' इति क्वचित् ।

**राज्ञः प्रथमतो धर्म्मो भगवद्धर्म्मपालनम् ।**
**तदर्थं कण्टकोद्धारो धर्म्मा भागवता अपि ॥ १७ ॥**

**मनोवाक्कर्म्मभिर्विष्णोरच्छिद्रत्वेन चार्चनम् ।**
**पूर्णाशेषगुणो विष्णुः स्वतन्त्रश्चैक एव तु ॥ १८ ॥**

**तद्वशं सर्वमन्यच्च सर्वदेति विनिश्चयः ।**
**देवताक्रमविज्ञानमपूजाऽन्यस्य वै हरेः ॥ १९ ॥**

**पूजा भागवतत्वेन देवादीनां च सर्वशः ।**
**वृथा कर्म्माकृतिः क्वापि निराशीस्त्वं सदैव च ॥ २० ॥**

**विष्णोर्भागवतानां च प्रतीपस्याकृतिः सदा ।**
**परस्परविरोधे तु विशिष्टस्यानुकूलता ॥ २१ ॥**

**भागवता धर्माः, उच्यन्त इति शेषः ॥ १७–२६ ॥**

---

त्वयि सदा स्थितः । सम्प्रति संस्थितः । विशिष्य सन्निहितः । प्रस्फुटं वक्ष्यामि । सूक्ष्मं भगवत्तत्वं मोक्षधर्मं च । हेति भगवतः भक्तवात्सल्यं स्वदते ॥ १६ ॥ राजधर्म आपद्धर्मो मोक्षधर्म इति त्रीणि अवान्तरपर्वाणि शान्तिपर्वणः, भीष्मस्वर्गारोहणादृते समग्रमनुशासनपर्व च सप्तचत्वारिंशता श्लोकैः सङ्क्षिप्याऽह । आदौ राजधर्मसारमाह– राज्ञ इति । प्रथमतः प्रथमो धर्म इत्यर्थः । **'अद्वैतं परमार्थतः'** इतिवत् । **'साधारणं द्वयं ह्येतद् दैवमुत्थानमेव च'** [५५.१५] इति भारतवचनान्तरङ्गमनेन विवृतम् । देवस्य भगवतः प्रियं दैवं भगवद्धर्मपालनमित्यर्थः । तत्र ये कण्टकन्ति भगवद्द्विषस्तेषामुद्धार इति निष्कासनम् । तदर्थं सदा जागरूकता उत्थानम् । के नु ते सर्वसाधारणा भगवद्धर्माः? आह– धर्मा भागवता अपि समुचिता वक्ष्यमाणा द्वादशेति ॥ १७ ॥ अच्छिद्रत्वेन निरन्तरतया एकान्तभक्त्या चार्चनमेको धर्मः । विष्णुरेक एव तु सर्वशास्त्रनिश्चितः पूर्णाशेषगुणः स्वतन्त्रश्च, अन्यत् सर्वं च सर्वदा मुक्तौ च तद्वशमिति दृढनिश्चयः द्वितीयः । ब्रह्मादिदेवतानां तारतम्यक्रमेण विष्णुपरिवारताज्ञानं तृतीयः । हरेरन्यस्य वै सर्वागमप्रथिता प्रधानत्वेनापूजा चतुर्थः ॥ १८–९ ॥ सर्वेषामपि देवादीनां भगवद्भक्तत्वेन तत्परिवारतया पूजा पञ्चमः । भगत्प्रीतिमन्तरा वृथा कर्मणः क्वाप्य-कृतिः षष्ठः । सदैव ऐहिके च पारत्रिके च लौकिके वैदिके च कर्मणि फलनिर्बन्धविरहः सप्तमः ॥ २० ॥ भगवतस्त-द्भक्तानां च विरोधाकरणमष्टमः । भागवतयोर्द्वयोर्दैवाद् विरोधे सञ्जाते तयोर्यो ज्ञानभक्त्यादिना विशिष्टस्तदनुकूलाचरणं नवमः ॥ २१ ॥

**प्रियं विष्णोस्तदीयानामपि सर्वं समाचरेत् ।**
**धर्म्ममप्यप्रियं तेषां नैव किञ्चित् समाचरेत् ॥ २२ ॥**

**साम्ये विरोधे च बहूननुवर्त्तेत वैष्णवान् ।**
**एते साधारणा धर्म्मा ज्ञेया भागवता इति ॥ २३ ॥**

**तत्वविज्ञापनं धर्म्मो विप्रस्य तु विशेषतः ।**
**शारीरदण्डसन्त्यागः [1]पुत्रभार्य्यादिकानृते ॥ २४ ॥**

**तत्रापि नाङ्गहानिः स्याद् वेदना वा चिरं नतु ।**
**नचार्त्थदण्डः कर्त्तव्यो विप्रवैश्यादिभिः क्वचित् ॥ २५ ॥**

**शारीरदण्डविषये वैश्यादीनां च विप्रवत् ।**
**यथालब्धेन वर्त्तेत भिक्षया वा द्विजोत्तमः ॥ २६ ॥**

**शिष्ययाज्योपलब्धैर्वा क्षत्रधर्म्मेण वाऽऽपदि ।**
**महापदि विशां धर्म्मैः क्षत्रियः सुरविप्रयोः ॥ २७ ॥**

---

यद् विष्णोः प्रियमिति शास्त्रगदितम्, यच्च तदीयानां प्रियमिति लोकतोऽपि दृष्टं तत् सर्वं निर्विशङ्कमाचरेदिति दशमः । धर्ममपि तेषामप्रियं चेत्, **'धर्मस्य तत्वं निहितं गुहायाम्'**, **'धर्मो भवत्यधर्मोऽपि–'** इत्यादेः, नैव किञ्चिद् मनःपूर्वमाचरेदित्येकादशः ॥ २२ ॥ द्वयोरपि पक्षयोर्विशिष्टत्वेन साम्येऽपि क्वचिद् विरोधे प्राप्ते बहवो वैष्णवा यं पक्षमनुवर्तन्ते तमेवानुवर्तेतेति द्वादशः । **'ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामा स्युः'** इत्यादेः । एते द्वादश सर्ववर्णसाधारणाः ॥ २३ ॥ अथ विशेषधर्माः । तत्राऽदौ विप्रस्य । स्वतन्त्रास्वतन्त्रतत्वयोर्विभेदेन ज्ञापनं विप्रस्य प्रथमो विशेषधर्मः । अथच तत्वस्य ज्ञापनं सामान्यतः सर्वोऽपि कुर्यात् । विज्ञापनमित्यध्यापनम् । तद् विप्रस्य विशेषधर्म इति । पुत्रभार्यादिकान् । आदिना शिष्याननुचरांश्च । शारीरदण्डस्य सामस्त्येन त्यागः ॥ २४ ॥ पुत्रादिष्वपि दण्डेनाङ्गवैकल्यं चिरवेदना वा नैवानुमन्यते । अर्थदण्डस्तु केवलं क्षत्राधिकार इत्याह– नचार्थदण्डः ॥ २५ ॥ विप्रवत् पुत्रभार्यादिकानृते दण्डत्यागः । पुत्रादिष्वपि नाङ्गहानिः स्याद् वेदना वा चिरं नतु । यथालब्धेन उञ्छसिलेन दानादिना वा यथावद्विहितेन विधानेन लब्धेन । द्विजेषु त्रैवर्णिकेषूत्तमो विप्रः ॥ २६ ॥ शिष्यदत्तया गुरुदक्षिणया, याज्यं याजनकर्म तत उपलब्धैर्वा धनादिभिर्वर्तेतेति पूर्वान्वयः । सिलोञ्छाद् भिक्षायाश्चेदमवरं वर्तनमिति पृथगुक्तिः । अथाऽपदि क्षत्र-

---

१. **'पुत्रशिष्यादिकानृते'** इति क्वचित् ।

**अन्यत्र सर्ववित्तेन वर्त्तेतैतांश्च पालयन् ।**
**विरोधिनः क्षत्रियाच्च प्रसह्यैव हरेद् धनम् ॥ २८ ॥**

**सामादिक्रमतो धर्म्मान् वर्त्तयेद् दण्डतोऽन्ततः ।**
**अपलायी सदा युद्धे सतां कार्य्यमृते भवेत्[1] ॥ २९ ॥**

**कृषिवाणिज्यगोरक्षाकुसीदं वैश्यजीवनम् ।**
**परिचर्य्यैव शूद्रस्य वृत्तिरन्ये स्वपूर्ववत् ॥ ३० ॥**

**वर्त्तेयुर्ब्राह्मणाद्याश्च क्रमात् पूज्या हरिप्रियाः ।**
**हरिभक्तावनुच्चस्तु वर्ण्णोच्चो नातिपूज्यते ॥ ३१ ॥**

**सुरविप्रयोः वित्तात् अन्यत्र सर्ववित्तेन स्वप्रयोजनोपयुक्तसर्ववित्तेन वर्तेत जीवेत् । एतान् वैश्यादीन् ॥ २७–९ ॥ अन्ये वर्णबाह्याः । कार्वादयः ॥ ३०–५ ॥**

धर्मेण वा । यथा द्रोणादयः । महापदि विशां वा धर्मैः कृषिगोरक्षादिभिः । 'द्विजोत्तमो वर्तेत' इति वर्तते । अथ क्षत्रियधर्मानाह– क्षत्रियस्तु सुरविप्रयोरन्यत्र, देवस्वं ब्राह्मणस्वं च विहाय, अन्येषां वैश्यादीनां सर्वेषां सर्वेण वित्तेन स्वयं वर्तेत, एतांश्च सुरविप्रादीन् पालयंश्च वर्तेत । वित्तहरणं पालनविरोधि यथा न स्यात् । भगवद्विरोधिनः, भागवत-विरोधिनः, अत एव प्रजाविरोधिनः स्वशत्रोः ॥ २७–८ ॥ सामादिषु क्रमेण विफलेषु अन्ते दण्डेन वर्तयेत् । सति पथि प्रवर्तयेत् । युद्धे चाप्यपलायनं क्षत्रियस्य विशेषधर्मः । तत्रापि विशेषमाह– सतां कार्यमृते । यदि पलायनेन सतां कार्यं सम्पद्यते तदा पलायेतापि । यथा मुचुकुन्दप्रसादाय स्वयं कृष्णः पलायत । केचित्तु असतां कार्यमिति पदे विभिद्य यदि युद्धमसतामिष्टं कार्यं तदाऽपि ततः पलायनं न दोष इति व्याचक्षते । यथा जरासन्धसहायार्थं कृष्णेन सह योद्धुमा-गता द्रुपदादयः पलायन्तेति चाऽहुः ॥ २९ ॥ अथ वैश्यधर्मानाह– कृषीत्यादिना । कुसीदं वृद्धिजीवनम् । पर्युदञ्चनस्य प्रतिनियतं प्रतिफलादानम् । 'ಬಡ್ಡಿ' इति भाषायाम् । **'कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्'** [भी.प.४२.४४] इति भगवद्गीतायाम् [१८.४४] । समाहारे चैकवचनम् । कृषिवाणिज्यगोरक्षाभिर्गीतोक्ताभिः सहितं कुसीदं वा । परिचर्यैव त्रैवर्णिकानां शूद्रस्य वृत्तिः विशेषधर्मः । अन्येषामयं साधारणो धर्मः । **'नाना जनस्य शुश्रूषा कर्माख्या करवन्मितेः'** इति हि स्मरन्ति । अन्ये वर्णबाह्याः स्वपूर्वैः पूर्वतरैर्यत् कृतं तदेव कुर्वन्तो वर्तेयुः । तथा वर्तनं लोकव्यवस्था-रक्षाया इति परस्मैभाषा । द्विविधो वर्णो भवति बाह्य आभ्यन्तरश्च । बाह्यो योनिभेदकृतः प्रतिजन्म भिद्यमानश्च । आभ्यन्तरः स्वभाविकः जीवस्वरूपगतः मोक्षेऽप्यनुवर्तमानः । **'स्वाभाविको ब्राह्मणादिः शमाद्यैरेव भिद्यते । योनि-भेदकृतो भेदो ज्ञेय औपाधिकस्त्वयम्'** इति स्मरणात् । अत्र तु यथासम्भवमुभयोर्ग्रहणम् । विशिष्य च बाह्य-

[1] **'–मृते क्वचित् ।'**

विना प्रणामं पूज्यस्तु वर्ण्णहीनो हरिप्रियः ।
आदरस्तत्र कर्त्तव्यो यत्र भक्तिर्हरेर्वरा ॥ ३२ ॥

ज्ञापनं क्षत्रियाणां च धर्म्मो विप्राभ्यनुज्ञया ।
तदभावे तु वैश्यानां शूद्रस्य परमापदि ॥ ३३ ॥

'वर्ण्णेष्वज्ञेष्ववर्ण्णस्तु न ज्ञानी स्यात् कथश्चन' ।
इति श्रुतेरवर्ण्णस्य ज्ञापनप्राप्तिरेव न ॥ ३४ ॥

ज्ञेयं [१]सर्वत्रिवर्ण्णस्थस्त्रीभिर्वेदान् विनाऽखिलम् ।
स्वीयपुन्नियतिः स्त्रीणां स्वदारनियतिर्न्नृणाम् ॥ ३५ ॥

धर्म्मो गुणोत्तमानां तु स्मृत्यैवान्धं तमो व्रजेत् ।
गुणसर्वस्वहानिः स्यादुत्तरोत्तरतोऽत्र च ॥ ३६ ॥

**गुणोत्तमानां दाराणां स्मृत्यैव भोग्यत्वस्मृत्यैव । अन्धं तमः (व्रजेत्), पुमानिति शेषः । अत्र पुरुषेषु ॥ ३६–५४ ॥**

---

वर्णस्य । राजधर्मप्रसङ्गात् । समाजव्यवस्थामूलत्वाच्च राजधर्मस्य । 'अन्ये स्वपूर्ववत्' इत्यादिकश्च समाजधर्मः । आभ्यन्तरा हरिभक्तिरेव पूजास्थानम् , न तु बाह्यं वर्णोच्चत्वमित्याह– हरिभक्तौ । औपाधिकेन कारणेन वर्णोच्चोऽपि हरिभक्तावनुच्चः स्यात् । अस्वभावत्वात् तद्वर्णस्य । स्वभावतो वर्णोच्चश्च हरिभक्तावनुच्चश्चेति विप्रतिषिद्धम् । नहि वशा क्वापि वष्कयिणी भवति । पूजा सामाजिकी, या दृश्यते । अतिपूजा तु मानसी, या न दृश्यते ॥ ३०–२ ॥ विना प्रणामम्, सत्कारादिना पूज्यः । मनसा च ॥ ३२ ॥ ज्ञापनं तत्वस्य । यथोद्दालकः पञ्चाग्निविद्यां क्षत्रियादवाप । क्षत्रियेष्वपि तत्वज्ञानिनामभावे सत्येव वैश्यानामपि ज्ञापनं धर्मो भवति । वेदाधिकारित्वात् । परमापदि वेदानधिकारिणः शूद्रस्यापि विष्णुतत्वज्ञापनं भवति कर्तव्यम् ॥ ३३–४ ॥ सर्वाभिस्त्रिवर्णस्थाभिः स्त्रीभिः वेदान् विना इतिहासपुराणादिकमखिलम्, सर्वं पौरुषेयमित्येतत् । ज्ञेयमध्ययनेन । अनुमतिरेवेयम्, न विधिः । अतोऽनधीत्यापि ज्ञानमात्रेण न विधिलोपः । स्वीयपुन्नियतिः स्त्रीणां धर्मः । स्वदारनियतिः नृणां धर्मः । गुणोत्तमानां देवानां स्त्रीणां भोग्यत्वस्मृत्यैवान्धं तमो व्रजेत् । अथवा गुणोत्तमानां स्त्रीणामिति सामानाधिकरण्येनैवान्वयः । तमो व्रजेत् प्राय इत्युपस्कर्तव्यम् । तामसस्तमो व्रजेत् । यदि स्वरूपतः सात्विकस्तदा गुणसर्वस्वहानिः स्यात् । अत्र हानावपि उत्तरासामुत्तरासां भोग्यत्वस्मृत्या उत्तरोत्तरं अधिकमधिकं गुणसर्वस्वहानिः स्यात् । गुणा एव सर्वं स्वं सम्पत् । यथा शच्या भोग्यत्वस्मृत्या नहुषस्य सर्वस्वहानिः ॥ ३५–६ ॥

---

१. **'सर्वं त्रिवर्णस्थैः स्त्रीभि–'** । **'सर्वं त्रिवर्णस्थस्त्रीभि–'** इति क्वचित् ।

**अधोऽधोऽधिकदोषः स्यात् स्त्रीणामन्यत्र मद्ध्यतः ।**
**वेदा अप्युत्तमस्त्रीभिः कृष्णाद्याभिरिवाखिलाः ॥ ३७ ॥**

**देव्यो मुनिस्त्रियश्चैव नरादिकुलजा अपि ।**
**उत्तमा इति [1]विज्ञेयास्तच्छूद्रैरप्यवैदिकम् ।**
**ज्ञेयमन्यैर्हरेर्नाम निजकर्त्तव्यमेव च ॥ ३८ ॥**

**सर्वथाऽन्धं तमो याति वरं सदृशमेव वा[2] ।**
**यो विष्णोर्म्मन्यते किञ्चिद् गुणैः कैश्चिदपि क्वचित् ॥ ३९ ॥**

एवं स्त्रीणां नियतपुरुषादन्यत्र भोगेच्छया मध्यतः मध्यमं स्वपतिसमानमारभ्य अधोऽधः नीचपुरुषभोगेच्छया अधिकदोषः । नीचतरे अधिकतरः । नीचतमेऽधिकतम इति । अखिला वेदा अपि ज्ञेयाः । वेदाध्ययनं स्त्रीणां न नियतं विधीयते– स्वाध्यायोऽध्येतव्य इति । कुतः? यतो द्विजैरध्येतव्यम् । नहि द्विजस्य स्त्री द्विजा भवति । उपनयनादिना हि द्वितीयवारं जायते । ननूपनीयन्तां स्त्रियोऽपि । उपनीयाध्याप्यन्ताम्, या अधिजिगांसन्ते । अनुमन्यते भवदुक्तम्– **'आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके'** इति । किमिति सर्वासां नानुमन्यते? वीरप्रसविन्यो यथा भूयासुरिति । विपश्चित्प्रसविन्यो यथा भूयासुरिति । श्रोत्रियप्रसविन्यो यथा भूयासुरिति । प्रजननं हिं तासां मुख्यधर्मः । असाधारणश्च । को नेत्याह । अधीयते च प्रसुवते च । को दोषः? ननु विप्रतिषिद्धमेतत्, अध्ययनं च प्रसवश्चेति, गोव्याघ्राविव, स्त्रीभोगब्रह्मचर्ये इव । ननु भोः, अङ्गीकृतमङ्ग भवताऽपि, अस्ति विप्रतिषेधः स्त्रीभोगब्रह्मचर्ययोरिति । ब्रह्मणि वेदे चरणं हि ब्रह्मचर्यम् । नन्वब्रह्मचारिणोऽपि पुमांसो वेदमधीयते । शृणु तर्हि तथ्यम् । वदन्ति वैद्यशास्त्रप्रवीणाः– अस्ति स्त्रीणां पुरुषेष्वविद्यमानः प्रतीको गर्भकोशो नाम । तस्य रक्षणं प्रथमकर्तव्यं वीर्यवत्सन्तानाय । दुर्बलो भवति गर्भकोशो यदि बुद्धावधिकभारो निधीयते । तेन च दुर्बला सन्ततिर्भवति । तेन वेदाद्युच्चशिक्षणे न निर्बन्धः स्त्रीणां समुचित इति । अतः शास्त्रविदोऽभिप्रयन्ति न देयं बलाद् वेदादिशिक्षणं स्त्रीणाम् । यास्त्वधिकप्रज्ञा उत्तमस्त्रियस्ताः स्वभावसहजतयाऽधिजिगांसन्ते । अधीयते चाध्यापयन्ति च । प्रकृतिस्तु सर्वं नियोक्ष्यतीति । तदिदमाह– वेदा अप्युत्तमस्त्रीभिर्ज्ञेया इति । उत्तमाभिः स्त्रीभिरपि वेदा ज्ञेया इति । तद्यथा– कृष्णाद्याः । कृष्णा द्रौपदी ॥ ३७ ॥ का उत्तमाः? आह– देवस्त्रियो मुनिस्त्रियश्च स्वरूपत उत्तमाः । अतस्ता नरपशुपक्ष्यादिकुलजा अपि उत्तमा एवेति विज्ञेयाः । न केवलम् । देव्यादिभिर्विशेषतः सन्निहिता मर्त्यस्त्रियोऽपि । शूद्रैरप्यवैदिकं तत् ग्रन्थजातं ज्ञेयम् । वेदस्येदमिति संहिताब्राह्मणारण्यकानि उपनिषदश्च वैदिकं वाङ्मयमुच्यते । तदतिरिक्तं पौरुषेयमितिहासपुराणादिकमवैदिकमिह विवक्षितम् । अन्यैर्वर्णबाह्यैः हरेर्नामैव निजं कर्तव्यम् । अथवा हरेर्नामैव ज्ञेयमुपास्यम् । एवं पूर्वैरनुष्ठितं निजकर्तव्यमेवानुष्ठेयं च ॥ ३८ ॥ ब्रह्मेशानादिकमपि, किमुत यत्किञ्चिज्जीवजातम्, यो विष्णोः सदृशं वरं किञ्चिद्

१. **'विज्ञेयाः सच्छूद्रै–'** इति क्वचित् । २. **'–मेव च ।'**

ब्रह्मेशानादिकमपि भेदं यो वा न[१] मन्यते ।
भेददृक् तद्गुणादौ च[२] प्रादुर्भावगतेऽपि यः ॥ ४० ॥

प्राकृतं देहमथवा दुःखाज्ञानश्रमादिकम् ।
मन्यते तारतम्यं वा तद्भक्तेष्वन्यथैव यः ॥ ४१ ॥

मनोवाक्तनुभिर्यो वा तस्मिंस्तद्भक्त एव वा ।
विरोधकृद् विष्णवधीनादन्यत् किञ्चिदपि स्मरन् ॥ ४२ ॥

अन्याधीनत्वविच्चास्य सर्वपूर्त्यविदेव च ।
भक्तिहीनश्च[३] ते सर्वे तमोऽन्धं यान्त्यसंशयम् ॥ ४३ ॥

तत्वे संशययुक्ता ये सर्वे ते निरयोपगाः ।
दोषेभ्यस्ते गुणाधिक्ये नैव यान्त्यधमां गतिम् ॥ ४४ ॥

गुणदोषसाम्ये मानुष्यं सर्वदैव पुनःपुनः ।
यावद् दोषक्षयश्चोर्ध्वा गतिः क्रमश एव तु ॥ ४५ ॥

---

वरं वा मन्यते । सर्वथा नियमेन । यो वा विष्णोर्ब्रह्मेशानादितो भेदं न मन्यते । यश्च तद्गुणानां क्रियाणामवयवानां परस्परं भगवतश्च भेदं पश्यति । एवं प्रादुर्भावगते भगवति मूलरूपात् परस्परं च भेदं पश्यति ॥ ३९–४० ॥ अथवा प्रादुर्भावगतेऽपि प्राकृतं देहं मन्यते । दुःखाज्ञानादिकं वा मन्यते । अवतारेषु पूर्णापूर्णत्वादिना तारतम्यं वा यो मन्यते । तद्भक्तेष्वन्यथा तारतम्याभावमेव वा यो मन्यते ब्रह्मादितृणान्ताः सर्वे समाना इति ॥ ४१ ॥ किञ्चिदपि विष्णवनधीनं स्मरन् ॥ ४२ ॥ विष्णुमन्याधीनं स्मरन् । तस्य पूर्णतां वा निराकुर्वन् ॥ ४३ ॥ यदि नित्यः संशयः तदा नित्यनिरयोपगाः । यद्यनित्यः अनित्यनिरयोपगाः । ते अनित्यसंशययुक्ता अपि ज्ञानादिगुणाधिक्ये न निरयं यान्ति ॥ ४४ ॥ साम्ये पुनःपुनः मानुष्यं यान्ति । सर्वदैव अनन्तकालम् । नित्यसंसारिण इत्येतत् । यावद्यावद्दोषक्षयः तदनुगुणतया तावतीतावती ऊर्ध्वा गतिश्च क्रमेणैव स्यात् । तुना नियतेरव्यत्ययमाह ॥ ४५ ॥

---

१. 'भेदं वा यो न' २. '–णादौ वा प्रादु–' १. '–हीनाश्च'

**सर्वदोषक्षये मुक्तिरात्मयोग्यानुसारतः ।**
**भक्तिज्ञानोन्नतावेव स्वर्ग्गश्च शुभकर्म्मणः ॥ ४६ ॥**

**विष्णुर्वैष्णववाक्येन हानिः पापस्य कर्म्मणः ।**
**इत्यादि धर्म्मसर्वस्वं भीष्मस्थेनैव विष्णुना ॥ ४७ ॥**

**पार्त्थानां गदितं तच्च[1] श्रुत्वा धर्म्मसुतोऽनुजान् ।**
**पप्रच्छ विदुरं चैव सारं धर्म्मादिषु त्रिषु ॥ ४८ ॥**

**आह क्षत्ता धर्म्ममेव सारमर्त्थं च मद्ध्यमम् ।**
**नीचं कामं निष्फलत्वादर्त्थमेवार्ज्जुनोऽब्रवीत् ॥ ४९ ॥**

**सारं स द्विविधो ज्ञेयो दैवो मानुष एव च ।**
**दैवो विद्या हिरण्यादिर्म्मानुषः परिकीर्त्तितः ॥ ५० ॥**

**मद्ध्यमो धर्म्म एवात्र साद्ध्यं साधनमेव च ।**
**विद्याह्वयोऽर्त्थो धर्म्मस्य विद्ययैव च मुच्यते[2] ॥ ५१ ॥**

---

आत्मयोग्यतानुसारतः मुक्तिः । आत्मयोग्या मुक्तिरिति वा । तदपि आत्मयोग्यानुसारतो भक्तिज्ञानोन्नतौ सत्यामेव । आत्मनो यादृशी मुक्तिर्योग्या तदनुसारतः । आत्मनो यादृशे योग्ये भक्तिज्ञाने तदनुसारतः । योग्यतानुसारतश्च । 'आत्मयोग्या अनुसारतः' इति प्रतृण्णे, अनुसारत इति योग्यतानुसारत इत्यर्थः । स्वर्गश्च शुभकर्मणः । चकारात् निरयश्च विकर्मणः ॥ ४६ ॥ विष्णुवाक्यं वेदपुराणादि । वैष्णववाक्यमृषिप्रणीतं धर्मशास्त्रादि । तदुक्तानुष्ठानेन । धर्मसर्वस्वं सर्वधर्मसारः ॥ ४७–८ ॥ क्षत्ता विदुरः धर्ममेव सारं श्रेष्ठमाह । धर्मफलकत्व एव सारत्वादर्थं मध्यममाह । निष्फलत्वात् अन्ततः धर्मफलकत्वस्याभावात् । अर्थमेव सारमर्जुनोऽब्रवीत् । **'धर्मो राजन् गुणः श्रेष्ठो मध्यमो ह्यर्थ उच्यते । कामो यवीयानिति च प्रवदन्ति मनीषिणः'** [शां.प.१६५.८] इत्यापद्धर्मे विदुरवचनम् । **'अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः । निवृत्तेऽर्थे न वर्तेते धर्मकामाविति श्रुतिः'** [१२] इत्यर्जुनवचनम् ॥ ४९ ॥ दैवोऽर्थो विद्या । **'अप्रज्ञानं तमोभूतं प्रज्ञानं तु प्रकाशिता'** [१९] इति च । अर्थशास्त्रज्ञैः परीक्ष्य कीर्तितः ॥ ५० ॥ विद्याह्वयोऽर्थः धर्मस्य साध्यं च साधनं च । धर्मेण विद्यां लभते । **'कर्मणा ज्ञानमातनोति'** इति श्रुतेः । ज्ञानेन च धर्ममाप्नोति । **'यदेव विद्यया करोति–'** इति श्रुतेः ॥ ५१ ॥

---

१. **'तत्तु श्रुत्वा'** । **'पार्थानां कथितं तच्च'** इति क्वचित् ।

२. **'–यैव विमुच्यते ।'**

मानुषोऽर्थोऽपि विद्यायाः कारणं सुप्रयोजितः ।
तुष्टोऽर्थेन गुरुर्य्यस्मात् कैवल्यं दातुमप्यलम् ॥ ५२ ॥

धर्म्मार्थतां विनाऽप्यर्थैस्तुष्येयुर्ग्गुरुदेवताः ।
यद्यनुद्देशितो धर्म्मोऽप्यर्थमेवानु संव्रजेत् ॥ ५३ ॥

गुरुताऽर्थगतैव स्यात् कामोऽवस्ताद्धि[1] निष्फलः ।
यमावत्र विदां श्रेष्ठावर्ज्जुनोक्तमनूचतुः ॥ ५४ ॥

अथाऽह भीमः प्रवरः सुतत्वदृशां समस्तानभिभाष्य हर्षात् ।
स्मयन् न कामादतिरिक्तमस्ति किञ्चिच्छुभं क्वावरतां स यायात् ॥ ५५ ॥

काम्यं हि कामाभिधमाहुराय्याः काम्याः पुमर्त्थाः सह साधनैर्य्यत् ।
अकाम्यतां यात्यपुमर्त्थ एव पुमर्त्थितत्वाद्धि पुमर्त्थ उक्तः ॥ ५६ ॥

**मोक्षयोग्यानां सतामपि कामा(नाम)धमत्ववर्णनमसहमानो भीमः (स्व)मतमाहेत्याह–अथाऽहेत्यादिना । स्वविवक्षितप्रमेयस्यैव प्रामाणिकत्वं मन्यमान आहेति सूचितम्– हर्षादिति । अत एव स्मयन् इति चोक्तम् । (स) कामः (अवरतां क्व यायात्) ॥ ५५ ॥ कामशब्दार्थकथनपूर्वकं कामस्योत्तमत्वं साधयति–**

सुप्रयोजितः शुभे कर्मण्युपयुक्तः ॥ ५२ ॥ निष्कामधमर्थिताम्, तज्जपुण्यार्थतां च विनाऽपि, लौकिकफलकामनया दत्तैरप्यर्थैः । अथच पुण्योद्देशेनादत्ते, कीर्त्यादिकामनया दत्तेऽप्यर्थे, यद्यनुद्देशितो धर्मः कश्चिदल्पः स्यात्, सोऽप्यर्थानुसार्येवेत्यर्थस्यैव प्राधान्यम् । अर्थमेवानु अर्थदानमनुसृत्यैव, संव्रजेत् दातरि सङ्गतो भवेदित्यर्थः ॥ १५३ ॥ तस्मात् धर्मादिषु त्रिषु गुरुता श्रेष्ठताऽर्थगतैव । कामोऽवस्तादवर इत्यर्थः । अत्र त्रिवर्गविषये यमावप्यर्जुनोक्तमर्थस्य गुरुत्वमेवानूचतुः । अत्रोपस्थितेभ्यो विदुरयुधिष्ठिरभीमार्जुनेभ्यो वयसा विद्यया चावरावपि भीष्मसमानकक्ष्यतयेतरापेक्षया विदुषां श्रेष्ठौ ॥ ५४ ॥ सुष्ठु यथावत् समग्रं च ये तत्वं पश्यन्ति तेषां प्रवरः । देवा वराः । अयं तु प्रवरः । अपूर्वविषयाविष्कारेण हर्षात् । कामः श्रेष्ठ इत्यपार्थस्यावकाशं ददहिव ईषत्स्मेरमुखः । हर्षमत्तीति हर्षात् हर्षमनुभवन्, अत एव स्मयन्निति वा । त्त्वाल्यपोरिव शतुः शानचश्च व्यत्यस्य प्रयोगश्छान्दसेषु बाहुलिकः । कारणं चात्र, न स्वयमस्मयत, किन्तु परेषां विस्मयं जनयन्नाऽहेति बोधनम् । किमाह?–न कामादतिरिक्तं किमपि शुभमस्तीत्याह । **'नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति । नाकामः कामयानोऽस्ति तस्मात् कामो विशिष्यते'** [१६५.२९] इति भीमवचनम् ॥ ५५ ॥ काम्यत

१. **'कामोऽधस्ताद्धि'** । **'कामो ह्यर्थाद्धि'** इति क्वचित् ।

विज्ञानभक्त्यादिकमप्यतीव सत्साधनं[१] कामबहिष्कृतं चेत् ।
न साधनं स्यात् परमोऽपि मोक्षो न साद्ध्यतां याति विना हि कामात् ॥ ५७ ॥

परात् परोऽप्यादिपुमान् हरिश्च स्वस्येतरेषामपि काम्य एव ।
अकामितोऽवाग्गतिमेव दद्यात् कामः पुमर्त्थोऽखिल एव तेन ॥ ५८ ॥

**काम्यमिति । आर्याः वर्याः । काम्यं कामविषयं कामाभिधं कामशब्दवाच्यं आहुः । हीति प्रसिद्धं द्योतयति । पुमर्थाः पुरुषार्थाः धर्मादयः साधनैः तदुचितसाधनैः सह काम्याः (इति यत् तस्मात् काम्य)स्यैव कामत्वात् 'क्वावरतां स यायात्' इति पूर्वेणान्वयः । काम्यन्त इति कामा इति निरुक्त्या धर्मादीनामेव कामत्वात् कामावरत्ववचनमनुपपन्नमिति भावः । तर्ह्यकाम्यं किमित्यपेक्षायामाह–अकाम्यतामिति । अपुमर्थ एव दुःखा(द्यपुरुषार्थ एव अकाम्यतां) अकाम्यमेतदिति बुद्ध्या गोचरतां याति । धर्मादीनां काम्यत्वात् कामत्वं कथमित्यतस्तदभिधायकपुमर्थशब्दनिरुक्त्या सिद्धमित्यतस्तं निर्वक्ति– पुमर्थितत्वादिति । पुम्भिरर्थितत्वाद् धर्मादिकं तत्साधनं च पुमर्थ इत्युक्तमिति । (हि यस्मात् तस्मात् का)म्यत्वात्, धर्मादि(कं तत्साधनं च) काम इ(त्युच्यते) । (अ)पुमर्थितत्वात् दुःखं तत्साधनं चापुमर्थ इति वाक्यशेषः ॥ ५६ ॥ न केवलं पुमर्थानामेव कामत्वम् । तत्साधनानामपि कामत्वमस्तीत्याह– विज्ञाने(त्यादि) । तत्साधनं मुख्यं धर्मादिसाधनं विज्ञानभक्त्यादिकमपि कामबहिष्कृतं चेत् अकामितं चेत् साधनं धर्मादिसाधनं न स्यात् । यत् तस्मात् विज्ञानभक्त्यादिकमपि काम्यत्वात् कामनामकमिति वाक्यशेषः । अनेन पुमर्थाः साधनैः सह काम्या इत्युक्तमुपपादितं भवति । कामात् मोक्षविषयकामात् विना परमः पुरुषार्थोत्तमः मोक्षोऽपि साध्यतां न याति । (हि) यतस्तस्मात् सोऽपि कामविषयत्वात् काम एवेति वाक्यशेषः ॥५७॥ न केवलं धर्मादयः काम्याः । किन्तु तत्सम्पादको हरिरपि काम्य इत्याह– परात् पर इति । इतरेषां पुरुषा(र्थि)-नाम् । इतरेषां कुतः काम्य इत्यत आह–अकामित इति । तस्मात् सोऽपि काम्यत्वात् काम इति भावः । तेन काम्यस्यैव कामशब्दवाच्यत्वेन अखिलः पुमर्थः तत्साधनं तत्सम्पादको हरिश्च काम एव ॥ ५८ ॥**

---

इति काम्यं हि कामाभिधमाहुः । आर्या विपश्चितः सज्जना वा । पुम्भिरर्थ्यत इति पुमर्थ उक्तः । **'कामो धर्मार्थयोर्योनिः कामश्चाथ तदात्मकः'** [३६] इति च । यदि पुमर्थस्तर्हि काम्यः । अपुमर्थ एव ह्यकाम्यतां याति । एवकारेणापुमर्थत्वं व्यापकमकाम्यत्वं व्याप्यमित्याह । ननु पुमर्थ इति काम्य इति चैकार्थे पदे । तत्कथं व्याप्यव्यापकभावः? इत्थम् । कामनाविषयत्वं काम्यत्वं नाम । स्वसाधनैः सह धर्मादिचतुष्टयान्यतमत्वं पुमर्थत्वम् । तेन नैक्यं साध्यसाधनयोः ॥ ५६ ॥ सतां धर्माणां साधनम् । सतां ज्ञानिनां सात्विकानां च साधनम् । सत् निर्दुष्टं साधनमपि । अतीव सर्वात्मना कामबहिष्कृतं चेत् । नहि कोऽपि न मे ज्ञानभक्त्यादिकं स्यादिति वाञ्छति । यदि वाञ्छति सोऽपि काम एवेति न कामबहिष्कारः । अतीव अतिशयितं साधनम् ॥ ५७–८ ॥

---

१. **'–तीव तत्साधनं काम्यबहि–'** । **'तत्साधनं काम–'** इति क्वचित् । वे.ती. लिखितपुस्तकेऽपि तथैव पाठः पठ्यते ।

इच्छैव कामोऽस्तु तथाऽपि नैतामृते हि चित्त्वं[1] घटकुड्यवत् स्यात् ।
सारस्ततः सैव चिदात्मिकाऽपि सा चेतना गूढतनुः सदैव ॥ ५९ ॥

न प्रश्नयोग्यः पृथगेव कामस्तेनैष राजन् यदि तारतम्यम् ।
इच्छस्ययं ते त्रिविधो हि वेद्यो धर्म्मार्त्थयुक्तः परमो मतोऽत्र ॥ ६० ॥

**(काम)विषयस्य कामत्वमभिप्रेत्य तस्योत्तमत्वमुपपाद्य इदानीं कामनं काम इतीच्छा वा कामशब्देनाभिधीयत इत्यभिप्रेत्यापि कामस्योत्तमत्वमाह–इच्छैवेति । इच्छैव (कामः)कामशब्दवाच्यः[2] अऽस्तु । तथाऽपि काम एवोत्तम इति शेषः । कथमित्यतस्तदुपपादयति–नेत्यादिना । एतां इच्छां ऋते चित्त्वं चेतनत्वं न सम्भवति । जीवस्येति शेषः । किन्तु घटकुड्यवत्, अचेतन(त्व)मिति शेषः, स्यात् । ततः इच्छाभावे जीवस्याप्यचेतनत्वापत्तेरिच्छायाश्च सर्वपुरुषार्थमूलत्वात् सैव इच्छैव सा(रः) उत्तमा । तामिच्छां विभजति–चिदात्मिका चेतनस्वरूपा । अपिशब्दादचेतनाऽन्तःकरणरूपा चेति द्विविधेति भावः । तत्र चेतनेच्छास्वरूपमाह– (सेति) । स्वरूपभूता सा इच्छा सदैव आमुक्तेः गूढतनुः अविद्यावृतस्वरूपा मुक्तावाविर्भूता चेतना । अचेतना अन्तःकरणरूपा सदैव मोक्षात् पूर्वं संसारदशायां सा गूढतनुः अभिभूतरूपा । मुक्तिदशायां नास्त्येवेति तत्त्वम् ॥ ५९ ॥ एषः निरूपितस्वरूपः कामः, तेनैव कस्यापि पुरुषस्य क एव धर्मादिषूत्तम इति विभज्य प्रश्नयोग्यो न । तेनैव इच्छायाः कामत्वेनैव । इच्छाभावे प्र(श्नादेर)प्यसम्भवात् इच्छाया उत्तमत्वं सिद्ध(मिति), एष कामः पृथक् प्रश्नयोग्यो नेति च योजना । हे राजन्, ते त्वया अयं कामः त्रिविधो वेद्यः । धर्मार्थानुकूलः, धर्मार्थयोरन्यतराविरोधी, उभयविरोधी चेति । यदि अत्र त्रिविधकामे तारतम्यमिच्छसि ज्ञातुमिति शेषः । तर्हि धर्मार्थयुक्तः धर्मार्थाविरोधी अनुकूलश्चेति ग्राह्यम् । परम उत्तमः ॥ ६० ॥**

---

इच्छैव कामोऽस्तु । चित्त्वं चेतनत्वम् । यो जानातीच्छति यतते स किल चेतन उच्यते । नह्यचेतनः कुतुपः कुड्यं वा क्वचिदपि जानीयादिच्छेद् यतेत वा । **'कामो हि विविधाकारः सर्वं कामेन सन्ततम् । नास्ति नाऽसीन्न भविता भूतं काममृते परम्'** [३३–४] इति च । न केवलमिच्छामृते चित्त्वं न स्यात् । स्वयमिच्छैव चिदात्मिकाऽपि । किन्तु सा चेतना चिदात्मिका स्वरूपेच्छा, सा मुक्तिपर्यन्तं गूढतनुः । मुक्तौ पूर्वं गूढतनुश्चेतनेच्छा स्वयमभिव्यक्ततनुर्भूत्वा प्रवर्तते । तस्मात् कामप्रहाणं नाम स्वरूपनाश एव । **'कामेन मे काम आगात्'** इति हि श्रुतिः ॥ ५९ ॥ तेन त्रिवर्गेऽपि कामस्यानुगतत्वेनैव हेतुना । ननु यदीच्छा जीवस्वरूपम्, तर्हि सात्विकादिभेदेन जीवानामिवेच्छाया अपि त्रैविध्यं स्यात् । स्यादेव, को नेत्याह– यदि तारतम्यम् । प्रष्टुमिच्छसि, ज्ञातुं वा । तर्ह्ययं ते त्वया त्रिविधो ज्ञेयः । **'धर्मार्थकामाः सममेव सेव्या यो ह्येकभक्तः स नरो जघन्यः । द्वयोस्तु सक्तं प्रवदन्ति मध्यमं स उत्तमो योऽभिरतस्त्रिवर्गे'** [४०]

---

१. 'चित्तं घट–'

२. कामशब्दार्थ इत्यर्थः ।

एकाविरोधी यदि मद्ध्यमोऽसौ द्वयोर्विरोधी तु स एव नीचः ।
तस्मात् स्वबुद्धिप्रमदाभिरेव कामं रमेथा अनुरूपकामः ॥ ६१ ॥

राजन् न कामादपरं शुभं हि परो हि कामो हरिरेव येन[1] ।
'प्राज्ञः सुहृच्चन्दनसारलिप्तो विचित्रमाल्याभरणैरुपेतः ।
इदं वचो व्याससमासयुक्तं सम्प्रोच्य भीमो विरराम वीरः' ॥ ६२ ॥

**यद्यसौ एकाविरोधी धर्मार्थयोरन्यतराविरोधी अनुकूलः अन्यतरविरोधी च तर्हि असौ मध्यमो मतः । यद्यसौ द्वयोर्विरोधी तु विरोध्येव नतूदासीनः (तदा नीच एव) मत इति योजना । तस्मात् उक्तप्रकारेण कामस्यैवोत्तमत्वात् स्वबुद्धिप्रमदाभिरेव कामं रमेथाः । स्वेच्छानुसारेण च रमस्वेति भावः । अनुरूपकामः धर्माद्यनुरूपेच्छः ॥ ६१ ॥ कामादपरं शुभं उत्तमं नहि । कुतः? येन ज्ञानका(मानां हरिरेव परः कामः) कामेषूत्तमः । हीति श्रुत्यादिप्रसिद्धं द्योतयति । तस्य कामत्वमुपपादयति– प्राज्ञ इत्यादिना । व्याससमासयुक्तम् । व्यासो विस्तारः । समासः सङ्क्षेपः । 'न कामादतिरिक्त(मस्ति' इत्यारभ्य, 'कामं रमे)था अनुरूपकामः' इत्यन्तं विस्तरोक्तिः । 'राजन्न कामादपरं शुभं हि' इत्यादि सङ्क्षेपोक्तिरिति भावः ॥ ६२–३ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायामेकोनत्रिंशोऽध्यायः

—०—

इति च । **'रमस्व योषिद्भिरुपेत्य कामं कामो हि राजन् परमो भवेन्नः'** [३८] इति च । त्रिविधेषु कामेषु प्रथमो धर्मार्थयुक्तः । यथा विहितः प्रतिग्रहः ॥ ६० ॥ एकस्य धर्मस्यार्थस्य वाऽविरोधी द्वितीयः । यथा–ऋणं कृत्वा दानम्, विभवे सत्यप्यदानम् । द्वयोर्विरोधी तृतीयो यथा– अपात्रे दानम्, शुल्कं दत्वा परनारीरमणम् । **'बुद्धिं तु प्रमदां विद्यात्'** इति च पुरञ्जनोपाख्याने ॥ ६१ ॥ कामः परमो भवेन्न इत्येतद् विवृणोति– परो हि कामो हरिरेव । श्रेष्ठः काम्यः, इच्छारूपश्च । **'प्राज्ञः–'** इत्यादि समग्रं भारतवचनम् । [४१] । सम्प्रत्युत्तरार्धं किञ्चिद् व्यत्यासेन पठ्यते– **'ततो वचः सङ्ग्रहविस्तरेण प्रोक्त्वाऽथ वीरान् विरराम भीमः'** इति । प्राज्ञ इत्यादिकं द्वेधा व्याख्येयम् । भीमपरतया हरिपरतया च । कीदृशो भीमः? प्राज्ञः । धर्मार्थकामानां प्रकर्षज्ञः । सर्वप्रकृष्टं भगवन्तं च जानन् । अतिशयेन प्रज्ञः प्राज्ञः । **'आधिक्येऽधिकम्'** इति सूत्रात् । प्रज्ञादिभ्यः स्वार्थेऽणिति पाणिनीयाः । भगवतः परमसुहृत् । अन्तश्चन्दनसारः स्वरूपानन्दः । **'चदि आह्लादे'** । तेनैव केवलं लिप्तः । बाह्ये वैषयिकानन्दे निर्लिप्तः । अथापि लोकधर्ममनुसरन् चन्दनसारलिप्ताङ्गः । विचित्रैः लोकविलक्षणैः भगवद्गुणध्यानमालारूपैराभरणैरुपेतः । लोकदृष्ट्या च अर्थकामाभ्यामुपेत इत्यर्थः ।

१. **'हरिरेव तेन '** इति क्वचित् ।

**प्रशस्य भीममन्यांश्च राजा मोक्षमथास्तुवत् ।**
**स्वयुक्तेरप्रतीपत्वान्निराचक्रे न मारुतिः ॥ ६३ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये[1]**
**एकोनत्रिंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **४६८२**+६३=**४७४५**]

अथ हरिरेव परः कामः । यतः प्राज्ञः सर्वज्ञः । अस्माकं ज्ञानाज्ञानप्रदश्च । प्रकर्षेण ज्ञापयति न ज्ञापयति चेति । सुहृत् । **'द्वा सुपर्णा सयुजा सखाया–'** इत्यादेः । **'तस्याविज्ञातनामाऽऽसीत् सखाऽविज्ञातचेष्टितः'** इति च भागवते । अस्माकं च परमसुहृत् श्रीकृष्णः । चन्दनसारलिप्तोऽयमस्माभिः सह स्थितः कृष्ण एव कामस्य परमपुरुषार्थत्वे प्रमाणमित्यर्थः । विचित्रैः अप्राकृतैश्चिन्मयैर्माल्याभरणैश्चोपेतः । सम्प्रोच्य शास्त्रानुभवसंमतं प्रकृष्टं वचनमुक्त्वा ॥ ६२ ॥ अस्तुवत्, अस्तौत् । **'ओमित्येतन्मुखैर्देवमस्तुवत् सामवेदगैः'** इति महासंहितावचनम् । एवं प्रायः प्रतना अस्तुवदित्येव प्रयुञ्जते । त्रिवर्गे किल कामस्य श्रैष्ठ्यमाह भीमः । मोक्षस्तुत्या न तस्य काऽपि क्षतिः । मोक्षस्य काम्येषूत्तमत्वात् स्वपक्ष एव चायम् । अतो न निराचक्रे । किन्तु तूष्णीमास ॥ ६३ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतमेकोनत्रिंशाध्यायविवरणं सतां हृदाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**एकोनत्रिंशोऽध्यायः**

—०—

१. एतदध्यायनाम मूलादर्शे न निर्दिष्टम् । **'समस्तधर्मसङ्ग्रहो नाम'** इति प्रचलितं नाम ।

# त्रिंशोऽध्यायः

**[यागसमाप्तिः]**

**ॐ ॥ अथ कृष्णमनुस्मृत्य भीष्मे स्वां वसुतां गते ।**
**कृत्वा[1] कार्य्याणि सर्वाणि गङ्गामाश्वास्य दुःखिताम् ॥ १ ॥**

**ॐ ॥ अथ युधिष्ठिरस्य सर्वधर्म(कथनानन्तरं स्वर्गारो)हणे स्वमूलरूपं स्मृत्वा[3] स्वां वसुतां गते सति ॥ १–४ ॥**

---

ॐ ॥ आश्वमेधिकपर्वसङ्ग्रहोऽयमध्यायः । अथ धर्मसर्वस्वकथनानन्तरम् । शरतल्पावसाने, उत्तरायणारम्भे । **'अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः'** [अनु.प.२७३.२७] इति भीष्मस्वर्गारोहणे । सन्दिग्धार्थमिदं वाक्यम् । तथाहि धर्मोपदेशात् पूर्वं कृष्णवचनम्–**'पञ्चाशतं षट् च कुरुप्रवीर शेषं दिनानां तव जीवितस्य'** [शां.प.५०.१४] इति राजधर्मे । कथमथ वचनद्वयस्य सङ्गमनम्? इयमत्र व्यवस्था । मौहूर्तिकाः पठन्ति–आग्रहायणशुक्लैकादश्यामर्जुनाय गीतामुपदिदेश कृष्ण इति । तर्हि तस्मिन्नेव दिने युद्धारम्भ इत्यायातम्, यदि मौहूर्तिकानां सम्प्रदायः प्रमाणम् । तत आरभ्य आ माघशुद्धाष्टमीमष्टपञ्चाशद् दिनानि भवन्ति । शरतल्पे शयानस्याष्टपञ्चाशद्रात्रयो व्यतीता इत्यनुशासनिके भीष्मवचनम् । तर्हि नैकादश्यां युद्धारम्भः, ततोऽपि दशदिनेभ्यः पूर्वं मार्गशीर्षशुद्धद्वितीयायामित्यापतति । खलु चिन्तयित्वा युद्धारम्भदिनम् । एकादश्यां वा भवतु । द्वितीयायां वा । न नः काचित् क्षतिः । परन्तु **'पञ्चाशतं षट् च कुरुप्रवीर शेषं दिनानाम्'** इति कृष्णवचनस्य गतिर्वक्तव्या । एवं स्यात् । अष्टपञ्चाशत्सु अष्टौ दिनानि युद्धमेवान्ववर्तत । ततश्चतुर्विंशत्या मृतानां संस्कारः, पुरप्रवेशः, राज्याभिषेकादिश्च । एवं द्वात्रिंशद् दिनानि गतानि । षड्विंशतिरवशिष्टानि । तदेतदाह भगवान् कृष्णः समाधिगुह्यभाषया–**'पञ्च आशतं षट् च शेषं दिनानाम्'** इति । आशतमावृत्तानि पञ्च, पञ्चभिराहतं वा शतम् । विंशतिरित्यर्थः । विंशतिश्च षट् च शेषं दिनानामिति सर्वाविरोधः । महान्तः प्रमाणम् । अथेत्युत्तरकथाधिकारार्थः, अध्यायारम्भे मङ्गलार्थश्च । परममङ्गलमन्तस्थं कृष्णमनुस्मृत्य स्वयोग्यतानुगुणमन्त्यकालस्मरणानुगुणं च स्मृत्वा । ननु कथं कृष्णमनुस्मृत्यापि वसुतां जगाम । मुक्तिफलकं ह्यन्त्यकाले कृष्णस्मरणम् । तथाहि गीतायम्–**'स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्बाणमृच्छति'** [२.७२] इति, **'यंयं वापि स्मरन् भावं त्यजत्यन्ते कळेबरम् । तन्तमेवैति कौन्तेय**

---

१. **'कृत्वा सर्वाणि कर्माणि गङ्गा–'** इति क्वचित् ।

२. **'यंयं वाऽपि स्मरन् भावं त्यजत्यन्ते कळेबरम् । तन्तमेवैति कौन्तेय–'** इति गीतानुगुणमिदं विवरणम् ।

आश्वासितश्च कृष्णाभ्यां धर्म्मजो दुःखितः पुनः ।
पराशरसुतेनोक्तः कृष्णेनानन्तराधसा ॥ २ ॥

अपापे पापशङ्कित्वादश्वमेधैर्य्यजाच्युतम् ।
कुरु[१] राज्यं च धर्म्मेण पालयापालकाः प्रजाः ॥ ३ ॥

इत्युक्तः स तथा चक्रे त्यक्त्वा भोगांश्च कृत्स्नशः ।
गोव्रतादिव्रतैर्य्युक्तः पालयामास मेदिनीम् ॥ ४ ॥

---

**सदा तद्भावभावितः'** [८.६] इति च । ननु भोः अनवगतवाक्यार्थोऽसि । स्मरन् त्यजतीति मरणक्षणे स्मृतिं गीता बोधयति । अत्र तु अनुस्मृत्येति स्मृत्युत्तरकाले मृत्वा वसुभाव उच्यते । तत् को विरोधः? स्नात्वा भुङ्क्ते इतिवत् । नहि स्नान् भुङ्क्ते । वदति च–प्रथमं स्नानि, पश्चाद् भुनजा इति । एवं प्रथमं कृष्णं सस्मार । पश्चान्ममार । प्रसिद्धा चेयमनुस्मृतिर्भागवते च भारते च । अथच कृष्णमनुस्मृत्य अनुज्ञार्थं कृष्णं स्मृत्वा । तथाहि भारते–**'स मां त्वमनुजानीहि कृष्ण मोक्ष्ये कळेबरम् । त्वयाऽहं समनुज्ञातो गच्छेयं परमां गतिम् । वासुदेवः–अनुजानामि भीष्म त्वां वसून् प्राप्नुहि पार्थिव'** [अनु.प.२७३.४५–६] इति भीष्मस्वर्गारोहणे । स्फुटमाह च गीताभाष्ये भगवत्पादः–**'भीष्मादीनां तु तस्मिन् क्षणे युक्त्यभावः'** [२.७२] इति । तस्मिन् क्षणे मरणक्षणे । तस्मान्न तदैव मुक्तिरिति । कृत्वा कारयित्वा च । गङ्गामाश्वास्य कृष्णाभ्याम् । **'वसूनेष गतो देवि पुत्रस्ते विज्वरो भव । इत्युक्ता सा तु कृष्णेन व्यासेन च सरिद्वरा । त्यक्त्वा शोकं महाराज स्वं वार्यवततार ह'** [२७४.३३–४] इति च । ताभ्यां सह स्वयमप्याश्वास्य वा । स्वयं च कृष्णाभ्यामाश्वासितः । कृष्णाभ्यां च आश्वासितः । चकारेण नारददेवस्थानादिभिश्च । धृतराष्ट्रेण च, द्रौपद्या च, भ्रातृभिश्च । आश्वासितोऽपि पुनर्दुःखितः । पुनः पराशरसुतेन कृष्णेनोक्तः । अनन्तराधसा अनन्त-तेजसा । किमिति? अपापे । पापाभावेऽपि पापशङ्कित्वात् । पुण्य एव पापशङ्कित्वात् । अकृतपापे स्वस्मिन् पाप-शङ्कित्वात् । अश्वमेधैस्त्रिभिः । **'याजयित्वाऽश्वमेधैस्तान् त्रिभिरुत्तमकल्पकैः । तद्यशः पावनं दिक्षु शतमन्योरिवाऽतनोत्'** [१.१०.३] इति हि भागवते । अपालकास्त्वदृते । अथच अः पालको येषाम् । भगवत्पालिताः । अतस्त्वयाऽपि पालनीयाः ॥ १–३ ॥ कृत्स्नशः कृत्स्नांश्च भोगान् । गोव्रतं गोसेवा । **'योऽग्रे भक्त्या किञ्चिदप्राश्य दद्याद् गोभ्यो नित्यं गोव्रती सत्यवादी'** इति हि स्मरन्ति । अपक्वेन पत्रादिना जीवनम् । पञ्चगव्येन वा । आचक्षते च– **'यत्रकुत्रशयो नित्यं येनकेनचिदाशितः । येनकेनचिदाच्छन्नः स गोव्रत इहोच्यते'** इति । गोवद् वर्तनं गोव्रतमित्यर्थः । **'गोमूत्रेणाऽ-चरेत् स्नानं वृत्तिं कुर्याच्च गोरसैः । उत्थितासूत्थितस्तिष्ठेदुपविष्टासु च स्थितः । अभुक्तासु च नाश्नीयादपीतासु च नो पिबेत् । त्राणं चैवाऽत्मना कार्यं भयार्ताश्च समुद्धरेत् । आत्मानमपि सन्त्यज्य गोव्रतं तत् प्रकीर्तितम्'** इति च । पालयामास मेदिनीम् । **'यथा मनुर्महाराजो रामो दाशरथिर्यथा । तथा भरतसिंहोऽपि पालयामास मेदिनीम्'**

---

१. 'कुरुष्व राज्यं धर्मेण'

दद‍ौ देयानि मुख्यानि यथाकाममखण्डितम् ।
नैवार्त्थी विमुखः कश्चिदभूद् योग्यः कदाचन[१] ॥ ५ ॥

प्रष्टा च दाताऽखिलराजनम्यो यष्टा च धर्म्मात्मज एव तत्र ।
बभूव पाण्डोर्ग्गृहमावसंश्च राजाधिराजो वनितानिवृत्तः ॥ ६ ॥

भीमस्तु दौर्य्योधनमेव सद्म प्रपेदिवानूर्ज्जितवीर्य्यलब्धम् ।
कृष्णासहायः सुरराजयोग्यानभुङ्क्त भोगान् युवराज एव ॥ ७ ॥

कृष्णा च पार्त्थांश्चतुरो विहाय सुव्यक्तसारस्वतशुद्धभावा ।
रराज राजावरजेन नित्यमनन्ययोगेन शिखेव वह्नेः ॥ ८ ॥

प्रीत्यैव विज्ञानयुजाऽन्यपार्त्थैः संवादतः परिहृता गतभाविकाले ।
अपि स्वकीयं पतिमेव भीममवाप्य सा पर्य्यचरन्मुदैव ॥ ९ ॥

**योग्यः (अर्थस्य) । अर्थविमुखः ॥ ५ ॥ पञ्चपाण्डवानां प्रवृत्तिप्रकारं यथाक्रममाह– प्रष्टा चेत्यादिना ॥ ६–८ ॥ विज्ञानयुजा प्रीत्यैव ॥ ९–११ ॥**

---

[आश्व.प.१९.२] इत्यश्वमेधे ॥ ४ ॥ मुख्यानि अशनं वासो वासांसि वसूनि च । येभ्य ऋते न जीवनम् । अखण्डितम् निरन्तरम् । विमुखः ददाति नवेति सङ्कोचेन याच्ञाविमुखः । याचित्वा वा याचितस्यालाभेनानादृतः । याचितुं योग्यः । योग्यस्य याचिता । नहि निर्दशनतुण्डः पलितमुण्डः कामिनीमर्थयमानो माननीयो भवति ॥ ५ ॥ गृहमावसन् । **'उपान्वध्याङ् वसः'** [अ.सू.१.४.४८] । कस्य किमपेक्षितमिति प्रष्टा च, पृच्छम्पृच्छं दाता च । विदुषां सभासु प्रष्टा च प्रश्नानाम् । तत्र साम्राज्ये । तत्र पञ्चसु । राज्ञामधिराजत्वात् । वनिताभोगतो निवृत्तः ॥ ६ ॥ दौर्योधनमेव सद्म, यत्र न भीमस्य प्रवेशावकाश इति दुर्योधनः साभिमानममन्यत तदेव सद्म । **'ततो दुर्योधनगृहं प्रासादैरुपशोभितम्'** [शां.प.४३.६] **'धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः । प्रतिपेदे महाबाहुर्मन्दिरं मघवानिव'** [७] इति च । 'मघवानिव' इति भारतवचनं विवृणोति– सुरराजयोग्यान् भोगानभुङ्क्तेति । युवराज एव । युवराज एव सन् राजभोगानभुङ्क्त । **'यौवराज्येन कौन्तेय भीमसेनमयोजयत्'**[४०.९] इति च ॥ ७ ॥ सुव्यक्तः सर्वदाऽभिव्यक्तः शुद्धः केवलः । सरस्वत्या भारत्या एव भावा धर्मा यस्याः सा । पूर्वमिवार्जुनाद्यन्ययोगं विना । केवलं भीमेन । शिखेव दीधितिरिव ॥ ८ ॥ विज्ञानयुजा ज्ञानपूर्वया प्रीत्या । भीमस्य द्रौपद्याश्च प्राणत्वं भारतीत्वं च विज्ञाय, सम्प्रति तस्या विशेष-

---

१. **'कथञ्चन'**

**रराज राजावरजस्तया स द्विरूपया सोमककाशिजातया ।**
**श्रिया भुवा चैव यथाऽब्जनाभो निहत्य सर्वान् दितिजान् महाब्धौ[१] ॥ १० ॥**

**सर्वोत्तुङ्गो नामतः प्राणवायोरंशो निशायां गुरुपुत्रसूदितः ।**
**माताऽस्य देवीति च रौहिणेयी भीमप्रियाऽऽसीद् या पुराऽस्यैव[२] राका ॥ ११ ॥**

**अन्याश्चाऽसुर्वासुदेव्यो दिशो या आपश्च पूर्वं विंशतिरग्र्यरूपाः ।**
**ताभिर्य्युतो[३] दैवतैरप्यलभ्यानभुङ्क्त भोगान् विबुधानुगार्च्चितः ॥ १२ ॥**

**ररक्ष धर्म्मानखिलान् हरेः स निधाय विप्राननुशास्य युक्तान् ।**
**सद्वैष्णवान्[४] विदुषः पञ्चपञ्च सवेतनान् ग्राममनु स्वकीयान् ॥ १३ ॥**

**वासुदेव्यः वसुदेवपुत्र्यः । पूर्वं दिशः दिग्देवताः । आपश्च अब्देवताश्च ॥ १२॥ अनुशास्य शिक्षयित्वा । युक्तान् धर्मशिक्षोपपन्नान् ॥ १३ ॥**

---

सन्निधानं च ज्ञात्वा, प्रीत्या संवादत एव परिहृता । न त्वनिच्छया, नापि बलात्कारेण । समानो वादः संवादः । एकवाक्यता, एकाभिप्रायता च । गतकाले द्रौपदीभावात् पूर्वकाले, द्रौपदीभावापगमानन्तरं भाविकाले च, अनाद्यनन्त-कालमिति यावत्, यः स्वरूपपतिस्तमेव स्वकीयं पतिं भीममवाप्य । अपूर्वोऽयं छन्दोविलासः । प्रथमः पादस्त्रैष्टुभ इन्द्र-वज्रया । उत्तरार्धं च त्रैष्टुभमुपेन्द्रवज्रया । द्वितीयः पादः शाक्करो वसन्ततिलकया । इन्द्रादीनां वर्जनादिन्द्रवज्रा । वायोर्भीमस्य वसन्ततिलकायिता । उपेन्द्रे भगवति भक्त्या व्रजनादुपेन्द्रवज्रा कृष्णा बभूवेति । त्रिभिश्छन्दोभिरुपजातिः ॥ ९ ॥ सोमक-जातया द्रौपद्या । सोमकात् पृषतः । पृषताद् द्रुपदः । काशिजातया काळ्या । भारती च श्रीभूपदवाच्या । शंरूपे वायौ रतेः श्रीः । प्रकृतिमानित्वाद् भूः । कृष्णावतारे श्रीरिति रुग्मिणी । भूरिति सत्यभामा । एवकारेण रूपभेद एव केवलं न स्वरूपभेद इत्याह । महाब्धौ क्षीराब्धौ ॥ १० ॥ अहम्प्राणवायोः । मुख्यवायोरन्येषु सर्वेष्वपि वायुष्वयमेवोत्तुङ्ग इत्यन्वर्थनामा । रौहिणेयी वसुदेवभार्यायां रोहिण्यां जाता । बलभद्रानुजा । पूर्णेन्दुः पूर्णिमा राका । तन्मानिनी । रात्यानन्दमिति राका । पुरा मूलरूपेऽपि अस्यैव वायोः प्रिया ॥ ११ ॥ न केवलं देवी । अन्याश्च विंशतिर्वसुदेवपुत्र्यः भीमप्रिया आसुः । याः पूर्वं मूलरूपे दिग्देवताः, दशानां दिशां द्वेद्वे । समष्ट्या विंशतिरपि अब्देवताश्च । नदीविशेषदेवता वा । देवतागतं बहुत्वमभिमन्यमाने व्यवह्रियते– आप इति । देवतास्वप्युत्तमा दैवता दैवतानि वा । रुद्रेन्द्रादयः । विबुधैर्विद्वद्भिरनुगैरर्चितः । विबुधैर्देवांशैरनुचरैरर्चितः । विबुधैश्चानुगैश्चार्चितः विबुधैर्देवैरप्यनुगीभूयार्चितः । विबुधानामनुगैरर्चितः ॥ १२ ॥ हरेर्धर्मान् ररक्ष । **'भविता स तदा ब्रह्मन् कर्ता चैव वृकोदरः । प्रवर्तकोऽस्य धर्मस्य पाण्डुसूनुर्महाबलः'**

---

१. **'दितिजान् पयोब्धौ'**

२. **'पुरा सैव'** । **'पुरैवास्य राका'** इति क्वचित् ।

३. **'ताभिर्युक्तो–'**

४. **'स वैष्णवान्'** इति क्वचित् ।

दधार दण्डं तदवर्त्तिषु स्वयं जग्राह चान्वेव मुदाऽथ तद्वान् ।
[1]तद्वृत्तमन्यैरपि विप्रवर्य्यैः संशोधयन् सर्वमसौ यथा[2] व्यधात् ॥ १४ ॥

नावैष्णवः कश्चिदभूत् [3]कुतश्चिन्नैवान्यनिष्ठो नच धर्म्महन्ता ।
न विद्धयवर्ती नच दुःखितोऽभून्नापूर्णवित्तश्च तदीयराष्ट्रे ॥ १५ ॥

वासिष्ठवृष्णिप्रवरौ प्रपश्यतां ताभ्यां च भीमेन मुनीश्वरैश्च ।
संशिक्षितानां प्रथमाद् युगाच्च गुणाधिकः कलिरासीत् प्रजानाम् ॥ १६ ॥

शुभं महत् स्वल्पफलं कृते हि विपर्य्ययेणाशुभमेष दोषः ।
तद्धीनमप्युच्चशुभं कृताद् युगाच्चक्रे कलिं मारुतिरच्युताश्रयात् ॥ १७ ॥

**यथा व्यधात् यथावदकरोत् । वर्णाश्रमस्थैर्यथा वर्तितव्यं तथाऽकरोदित्यर्थः ॥ १४ ॥ 'यथा व्यधात्' इत्येतद् विवृणोति– नेत्यादिना ॥ १५–७ ॥**

---

[सृ.खं.१५.१५] इति पाद्मे । राजानुमत्या शासित्वा शासयित्वा च । शास्त्रानुगुणं धर्मानुगुणं च शासित्वा । शासु अनुशिष्टौ । अनुशिष्टिर्विविच्य ज्ञापनमाज्ञापनं च । युक्तान् समर्थान् नियुक्तांश्च । स्वकीयान् स्वस्य विश्वास-पात्राणि । ग्राममनु प्रतिग्रामं पञ्चपञ्च निधाय ॥ १३ ॥ तदवर्तिषु धर्ममार्गे विप्राणामादेशे वा स्वयमवर्तमानेषु । अन्वेव तद्वान् तदनुगानेव तदाज्ञावर्तिन एव अनुजग्राह । तद्वान् अनुजग्राहैव च । तेषां नियुक्तानां विदुषां वृत्तमन्यैः स्पशैः संशोधयन् सर्वं करणीयं यथावद् व्यधात् ॥ १४ ॥ कुतश्चित् कारणविशेषादपि । अन्यनिष्ठः इतरदेवतोपासकः नाभूदेव । वेदोक्त-धर्महन्ता । विधी राजशासनम् । तदतिवर्ती । सनातनं सामाजिकं च धर्ममपालयन् कोऽपि नाऽसेत्येतत् । अपूर्ण-दैवमानुषवित्तश्च । **'धर्मार्थकामसंयुक्तं मोक्षाभ्युदयसाधनम् । प्रह्लादजननं पुण्यं सम्बभूवाथ मानसम्'** [आश्व.प.१५.२१] इति च ॥ १५ ॥ प्रपश्यतां प्रकटं पश्यन्तीनां प्रजानाम् । पुल्लिङ्गेनेदमाह– प्रकृष्टो जनको येषां ते, प्रकृष्टा जातास्तनया येषां ते, स्वयं च ये ज्ञानप्रकर्षं गता इत्यप्यर्थो विवक्षित इति । तेन वंशशुद्धिः । प्रजा इति विशिष्य पुमांस एव विवक्षिता इति च । मुनीश्वरैः नारददेवस्थानादिभिश्च । सामस्त्येन, सम्यक् च शिक्षितानाम् । समिति विष्णुः । विष्णुपरतया च शिक्षितशास्त्राणाम् । कलिः कलिनाऽभिमन्यमानं युगम् ॥ १६ ॥ कथं गुणाधिकः? महतः शुभस्य स्वल्पमेव फलं कृते हि शास्त्रसिद्धम् । महदपि शुभं स्वल्पमेव फलमस्येति वा । अशुभं विपर्ययेण । स्वल्पमपि महाफलम् । अल्पस्याप्यशुभस्य महदनिष्टम् । एष दोषः कृते । तद्धीनमशुभान्महानिष्टहीनम् । अल्पादपि शुभादुच्चपुण्यं च । अत्र पुनरनल्पफलं शुभं चानल्पमेव चक्रे मारुतिरच्युताश्रयात् । तेन कृतादप्युच्चशुभं चक्रे ॥ १७ ॥

---

१. **'सद्वृत्त–'** इति क्वचित् । २. **'यथावत् । नावैष्णवः'** ३. **'कुतश्चिन्नचान्य–'** इति क्वचित् ।

धनञ्जयः प्रोद्यतदण्ड आसीत् सदाऽन्यचक्रेषु निजाग्रजेरितः ।
विभीषयित्वा नृपतीन् सरत्नान् पदोर्नृपस्याग्रभुवो न्यपातयत् ॥ १८ ॥

[1]सदैव कृष्णस्य मुखारविन्दाद् विनिस्सृतं तत्वविनिर्ण्णयामृतम् ।
पिबन् सुताद्याधिमसौ क्रमेण त्यजंश्च रेमे विरतातिभोगः ॥ १९ ॥

दुःशासनस्याऽवसथं सुभद्राचित्राङ्गदासहितोऽद्ध्यावसंश्च ।
सचन्द्रिकाकान्तिरनूनबिम्बो नभस्थितश्चन्द्र इवात्यरोचत ॥ २० ॥

**अग्रभुवः अग्रजस्य ॥ १८–२० ॥**

---

अन्यचक्रेषु परराष्ट्रेषु । शत्रुसैन्येषु वा । प्रोद्यतदण्डः सदा सन्नद्धसैन्यः । दण्ड इति चतुर्थोपायश्च । **'परचक्रोपरोधे च दृप्तानां चावमर्दने । युधिष्ठिरो महाराज फल्गुनं व्यादिदेश ह'**[शां.प.४०.१३] इति च । धर्मविमुखान् विरुद्धांश्च भीषयित्वा । रत्नमिति वित्तसामान्यमुच्यते । रमन्तेऽस्मिन्निति हि रत्नम् । अग्रभुवोऽग्रजस्य । पदोः पादयोः । अत्र वामनः– **'केचिदत्र च्छन्दसीत्यनुवर्तयन्ति । अपरे पुनरविशेषेणेच्छन्ति । तथाहि भाषायामपि पदादयः शब्दाः प्रयुज्यन्ते– 'व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च । व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः' इत्येवमादयः'** [अ.सू.६.१.६३] इति । उभयथाऽपि नास्माकं हानिः ॥ १८ ॥ विविधप्रसङ्गेषु निःसृतम् । युद्धरङ्ग एव निःसृता गीता । वक्ष्यत्यनुगीताम् । कृष्णस्येति बादरायणस्य च । श्रुतियुक्तिमूल आप्तिमूलश्च निर्णयो विनिर्णयः । इदमित्थमिति चरमो निर्णयश्च विनिर्णयः । सुतानां गुरोः पितामहस्य बाह्लीकादिबन्धुवर्गस्य च मृतिनिमित्तां मानसीं व्यथाम् । विरतातिभोगः । जितेन्द्रियतया मितभोगः । अविरतातिमानुषभोगो वा ॥ १९ ॥ दुःशासनस्याऽवसथम् । आवसन्त्यत्रेति आवसथं गृहम् । **'आङि वसेरथः'** [का.उ.सू.३.८] इति कातन्त्राः । **'–तथा दुःशासनस्य तु । प्रतिपेदे महाबाहुरर्जुनो राजशासनात्'** [शां.प.४३.९] इति च । अध्यावसन् । यद्यपि दुःशासनस्याऽवसथं तस्य हन्तुर्भीमस्याधिकृतम् । सोऽपि प्रीत्याऽर्जुनाय ददावित्यधिकारप्राप्तमानन्तर्यप्राप्तं च तदर्जुन ओवासेति भावः । राज्ञो भीमस्य च अध्यादेशेन वसन्निति च । सुभद्राचित्राङ्गदासहितः । चित्रङ्गदा कश्चित् कालमत्रोवास । कञ्चित् कालं मणलूरे पुत्रेण साकम् । यदाऽश्वमेधाश्वो मणलूरं प्रविवेश, बभ्रुवाहनश्चार्जुनेन युयुधे, तदा चित्राङ्गदा मणलूर एवाऽस । अश्वमेधकाले पुनराजगाम । ततः परं प्रायोऽर्जुनेन सहैवोवास । उलूपी तु प्रायो नागलोक एवोवास । महाप्रस्थानकाले पुनर्हस्तिनपुरमाजगामेति ज्ञायते । तथाहि महाभारते–**'विवेश गङ्गां कौरव्य उलूपी भुजगात्मजा'** [महाप्र.प.१.२८] इति । चन्द्रिकाकान्तिभ्यां सहितश्चन्द्र इव । सोऽनूनबिम्बः । अयमप्यनूनकीर्तिबिम्बः । स नभःस्थितः । अयं तु भूमाववतीर्णश्चन्द्रमाः । **'उपान्वध्याङ् वसः'** [अ.सू.१.४.४८] इति द्वितीया ॥ २० ॥

---

१. **'तदैव'**

**समस्तभृत्याश्रितवेतनानां माद्रेय आसीत् प्रथमः प्रदाता ।**
**स दुर्म्मुखस्याऽवसथेऽवसच्च समद्रराजात्मजयाऽग्रवर्त्ती ॥ २१ ॥**

**सन्धानभेदानुगतप्रवृत्तिस्तिष्ठंश्च दुर्म्मर्षणशुभ्रसद्मनि[१] ।**
**नृपाङ्गरक्षः प्रगृहीतखड्गस्तस्यानुजो मागधकन्ययाऽऽसीत् ॥ २२ ॥**

**सः माद्रेयः ॥ २१–२ ॥**

समस्तेति । **'बलस्य परिमाणे च भक्तवेतनयोस्तथा । नकुलं व्यादिशद् राजा कर्मणां चान्ववेक्षणे'** [४०.१२] इति च । भृत्यानां चाऽश्रितानां चाधिकारिणां विप्रादीनाम् । जननक्रमेण प्रथमो नकुलः । स दुर्मुखस्याऽवसथे । साम्प्रते भारतपाठे दुर्मर्षणस्य भवनं नकुलाय दुर्मुखस्य तु सहदेवाय ददाविति पठ्यते । **'दुर्मर्षणस्य भवनं दुःशासनगृहाद् वरम् । कुबेरभवनप्रख्यं मणिहेमविभूषितम् । नकुलाय–'** [४३.१०] इति, **'दुर्मुखस्य च वेश्मागृयं श्रीमत् कनकभूषणम् । पूर्णपद्मदलाक्षीणां स्त्रीणां शयनसङ्कुलम् । प्रददौ सहदेवाय–'** [१२] इति च । पाठव्यत्यासः सम्भाव्यते । तेन **'दुर्मर्षणस्य भवनम्'** इत्यत्र **'दुर्मुखस्य गृहं भव्यम्'** इति, **'दुर्मुखस्य च वेश्मागृयम्'** इत्यत्र **'दुर्मर्षणस्य वेश्मागृयम्'** इति च प्रतनपाठः स्यादिति भाति । युक्तं चैतत् । ज्यायसो गृहं ज्यायानाप, कनीयसः कनीयानिति समुचितः पन्थाः । दुर्मर्षणो ज्यायान् । दुर्मुखः कनीयानिति प्रतीयते । पाठक्रमानुसारेण । **'दुर्मर्षणो दुर्मुखश्च'** [आ.प.६८.९५.१३] इति नियत्या पूर्वप्रयोगात् । यमयोश्च नकुलः कनीयान् । सहदेवो ज्यायान् । **'यमयोः पूर्वजातः कनीयान्'** इति स्मरणात् । तेन दुर्मुखगृहे नकुलोऽवसत्, दुर्मर्षणगृहे सहदेव इति सहजः पन्थाः । स मद्रराजात्मजया । मद्रराजस्य शल्यस्याऽत्मजया करेणुमत्या सह । असमासेऽपि सहस्य सभावश्छान्दसः । केचित् **'समद्रराजात्मज अग्रयवर्ती'** इति मूलं व्यत्यस्य पठन्ति । सत्यं तदा वैयाकरणम्मन्यास्तुष्यन्ति । परन्तु मूलपाठः कुप्यति । सन्धिश्च । तथाच पाठान्तरकरणेऽपि सन्धेश्छान्दसत्वाश्रयणादृते न निर्वाहः । तेनैकं सन्धित्सतोऽपरमच्यवतेति किमसाधि? न क्वापि प्राचीनादर्शेषु तथा पठ्यते । नहि व्याकरणेन महदुदितं संयोज्यते । किन्तु महदुदितेन व्याकरणम् । अग्रयवर्ती अग्रजानामनुवर्ती । अथवा मद्रराजात्मजया सहिता समद्रराजात्मजा, नकुलस्यापरा भार्या पार्वती । तथाच माद्रीपार्वतीभ्यां सहितो नकुल इत्युक्तं भवति । युक्तं चैवं व्याख्यानम् । अन्यथाऽन्येषां चतुर्णामपि सर्वा भार्या उल्लिखन्नाचार्यः नकुलस्यैकां भार्यां किमिति नोल्लिलेखेति शङ्का निरुत्तरा प्रत्यवतिष्ठते ॥ २१ ॥ तस्यानुजः सहदेवः । नृपाङ्गरक्षः । **'सहदेवं समीपस्थं नित्यमेव समादिशत् । तेन गोप्यो हि नृपतिः सर्वावस्थो विशाम्पते'** [४०.१५] इति च । दुर्मुखस्याऽवसथमित्युक्तम् । तदावसथं यत्राऽनन्देन वसन्ति । सहदेवसद्मापि तथैवाऽसीदिति शुभ्रसद्मनीत्याह । शुभं रमणं यत्र तद्धि शुभ्रम् । **'पूर्णपद्मदलाक्षीणां स्त्रीणां शयनसङ्कुलम्'** इति भारतोक्तं स्त्रीभोगभाग्यमपि शुभ्रमित्यनेनाऽह । मागधकन्यया जरासन्धतनयया ॥ २२ ॥

१. **'–शुभ्रवेश्मनि ।'**

**सेनापतिः कृप आसीद् युयुत्सुः स सञ्जयो विदुरश्चाऽम्बिकेयम् ।**
**पार्थैरिताः पर्य्यचरन् स्वयं च सर्वे यथा दैवतमादरेण ॥ २३ ॥**

**द्विरूपकृष्णप्रहितेषु पाण्डुषु क्षितिं प्रशासत्सु न कश्चनाऽतुरः ।**
**नचाक्रमान्मृत्युरभून्न नार्य्यो विभर्त्तृका नो विधुरा नराश्च ॥ २४ ॥**

**शब्दादयश्चाऽसुरतीव हृद्या निकामवर्षी च सुरेश्वरोऽभूत् ।**
**प्रजा अनास्पृष्टसमस्ततापा अनन्यभक्त्याऽच्युतमर्चयन्ति ॥ २५ ॥**

**युयुत्सुः, सः प्रसिद्धः सञ्जयः, विदुरश्च पार्थैरिताः ॥ २३–५ ॥**

---

सेनापतिः कृप आसीत् । **'स्यालो द्रोणस्य यश्चाऽसीद् दयितो ब्राह्मणो महान् । स च तस्मिन् महेष्वासः कृपः समभवत् तदा'** [आश्र.प.१.१३] इति हि वक्ष्यति । **'स चापि राजवचनादाचार्यो गौतमः कृपः । सेनामादाय सेनानीः प्रययावाश्रमं प्रति'** [२५.६] इति च । उपरि वक्ष्यमाणं विनेयवात्सल्यादाचार्य एकत्र सङ्गृह्याऽह । युयुत्सुरित्यादि । **'विदुरं सञ्जयं चैव युयुत्सुं च महामतिम् । अब्रवीत् परवीरघ्नो धर्मात्मा धर्मवत्सलः । उत्थायोत्थाय तत् कार्यमस्य राज्ञः पितुर्मम । सर्वं भवद्भिः कर्तव्यमप्रमत्तैर्यथातथम्'** [शां.प.४०.१७–८] इति च । न केवलं तावत् । **'मन्त्रे च निश्चये चैव षाड्गुण्यस्य च चिन्तने । विदुरं बुद्धिसम्पन्नं प्रीतिमान् स समादिशत् । कृताकृतपरिज्ञाने तथाऽऽयव्ययचिन्तने । सञ्जयं योजयामास वृद्धं सर्वगुणैर्युतम्'** [४०.१०–१] इति च । ससञ्जयो युयुत्सुर्विदुरश्चेत्येते त्रयः पार्थैरिताः पर्यचरन् । स आबाल्यात् धृतराष्ट्रसहचरः सुहृत् सारथिः सञ्जय इति वा । **'विदुरः सञ्जयश्चैव युयुत्सुश्चैव कौरव । उपासते स्म तं वृद्धं हतपुत्रं जनाधिपम्'** [आश्र.प.१.१२] इति चोपरि । स्वयं च सर्वे पार्थाः पर्यचरन् यथा दैवतमादरेण परिचरन्ति । अथच यथा यथावत् पर्यचरन् । कथम्? दैवतमादरेण । दैवतमे भगवति कृष्णे आदरेण भक्त्या । **'आदरो भजनं भक्तिः'** इत्यभिदधति । कृष्णभक्त्याऽऽम्बिकेयेऽपि कृष्णमनुसन्धाय पर्यचरन् । कृष्णभक्त्या, ज्येष्ठपूजनं तदाज्ञापालनमिति पर्यचरन् । **'पितृदेवो भव'** इत्यादेः । **'श्रुतिस्मृती ममैवाऽज्ञे'** इति च । **'राजा प्रत्यक्षदेवता'** इति स्मृतेः । **'यथा देवे तथा गुरौ'** इति श्रुतेश्च ॥ २३ ॥ द्विरूपाभ्यां कृष्णाभ्याम्, द्विरूपेण कृष्णेन वा प्रहितेषु, इदमिदमिह वः कर्तव्यमिति नियुक्तेषु । तस्य प्रकर्षेण हितेषु च । पाण्डुषु पाण्डपुत्रेषु । अक्रमाद् विभर्तृका विधुराश्च नाभवन् । कोऽयमक्रमो नाम? आधिव्याधिभ्यामीतिभीतिभ्यामपघातोपघाताभ्यामकाले प्राणवियोगोऽक्रमान्मृत्युरुच्यते ॥ २४ ॥ शब्दादयः । **'अतीव मधुरः शब्दः स्पर्शश्चातिसुखो रसः । रूपं दृष्टिक्षमं रम्यं मनोज्ञं गन्धवद् बभौ'** [आश्व.प.१५.२०] इति । निकामवर्षी । **'ववर्ष भगवान् देवः काले देशे यथेप्सितम्'** [१५.५] इति च । ईषदप्यस्पृष्टत्रिविधतापाः । **'आधिर्नास्ति मनुष्याणां व्यसने नाभवन्मतिः'** [६] इति च । अच्युतमर्चयन्ति । **'ब्राह्मणप्रमुखा वर्णास्ते स्वधर्मोत्तराः शुभाः'** [६] इति च । स्वभावविहितो धर्मः स्वधर्मः । स्वतन्त्रस्य विष्णोश्च धर्मः स्वधर्मः ॥ २५ ॥

**पृथ्वी च गावः ससरस्वतीका निकामदोहा अभवन् सदैव ।**
**अब्दाब्धिनद्यो गिरिवृक्षजङ्गमाः सर्वेऽपि रत्नप्रसवा[1] बभूवुः ॥ २६ ॥**

**कृष्णाश्रयात् सर्वमिदं वशे ते विधाय सम्यक् परिपालयन्तः ।**
**दिवीव देवा मुमुदुः सदैव मुनीन्द्रगन्धर्वनृपादिभिर्वृताः[2] ॥ २७ ॥**

**समुज्ज्वला पाण्डवकीर्त्तिनारी पदं [3]विधायासुरपक्षमूर्द्धसु ।**
**वराभये चैव सतां कराभ्यां कृष्णप्रसूता जगदण्डमावृणोत् ॥ २८ ॥**

**[4]पाताळपादां पृथिवीनितम्बामाकाशमद्ध्यां करसन्तताशाम् ।**
**ग्रहर्क्षताराभरणद्युवक्षसं[5] विरिञ्चिलोकस्थलसन्मुखाम्बुजाम् ॥ २९ ॥**

**गावो धेनवः । ससरस्वतीकाः सवेदाः । वेदानां च कामदोहत्वं नाम वेदोक्तानुष्ठानवतां सम्पूर्णफलवत्त्वम् । जङ्गमाः गजादयः ॥ २६–३० ॥**

---

पृथ्वी च गावः । **'मही च सस्यबहुला सर्वरत्नगुणोदया । कामधुग् धेनुवद् भोगान् फलति स्म सहस्रधा'** [१५.२७] इति, **'गावः सुक्षीरभूयिष्ठाः सुवालधिमुखोदराः'** [१७] इति च । पृथ्वी ससरस्वतीका । गावश्च निकामदोहाः । सरस्वतीति नदीमात्रं नदीविशेषश्च । तेन पृथ्वी ससरस्वतीका, नदीमातृका समृद्धसलिलेत्यर्थः । तदेतदुक्तं भारते–**'मही च सस्यबहुला'** इति । अथ गाव उस्राः निकामदोहाः स्रवत्क्षीराः । निकामं दुहन्ति दुग्धमिति । अथ पृथ्वी च निकामदोहा । सर्वान् भोगान् दोग्धीति । अथ च सरस्वती वेदविद्या । गावो वाचः ससरस्वतीकाः वेदविद्यासम्भृताः । या न शक्यमनधिगतवेदैर्वक्तुम् । निकामदोहाश्च मोक्षान्तं फलं दुहन्तीति । **'अवन्ध्यकाला मनुजाः पुरुषार्थेषु च क्रमात् । विषयेष्वनिषिद्धेषु वेदशास्त्रेषु चोद्यताः'** [१८] इति च । अब्दो मेघः । जङ्गमा गजादयः । रत्नं रतनमानन्दः । तत्प्रसवा आनन्दवर्षिण इत्यर्थः । यथासम्भवमनर्घरत्नप्रसवाश्च । **'कामं ववर्ष पर्जन्यः सर्वकामदुघा मही । सिषिचुः स्म व्रजं गावः पयसाऽत्यूधसो मुदा । नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः । फलन्त्योषधयः सर्वाः काममन्वृतु तस्य वै । नाऽधयो व्याधयः क्लेशा दैवभूतात्महेतवः । अजातशत्रावभवन् जन्तूनां राज्ञि कर्हिचित्'** [१.१०.५–७] इति च भागवते ॥ २६ ॥ वशे विधाय इच्छातन्त्रं विधाय । वश कान्तौ । **'कान्तिरिच्छा'** इति क्षीरतरङ्गिणी । सम्यग् धर्मानुगुणम् । अधर्मस्य परिहाणेन पालयन्तः । परितश्च सर्वतो बाह्यान्तरशत्रुभ्यः ॥ २७ ॥ येऽसुराणां पक्षाः सहायास्तेषां मूर्धसु । **'पक्षः सखिसहाययोः'** । पक्ष परिग्रहे । कराभ्यां वराभये च विधाय । सतामेव च । असतां भयं च विधाय । पाण्डवयशोनारी कृष्णप्रसूता कृष्णाभ्यां प्रसूता । यादवकृष्णेन वासिष्ठकृष्णेन च । तेनात्र पाण्डवकीर्तिकीर्तनी महाभारतभारती च पाण्डवकीर्तिनारी ॥ २८ ॥ नारीपदेनोपस्थापितां रूपककल्पनां रूपयति काव्यभङ्ग्या–पाताळपादामित्यादिना । पाताळे

---

१. **'रत्नप्रभवा–'** २. **'–दिभिर्युताः'** ३. **'पदं निधायासुर–'** ४. **'पाताल–'** ५. **'–भराणां द्युवक्षसम्'**

**विकुण्ठनाथाभयहस्तमादरान्मूर्ध्ना वहन्तीं वरभारताख्याम् ।**
**निशम्य तामीक्ष्य समस्तलोकाः पवित्रिता वेदिभवामिवान्याम् ॥ ३० ॥**

**प्रपालयत्स्वेव धरां सकृष्णेष्वद्धैव पार्थ्येषु कलिर्बलिश्च ।**
**सपापदैत्यौ[1] क्वच राष्ट्रविप्लवं सञ्चक्रतुस्तच्छ्रुतमाशु पार्थ्यैः ॥ ३१ ॥**

**नृपेण कृष्णेन च साधु चोदितो भीमस्तदा तौ सगणौ विजित्य ।**
**बलिं प्रविद्राप्य[2] कलिं निबद्ध्य समानयत् कृष्णनृपेन्द्रयोः पुरः ॥ ३२ ॥**

**पप्रच्छ तं कृष्णपुरो युधिष्ठिर उदारधीः ।**
**कले किमिति मे राष्ट्रं विप्लावयसि दुर्म्मते ॥ ३३ ॥**

**बलिः वैरोचनिः[3] ॥ ३१–३ ॥**

---

पादावस्याः । मूर्ध्नि निहिताभ्यां पादाभ्यामसुरपक्षाः पाताळभाजो बभूवुरित्यर्थः । अधस्तात् पाताळपर्यन्तं कीर्तिव्याप्तित्यर्थः । कराभ्यां करैर्वा सन्तता आशा दिशः । ग्रहर्क्षतारा दिवश्चाऽभरणानि । वक्षसश्च । विरिञ्चलोकस्थं नेत्राम्बुजाभ्यां लसत् मुखाम्बुजम् । एवं विश्वव्याप्ता कीर्तिर्नारीत्वेनोत्प्रेक्ष्यते । अभिमानिदेवतापरतायां तु नोत्प्रेक्षा, किन्तु स्वभावोक्तिः । कीर्तिमानिन्यो महाभारतमानिन्यश्च रमासरस्वतीभारत्यः । **'कौशेयपीतवसनामरविन्दनेत्रां पद्मद्वयाभयवरोद्यतपद्महस्ताम्'** इत्यादि चात्र संवदते । तारा अश्विन्याद्याः सप्तविंशतिः । अन्यान्यृक्षाणि ॥ २९ ॥ वेदिभवां भारत्याख्यामिव वरभारताख्याम् । वरं श्रेष्ठं सर्वैश्च वरणीयं बभूव भारतवर्षं यया सा कीर्तिनारी । महाभारताख्या च कृतिनारी । एकां कीर्तिनारीं निशम्य, अपरामध्ययनेनेक्षित्वा । केचिन्निशम्य श्रुत्वा, केचित् साक्षादीक्षित्वा च ॥ ३० ॥ कृष्णानुग्रहेण अद्धैव धर्मानुगुणमेव, प्रकर्षेण, यथा कलिर्न नासां निक्षिपेत् तथा पालयत्स्वेव, कृष्णेच्छयैव कलिर्बलिश्च राष्ट्रविप्लवं सम्भूय चक्रतुः । पापैः क्रूरैः स्वानुगैः सहितौ सपापौ दैत्यौ । वक्ष्यति हि–'सगणौ विजित्य' इति । स्वयं च पापेन तमोयोग्येन पातकेन सहितौ । तेन नायं वैरोचनिर्बलिः । किन्तु तदाविष्टस्तन्नामैवासुरो यः साल्वो बभूवेति ज्ञापयति । **'सुपापदैत्यौ'** इति पाठे स्फुटोऽर्थः ॥ ३१ ॥ **'कलिमासन्नमाविष्टं निवार्य नृपनन्दनः । भ्रातृभिः सहितो धीमान् बभौ धर्मबलोद्धतः'** [आश्व.प.१५.४] इति भारते सूचितां कथां विस्तृत्याऽह– नृपेणेत्यादिना । नृपं नन्दयन् नृपनन्दनो भीम इति हृदयम् । सगणौ सपरिवारौ ससैन्यौ वा । प्रविद्राप्य विजित्य दूरं द्रावयित्वा । निबध्य निगळबन्धं बद्ध्वा ॥ ३२ ॥ उदारधीः महामतिः महामना वा । अपराधिनामपि क्षमिता । उदारे सर्वोत्कृष्टे भगवति धीरस्येति वा । विप्लावयसि क्षोभयसि ॥ ३३ ॥

---

१. **'सुपापदैत्यौ'** २. **'प्रविद्राव्य'** ३. चिन्त्यमिदं व्याख्यानम् । प्रक्षिप्तं स्यात् ।

इत्युक्त आह कालोऽयं दुर्य्योधननिपातनम् ।
आरभ्य मम तत्र त्वं बलादाक्रम्य तिष्ठसि ॥ ३४ ॥

ततो मया कृतो राष्ट्रविप्लवस्ते नराधिप ।
तमाह राजा राज्ञां हि बलाद् राज्यं प्रतर्त्तते ॥ ३५ ॥

अपि कालभवं राष्ट्रं त्वदीयं मादृशैर्नृपैः ।
ह्रियते बलवद्भिर्हि राज्याशा ते कुतस्तदा ॥ ३६ ॥

‘कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद् राजा कालस्य कारणम्’ ॥ ३७ ॥

तमुवाच कलिः काले मदीये त्वादृशः कुतः ।
राजानं पूर्वमाविश्य विप्रांश्च स्यामहं नृप ॥ ३८ ॥

वासुदेवसहायेषु तेजो युष्मासु मे नहि ।
क्व राजाऽसावृते युष्मान् यो मया नाभिभूयते ॥ ३९ ॥

**दुर्योधननिपात(न)मारभ्य यः कालः अयं (मम) मदीयः ॥ ३४–५ ॥ कालभवमपि कालप्राप्तमपि त्वदीयं राष्ट्रं मादृशैः बलिभिः नृपैः ॥ ३६–४० ॥**

---

मम मदधीनः । तत्र मदधीने काले ॥ ३४ ॥ सोपस्करं राष्ट्रं राज्यम् । **‘स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते’** इति कामन्दकीये । बलात् शासनबलात् सुष्ठु अपष्ठु वा पथि प्रवर्तते ॥ ३५ ॥ अपि यद्यपि त्वत्कालभवत्वाद् त्वदीयम् । अपि तथाऽपि मादृशैः ह्रियते स्वाधीनं क्रियते ॥ ३६ ॥ **‘कालो वा कारणं राज्ञः–’** इत्यादि कुन्तीवचनम् [उ.प.१३२.१६], भीष्मवचनं च [शां.प.६९.६] स्मरन्नाह– कालो वा । कारणं नियन्ता ॥ ३७ ॥ कुतः कालकारणं स्याः? किन्त्वहमेव स्याम् । प्रथमं राजानमाविश्य पश्चाद् विप्रांश्चाऽविश्य अहमेव कारणं स्याम्, बलात् प्रवर्तकः स्याम्, राष्ट्रविप्लावकः स्याम् ॥ ३८ ॥ किन्तु युष्मासु न मे तेज आक्रमण-शक्तिः । वासुदेवसहायत्वात् असुदेवसहायत्वाच्च । तेन ‘वा+असुदेवसहायेषु’ इति च प्रतृण्णम् ॥ ३९ ॥

मदीयकाले भूपाल [1]विप्रवेदविरोधिनि ।
मद्दृष्टिपाते क्व गुणाः क्व वेदाः क्व सुयुक्तयः ॥ ४० ॥

जगाद नृपतिः सत्यं कले वक्ष्यनृतोऽपि सन् ।
मोचये [2]त्वर्त्तवचनाद् यदाऽस्मत्सन्ततेः परम् ॥ ४१ ॥

विलुम्पस्यखिलान् धर्म्मान् करं तत्रापि नोऽर्प्पय[3] ।
सीमाऽऽधिर्बहुवाक्यं च तुलामाने च मे करः ॥ ४२ ॥

**वक्षि वदसि । तत् (त्वा) त्वाम् ऋतवचनात् सत्यवचनात् (निमित्तात्) मोचये । अस्मत्सन्ततेः परं क्षेमकात् परम् ॥ ४१ ॥ तत्रापि तदाऽपि (सीमा, आधिः, बहूनां वाक्यम्, तुला, मानं च मे),[4] दीय(मान) इति शेषः, करः ॥ ४२ ॥**

---

प्रत्यक्षागमाभ्यां सहकृता युक्तयः सुयुक्तयः ॥ ४० ॥ स्वभावतः अनृतवचनोऽपि इदमिदानीं सत्यं वक्षि वदसि । वच परिभाषणे । तस्मात् सत्यवचनात् कारणात् त्वा त्वां क्षान्त्वा मोचये । **'त्वार्तवचनात्'** इत्यनार्षः पाठः । त्वा ऋत-वचनात्– त्व ऋतवचनात् इति शाकल्यः । **'ऋत्यकः'** [अ.सू.६. १.१२८] । त्वर्तवचनात् इति पाणिनिः सन्धिगर्भं सन्धिमनुमन्वान इवाऽचष्ट–**'आद् गुणः'** [अ.सू.६.१.८७] इति ॥ ४१ ॥ विलुम्पसि । लुप्लृ छेदने । कः करः? सीमा, आधिः, बहुवाक्यं च, तुला च, मानं चेति पञ्च मे कराः । सीमादिपञ्चानां पालनं मे करस्थानीयमित्यर्थः । सीमा मर्यादा, अवधिः । सा द्विविधा भवति–कालसीमा देशसीमा चेति । वत्सरमासपक्षदिनादिः कालसीमा । पर्युदञ्चनस्य कुसीदस्य वा कालनियमः– इयत ऋणस्य इयति काले निवर्तनम्, इयती च वृद्धिरियति काले देयेत्यादिः । तदर्थं त्रीणि शतानि षष्टिश्च दिनानि वत्सर इति व्यावहारिकवत्सरकल्पना, राजवर्षादिकल्पना च । राजवर्षं यथा– युधिष्ठिरशकः, शालिवाहनशक इत्यादि । देशसीमा यथा–जनपदसीमा, राज्यसीमा, नगरसीमा, ग्रामसीमा, क्षेत्रसीमा, भूसीमा, आकाशसीमेत्याद्या । सेयं सीमा शासनाधिकृतेन पुरुषेण शृङ्खलया मापयित्वा निश्चीयते । ततः सर्वैरपि सा माननीया भवतीतीयं व्यवस्था कलिराज्येऽप्यनुवर्तनीयेति सीमा नाम करः । उत्तमर्णेनाधमर्णाय दत्तस्य पर्युदञ्चनस्य प्रतिनिधितया प्रत्यावर्तनदार्ढ्याय यद् गवादिकं सुवर्णादिकं वा स्ववश आधीयते तदापमित्यकमाधिरित्युच्यते स्मृतिग्रन्थेष्वर्थशास्त्रे च । 'ಒತ್ತೆ', 'ಗಿರವಿ' इति भाषायाम् । तदेव बन्धकमित्यप्युच्यते । **'आधिः पुमांश्चित्तपीडाप्रत्याशाबन्धकेषु च'** इत्यभि-धानम् । **'बन्धकं विश्वासार्थं यदाधीयते, आधिरिति यावत्'** [या.स्मृ. व्यव.३७] इति मिताक्षरायाम् । ऋणप्रत्याहरणक्षणे

---

१. **'विप्रदेवविरो–'**
२. **'त्वार्त–'**
३. **'–पि मेऽर्पय'** इति क्वचित् ।
४. अत्र कानिचन वाक्यानि लुप्तानि ।

**नैवातिक्रममेतेषां कुरु सर्वात्मना क्वचित् ।**
**तमाह भगवान् कृष्णो यावत् पाण्डवसन्ततिः ॥ ४३ ॥**

**तावन्न ते भवेच्छक्तिः प्रवृत्तस्यापि भूतळे[1] ।**
**पाण्डवेभ्यः परं यावत् क्षेमकः क्रमवर्द्धिता ॥ ४४ ॥**

**क्वचित् व्याजे(नापि व्यवस्थायाम)सत्यामपि एतेषामतिक्रमं सर्वात्म(ना) नैव कुरु ॥ ४३ ॥ क्षेमकपर्यन्तं**

तदधमर्णाय प्रतिनिवर्तनीयमिति नियमबद्धता द्वितीयः कर आधिर्नाम । विवादे सति युक्तमयुक्तं वा यद् बहूनामभिमतं तदेव कर्तव्यमिति व्यवस्था बहुवाक्यं प्रजाप्रभुत्वं नाम तृतीयः करः । तुला 'ತಕ್ಕಡಿ' इति भाषायाम् । दशविधं तन्निर्माण-विधानमाचक्षतेऽर्थशास्त्रज्ञाः[2] । अष्टौ च तुलादोषान्[3] । यथा विधानं निर्मितायामदुष्टायां तुलायां तोलनव्यवहारः करणीय इति नियतिस्तुला नाम चतुर्थः करः । मानं प्रस्थकुडवादि । यद् विना तुलां पात्रेषु मीयते । तद् यथा भाषायाम्– 'ಸೇರು, ಕಳಸ, ಕುಡತೆ, ' इत्यादि । यत्तोलने भारनिर्णयार्थं शिक्यान्तरे शिलायःखण्डादि निक्षिप्यते तदपि मानम् । राजाधि-कृतं मानकमित्येतत् । तथा सुवर्णमानार्थं तुलायां यन्माषगुञ्जादि निक्षिप्यते तदपि मानम् । यदाह कौटिल्यः–**'धान्यमाषा दश सुवर्णमाषकः । पञ्च वा गुञ्जाः । ते षोडश कर्षः । चतुःकर्षं पलम्'** [कौ.अ.शा.४०] इत्यादि तुलामान-पौतवे । देशमाानं च मानम्, क्रोशगोरुतयोजनादि । अङ्गुलहस्तन्यग्रोधादि च । तस्य सर्वस्यापि माननीयता मानं नाम पञ्चमः करः । तुलामानयोरन्तरं चापरो दोष उपस्थानाख्योऽर्थशास्त्रप्रसिद्धः । तुलामानाभ्यामधिकाभ्यां ग्रहणम्, हीनाभ्यां दानं तुलामानान्तरमुच्यते । तन्निवारणम्, तस्य शिक्षार्हत्वं चापरः करः । तदुपसङ्ग्रहायैव **'तुलामाने'** इति समस्य प्रयुयोज । अन्यथा 'तुला मानं च' इति प्रतृण्यैव प्रायोक्ष्यत् । **'मानेन तुलया वाऽपि योंऽशमष्टमकं हरेत् । दण्डं च दाप्यो द्विशतं वृद्धौ हानौ च कल्पितम्'** [या.स्मृ.व्यव.२४४] इति याज्ञवल्क्यः ॥ ४२ ॥ पाण्डवेभ्यः परं प्रवृत्तस्यापि

१. **'भूतले ।'**

२. तथाहि कौटिल्यः–**'षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तरा दशतुलाः । कारयेदेकपलादूर्ध्वमेकपलोत्तराः'** [अ.४०] इति । षडङ्गुलायामादूर्ध्वम-ष्टाङ्गुलाधिकायामा दश प्रकारास्तुला भवन्ति, एकलोहपलादेकैकलोहपलाधिकप्रमाणाः । तथाच प्रथमा षडङ्गुलायामा एकपलप्रमाणा । चतुर्दशाङ्गुला द्विपलप्रमाणा द्वितीया तुला । द्वाविंशत्यङ्गुलायामा त्रिपलप्रमाणा तृतीया । एवं क्रमेण गणनायामष्टसप्तत्यङ्गुलायामा दश-पलप्रमाणा दशमी तुला । अपरा च बृहती तुला काष्ठशिक्या–**'काष्ठतुलाऽष्टहस्ता पदवती प्रतिमानवती मयूरपदाधिष्ठिता'** इति च । मयूरपदाकारपदवति काष्ठस्तम्भे स्थापितेत्यर्थः ।

३. तुलादोषा उक्ताः कौटिल्येन–**'सन्नामिनी, उत्कीर्णिका, भिन्नमस्तका, उपकण्ठी, कुशिक्या, सकटुकक्ष्या, पारिवेली, अयस्कान्ता च दुष्टतुलाः'** [अ.३५] इति । १. सन्नामिनी मृदुलोहनिर्मितत्वाद् यथेच्छं या नम्या भवति । २. उत्कीर्णिका पारदरसेन परिगतान्तःसुषिरा, येन तुलातोलनं विषमीक्रियते । ३. भिन्नमस्तका विदारिताग्रभागा, सरन्ध्राग्रा । यत्र वायुप्रवेशात् वाताभिमुखं धृता तुला नम्यते । ४. उप-कण्ठी ग्रन्थिबहुला । ५. कुशिक्या शिक्यं तोलनपात्रं यत्र विषमतया कुत्सितम् । ६. सकटुकक्ष्या असमानलम्बनसूत्रा । ७. पारिवेली परितो वेल्लतीति परिचलनशीला । ८. अयस्कान्ता याऽयस्कान्तेन सम्बद्धा । अयस्कान्तो हि शिक्यं स्वाभिमुखमाकर्षति । तदिदमष्टविधं तुलाविषमम् ।

**क्षेमकात् परतः पूर्त्तिं शक्तिस्ते यास्यति ध्रुवम् ।**
**न द्रष्टव्यं भूतळं[1] ते कुत एव स्पृशेर्भुवम्** ॥ ४५ ॥

**यावत् पार्त्था अहं चात्र ततो भुवि पदं कुरु ।**
**इत्युक्तो वासुदेवेन मोचितो धर्म्मजेन च** ॥ ४६ ॥

**तान् प्रणम्य ययौ पारे समुद्रस्याश्रयद् गुहाम् ।**
**पार्त्थाश्च कृष्णसहिता रक्षन्तः क्ष्मां मुदं ययुः** ॥ ४७ ॥

**एवं पार्त्थान् प्रतिष्ठाप्य शक्रप्रस्थे तु सार्ज्जुनः ।**
**क्रीडन् दिव्याः कथाः प्राह पुत्रशोकापनुत्तये** ॥ ४८ ॥

**(क्रम)वर्धिता, पाण्डवसन्ततिः (इति) शेषः ॥ ४४–६ ॥ पारे तीरान्तरे ॥ ४७–८ ॥**

---

ईषत्प्रसृतपादस्यापि राष्ट्रविप्लवे न ते शक्तिः स्यात् यावत् पाण्डवसन्ततिरत्र स्यात् । यदन्ता पाण्डवसन्ततिः? यावत् क्षेमकः । क्षेमकपर्यन्ता भूमौ पाण्डवानां सन्ततिरित्यर्थः । यं ‘खेमराज’ इतीतिहासविदो वदन्ति । **‘क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ’** [९.१९.४५] इति भागवते । तावत्पर्यन्तं क्रमेण वर्धिता वृद्धिं गता ते शक्तिः । वृधु वृद्धौ । पूरिता वा । वर्ध च्छेदनपूरणयोः । पाण्डवसन्ततिश्च क्रमेण वर्धिता छिन्ना ह्रसन्ती । क्षीणेति यावत् ॥ ४३–४ ॥ तत्परतस्ते लोकलोपनशक्तिः पूर्णमाविर्भविष्यति । यावत् पार्था अहं चात्र भूतळे स्थास्यामः तावत्ते तव त्वया वा भूतळं न द्रष्टव्यम् । ततः अस्मन्निर्गमनात् परम् । भुवि जम्बूद्वीपे । ननु कृष्णसन्निधावेव दुर्योधनरूपेणात्र कलिः पदं चक्रे । तत् किमुच्यते–**‘न द्रष्टव्यं भूतळं ते’** इति । अङ्ग पण्डितम्मन्य, अनधिगत्य भगवद्वचनभावं मुधा भाषसे । तदा कलियुगमेव न प्रारब्धम् । नापि पाण्डवानां शासनम् । कलियुगारम्भात् परम्, तवाधिकृते कालेऽपि यावत् पाण्डवशासनं न भुवि पादं प्रसारयेति भगवानाह । तत् को विरोधः? ॥४५–६॥ समुद्रस्य पारे द्वीपान्तरे । यत्र न कलेः प्रभावप्रसरः । क्ष्मां कर्मक्षमां भूमिम् । जम्बूद्वीपमित्येतत् ॥ ४७ ॥ सार्जुनः कृष्णः शक्रप्रस्थे क्रीडन् । दिव्याः कथाः प्रथममाह यत् गीतायामपि नोक्तम् । **‘इन्द्रप्रस्थे महात्मानौ रेमाते कृष्णपाण्डवौ । प्रविश्य तां सभां रम्यां विजह्राते च भारत । तत्र युद्धकथाश्चित्राः परिक्लेशांश्च पार्थिव । कथायोगेकथायोगे कथयामासतुः सदा’** [आ.श्व. १६.५–६] इति, **‘मधुरास्तु कथाश्चित्राश्चित्रार्थपदनिश्चयाः । निश्चयज्ञः स पार्थाय कथयामास केशवः । पुत्रशोकाभिसन्तप्तं ज्ञातीनां च सहस्रशः । कथाभिः शमयामास पार्थं शौरिर्जनार्दनः’** [८–९] इति च ॥ ४८ ॥

---

१. ‘भूतलं’

गीतोक्तं विस्मृतं चास्मै पुनर्विस्तरतोऽवदत् ।
वाणी प्राणो वासुदेव इत्येतैरखिलं ततम् ॥ ४९ ॥

सर्वोत्तमत्वमेतेषां सर्वमेतद्वशे जगत् ।
उत्तरोत्तरमेतेऽपि गुणोच्चास्तद्वशेऽपरे[1] ॥ ५० ॥

इत्थं हरेर्वशे [2]सर्वगुणपूर्णश्च स प्रभुः ।
एक एव नचान्योऽस्ति प्राणोच्चा तदधो रमा ॥ ५१ ॥

**गीतोक्तं ज्ञानं विस्तरतोऽवददित्येतद् विवृणोति–वाणीत्यादिना । वाणी सरस्वती । प्राणः मुख्यप्राणः । अखिलं चराचरं ततं व्याप्तम् ॥ ४९ ॥ एतेषां सर्वोत्तमत्वं सकलचेतनोत्तमत्वम्, अस्तीति शेषः । वशे, स्थितमिति शेषः । सर्वमेतद्वशे जगत् इत्युक्त्वा तद्वशेऽपरे इति पुनरुक्तिस्तात्पर्यद्योतनार्था । तद्वशे, स्थि(ता इ)ति शेषः ॥ ५० ॥ इत्थं प्राणवाण्यादिक्रमेण हरेर्वशे, सर्वं जगत् स्थितमिति शेषः । स प्रभुः सर्वगुणपूर्णः स्वातन्त्र्यादिसर्वगुणपूर्णश्च । रमा प्राणोच्चा प्राणादुत्तमा । तदधः भगवतोऽधमा ॥ ५१ ॥**

---

गीतोक्तं च विस्मृतं पुनर्विस्तरतोऽवदत् । यामनुगीतामाहुः पञ्चत्रिंशदध्यायिनीम् [आश्व.प.१७–५१] । विस्तृत्योक्तस्य सारमष्टभिः सङ्क्षिप्याऽह– वाणी प्राणो वासुदेवः । एतैस्त्रिभिः अखिलं जीवजातं नियमनार्थं ततम् । तथा ह्यनुगीतायाम्– **'त्रैलोक्यमसृजद् ब्रह्मा कृत्स्नं स्थावरजङ्गमम् । ततः प्रधानमसृजद् चेतनां तु शरीरिणाम् । यया सर्वमिदं व्याप्तं यां लोके परमां विदुः । इदं तत् क्षरमित्युक्तं परं त्वमृतमक्षरम्'** [आश्व.प. १९.२६–८] इति । अत्र प्रधानमिति चेतनेति वाणी कथिता । यया सर्वमिदं ततम् । यां च प्राणवासुदेवाभ्यामृते परमामाहुः । तस्याः परमः ब्रह्मा प्राणापर-नामा । तदिदं वाणीप्राणयुग्मं क्षरमित्युक्तम् । आभ्यामुभाभ्यामपि परं त्वमृतमक्षरं वासुदेवाख्यमित्यर्थः । **'देवं नारायणं भीरु सर्वात्मानं निबोध तम्'** [२६.१७] इति च । वसुदेव्या अयं पतिरिति वासुदेवपदेन लक्ष्मीनारायणावुच्येते ॥ ४९ ॥ एतेषां वाणीप्राणवासुदेवानां सर्वजगदुत्तमत्वम् । रुद्राद्या वाण्या वशे । वाणी प्राणस्य वशे । प्राणश्च नारा-यणस्य । वाणी रुद्रादिभ्यो गुणोच्चा । प्राणो वाणीतः । प्राणादपि नारायणो गुणोच्चः । एते सर्वोत्तमा अपि नैक-रूपाः । किन्तूत्तरोत्तरमेतेषां सर्वोत्तमत्वम् । उत्तरस्मादनन्तरमुत्तर इत्युत्तरोत्तरम् । उत्तर इत्यूर्ध्वं उत्तमश्च । **'उत्तरं प्रति-वाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत्'** इत्यभिधानम् । उत्तरोत्तरं गुणोच्चा अपि । अपरे रुद्रादयस्तृणान्ताः सर्वे तद्वशे स्थिताः । इत्थमुत्तरोत्तरक्रमेण सर्वत उत्तरस्य हरेर्वशेऽपरे सर्वे ब्रह्मवाण्याद्या अपि । सर्वगुणपूर्णश्च स एक एव । यतः स एक एव सर्वस्य प्रभवति । न तादृशः कश्चिदन्योऽस्ति । रमा तु प्राणादुच्चा । नारायणादधःस्था च ॥ ५०–१ ॥

---

१. **'–स्तद्वशाः परे'** २. **'सर्वं गुण–'**

**स हुताश इति प्रोक्तो हुतमत्त्यखिलं यतः ।**
**वाक्प्राणमद्ध्यगो नित्यं धारयत्यखिलं जगत् ॥ ५२ ॥**

**स ईशो ब्रह्मरुद्राद्या जीवा एव प्रकीर्त्तिताः ।**
**ये[1] तस्यानादिसद्भक्ता मुक्तियोग्या हि ते स्मृताः ॥ ५३ ॥**

**अनादिद्वेषिणो येऽस्मिंस्तमोयोग्याः सुपापिनः ।**
**मिश्रा मद्ध्या इति ज्ञेयाः संसारपरिवर्त्तिनः ॥ ५४ ॥**

**हुताश इत्युपलक्षणम् । सर्वनामवाच्य इत्यपि द्रष्टव्यम् ॥ ५२–५ ॥**

---

स हुताश इति प्रोक्तः । **'अग्निर्वैश्वानरो मध्ये सप्तधा विहितोऽन्तरा'** [२१.१८] इति च । हुतमत्ति । किं हुतम्? का जिह्वा यया हुतं स्वदते? तदिदमुक्तमनुगीतायाम्– **'घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रं च पञ्चमम् । मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः । घ्रेयं दृश्यं च पेयं च स्पृश्यं श्रव्यं तथैव च । मन्तव्यमवबोद्धव्यं ताः सप्त समिधो मताः'** [२१.१९–२०] इत्यादि । **'अहं वैश्वानरो भूत्वा–'** [१५.१४] इति गीतायाम् । **'सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः'** [आ.उ.२.१.८] इति चाऽथर्वणोपनिषदि । एतेनाग्निसूक्तादिसमस्तवेदप्रतिपाद्योऽपि नारायण एवेति सूचितम् । वाक्प्राणमध्यगः । **'अहोरात्रमिदं द्वन्द्वं तयोर्मध्ये हुताशनः'** [२५.१४] इति, **'सच्चासच्चैव तद् द्वन्द्वं तयोर्मध्ये हुताशनः'** [१६] इत्यादि च । सदिति मूर्तम् । असदित्यमूर्तम् । **'रयिर्वा एतत् सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः'** [ष.उ.१.५] इति षट्प्रश्नोपनिषदि । **'अहरेव प्राणो रात्रिरेव रयिः'** [१.१३] इति च । **'अमूर्तस्थः स वायुस्तु मूर्तसंस्था सरस्वती'** इति, **'अहोरात्रे तु भगवान् प्राणोऽह्नचथच वाङ् निशि'** इति च प्रजापतिसंहितायाम् । तदेवम्–**'अग्निर्वैश्वानरः–'** इत्याद्यनुगीतावाक्यं षट्प्रश्नोपनिषदः समग्रस्य प्रथमखण्डस्य व्याख्यानरूपमवगन्तव्यम् । **'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते'** [ब.उ.१.७] इति चोपनिषदि स्फुटवचनम् ॥ ५२ ॥ स ईशः । **'अहं प्रजापतीनां च सर्वेषां नात्र संशयः । मम विष्णुरचिन्त्यात्मा स्वयम्भूरिति संस्मृतः'** [४४.१२] इति चतुर्मुखवचनम् । सर्वेषामहमुत्तमः । मम विष्णुरुत्तम इति । **'देवदानवभूतानां पिशाचोरगरक्षसाम् । नरकिन्नरयक्षाणां सर्वेषामीश्वरः प्रभुः । आदिर्विश्वस्य जगतः विष्णुर्ब्रह्ममयो महान् । तस्मात् परतरं यस्मात् त्रैलोक्ये नेह विद्यते'** [१५–६] इति च । 'राजाधिराजः **सर्वेषां विष्णुर्ब्रह्ममयो महान् । ईश्वरं तं विजानीमः स विभुः स प्रजापतिः । नरकिन्नरयक्षाणां गन्धर्वोरगरक्षसाम् । देवदानवनागानां सर्वेषामीश्वरो हि सः'** [४३.१३–४] इति च । **'क्षेत्रज्ञसत्वयोरैक्यमित्येतन्नोपपद्यते । पृथग्भूतस्तथा नित्यमित्येतदविचारितम् । पृथग्भावश्च विज्ञेयः सहजश्चापि**

---

१. 'एतस्यानादि–'

**एवं जीवास्त्रिधा प्रोक्ता भवन्त्येते नचान्यथा ।**
**तारतम्यं च विज्ञेयं लिङ्गैर्दैहिकमानसैः ॥ ५५ ॥**

**विष्णोर्ल्लिङ्गानुसारित्वतारतम्यात्[१] तदीक्षणम् ।**
**विष्णोस्तदनुगानां च प्रीतिकृद् धर्म्म ईरितः ॥ ५६ ॥**

**अधर्म्मोऽन्य इयं निष्ठा प्रलापः किं करिष्यति ।**
**एवमाद्यनुशास्याजः पार्त्थं पार्त्थैः सुसत्कृतः ॥ ५७ ॥**

**तदीक्षणम् तेषामीक्षणं ज्ञानम् ॥ ५६ ॥ इयं निष्ठा समीचीना ॥ ५७–६४ ॥**

---

**तत्त्वतः'** [४८.९–१०] इति च । क्षेत्रज्ञो भगवान् । सत्त्वमिति जीवः । ये तस्य हरेरनादिसद्भक्ताः । **'ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणसंयुक्ता यान्त्यधस्तामसा जनाः'** [४०.१०] इति च । केवलं पापं येषां ते सुपापिनः । पुण्यपापमिश्राः प्रायो रजस्तमोभ्यां मिश्रबुद्धयो राजसा मध्याः संसारे परितः त्रिदिवनिरयभूषु ये निरन्तरं परिवर्तन्ते नित्यबद्धाः नित्यसंसारिणः ॥ ५३–४ ॥ एवं सात्विकादिभेदेन जीवास्त्रिविधा प्रोक्ताः । एते न क्वचिदन्यथा भवन्ति । न सात्विकास्तामसा भवन्ति । न तामसाः सात्विका वा । **'अर्वाक्स्रोतस इत्येते मग्नास्तमसि तामसाः'** [३७.२५], **'अर्वाक्स्रोतस इत्येते मनुष्या रजसाऽऽवृताः । अस्मिन् लोके प्रमोदन्ते जायमानाः पुनःपुनः'** [३९.१६] इति, **'ऊर्ध्वस्रोतस इत्येते देवा वैकारिकाः स्मृताः'** [३९.१३] इत्यादि च । तारतम्यं च विज्ञेयम् । **'आकाशमुत्तमं भूतमहङ्कारस्ततः परः । अहङ्कारात् परा बुद्धिर्बुद्धेरात्मा ततः परः । तस्मात्तु परमव्यक्तमव्यक्तात् पुरुषः परः'** [५०.५४–५] इति च । आकाशमिति विनायकः पार्वती वा । **'आकाशनामा विघ्नेशः'** इति शब्दनिर्णय-वचनम् । **'–उमा चैव सा चाऽकाशाभिमानिनी । आकाशनाम्नी दीप्तत्वात्–'** इति तत्वविवेकवचनम् । अहङ्कारात्मा शिवस्ततः परः । ततो बुद्धिः सरस्वती । तत आत्मा चतुर्मुखः । ततोऽव्यक्तमानिनी रमा । ततः परः पुरुष इति । विष्णोर्लिङ्गैर्दैहिकमानसैः । लीनं गमयन्तीति लिङ्गानि ज्ञापकानि । भक्तिज्ञानादीनि मानसलिङ्गानि । बलादीनि दैहि-कानि । देवेषु पूर्वसृष्ट उत्तम इत्यादीनि च । दैहिकानि वैष्णवकर्माणि । मानसानि ज्ञानानन्दादीनि च । दैहिकलिङ्गानि सर्वैरपि ज्ञातुं शक्यानीति, आपाततोऽपि दृश्यन्त इति प्रथमग्रहणम् । विज्ञानिभिरेव, परिशीलनेनैव विलम्बेन मानसानि लिङ्गानि ज्ञायन्त इति परतो ग्रहणम् । **'देहिकैः द्वात्रिंशदादिलक्षणैः'** इति भारतश्रीनिवासाचार्यः । चक्रशङ्खादिधारणं दैहिकं विष्णोर्लिङ्गमित्येके ॥ ५५ ॥ तान्येतानि दैहिकमानसानि विष्णोर्लिङ्गानि । वैष्णवलिङ्गानीत्यर्थः । तत्तरतमभावानुगुण्येन देवानां तारतम्येक्षणं भवति । अधिकज्ञानभक्त्यादिरधिकः । अधमज्ञानभक्त्यादिरवम इति । एवं मनुष्येष्वपि । तदनुगानां च देवादीनाम् ॥ ५६ ॥ अन्यः अप्रीतिकृत् । निष्ठा सिद्धान्तनिष्कर्षः । प्रलापोऽतिवादः ॥ ५७ ॥

---

१. **'–सारित्वात् तारतम्यात्'**

**कथञ्चित् तानवस्थाप्य सुदूरानुगतान् प्रभुः ।**
**सुभद्रासहितः प्रायाद् यानेन द्वारकापुरीम्**[१] **॥ ५८ ॥**

**समाधिविरतोदङ्कपरिपृष्टः पथि प्रभुः ।**
**हतं दुर्य्योधनं प्राह सभ्रातृसुतसैनिकम् ॥ ५९ ॥**

**तं शिष्यवधकोपेन शप्तुमात्मानमुद्यतम् ।**
**केशवोऽशमयद् वाक्यैर्विश्वरूपं प्रदर्श्य च ॥ ६० ॥**

**मद्भक्तो नितरामेष मदाराधनतत्परः ।**
**मामवज्ञाय निरयं माऽनुत्थानं**[२] **व्रजेदिति ॥ ६१ ॥**

---

कथञ्चिदवस्थाप्येति पाण्डवानां विरहाक्षमत्वमेव वाक्यार्थः । नत्ववस्थापनाशक्तता कृष्णस्य । यतः स प्रभुः । प्रभोरपि लोकविडम्बनमेवैतत् सर्वमित्यर्थः । सुभद्रासहितः । **'रथे सुभद्रामधिरोप्य भामिनीं युधिष्ठिरस्यानुमते जनार्दनः । पितृष्वसुश्चापि तथा महाभुजो विनिर्ययौ पौरजनाभिसंवृतः'** [५२.५५] इति च ॥ ५८ ॥ स्वयं प्रभुरपि शक्तोऽपि **'स्वयं साम्ये स्थापयितुं ते नाशक्यन्त'** इत्याह । ज्ञानिनोऽप्युदङ्कस्य विभ्रमं जनयन्, तस्य मौर्ख्यं स्वयं प्रहसन्निवाऽह । उदङ्क इति प्राचीनः पाठः । उत्तङ्क इत्यर्वाचीनोऽपपाठः । कथमुदङ्कः? सर्वोच्चं भगवन्तमङ्कयति स्वाङ्के करोति, प्रीत्या वशयतीत्युदङ्कः । उच्चमकारवाच्यं च भगवन्तं कायति गायतीति वा । **'उदङ्कोऽनुदके'** [अ.सू.३.३.१२३] इति पाणिनिः । उदञ्चति भगवन्तम्, उदञ्च्यते वा सज्जनैरित्युदङ्कः । अञ्चु गतिपूजनयोः । **'अन्चु'** इत्येके । परितः सर्वतः पृष्टः । पृष्टसर्ववृत्तान्त इत्यर्थः । हतं दुर्योधनं प्रहृष्यन्निवाऽह । **'कृतो यत्नो मया पूर्वं सौशाम्ये कौरवान् प्रति । नाशक्यन्त यदा साम्ये ते स्थापयितुमञ्जसा । ततस्ते निधनं प्राप्ताः सर्वे ससुतबान्धवाः'** [५३.१५] इति च ॥ ५९ ॥ उदङ्कस्य दुर्योधनः कदाचिच्छिष्यो बभूव । तेन दुष्टबोधनदोषेण तस्याप्यन्तः कलिराविवेश । तेन शप्तुमुद्यतं केशवः शापेन तस्य तपःक्षयो मा भूदिति कृपयाऽशमयत् । वाक्यैः– **'मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम् । स्थित इत्यभिजानीहि मा ते भूदत्र संशयः'** [५४.५], **'सदसच्चैव यत् प्राहुरव्यक्तं व्यक्तमेव च । अक्षरं च क्षरं चैव सर्वमेतन्मदात्मकम्'** [७], **'तेऽधर्मेणेह संयुक्ताः परीताः कालधर्मणा । धर्मेण निहता युद्धे गताः स्वर्गं न संशयः । लोकेषु पाण्डवाश्चैव गताः ख्यातिं द्विजोत्तम । एतत् ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि'** [२४–५] इत्यादिभिः । **'ततः स तस्मै प्रीतात्मा दर्शयामास तद् वपुः । शाश्वतं वैष्णवं धीमान् ददृशे यद् धनञ्जयः'** [५५.४] इति च ॥ ६०–१ ॥

---

१. 'द्वारकां पुरीम्' २. 'निरयमनुत्थानम्'

**कृपया वासुदेवेन बोधितः शान्तमानसः ।**
**पश्चात्तापाभितप्तात्मा तमेव शरणं ययौ ॥ ६२ ॥**

**तस्मै देवोऽभयं दत्त्वा प्रेषयिष्येऽमृतं तव ।**
**दातुं शक्रमिति प्रोक्त्वा ययौ द्वारवतीं प्रभुः[1] ॥ ६३ ॥**

**अथाऽदिदेश देवेशं वासुदेवोऽमृतं मुनेः ।**
**देहीति वञ्चयिष्यामीत्याह सोऽपि क्षमापयन् ॥ ६४ ॥**

**ओमित्युक्तो भगवता तत्स्नेहात् स शचीपतिः ।**
**सुजुगुप्सितमातङ्गवेषो भूत्वा मुनिं ययौ ॥ ६५ ॥**

**तत्स्नेहात् शचीपतिस्नेहात् ॥ ६५ ॥**

---

तमेव शरणं ययौ । **'अविद्यातिमिरादित्यं भवव्याधिमहौषधिम् । संसारार्णवसारं त्वां प्रणमामि गतिर्भव'** [५५.९] इति ॥ ६२ ॥ **'तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम्'** [५५.१८] इत्युदङ्कवचनाशयं विवृण्वन्नाह– प्रेषयिष्येऽमृतं तव । तवामृतं प्रेषयिष्ये । अमृतं दातुं शक्रं प्रेषयिष्ये । अत्र वैयाकरणेषु बहवः कल्पाः । केचित् **'प्रेषृ गतौ'** इत्यतो णिचि **'प्रेषयते'** इति रूपमिति वदन्ति । अन्ये तु प्रेत्युपसर्ग एव । एष गतावित्यस्य चुरादे रूपमेतदिति विवदन्ते । यदाह क्षीरस्वामी–**'चुरादावन्वेषयति'** । अथापि चुरादावेषृधातुं स्वयं न पठति । चुरादिमनभ्युपयन्तोऽपि भ्वादेरेषतेर्णिचि रूपमङ्गीकुर्वन्ति । अपरे इष गतावित्यस्य प्रोपसर्गस्य णिचि रूपमित्याहुः । सर्वमपि युज्यते । अत एव **'अप्रेषयत्'** इत्याद्याः प्रयोगाः पुराणेषु दृश्यन्ते । उपसर्गपक्षे **'एङि पररूपम्'** [अ.सू.६.१.९४] इति रूपसिद्धिः । इति प्रोक्त्वा परिहासपूर्वकं प्रसादपूर्वकं चोक्त्वा । 'प्रदातुमुक्त्वा' इति वाऽन्वयः । प्रतारणपूर्वं दानमिति हृदयम् । एतेन मरुषु मरण-शीलेषु मर्त्येषु दुर्लभं तोयममृतमिति भारतवचनार्थ आविरक्रियत भगवत्पादेन ॥ ६३ ॥ अथ स्वपुरीगमनानन्तरमेव, अविलम्बेन । अमृतं मुनेर्देहीत्यादिदेश । क्षमामभ्यर्थयते क्षमापयते । उदङ्कविषये मया करिष्यमाणं छलनं क्षम्यतामिति भगवन्तं प्रार्थयमानः मुनिं वञ्चयिष्यामीत्याह । नात्र प्रतारणं वञ्चयतेरर्थः । तदात्वे **'वञ्चयिष्ये'** इत्यवक्ष्यत् । **'गृधि-वञ्च्योः प्रलम्भने'** [अ.सू.१.३.६९] इति स्मरणात् । तर्हि कोऽर्थः? **'अमृतलाभं परिहरिष्यामि'** इत्यर्थः । यथा न भवेद् भवद्वचनभङ्गः, नापि मुनेरमृतलाभस्तथा समस्यां परिहरिष्यामीत्यर्थः । तथाहि जयादित्यः– **'गृधु अभिकाङ्क्षायाम्, वञ्चु गतावित्येतयोर्ण्यन्तयोः प्रलम्भने वर्तमानयोरात्मनेपदं भवति । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् । माणवकं गर्धयते । माणवकं वञ्चयते । प्रलम्भन इति किम्? श्वानं गर्धयति । गर्धनमस्योत्पादयतीत्यर्थः । अहिं वञ्चयति परिहरतीत्यर्थः'** इति ॥ ६४ ॥ तत्स्नेहात् इन्द्रे वात्सल्यात् । त्रिविधो हि स्नेहो भवति । वात्सल्यमवरेषु । भक्ति-

---

१. **'–वर्तीं विभुः'** इति क्वचित् ।

**मूत्रस्रोतसि सोऽधश्च[1] निधाय कलशं वशी ।**
**मूत्रयन्निव तं प्राह वासुदेवः सुधामिमाम् ॥ ६६ ॥**

**महर्षे प्रेषयामास तवार्थे तत्[2] पिबेति च ।**
**स मूत्रमिति मत्वा तं याहीत्येवाऽह भत्सयन्[3] ॥ ६७ ॥**

**वञ्चयित्वैव तं शक्रो ययौ प्रीतः स्वमालयम् ।**
**असाधारणमन्नं हि देवानाममृतं सदा ॥ ६८ ॥**

**अन्यपीतिस्ततस्तस्य[4] देवानां परमाप्रिया ।**
**आत्मदत्तप्रसादाच्च स्वापराधात् प्रचालिते ॥ ६९ ॥**

**उदङ्के वासुदेवस्तु युक्तमित्येव मन्यते ।**
**स्वपुरीं प्राप्य यदुभिः पूजितः शूरसूनवे ॥ ७० ॥**

**अधः अधोभागे मूत्रस्रोतसि ॥ ६६–७ ॥ वञ्चयितुरभिप्रायमाह– असाधारणमिति ॥ ६८ ॥ स्वापराधाच्च स्वापराधादेव आत्मदत्तप्रसादात् प्रचालिते ॥ ६९ ॥ युक्तमित्येव मन्यते अमन्यत । अमृतपानायोग्यत्वादिति भावः ॥ ७०–३ ॥**

---

रुत्तमेषु । सख्यं समेष्विति । **'मातङ्गः श्वपचे गजे'** इत्यभिधानम् । सुजुगुप्सितं दर्शनमात्रेण जुगुप्सावहम् । **'ततो दिग्वाससं धीमान् मातङ्गं मलपङ्किनम् । अपश्यत मरौ तस्मिन् श्वयूथपरिवारितम् । भीषणं बद्धनिस्त्रिंशं बाण-कार्मुकधारिणम् । तस्याधःस्रोतसोऽपश्यद् वारि भूरि द्विजोत्तमः'** [५५.२१–२] इति च ॥ ६५ ॥ मूत्रस्य स्रोत इन्द्रियम् । **'स्रोतोऽम्बुवेग इन्द्रिये'** इत्यभिधानम् । मूत्रस्रोतसि कलशं निधाय कलशस्यान्तः शिश्नं निधायेत्यर्थः । तदेव शिश्नलग्नं कलशम्, अधः शिश्नस्याधस्ताद् भूतळे च निधाय । ननु मूत्रयन्निव कलशे यदा शिश्नं निदधौ तदाऽकस्मादवशतया किञ्चिन्मूत्रमपि चेदस्रवत्, का गतिः? नैतत् सम्भवीत्याह– वशी । स्वायत्तसर्वेन्द्रियव्यापारः ॥ ६६ ॥ तत् तस्मात् तवार्थे वासुदेवेन प्रेषितत्वात् । तं सुजुगुप्सितमातङ्गवेषं देवेशम् ॥ ६७–८ ॥ तवामृतं प्रेषयिष्य इत्यात्मदत्तप्रसादात् । प्रचालिते प्रच्याविते ॥ ६९ ॥ युक्तमित्येव मन्यते । तथाहि कृष्णवचनम्– **'यादृशेनेह रूपेण योग्यं दातुं धृतेन वै । तादृशं खलु ते दत्तं यच्च त्वं नावबुध्यथाः । मया त्वदर्थमुक्तो वै वज्रपाणिः पुरन्दरः । उदङ्का-यामृतं देहि तोयरूपमिति प्रभुः । स मामुवाच देवेन्द्र न मर्त्योऽमर्त्यतां व्रजेत् । अन्यमस्मै वरं ब्रूहीत्यसकृद् भृगु-**

---

१. **'सौधं च'** २. **'–र्थे तां पिबेति'** ३. **'भर्त्सयन्'** ४. **'–स्ततस्त्वस्य'** इति क्वचित् ।

**वृत्तान्तं कथयामास केशवो यदुसंसदि ।**
**वधमन्तरितं सूनोः सात्वतेशेन सात्वती ॥ ७१ ॥**

**प्रणम्य कथयेत्यूचे तत आह जनार्दनः ।**
**ततः सुदुःखिताः शूरपुत्राद्या अभिमन्यवे ॥ ७२ ॥**

**श्राद्धदानानि बहुशश्चक्रुः केशवसंयुताः ।**
**निवसत्यत्र विश्वेशे धर्म्मपुत्रः[१] क्रतूत्तमम् ॥ ७३ ॥**

**अश्वमेधमनुष्ठातुं नाविन्दद् वित्तमञ्जसा ।**
**हतशेषात्[२] क्षत्रसङ्घात् करं नैच्छद् दयापरः ॥ ७४ ॥**

**नच मद्ध्यमकल्पेन यष्टुं तस्य मनोगतम् ।**
**विज्ञाय नित्यविज्ञातनिखिलो बादरायणः ॥ ७५ ॥**

**अञ्जसा उत्तमकल्पेन अनुष्ठातुम् । नैच्छत्, आदातुमिति शेषः ॥ ७४ ॥ न गतं च न प्रवृत्तम् । विज्ञाय, तदखिलमिति शेषः ॥ ७५ ॥**

---

**नन्दन । अमृतं देयमित्येव मयोक्तः स शचीपतिः । स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् । यदि देयमवश्यं वै मातङ्गोऽहं महामते । भूत्वाऽमृतं प्रदास्यामि भार्गवाय महात्मने । यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै । प्रदातुमेष गच्छामि भार्गवस्यामृतं विभो । प्रत्याख्यातस्त्वहं तेन दास्यामि न कथञ्चन । स तथा समयं कृत्वा तेन रूपेण वासवः । उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् । चण्डालरूपी भगवान् सुमहांस्ते व्यतिक्रमः'** [५५.३१–७] इति ॥ ७० ॥ सात्वती सुभद्रा सात्वतेशेन स्वसूनोरभिमन्योर्वधमनुक्त्वाऽन्तरितं निगूहितं दृष्ट्वा तदपि कथय पित्र इति प्रणम्योचे । **'कथयन्नेव तु तदा वासुदेवः प्रतापवान् । महाभारतयुद्धं तत् कथान्ते पितुरग्रतः । अभिमन्योर्वधं वीरः सोऽत्यक्रामन्महामतिः । अप्रियं वसुदेवस्य मा भूदिति महामनाः । मा दौहित्रवधं श्रुत्वा वसुदेवो महात्ययम् । दुःखशोकाभिसन्तप्तो भवेदिति महामतिः । सुभद्रा तु तमुत्क्रान्तमात्मजस्य वधं रणे । आचक्ष्व कृष्ण सौभद्रवधमित्यपतद् भुवि'** [६१.१–४] इति च ॥ ७१–२ ॥ श्राद्धमौर्ध्वदैहिकम् । तदङ्गतया क्रियमाणानि बहुशो बहूनि प्रभूतानि दानानि । **'सुवर्णं चैव गाश्चैव शयनाच्छादनानि च । दीयमानं तदा विप्राः प्रभूतमिति चाब्रुवन्'** [६२.५] इति च ॥ ७३ ॥ अञ्जसा सपदि । युद्धेन वित्तक्षयात् । अञ्जसा समञ्जसेन पथा । लोके वित्तक्षयादेव । अञ्जसा उत्तमकल्पस्य यज्ञस्य समुचितं वित्तम् । यतः हतशेषात् ॥ ७४ ॥ मा भूदुत्तमकल्पः । मा वा भूदधमकल्पः । मा च

---

१. **'–त्र देवेशे धर्मराजः क्रतू–'** । **'देवेशे धर्मपुत्रः'** इति क्वचित् । २. **'–शेषात् क्षात्र–'**

आविर्भूतो हिमवतः शृङ्गं यत्राभिसङ्गतम्[१] ।
मेरुशृङ्गेण यत्रैव विष्णुः स्वात्मानमव्ययम् ॥ ७६ ॥

लोकस्य सङ्ग्रहायेजे कर्म्मबन्धोज्झितोऽपि सन् ।
शङ्कराद्याः सुरा यत्र मरुत्तश्चेजिरे हरिम् ॥ ७७ ॥

दानवो वृषपर्वा च तत्रास्ति धनमक्षयम् ।
तच्छङ्करशरीरस्थं जामदग्र्यं हरिं परम् ॥ ७८ ॥

इष्ट्वैवानुज्ञया तस्य स्वीकृत्य यज तेन च[२] ।
इत्याह व्यासवाक्यानु भीमोऽप्याह नृपोत्तमम्[३] ॥ ७९ ॥

**आविर्भूतः (इत्या)ह इति सम्बन्धः ॥ ७६–८३ ॥**

---

भूद् वित्तक्षयः । यथाविभवं मध्यमकल्पेनेज्यताम् । तदपि तस्य न मनोगतमित्याह– नचेति । यष्टुं च नैच्छत् । एवमीदृशं तस्य मनोगतं मनोरथमाशयं वा विज्ञाय आविर्भूत इत्युक्ते प्रथमं विजज्ञौ तत आविर्बभूवेति सहजं शाब्दं बोधं वारयन्नाह– नित्यविज्ञातनिखिल इति ॥ ७५ ॥ आविर्भूतः किं चकार? **'हिमवतः शृङ्गम्–'** इत्यादि **'यज तेन च'** इत्यन्तमाह । **'दानमल्पं न शक्नोमि दातुं वित्तं च नास्ति मे । नतु बालानिमान् दीनानुत्सहे वसु याचितुम् । तथैवाद्रविणान् कृच्छ्रे वर्तमानान् नृपात्मजान्'** [आश्व.प.३.१३], **'एवमुक्तस्तु पार्थेन कृष्णद्वैपायनस्तदा । मुहूर्तमनुसञ्चिन्त्य धर्मराजानमब्रवीत् । कोशश्चापि विशीर्णोऽयं परिपूर्णो भविष्यति । विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितम् । उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महीपते । तदानयस्व कौन्तेय पर्याप्तं तद् भविष्यति'** [१९–२१] इति च । मुहूर्तमनुसञ्चिन्त्येति भारतोक्तं दर्शनभाषयेति सूचयन्नाचार्योऽवोचत्–नित्यविज्ञातनिखिल इति । हिमवतः शृङ्गमिति । **'मेरुं पर्वतमासाद्य हिमवत्पार्श्व उत्तरे । काञ्चनः सुमहान् पादः–'** [४.२५] इति च ॥ ७६ ॥ लोकस्य सङ्ग्रहाय शिक्षायै । अस्माभिरपि कर्तव्यमिति सम्यग् ग्रहणाय ॥ ७७ ॥ वृषपर्वा यः पूरुवंशजननीं शर्मिष्ठां जनयामास । **'महादेवाय कृष्णाय त्र्यम्बकायानघाय च'** [८.२५], **'सहस्रशिरसे चैव सहस्रचरणाय च'** [२७], **'शरण्यं शरणं याहि महादेवं चतुर्मुखम्'** [३३], **'स्थितः सत्योपरि स्थाणुस्तं प्रपद्ये सनातनम्'** [३९] इत्यादिवचनाशयमाह– शङ्करशरीरस्थमिति । नह्यन्तर्यामिविवक्षां विनेदमुपपद्यते विशेषणजातम् ॥ ७८ ॥ भीमोऽप्याह– **'ते वयं प्रणिपातेन गिरीशस्य महात्मनः । तदानयाम भद्रं ते समभ्यर्च्य कपर्दिनम्'** [६३.१३] इति ॥ ७९ ॥

---

१. **'–सन्धितम्'** इति क्वचित् । २. **'यज केशवम् ।'** इति क्वचित् । ३. **'–प्याह युधिष्ठिरम् ।'** इति क्वचित् ।

**धनस्य देवता विष्णुर्जामदग्न्योऽखिलेश्वरः ।**
**स शङ्करशरीरस्थो यज्ञोच्छिष्टधनाधिपः ॥ ८० ॥**

**तेनैव विष्णुना दत्तमर्ज्जुनायास्त्रमुत्तमम् ।**
**कार्य्याण्यन्यानि चास्माकं कृतान्येतेन विष्णुना ॥ ८१ ॥**

**स ब्रह्मरुद्रशक्रादिपददाताऽखिलप्रदः[1] ।**
**स्वतन्त्रः परतन्त्रांस्तानावर्त्तयति चेच्छया ॥ ८२ ॥**

**प्रियोऽस्माकं प्रियास्तस्य सर्वदैव वयं नृप ।**
**अतस्तदभ्यनुज्ञातधनेनैव[2] यजामहे ॥ ८३ ॥**

**सोऽयं पितामहोऽस्माकं व्यासस्तन्नः प्रदास्यति ।**
**इत्युक्त्वा तं पुरस्कृत्य कृष्णद्वैपायनं ययुः ॥ ८४ ॥**

**धनं कृष्णः समादाय समन्ताच्छतयोजनम् ।**
**ददौ तेषां तेऽपि चोहुर्हस्त्युष्ट्राश्वनरादिभिः[3] ॥ ८५ ॥**

**तं कृष्णद्वैपायनम् ॥ ८४–८ ॥**

---

तद्वाक्याशयं स्फुटयति भगवत्पादः– शङ्करशरीरस्थो जामदग्न्यो यज्ञोच्छिष्टधनाधिप इति ॥ ८० ॥ तेनैव शङ्करशरीरस्थेन विष्णुना । तथाहि भारते भीमवचनम्– **'वनस्थस्य पुरा जिष्णोरस्त्रं पाशुपतं महत् । रौद्रं ब्रह्मशिरश्चादात् प्रसन्नः किं पुनर्धनम्'** [१८] इति ॥ ८१ ॥ आवर्तयति परिवर्तयति प्रवर्तयति च ॥ ८२ ॥ प्रियोऽस्माकम् । **'वयं सर्वे हि तद्भक्ताः स चास्माकं प्रसीदति । तत्प्रसादादिदं राज्यं प्राप्तं कौरवनन्दन'** [१९] इति च । यजामह इत्यन्तं भीमवचनम् । यजामहे तमेव देवं पूजयामहे । सत एकत्र सङ्गतान् कुर्महे । दद्महे च भूरि वसून्यकुप्यानि विप्रेभ्यः । यज देवपूजासङ्गतिकरणदानेषु । तेन पुनरतिशयेन प्रिया भवेमेत्यात्मनेभाषा ॥ ८३ ॥ ततः पार्थाः, व्यासस्तन्नः प्रदास्यतीत्युक्त्वा यो नित्यविज्ञातनिखिलः, यः स्वयं विष्णुः, यश्च स्वेषां पितामहः तमेव कृष्णद्वैपायनं पुरस्कृत्य ययुः । **'ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति'** [६५.१०] इति च ॥ ८४ ॥ नरेभ्योऽप्यधिकमश्वा वहन्ति । अधिकतरमुष्ट्राः क्रमेलकाः । अधिकतमं हस्तिन इति क्रमः । आदिना वृषभा रासभाश्च ॥ ८५ ॥

---

१. **'–ऽखिलेश्वरः ।'** **'–ऽखिलप्रभुः'** इति क्वचित् । २. **'–धनैरेव'** इति क्वचित् । ३. **'–र्हस्त्यश्वोष्ट्रनरा–'**

युधिष्ठिरमृते सर्वे भीमसेनपुरोगमाः ।
यज्ञार्थमूहिरे भूरि स्वर्ण्णमुद्यद्रविप्रभम् ॥ ८६ ॥

तदैव वासुदेवोऽपि सभार्य्यः सह भद्रया[१] ।
आगच्छन् हस्तिनपुरं पथ्युदङ्केन पूजितः ॥ ८७ ॥

तत्कामवर्षिणो मेघांस्तस्य दत्वोदकार्त्थिनः ।
सफलं स्ववरं कृत्वा जगाम गजसाह्वयम् ॥ ८८ ॥

आसन्नेष्वेव[२] पार्त्थेषु व्यासे च पुरुषोत्तमे ।
प्रविवेश पुरं[३] कृष्णस्तदाऽसूतोत्तरा मृतम् ॥ ८९ ॥

द्रौण्यस्त्रसूदितं बालं दृष्ट्वा कुन्त्यादिकाः स्त्रियः ।
शरण्यं शरणं जग्मुर्वासुदेवं जगत्पतिम् ॥ ९० ॥

प्रत्यक्षमात्मना गर्भे रक्षितं प्रसवे हतम् ।
पुनरुज्जीवयामास केशवः पार्त्थतन्तवे ॥ ९१ ॥

**मृतं मृतकम् । मृतं बालमिति वा ॥ ८९–९६ ॥**

---

न केवलं नरा इत्यनुचराः । युधिष्ठिरमृते सर्वे भीमसेनपुरोगमाः । तेन ब्राह्मणवर्जम् तथा नृपेषु युधिष्ठिरमृत इत्यायातम् । **'नाऽसीत् तत्र नृपः कश्चिदभारार्त्तो नृपं विना । भीमादयोऽपि यज्ञार्थं वहन्ते किं पुनर्जनाः'** [७०.१६] इति च ॥ ८६ ॥ सह भद्रया सुभद्रया ॥ ८७ ॥ तस्य कामं ये वर्षन्ति तान् । मरौ तोयं किल तेनापेक्षितम् । तद् ददौ । **'यत्तु शक्यं मया कर्तुं भूय एव तवेप्सितम् । तोयेप्सां तव दुर्धर्षां करिष्ये सफलामहम् । येष्वहःसु च ते ब्रह्मन् सलिलेप्सा भविष्यति । तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः । रसवच्च प्रदास्यन्ति तोयं ते भृगुनन्दन । उदङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते । इत्युक्तः प्रीतिमान् विप्रः कृष्णेन स बभूव ह । अद्याप्युदङ्कमेघाश्च मरौ वर्षन्ति भारत'** [५५.३८–४१] इति च । एवं अमृतं दास्यामीति स्ववरं सफलं कृत्वा जगाम । **'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते । अयाचिते च मोक्षे च'** इत्यभिधानम् ॥ ८८–९० ॥ गर्भे रक्षितम्–**'मातुर्गर्भगतो वीरः स तदा भृगुनन्दन । ददर्श पुरुषं कश्चिद् दह्यमानोऽस्त्रतेजसा । अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम् ।**

---

१. **'स सुभद्रया'** २. **'आगच्छत्स्वेव'** इति कचित् । ३. **'पुरुषोत्तमे । विवेश तत्पुरम्'**

**तदैव विविशुः पार्त्थाः सकृष्णाः[1] सधनोच्चयाः ।**
**सर्वे मुमुदिरे दृष्ट्वा पौत्रं केशवरक्षितम् ॥ ९२ ॥**

**ददौ दानानि बहुशो धर्म्मपुत्रो युधिष्ठिरः ।**
**पौत्रजन्मनि हृष्टात्मा वासुदेवं ननाम च ॥ ९३ ॥**

**कुन्तीकृष्णासुभद्राभिर्वैराट्याऽन्याभिरेव[2] च ।**
**पाण्डवैः पुरुषैश्चान्यैः[3] संस्तुतः प्रणतो हरिः ॥ ९४ ॥**

**ततः कृष्णाभ्यनुज्ञाताः पाराशर्य्यसदस्यकाः ।**
**आरेभिरेऽश्वमेधं ते मुनिभिर्ब्रह्मवादिभिः ॥ ९५ ॥**

**सर्वयज्ञात्मकं तेषामश्वमेधं जगत्पतिः ।**
**कारयामास भगवान् कृष्णद्वैपायनः स्वयम् ॥ ९६ ॥**

---

**आवीच्यदर्शनं श्यामं तटिद्वाससमच्युतम्'** [१.११.७–८] इति, **'द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम् । जुगोप कुक्षिङ्गत आत्तचक्रः–'** [१०.१.६] इति च भागवते । **'उत्तराया हतो गर्भ ईशेनोज्जीवितः पुनः'** [१.११.१] इति च । पार्थतन्तवे पार्थसन्ततेरनुवृत्त्यै ॥ ९१ ॥ तदैवेति । मासान्तरेण । **'मासजातस्तु ते वीर पिता भवति भारत । अथाऽजग्मुः सबहुलं रत्नमादाय पाण्डवाः'** [आश्व.प.७०.१३] इत्यनुगीतायां जनमेजयं प्रति वैशम्पायनवचनम् । सकृष्णद्वैपायनाः ॥९२॥ ददौ दानानि । **'हिरण्यं गा महीं ग्रामान् हयांश्च नृपतिर्वरान् । प्रादादन्नं च विप्रेभ्यः प्रजातीर्थे स तीर्थवित्'** [१.११.१४] इति भागवते । ननाम स्तुतिभिः पूजयामास–**'तदुपश्रुत्य तत् कर्म वासुदेवस्य धीमतः । पूजार्हं पूजयामासुः कृष्णं देवकिनन्दनम्'** [आश्व.प.७१.९] इत्यनुगीतायाम् । ज्येष्ठत्वान्न प्रणनाम । लोकसङ्ग्रहाय ज्येष्ठान् नमति । न ज्येष्ठैर्नम्यत इति भारत एव स्फुटम् । मनसा ननाम च ॥ ९३ ॥ वैराट्या उत्तरया । अन्याभिश्च गान्धर्यादिभिः । **'कुन्ती द्रुपदपुत्री च सुभद्रा चोत्तरा तथा । स्त्रियश्चान्या नृसिंहानां बभूवुर्हृष्टमानसाः'**[७०.६] इति च । संस्तुतः सर्वदेवोत्तमत्वेन परिचितः । अत एव सम्यक् भक्तिपूर्वं स्तुतः । वयोवृद्धैर्मनसा, अन्यैः त्रिकरणैः नतश्च ॥ ९४ ॥ कृष्णाभ्यनुज्ञाताः । अभिमानेन प्रीत्या चानुज्ञाताः । **'गुणीभूताः स्म ते राजंस्त्वं नो राजन् गुरुर्मतः । यजस्व मदनुज्ञातः प्राप्य एष क्रतुस्त्वया'** [७१.२४] इति च । सदस्यः यज्ञभ्रेषनिवारकः विधिदर्शी ब्रह्मर्त्विक् । मुनिभिः पैलयाज्ञवल्क्यादिभिः ॥ ९५–६ ॥

---

१. मूलादर्शे–**'सकृष्णा सधनो–'** इति पठ्यते । स्खलनं सम्भाव्यते । २ **'–राट्यादिभिरेव'** ३. **'पुरुषैरन्यैः'**

साधनानि तु[1] सर्वाणि शालां चैव हिरण्मयीम् ।
पवमानसुतश्चक्रे कृष्णद्वैपायनेरितः ॥ ९७ ॥

अथानुमन्त्रितोत्सृष्टं पुरोहितपुरस्कृतम् ।
तुरगं[2] कृष्णसारङ्गमनुवव्राज वासविः ॥ ९८ ॥

स जित्वा रुन्धतः सर्वान् [3]नृपतीञ्छस्त्रतेजसा ।
चारयामास सर्वेषु राष्ट्रेष्वविजितोऽरिभिः ॥ ९९ ॥

युधिष्ठिराज्ञया तेन न कश्चिन्निहतस्तदा ।
आहूताश्च[4] नृपास्तेन यज्ञार्थं प्रीयताऽखिलाः ॥ १०० ॥

**साधनानि उपकरणानि हिरण्मयानि ॥ ९७ ॥ कृष्णसारङ्गं कृष्णसारङ्गनामकम् ॥ ९८–१०२ ॥**

---

साधनानि । **'स्फ्यश्च कूर्चश्च सौवर्णो यच्चान्यदपि कौरव । यत्तु योग्यं भवेत् किञ्चिद् रौग्मं तत् क्रियतामिति'** [७२.११] इति च । **'ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम् । देवेन्द्रस्येव विहितं भीमसेनेन भारत । ददृशुस्तोरणान्यत्र शातकुम्भमयानि ते । शय्यासनविहारांश्च सुबहून् रत्नसञ्चयान् । घटान् पात्रीः कटाहानि कलशान् वर्धमानकान् । नहि किञ्चिदसौवर्णमपश्यन् वसुधाधिपाः'** [८६.२८–३०] इति च । वर्धमानकान् शरावान् ॥ ९७ ॥ विधिमनुसृत्य मन्त्रितमुत्सृष्टं च । पुरोहितपुरस्कृतम् । **'याज्ञवल्क्यस्य शिष्यश्च कुशलो यज्ञकर्मणि । प्रायात् पार्थेन सहितः शान्त्यर्थं वेदपारगः'** [७३.१७] इति । याज्ञवल्क्यशिष्यः सोमश्रवाः । तुरगं कृष्णसारङ्गम् । **'तत्र कृष्णसारङ्गं मेध्यमश्वम्'** [शां.प.३५१.५२] इति च । **'कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम्'** इति कात्यायनः । कृष्णसारङ्ग इव कृष्णसारङ्गः । कृष्णसारं कृष्णमृगं गच्छत्यनुगच्छति कृष्णबिन्दुभिरिति वा । कृष्णसारस्येव अङ्गं बिन्दुमद् यस्येति वा । वर्णतः कृष्णः । सारङ्ग इव बिन्दुमान् वा । **'कृष्णसारङ्गः स्यादित्याहुर्यदि कृष्णसारङ्गं न विन्देत अथो अपि लोहितसारङ्गम्'** इति शतपथब्राह्मणम् । **'गङ्गाजलसमानेन वर्णेन वपुषा शुभः । कर्णे श्यामो मुखे रक्तः पीतः पुच्छः सुलक्षितः । मनोवेगः सर्वगतिरुच्चैःश्रवस्समप्रभः । वाजिमेधहयः प्रोक्तः सर्वलक्षणलक्षितः'** [पा.खं.९.२–३] इति पाद्मे ॥ ९८–९ ॥ **'ये चापि त्वां महाबाहो प्रत्युद्यन्ति नराधिपाः । तैर्विग्रहो यथा न स्यात् तथा कार्यं त्वयाऽनघ'** [७२.२३] इति, **'न हन्तव्या रणे तात क्षत्रिया विजिगीषवः'** [७८.७] इति च युधिष्ठिराज्ञया । प्रीयमाणेन । प्रीत्या यथाऽरयो नम्रा भवेयुस्तथेति प्रीयतेत्याह ॥ १०० ॥

---

१. **'–नानि च सर्वाणि'** २. **'तुरङ्गम्'**

३. **'नृपतीनस्त्र–'** इति कचित् । ४. **'–तास्तु नृपा–'** इति कचित् ।

**मणलूरं[1] क्रमात् प्राप्तस्तत्रैनं बभ्रुवाहनः ।**
**अभ्ययादर्घ्यपाद्याद्यैस्तमाह विजयः सुतम् ॥ १०१ ॥**

**योद्धुकामोऽर्घ्यमादाय त्वयाऽद्याभिगतो ह्यहम् ।**
**न प्रीये पौरुषं धिक् ते यन्मेद्ध्याश्वो न वारितः ॥ १०२ ॥**

**तदाऽपि पितृभक्त्यैनमयुद्ध्यन्तमुलूपिका ।**
**प्राह युद्ध्यस्व यत्[2] प्रीत्यै गुरोः कार्य्यमसंशयम् ॥ १०३ ॥**

**प्रीणनायैव युद्ध्यस्व पित्रे सन्दर्शयन्[3] बलम् ।**
**इत्युक्तो[4] युयुधे पित्रा बलं सर्वं प्रदर्शयन् ॥ १०४ ॥**

**अर्ज्जुनस्तु सुतस्नेहान्मन्दं योधयति स्मयन् ।**
**स तु सर्वायुधक्षेपेऽप्यविकारं धनञ्जयम् ॥ १०५ ॥**

**दृष्ट्वा बाल्यात् परीक्षायै[5] मन्त्रपूतं महाशरम् ।**
**चिक्षेप पित्रे दैवेन तेनैनं मोह आविशत् ॥ १०६ ॥**

**यद् गुरोः प्रीत्यै तत् उपायनं कार्यम् ॥ १०३–४ ॥ योधयति अयुध्यत् ॥ १०५–१२ ॥**

---

मणलूरं पाण्ड्यदेशम् । वालुकाप्रचुरं प्रदेशं द्रमिळा **'मणलूर्'** इति व्याहरन्ति । यं मणिपूरमौत्तरा भ्रान्त्या पठन्ति । क्रमात् । त्रैगर्तानां भगदत्तसुतस्य यज्ञदत्तस्य च पराजयानन्तरं । जयद्रथसुते सुरथे च मृते मणलूरं प्राप्तः ॥ १०१–२॥ भुवं भित्त्वा तदैव समुपागतोलूपिका । **'अमृष्यमाणा भित्त्वोर्वीमुलूपी समुपागमत्'** [७९.८] इति च । प्राह युध्यस्व । **'युध्यस्वैनं कुरुश्रेष्ठं धनञ्जयमरिन्दमम् । एवमेष हि ते प्रीतो भविष्यति न संशयः'** [७९.१२] इति च । यद् गुरोः प्रीत्यै स्यात् तन्निःशङ्कं कार्यम् ॥ १०३ ॥ सन्दर्शयन् समग्रं दर्शयन् । सङ्ग्रामयित्वा दर्शयन् । प्रदर्शयन् यथा पितुः प्रकटं स्यात् तथा दर्शयन् ॥ १०४ ॥ मन्दं योधयति । **'नात्यर्थं पीडयामास पुत्रं वज्रधरात्मजः'** [७९.३१] इति च ॥ १०५ ॥ अविकारं दृष्ट्वा । बाल्यात् । बालिश्यादित्यर्थः । **'ततः स बाल्यात् पितरं विव्याध हृदि पत्रिणा'** [३३] इति च । **'महीं जगाम मोहार्तस्ततो राजन् धनञ्जयः'** [३५] इति च । दैवेन ईश्वरेच्छया पित्रे चिक्षेप । तेन क्षेपेण ईश्वरेच्छयैवैनं मोह आविशत् ॥ १०६ ॥

---

१. **'मळलूरम्'** २. **'आह युद्ध्यस्व तत्प्रीत्यै'** ३. **'स्वं दर्शयन्'** इति क्वचित् ।
४. **'इत्युक्ते'** इति क्वचित् । ५. **'परीक्षार्थं मन्त्र–'**

**मूर्च्छितं तं गुरुं दृष्ट्वा तद्भक्त्या भृशदुःखितः ।**
**प्रायोपविष्टस्तन्माता विललापातिदुःखिता ॥ १०७ ॥**

**विजगर्ह तदोलूपीं धिग् जगत्त्रयपूजितम् ।**
**अजीघनो मे भर्त्तारं पुत्रेणैवाविजानता ॥ १०८ ॥**

**लोकवीरं पतिं हित्वा[1] न मे कार्यं सुतेन च ।**
**पतिलोकमहं यास्ये तृप्ता भव कलिप्रिये ॥ १०९ ॥**

**इत्युक्त्वा मरणायैव तां विनिश्चितमानसाम् ।**
**धरायां विलुठन्तीं च दृष्ट्वा भुजगनन्दिनी ॥ ११० ॥**

**नागलोकात् समादाय विशल्यकरणीं क्षणात् ।**
**उत्थापयामास पतिं त्रिलोकातिरथं[2] तया ॥ १११ ॥**

---

**'उपस्पृश्याभवत् तूष्णीं प्रायोपेतो महामतिः'** [८०.४०] इति, **'प्रायोपविष्टे नृपतौ मणलूरेश्वरे तदा'** [८१.१] इति च । **'प्रायो मरणानशने मृत्यौ'** इत्यभिधानम् ॥ १०७ । अजीघनः । पाणिनिनये अजीघतः । न क्वापि तथा प्रयोगः ॥ १०८ ॥ हित्वा । ओ हाक् त्यागे । नाशार्थेऽप्ययं प्रयुज्यते । प्रयुक्तं च भगवत्पादेन–**'जहितं तांस्तु सर्वशः'** [२८. १३५] । तेन हित्वेति त्यक्त्वा हत्वा वा । अहं पतिलोकं यास्ये, यात्वा च पतिलोके महं महनं पूजां यास्ये यास्यामि । अत एव स्वस्य मरणेन महान् लाभ इत्यात्मनेभाषा । कलिप्रिये कलहप्रिये ॥ १०९–१० ॥ नागलोकात् स्मरणमात्रेणोपस्थितां समादाय । विशल्यकरणीमौषधिम् । भारते तु सञ्जीवनो मणिरिति पठ्यते–**'उलूपी चिन्तयामास तदा सञ्जीवनं मणिम् । स चोपातिष्ठत तदा पन्नगानां परायणम्'** [८१.२] इति । द्वयमत्र विप्रतिषिद्धं भाति । तत्र सञ्जीवनमुच्यते । अत्र विशल्यकरणी । तत्र मणिरुच्यते । अत्रौषधिः । तत् कोऽयमतात्पर्यनिर्णयः? अयि, तात्पर्यमेव निरणायि । मृत्पिण्डबुद्धिना तत्रभवता तु नाज्ञायि । शृणु वास्तवम् । स्मर पूर्वोक्तं वचः । बभ्रुवाहनो मन्त्रपूतं महाशरं पित्रे चिक्षेप । ततोऽर्जुनं बाणेन गाढविद्धं मोह आविशत् । तथाहि वैशम्पायनवचनम् । **'महीं जगाम मोहार्तस्ततो राजन् धनञ्जयः'** [७९.३५] इति । चित्राङ्गदा च बभ्रुवाहनश्च तं मृतं बभ्रमतुः । उलुपी तु तथ्यं जानाति न मृत इति । तत् किं मृतसञ्जीवनेन? तस्माद् शल्यवेधापगमाय विशल्यकरणी किलापेक्ष्यते तस्मात् सञ्जीवनमिति विशल्यकरणमेवोच्यत इति स्फुटं चक्षुष्मताम् । अथापि कथं मणिः? अस्तु मणिरेव विशल्यकरण्यौषधिः । किं ते नष्टम्?

---

१. **'पतिं हत्वा'**                    २. **'–काधिरथम्'** इति क्वचित् ।

प्रहस्योवाच च तदा श्रुतं वाक्यं पुरा मया ।
सुरलोके सुरैः प्रोक्तं भीष्माद्या नातिधर्म्मतः ॥ ११२ ॥

यद्धतास्तेन दोषेण पार्थस्तेनातिवेदनाम् ।
रणे व्रजेदिति न तत् परतः स्यादिति ह्यहम् ॥ ११३ ॥

वचनादेव देवानां युद्धयेत्यात्मजमब्रवम् ।
देवानामेव सङ्कल्पान्मूर्च्छितश्चार्ज्जुनोऽभवत् ॥ ११४ ॥

भुक्तदोषफलश्चायं पुनर्भोक्ष्यति नान्यतः ।
अन्येन [१]पातितस्यास्य यशो नश्येत् त्रिलोकगम् ॥ ११५ ॥

नार्ज्जुनस्य यशो नश्येदिति दैवैरिदं[२] कृतम् ।
इत्युक्तः प्रीतिमापेदे पुत्रभार्य्यायुतोऽर्ज्जुनः ॥ ११६ ॥

यज्ञार्त्थं तावथाऽहूय पूजितः प्रययौ ततः ।
द्वारकायाः समीपस्थं प्रद्युम्नाद्याः सुता हरेः ॥ ११७ ॥

**तेन पार्थेन ॥ ११३–२७ ॥**

---

युक्ता च नागानां मणिचिकित्सेति सर्वं सुन्दरम् । तया विशल्यकरण्या मण्या । मणिशब्दः स्त्रियामपि पठ्यते । उत्थापयामास मणिमर्जुनोरसि निधाप्य बभ्रुवाहनहस्तेन ॥ १११ ॥ स्वाशयमविदित्वा निनिन्दुरिति मूर्च्छितमेव मृतं बभ्रमुरिति प्रहासः । भीष्माद्या नातिधर्मतः । **'महाभारतयुद्धे यत् त्वया शान्तनवो नृपः । अधर्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता'** [८२.८] इति । तेनाधर्मेणेति अल्पधर्मेणेत्यर्थ उक्तो भवति । शिखण्डिसमाश्रयणान्नातिधर्मः ॥ ११२ ॥ यद् हतास्तेन पार्थेन । तेन दोषेण पार्थोऽतिवेदनां रणे व्रजेत् ॥ ११३–४ ॥ भोक्ष्यति भोक्ष्यते । सर्वेऽपि लौकिका विधयश्छन्दसि विभाषा भवन्तीत्यनेनाऽह । परभाष्येऽप्येतदुक्तम्–**'भुञ्जीथाः पालयेथाः'** इति ॥ ११५ ॥ पुत्रेण भार्याभ्यां च युतः ॥ ११६ ॥ यज्ञार्थं तावथाऽहूय भार्याद्वयं पुत्रं च । **'युधिष्ठिरस्याश्वमेधः परिचैत्रीं भविष्यति । तत्राऽगच्छेः सहामात्यो मातृभ्यां सहितो नृप'** [८२.२३] इति च ॥ ११७ ॥

---

१. **'पतितस्यास्य–'** । **'घातितस्यास्य'** इति क्वचित् ।
२. **'देवैरिदम्'**

प्रसह्याश्वमपाजह्रुराह्वयन्तोऽर्ज्जुनं[1] युधे[2] ।
सुभद्राहरणं मार्ष्टुं नीतेऽश्वे तैर्द्धनञ्जयः ॥ ११८ ॥

गौरवाद् वासुदेवस्य मातुलस्य च केवलम् ।
मातुलायाब्रवीदश्वं हृतं पौत्रैरबन्धुवत् ॥ ११९ ॥

स निर्भत्स्य[3] कुमारांस्तान् मेद्ध्यमश्वममोचयत् ।
मातुलं स[4] प्रणम्याथ यज्ञार्त्थं तान् निमन्त्र्य च ॥ १२० ॥

गच्छन् गजाह्वयं दूतमग्रतोऽयापयन्नृपे[5] ।
सकृष्णः सहसोदर्य्यः श्रुत्वाऽसौ[6] प्राप्तमर्ज्जुनम् ॥ १२१ ॥

प्रीतो बाष्पाभिपूर्णाक्षो[7] भ्रातृस्नेहादभाषत ।
वासुदेव न पश्यामि दुर्ल्लक्षणमजार्ज्जुने[8] ॥ १२२ ॥

केन दुर्ल्लक्षणेनायं बहुदुःखी प्रवासगः ।
पृष्टस्तं केशवः प्राह भ्राता ते दीर्घपिण्डिकः ॥ १२३ ॥

---

सुभद्राहरणं मार्ष्टुम् । सुभद्राहरणजं परिभवं अश्वहरणेन प्रतीकारेण मार्ष्टुं निरसितुम् । परिभवजमाधिं शोधयितुं वा ॥ ११८ ॥ मातुलस्य वसुदेवस्य ॥ ११९–२० ॥ दूतमग्रतोऽयापयत् । **'तं निवृत्तं तु शुश्राव चारेणैष युधिष्ठिरः'** [८६.१] इति च । **'तेषां कथयतामेव पुरुषोऽर्जुनसङ्कथाः । उपायाद् वचनाद् दूतो विजयस्य महात्मनः । सोऽभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् । उपयातं नरव्याघ्रं फल्गुनं प्रत्यवेदयत्'** [८८.१३–४] इति च ॥ १२१ ॥ वासुदेव न पश्यामि । **'किं नु तस्य शरीरेऽस्ति सर्वलक्षणपूजिते । अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते'** [८८.५] इति च । भ्राता ते दीर्घपिण्डिकः । पिण्डिकेति चतुर्ष्वर्थेषु प्रयुज्यते– पीठिकायाम्, देहे, लिङ्गे, जङ्घापृष्ठमांसे च । पीठिका तु नात्रावसरमर्हति । दीर्घे पिण्डिके इति द्विवचनविवक्षयैव देहस्य लिङ्गस्य च निरासः । तथाहि महाभारते– **'न ह्यस्य नृपते किञ्चिदनिष्टमुपलक्षये । ऋते पुरुषसिंहस्य पिण्डिकेऽस्याधिके यतः'** [८८.८] इत्याश्वमेधिके । तेन जङ्घा-

---

१. **'–मथाऽजह्रु–'** २. **'–र्जुनं मृधे'** । इति क्वचित् । ३. **'निर्भर्त्स्य'** ४. **'सम्प्रणम्याथ'** इति क्वचित् ।
५. **'–ऽयातयन्नृपे'** । ६. **'श्रुत्वा सम्प्राप्त–'** इति क्वचित् । ७. **'बाष्पातिपूर्णाक्षो–'** ८. **'–मथार्जुने'**

**तेनायं दुःखबहुल इत्युक्त्वा पुनरेव च ।**
**वदन्तमेव[1] पाञ्चाली कटाक्षेण न्यवारयत्** ॥ १२४ ॥

**समस्तलक्षणाभिज्ञाः कृष्णः सत्या वृकोदरः ।**
**कृष्णा च पञ्चमो नास्ति विद्या शुद्धेयमञ्जसा** ॥ १२५ ॥

**प्रसङ्गात् प्राप्तुमिच्छेत् तां विद्याशीलो युधिष्ठिरः ।**
**इति लोभात् तु पाञ्चाली वासुदेवं न्यवारयत्** ॥ १२६ ॥

**तद्गौरवाद् वासुदेवो नोत्तरं प्रत्यभाषत ।**
**विस्मारयामास च तं प्रब्रुवाणः कथान्तरम्** ॥ १२७ ॥

**उदरस्य किञ्चिदाधिक्यं वृषणाधिक्यमेव च ।**
**सव्यबाहोस्तथाऽऽधिक्यं दुर्लक्षणमतोऽर्ज्जुने[2]** ॥ १२८ ॥

**नैवोक्तं वासुदेवेन दृश्यमानमपि स्फुटम् ।**
**ज्ञानानन्दह्रासकरा ह्येते दोषाः सदातनाः[3]** ॥ १२९ ॥

**अतः उक्तादप्यन्यत् दुर्लक्षणमर्जुने ॥ १२८–३५ ॥**

---

पृष्ठगतस्य मांसखण्डस्यैवात्र निर्देश इति स्फुटम् । अत एव पिण्डीजङ्घ इति कश्चिदृषिरपि श्रूयते । मांसलदीर्घजङ्घत्वे प्रवासाधिक्यमिति लोकप्रथाऽप्यत्र संवदते । एतस्मिन्नेवार्थे बहुलं प्रयोगश्च । **'पार्ष्णी पिण्डिके'** इति केचित् । मृग्य-मूलोऽयमर्थः । एतेनैव **'पादपश्चाद्भागः पिण्डिका'** इति भारतश्रीनिवासाचार्यव्याख्यानमपि चिन्त्यम् ॥ १२२–३ ॥ कटाक्षेण न्यवारयत् । **'कृष्णा तु द्रौपदी कृष्णं तिर्यक् सासूयमैक्षत'** [८८.११] इति च ॥ १२४–५ ॥ तां समग्रां सामुद्रिकरहस्यविद्याम् । विद्यागोपनलोभात् पाञ्चाली । विद्यालाभलोभाद् वा युधिष्ठिरः । लोभस्तात्पर्यातिशयः ॥१२६॥ तद्गौरवात् । तदभिप्रायस्य स्वाभिप्रायानुगुणत्वात् तस्य माननीयत्वनैर्भर्यं गौरवम् । न प्रत्युत्तरमभाषत । कथान्तरं प्रस्तूय ब्रुवाणः ॥ १२७ ॥ युधिष्ठिराय यत् कृष्णेन नोक्तं द्रौपद्यर्थे तदस्मान् प्रत्याचार्यः किञ्चिदिवाऽह कृपया– उदरस्य किञ्चिदाधिक्यम् । एकाक्षराधिकेन पादेनोदराधिक्यं शब्दतोऽभिनीय दर्शयति । **'आधिक्येऽधिकम्'** इति ह्याचक्षते ।

---

१. **'–मेवं पाञ्चाली'** २. **'–मथार्जुने । तन्नोक्तं–'** ३. **'सनातनाः'**

**समस्तजीवराशौ तद्[1] दुष्टलक्षणवर्ज्जितौ ।**
**पूर्णचित्सुखशक्त्यादेर्य्योग्यौ[2] कृष्णा च मारुतिः** ॥ १३० ॥

**अनादिदुःखहीनत्वे सुखाधिक्ये च लक्षणम् ।**
**[3]रुग्मिणीसत्यभामादिरूपायाः श्रिय एव तु** ॥ १३१ ॥

**मुख्यं ततोऽपि मुख्यं[4] तु स्वातन्त्र्यादेरशेषतः ।**
**गुणराशेः परं लिङ्गं नित्यं व्यासादिरूपिणः ।**
**विष्णोरेव नचान्यस्य स ह्येकः पूर्णसद्गुणः** ॥ १३२ ॥

**साश्वेऽर्ज्जुने यज्ञवाटं प्रविष्टेऽस्य सहोदराः ।**
**पूजिताः पूजयामासुर्म्मुदिताः सहकेशवाः** ॥ १३३ ॥

**ततः स यज्ञो यदुवीररक्षितो व्यासोपदिष्टो मुनिभिः प्रवर्त्तितः ।**
**अशोभतालं सकलैर्नृपैश्च समागतैर्विप्रवरैश्च जुष्टः** ॥ १३४ ॥

**स कृष्णयुग्मेन च भार्ग्गवेण त्रिधा विभक्तेन परेण पुंसा ।**
**अधिष्ठितोऽशोभत विश्वमेतद् विश्वादिरूपेण यथैव तेन** ॥ १३५ ॥

---

एकस्य वृषणस्यान्यस्मात् किञ्चिदाधिक्यम् । तथा सव्यबाहोर्दक्षिणबाह्वपेक्षया किञ्चिदाधिक्यम् । अतः पाश्चाल्या तिर्यगीक्षणेन मा कृष्ण वोचथा इति निवारणात् नैवोक्तं वासुदेवेन यथासम्भवं स्फुटं दृश्यमानमपि । सदातनाः, नत्वर्जुनत्वदशायामेव । अस्य दुर्लक्षणस्य मूलरूपसम्बद्धत्वात् स्वरूपत एव ज्ञानानन्दह्रासकरा इत्यर्थः ॥ १२८–९ ॥ नारीषु कृष्णा । नरेषु मारुतिः ॥ १३० ॥ यद् सौन्दर्यरूपं लक्षणं तत् सर्वं श्रिय एव तु मुख्यम् । तुना स्त्रीणां मध्य इत्याह । समस्तजीवराशित अधिकं चेत्याह ॥ १३१ ॥ मुख्यं तु । तुना निरवधिकतामाह ॥ १३२ ॥ पार्थेन पूजिताः पार्थं साश्वं पूजयामासुः । **'ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः । धृतराष्ट्रं पुरस्कृत्य तं प्रत्युद्ययतुस्तदा । सोऽभिवाद्य पितुः पादौ धर्मराजस्य धीमतः । भीमादींश्चापि सम्पूज्य पर्यष्वजत केशवम् । तैः समेत्यार्चितस्तांश्च प्रत्यर्च्याथ यथा-विधि । विशश्राम महाबाहुस्तीरं लब्ध्वेव पारगः'** [८८.२३–५] इति च ॥ १३३ ॥ जुष्टः प्रीत्या सेवितः ॥१३४॥ यथा तेनैव जाग्रत्स्वप्नसुप्तिप्रवर्तकेन विश्वतैजसप्राज्ञरूपेण त्रिधा विभक्तेन विश्वं जीवजातमिव ॥ १३५ ॥

---

१. **'–राशौ तु दुर्लक्षणविवर्जितौ'**
२. **'–शक्त्यादौ योग्यौ'** इति क्वचित् ।
३. **'रुक्मिणी–'**
४. **'ततोऽतिमुख्यम्'**

**यथा विरिञ्चस्य पुराऽस्य यज्ञो यथैव शक्रस्य शतक्रतुत्वे ।**
**तथैव सोऽभूद् विधिशर्वशक्रपूर्वैः सुरैराविरलङ्कृतोऽधिकम् ॥ १३६ ॥**

**न देवगन्धर्वमुनिस्वधर्म्ममर्त्यादिकेष्वास स योऽत्र नाऽस[1] ।**
**स्वलङ्कृतैर्नाकिजनैः सकान्तैररूरुचन्नाकवदेव लोकः[2] ॥ १३७ ॥**

**तत्रैव तत्वानि ससंशयानि निस्संशयान्यासुरलं विवादे ।**
**परस्परोत्थे हरिणा त्रिरूपिणा संस्थापितान्यग्रवचोभिरुच्चैः ॥ १३८ ॥**

**प्रगीतगन्धर्ववरः प्रनृत्तसदप्सराः सन्ततवादिविप्रः ।**
**विवेचयद्देवनृपौघ एको रराज राजाऽखिलसत्क्रतूनाम् ॥ १३९ ॥**

**आविः प्रत्यक्षभूतैः अधिकमलङ्कृतः॥ १३६ ॥ स्वधर्मस्थितमर्त्यादिकेषु योऽत्र नाऽस नाऽगतः स नाऽस । ओकः यज्ञस्थानम् ॥ १३७–८ ॥ प्रगीतगन्धर्ववरः प्रनृत्तसदप्सरा इति कर्तरि क्तः । विवेचयन् देवनृपौघः तत्त्वविवेकं कुर्वन् देवनृपौघः (यस्मिन्) ॥ १३९ ॥**

---

आविर्भूतैः सर्वदृश्यैरलङ्कृतः । **'स यज्ञः शुशुभे तस्य साक्षाद् देवर्षिसङ्कुलः । गन्धर्वगणसङ्कीर्णः शोभितोऽप्सरसां गणैः'**[८९.३८] इति च ॥ १३६ ॥ देवेषु गन्धर्वेषु मुनिषु च सर्वेऽपि स्वधर्मनिष्ठा एव । मनुष्येषु तु द्वैधं भवति । केचित् स्वधर्मरताः केचिदस्वधर्मरता इति । राजसतामसा इत्येतत् । तद्व्यावृत्त्यर्थं स्वधर्ममर्त्यादिकेष्वित्याह । स्वं स्वतन्त्रं भगवन्तं हृदि धारयन्तीति च स्वधर्माणः । मर्त्यादिकेष्वित्यादिना सात्विकानसुरजीवान् पक्ष्यादींश्च सञ्जग्राह । योऽत्र नासन्निहितः स देवादिकेषु कोऽपि नाऽस । सर्वेऽपि सज्जना अत्र समवेयुरिति । यो विभवः अत्र नाऽस स देवादिष्वपि नाऽसेति वा । यः पदार्थोऽत्र नाऽस स क्वापि नाऽसेति वा । सकान्तैः कान्ताभिः सहितैः । लोको भूलोकः । **'नाकवदेतदोकः'** इति च पाठं पठन्ति । ओकः यज्ञसदनम् । **'ओक आश्रयमात्रे च मन्दिरे च नपुंसकम्'** इत्यभिधानम् । अरूरुचत् भृशमरुचदित्यर्थः । प्रतना गुणाभावमाश्रित्य बहुलं धातुरूपाणि पठन्ति ॥ १३७ ॥ संस्थापितानि इदमित्थमेवेति सावधारणं स्थापितानि । सतां संशयनिरासपूर्वकं सिद्धान्तितानि । अग्र्याणि अपौरुषेयत्वात्, पौरुषेयत्वेऽपि श्रुतियुक्तिमूलत्वात् । स्वतो भगवता परमाप्तेनोक्तत्वादुच्चैरुन्नतैः । उच्चैः संस्थापितानीति वा ॥ १३८ ॥ सदप्सरसः प्रधानाप्सरसः । सन्ततवादि-विप्रः–**'तस्मिन् यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः । हेतुवादान् बहूनाहुः परस्परजिगीषवः'** [८६.२७] इति च । विवेचयतां इदमित्थमिति तत्वं विश्लेषयतां देवानां नृपाणां च ओघो यत्र । सत्क्रतूनां ज्ञानपूर्वफलापेक्षामृते भगवदर्पण-बुद्ध्या कृतानां वैष्णवानां क्रतूनाम् । राजा मूर्धन्यः अत एवैकोऽद्वितीयः । एतादृशोऽन्यो नास्तीति ॥ १३९ ॥

---

१. **'योऽत्र सम्भ्रमः । स्वलङ्कृतै–'** इति क्वचित् । २. **'–देतदोकः ।'** वे.ती. पाठोऽपि तथा ।

समस्तदेव्यः सहवासुदेव्यः स्वलङ्कृताः फुल्लमुखारविन्दाः ।
विचेरुरत्रैव सहाप्सरोभिर्निषेदुरप्यच्युतसत्कथारमाः ॥ १४० ॥

न वै मुमुक्षुर्न बुभूषुरत्र न वै प्रपित्सुश्च[१] कुतो बुभुक्षुः ।
[२]असत्यकामा अभवन् कुतश्चित् प्रदातरि प्राज्ञवरेऽनिलात्मजे ॥ १४१ ॥

दिनेदिने तत्र महान्नपर्वताः सभक्षसारा रसवन्त ऊर्ज्जिताः ।
नद्यः पयःसर्प्पिरजस्रपूर्णाः समाक्षिकाद्या अपि पायसह्रदाः ॥ १४२ ॥

**सहवासुदेव्यः वासुदेवभार्याभिः सहिताः ॥ १४० ॥ अत्र अध्वरे प्राज्ञवरेऽनिलात्मजे प्रदातरि (केऽपि) असत्यकामा नाभवन् । तदेव स्पष्टमाह–न वै मुमुक्षुरिति । मुमुक्षुः असत्यकामो नाभवत् । न वै बुभूषुः ऐश्वर्यादिकमिच्छन्, (प्रपित्सुः प्रपदनमाश्रयणमिच्छन् वा) असत्यकामो नाभवदिति शेषः ॥१४१–६२॥**

देव्यः राजभार्याः । वासुदेव्यः कृष्णभार्याः । अच्युतसत्कथायां रमन्ते । अच्युतस्य सत्यः सर्वपुरुषार्थदाः कथाः । अच्युतस्य सतां च वा कथाः ॥ १४०॥ प्रपत्तुमिच्छा प्रपित्सा । प्रपत्तिः शरणागतिः । शरणागतिर्मोक्षश्चात्र सुलभौ त्रिरूपभगवत्सन्निधानादिति वायिति द्विराह । तदनुज्ञया मोक्षप्रदस्य वायोश्च सन्निधानात् । कुतश्चित् कारणान्तरादपि । कुतश्चिद्देशान्तरादागता अपि । कुतश्चित् केऽपि । सार्वविभक्तिको हि तसिः । कुतश्चित् कस्मिंश्चदपि विषये । न मोक्षमिच्छन्, नवा भूतिमिच्छन्, नवा शरणमिच्छन्, इत्येवमेते केऽपि असत्यकामा अभवन् । सर्वेऽपि सम्पूर्णकामा एवाभवन् । **'न क्रोधो नच मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानाम्–'** इतिवदयं प्रयोगः । प्राज्ञवरेऽनिलात्मजे भीमे च प्रकटमेत्य प्रकामं दातरि सति । भोक्तुमिच्छन् नासत्यकामोऽभवदिति किमु वक्तव्यम् । **'भोजनं भोजनार्थिभ्यो दापयामास शत्रुहा । भीमसेनो महातेजाः सततं राजशासनात्'** [८९–२६] इति च ॥ १४१ ॥ तत् कुतः? यतः दिनेदिने तत्र महान्नपर्वताः । मारुतिना तु कारिता इत्युत्तरत्रान्वयः । बभूवुरिति वा । सभक्षश्रेष्ठाः । षड्रसोपेताः । ऊर्जिता उत्कृष्टाः । पयसा सर्पिषा च अजस्रपूर्णाः । माक्षिकं मधु । आदिना दधितक्रादि । समाक्षिका ह्रदाः आद्या येषां ते पायसह्रदाः । समाक्षिकाद्या नद्य इति पूर्वान्वयो वा । अथवा माक्षिकं रसालम् । रसालेति कोशकाराः । '[illegible]' इति भाषायाम् । शिखरिणी च गैर्वाण्याम् । तथाहि सूदशास्त्रज्ञा आचक्षते–**'अर्धाढकः सुचिरपर्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पिः पलं मधु पलं मरिचं द्विकर्षं शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् । सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतपात्रसंस्था । एषा वृकोदरकृता सरला रसाला याऽऽस्वादिता भगवता मधुसूदनेन'** इति । अहो पाकविद्यापाटवं वृकोदरस्य । स्थाने च वललो बभूव वैराटसदने । मारुतिना कारिता इत्युत्तरश्लोकेनान्वयः । बभूवुरिति शेषो वा । **'सर्पिःपङ्का ह्रदा यत्र बभूवुश्चान्नपर्वताः । रसालकर्दमा नद्यो बभूवुर्भरतर्षभ'** [९०.३९] इति च ॥ १४२ ॥

१. **'वै विवित्सुश्च'** । **'पिपित्सुश्च'** इति क्वचित् । २. **'नासत्य–'**

**ह्रदा महान्तस्त्रिदशादियोग्याः सुयोगयुक्ता हरिचन्दनादेः ।**
**तथाऽञ्जनालक्तकमुख्यमण्डनद्रव्याग्र्यवाप्यो मणिकाञ्चनोद्भवाः ॥ १४३ ॥**

**यथेष्टपानाशनभोगशिष्टाः सहस्रशो मारुतिना तु[1] कारिताः ।**
**गन्धा रसाद्याश्च समस्तभोगा दिवीव तत्राऽसुरतीव हृद्याः ॥ १४४ ॥**

**नैतादृशः कश्चन भूतपूर्वो मखो विना रामविरिञ्चवज्रिणाम् ।**
**मखानिति प्रोचुरशेषलोका दृष्ट्वा मखं तं पुरुषोत्तमेरितम् ॥ १४५ ॥**

**स एवमद्धा हरिदैवतः क्रतुः पञ्चाश्वमेधात्मक उच्चकल्पः ।**
**दिनेदिने स्वृद्धगुणो[2] बभूव मुदावहो वत्सरपञ्चकत्रयम् ॥ १४६ ॥**

**यज्ञावसाने निखिलाश्च पाण्डवाः कृष्णा च पृथ्वीमखिलां सवित्ताम् ।**
**[3]मङ्गल्यमात्रं दयिताशरीरे निधाय सर्वाभरणानि चैव ॥ १४७ ॥**

---

हरिचन्दनादेः ह्रदाः । हरिचन्दनादेः सुयोगयुक्ता इति वा । हरिचन्दनादेः सुगन्धद्रव्यजातस्य अपूर्वसमागमः सुयोगः । हरिचन्दनं गन्धसारविशेषः । हरेः प्रियं हरिद्वर्णं वा चन्दनम् । सुयोगमेव स्फुटमाह– त्रिदशादियोग्याः । आदिना देवभोगपुण्यभाजः । एवं दुर्लभा अप्यत्र सुलभयोगयुक्ता इति च । येषां यत्र लिप्सा तस्य सुलभप्राप्तिः सुयोगः । अञ्जनं कज्जलम् । येन चक्षुषी अञ्जित्वा माद्यन्ति मानिन्यः । अलक्तकेन रेखालेखो हस्तपादस्य । द्रव्याग्र्याणां वाप्यः । अञ्जनालक्तकमुख्यानि मण्डनद्रव्याग्र्याणि । द्रव्याणामग्र्यवाप्यो वा । प्राकृतजनदौर्लभ्यं द्रव्यणामग्र्यता । सर्वजन-सौलभ्यं वापीनाम् । मणिकाञ्चननिर्मिताः । मणयः काञ्चनानि चोद्भवन्त्यत्रेति तादृशा वा ॥ १४३ ॥ सहस्राणिसहस्राणीति सहस्रशः । **'सङ्ख्यैकवचनाच्च वीप्सायाम्'** [अ.सू.५.४.४३] इति पाणिनिः । मारुतिना तु । मारुतेरनन्यं पाकपाटवं तुनाऽह । यथेष्टं पानाशनरूपाय भोगाय, पानायाशनाय, चन्दनाञ्जनालक्तादिभोगाय वा, शिष्टाः । शिष्टिराज्ञा । आज्ञानुसारेण निर्मिताः । यथेष्टभोगानन्तरमप्यवशिष्टा वा । रसाद्या इत्यादिनाऽपूर्वगानानां रूपस्पर्शविशेषाणां च ग्रहणम् ॥ १४४ ॥ रामविरिञ्चवज्रिणां मखान् विना । पुरषोत्तमेनेरितं प्रेरितं च ॥ १४५ ॥ वत्सरपञ्चके एकोऽश्वमेधः । एवं त्रयाणां वत्सरपञ्चकत्रयम् । **'त्रीनश्वमेधानत्र त्वं सम्प्राप्य बहुदक्षिणान् । ज्ञातिवध्याकृतं पापं प्रहास्यसि नराधिप'** [८९.१७] इति च ॥ १४६ ॥ मङ्गले साधु मङ्गल्यं मङ्गलसूत्रम् । दयिताया द्रौपद्याः शरीरे । पाण्डवानां दयिता कृष्णा च शरीरे मङ्गल्यमात्रं निधाय अन्यानि सर्वाभरणानि, पाण्डवाश्च पृथ्वीमखिलां समर्पयामासुरिति वा ॥ १४७ ॥

---

१ **'मारुतिनाऽपि कारिताः'** । **'मारुतिना हि'** इति क्वचित् । २. **'स्वर्द्धगुणो–'** इति क्वचित् । ३. **'माङ्गल्य–'**

**समर्प्पयामासुरजे वरेण्ये व्यासे विभागाय यथोक्तमृत्विजाम् ।**
**प्रियो विभागो यदमुष्य विष्णोरतो विभागार्थमिवाऽर्प्पयंस्ते ॥ १४८ ॥**

**हृदा समस्तं हरयेऽर्प्पितं तैः स हि द्विजस्थोऽपि समस्तकर्त्ता ।**
**देहेन्द्रियप्राणमनांसि चेतनैः सहैव तस्मा अतिसृज्य नेमुः ॥ १४९ ॥**

**त्वदीयमेतन्निखिलं वयं च [१]नास्त्यस्मदीयं क्वच किञ्चनेश ।**
**स्वतन्त्र एकोऽसि न कश्चिदन्यः सर्वत्र पूर्ण्णोऽसि सदेति हृष्टाः ॥ १५० ॥**

**ततो विभक्ते मुनयोऽवदंस्ते प्रत्यर्प्पयामो वयमेषु राज्यम् ।**
**पूर्ण्णा हिरण्येन वयं धरायाः प्रपालने योग्यतमा इमे हि ॥ १५१ ॥**

**पार्त्थाः सभार्य्या द्विजवाक्यमेतन्निशम्य कृष्णाय पुनः प्रणम्य ।**
**ऊचुस्तपो नोऽस्तु वनेऽर्प्पयित्वा राज्यं मखान्ते त्वयि धर्म्मलब्धम् ॥ १५२ ॥**

---

अमुष्य वित्तस्य योग्यतानुगुणं विभजनं हरेः प्रियम् । स हि सर्वं सर्वेषां विभज्य ददाति । स हि वेद यस्य यावद् दातव्यम् । तस्मात् स एव वित्तपतिः विभज्य ददातु । वयं के वित्तं दातुं विभक्तुं वा इत्यनुसन्धायेव । यतः पूर्वमेव हृदा समस्तं हरयेऽर्पितमेव, ततस्तदानीं लोकदृष्ट्याऽऽर्पयन्निवेति चार्थः ॥ १४८ ॥ द्विजस्थोऽपि स एव हि । द्विजस्थः सन् समस्तकर्ताऽपि स एव हि । देह इत्यन्नमयः कोशः । दशेन्द्रियाणि दश प्राणा इति प्राणमयः कोशः । चेतना च चेतनश्च चेतनं च चेतनानि तैः । चेतना बुद्धिः । तदिमे मनोबुद्धी मनोमयकोशः । अहमिति चेतयतेऽनेनेति चेतनमहङ्कारः । चित्तं च चेतनम् । तदिमे अहङ्कारश्च चित्तं च विज्ञानमयकोशः । **'बहुस्मरणशक्तिश्च चेतनेत्यभिधीयते'** । तेन चेतनाऽऽनन्दमयकोशः । स्वात्मा च चेतन इति सर्वसङ्ग्रहः । अत एव चेतनैः सहेत्याह । अन्यथा चेतनेन चेतनया वा सहेत्यवक्ष्यत् ॥ १४९ ॥ वयं च त्वदीयाः ॥ १५० ॥ पूर्णाः पूर्णकामाः । **'ब्राह्मणा हि धनार्थिनः'** [९०.९] इति हि व्यासवचनम् । प्रकटं पालने । मुनयस्तु मार्गमुपदिशन्तः परोक्षं पालयन्ति । क्षत्रिया इति योग्याः । तत्रापि पूरुवंशे जाता इति योग्यतराः । तत्रापि कृष्णदर्शिताध्वान इति योग्यतमाः ॥ १५१ ॥ कृष्णाय बादरायणाय । तपो नोऽस्तु । **'वनं प्रवेक्ष्ये विप्राग्र्या विभजध्वं महीमिमाम्'** [९०.१२] इति सभ्रातृकस्य युधिष्ठिरस्य वचनम् ॥ १५२ ॥

---

१. **'नत्वस्मदीयम्'** । **'नचास्मदीयम्'** इति क्वचित् ।

इतीरितः प्राह स बादरायणो मुनीश्वरैरप्यनुयाचितः[१] प्रभुः ।
हिरण्यमेव स्वमिदं मुनीनां मदाज्ञया भुङ्ग्ध्वमशेषराज्यम् ॥ १५३ ॥

समर्प्पितं मे फलवच्च तत् स्यात् पुनर्ग्ग्रहो नैव च दोषकारी ।
पितामहोऽहं भवतां विशेषतो गुरुः पतिश्चैव ततो मदर्हथ ॥ १५४ ॥

इतीरितास्ते प्रतिपद्य राज्यं ददुर्हिरण्यं निखिलं च तस्मै ।
विभज्य विप्रान् स निजं तु[२] भागमदात् पृथायै निखिलं प्रसन्नः ॥ १५५ ॥

सभार्य्यकाणां वररत्नभूषणान्यशेषतः पुत्रभुवां प्रदाय ।
पृथक्पृथग् योग्यवरानथैभ्यः[३] प्रादात् प्रभुस्ते मुदिताः प्रणेमुः ॥ १५६ ॥

तद् यज्ञपञ्चकमजस्त्रिगुणां स एभ्यः सद्दक्षिणां [४]क्रतुपतिर्न्निखिलामवाप्य ।
चक्रेऽश्वमेधत्रयमेकमेकं तेषां हरिर्बहुसुवर्ण्णकनामधेयम् ॥ १५७ ॥

---

बादरायणभावानुगुणं याचितः । हिरण्यमेव स्वं वित्तम् । **'दत्तैषा भवता मह्यं तां ते प्रतिददाम्यहम् । हिरण्यं दीयतामेभ्यो ब्राह्मणेभ्यो धराऽस्तु ते'** [९०.१७] इति च व्यासवचनम् ॥१५३–४॥ प्रतिपद्य स्वीकृत्य । तस्मै कृष्णद्वैपायनाय । स च तत् पञ्चधा विभज्य विप्रांश्च चतुर्धा विभज्य विप्रेभ्योऽदात् । पञ्चमं निजं भागं कुन्त्या अदात् । **'स्वमंशं भगवान् व्यासः कुन्त्यै पादाभिवादितः । प्रददौ तस्य महतो हिरण्यस्य महाद्युतिः'** [९०.२७] इति च ॥ १५५ ॥ अशेषाणां पुत्रभुवां पौत्राणां पाण्डवानाम् । अशेषाणि अनर्घरत्नभूषणानि । येये येषां योग्या वरा अभीप्सिताश्च तांस्तान् पृथक्पृथक् ददौ । अथैभ्यः । अनुपसर्गादप्यधातावपि एङि पररूपमभ्युपयन्नप्याचार्योऽव्ययादवर्णान्तात् पररूपं नानुमन्यते । अथ एषः अथैषः । उत एषः उतैषः । स च एषः स चैषः । अथ ओजसा अथौजसा । उत ओजसा उतौजसा । स च ओजसा स चौजसा ॥ १५६ ॥ पञ्चवत्सरमय एकैकोऽपि यज्ञः पञ्चयज्ञात्मकः । पञ्चात्मकस्य भगवतः पञ्चात्मकेन प्राणेन समर्पितः । त्रिभी रूपैः सन्निहितस्य प्रीणनार्थं त्रिः कृतः । तत्र चैकमेकं यज्ञं त्रिगुणां दक्षिणामवाप्याश्वमेधत्रयात्मकं चक्रे । **'कोटिङ्कोटिं गवां प्रादाद् दक्षिणां त्रिगुणीकृताम्'** [९०.१९] इति च । **'वाजिमेधैस्त्रिभी राजा यज्ञेशमयजद्धरिम्'** [१.११.३४] इति भागवते । श्रद्धया दत्ता दक्षिणा सद्दक्षिणा । बहुसुवर्णकनामधेयम् । **'बहुत्वात् काञ्चनस्यास्य ख्यातो बहुसुवर्णकः'**[८९.१५] इति च । अपूर्वमिदं छन्दसां विहरणम् । तृतीयः पाद इन्द्रवज्रानिबद्धः । अवशिष्टं त्रयं वसन्ततिलका । इन्द्रवज्रया यज्ञस्य फलदार्ढ्यमाह । वसन्ततिलकया द्रुतगत्योत्सवस्य सम्भ्रममास्वादयति ॥ १५७ ॥

---

१. **'–प्यभियाचितः'** २. **'निजं च भाग–'** ३. **'–वरांस्तथैभ्यः'** ४. **'–णां मखपति–'** इति क्वचित् ।

**सकृष्णेष्वथ पार्थेषु सुस्नातावभृथेष्वलम् ।**
**पश्चेन्द्रवद् विराजत्सु स्तूयमानेष्वृषीश्वरैः[1] ॥ १५८ ॥**

**स्तूयमाने च तद्यज्ञे क्रोधो नकुलतां गतः ।**
**कृत्वोग्रगर्जनं यज्ञं तांश्च यज्ञकृतोऽखिलान् ॥ १५९ ॥**

**गर्हयन्नूचिवानित्थं भार्य्यापुत्रस्नुषायुतः[2] ।**
**सक्तुप्रस्थमदाद् विप्र उञ्छवृत्तिः सुभक्तितः ॥ १६० ॥**

**धर्म्मायातिथये तस्य कलां नार्हति षोडशीम् ।**
**यज्ञोऽयमिति हेतुं च विप्रैः पृष्टोऽभ्यभाषत ॥ १६१ ॥**

---

सकृष्णेषु कृष्णया सहितेषु । सुष्ठु विधिवत् स्नातावभृथेषु । दीक्षान्तसमारोहोऽवभृथ उच्यते । **'अवे भृञः'** [६.२८] इति दशपादिका । **'अवे उपपदे भृञो धातोः क्थन् प्रत्ययो भवति । अवबिभ्रति जनास्तस्मादित्यवभृथो यज्ञान्तस्नानम्'** इति वृत्तिः । **'अवभृथो यज्ञावसानम्'** इति सरस्वतीकण्ठाभरणवृत्तौ [२.२.१५२] दण्डनाथनारायणः । अवभृथे स्नाताः स्नातावभृथाः । सुस्नातोऽवभृथो येषां वा ॥ १५८ ॥ क्रोधमानी असुरः । उग्रगर्जनं कृत्वा । **'बिलान्निःसृत्य नकुलो रुग्मपार्श्वस्तदाऽनघ । वज्राशनिसमं नादममुञ्चद् वसुधाधिप । सकृदुत्सृज्य तं नादं त्रासयानो मृगद्विजान् । मानुषं वचनं प्राह पुष्पोपरिशयो महान्'** [९१.५०६] इति च । सक्तुर्भृष्टयवपिष्टमय आहारविशेषः । प्रस्थः परिमाणविशेषः द्वात्रिंशतिपलपरिमितः चतुःकुडवात्मा च । षोडश माषा एकः कर्षः । चत्वारः कर्षा एकं पलम् । इयमत्र कथा–उञ्छवृत्तिर्द्विजः कश्चिदास पुरा कुरुक्षेत्रे सभार्यापुत्रस्नुषः । कदाचिदुञ्छमप्राप्य क्षुच्छ्रमान्वितः कृच्छ्रप्राणः क्षपयामास कालम् । ततः कथञ्चिद् यवप्रस्थमुपार्जयत् । तैर्यवैः सक्तून् विधाय चत्वारः कुडवङ्कुडवं व्यभजन्त । अथ कश्चिदतिथिरागतः क्षुधितः । द्विजः स्वं सक्तुकुडवमतिथये ददौ । नच तेन तुष्टिं जगाम सः । भार्या स्वं कुडवभागं ददौ । नच तुष्टिं जगाम सः । पुत्रः स्वं कुडवभागं ददौ । नच तुष्टिं जगाम सः । स्नुषा स्वं कुडवभागं ददौ । एवं सक्तुप्रस्थभक्षणेन तुष्टोऽभवत्सोऽतिथिः, य एतान् परीक्षितुमागतो धर्मः पुरुषविग्रहः । स तुष्ट आह– **'अनवेक्ष्य सुतस्नेहं कळत्रस्नेहमेव च । धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया'** [९२.७१] इति; **'सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाऽक्षयः । विरजो ब्रह्मसदनं गच्छ विप्र यथासुखम् । सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् । आरोहत यथाकामं धर्मोऽस्मि द्विज पश्य माम्'** [८३–४] इति । **'सभार्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज'** [८५] इति च ॥ १५९–६१ ॥

---

१ **'–मानेष्वपीश्वरैः'** २. **'–स्नुषान्वितः'**

अतिथेस्तस्य पादोदक्लिन्नः[1] पाश्वर्वो हिरण्मयः ।
एको ममाभूदपरः सर्वतीर्थादिकेष्वपि ॥ १६२ ॥

मज्जतोऽवभृथेष्वद्धा यज्ञानामत्र चाऽदरात् ।
नाभूदित्यथ तत्तत्ववेदिभिर्म्मुनिपुङ्गवैः ॥ १६३ ॥

कृष्णेन च तमोऽन्धं तं प्रापयद्भिः स्मिते कृते ।
अदर्शनं जगामाऽशु तमः प्राप च कालतः ॥ १६४ ॥

तदर्थमेव हैरण्यः पाश्वर्वस्तस्याभवत् पुरा ।
कृष्णस्य पाण्डवानां च मखादेश्च गुणान् बहून् ॥ १६५ ॥

वदन्तो [2]भत्सयाश्चक्रुस्तन्मतज्ञा मधुद्विषः[3] ।
श्राद्धार्थं हि पयः पूर्वं जमदग्नेरदूषयत् ॥ १६६ ॥

नाकुलेनैव रूपेण क्रोधस्तं पितरोऽशपन् ।
भव त्वं नकुलस्तावद् यावद् धर्म्मादिकान् सुरान् ॥ १६७ ॥

**त(त्त)त्ववेदिभिः, 'तदर्थमेव हैरण्यः पाश्वर्वस्तस्याभवत् पुरा' इति वक्ष्यमाणप्रकारेण तत्स्वरूपं जानद्भिः ॥ १६३–४ ॥ तदर्थमेव पाण्डवानां यज्ञं विनिन्द्य तमः प्रापयितुमेव ॥ १६५ ॥ तच्च (तत्) मतं च तन्मतम् । (तस्य निन्दा कार्येति त)न्मतमित्यर्थः ॥ १६६–७७ ॥**

---

**'ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च'** [८८] इत्यस्यार्थं स्फुटमाह–पादोदकक्लिन्नः पाश्र्व इति । **'शरीरार्धं च मे विप्राः शातकुम्भमयं कृतम्'** [९०] इति च । **'कथमेवंविधं स्याद्वै पाश्वर्वमन्यदिति द्विजाः । तपोवनानि यज्ञांश्च हृष्टोऽभ्येमि पुनःपुनः । यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः । आशया परया प्राप्तो नचाहं काञ्चनीकृतः'** [९१–२] इति च ॥ १६२ ॥ तस्य यत् तत्वं क्रोधमानित्वमसुरत्वं च तदर्धदेहस्याकाञ्चनमयत्वे कारणं च, तद्वेदिभिः ॥ १६३–५ ॥ तत् तस्मात् मधुद्विषो मतज्ञाः तद् दुष्टसत्वं भत्सयाश्चक्रुः । श्राद्धार्थम् । **'श्राद्धं सङ्कल्पयामास जमदग्निः पुरा किल । होमधेनुस्तमागाच्च स्वयमेव दुदोह ताम् । तत्पयः स्थापयामास नवे भाण्डे दृढे शुचौ । क्रोधो नकुलरूपेण पिठरं पर्यकर्षयत् । जिज्ञासुस्तमृषिश्रेष्ठं किं कुर्याद् विप्रिये कृते । इति सञ्चिन्त्य दुर्मेधा धर्षयामास तत् पयः'**

---

१. '–क्लिन्नपाश्वर्वो–' २. **'भर्त्सया–'** ३. प्राचीनादर्शे **'मतद्विषः'** इति पठ्यते । स्खलितं स्यात् ।

क्षेप्स्यसीति तमो घोरं भूयः पापेन यात्वयम् ।
इत्यभिप्रेत्य तैः शप्तस्तथा कृत्वा तमोऽभ्ययात्[१] ॥ १६८ ॥

यद्यप्यल्पधनत्यक्तं वित्तं बहुफलं[२] भवेत् ।
तथाऽप्यनन्तफलदाः कर्त्तुरेव महागुणाः ॥ १६९ ॥

सतां प्रीतिश्च तत्रापि सद्वरो हरिरेव हि ।
पार्थेभ्योऽभ्यधिकः कर्त्ता समो वा को गुणैर्भवेत् ॥ १७० ॥

सतां च प्रवरो विष्णुः सद्भिर्म्मुनिवरैर्य्युतः[३] ।
प्रत्यक्षतः कारयति पार्थैः प्रियतमैश्च तैः ॥ १७१ ॥

यं मखप्रवरं तस्य समं किं शुभसाधनम्[४] ।
पठन्ति पैङ्गिनश्चैतान् मन्त्रानन्वर्थकानिह ॥ १७२ ॥

'अवैष्णवकृतं कर्म्म सर्वमन्तवदुच्यते ।
'अनन्तं वैष्णवकृतं तत्र वर्ण्णक्रमात् परम् ॥ १७३ ॥

---

[९५.३–५] इति च । तं पितरोऽशपन् । **'पितॄणामभिषङ्गाच्च नकुलत्वमुपागतः'** [११] इति च । **'तैश्चाप्युक्तः क्षिपन् धर्मं शापस्यान्तमवाप्स्यसि'** [१२] इत्यस्याऽशयमाह–तमो घोरमिति । नहि धर्मं क्षिपन् मुक्तशापः क्वापि पुण्यभाजनं भवति ॥ १६६–८ ॥ ननु निर्धनस्य सक्तुप्रस्थदानं नाल्पफलम् । सत्यम् । अथापि कश्चनात्र प्रमेयविशेषोऽस्तीत्याह– यद्यपीत्यादिना ॥ १६९ ॥ सतां प्रीतिश्चानन्तफलदा । किमुत सतामग्रण्यो हरेः प्रीतिः ॥ १७०–१ ॥ अत्र पैङ्गिनां श्रुतिं संवादयति– पठन्तीत्यादिना । उपरि पठ्यमानाश्चत्वारः श्लोकाः [७२–६] पैङ्गिश्रुतिवचनानि । अवैष्णवकृतं कर्म सर्वमन्तवत् । तथाहि बृहदारण्यके–**'यदि हवा अप्येनवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव । आत्मानमेव लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते'** [बृ.उ.३.५.९] इति । **'न सम्यक् फलदो विष्णुरज्ञातो जगदीश्वरः । यद्यवेत्ता महदपि हयमेधादिकं हरेः । कुर्यात् क्षयिष्णुफलवान्**

---

१. **'तमोऽभ्यगात्'**
२. **'बहुगुणं भवेत्'** इति क्वचित् ।
३. **'–र्मुनिसुरैर्वृतः'** इति क्वचित् ।
४. **'किं सुखसाधनम्'** इति क्वचित् ।

'वैष्णवेष्वपि[1] मर्त्यैर्य्यत् कृतं शतगुणं ततः ।
'गान्धर्वं कर्म्म तस्माच्च मुनिभिः पितृभिस्ततः ॥ १७४ ॥

'देवशक्रशिवब्रह्मकृतं तस्मात् क्रमेण च ।
'शतोत्तरमिति ज्ञेयं नान्यद् ब्रह्मकृतोपमम् ॥ १७५ ॥

'वैष्णवत्वं क्रमोद्वृद्धं[2] ब्रह्मान्तं जीवराशिषु ।
'फलाधिक्यं कर्म्मणां हि विष्णोः प्रीत्यैव नान्यथा' ॥ १७६ ॥

इति तेन न पार्थानां कर्म्मणाऽन्यत् समं क्वचित् ।
गुणैर्ज्ञानादिभिर्वाऽपि[3] तस्मात् क्रोधः स तामसः ।
विनिन्द्य तान् सुसत्त्वस्थांस्तमोऽन्धमुपजग्मिवान् ॥ १७७ ॥

अथ पृष्टो वासुदेवः सुरविप्रादिसंसदि ।
युधिष्ठिरेण संहृष्टो जगादाशेषतः प्रभुः ॥ १७८ ॥

**पृष्टः, धर्ममिति शेषः ॥ १७८–९ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायां
त्रिंशोऽध्यायः

—०—

**स भवेन्नात्र संशयः । आप्तकामतयाऽऽत्मेति यो विष्णुः समुदीरितः । सर्वाश्रयमुपासीत तमेव पुरुषः सुधीः । विष्णुं सर्वाश्रय इति सदोपास्ते य आत्मवान् । क्षीयन्ते नास्य कर्माणि शुभान्येव कदाचन'** इति च ब्रह्माण्डवचनं बृहद्भाष्ये । **'यत् किञ्चित् कुरुते कर्म पुरुषः साध्वसाधु वा । सर्वं नारायणे न्यस्य कुर्वन्नपि न लिप्यते'** [५.१७] इति वाराहे ॥ १७२–४ ॥ देवैः कृतम् । तत्रापि यथातातरम्यम् । तस्मात् शक्रकृतं शिवकृतं ब्रह्मकृतं च । ब्रह्मकृतेनोपमीयत इति ब्रह्मकृतोपमम् । ब्रह्मकृतमुपमा यस्य वा ॥ १७५ ॥ क्रमात् उच्चमुच्चतरमुच्चतममिति वर्धमानम् ॥ १७६ ॥ पार्थानां कर्मणा ज्ञानादिभिर्गुणैर्वाऽपि । सुसत्वस्थान् शुद्धसत्वस्थान् ॥ १७७ ॥ जगादाशेषान् वैष्णवधर्मान् । **'भगवन्**

१. 'वैष्णवैरपि' २. 'क्रमाद् वृद्धम्' ३. '–दिभिः क्वापि'

ते च श्रुत्वाऽखिलान् धर्म्मान् भक्त्या परमया युताः ।
पूजयन्तो जगन्नाथमापुश्च परमां मुदम् ॥ १७९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीमहाभारततात्पर्य्यनिर्ण्णये[1]
त्रिंशोऽद्ध्यायः

—०—

[आदितः श्लोकाः– **४७४५**+१७९=**४९२४**]

---

**वैष्णवा धर्माः किम्फलाः किम्परायणाः । किं धर्ममधिकृत्याथ भवतोत्पादिताः पुरा । यदि तेऽहमनुग्राह्यः प्रियोऽस्मि मधुसूदन । श्रोतव्या यदि मे कृष्ण तन्मे कथय सुव्रत'** [९६.३–४] इति पृष्टः । एतेनेदं वैष्णवधर्मपर्व प्रक्षिप्तं वर्णयन्तोऽर्वाश्च औत्तराः परास्ताः । धर्माचरणेन हृष्टः । पुनःपुनः शुश्रूषया संहृष्टः । सुरविप्रादिसंसदि । **'इत्येवं कथिते देवे धर्मपुत्रेण संसदि । वसिष्ठाद्यास्तपोयुक्ता मुनयस्तत्वदर्शिनः । श्रोतुकामाः परं गुह्यं वैष्णवं धर्ममुत्तमम् । तथा भागवताश्चैव ततस्तं पर्यवारयन्'** [९६.१२–३] इति च ॥१७८॥ ते च श्रुत्वा । **'ऋषयः पाण्डवाश्चैव प्रणेमुस्तं जनार्दनम् । पूजयामास गोविन्दं धर्मपुत्रः पुनःपुनः । देवा ब्रह्मर्षयः सिद्धा गन्धर्वाप्सरसस्तथा । ऋषयश्च महात्मानो योगिनस्तत्वदर्शिनः'** [११८.४६–८] इति च ॥ १७९ ॥

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
प्रगतं त्रिंशाध्यायविवरणं विदुषां हृदयाभरणम् ॥

इत्याचार्यगोविन्दस्य कृतिषु महाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायां
त्रिंशोऽध्यायः

—०—

---

१. मूलकोशेष्वेतदध्यायनाम न निर्दिष्टम् । **'यागसमाप्तिर्नाम'** इति प्रचलितं नाम ।

# एकत्रिंशोऽध्यायः

**[धृतराष्ट्रादिस्वर्ग्गप्राप्तिः]**

**ॐ ॥ यज्ञेश्वरेणाभियुतेषु युक्त्या[1] महीं प्रशासत्सु पृथासुतेषु ।**
**यियक्षुरागान्निशि विप्रवर्य्यो युधिष्ठिरं वित्तमभीप्समानः ॥ १ ॥**

**प्रातर्ददानीति नृपस्य वाक्यं निशम्य विप्रस्त्वरितो मखार्त्थे ।**
**भीमं ययाचे स नृपोक्तमाशु निशम्य चादान्निजहस्तभूषणम् ॥ २ ॥**

**ॐ ॥ भक्त्या (अभियुतेषु) यज्ञेश्वरेण सह महीं प्रशासत्सु ॥ १–६ ॥**

---

ॐ ॥ आश्रमवासिकपर्वकथासङ्ग्रहोऽयमध्यायः । अभित उभयतः, शान्तौ च सङ्ग्रामे च, सङ्कटे च सन्तोषे च, रक्षकतया यज्ञेश्वरेण युतेषु । भगवति मनोयुक्त्या, राजनीतियोगेन च । प्रहर्षेण प्रकर्षेण च शासत्सु । धर्ममयत्व-मीतिबाधादिवैधुर्यं च प्रकर्षः । यियक्षुरागात् । नैषा कथा भारतगा । केचिद् वाराहे पठितमित्याहुः । तदपि मूल-कोशेष्वदर्शनात् प्रक्षिप्तमित्येव विदन्तो मन्यन्ते । तथाहि तत्र प्रथमः श्लोकः–**‘पुरा युधिष्ठिरो राजा’** इति । पुराणानां रचयिता बादरायणो युधिष्ठिरस्य पितामहः । युधिष्ठिरजननात् षट्शताधिकवर्षेभ्यः पूर्वमेव च तेन पुराणानि रचि-तानि । तत् कथं पुराणवचनं युधिष्ठिरं पुरातनं ब्रूयात् । अपिच **‘कश्चिद् विप्रवर्यो यियक्षुरागात्’** इति निर्णय-वचनम् । परीक्षिपुरागादिति पुराणत्वेनोदाहृते ग्रन्थे–**‘तत्परीक्षार्थे निशीथे भेरिमाहनत्’** इति । अपिच स कश्चिद् द्विज इति पूर्वमभिधाय तस्य हरित्वं पश्चादुच्यते–**‘श्रुत्वा कश्चिद् द्विजोऽभ्यायात् स्वयमेव हरिस्तु यः’** । परस्ताच्च स द्विजः स्वयं कृष्णो भूत्वा धर्मराजं सान्त्वयति– **‘एतस्मिन्नन्तरे विप्रो बभौ कृष्णः स्वयं द्विजः’** इत्यादि । निर्णये तद्वार्ताऽपि नास्ति । ग्रन्थरचनशैली चानन्वयपुनरुक्त्यादिभिः शिथिलशिथिला । इत्यादिकं सर्वं तस्य प्रक्षिप्त-तामेव कटाक्षयतीव । वास्तवं मूलं तु मृग्यं भवति ॥ १ ॥ त्वरितः परेद्यवि प्रातरेव मखं प्रारिप्सुः ॥ २ ॥

---

१. **‘–युतेषु भक्त्या’** । वे.ती.पाठोऽपि तथा ।

[१]अनर्घमग्निप्रतिमं विचित्ररत्नाश्चितं[२] विप्रवरस्तदाप्य ।
ययौ कृतार्थोऽथ च नन्दिघोषमकारयद् वायुसुतस्तदैव[३] ॥ ३ ॥

अकालजं तं तु निशम्य राजा पप्रच्छ दूतैस्तमुवाच भीमः ।
यन्मर्त्त्यदेहोऽपि विनिश्चितायुरभून्नृपस्तेन ममाऽस हर्षः ॥ ४ ॥

इतीरितोऽसौ नृपतिस्त्वरेत धर्म्मार्त्थमित्यस्य मतं प्रपूजयन् ।
जगाद साध्वित्यथ भूय एव धर्म्मे त्वरावानपि[४] सम्बभूव ॥ ५ ॥

अथाऽम्बिकेयं विषयेषु सक्तं दुस्सङ्गदुष्टं कृतभूरिदोषम् ।
समस्तराजाप्ययहेतुभूतं निचाय्य[५] तं मारुतिरन्वकम्पत ॥ ६ ॥

अकुर्वतस्तीक्ष्णतपः कुतश्चिन्नैवास्य[६] लोकाप्तिरमुष्य भूयात् ।
रागाधिकोऽयं न तपश्च कुर्य्यादित्यस्य वैराग्यकराणि चक्रे ॥ ७ ॥

**अस्य धृतराष्ट्रस्य, (अमुष्य) लोकाप्तिः निजलोकाप्तिः । वैराग्यकराणि, कर्माणीति शेषः ॥ ७ ॥**

---

अग्निप्रतिमं वर्णतः । विचित्ररत्नैरश्चितमादृतं रत्नशास्त्रज्ञैः । पुत्रोत्सवादिषु सन्तोषेण क्रियमाणो भेरीघोषो नन्दिघोष उच्यते । तदैव निशायाम् ॥ ३ ॥ तं नन्दिघोषम् । दूतमुखेन पप्रच्छ ज्ञातुमियेष । भीमस्तं राजानं दूतमुखेनोवाच । ममास हर्ष इति ॥ ४ ॥ प्रपूजयन् हर्षभरेण पूजयन् । अहो इदमीदृक् सरळं प्रमेयं न मे प्रत्यभादिति विस्मयेन च । पुराऽपि धर्मे त्वरावानास । अथ भीमवचःश्रवणानन्तरं भूय एव, पुनरप्यतितरां त्वरावान् । न केवलं भीमं प्रशशंस । स्वयमपि त्वरावान् सम्बभूव सदा बभूवेति । यथा ततः परमर्थिभ्यः पश्चाच्छब्दं न कदाऽपि ब्रूयात् । एतन्मूल एव लोके 'पश्चाच्छब्दो नास्तिपर्यायः' इत्याभाणकः पप्रथे ॥ ५ ॥ दुःसङ्गेनैव दुष्टम् । नतु स्वभावतः । दुःसङ्गादेव च कृतभूरिदोषम् । निचाय्य निरीक्ष्य । चायृ निशामने । स्वभावाविष्करणेन तमुद्दिधीर्षुरन्वकम्पत ॥ ६ ॥ अस्य अस्मिन् लोके वर्तमानस्य धृतराष्ट्रस्य । अमुष्य अमुष्मिन् लोके स्थितस्य स्वस्यैव गन्धर्वात्मनो लोकः । अपिचात्रार्थान्तरं पिहितमिव निहितं भाति । अकारवाच्यस्य विष्णोर्लोको ज्ञानम् । तस्य विस्मृतस्याऽप्तिरमुष्य धृतराष्ट्रस्येति । रागो विषयप्रवणता ॥ ७ ॥

---

१. '**अनर्घ्यमग्नि–**' २. '**–रत्नान्वितम्**' ३. '**वायुसूनुस्तदैव**'
४. '**त्वरावानथ सं–**' । '**त्वरावानिह**' इति क्वचित् । ५. '**–भूतं विचार्य तम्**' ६. '**–न्नैव स्वलोकाप्ति–**'

आज्ञां परैरस्य निहन्ति सोदरैर्वधूजनैरप्यतिपूजितेऽस्मिन्[१] ।
स निष्टनत्येवमपीतरैः स सुपूजितो[२] नाऽस तदा विरागः ॥ ८ ॥

सर्वे हि[३] पार्थास्तमृते सभार्य्या वैचित्रवीर्य्यं परमादरेण ।
पर्य्येव चक्रुः सततं सभार्य्यं कृष्णा च न स्यात् तनयार्त्तिमानिति ॥ ९ ॥

स प्रीयमाणो नितरां च तेषु नैवाधिकं प्रीयते भीमसेने ।
स्मरन् सुतांस्तेन हतान् समस्तानपि प्रभावं परमस्य जानन् ॥ १० ॥

तस्यापनेतुं विषयेषु सक्तिं द्वेषं तथैवाऽत्मनि भीमसेनः ।
जगाद माद्रीसुतयोः समक्षमास्फोट्य संशृण्वत एव तस्य ॥ ११ ॥

ताविमौ मे भुजौ वृत्तौ पीनौ चन्दनरूषितौ ।
ययोरन्तरमासाद्य जरढस्य[४] सुता हताः ॥ १२ ॥

**तदेव विवृणोति– आज्ञामित्यादिना । परैः अन्यैः अस्य आज्ञां निहन्ति । तन्नियुक्तान् तदाज्ञां कर्तुमुद्य-(तान्) वारयतीत्यर्थः ॥ ८ ॥ परिचक्रुरेव ॥ ९–१३ ॥**

---

अस्याऽज्ञां साक्षात् स्वयमनिघ्नन्नपि परैः सेवकैरधिकृतैर्वा पुरुषैर्निहन्ति वितथयति । अस्मिन् सोदरैः पूजितेऽपि स स्वयं निष्टनति कटुवचनानि भाषते । स्तन शब्दे । ष्टन वा । एवमपीतरैः सादरं पूजितत्वात् स विगतरागो नाऽस ॥ ८ ॥ परिचक्रुरेव परिचेरुरेव । परिचरणेन प्रसन्नं चक्रुः । कृष्णा च पर्येव चकार ॥ ९ ॥ अस्य परं प्रभावं जानन्नपि । सुतान् भीमेन हतान् स्मरन्, नाधिकं प्रीयते । परमस्य जीवोत्तमस्य प्रभावं जानन्निति वा । परमस्य विष्णोः सर्वसंहारकत्वप्रभावं जानन्नित्यपि व्याचक्षते ॥ १० ॥ तथा द्वेषं चापनेतुमेव । आस्फोट्य भुजौ । स्फोटनमिति विकसनं सशब्दमाहननं च । **'चट स्फुट घट च हन्त्यर्थाः । एते हन्त्यर्था णिचमुत्पाद-यन्ति । उच्चाटयति, आस्फोटयति, विघाटयति'** इति क्षीरतरङ्गिणी । संशृण्वत एव । भीमोक्तं समीपे शृण्वत एव । सकर्मकत्वादेव **'समो गम्यृच्छि–'** [अ.सू.१.३.२४] इति नाऽत्मनेभाषावकाशः ॥ ११ ॥ ताविमौ । **'अन्धस्य नृपतेः पुत्रा मया परिघबाहुना । नीता लोकममुं सर्वे नानाशस्त्रास्त्रयोधिनः । इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ । ययोरन्तरमासाद्य धार्तराष्ट्राः क्षयं गताः । ताविमौ चन्दनेनाक्तौ वन्दनीयौ च मे भुजौ । याभ्यां दुर्योधनो**

---

१. **'–रप्यभिपूजिते–'** २. **'–तरैस्तैः सम्पूजितो–'** ३. **'सर्वेऽपि पा–'** ४. **'जरठस्य'**

यमौ [1]तदन्वमोदेतां [2]तत्स्नेहाद् गौरवादपि ।
नैव तत् कृष्णया ज्ञातं पृथया सहपुत्रया ॥ १३ ॥

तच्छ्रुत्वोत्पन्ननिर्वेदं क्षत्ता ज्येष्ठस्य वर्द्धयन् ।
उवाच जीविताशा ते ननु राजन् महीयसी[3] ॥ १४ ॥

भीमापवर्ज्जितं पिण्डमादत्से गृहपालवत् ।
नचापराधो भीमस्य ब्रुवतस्त्वामिदं वचः ॥ १५ ॥

'अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः' ।
हृतं क्षेत्रं धनं यस्य किं भीमेन कृतं त्वयि ॥ १६ ॥

अलमासज्जतस्तेऽद्य निर्वेदकरमीरितम् ।
उपकाराय भीमेन तव द्वेषं त्यजात्र तत्[4] ॥ १७ ॥

**उत्पन्नश्चासौ निर्वेदश्चेति ॥ १४–३१ ॥**

---

**नीतः क्षयं ससुतबान्धवः'** [आश्र.प.३.८–१०] इति भीमवचनमाश्रमवासे । जीर्यतीति जरढः । अढच् । अठजिति वैयाकरणाः । जरढ इति प्रतनः प्रयोगः । जरठ इत्यर्वाचीनः । प्रयोगमूला हि प्रत्ययकल्पना भवति । तथाहि **'गोम उपलेपने'** [१०.२६२] इति धातुवृत्तौ क्षीरस्वामी–**'गोमयति क्ष्मां गोमयम् । प्रकृतिप्रत्ययविभागस्य काल्पनिकत्वात्, कस्मिंश्चित् काले गोमाद् गोमयसिद्धिः । अद्यत्वे तु 'गोश्च पुरीषे' इति मयट्'** इति । जरसं ढौकते, जरसा वा ढौकते कम्पत इति वा ॥ १२ ॥ यमौ तदन्वमोदेताम् । **'माद्रीपुत्रौ च भीमस्य मतं तावन्व-वर्तताम्'**[३.१६] इति च । तस्मिन् भीमे स्नेहाद् गौरवाच्च । स्नेहः प्रीतिः । भ्रातृत्वात् । गौरवमादरातिशयः । ज्यायस्त्वात् । सहपुत्रया । **'यमौ तदन्वमोदेताम्'** इत्युक्तेरत्र विवक्षितः पुत्रो युधिष्ठिरः, अर्जुनश्च । तावेव ह्यौरसौ पुत्रौ । **'नान्वबुध्यत तद् राजा कुन्तीपुत्रो युधिष्ठिरः । श्वेताश्वो वाऽथ कुन्ती वा द्रौपदी वा यशस्विनी'** [३.१५] इति च ॥ १३ ॥ उत्पन्नं निर्वेदं वर्धयन् । **'वृकोदरस्य ता वाचः श्रुत्वा निर्वेदमागमत्'**[३.११] इति च । **'राजा निर्वेदमापेदे भीमवाग्बाणपीडितः'** [१३] इति च । **'अहो महीयसी जन्तोर्जीविताशा यया भवान् । भीमापवर्जितं पिण्डमादत्ते गृहपालवत्'** [१.१२.२३] इति भागवते । **'अग्निर्विसृष्टो दत्तश्च गरो दाराश्च दूषिताः । हृतं क्षेत्रं धनं येषां तदन्नैरसुभिः कियत्'** [२४] इति च । अपवर्जितमनादरेणेव, अनुकम्पया विश्राणितम् । गृहपालः कुक्कुरः ॥ १४–६ ॥ तवोपकाराय ॥ १७ ॥

---

१. **'तमन्व–'** इति क्वचित् । २. **'–तां स्नेहात् तद्गौर–'** इति क्वचित् । ३. **'राजन् गरीयसी ।'** ४. **'त्यजात्र तत्'**

**विमुच्य द्वेषकामौ त्वं वने तीर्थनिषेवकः ।**
**तपसाऽऽराधय हरिं ततः पूतो भविष्यसि ॥ १८ ॥**

**इत्युक्तो द्वेषमुत्सृज्य भीमे निर्वेदमागतः ।**
**अनुज्ञां तपसे प्राप्तुमुपवासपरोऽभवत् ॥ १९ ॥**

**अनश्नन्तं चतुर्थेऽह्नि धृतराष्ट्रं युधिष्ठिरः ।**
**ज्ञात्वा सम्प्रार्थयामास भोजनार्थं पुनःपुनः ॥ २० ॥**

**अनुज्ञां वनवासाय त्वत्तः प्राप्यैव सर्वथा ।**
**भोक्ष्येऽन्यथा नेति वदन् धृतराष्ट्रः श्रमान्वितः ॥ २१ ॥**

**उपवासकृशो भार्य्यां शिश्रिये मूर्च्छितः क्षणात् ।**
**शन्तमेन करेणाथ धर्म्मजस्तं मृदु स्पृशन् ॥ २२ ॥**

**शनैः सञ्ज्ञामगमयदब्रवीच्च सुदुःखितः ।**
**पुरस्कृत्य युयुत्सुं त्वं कुरु राज्यमकण्टकम् ॥ २३ ॥**

**वयमेव त्वदर्थाय कुर्म्मः सर्वे तपो वने ।**
**नेत्याह धृतराष्ट्रस्तं कुलधर्म्मो हि नो वने ॥ २४ ॥**

---

तीर्थानि सदागमान् पुण्यजलानि च नित्यं सेवमानः ॥ १८ ॥ भीमे द्वेषमुत्सृज्य ॥ १९ ॥ चतुर्थोऽह्नि अनश्नन्तं ज्ञात्वा सायं भोजनार्थं सर्वैः सङ्गतः प्रार्थयामास । **'अष्टमो ह्यद्य कालोऽयमाहारस्य कृतस्य मे । येनाहं कुरु-शार्दूल न शक्नोमि विचेष्टितुम्'** [आश्र.प.४.३१] इति । प्रत्यहं द्विर्भोजनमित्यष्टमः कालश्चतुर्थे दिने नक्तम् । सादरं सविनयं सावधारणं च प्रार्थनं सम्प्रार्थनम् । सर्वैः समुदितैरैककण्ठ्येन प्रार्थनं च सम्प्रार्थनम् ॥२०–१॥ शन्तमेन सुखतमेन ॥ २२ ॥ उपवासकृशं दृष्ट्वा दुःखितः । वनवासनिर्धारेण सुदुःखितः ॥ २३ ॥ **'औरसो भवतः पुत्रो युयुत्सुर्नृपसत्तम । अस्तु राजा महाराज यमन्यं मन्यते भवान् । अहं वनं गमिष्यामि भवान् राजा प्रशास्त्विदम्'** [४.७–८] इति च । तपसोऽवनं यत्र तत्र वने तपः कुर्मः । **'उचितं च कुलेऽस्माकमरण्यगमनं प्रभो'** [१६] इति च ॥ २४ ॥

**अन्ते देहपरित्यागस्तन्माऽनुज्ञातुमर्हसि[1] ।**
**तयोर्विवदतोरेवं कृष्णद्वैपायनः प्रभुः ॥ २५ ॥**

**सर्वज्ञः सर्वकर्त्तेश आविर्भूतोऽब्रवीन्नृपम् ।**
**तपसाऽशेषदोषाणां[2] क्षयकाममिमं नृपम् ॥ २६ ॥**

**अनुजानीहि नैवास्य धर्म्मविघ्नकरो भव ।**
**काले निर्वेदमापन्नस्तपसा दग्धकिल्बिषः ॥ २७ ॥**

**शुभ्रां[3] गतिमयं यायादन्यथा न कथञ्चन ।**
**इत्युक्तो धर्म्माराजस्तमनुजज्ञे स चाशितः ॥ २८ ॥**

**शिक्षयामास सद्धर्म्मान् नीतिं च विदुषेऽप्यलम् ।**
**केवलस्नेहतो[4] राज्ञे शुश्राव विनयाय[5] सः ॥ २९ ॥**

---

मा माम् । विवदतोः विवादं कुर्वतोः । यद्यपि वैयाकरणा अस्मिन्नर्थविशेषे वदतेरात्मनेभाषामाहुः– **'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः'** [अ.सू.१. ३.४७] इति । **'क्षेत्रे विवदन्ते । गेहे विवदन्ते । विमतिपतिता विचित्रं भाषन्त इत्यर्थः'** इति जयादित्यः । तेन विवदमानयोरिति वक्तव्यम् । अथाप्यर्थविशेषद्योतनाय विवदतोरित्याह । कोऽयमर्थविशेषः? यो विहितात्मनेभाषं परस्मैभाषं करोति । सत्यं विहिताऽऽत्मनेभाषा । किन्तु न हिता । कुतः? शृणु । विमतो हि वादो विवादः । येनाऽत्मनेभाषा । नायं विमतो वादः । किन्तु विशिष्टो वादः । विशिष्टं वदति विवदतीत्येव । न विवदत इति । कथं विशिष्टो वादः? न ह्यत्र वनगमने विवादः । उभयसम्मतं तत् । अतो धर्मराज आह– सत्यं तपसे गन्तव्यं वनम् । अशक्यं तु तद् भवतोऽतिजरणात् । अतस्त्वत्प्रतिनिधितया सोमाभावे पूतिकाग्रहणवदहमेव गमिष्यामीति । सोऽयं गौरवमूलो विशिष्टो वादः । तस्माद् विवदतोरित्येव वक्तव्यमर्थविशेषलाभलोभात् । न विवदमानयोरिति ॥ २५–७ ॥ शुभ्रां शोभमानाम् । शुद्धां वा गतिं न यायात् । अन्यथा तपसा दग्धकिल्बिषत्वाभावे । किरतीति किल्बिषं पापम् । कॄ विक्षेपे । कालयति वा । कल क्षेपे । किलति किल्यते वा । किल क्षेपे । एष्वन्यतमस्य टिषच् प्रत्ययो बुगागमश्चेति वैयाकरणाः । विषमिव केलयति कालयतीति तत्ववादिनः । अशितः कृताशनः प्रातः । **'आदिकर्मणि क्तः कर्तरि'** [अ.सू.३.४.७१] इति कर्तरि क्तः । ओदनमशितो धृतराष्ट्रः । अशित ओदनो धृतराष्ट्रेणेत्यर्थः ॥ २८ ॥ विदुषेऽपि राज्ञे । विनयाय वृद्धाना-

---

१. **'–स्तन्ममाऽज्ञातुमर्हसि'** । **'तन्मेऽनुज्ञातुमर्हसि'** इति क्वचित् । २. **'तपसा सर्वदोषाणाम्'** इति क्वचित् । ३. **'शुभाम्'**
४. **'केवलं स्नेहतो–'** इति क्वचित् । ५. **'विनयात् स च ।'** । **'विनयाय च ।'** इति क्वचित् ।

अनुज्ञाय गृहं प्राप्ते धर्म्मजे विदुरं पुनः ।
श्राद्धाय वित्तमाकाङ्क्षन् प्रेषयामास तद्वचः ॥ ३० ॥

श्रुत्वा युधिष्ठिरो भीममाह दातव्यमद्य नः ।
पुत्रपौत्राप्तबन्धूनां श्राद्धेच्छोर्वित्तमञ्जसा ॥ ३१ ॥

तमाह भीमः पापानां विमुखानां मधुद्विषः ।
पारलौकिकसाहाय्यं न कार्य्यमितरार्त्थतः ॥ ३२ ॥

दत्तेनापि हि वित्तेन पुत्रश्राद्धं करिष्यति ।
तज्ज्ञात्वा ददतां दोषो भवेदिति विचिन्तयन् ॥ ३३ ॥

'कष्टात् कष्टतरं यान्तु सर्वे दुर्य्योधनादयः' ।
भीष्मादीनां वयं श्राद्धकर्त्तारस्तेन किं ततः ॥ ३४ ॥

कानीनत्वात्तु कर्ण्णस्य सहास्माभिः पृथैव हि ।
श्राद्धकर्म्मण्यधिकृता किं तस्मै दीयते धनम् ॥ ३५ ॥

**इतरार्थतः स्वपित्रोरितरार्थतः ॥ ३२–७ ॥**

---

मनुनयाय ॥ २९–३० ॥ अञ्जसा तत्वतः । झटिति ॥ ३१ ॥ पारलौकिकं परलोके पुण्यफलानुभवप्रतिबन्धपरिहारार्थं क्रियमाणमौर्ध्वदैहिकं कर्म, श्राद्धादिकम् । ननु नेदं स्वतः क्रियते । किन्तु वृद्धस्य धृतराष्ट्रस्य प्रीणनाय । तदपि न युक्तमित्याह– न कार्यमितरार्थतः । न स्वतः, नापीतरप्रीणनार्थं कार्यम् । मा भून्मधुद्विड्विमुखानां दुर्योधनादीनां पारलौकिकार्थं साहाय्यम् । भीष्मादीनां कृते क्रियतामित्यत आह– न कार्यमितरार्थतः । यतः इतरार्थतः भीष्मद्रोणाद्यर्थं दत्तेनापि वित्तेन पुत्रश्राद्धं करोति हि । तेनान्ततः पापानां पारलौकिकसाहाय्यमेव कृतं स्यात् । तस्मात् तन्न कार्यमिति विचिन्तयन् तमाह भीमः ॥ ३२–३ ॥ किमिति?– **'कष्टात् कष्टतरं यान्तु सर्वे दुर्योधनादयः । यैरियं पृथिवी कृत्स्ना घातिता कुलपांसनैः'** [१२.१९] इति । कष्टात् निरयात् कष्टतरं पश्चकष्टमतिकष्टमन्धं तम इत्यर्थः । ततः सतामस्माभिरेव श्राद्धकरणात् दुर्योधनादीनां तदयोग्यत्वात् तेन तदर्थं धृतराष्ट्रस्य धनदानेन किं फलम्? प्रत्युतानिष्टमेव स्यादित्यर्थः ॥ ३४ ॥ कानीनत्वात्तु । **'कुन्ती कर्णाय दास्यति'** [१२.१७] इति च ॥ ३५ ॥

इत्युक्तवन्तं नृपतिरर्ज्जुनश्चोचतुः पुनः ।
यियासोर्य्याचमानाय[१] निजबाहुबलार्ज्जितम् ॥ ३६ ॥

देहि वित्तं परमतः किं त्वामेषोऽभियाचते ।
इत्युक्तमपि नेत्येव ब्रुवाणं शुद्धधार्म्मिकम् ॥ ३७ ॥

अप्रीत्या जोषमास्स्वेति प्रोच्योवाच युधिष्ठिरः ।
कोशतो यद् बहिर्वित्तं दानभोगादिकारणम् ॥ ३८ ॥

मम सन्निहितं सर्वं तत् पित्रेऽद्यार्पितं[२] मया ।
एवमेवार्ज्जुनोऽप्याह विदुरं पुनरूचतुः ॥ ३९ ॥

मुख्यधर्म्मरते भीमे न पिता क्रोद्धुमर्हति ।
इत्युक्तो वित्तमादाय गत्वा क्षत्ताऽग्रजेऽब्रवीत् ॥ ४० ॥

**जोषं तूष्णीम् ॥ ३८–४३ ॥**

---

याचमानस्य । स्वत्वप्रहाणेन दीयतामित्यभिनयन् **'याचमानाय'** इत्याह । **'चतुर्षु चतुर्थी'** इति वचनाच्च षष्ठ्यर्थे चतुर्थी । वेदसम्प्रदायसिद्धश्चायं षष्ठीस्थाने चतुर्थीप्रयोगः । तद्यथा वीणाया वाद्यमानाया इति वक्तव्ये **'वीणायै वाद्यमानायै'** इति वक्ति श्रुतिः ॥ ३६ ॥ अतः परम् । चरममिदं याचनम् । किमितः परं वनादभिगम्य याचते? उताहो किमभीक्ष्णं याचते? ॥ ३७ ॥ जोषमास्व तूष्णीमास्व । त्वदभिप्रायानुसरणाय न मां निर्बधानेत्यर्थः । अथच सुखमास्व वृद्धान् निरुन्धान इत्यरुचिगर्भ आक्षेपः । अथापि अप्रीत्या अकारवाच्ये भगवति प्रीत्या जोषमास्व प्रशंसनीयश्चिरं भवेत्यन्ततस्तस्य शुद्धधर्मनैर्भर्यं श्लाघत इव । **'जोषं सुखे प्रशंसायां तूष्णींलङ्घनयोरपि'** इत्यभिधानम् । मम दानभोगादिनिमित्तं यत् कोशाद् बहिः स्थितं वैयक्तिकं वित्तम् । **'उवाच वचनं धीमान् जोषमास्वेति भत्सयन्'** [१२.२४] इति भारते पठ्यते । उत्तरत्र न युधिष्ठिरवचनं पठ्यते, किन्त्वर्जुनवचनम् । अतो युधिष्ठिरः किमाह कस्मायाहेति स्फुटयन् श्लोकान्वयं दर्शयति– प्रोच्योवाच । तथाचास्य अध्यायान्त्यश्लोकस्यानन्तरमुत्तराध्यायगतः तृतीयः श्लोक अनुवर्तनीय इत्यर्थः । तथाह्युत्तरत्र पठ्यते–**'विदुरं प्राह धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः'** [१३.३] इति । ततः परमर्जुनवचनं योजनीयमिति सर्वं सुन्दरमित्याह– एवमेवार्जुनः ॥ ३८–४० ॥

---

१. **'–मानस्य निज–'** २. **'पित्रे चार्पितम्'**

युधिष्ठिरार्ज्जुनौ भक्तिं नितरां त्वयि चक्रतुः ।
नातिहृष्टस्त्वदाज्ञायां भीमस्तन्मा क्रुधोऽत्र च ॥ ४१ ॥

'शुद्धे क्षत्रियधर्म्मे हि निरतोऽयं[1] वृकोदरः' ।
नृपार्ज्जुनौ धर्म्मरतावपि लोककृपापरौ ॥ ४२ ॥

अजातकोपस्तच्छ्रुत्वा धृतराष्ट्रः प्रशान्तधीः ।
कृत्वा श्राद्धानि सर्वेषां महादानान्यनारतम् ॥ ४३ ॥

दशरात्रं ददौ शुद्धमनसा निरृणत्वधीः ।
सर्वं समर्प्य गोविन्दे पार्त्थेभ्योऽन्येभ्य एव च ॥ ४४ ॥

स्वजनेभ्यः समादाय स्रवन्नेत्रेभ्य उच्चधीः ।
अनुज्ञां निर्ग्गतः प्राह पौरजानपदान् नृपः ॥ ४५ ॥

धर्म्मतो रक्षिता यूयमस्मत्पूर्वैर्म्महात्मभिः ।
नचाहं परमस्नेहाद् युष्माभिः सुकृपालुभिः ॥ ४६ ॥

**निरृणत्वधीः । न विद्यते ऋणं यस्यासौ निरृणः । तस्य भावः निरृणत्वम् । (तद्) भवेन्ममेति धीर्यस्यासौ तथोक्तः ॥ ४४–५ ॥ यूयं युष्मत्पूर्वजाश्च ॥ ४६ ॥**

---

अत्र भीमविषये । तस्यानतिहृष्टत्वविषये वा ॥ ४१ ॥ शुद्धे । **'एवम्प्रायो हि धर्मोऽयं क्षत्रियाणां नराधिप । शुद्धे क्षत्रियधर्मे हि निरतोऽयं वृकोदरः'** [१४.८] इति च ॥ ४२ ॥ कृत्वा श्राद्धानि । मृतानां सद्गतिप्रतिरोधवारणाय क्रियमाणं कर्म श्राद्धम् । श्रद्धाया णः [अ.सू.५.२.१०१] । महान्ति च दानानि दशरात्रमनारतं ददौ । अनेन कर्मणा निरृणो भूयासमिति मन्वानः । पार्थेभ्यः तदन्येभ्यः स्वजनेभ्यश्च अनुज्ञां समादायैव राजभवनान्निर्गतः । निर्गत्य च पौरजानपदानिदमाह ॥ ४३–५ ॥ किमाह– धर्मतः । न तथा मया धर्मतो रक्षिताः । अथाप्यरक्षितेति न कथितः । तत्तु केवलं युष्माकं राजवंशे दृढबद्धात् स्नेहात्, तन्निमित्तं मयि च स्नेहात्, अपकारस्य विस्मरणेन परमात् । तदपि दोषिष्वपि गुणमात्रस्मरणरूपादतिकृपालुत्वाद् वः । सज्जनत्वाच्च प्रमादादपि न कथितः । किमु

---

१. 'निरतो यद् वृको–'

अरक्षितेति कथितः प्रमादादपि सज्जनाः ।
इष्टं च यज्ञैः पूर्त्तैश्च चरितं युष्मदाश्रयात् ॥ ४७ ॥

पुत्रस्तु मम पापात्मा सर्वक्षत्रविनाशकः[१] ।
सर्वातिशङ्की मूढश्च वृद्धानां शासनातिगः ॥ ४८ ॥

सौभ्रात्रं येन सन्त्यज्य पाण्डवेषु महात्मसु ।
कृतं विरूपं सुमहत् कुर्य्याद् यन्नापरः क्वचित् ॥ ४९ ॥

अप्रियाणि च कृष्णस्य सुबहून्याचरत् कुधीः ।
प्रायस्तेनापि मन्देन [२]न युष्मास्वशिवं कृतम् ॥ ५० ॥

भ्रातरोऽस्य च सर्वेऽपि तच्छीलमनुवर्त्तिनः ।
हताश्च स्वेन पापेन[३] ससुतामात्यबान्धवाः ॥ ५१ ॥

सोऽहं वयोगतश्चैव पुत्राधिभिरभिप्लुतः[४] ।
तत्सम्बन्धकृतं[५] पापं स्वकृतं चात्यपेशलम्[६] ॥ ५२ ॥

**अरक्षिता अयं प्रजारक्षणकर्ता न भवति (इति) ॥ ४७–५५ ॥**

---

बुद्धिपूर्वम् ॥ ४६–८ ॥ विरूपं विकृतम् । अननुरूपम् ॥ ४९ ॥ एवमतिपापेनापि तेन न युष्मास्वशिवं कृतम् । जनप्रियतायां पाण्डवानभिभवेयमिति स्पर्धया केवलम् । न प्रजावात्सल्यात् । नापि धर्मकाङ्क्षया । **'यदा दुर्योधनेनेदं भुक्तं राज्यमकण्टकम् । अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान्'** [१०.५] इति च । **'नच दुर्योधनः किञ्चिदयुक्तं कृतवान् नृपः'** [११.१६] इति च पौराणां प्रतिनिधिर्बह्वृचस्य ब्राह्मणस्य वचनम् । तेन **'न युष्मासु शिवं कृतं'** इति, **'युष्मास्वप्यशिवम्'** इति च पाठः प्रमाद एव ॥ ५०–१ ॥ वयोगत इति । गतवयाः, वर्षीयानित्यर्थः । वय इति यौवनम् । **'वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके'** इत्यभिधानम् । अपरवयसि गतः स्थित इति

---

१. **'–विनाशनः ।'** इति क्वचित् ।
२. **'मन्देन युष्मास्वप्यशिवं कृतम्'** । **'मन्देन न युष्मासु शिवं कृतम्'** इति क्वचित् ।
३. **'हताः स्वेनैव पापेन'** इति क्वचित् ।
४. **'पुत्रादिभिरभि–'** इति क्वचित् ।
५. **'तत्सम्बन्धात् कृतम्'**
६. **'चाप्यपेशलम् ।'**

पाण्डवेषु सकृष्णेषु तपसा मार्ष्टुमुद्यतः ।
तत्र मामनुजानीध्वं कृपया मित्रवत्सलाः ॥ ५३ ॥

मत्प्रियार्त्थमपि स्नेहः पाण्डवेषु महात्मसु ।
क्रियमाणोऽपि कर्त्तव्यो भूय एव सदाऽचलः ॥ ५४ ॥

ते हि मे पुत्रकाः सन्त इहामुत्र च सौख्यदाः ।
इत्युक्तैः[१] स्वगुणानुच्चैः कीर्त्तयद्भिः सुदुःखितैः ॥ ५५ ॥

पर्य्यश्रुनयनैः कृच्छ्रात् पौरजानपदैश्चिरात् ।
अनुज्ञातो ययौ पार्त्थैरनुयातः सुदूरतः ॥ ५६ ॥

सञ्जयो विदुरश्चैनं सभार्य्यमनुजग्मतुः ।
अनुवव्राज तं कुन्ती वनाय कृतनिश्चया ॥ ५७ ॥

वार्य्यमाणाऽपि तनयैः सभार्य्यैर्भृशदुःखितैः ।
संस्थाप्य तान् सुकृच्छ्रेण ययौ साऽन्वेव तं नृपम् ॥ ५८ ॥

**पर्यश्रुनयनैः । पर्यश्रूणि पूर्णाश्रूणि नयनानि येषां ते तथोक्ताः ॥ ५६ ॥ वनाय, गन्तुमिति शेषः ॥ ५७–९ ॥**

---

वा । पुत्राणां विनाशेन आधिभिः मानसीभिः पीडाभिः । अभिः साकल्यवचनः । अभितः सर्वात्मना प्लुतः परिगतः सन्नः । पुत्रसम्बन्धेन कृतं स्वतश्च कृतं पाण्डवेषु पापम् । अतितरामपेशलम् । अरुचिरमसाधु । अदाक्ष्यस्य परा काष्ठा ॥ ५२ ॥ पाण्डवेषु सकृष्णेषु कृष्णया कृष्णेन च सहितेषु । स्वकृतं पापम् । मार्ष्टुं मार्जित्वा चाऽत्मानं शोधयितुम् । मित्रवत्सलाः । अहमपि भवन्मित्रेष्वेक इति प्रीत्या ॥ ५३–४ ॥ प्रियाः पुत्राः सज्जनाश्च । हता असन्तः पुत्राः इहामुत्र चासौख्यदाः ॥ ५५ ॥ परिपूर्णाश्रुनयनैः । पौरजानपदैरनुज्ञातः । तदपि चिरात् न सपदि । कृच्छ्रात् । न सुखेन । सुदूरतः सुदूरम् ॥ ५६ ॥ अनुवव्राज । तस्या अनुव्रजनं प्रव्रजनं चाऽसीदित्यनेनाऽह । वनाय वनवासाय ॥ ५७ ॥ संस्थाप्य समाधाय । स्ववनगमनाय तेषां प्रतिनिवर्तनाय च तानङ्गीकार्य । सुकृच्छ्रेण ।

---

१. 'इत्युक्ते'

सन्दर्शितपथो राजा कुन्तीविदुरसञ्जयैः ।
गान्धारीसहितः प्राप कुरुक्षेत्रे[1] जगद्गुरोः ।
क्रमेणैवाऽश्रमं व्यासदेवस्य सुरपूजितम् ॥ ५९ ॥

त्रिवत्सरादस्य[2] निजस्य लोकस्याऽप्तिं सभार्य्यस्य जगाद तत्र ।
ब्रह्माङ्कजस्तेन भृशं प्रतीतो व्यासोपदिष्टं व्यचरत् तपोऽग्र्यम् ॥ ६० ॥

सक्षत्तृगान्धारिपृथे ससञ्जये तपोभिराराधयति प्रभुं हरिम् ।
वैचित्रवीर्य्येऽत्र सदारबन्धुभृत्यास्तु[3] पार्त्था दृशये समाययुः ॥ ६१ ॥

क्षत्तैकतामत्र युधिष्ठिरेण प्राप्तोऽथ भार्य्यासहितं ससञ्जयम् ।
उपासमानेषु विचित्रवीर्य्यपुत्रं पृथां चैव पृथासुतेषु ॥ ६२ ॥

**तेन तद्वचनेन ॥ ६०–४ ॥**

---

अदम्यो हि पुत्रस्नेहः । यो दृढमनसमपि मातरं विक्लवयति । अतः सुकृच्छ्रेणातिक्लेशेनेत्याह । नृपमेवानुययौ । **'सा पुत्रान् रुदतः सर्वान् मुहुर्मुहुरवेक्षती । जगामैव महाप्राज्ञा वनाय कृतनिश्चया'** [१७.३१] इति च ॥ ५८ ॥ कुरुक्षेत्रे । **'ततो भागारथीतीरात् कुरुक्षेत्रं जगाम सः'** [२०.३] **'तत्राऽश्रमपदं धीमानभिगम्य स पार्थिवः । आससादाथ राजर्षिं शतयूपं मनीषिणम्'** [९] **'तेनासौ सहितो राजा ययौ व्यासाश्रमं प्रति'** [११] **'स दीक्षां तत्र सम्प्राप्य राजा कौरवनन्दनः । शतयूपाश्रमे तस्मिन् निवासमकरोत् तदा'** [१२] इति च । **'व्यासदेवस्याऽश्रमं बदरिकाश्रमम्'** इति व्याख्यानं तु भ्रान्तिमूलम् ॥ ५९ ॥ त्रिवत्सरादनन्तरम् । त्रयाणां वत्सराणां समाहारस्त्रिवत्सरम् । **'वर्षाणि त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः । ततः कुबेरभवनं गान्धारीसहितो नृपः । प्रयाता धृतराष्ट्रोऽयं राजराजाभिसत्कृतः'** [२२.११] इति च । ब्रह्माङ्कजो नारदः । भृशमत्यर्थं प्रतीतो हृष्टः । नारदशब्देन सञ्जातादरश्च, स्फुटं ज्ञातस्वरूपश्च, ज्ञातभगवत्स्वरूपश्च । तेन जातप्रत्ययश्च । **'प्रज्ञातज्ञातहृष्टेषु प्रतीतः सादरे त्रिषु'** इत्यभिधानम् ॥ ६० ॥ पार्थास्तु । तुना तेषां दर्शनकातर्यमाह । दृशये सपरिवारस्य वैचित्रवीर्यस्य दर्शनाय, वनगमनाद् वर्षान्तरम् । विशेषतो मातुः कुन्त्याः ॥ ६१ ॥ एकतामत्र । **'युधिष्ठरोऽहमस्मीति वाक्यमुक्त्वाऽग्रतः स्थितः । विदुरस्याऽश्रमे राजा स च प्रत्याह सञ्ज्ञया । ततः सोऽनिमिषो भूत्वा राजानं तमुदैक्षत । संयोज्य विदुरस्तस्मिन् दृष्टिं दृष्ट्या समाहितः । विवेश विदुरो धीमान् गात्रैर्गात्राणि चैव ह । प्राणान् प्राणेषु च दधदिन्द्रिया-**

---

१. 'कुरुक्षेत्रम्' २. 'त्रिवत्सरेणास्य' ३. '–भृत्याश्च पार्था–'

**प्रादुर्बभूवामितशक्तितेजोज्ञानाद्भुतैश्वर्य्यसुखादिरूपः ।**
**व्यासो हरिस्तत्र समीक्ष्य सर्वे सम्पूजयामासुरुदग्रभक्त्या[1]** ॥ ६३ ॥

**तैः पूजितस्तत्र निषण्ण आह यद्यद् यदिष्टं प्रवदन्तु तत्तत् ।**
**दास्यामि तस्याद्य तदित्यमुष्मिन् भक्त्युच्छ्रयः पाण्डुसुतैः सदारैः ।**
**वृतोऽत्र कुन्ती रविसूनुजन्ममृत्यूत्थदोषापगमं ययाचे** ॥ ६४ ॥

**तेषां प्रदत्तेष्वभिवाञ्छितेषु वैचित्रवीर्य्यः सह भार्य्ययैव ।**
**सम्मन्त्र्य निःशेषरणेहतानां सन्दर्शनं प्रार्त्थितवांस्तमीशम्** ॥ ६५ ॥

**ततस्तु ते सत्यवतीसुतस्य सर्वेश्वरस्याऽज्ञया सर्व एव ।**
**समागताः[2] स्वर्ग्गलोकात् क्षणेन दत्ता च दिव्या दृगमुष्य राज्ञः** ॥ ६६ ॥

**निःशेषरणेहतानां इत्यलुक्समासः, निःशेषाश्च ते रणेहताश्चेति, तेषाम् ॥ ६५–७२ ॥**

---

**णीन्द्रियेषु च । स योगबलमास्थाय विवेश नृपतेस्तनुम्’** [२८.२४–७] इति च ॥ ६२ ॥ प्रादुर्बभूव । **‘व्यासश्च भगवान् विप्रो देवर्षिगणसेवितः । वृतः शिष्यैर्महातेजा दर्शयामास पार्थिवम्’** [२९.२२] इति च । भगवानिति पदं व्याख्याय दर्शयति– अमितशक्तितेजोज्ञानाद्भुतैश्वर्यसुखादिरूपः । आदिना बलवीर्ये अपि गृह्येते । अद्भुतेति देहल्यां दीपः । शक्तितेजोज्ञानान्यप्यद्भुतानि । ऐश्वर्यसुखादीन्यप्यद्भुतानि । उदग्रया सर्वाधिकया भक्त्या, सर्वे समेत्य, पूजयामासुः ॥ ६३ ॥ यद्यत् येषां यासां वा इष्टं तत्तत् ते ता वा प्रवदन्तु । प्रकामं वदन्तु । तस्य तस्या वा तद् दास्यामि । **‘किमिच्छसि महीपाल मत्तः प्राप्तुमभीप्सितम् । द्रष्टुं स्प्रष्टुमथ श्रोतुं तत् कर्ताऽस्मि तवानघ’** [३०.२५] इत्यादि च । भक्तेरुच्छ्रयः दिनेदिने वर्धमानता । रविसूनोः कानीनतया जन्मोत्थस्य स्वदोषस्य मृत्यूत्थस्य पुत्राणां दोषस्य चापगमनम् । अथच तस्य स्वपुत्रत्वमर्जुनादिष्वनिवेद्य तूष्णीमासनात् तद्वधहेतुत्वं च स्वस्मिन्नेवाऽपतितमिति मन्वानाऽऽह– मृत्यूत्थदोषापगममिति ॥ ६४ ॥ अभिलषितस्य सर्वस्य दानं प्रदानम् । शीघ्रं फलत्वित्यनुसन्धाय वाञ्छा अभिवाञ्छा । अभिर्हि शैघ्र्यवचनः । निःशेषं रणेहतानामित्यलुक् । **‘तत्पुरुषे कृति बहुलम्’** [अ.सू.६.३.१४] इति स्मरणात् । सन्दर्शनं स्फुटदर्शनम् । न स्वप्न इव च्छायादर्शनम् ॥ ६५ ॥ अमुष्य राज्ञो गान्धार्याश्च ॥ ६६ ॥

---

१. **‘–रुदारभक्त्या’** इति क्वचित् । **‘–रुदग्रभक्त्या’** इति च ।
२. **‘समाययुः स्वर्ग–’** इति क्वचित् ।

**ऊषुश्च रात्रिं परमाज्ञयैव सर्वे स्वभार्य्यासहिता यथा पुरा ।**
**तृप्तः सदारो नृपतिश्च तत्र सर्वेऽपि दृष्ट्वा[१] महदद्भुतं[२] तत् ॥ ६७ ॥**

**अथाऽज्ञयैवास्य परस्य सर्वाः स्त्रियो निजेशैः सहिता ययुः स्वम्[३] ।**
**विनोत्तरां तां तु कथां निशम्य पारीक्षितोऽयाचत तातदृष्टिम् ॥ ६८ ॥**

**तं चाऽनयामास तदैव कृष्णो ह्यचिन्त्यशक्तिः स विकुण्ठलोकात् ।**
**दृष्ट्वा स पारीक्षित आप तुष्टिं स्वतातमीशेन समाहृतं पुनः ॥ ६९ ॥**

**सम्पूज्य तं कृष्णमपीशवन्द्यं क्षमापयामास परीक्षिदात्मजः ।**
**चक्रे च विस्रम्भमतीव भारते पुनश्च तत्रत्यजनैः[४] समेतः ॥ ७० ॥**

**पार्त्थाः पुनः प्राप्य पुरं स्वकीयं धर्म्मेण पृथ्वीं परिपालयन्तः ।**
**भोगानरागा अजुषन्त योग्यान् युक्ता जगद्धातरि वासुदेवे ॥ ७१ ॥**

**वर्षत्रयान्ते त्मसमाहिताग्निं [५]त्यक्ताग्निभिस्तैर्वनमालिहद्भिः ।**
**ते शुश्रुवुर्द्धृतराष्ट्रं सभार्य्यं सहैव कुन्त्या परिदग्धदेहम् ॥ ७२ ॥**

---

सर्वेऽपि तृप्ताः ॥ ६७ ॥ ययुः स्वं लोकम्, स्वं पतिं वा । **'जग्मुर्भर्तृसलोकताम्'** [३५.२४] इति, **'स्वस्थानं प्रतिपेदिरे'** [२६] इति च । पारीक्षितो जनमेजयः । **'ममापि वरदो व्यासो दर्शयेत् पितरं यदि । तद्रूपवेषवयसं श्रद्दध्यां सर्वमेव तत्'** [३७.४] इति पुत्रदर्शने जनमेजयवचनम् ॥ ६८–९ ॥ सम्पूज्य स्वतातदर्शनजनितसम्भ्रमेण पूजयित्वा । यः स्वतातमश्वत्थामरूपेण गर्भ एव हन्तुमुदयुङ्क्त, पुनः शुकरूपेण भागवतमुपदिश्योद्धार तेनापीशेन शिवेन वन्द्यम् । अश्रद्धाजनितमपराधं मार्ष्टुं क्षपयामास । मदीयं बालिश्यं क्षम्यतामिति प्रार्थयामास । पूर्वमपि न विस्रम्भो नाऽस । इदानीं पुनर्विस्रम्भो निश्चलो बभूव । तदेतदाह– पुनश्च । चक्रे च विस्रम्भमतीव भरतानामितिहास इति । न केवलं भारते । कृष्णस्याचिन्त्यशक्तौ चेति चकारार्थः । न केवलं जनमेजयः । तत्रत्याः सर्वेऽपि जना व्यस्रम्भिषतेत्याह– तत्रत्यजनैः समेत इति ॥ ७० ॥ अरागा असक्ता अथाप्यजुषन्त भगवत्प्रसाद इति प्रीत्याऽसेवन्त । मनोयोगयुक्ताः ॥ ७१ ॥ आत्मन्येव समाहिताग्निं त्यक्तबाह्याग्निम् । वनमालिहद्भिः । लिह आस्वादने ।

---

१. **'तत्र दृष्ट्वा च सर्वे मह–'** इति क्वचित् । २. **'दृष्ट्वा परमाद्भुतं तत्'** ३. **'स्वः ।'**
४. **'तत्र स्वजनैः'** । **'तत्रस्थजनैः'** इति क्वचित् । ३. **'त्यक्त्वाऽग्निभिस्तै–'** इति क्वचित् ।

व्रीळामुखा[१] द्ध्यानपरा निशम्य [२]स्वर्य्यातमात्मीयपितृव्यमाशु ।
समेत्य भर्त्त्रा प्रतिपूज्यमानां कुन्तीं च तप्ता विदधुः क्रियाश्च ॥ ७३ ॥

ते विष्णुभक्त्या परिपूतकर्म्मभिर्ज्ञानेन चान्ते तमनुस्मरन्तः ।
पार्त्थैः सुपुत्रैः सुकृतोर्ध्वकर्म्मभिर्वृद्धिं [३]सुखस्याऽपुरनप्ययां शुभाम् ॥ ७४ ॥

गावद्गणिर्व्यासस्काशमेत्य शुश्रूषया तस्य पुनर्न्निजां गतिम् ।
प्रपेदिवान् पाण्डुसुताश्च कृष्णं प्रतीक्षमाणाः पृथिवीमशासन् ॥ ७५ ॥

**भर्त्रा सह अवरैः प्रतिपूज्यमानाम् ॥ ७३–५ ॥**

---

वनमावृत्य स्वादंस्वादं दहद्भिः तैर्धृतराष्ट्रत्यक्तैरेवाग्निभिः, धृतराष्ट्रं कुन्त्या भार्यया च सह निःशेषदग्धदेहम् । **'कुरु-क्षेत्रात् पिता तुभ्यं गङ्गाद्वारं ययौ नृप'** [३९.१०], **'अग्निं मुखे समाधाय वायुभक्षोऽभवन्मुनिः'** [१२] इति नारदागमने । **'वनं प्रविशताऽनेन वायुभक्षेण धीमता । अग्नयः कारयित्वेष्टिमुत्सृष्टा इति नः श्रुतम् । याजकास्तु ततस्तस्य तानग्नीन् निर्जने वने । समुत्सृज्य यथाकामं जग्मुर्भरतसत्तम । स विवृद्धस्तदा वह्निर्वने तस्मिन्नभूत् किल । तेन तद् वनमादीप्तमिति ते तापसाऽब्रुवन् । स राजा जाह्नवीतीरे यथा ते कथितं मया । तेनाग्निना समायुक्तः स्वेनैव भरतर्षभ'** [४१.२–५] इति च । शुश्रुवुर्नारदेन, दैवाददग्धेन वनात् प्रत्यागतेन सञ्जयेन चेति भागवते– **'तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः । गावद्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः'** [१.१२.३२] इति, **'एतस्मिन्नन्तरे विप्र नारदः प्रत्यदृश्यत । वीणां त्रितन्त्रीं ध्वनयन् भगवान् सह तुम्बुरुः'** [३८] इति च ॥ ७२ ॥ व्रीळयाऽवाङ्मुखाः । व्रीळानम्रं मुखं येषां त इति । देवलोके भर्त्रा समेत्य तत्रत्यैर्देवभृत्यैः प्रतिपूज्यमानाम्, प्रत्युद्गम्य पूज्यमानाम्, कुन्तीं च । गान्धारीं च ॥ ७३ ॥ विष्णुभक्त्या च कर्मभिश्च । विष्णुभक्त्या हेतुना परिपूतैः कर्मभिश्च । ते धृतराष्ट्रादयः । पार्थैः सम्यक् कृतैरूर्ध्वकर्मभिश्च । सुकृतान्यूर्ध्वकर्माणि यैस्तैः पार्थैर्वा ॥ ७४ ॥ सञ्जयः पाण्डवानामेतन्निवेद्य हिमवन्तं ययौ– **'सञ्जयस्तु महाप्राज्ञस्तस्माद् दावादमुच्यत । गङ्गाकूले मया दृष्टस्तापसैः परिवारितः । स तानामान्त्र्य मेधावी निवेद्यैतच्च सर्वशः । प्रययौ सञ्जयो धीमान् हिमवन्तं महीधरम्'** [३९.३२–३] इति भारते नारदवचनम् । कृष्णं प्रतीक्षमाणाः । तदवतारसमाप्तिं प्रतीक्षमाणा इत्यर्थः । शाकटायनीया लङादेशस्य झेर्जुसमादेशमादिशन्तो **'अशासुः'** इति रूपं पठन्ति । **'लङः शाकटायनस्य'** [अ.सू.३.४.१११] इति । अन्येषां मते अशासन्नित्येव । आचार्यस्तु जुसमादेशं विभाषा मन्यते । अतः सुष्ठूक्तम्–पृथिवीमशासन्निति ॥ ७५ ॥

---

१. 'वीटा (व्रीडा) मुखं ध्यानपरम्' २. 'स्वर्यान्तमात्मीय–'

३. '–वृद्धिं शुभस्याऽपु–'

**अष्टादशाब्दाः पृथिवीं समस्तां प्रशासतामेवमगुर्म्महात्मनाम् ।**
**अरिक्तधर्म्मार्त्थसुखोत्तमानामनुज्झितानन्तपदस्मृतीनाम् ॥ ७६ ॥**

**इति श्रीमदानन्दतीर्त्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये[1]**
**एकत्रिंशोऽद्ध्यायः**

—०—

[आदितः श्लोकाः– **४९२४+७६=५०००**]

**अरिक्तं सम्पूर्णम् ॥ ७६ ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां
श्रीवेदाङ्गतीर्थभट्टारकविरचितायां तात्पर्यदीपिकायामेकत्रिंशोऽध्यायः

—०—

अष्टादशाब्दाः । **'एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः । वनवासे तथा त्रीणि नगरे दश पञ्च च'** [४१.२५] इति च । धर्मराजशासने पञ्चदशस्वब्देष्वतीतेषु धृतराष्ट्रो वनं ययौ । षोडशवर्षात्यये विदुरो युधिष्ठिरं विवेश । ततो वर्षद्वयेऽतीते धृतराष्ट्रादीनां दावेन दाह इत्यष्टादशाब्दाः । अगुः । इण् गतौ । **'इणो गा लुङि'** [अ.सू.२.४.४५] । **'इणो गा इत्ययमादेशो भवति लुङि परतः । अगात्, अगाताम्, अगुः'** इति जयादित्यः । अरिक्त-धर्मार्थानामत एव सुखेन उत्तमानाम् । उत्तमसुखानां वा ॥ ७६ ॥

**आचार्यगोविन्दकृते**
**श्रीमद्भारततात्पर्यनिर्णयस्य ।**
**निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने**
**गतमेकत्रिंशाध्यायविवरणं सतां हृदयाभरणम् ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**महाभारततात्पर्यनिर्णयपञ्चिकायां**
**निर्णयभावचन्द्रिकायां**
**एकत्रिंशोऽध्यायः**

—०—

१. प्राचीनकोशेष्वेतदध्यायनाम न निर्दिष्टम् । **'धृतराष्ट्रादिस्वर्गप्राप्तिर्नाम'** इति प्रचलितं नाम ।

२२-१०-१२

# द्वात्रिंशोऽध्यायः

[पाण्डवस्वर्गारोहणम् ]

ॐ ॥ ततः कुरुक्षेत्रमवाप्य कृष्णो दीक्षां प्रपेदे द्विषडब्दसत्त्रे ।
स एव च व्यासभृगूद्वहात्मा चक्रेऽत्र सादस्यमजोऽप्रमेयः ॥ १ ॥

तत्रर्त्विजो दक्षभृगुप्रधानाः पार्था यदूनां प्रवरैः समेताः ।
ब्रह्मेशशक्रप्रमुखाः सुराश्च चक्रुः सुसाचिव्यमनन्तदासाः ॥ २ ॥

**ॐ ॥ द्विषडब्दसत्रे द्विषडब्दनिर्वर्त्यसत्रे ॥ १–२ ॥**

---

ॐ ॥ अवशिष्टं मौसलं महाप्रस्थानिकं स्वर्गारोहणं चेति पर्वत्रयं चरमेणाध्यायेन निर्णिनाय । अयमत्र विषयक्रमः– आदौ सार्धत्रिपञ्चाशता श्लोकैर्मौसलनिर्णयः । अथ सपादया सप्तत्रिंशता महाप्रस्थाननिर्णयः । [५४–९०] पुनः सपादया एकोनचत्वारिंशता [९१–१३०] स्वर्गारोहणनिर्णयः । ततः षड्भिः स्वावतारनिर्णयः, भीम एव मध्वो बभूवेति [१३१–६] । ततो बुद्धावतारप्रस्तावः, तत्कथानिर्णयश्च पञ्चविंशत्या [१३७–६१] । बुद्धानन्तरं मध्वावतारकारणं त्रिभिः [१६२–४] । ततश्चतुर्भिः कल्क्यवतारनिर्णयः [१६५–८] । अवशिष्टैर्द्वादशभिर्ग्रन्थोपसंहारः [१६९–८०] । द्विषडब्द-सत्रे । द्विगुणिताः षडब्दा यत्र । **'सत्रं यज्ञे सदादाने छादनारण्यकैतवे'** इत्यभिधानम् । निरन्तरदानं चेदं सत्रम् । भगवतः स्वभगवत्त्वच्छादनं चेदं सत्रम् । भगवतः कपटनाटकं चेदं लोकशिक्षार्थं सत्रम् । **'ईजे क्रतुभिरात्मानं सर्ववेदार्थ-सङ्ग्रहैः । स्वयोगमायारचितैः कुरुक्षेत्रे द्विषट्समाः'** [१०.१०३.३५] इति भागवते । सादस्यं सदस्यभावः । यज्ञभ्रेष-निवारकः यज्ञविधिसाङ्गतामार्गदर्शकः सदस्यः । ब्रह्मर्त्विगित्युक्तम् । तेन सादस्यं यज्ञे मार्गदर्शनमित्यायातम् ॥ १ ॥ ऋचि यजुषि साम्नि च चत्वारश्चत्वार इति संहत्य द्वादशर्त्विजः । ब्रह्मर्त्विक् तत्सहायकाश्च त्रयः । आहत्य षोळश-र्त्विजः । तथाह्याश्वलायनः–**'तस्यर्त्विजश्चत्वारस्त्रिपुरुषाः । तस्यतस्योत्तरे त्रयः । होता, मैत्रावरुणोऽच्छावाको ग्रावस्तुत् । अध्वर्युः, प्रतिप्रस्थाता नेष्टोन्नेता । ब्रह्मा, ब्राह्मणाच्छंस्याग्नीध्रः पोता । उद्गाता प्रस्तोता, प्रतिहर्ता सुब्रह्मण्य इति'** इति । तथाच ऋग्विधाने प्रधान ऋत्विग् होता । तस्य त्रयः सहायकाः–मैत्रावरुणः, अच्छावाकः, ग्रावस्तुदिति । यजुर्विधाने प्रधान ऋत्विगध्वर्युः । तस्यापि त्रयः सहायकाः–प्रतिप्रस्थाता, नेष्टा, उन्नेता च । सामगाने प्रधान उद्गाता । तस्य सहायकाः– प्रस्तोता, प्रतिहर्ता, सुब्रह्मण्य इति । सर्वत्र मार्गदर्शकः सर्ववेदज्ञो ब्रह्मर्त्विक् ।

**सर्वे च[1] जीवा वसुधातळस्था[2] येऽन्येऽन्तरिक्षद्युमुखोत्तरेषु ।**
**वसन्ति नारायणपादसंश्रयास्ते चात्र सर्वे मुमुदुः सनागाः ॥ ३ ॥**

**सुनिर्ण्णयस्तत्वविनिर्ण्णयार्त्थिनां तत्वस्य चाभूदिह वादशीलिनाम्[3] ।**
**मिथो विवादात् सुरभूसुराणां वाक्याद्धरेर्व्यासभृगूद्वहात्मनः ॥ ४ ॥**

**धर्म्मार्त्थकामानखिलानवापुस्तदर्त्थिनो मुक्तिमपीह कृष्णात् ।**
**यथेष्टपानाशनवाससो जना विचेरुरत्रामरमानवादयः ॥ ५ ॥**

**क्षेत्रं तदासीद्धरिलोकसम्मितं यदीयुरत्राखिलसज्जना युतिम् ।**
**नानाप्तकामाश्च यतो बभूवुर्न्निर्य्यत्नदृश्यश्च यतोऽत्र केशवः ॥ ६ ॥**

**द्वादशाब्दं महासत्रमेवमेतादृशं हरिः ।**
**समाप्यावभृथस्नातः पूजयित्वाऽखिलान् जनान् ॥ ७ ॥**

**सनागा इत्यनेन अधरस्था अप्यागता इत्युक्तं भवति ॥ ३ ॥ इह यज्ञे ॥ ४ ॥ तदर्थिनः धर्माद्यर्थिनः । अखिलान् सम्पूर्णान्, धर्मार्थकामान् मुक्तिमपि कृष्णादवापुः ॥ ५ ॥ युतिं सम्मेलनम् ॥ ६–१० ॥**

---

तस्यापि त्रयः सहायकाः–ब्राह्मणाच्छंसी, आग्नीध्रः, पोता चेति । होतृप्रमुखाः शस्त्रमन्त्रादीन् पठन्ति । अध्वर्युप्रमुखा जुह्वति । उद्गातृप्रमुखाः साम गायन्ति । ब्रह्मप्रमुखाः सर्वं निर्वाहयन्ति यथा विधिलोपो न स्यात् । सुष्ठु भक्ति-पूर्वं साचिव्यं साहाय्यम् । यज्ञकर्मणि निरन्तरं परिचरा अभवन् ॥ २ ॥ अन्तरिक्षद्युमुखेषु उत्तरेषु ऊर्ध्वलोकेषु । ये चाधोलोकगा नागास्तैश्च सहिताः ॥ ३ ॥ विशिष्य विश्लिष्य च निर्णयार्थिनाम् । सुनिर्णयः । सु पूजायाम् । अतिशयार्थे वा । समृद्ध्यर्थे वा । सर्वशास्त्रसम्मतः, सर्वज्ञानिजनपूजितोऽतिशयितः समृद्धश्च निर्णयः । द्विविधस्यापि तत्वस्य स्वतन्त्रस्यास्वतन्त्रस्य च । वादेन तत्वनिर्णयकथया शीलयन्ति परिशीलयन्ति पुनःपुनरभ्यासेन तत्वमिदं चेत्थं चेत्यवधार-यन्तीति वादशीलिनः । शील उपधारणे । उपपन्नं धारणमुपधारणम् । उपधारणमभ्यासः परिचय इत्यप्याहुः । तादृशानां सुराणां भूसुराणां च विविधो वादः विवादः । विविधसन्देहहारिणो शास्त्रावमर्शादित्यर्थः । तत्राप्यनिर्णयेऽन्ते वाक्याद्धरेः सर्वसंशयहरस्य ॥ ४ ॥ धर्मार्थकामानखिलान् तदर्थिनोऽवापुः । अवेत्यवधारणे । निःसंशयमापुः । योग्यां मुक्तिमपि । मानवादयः, आदिना यक्षाः गन्धर्वाः ऋषयश्च नागाश्च ॥ ५ ॥ युतिं समागमम् । **'यु मिश्रणे'** । यद् यस्माद् युतिमीयुः तत् तस्मात् तत् कुरुक्षेत्रं हरिलोकसम्मितमासीत् । समानतया मितमवगतं सम्मितम् । पुनः कारणद्वयमाह– यतश्च नानाप्तकामास्तत्र बभूवुः । यतश्चात्र निर्यत्नदृश्यः केशवो बभूव ॥ ६ ॥ द्वादशानामब्दानां समाहारः द्वादशाब्दम् । द्वादश

---

१. **'सर्वेऽपि जीवा–'** इति क्वचित् । २. **'–तलस्था–'** ३. **'–दिह तत्वशीलिनाम्'** इति क्वचित् ।

**अनुजज्ञे क्रमेणैव वत्सरेण समागतान् ।**
**स्वकुलं सञ्जिहीर्षुः स विप्रशापमजीजनत्** ॥ ८ ॥

**उपदिश्य[1] परं ज्ञानमुद्धवायामुमाश्रमम् ।**
**बदर्य्याख्यं प्रापयित्वा[2] सप्तमाब्दं शतोत्तरम्** ॥ ९ ॥

**प्रतीक्षन् पालयामास पार्त्थैः सह भुवं प्रभुः ।**
**समारब्धं कलियुगं यदा दुर्य्योधनोऽपतत्** ॥ १० ॥

अब्दा यत्र तत् सत्रं वा । अत एव महत् । महापुरुषकृतत्वाच्च । पूजयित्वा यथायोग्यं मानयित्वा ॥ ७ ॥ अनुजज्ञे गन्तुमनुमतिं ददौ । एवं वक्तव्यशेषं समाप्याथ षट्चत्वारिंशता श्लोकैर्मौसलपर्वकथां सङ्गृह्णाति–स्वकुलं सञ्जिहीर्षुः । **'शापव्याजेन विप्राणां सञ्जह्रे स्वकुलं विभुः'** [११.१.५] इति भागवते । **'विश्वामित्रोऽरुणिः कण्वो दुर्वासा भृगुरङ्गिराः । काश्यपो वामदेवोऽत्रिर्वसिष्ठो नारदादयः'** [११.१.१२] ऋषयः कदाचिद्यदृच्छया द्वारकामागमन् । क्रीडन्तो यदुनन्दनास्तानुपव्रज्य, साम्बं भूषितस्त्रीवेषमग्रतो निधाय तानविनीता विनीता इव पप्रच्छुः–**'इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः । ऋषयः साधु जानीत किमियं जनयिष्यति'** [मौ.प.२.६] इति । बभ्रुरक्रूरः । एवं विप्रलब्धा मुनयः कुपितास्तानूचुः– 'कुलनाशनं घोरमायसं मुसलं साम्बोऽयं जनयिष्यति मन्दाः' इतीति विप्रशापः । ततः श्वोभूते साम्बो मुसलमसूत । तद् राजा आहुकः सूक्ष्मं चूर्णमकारयत् । चूर्णं च राजपुरुषाः सागरे प्राक्षिपन् । तत्रावशेषितं लोहखण्डं कश्चिन्मत्स्योऽग्रसीत् । सागरे प्रक्षिप्तानि चूर्णान्यूर्मिभिरुह्यमानानि वेलामासाद्य एरका नाम तृणविशेषा आसन् । लोहखण्डग्रासी च मत्स्यो मत्स्यघ्नैर्जालेन गृहीतः । शल्यं तदुदरगतं ते दूरे प्रचिक्षिपुः । जरा नाम लुब्धकस्तमिषुं चकार ॥ ८ ॥ बदरीस्थेषु मुनिषु तद्द्वारा च समग्रे लोके स्वसन्देशप्रसारार्थमापयित्वा गमयित्वा । शतादुत्तरं सप्तमाब्दम् । षडुत्तरं शतमब्दान् षण्मासांश्च कृष्णो हि भुवि विहरन्नास । विप्रशापं विहन्तुं प्रभुरपि स्वेच्छयाऽनुमोदमानः । **'भगवांस्तात सर्वार्थ ईश्वरोऽपि तदन्यथा । कर्तुं नैच्छद् विप्रशापं कालरूप्यन्वमोदत'** [११.१.२४] इति भागवते । द्विषडब्दसत्रात् पूर्वं निर्वृत्तेयं कथा । भगवान् सत्रमारेभे यदाऽष्टाशीतिवर्षः । शततमे च वर्षे सत्रपूर्तिः । शापव्याजेनोद्धवस्य बदरीं प्रति प्रेषणसमये भगवानशीतिवर्षः । तथाहि भागवततात्पर्ये [१.१२.१२]– **'शापं श्रुत्वा ब्राह्मणानामुद्धवः खिन्नमानसः । उदासीनं तथा कृष्णमिव सुप्रीतमेव च । नशिष्यमाणं स्वकुलं स्वर्यियासुं च केशवम् । ज्ञात्वा पप्रच्छ भगवत्स्वरूपं तमुपह्वरे । मैत्रेयोऽपि तदैवाऽगाज्जिज्ञासुस्तत्वमुत्तमम् । तयोरदात् स भगवान् ज्ञानं निर्मलमञ्जसा । षड्विंशद्वत्सरात् पूर्वं स्वर्गतेः पुरुषोत्तमः । प्रेषयामास च हरिरुद्धवं बदरीमनु । कलापग्रामिणां वक्तुमेतत् तत्वमशेषतः'** इत्यादि पाद्मवचनम् ॥९॥ प्रतीक्षन् प्रतीक्षमाणः क्षेमाय क्षमायाः । समारब्धम्, संवद्गणनयाऽऽरब्धम्, नतु प्रभावतः । कालसङ्ख्यानमात्रेण तस्य कलियुगत्वम् । न कलेः प्रभावप्रकटनेनेत्यर्थः । अतः संवृतमेवाऽरब्धम् ॥ १० ॥

१. **'समादिश्य'** इति क्वचित् । २. **'यापयित्वा'** इति क्वचित् ।

षट्त्रिंशाब्दं पुनः कृष्णः कृतमेवान्ववर्त्तयत् ।
कृतादपि विशेषोऽयं यत् पुण्यस्याधिकं फलम् ॥ ११ ॥

अल्पमेव च पापस्य कालात् कृष्णाज्ञया तथा ।
एवं सुधार्म्मिके लोके हरिभक्तिपरायणे ॥ १२ ॥

नष्टेषु कलिलिङ्गेषु युगवृत्तिमभीप्सवः ।
ब्रह्मरुद्रादयो देवाः स्तुत्वा केशवमव्ययम् ॥ १३ ॥

व्यज्ञापयन् स्वलोकाप्तिमोमित्याह स चाच्युतः ।
प्राचुर्य्ये सज्जनस्य स्यान्न कलेर्वृद्धिरञ्जसा ॥ १४ ॥

इति स्वकुलसंहृत्यै प्रभासमनयत् प्रभुः ।
पुण्यक्षेत्रेऽपि न मृतिः स्वगृहे[1] त्वतिधर्म्मदा ॥ १५ ॥

**पुनः कलियुगारम्भानन्तरम् ॥ ११ ॥ कालात् कालस्वभावात् ॥ १२–४ ॥ अनयत्, स्वकुलमिति**

---

धृतराष्ट्रादीनां दाहानन्तरं पुनरष्टादशाब्दा इति संहत्य षट्त्रिंशाब्दम् । पुनरिति कलियुगारम्भानन्तरमपि ॥ ११ ॥ पापस्य चाल्पमेव फलम् । कालस्वभावात् । कलिकालत्वात् । विशिष्य चाष्टाविंशे कलियुगे कृष्णाज्ञया च । धर्मजपालनात् धार्मिके । यदर्थं धर्माचरणं तस्य कृष्णस्य साक्षात् सन्निधानात् सुधार्मिके ॥ १२ ॥ युगधर्मस्यानुवृत्तिम् । ब्रह्मरुद्रादयः । **'अथ ब्रह्माऽऽत्मजैर्देवैः प्रजेशैरावृतोऽभ्यगात् । भवश्च भूतभव्येशो यक्षभूतगणैर्वृतः । इन्द्रो मरुद्भिर्भगवानादित्या वसवोऽश्विनौ । ऋभवोऽङ्गिरसो रुद्रा विश्वे साध्याश्च देवताः । गन्धर्वाप्सरसो नागाः सिद्धचारणगुह्यकाः । ऋषयः पितरश्चैव सविद्याधरकिन्नराः । द्वारकामुपसञ्जग्मुः सर्वे कृष्णदिदृक्षवः'** [११.६.४] इति भागवते । **'गीर्भिश्चित्रपदार्थाभिस्तुष्टुवुर्जगदीश्वरम्'** [६] इति च । अव्ययं निर्विकारम् । अविं अवनिं अयत इति चाव्ययं भुवि गतम् । नरलोकमनोरममित्यर्थः । **'अविर्भूपुष्पवत्योः स्त्री'** इत्यभिधानम् ॥ १३ ॥ व्यज्ञापयन् चतुर्मुखमुखेन । तथाहि ब्रह्मवचनं भागवते–**'यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम । शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो'** [११.६.२५] इति; **'ततः स्वधाम परमं विशस्व यदि मन्यसे'** [२७] इति च । शरदां शतमृतूनां पञ्चविंशतिरिति भागवततात्पर्ये स्फुटम् । तेन चतुःशतं वत्सरा द्वौ च मासौ व्यतीयुरित्यर्थः । ततः द्वौ वत्सरौ चतुरश्च मासान् कृष्णो भूमौ विजहार । अञ्जसा सामस्त्येन । द्रुतं वा ॥ १४ ॥ पूर्वं स्वकुलसंहृत्यै । स्वगृहे तु । क्षेत्रयात्रादिप्रयासाभावादिति

---

१. '–गृहेऽप्यति–'

[1]गत्यैवाल्पमपि क्षेत्रं स्यान्महत्फलमित्यजः ।
प्रकाशयितुमेवैनान्[2] प्रभासाय कुशस्थलात् ॥ १६ ॥

नीत्वा [3]दानादिसद्धर्म्मांस्तैरकारयदच्युतः ।
ते ततः शापदोषेण कृष्णेनैव विमोहिताः ॥ १७ ॥

मैरेयमत्ता अन्योन्यं निपात्य स्वां तनुं गताः ।
तद् दृष्ट्वा बलदेवोऽपि योगेन स्वतनुं ययौ[4] ॥ १८ ॥

ततः परेशोऽगणितानुभावः स्वसारथिं पाण्डवानां सकाशम् ।
स्वलोकयानप्रतिवेदनाय[5] स्वस्यानु चैषां त्वरयाऽभ्ययातयत्[6] ॥ १९ ॥

**शेषः ॥ १५ ॥ अल्पमपि क्षेत्रं गत्वा, स्वगृहादिति शेषः ॥ १६–२१ ॥**

---

तुनाऽऽह । अत एव नात्यन्तं धर्मदा ॥ १५ ॥ **'गत्यैव'** इति मूलादर्शे पठ्यते । अयमर्थः– सकृद् गत्यैव, नतु चिरवासेन, अल्पमपि क्षेत्रं महाफलदं स्यात् । महत्फलमित्येकं पदम् । **'आन्महतः फले विभाषा'** इति वक्तव्यम् । महत्तत्वमित्यत्र तु महदिति विशेष्यम्, न विशेषणमित्याकारादेशाभावः, महदिति तत्वं महत्तत्वमिति । अल्पं क्षेत्रं प्रत्यपि गत्यैव महत् स्यात् फलमिति वा । यद्यपि **'ईक्ष्य, उष्य'** इत्यादिवद् **'गत्य'** इति ल्बबन्तमिति शक्यं वक्तुम् । अथापि गमेरनुपसर्गस्य ल्यप् क्वापि न दृष्टपूर्व इति न तथा व्याख्यायते । **'गत्वैव'** इति पाठे स्फुटोऽर्थः ॥ १६ ॥ सकामोऽपि धर्मो भवति । अतः सद्धर्मानित्याह । केवलं विष्णुप्रीत्यर्थानित्यर्थः । 'तव कुलमन्योन्यतः क्षयं गच्छतु' इति गान्धारीशापदोषेण ॥ १७ ॥ मैरेयमत्ताः । **'सीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकीपुष्पगुडधानाम्बुसंहितम्'** इति वदन्ति । मद्यसामान्यवचनं वा । मिरायामोषधिविशेषे भवमिति च निर्वदन्ति । **'ततस्तस्मिन् महापानं पपुर्मैरेयकं मधु । दिष्टविभ्रंशितधियो यादवा नष्टमङ्गलाः'** [११.३०.१२] इति भागवते । परस्परमेरकैराविध्य निपात्य । **'आविध्याविध्य ते राजन् प्रहरन्ति स्म तैस्तृणैः । तद् वज्रभूतं मुसलं व्यदृश्यत तदा दृढम्'** [४.४१] इति मौसले । स्वां तनुं मूलरूपं गताः । बलदेवोऽपि । स्वतनुं नागशरीरं च । **'ततो गत्वा केशवस्तं ददर्श रामं वने स्थितमेकं विविक्ते । अथापश्यद् योगयुक्तस्य तस्य नागं मुखान्निश्चरन्तं महान्तम्'** [मौ.प.५.१२] इति च । **'रामः समुद्रवेलायां योगमास्थाय पौरुषम् । तत्यजे योगमाविश्य संयोज्याऽत्मानमात्मनि'** [११.३०.२६] इति भागवते ॥ १८ ॥ स्वसारथिं दारुकम् । **'गच्छ द्वारवतीं सूत ज्ञातीनां निधनं मिथः । सङ्कर्षणस्य निर्याणं बन्धुभ्यो ब्रूहि मद्दशाम् । द्वारकायां नच**

---

१. **'गत्यैवा–'** । वे.ती.पाठोऽपि तथा । २. **'–मेवैतान्'** ३. **'दानानि सद्ध–'**
४. **'स्वां तनुं जहौ'** । **'स्वां तनुं ययौ'** इति क्वचित् । ५. **'–प्रतिबोधनाय'** ६. **'–भ्यपातयत् ।'**

**अथाऽसतः पिप्पलमूल ईशितुरूरुस्थितं पादतळं सुताम्रम् ।**
**दृष्ट्वा जरा नाम ससर्ज शल्यं भक्तोऽप्यलं रोहितं शङ्कमानः ॥ २० ॥**

**अच्छेद्याभेद्यदेहस्य शल्ये पादमुपस्थिते ।**
**समीपमागतो व्याधो दृष्ट्वा भीतोऽपतद् भुवि ॥ २१ ॥**

**विप्रवाक्यं मानयानः कारयित्वाऽमुना हरिः ।**
**पापं मां जहि देवेति याचन्तमनयद् दिवम् ॥ २२ ॥**

**साम्बगर्भजातमुसलेन यदुकुलनाशो भवत्विति विप्रशापं मानयानः । अमुना व्याधेन कारयित्वा, साम्बगर्भजातमुसलनिर्मितशरेण स्ववेधमिति शेषः ॥ २२ ॥**

---

**स्थेयं भवद्भिश्च स्वबन्धुभिः । मया त्यक्तां यदुपुरीं समुद्रः प्लावयिष्यति । स्वंस्वं परिग्रहं सर्वे आदाय पितरौ च नः । अर्जुनेनान्विताः सर्वे इन्द्रप्रस्थं गमिष्यथ'** [११.३०.४६–८] इति भागवते । **'गत्वा ब्रूहि च कौन्तेयमर्जुनं वचनं मम । पालनीयस्त्वया शक्त्या जनोऽयं मत्परिग्रहः'** [१०१.५७] इति ब्राह्मे । स्वस्यानु चैषां पाण्डवानां स्वलोकयानप्रतिवेदनाय । प्रत्याय्य वेदनं ज्ञापनं प्रतिवेदनम् ॥ १९ ॥ आसतः आसीनस्य । आङ्पूर्वकस्यासतेरिदं रूपम् । अस गतिदीप्त्यादानेषु । तेन आ असतः अपूर्वप्रभया दीप्यमानस्येति द्योतयति । अस्तेर्वा । अस भुवि । **'स भुवि'** इत्यन्ये । ऊरुस्थितम् । **'कृत्वोरौ दक्षिणं पादमासीनं पङ्कजारुणम्'** [३०.३२] इति च । रोहितं शङ्कमानः । **'मृगाकारं तच्चरणं विव्याध मृगशङ्कया'** [३३] इति च । **'रोहितो मीनमृगयोर्भेदे'** इति चाभिधानम् । जरा इति प्रथितो व्याधः । **'जराऽविध्यत् पादतले त्वरावान्'** [५.२३] इति मौसले । **'जरोऽविध्यत्'** इति दाक्षिणात्यः पाठो भ्रान्तिमूलः । **'सम्प्राप्तो वै जरा नाम तदा तत्र स लुब्धकः'** [१०२.५] इति ब्राह्मे । ननु जरणाज्जरो व्याध इति युक्तम् । कथं पुमान् जरा स्यात्? ननु त्वमपि पृच्छ्यसे कथं जाया दाराः स्यात् । ननु सामान्यवचनमिदम् । नाम्नि तु विवदामहे । कथं पुमान् जरानामा स्यादिति? तर्हि वयमपि विवदामहे–कथं पुरुषपुङ्गवः कर्मन्दी मधुसूदनसरस्वती स्यात्, नृसिंहभारती स्यादिति । ननु सरस्वत्यवतारोऽयमिति भक्त्या पुरुषं स्त्रीनामानमाचक्ष्महे । तर्हि अनधीतव्याकरणा मुग्धान्तःकरणा व्याधमाता ममतातिशयेन तनयामीप्सन्ती तनयं लब्ध्वा तमेव तनयामिव, अवृद्धं वृद्धमिव प्रीत्या जरेत्याजुहावेति किमनुपपन्नम् । सर्वं निर्वहति ममतेयं क्षमते च । अहो महीयसी ममता व्याकरणादपि । प्रीत्या स्त्रीलिङ्गप्रयोगेऽपि सम्बोधने **'अयि जर'** इत्येवाऽहुः । नतु **'अयि जरे'** इति । तथाच **'लुब्धको जरः'** [भाग.३०.३३] इत्यत्रापि **'लुब्धको जरा'** इत्येव भागवतपाठः साधीयान् । आदन्तं वा पुल्लिङ्गमेव पदमिदं विश्वपावत् ॥ २० ॥ पादमुपस्पृश्य स्थिते वेधं विना । मृगाशया समीपमागतः । मृगमदृष्ट्वा कृष्णं च दृष्ट्वा दण्डवत् प्रणनाम । अलं भक्तत्वात् । **'चतुर्भुजं तं पुरुषं दृष्ट्वा स कृतकिल्बिषः । भीतः पपात शिरसा पादयोरसुरद्विषः'** [३०.३४] इति च भागवते ॥ २१ ॥ विप्राणां वाक्यं नारदविश्वामित्रादीनां शापरूपं स्वयमपि मानयानः । केवलं विप्रप्रीत्या । अमुना व्याधेन बाणवेधेन

पादप्रहारदोषेण तं भृगुं व्याधतां गतम् ।
पश्चात्तापेन भक्त्या च सुप्रीतस्तच्छरीरिणम् ॥ २३ ॥

स्वाज्ञाप्राप्तविमानेन दिवं निन्ये जनार्द्दनः ।
नीचा[१] योनिर्न्नीचनीचं कर्म्माऽप्तं[२] नीचकर्म्मतः ॥ २४ ॥

अदुष्टत्वात्तु मनसो भक्तिलोपो नचाप्यभूत् ।
भृगोरत्राबुद्धिपूर्वं नातिदोषकृदप्यभूत् ॥ २५ ॥

ततो विरिञ्चेशपुरन्दराद्याः पुनः[३] स्तुवन्तोऽभिययुः प्रणम्य ।
कृष्णं स चाऽश्वेव ययौ स्वलोकं स्वतेजसा सर्वमिदं प्रकाशयन् ॥ २६ ॥

**कोऽसौ व्याध इत्यतस्तत्स्वरूपमाह–पादप्रहारेत्यादिना ॥ २३ ॥ नीचा योनिः (प्राप्ता) कर्म च प्राप्तम्, भृगुणेति शेषः । भृगोः मनसः अदुष्टत्वादेव भक्तिलोपश्च नाभूत् । अत्रापि व्याधजन्मन्यपि । अबुद्धिपूर्वं भगवानित्यविज्ञाय कृतं अतिदोषकरं नाभूत् ॥ २४–३३ ॥**

---

विप्रवाक्यमाननां कारयित्वा । **'त्वमाशु जहि वैकुण्ठ पाप्मानं मृगलुब्धकम् । यथा पुनरहं त्वेवं न कुर्यां सदतिक्रमम्'** [३७] इति च । **'मा भैर्जर त्वमुत्तिष्ठ काम एष कृतो हि मे । याहि त्वं मदनुज्ञातः स्वर्गं सुकृतिनां पदम्'** [३९] इति च ॥ २२ ॥ पादप्रहारदोषेण । **'मुनिर्जगाम वैकुण्ठं यत्र देवो जनार्दनः । शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत्'** [भाग.१०.९३.८] इति च । भक्त्या प्रीतः । पश्चात्तापेन सुप्रीतः । तच्छरीरिणं व्याधशरीरिणम् । स्वाज्ञाप्राप्तविमानेन– **'त्रिः परिक्रम्य तं नत्वा विमानेन दिवं ययौ'** [११.३०.४०] इति च । **'आश्वासितः पुण्यफलेन भक्त्या तथाऽनुतापात् कर्मणो जन्मनश्च । दृष्ट्वा तथा देवमनन्तवीर्यं देवैः स्वर्गं प्रापितस्त्यक्तदेहः'** [५.२५] इति मौसले । निन्य इत्यात्मनेभाषया भगवन्निष्ठां भक्तानुग्रहत्वरामाह । पदा वक्षसि भगवतस्ताडनात् कर्मणः इदानीं पुनः पादे बाणवेधरूपात् कर्मणः जनितादनुतापात् । ऋषित्वेन स्वतः पुण्यजन्मनः, पादप्रहारदोषेण व्याधजन्मनश्च । तदेतदाह– पादप्रहारदोषेण नीचा व्याधयोनिराप्ता । तत्र बाणवेधाख्यमतिनीचं कर्माऽप्तम् । अथापि नीचयोनितो नीचकर्मतो वा । मनसोऽदुष्टत्वादेव भक्तिलोपोऽपि नैवाभूत् । अत्र भगवदपराधे विषये भगवति विषये वा । अबुद्धिपूर्वत्वादतिदोषकृदपि नाभूत् ॥ २३–५ ॥ विरिञ्चेशपुरन्दराद्याः । **'अथ तत्राऽगमद् ब्रह्मा भवान्या च समं भवः । महेन्द्रप्रमुखा देवा मुनयः सुप्रजेश्वराः । पितरः सिद्धगन्धर्वा विद्याधरमहोरगाः । चारणा यक्षरक्षांसि किन्नराप्सरसो द्विजाः । द्रष्टुकामा भगवतो निर्याणं परमोत्सुकाः'** [११.३१.१–३] इति भागवते । **'ततो राजन् भगवानुग्रतेजा नारायणः प्रभवश्चाप्ययश्च ।**

---

१. **'नीचां योनिम्'** इति क्वचित् । २. **'–र्न्नीचनीचकर्माऽप्तम्'** ३. **'पुरः स्तुवन्तो–'**

**गोपालमन्त्रं भजतां फलप्रद [1]एकेन रूपेण स भुव्यदृश्यः[2] ।**
**तस्थौ द्वितीयेन च सूर्य्यमण्डले तृतीयमासीच्छिवपूजितं वपुः ॥ २७ ॥**

**सम्पूजितं ब्रह्मलोके चतुर्थं कञ्जोद्भवेनाथ परं स्वधाम ।**
**समाप्नुवानं वपुरस्य पञ्चमं भक्त्याऽन्वयुर्देववराः स्वशक्त्या ॥ २८ ॥**

**तत्तेजसा ते [3]प्रतिमुष्टदृष्टयः पुरुष्टुताद्या अमितोरुदीधितेः ।**
**यावत् स्वगम्यं त्वनुगम्य तस्थुर्न्निमीलिताक्षा विहतोर्ध्वचाराः ॥ २९ ॥**

**वीन्द्रेशशेषानुगतः स्वयम्भूर्द्धाम प्रविष्टं तमजं प्रणम्य ।**
**वीन्द्रादिकैरप्ययुतः स्वपित्राऽऽश्लिष्टो रहश्चाकथयत् तथाऽस्तौत् ॥ ३० ॥**

---

**योगाचार्यो रोदसी व्याप्य लक्ष्म्या स्थानं प्राप स्वं महात्माऽप्रमेयम्'** [५.२८] इति च मौसले ॥२६॥ गोपाल-मन्त्रं भजताम् । अरिशङ्खवराभयानि चतुर्भिर्भुजैर्दधतः गोपालस्य मन्त्रम् । षडक्षरं कृष्णमन्त्रम् । तथाहि मौसले– **'भुजैश्चतुर्भिः समुपेतं ममेदं रूपं विशिष्टं जीवितं संस्थितं च । भूमौ गतं पूजयताप्रमेयं सदा हि तस्मिन् निवसामीति देवाः'** [५.३४] इति । द्वितीयेन च सूर्यमण्डले । **'वाणी चाऽसीत् संश्रिता रूपिणी सा भानोर्मध्ये प्रविश त्वं तु राजन्'** [३३] इति च । तृतीयं शिवपूजितम् । सम्पूजितं ब्रह्मलोके चतुर्थम् । पूजकः सर्वजीवोत्तमश्चतुर्मुखः । पूज्यः सर्वोत्तमो भगवान् । पूजा च सर्वाधिकेति सम्पूजितमित्याह । तदेतत् भागवते भगवता सूचितम् । तथाहि– **'भवं पितामहं वीक्ष्य विभूतीरात्मनो विभुः । संयुज्याऽत्मनि चाऽत्मानं पद्मनेत्रे न्यमीलयत्'** [११.३१.५] इति । अत्र पद्मनेत्रे न्यमीलयत् । भवं पितामहं च स्वलोके तं दिदृक्षन्तौ वीक्ष्य भवलोके पितामहलोके चोदमीलयदित्यर्थः । स्वधाम समाप्नुवानं पञ्चमं वपुः । पृथगदृश्यतया मूलरूपेणैकीभवनं समाप्तिः । यदि कश्चिन्मुक्तो दिदृक्षते तदा पुनः पृथग्भूय कृष्ण-रूपं दर्शयतीति समाप्नुवानमित्याह । न त्वेकतां गतमिति । तदपि स्वेच्छामात्रनियतमित्यात्मनेभाषा । **'देवादयो ब्रह्म-मुखा आविशन्तं स्वधामनि । अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः'** [११.३१.८] इति भागवते ॥२७–८॥ तत्तेजसा । **'सौदामिन्या यथाऽऽकाशे यान्त्या भित्त्वाऽभ्रमण्डलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः'** [११.३१.९] इति च । **'देवा निवृत्तास्तत्पदं नाऽप्नुवन्तो बुद्ध्या देवं संस्मरन्तः प्रतीताः'** [५.३५] इति च मौसले । पुरुष्टुतः पुरन्दरः । **'यज्ञो यज्ञपतिस्त्विन्द्रः पुरुहूतः पुरुष्टुतः'** इत्यभिधानं भागवततात्पर्ये । अग्निहोत्रे प्रधानदेवतात्वेन पुरुष्टुतः ॥ २९ ॥ स्वधाम प्रविष्टम् । प्रणम्य, तदनन्तरं वीन्द्रादिभिरप्यननुगतः । स्वपित्रा भगवता । रहसि यद्

---

१ **'–प्रदस्त्वेकेन'** २. **'भुव्यदृश्यत ।'** इति कचित् । ३. **'प्रविमुष्ट–'**

**स पूर्वरूपेण समाप्य[1] चैक्यं विभज्य चेच्छानुसृतोऽथ रेमे ।**
**हरिः श्रिया ब्रह्ममुखैश्च मुक्तैः सम्पूज्यमानोऽमितसद्गुणात्मा[2] ॥ ३१ ॥**

**ब्रह्माऽपि शर्वादियुतः स्वलोकं प्राप्तः पुनस्तत्र गतं च कृष्णम् ।**
**रेमेऽभिपश्यन् प्रतिपूजयंस्तं सुराश्च सर्वे रविबिम्बसंस्थम् ॥ ३२ ॥**

**यतो न दर्शिता भ्रान्तिः प्रादुर्भावेष्वपि क्वचित् ।**
**देहत्यागानुकारेण[3] हरिणा तदिहाच्युतः ॥ ३३ ॥**

**मोहयित्वाऽसुरानन्धं तमः प्रापयितुं प्रभुः ।**
**चिदानन्दैकदेहोऽपि त्यक्तं देहमिवापरम् ॥ ३४ ॥**

**सृष्ट्वा स्वदेहोपमितं शयानं भुव्यगाद् दिवम् ।**
**दारुकोक्त्या समायातः पार्थस्तमदहत् तदा ॥ ३५ ॥**

**कृष्णस्त्यक्तदेहो दिवमगादिति दुष्टान् मोहयित्वा ॥ ३४–५ ॥**

---

भगवते निवेदनीयम्, कृष्णावतारकालेऽवतीर्णानां देवानां भाविकार्यादिकम्, तदकथयत् । रहश्चेति चकारेण तदेतत् सर्वथा सम्प्रत्येष्वनुद्घाटनीयं महारहस्यमित्याह । प्राधान्ये हि चः ॥ ३० ॥ पूर्वरूपेण मूलरूपेण । पुनश्च विभज्य, अथ रेमे, परममङ्गलं रमणमेतदित्याह । अथ ब्रह्मणः प्रेषणानन्तरमिति च ॥ ३१ ॥ अभिपश्यन् उभयतः, अन्तश्च बहिश्च पश्यन् । प्रतिपूजयन् प्रत्यक्षं पूजयन् । न तु प्रतीके । सुराश्च रविबिम्बसंस्थं पूजयन्तो रेमिरे । सुराश्च प्रतिपूजयन्, अल्लोपेन प्रत्यपूजयन्निति वा । प्रत्येकं स्वस्वयोग्यतानुगुणमपूजयन् । प्रतीके पूजा च प्रतिपूजा । आह हि रविबिम्बसंस्थमिति ॥ ३२ ॥ हरिणा न दर्शिता । अथापि देहत्यागमनुकुर्वता । अथवा तत् तस्मात् प्रादुर्भावेष्वपि भ्रान्तेरदर्शनात् । स्वरूप-देहेनाच्युतोऽपि देहत्यागस्यानुकरणेन असुरान् मोहयित्वा ॥ ३३–४ ॥ दारुकोक्त्या । **'दारुकोऽपि कुरून् गत्वा दृष्ट्वा पार्थान् महारथान् । आचष्ट मौसलं वृष्णीनन्योन्येनोपसंहृतान्'** [६.१] इति च । **'ततः शरीरे रामस्य वासुदेवस्य चोभयोः । अन्वीक्ष्य दाहयामास पुरुषैराप्तकारिभिः'** [८.३२] इति भारतवचने कृष्णशरीरदाह उच्यत इति प्रतीयते । अतस्तदाशयमाह– सृष्ट्वा स्वदेहोपमितमिति । पार्थस्तं भगवद्देहोपमितं भगवता तदा सृष्टं प्राकृतं शयानं देहमदहत् । नत्वप्राकृतं चिन्मयशरीरम् । कथमप्राकृतं दह्यते? ॥ ३५ ॥

---

१. **'समेत्य चैक्यम्'** इति क्वचित् । २. **'–सद्गुणाब्धिः ।'** इति क्वचित् । ३. **'–त्यागानुसारेण'** इति क्वचित् ।

**रौहिणेयादिकानां च शरीराणि प्रधानतः ।**
**दारुको विष्णुलोकं तु पुनराप यथागतम् ॥ ३६ ॥**

**तथैव जनमोहाय प्राप्य[1] वह्नावदृश्यताम् ।**
**[2]रुग्मिण्यगाद्धरेः पार्श्वं सत्या कृत्वा[3] तपस्तथा ॥ ३७ ॥**

**चिदानन्दैकदेहे हि[4] द्विरूपे इव ते यतः ।**
**एकैवातः कृष्णवत् ते दुष्टान् मोहयतस्तथा ॥ ३८ ॥**

**अन्या महामहिष्यस्तु त्यक्त्वा देहं हुताशने ।**
**काश्चित् काश्चित्तु[5] तपसा त्यक्तदेहा हरिं ययुः ॥ ३९ ॥**

**रौहिणेयादिकानां च भार्य्या वह्निमुखे तनुम् ।**
**त्यक्त्वा स्वभर्तृनेवाऽपुः सर्वा एव पतिव्रताः ॥ ४० ॥**

**प्रधानतः प्रधानानां रौहिणेयादीनाम् ॥ ३६–८ ॥ काश्चित् हुताशने देहं त्यक्त्वा, काश्चित् तपसा देहं त्यक्त्वा ॥ ३९–४३ ॥**

---

प्रधानानां शरीराणि, प्रधानानि वा शरीराणि अदहत् । प्राधान्येन वा ॥ ३६ ॥ यथा कृष्णो जनमोहाय शरीरमन्यत् सृष्ट्वा जगाम तथैव रुग्मिणी जनमोहाय भर्तृविरहशोकाद् वह्निं प्रविष्टेव वह्नावदृश्यतां प्राप्य, तथा सत्या तपः कृत्वा हरेः पार्श्वमगात् । **'रुग्मिणी त्वथ गान्धारी शैब्या हैमवतीत्यपि । देवी जाम्बवती चैव विविशुर्जातवेद-सम् । सत्यभामा तथैवान्याः देव्यः कृष्णस्य सम्मताः । वनं प्रविविशू राजंस्तापस्ये कृतनिश्चयाः'** [८.७४–५] इति च । जाम्बवत्याद्या जातवेदसं विविशुरेव । रुग्मिणी तु वह्नावदृश्यतां प्राप्यागात् । तदेतन्मूले तुना सूचितमाचार्यः स्फुटमाह । **'कृष्णपत्न्योऽविशन्नग्निं रुग्मिण्याद्यास्तदात्मकाः'** [११.३१.२०] इति च भागवते ॥ ३७–८ ॥ अन्याः षण्महामहिष्यः । महिषीति राजभार्योच्यते । तत्र प्रधानाः महामहिष्यः । षोडशसहस्राणि शतं च महिष्यः । अष्टौ महा-महिष्यः । तत्रापि द्वे अतितराम् । काश्चित् नीला भद्रा जाम्बवती चेति तिस्रः हुताशने देहं त्यक्त्वा हरिं ययुः । काश्चित्तु पुनरवशिष्टास्तिस्रः, मित्रविन्दा काळिन्दी लक्षणा च तपसा त्यक्तदेहा हरिं ययुः ॥ ३९ ॥ रौहिणेयादिकानां च । **'रामपत्न्त्यश्च तद्देहमुपगुह्याग्निमाविशन् । वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन् हरेः स्नुषाः'** [११.३१.२०] इति च ॥४०॥

---

१. **'प्राप व–'** २. **'रुक्मिण्यगा–'** ३. **'सत्या तप्त्वा'** इति क्वचित् ।
४. **'देहेऽपि द्वि–'** ५. **'काश्चिच्च त–'** । **'काश्चित् काश्चित् तपस्तप्त्वा त्यक्त–'** इति क्वचित् ।

वसुदेवः पार्त्थमुखाच्छ्रुत्वैतद्[1] योगमास्थितः ।
त्यक्त्वा देहं कश्यपत्वं[2] प्राप कृष्णानुरागतः ॥ ४१ ॥

तस्यार्ज्जुनोऽश्वमेधाग्नावन्त्यकर्म्माकरोत् तदा ।
त्यक्तदेहास्तस्य[3] भार्य्या वह्नौ प्रापुस्तमेव च ॥ ४२ ॥

स्त्रियो बालांस्तथाऽऽदाय धनं चैव धनञ्जयः ।
विनिर्य्ययौ द्वारवत्यास्तां [4]जग्रास च सागरः ॥ ४३ ॥

स्त्रीबालसहिते पार्त्थे एकस्मिन् पथि गच्छति ।
शापात् सुपापा आभीराः स्त्रीजनान् जह्रुरुद्धताः ॥ ४४ ॥

**एकस्मिन् असहाये पार्थे म्लेच्छवशं गच्छन्त्विति शापात् ॥ ४४ ॥**

---

वसुदेवः । **'श्वोभूते च ततः शौरिर्वसुदेवः प्रतापवान् । युक्त्वाऽऽत्मानं महातेजा जगाम गतिमुत्तमाम्'** [८.१५] इति मौसले ॥ ४१–२ ॥ **'सप्तमे दिवसे प्रायाद् रथमारुह्य सत्वरः'** [८.३३], **'स्त्रियस्ता वृष्णिवीराणां रुदन्त्यः शोककर्शिताः । अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनञ्जयम्'** [३५], **'पुत्राश्चान्धकवृष्णीनां सर्वे पार्थमनुव्रताः'** [३८], **'निर्याते तु जने तस्मिन् सागरो मकरालयः । द्वारकां रत्नसम्पूर्णां जलेनाप्लावयत् तदा'** [४२] इति च । **'द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् । वर्जयित्वा महाभाग श्रीमद्भगवदालयम्'** [११.३१.२३] इति भागवते ॥ ४३ ॥ एकस्मिन् कस्मिंश्चित् पथि । एकस्मिन्नसहाये पार्थे वा । शापात् स्त्रीजनानाम् । **'स्त्रियश्च ताः पुरा शप्ताः प्रभासे कुपितेन वै । अष्टावक्रेण मुनिना तदर्थं त्वद्बलक्षयः'** [९.३२] इति श्रीव्यासवचनं मौसले । नारदशापाद्वा । तथाहि पाद्मे–**'यदकृत्वा प्रणामं मे रूपसौभाग्यमत्सरात् । परिपृष्टोऽस्मि तेनाऽशु वियोगो वो भविष्यति । चोरैरपहृताः सर्वा वेश्यात्वं समवाप्स्यथ । एवं नारदशापेन केशवस्य च शापतः । वेश्यात्वमागताः सर्वा भवत्यः काममोहिताः'** [सृ.खं.२३.९८–१००] इति । **'जलक्रीडाविहारेषु पुरा सरसि मानसे । भवतीनां सगर्वाणां नारदोऽभ्याशमागतः । हुताशनसुताः सर्वा भवत्योऽप्सरसः पुरा'** [२३.९४–५] इति च । अस्तु नारदशापः । अष्टावक्रः किमिति शशाप? किमर्थं च शशाप? गदितमेतत् पुराणान्तरे– **'तमुत्तीर्णं च दद्दशुर्विरूपं वक्रमष्टधा । तं दृष्ट्वा गूहमानानां यासां हासः स्फुटोऽभवत् । ताः शशाप मुनिः कोपमवाप्य कुरुनन्दन । अष्टावक्रः– यस्माद् विकृतरूपं मां मत्वा हासावमानना । भवतीभिः कृता तस्मादेष शापं ददामि वः । मत्प्रसादेन भर्तारं लब्ध्वा तु पुरुषोत्तमम् । मच्छापोपहताः**

---

१. **'–च्छुत्वा तत्'** इति क्वचित् । २. **'काश्यपत्वम्'** इति क्वचित् ।
३. **'त्यक्त्वा देहांस्तस्य'** इति क्वचित् । ४. **'–स्तां च जग्रास सागरः'** । **'–स्तां जग्राह च सागरः'** इति क्वचित् ।

यास्ताः षोडशसाहस्रवनिताः शतसंयुताः ।
कृष्णशापान्म्लेच्छवशं ययुर्दर्प्पनिमित्ततः ॥ ४५ ॥

ह्रियमाणे धने चैव वनितासु च वासविः ।
युयुत्सुर्गाण्डिवं सज्यं[1] कृच्छ्रेणैव चकार ह ॥ ४६ ॥

क्षीणास्तस्य शरा दैवान्नास्त्राणि स्मृतिमाययुः ।
स तद् दैवकृतं ज्ञात्वा संस्मरन् पुरुषोत्तमम् ।
निघ्नञ्छत्रून् गाण्डिवेन शेषं रक्षन् कुरूनगात् ॥ ४७ ॥

तदा कुरुक्षेत्रगतं जगद्गुरुं[2] सुपूर्णविज्ञानबलर्द्धि[3]सत्सुखम् ।
तमेव वासिष्ठकुलोद्वहं[4] हरिं निरीक्ष्य दुःखेन पपात पादयोः ॥ ४८ ॥

**दर्पनिमित्ततः कृष्णशापात् ॥ ४५–६ ॥ शेषं धनादिकम् ॥ ४७ ॥ तमेव युद्धकाले कृष्णात्मना विजयादिप्रदमेव ॥ ४८–९ ॥**

---

**सर्वा दस्युहस्तं गमिष्यथ ।.... एवं तस्य मुनेः शापादष्टावक्रस्य केशवम् । भर्तारं प्राप्य ताः प्राप्ता दस्युहस्तं वराङ्गनाः'** [ब्रा.पु.१०३ ८१–६] इति । एतदुभयशापसङ्ग्रहायैव विशिष्य नामानिर्दिश्य केवलं शापादित्याह भगवत्पादः । सुपापा आततायिनः । आ भियं रान्तीति आभीरा घोरा गोजीविनः ॥ ४४ ॥ कृष्णशापात् । तथाहि पाद्मे– **'गच्छन् समीपमार्गेण साम्बो जाम्बवतीसुतः । साक्षात् कन्दर्परूपेण सर्वाभरणभूषितः । अनङ्गशरतप्ताभिः साभिलाषमवेक्षितः ।....तदवेक्ष्य जगन्नाथः सर्वज्ञो ध्यानचक्षुषा । स्वयम्प्रभुर्वक्ष्यति ता वो हरिष्यन्तु दस्यवः'** [सृ.खं.२३.७८–८०] इति च । म्लेच्छोऽसंस्कृतः । **'म्लेच्छो हवा एष यदपशब्दः'** इति पस्पशायां पतञ्जलिः । म्लेच्छ अव्यक्तायां वाचि । अव्यक्ता वागित्यस्फुटा वागपशब्दश्च ॥ ४५ ॥ वनितासु च ह्रियमाणासु । युयुत्सुः योद्धुमिच्छुः । हेति विषादे विस्मये च ॥ ४६ ॥ क्षीणाः । **'अस्त्राणां च प्रणाशेन बाहुवीर्यस्य च क्षयात् । धनुषश्चाविधेयत्वाच्छराणां सङ्क्षयेण च । बभूव विमनाः पार्थो दैवमित्यनुचिन्तयन् । न्यवर्तत ततो राजन्नेदमस्तीति चिन्तयन् । ततः शेषं समादाय कळत्रस्य महामतिः । हतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत्'**[८.६६–८] इति मौसले । विमना विहतमना विष्णुमनाश्च । **'स शरक्षयमासाद्य दुःखशोकसमाहतः । धनुष्कोट्या तदा दस्यूनवधीत् पाकशासनिः'** [६३] इति च ॥ ४७ ॥ कुरुक्षेत्रगते स्वाश्रमान्तरे स्थितम् । **'प्रविश्य त्वर्जुनो राजन्नाश्रमं सत्यवादिनः । ददर्शाऽसीनमेकान्ते मुनिं सत्यवतीसुतम्'** [९.१] इति च ॥ ४८ ॥

---

१. 'सज्जं कृ–' २. '–गतं जनार्दनं सु–' ३. '–बलाब्धिसत्सुखम् ।' ४. '–कुलोद्भवं हरिम्'

**स तेन पुंसां प्रवरेण हेतुभिः सम्बोधितोऽज्ञानतमोंशुमालिना ।**
**संस्थाप्य चेतः पुनरेव तस्मिन् जहौ शुचः प्रायश एव धैर्य्यात् ॥ ४९ ॥**

**स्त्रियो म्लेच्छहृताः कृष्णप्रेषिताद् दाल्भ्यतः पुनः ।**
**गोविन्दैकादशीं श्रुत्वा कृत्वा सारस्वते जले ॥ ५० ॥**

**निमज्ज्य वायोर्वचनात् त्यक्तदेहा दिवं ययुः ।**
**अर्ज्जुनस्तु कुरुक्षेत्रे हार्दिक्ययुयुधानयोः ॥ ५१ ॥**

**सुतौ सारस्वते चैव देशे राज्येऽभ्यषेचयत् ।**
**अनिरुद्धसुतं वज्रं प्रियं कृष्णस्य सद्गुणम् ॥ ५२ ॥**

**गोविन्दैकादशीं आषाढशुक्लैकादशीम् । कृत्वा, उपवासमिति शेषः । चैत्रादिशुक्लैकादशीद्वादशीनां केशवादिद्वादशमूर्तीनां (देवतात्वेन) आषाढशुक्लैकादश्या गोविन्ददेवताकत्वेन गोविन्दैकादशीत्वम् ॥ ५०–३ ॥**

---

अज्ञानतमसः अंशुमाली सूर्य इव । हेतुबोधकैर्वचनैः सम्यक्, यथा मनसि चिरं निरूढं स्यात्, बोधितः । **'भवितव्यं तथा तच्च दिष्टमेतन्महात्मनाम् । उपेक्षितं च कृष्णेन शक्तेनापि व्यपोहितुम् । त्रैलोक्यमपि गोविन्दः कृत्स्नं स्थावरजङ्गमम् । प्रसहेदन्यथाकर्तुं कुतः शापं महात्मनाम्'** [९.३०–१] इत्यादिभिः । धैर्यमालम्ब्य बाहुल्येन जहौ ॥ ४९ ॥ गोविन्दः फाल्गुनमासदेवता । फाल्गुनशुद्धैकादशी गोविन्दैकादशी । तथाहि स्मरन्ति–**'फाल्गुनामलपक्षे तु पुष्यर्क्षे द्वादशी यदि । गोविन्दद्वादशी नाम महापातकनाशनी । तस्यामुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः । प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम्'** इति । **'ततः प्रसादितो देव इदं वक्ष्यति शार्ङ्गभृत् । ताभिः शापाभितप्ताभिर्भगवान् भूतभावनः ।...उपदेक्ष्यत्यनन्तात्मा भाविकल्याणकारकम् । भवतीनामृषिर्दाल्भ्यो यद् व्रतं कथयिष्यति'** [सृ.खं.२३.८१–३] इत्यादि पाद्मे । आषाढशुक्लैकादशी गोविन्दैकादशीत्यपि वदन्ति । मूलं तु मृग्यं भवति । वायोर्वचनात् आकाशभाषितात् । सारस्वते जले निमज्ज्य । हार्दिक्यस्य कृतवर्मणः सुतमश्वपतिं कुरुक्षेत्रे मार्तिकावते नगरे । युयुधानस्य सुतं सरस्वतीतीरे । तथाहि मौसले– **'हार्दिक्यतनयं पार्थो नगरे मार्त्तिकावते । अश्वपतिं खाण्डवारण्ये राज्ये तत्र न्यवेशयत्'** [८.७०] इति, **'यौयुधानिं सरस्वत्यां पुत्रं सात्यकिनः प्रियम् । न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम्'** [७२] इति च ॥ ५०–१ ॥ अनिरुद्धसुतं वज्रम् । **'इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा'** [७३] इति च । **'इन्द्रप्रस्थं समावेश्य वज्रं तत्राभ्यषेचयत्'** [११.३१.२५] इति भागवते । शूरसेनैः सहितं सशूरसेनम् । मधुरासहित-

सशूरसेनेन्द्रप्रस्थराजानमकरोद् वशी ।
स्त्रीबालांश्च धनं चैव तस्मिन् संस्थाप्य फल्गुनः ॥ ५३ ॥

ययौ भ्रातॄनशेषं च वृत्तं तेषामवर्ण्णयत् ।
ते [१]चावियोगसमयं स्मरन्तो मुरवैरिणा[२] ॥ ५४ ॥

अभ्यषिञ्चन् भागवतं माहाराज्ये[३] परीक्षितम् ।
स्त्रीहारिणां च म्लेच्छानां वधायैनमयोजयन् ॥ ५५ ॥

कृतं च तेन तत् कर्म्म वोढ्रा पैतामहं[४] धुरम् ।
समयं परिरक्षद्भिर्न्न पार्त्थैरेव यत्[५] कृतम् ॥ ५६ ॥

वासुदेवपदा स्पृष्टभूकण्टकसमुद्धृतिः ।
समयः पाण्डवानां हि तस्यैवानुगतिः परम् ॥ ५७ ॥

**अवियोगसमयम्, कृष्णवियोगानन्तरं राज्यपालनादिकं न कुर्मः, तमेवानुगमिष्याम इति सङ्केतम् ॥५४–५॥ (पै)तामहमर्जुनसम्बन्धीत्यर्थः । पार्थेनैव कुतो न कृतमित्यत आह–समयमिति ॥ ५६ ॥ कोऽसौ समय इत्यत आह–वासुदेवपदा वासुदेवपादेन स्पृष्टा च सा भूश्च स्पृष्टभूः । तस्याः कण्टक-समुद्धृतिः । परं समुद्धृतेः ॥ ५७–६३ ॥**

---

मिन्द्रप्रस्थमित्येतत् । **'मधुरायां तथा वज्रं शूरसेनपतिं ततः'** [१.१५.८] इति च भागवते ॥ ५२–३ ॥ ते चावियोगसमय-मित्यादिना महाप्रस्थानिकपर्वकथां निर्णिनाय **'यादवाश्चेति पप्रच्छ'** [९४] इत्यन्तम् । अवियोगो निरन्तरं भगवद्योगः ॥ ५४ ॥ महाराजत्वे । **'स्वराट् पौत्रं विनीतं तमात्मनोऽनवमं गुणैः । तोयनीव्याः पतिं भूमेरभ्यषिञ्चद् गजाह्वये'** [१.१५.७] इति च । **'अभिषिच्य स्वराज्ये च राजानं च परीक्षितम्'** [महाप्र.१.७] इति महाप्रस्थानिके ॥ ५५ ॥ तत् स्त्रीहारिणां म्लेच्छानां वधाख्यं कर्म । पैतामहं धुरम् । धुरशब्दोऽयम् । तथाहि प्रयोगः–**'वाजिभिर्धुरवा-हिभिः–'** इति । **'खः सर्वधुरात्'** [अ.सू.४.४.७८] इति वदन् पाणिनिरप्येतत् सूचयतीव । लिङ्गव्यत्ययो वा । वक्ष्यन्ति हि वैयाकरणा व्यत्ययो बहुलं सुप्तिङुपग्रहलिङ्गनराणामिति । तेन धुरा सहासमानं पौरुषमप्याह धूर्वहनदक्षम् । धुरं वोढ्रा धुरीणेन तत् पैतामहं पितामहनियुक्तं कर्म कृतमिति वा ॥ ५६ ॥ किं तत् यन्न कृतं पार्थैः? वासुदेवपदाभ्याम-

---

१. **'ते वै वियोग–'** इति, **'ते चापि योगस–'** इति च क्वचित् । २. **'–वैरिणः ।'** ३. **'महाराज्ये'**
४. **'पैतिामहीम्'** ५. **'–रेव तत्'**

**अनुव्रजद्भिर्विश्वेशं नास्माभिर्भूस्तदुज्झिता ।**
**भोज्या[१] रक्ष्याऽपि वा तेषामित्येव समयः पुरा ॥ ५८ ॥**

**तत्र काळी[२] भीमभार्य्या वैष्णवं योगमास्थिता ।**
**कृष्णयैकत्वमापन्ना त्यक्त्वा देहं तु मानुषम् ॥ ५९ ॥**

**सुभद्राद्यास्तु या भार्य्याः पार्त्थानां तु तदाज्ञया ।**
**युयुत्सुश्चात्र शिक्षार्त्थं पौत्रस्यैवावसन् पुरे[३] ॥ ६० ॥**

**सन्त्यज्य राज्यचिह्नानि[४] वैष्णवं योगमास्थिताः ।**
**वीराध्वानं ययुः सर्वे कृष्णया सह पाण्डवाः ॥ ६१ ॥**

**प्रागुदीचीं दिशं पूर्वं ययुस्तत्रार्ज्जुनो धनुः ।**
**नात्यजल्लोभतस्तं तु[५] समुद्रमुप पावकः ॥ ६२ ॥**

---

स्पृष्टाया भुवः कण्टकस्य समुद्धृतिरित्येतत् । कुतस्तैर्न कृतम्? यतस्तेषां वासुदेवपदा सदा स्पृष्टाया एव भुवः कण्टक-समुद्धृतिः समयः । शपथः सिद्धान्तो वा । ततः परं कृष्णस्यैवानुगमनं च ॥ ५७ ॥ इत्येव तेषां समयः पुरा कृतः ॥ ५८–९ ॥ सुभद्राद्यास्तु । धर्मराजभार्या देवकी । भीमस्य देव्याद्या एकविंशतिर्भार्याः । नकुलस्य माद्री च पार्वती च । सहदेवस्य मागधी च । **'कृपप्रभृतयश्चैव युयुत्सुं पर्यवारयन् । विवेश गङ्गां कौरव्य उलूपी भुजगात्मजा । चित्राङ्गदा ययौ चापि मणलूरपुरं प्रति । शिष्टाः परीक्षितं त्वन्या मातरः पर्यवारयन्'** [महाप्र.प.१.२८–९] इति भारते । **'ततो युयुत्सुमानाय्य प्रव्रजन् धर्मकाम्यया । राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः'** [१.६] इति, **'दुःखार्तश्चाब्रवीद् राजा सुभद्रां पाण्डवाग्रजः'** [७] **'वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः'** [९] इति च ॥६०॥ राजयोग्यानि चिह्नानि सर्वात्मना त्यक्त्वा । वीराणामेव साध्यमध्वानम् । वीरमरणमिच्छतां योग्यमध्वानम् । उत्तरापथम् ॥ ६१–२ ॥ तदर्थं नोत्तरां दिशं प्रथमं ययुः । किन्तु प्रागुदीचीमैशानीं पूर्वं ययुः । ततः प्राचीम् । ततो दक्षिणां पश्चिमां च । अन्ते पुनरुत्तरापथमाश्रित्य गन्धमादनं ययुरिति । **'ततस्ते चोत्तरेणैव तीरेण लवणाम्भसः । जग्मुर्भरतशार्दूल दिशं दक्षिणपश्चिमाम् । ततः पुनः समावृत्ताः पश्चिमां दिशमेव ते । ददृशुर्द्वारकां चापि सागरेण परिप्लुताम् । उदीचीं पुनरावृत्त्य ययुर्भरतसत्तमाः । प्रादक्षिण्यं चिकीर्षन्तः पृथिव्या योगधर्मिणः'** [महाप्र. १.४५–७] इति च ॥ ६२ ॥

---

१. **'भोक्ष्या रक्ष्याऽपि'** २. **'काली'** ३. **'–सन् गृहे ।'** इति क्वचित् ।
४. **'राजचिह्नानि'** ५. **'–ल्लोभतस्तत्तु'**

**दृष्ट्वा ययाचे राजानं तदुक्तः प्रास्यदम्बुधौ ।**
**प्रातिभाव्यं तु वरुणे निस्तीर्य्याग्निरदृश्यताम्** ॥ ६३ ॥

**ययौ तेऽपि ययुः क्षिप्रं प्लवन्तः सप्त वारिधीन् ।**
**अहोभिः सप्तभिर्य्योगं समारूढाः प्रदक्षिणम्** ॥ ६४ ॥

**कृत्वा क्वचिदसज्जन्त आसेदुर्गन्धमादनम् ।**
**तत्र नारायणक्षेत्रे तेषां तन्वोऽपतन् क्रमात्** ॥ ६५ ॥

**सप्तभिरहोभिः प्रदक्षिणं कृत्वा ॥ ६४–६ ॥**

---

ययाचे राजानम् । **'अयं वः फल्गुनो भ्राता गाण्डीवं परमायुधम् । परित्यज्य वने यातु नानेनार्थोऽस्ति कश्चन'** [४०] इति च । वने सागरजले । तदुक्तः पावकोक्तः भ्रातृभिश्चोक्तः । **'ततस्ते भ्रातरः सर्वे धनञ्जयमचोदयन् । स जले प्राक्षिपच्चैतत् तथाऽक्षय्ये महेषुधी'** [४३] इति च । प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण समयः । 'జామీను' इति भाषायाम् । **'दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते'** [या.स्मृ.व्यव.५३] इति याज्ञवल्क्यः । व्याचख्यौ च विज्ञानेश्वरः–**'प्रातिभाव्यं नाम पुरुषान्तरेण सह समयः । तच्च विषयभेदात् त्रिधा भिद्यते । यथा दर्शने–'दर्शनापेक्षायामेनं दर्शयिष्यामि' इति । प्रत्यये विश्वासे–'मम प्रत्ययेनास्य धनं प्रयच्छ । नायं त्वां वञ्चयिष्यते । यतोऽमुकस्य पुत्रोऽयम् । उर्वरप्रायभूरस्य ग्रामवरोऽस्ति' इति । दाने –'यद्ययं न ददाति तदानीमहमेव दास्यामि' इति'** इति । खाण्डवदाहस्य प्रतिफलतया, अहमेव प्रतिदास्यामीति प्रातिभाव्यं कृत्वा वरुणादानीयार्जुनाय दत्तं गाण्डीवं वरुणे निस्तीर्य वरुणाय प्रत्यर्प्य ॥ ६३ ॥ ननु कथमम्बुधौ धनुःप्रासः? हस्तिनपुरादुत्तरापथं प्रस्थितानां कथमम्बुधि-दर्शनम्? अस्योत्तरं पूर्वमेव दत्तम् । प्रागुदीचीं दिशं पूर्वमिति । **'प्रादक्षिण्यं चिकीर्षन्तः'** इति च भारते । तच्च प्राद-क्षिण्यं च सागरतीर इति मूले प्रतीयते–**'तीरेण लवणाम्भसः'** इति । अतस्तत्तात्पर्यमाह– प्लवन्तः सप्त वारिधीनिति । नहि समुद्रतीरे भारतखण्डपरिभ्रमणमात्रेण समग्रायाः पृथिव्याः प्रादक्षिण्यकरणं भवति । सप्तसागरपर्यन्ता हि पृथिवी । श्रूयते च पृथिवी परिभ्रमणं भारते–**'प्रादक्षिण्यं चिकीर्षन्तः पृथिव्याः'** इति । तेन ज्ञायते सप्तसागरानपि प्लवमाना ययुरिति । तेनादृश्यान् पृथिवीभागानप्यतीत्य ययुरित्युदितं भवति । कथं मनुष्यशरीरेण क्षीरसागरपर्यन्तं भ्रमणमिति शङ्कायामुक्तम्–योगं समारूढा इति । **'योगधर्मिणः'** इति भारते । अणिमादिसिद्धिर्योगः । यैतावत्पर्यन्तं नोपयुक्ता तां समग्रां योगसिद्धिमुपयुञ्जाना इत्यर्थः । मनसो भगवति योगश्च योगः । पूर्वमेव स्थितो भगवद्योगः इदानीं सम्यक् परि-स्फुटमभिव्यक्तो बभूव । प्लवनमपि न स्वयोगसिद्धिप्रदर्शनार्थम् । नापि स्वेच्छया । किन्तु भगवदिच्छानुगुणतया भगवत्पूजात्वेनेति प्लवन्त इति परस्मैभाषा ॥ ६४ ॥ एवं समाप्तपृथिवीप्रदक्षिणा अन्ते पुनरुत्तरापथमाश्रित्य गन्ध-

द्रौपदीसहदेवादिपश्नानां तत्र मारुतिः ।
सदेहनाकानिच्छुत्वाद्[1] देहप्रपतनं हि तत् ॥ ६६ ॥

तेषामिहेति याथात्थ्यं जानन् पप्रच्छ धर्म्मजम् ।
केनकेनापतद् देहो दोषेण न इति क्रमात् ॥ ६७ ॥

मृतिकाले हि यो यस्य दोषं वक्त्यृणमोचनम् ।
तस्मात् स्यादुक्तदोषस्येत्याह [2]यच्छ्रुतिरेव तत् ॥ ६८ ॥

ऋणमोक्षाय[3] सर्वेषां भीमो दोषानवादयत् ।
सोऽपीच्छापतितान् देहानजानञ्छुद्धकर्म्मणाम् ॥ ६९ ॥

अपश्यन् कारणं प्राह दोषान्[4] स्यादेवमित्यपि ।
राजा सम्भावनामात्रं[5] नहि कार्य्यमकारणम् ॥ ७० ॥

'स्वच्छन्दमृत्यवो योगाद् देहानुत्सृज्य पाण्डवाः ।
कृष्णा चाऽपुः परं स्थानं यन्न[6] यान्त्यपि देवताः' ॥ ७१ ॥

**तेषां द्रौपद्यादीनाम् ॥ ६७ ॥ तस्मात् दोषमुक्तवतः । उक्तो दोषो यस्य (तस्य उक्तदोषस्य) ॥ ६८ ॥ स राजाऽपि कार्यमकारणं न हि यस्मात् तस्मात् एवं स्यादपि भवितुमर्हत्यपि इति सम्भावनामात्रं यथा भवति तथा दोषान् प्राह ॥ ६९–७० ॥ विद्यमाना एव दोषास्तदुक्ताः किं न स्युरित्यतस्तेषां दोषाभावं**

---

मादनमासेदुः ॥ ६५–७ ॥ उक्तो दोषो येन तस्योक्तदोषस्य दोषवक्तुः यदि किञ्चिदृणं दातव्यं स्यात् तस्मान्मोचन-मानृण्यं स्यान्मृतस्य । तस्मात् दोषवचनाद्धेतोः । अथवा तस्मात् दोषवक्तुः, तस्मात् दोषवचनादेव उक्तो दोषो यस्य तस्य दोषोक्तिकर्मणो मृतस्य ऋणमोचनं स्यात् । अथच तस्माद् दोषवक्तुः ऋणमोचनं स्यात् । कस्य हेतोः । उक्तस्य दोषस्य हेतोः ॥ ६८–९ ॥ न हि कार्यमकारणं भवति । तत् केनापि कारणेन भवितव्यम् । तत इदं कारणं स्यादिति सम्भावनामत्रं कारणं प्राह ॥ ७०–३ ॥

---

१. '–निच्छत्वाद्–' २. '–ह तच्छ्रुति–' ३. 'ऋणमोक्षणाय'
४. 'दोषात् स्या–' ५. '–नामात्रान्नहि' ६. 'यन्नाऽयान्त्यपि'

इति श्रुतेर्न्न ते पापाद् देहांस्तत्यजुरूर्ज्जिताः ।
'ऋणान्युन्मुच्य दोषोक्त्या स्वानां भीमः स्वकां तनुम् ॥ ७२ ॥

'तत्याज परमं ध्यायन्नाप च स्थानमुत्तमम्' ।
इति [१]स्कान्दपुराणोक्तं व्यासवाक्यमृषीन् प्रति ॥ ७३ ॥

भीमादृते हि चतुर्षु पक्षपातस्तु वासवौ ।
योग्य एवेति कृष्णाया न दोषः स्यात् कथञ्चन ॥ ७४ ॥

नीतिरूपे वीर्य्यबले महान्त्येषां यतः[२] क्रमात् ।
प्राणत्वाद् भोगशक्तिश्च नहि दोषाय मारुतेः ॥ ७५ ॥

'यथास्वरूपविज्ञानमात्मन्यपि न दोषकृत्' ।
इति व्यासस्मृतेरेषामुक्तदोषोद्भवः कथम् ॥ ७६ ॥

**श्रुत्योपपादयति– स्वच्छन्देति ॥ ७१–३ ॥ अतस्तदुक्तदोषान् वदन्नेव तेषां तदुक्तदोषाभावं कुत्रचिद् भावेऽपि तस्य देहपाते हेतु(त्वाभाव)माह– भीमादृत इत्यादिना ॥ ७४–६ ॥**

---

ननु दोषो दोष एव । कथं सम्भावनामात्रम्? आह– भीमादृते । **'पक्षपातो महानस्या विशेषेण धनञ्जये । तस्यैतत् फलमद्यैषा भुङ्क्ते पुरुषसत्तम'** [२.६] इति धर्मराजवचनम् । स्वस्मिन् यादृशः पक्षपातः ततोऽपि महान् अधिकः पक्षपातो धनञ्जय इति वचनार्थः । तेन भीमादृत इति स्फुटम् ॥ ७४ ॥ नीतिः सहदेवे । रूपं नकुले । वीर्यमर्जुने । बलं भीमे । वायुर्हि बलदेवता । तथाहि धर्मराजवचनं सहदेवपतने–**'आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कश्चन । तेन दोषेण पतितो विद्वानेष नृपात्मजः'** [१०] इति । नकुलपाते–**'रूपेण मत्समो नास्ति कश्चिदित्यस्य दर्शनम्'** [१६] इति । अर्जुनपाते–**'एकोऽहं निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत् । नच तत् कृतवानेष शूरमानी ततोऽपतत्'** [२१] इति । भीमपतने–**'अतिभुक्तं च भवता प्राणेन च विकत्थसे । अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ'** [२५] इति । नन्वतिभुक्तं कथं न दोषः? आह–प्राणत्वाद् भोगशक्तिश्च । सर्वजीवजातभुक्तमन्नं जरयितुः प्राणस्य कथं बहुभोगो नाम दोषः । उक्तं हि भगवतैव–**'प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्'** [भ.गी. १५.१४] इति । भगवतोऽनन्तरं सर्वजगदत्ता प्राण एव हि । तेन सर्वपितुः पितुमत्त्वं गुण एव, न दोषः ॥ ७५ ॥ नहि पण्डितमात्मानं मन्यमानः पण्डितः पातकी भवति । नहि यथार्थज्ञानं क्वापि पापाय । किन्तु तन्मूलो दर्पः पापहेतुर्भवति ॥ ७६ ॥

---

१. **'स्कन्दपुरा–'**

२. **'यथा'** इति क्वचित् ।

कदाचिदतिमानोऽपि त्रयाणामेषु जायते ।
तथाऽपि तत्फलं नैतत् तारतम्यं हि मुक्तिगम् ॥ ७७ ॥

गुणदोषाधिकाल्पत्वादत्रस्थमपि हि श्रुतम् ।
[१]आरब्धकर्म्मनाशे हि पतेद् देहोऽप्यपापिनः ॥ ७८ ॥

युधिष्ठिरोऽपि हि स्वर्ग्गं बुभुजे नैव तत्तनुः ।
अतिमानादयो दोषाः कुत एव हि मारुतेः ॥ ७९ ॥

**एषु अर्जुनादिषु त्रिषु । कदाचिदतिमानः यथास्वरूपमतिक्रम्य ज्ञानम्, अहङ्कार इति यावत् । तथाऽपि अतिमाने सत्यपि । एतत् देहपतनं तत्फलं न । कुतः? गुणदोषाधिकाल्पत्वात् । अपरोक्षज्ञानोत्तरकृतगुणानामधिकत्वात्, दोषाणामशुभानामल्पत्वान्निमित्तात् । अत्रस्थमपि मुक्तेः प्राक् भोग्यत्वेन प्राप्तमपि । तारतम्यं सुखतारतम्यम् । अपरोक्षज्ञानोत्तरं शुभाशुभकृतं यत्सुखतारतम्यं भवतीत्यर्थः । शुभकृत आनन्दो वर्धते । अशुभकृतस्त्वशुभफलं प्राप्तानन्दह्रास एव । न दुःखभोगः । एतादृशं शुभाशुभफलं मुक्तावेव भवति । (तस्मान्नातिमानफलं देहपात इति।) । (देहपा)ते (किं) तर्हि कारणमित्यत आह– प्रारब्धेति । अपापिनोऽपि पापाकृतोऽपि देहः प्रारब्धकर्मनाशे देहारम्भककर्मनाशे पतेद्धि पतेदेव । तथाचैतेषां देहपातः पापफलान्न भवति । किन्तु प्रारब्धकर्मनाशादेवेत्युक्तं भवति । प्रारब्धकर्मनाशाभावे देहपाताभा(वात्) । युधिष्ठिरोऽपि तत्तनुः प्रारब्धकर्मनाशाभावादपतितयुधिष्ठरतनुः स्वर्गं गतोऽपि स्वर्गं स्वर्गभोगं न बुभुजे हि । स्वर्गं गतस्यापि युधिष्ठिरस्य प्रारब्धकर्मनाशाभावाद् देहोऽपतित इति भावः ॥ ७७–८३ ॥**

कदाचित् विरळतया । अतिमान आत्मसम्भावना कोऽन्योऽस्ति सदृशो मयेति । स्वस्य यावती समुन्नतिस्ततोऽप्यधिकत्वविभ्रमः । त्रयाणामर्जुनादीनाम् । अथापि तत्फलं नैतत् । नह्यतिमानेन क्वापि शरीरपतनं भवति । किन्तु मुक्तिगं तारतम्यं तत्फलमिति हि शास्त्रसिद्धं प्रमेयम् । मुक्तौ गुणाधिक्य आधिक्यम् । गुणाल्पत्वेऽवरत्वमिति स्वरूपतारतम्यमेव भवति । न तु देहपतनम् । अत्रस्थमपि तारतम्यं गुणदोषाधिकाल्पत्वादेव हि लोके निश्चीयते । गुणाश्च दोषाश्च गुणदोषाः । अधिकाश्च अल्पाश्च अधिकाल्पाः । तेषां भावोऽधिकाल्पत्वम् । गुणदोषाणामधिकाल्पत्वमिति विग्रहः । गुणानां दोषाणां चाधिकत्वाल्पत्वाभ्यामित्यर्थः । पापान्न देहपतनमित्युक्तम् । इदानीमपापेऽपि देहपतनमाह– आरब्धकर्मनाश इति । सत्यपि यस्मिन् न कार्यं भवति, असत्यपि भवति तत् तस्य कथं कारणं भवेत्? किन्त्ववर्जनीयसन्निधिरेव । काकपक्ष इव मृतस्य शिरसि ॥ ७७–८ ॥ पापभावादेव देहपतने युधिष्ठिरस्य देहः किं न पपात । उक्तदोषाणामभावं

१. 'प्रारब्ध–' । वे.ती. पाठोऽपि तथा ।

**अनादिकालतः सर्वदोषहीना गुणाधिकाः ।**
**सर्वजीवगणेभ्यो ये ते हि वायुत्वमाप्नुयुः ॥ ८० ॥**

**ऋजवो नाम ये देवा देवानामपि देवताः ।**
**अभावं ह्यतिमानादेर्भीमस्याऽह च केशवः ॥ ८१ ॥**

**'यत्किञ्चाऽत्मनि कल्याणं सम्भावयसि पाण्डव ।**
**'सहस्रगुणमप्येतत् त्वयि सम्भावयाम्यहम्' ॥ ८२ ॥**

**इति तस्माद् यथा युद्धे धर्म्महानिममन्यत ।**
**एवमत्राप्यधर्म्मेण देहपातं नृपोऽब्रवीत् ॥ ८३ ॥**

**पूज्येभ्यः पूर्वमेवैषां देहपातमभीप्सताम् ।**
**तत्कामाद्[1] देहपातोऽभून्न पापान्मुच्यतां यथा ॥ ८४ ॥**

**नहि पापफलान्मुक्तौ[2] देहपातः कथञ्चन ।**
**किन्तु कर्म्मक्षयादेव तथा सर्वत्र निश्चितः[3] ॥ ८५ ॥**

**मुच्यतां मोक्षं प्राप्नुवताम् ॥ ८४–५ ॥**

---

स्वस्मिन् स मन्यते । ननु सा भ्रान्तिः । तर्हि ततोऽपि मूलं गच्छ । दोषाद् देहपतनमिति भावनैव भ्रान्तिरिति ॥ ७९॥ दोषा मोक्षपरिपन्थिनो मोक्षे वा सुखह्रासहेतवः । मोक्षहेतवो मोक्षे वा सुखाधिक्यहेतवो गुणाः ॥ ८०–१ ॥ **'यत् किञ्च–'** [उ.प.७६.३] इति कृष्णवचनं पूर्वमुद्धृतं द्वितीयाध्याये । अत्र **'आत्मनि विद्यमानं बहुगुणमपि कल्याणं यत्किञ्चिन्मन्यसे'** इत्यल्पताज्ञानमुच्यते नातिमानः । तेन **'विकत्थसे'** इति धर्मजवचनं सम्भावनामात्रमूलमिति स्फुटम् ॥ ८२ ॥ इत्याह केशव इति पूर्वश्लोकेनान्वयः । यः कस्य वायोरपीष्टे प्रवर्तयति च स्वकर्मसु तम् । तन्मनःप्रवर्तकश्च ॥ ८३ ॥ ज्यायस्त्वेन पूज्येभ्यः पूर्वजेभ्यः । न पापात् देहपातः । यथा मुच्यमानानां देवानामवरजानां पूर्वं देहलयः । पूर्वजानां पश्चात् । भगवत्सङ्कल्पानुगुणं मुच्यमानानामित्येतमर्थं सूचयितुमेव मुच्यतामिति शत्रन्तता । **'तेन मुच्यन्ति जन्तवः'** इत्यादिवदयं प्रयोगः ॥ ८४ ॥ ननु दृष्टान्तोऽपि विवादपदम् । मुच्यमानानामपि पापादेव देहपातः किं न स्यात्? अत आह–नहि । कथञ्चन केनापि प्रकारेण दुरुपपादमेवैतत् । सर्वत्र सर्वमरणेष्वपि कर्मक्षयादेव निश्चितो

---

१. **'तत्क्रमाद्–'** इति क्वचित् । २. **'–फलं मुक्तौ'** ३. **'निश्चयः ।'** इति क्वचित् ।

**तेषु स्वलोकान् प्राप्तेषु धर्म्मजश्चाऽत्मना[१] सह ।**
**ययौ पुरो देवरथस्तदाऽस्यावततार ह ॥ ८६ ॥**

**रथमारुहेति कथितो रथिना पुरतः शुनः ।**
**आरोहमब्रवीन्नैतद् युक्तमित्याह सोऽपि तु[२] ॥ ८७ ॥**

**नाऽरुहेयं विना श्वानमिति तेन स्थिरोदिते ।**
**स्वरूपं दर्शयामास धर्म्मो ह्यात्तः [३]श्वरूपताम् ॥ ८८ ॥**

**आनृशंस्यपरत्वेन कीर्त्तिमेवाऽत्मनो वृषः ।**
**ख्यापयामास कौन्तेयरूपिणो धर्म्मसूक्तिभिः ॥ ८९ ॥**

**ततः स रथमारुह्य लोकानामुत्तरोत्तरम् ।**
**अतिक्रम्याखिलान् राज्ञो जगाम श्रीपतिप्रियः ॥ ९० ॥**

**(श्व)रूपधारिणा आत्मना यमेन, दैवादागतेनेति भावः । ययौ स्वर्गमिति शेषः ॥ ८६–९५ ॥**

---

देहपातः । सर्वत्र सर्वशास्त्रेषु निश्चितः सिद्धान्तश्चायम् ॥ ८५ ॥ आत्मना शरीरेण सह । नतु भ्रातर इव शरीरपातेन । आत्मना स्वरूपभूतेन शुना च सह । अस्य पुरः देवस्येन्द्रस्य रथः । **'ततः सन्नादयन् शक्रो दिवं भूमिं च सर्वशः । रथेनोपाययौ पार्थमारोहेत्यब्रवीच्च तम्'** [३.१] इति महाप्रस्थानिके । भारते **'आरोह'** इति पठ्यते । भगवत्पादः **'आरुह'** इत्याह । **'आरुहेयम्'** इत्याह । तेन बोधयति बुधांश्च बुभुत्सूंश्च यत् प्रतनानां मते रुहतिस्तुदादिष्वपि पठितः शविकरण इति । अत एव 'अरोह्वा' इति प्रयुञ्जते, 'आरुहत्' इति प्रयुञ्जते प्रतनाः प्राज्ञाः । **'आ हि रुहतमश्विना'** [ऋ.सं.८.२२.९], **'आ यद् रुहाव वरुणश्च नावम्'** [७.८८.३], **'सहस्रवल्शा वि वयं रुहेम'** [३.८.११] इत्याद्याः प्रयोगा वेदेषु ॥ ८६ ॥ रथिना रथपतिना शक्रेण रथमारुहेति कथितो धर्मजः पुरतः शुन आरोहमब्रवीत् । सोऽपि इन्द्रोऽपि । नैतद् युक्तमित्याह । **'स्वर्गे लोके श्ववतां नास्ति धिष्ण्यम्'** [३.१०] इति च । तुना देवानां परीचिक्षिषेयमित्याह ॥ ८७ ॥ **'–नाहं जातु कथञ्चनाद्य त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्र'** [३.११] इति च । **'नित्यमेतद् व्रतं मे'** [१२] इति स्थिरोदिते । श्वरूपः धर्मः स्वरूपं दर्शयामास ॥ ८८ ॥ कौन्तेयरूपिण आत्मनः धर्ममयीभिः सूक्तिभिः । आत्मनः कीर्तिमेव ख्यापयामास । आनृशंस्यमक्रौर्यम् । वृषो धर्मः ॥ ८९ ॥ उत्तरोत्तरमुपर्युपरि

---

१. **'धर्मजः स्वात्मना'** । **'–श्वात्मना'** इति क्वचित् । वे.ती. पाठोऽपि तथा स्यात् ।

२. **'सोऽपि तम् ।'**

३. **'स्वरूपताम्'**

**सर्वेषामुत्तरं लोकमैन्द्रं प्राप्येदमेव ते ।**
**स्थानमित्युदितो देवैर्दुर्य्योधनमवैक्षत ॥ ९१ ॥**

**सभ्रातृकं ज्वलन्तं च सर्वेषामुपरि स्थितम् ।**
**तं दृष्ट्वा परमक्रुद्धो निमील्य नयने शुभे ॥ ९२ ॥**

**भ्रातरो मे क कृष्णा च सकर्णाः[1] क च बान्धवाः ।**
**धृष्टद्युम्नादयः पुत्रा हैडिम्बाद्याश्च सर्वशः ॥ ९३ ॥**

**यादवाश्चेति पप्रच्छ देवांस्ते[2] च तमब्रुवन् ।**
**किं ते तैः स्वकृतं कर्म्म भुज्यतेऽत्र नचापरैः ॥ ९४ ॥**

**इत्युक्त आह पापोऽयं पृथिवीक्षयकारकः ।**
**सर्वातिशङ्की मित्रध्रुङ् नारायणपराङ्मुखः ॥ ९५ ॥**

**नास्तिकोऽतिशठः क्रूरो द्वेष्टा विष्णोश्च तद्भुवाम् ।**
**कथं दुर्य्योधनः स्थानं सर्वोत्तममवाप्तवान् ॥ ९६ ॥**

**तद्भुवाम् । तस्मिन् भवन्तीति तद्भुवः । तद्भक्ता इत्यर्थः ॥ ९६–१०६ ॥**

---

उत्तममुत्तमं लोकमतिक्रम्य । तत्रत्यान् राज्ञश्चातिक्रम्य ततोऽप्युत्तमं लोकं जगाम । श्रीपतिप्रियत्वात् । **'येऽपि राजर्षयः पूर्वे ते चापि समुपस्थिताः । कीर्तिं प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति'** [३.२७] इति च ॥ ९० ॥ सर्वेषा-मुत्तरं लोकम् । त्रिलोक्यामुत्तरम् ॥ ९१ ॥ ज्वलन्तं श्रिया भ्राजमानम् । **'दुर्योधनं श्रिया जुष्टं ददर्शाऽसीन-मासने । भ्राजमानमिवाऽदित्यं वीरलक्ष्म्याऽभिसंवृतम्'** [स्व.प.१.४] इति स्वर्गारोहणे ॥ १२ ॥ सकर्णा भ्रातरः । धृष्टद्युम्नादयो बान्धवाः । हैडिम्बाद्याश्च पुत्राः । घटोत्कचस्य प्रथमपुत्रत्वान्मुखतो ग्रहणम् । हैडिम्बपदेनेदमाह–वेद-व्यासादेशेन हिडिम्बाया वरणात् तत्पुत्रस्यापापत्वं निश्चितमिति । सर्वशः सर्वे ॥ ९३ ॥ यादवा अपि बान्धवाः । अथापि कृष्णबन्धव इति पृथगाह । समाप्तो महाप्रस्थानसङ्ग्रहः । अथ स्वर्गारोहणसङ्ग्रहः । **'निजमुक्तियोगम्'** [१३०] इत्य-न्तम् । किं ते तैः । अत्र स्वकृतमेव पुण्यं कर्म भुज्यते । नापरैरकृतपुण्यैः । नाप्यत्रापरैः कृतं कर्मापरैर्भुज्यते, यथा पृथिव्याम् ॥ ९४ ॥ पराङ्मुखः भक्तिरहितः ॥ ९५ ॥ न केवलं भक्तिरहितः । विष्णोः तद्भुवां तदाश्रितानां च द्वेष्टा च । नास्तिक ऋणङ्कृत्वाघृतम्पिबः । स्वहितमेव धर्मः स्वाहितमेवाधर्म इति मन्वानः शठः, यस्य धर्माचरणमपि लोकप्रतारणाय । यस्य

---

१. 'च कर्णाद्याः क' २. **'देवास्ते'**

**कथं च सर्वधर्म्मज्ञा नारायणपरायणाः ।**
**संस्थिताः परमे धर्म्मे दृश्यन्तेऽत्र न मत्प्रियाः ॥ ९७ ॥**

**यत्र सन्तस्तु ते सन्ति तत्र स्थातव्यमेव मे ।**
**निरयेऽपि नचात्रापि नानेन[1] सह पापिना ॥ ९८ ॥**

**अस्य वीरतमस्येदं धार्त्तराष्ट्रस्य युज्यते ।**
**इत्युक्ता देवता दूतं स्वानां सन्दर्शनार्त्थिनः ॥ ९९ ॥**

**राज्ञः सम्प्रेषयामासुस्तत्सन्दर्शितवर्त्मना ।**
**दुर्ग्गन्धेन सुकृच्छ्रेण तमसा प्रावृतेन च ॥ १०० ॥**

---

वचस्येकम्, मनस्येकम्, कर्मण्येकम् । अनृजुरित्येतत् । स पुनरतिशठो भवति यस्य सविधे न कदाऽप्यार्जवं प्रसरति । क्रूरो यो हिंसया रमते ॥ ९६ ॥ ईश्वरार्पणबुद्ध्या कृतो धर्मः परमः । **'परम ईश्वरार्पणेन'** इति भगवत्पाद-वचनम् । **'कुर्वन्नेवेह कर्माणि'** इति श्रुतिवचनम् । संस्थिताः सानन्दं स्थिताः । मत्प्रिया नात्र दृश्यन्ते । अहं प्रियो येषां मम च ये प्रियाः । ये च न मत्प्रियाः । अथच ये नमत्प्रियास्त एव दृश्यन्ते । त्वमेवेन्द्रश्चन्द्र इति त्वत्कृतमेव साधु नास्ति त्वत्सम इति ये स्तावंस्तावं कृतप्रह्वीभावनटना नमन्ति त एव प्रिया येषाम् । बन्दिस्तवं श्रावंश्रावं तुन्द-परिमृजाः । संस्थिताश्च परमे अधर्मे, इति वाक्यभेदेन पुनरर्थान्तरम् ॥ ९७ ॥ कुत्सिते निरयेऽपि तत्रैव स्थातव्यम् । अपिः कुत्सायाम् । सुखमयेऽप्यत्र नाके न स्थातव्यम् । द्वितीयोऽपिः प्रशंसायाम् । तदपि नानेन पापिना च सह । नञ्द्वयेनावधारणं प्राचां प्रयोगधाटीत्युक्तम् । अथवा न केवलमत्रैव, निरयेऽपि तैः सह स्थातव्यम् । अनेन पापिना सह निरयेऽपि नच । अत्रापि नेत्यन्वयः ॥ ९८ ॥ वीरतमस्येति परिहसति । सम्भाषणस्पर्शनादिपूर्वं दर्शनं सन्द-र्शनम् । सन्दर्शनार्थिनो राज्ञो धर्मराजस्य कृते दूतं सम्प्रेषयामासुः । सहायार्थं सह प्रेषणं सम्प्रेषणम् । **'इत्युक्त्वा तं ततो देवा देवदूतमुपादिशन् । युधिष्ठिरस्य सुहृदो दर्शयेति परन्तप'** [२.१४] इति । अस्मत्सुहृदो युधिष्ठिरस्य तत्सुहृदो दर्शयेति । तमःप्रावृतत्वाद् वर्त्मनः, हस्तेन हस्तं गृहीत्वा, **'अयं पन्थाः, अत्राऽयाहि'** इत्यादिनिर्देशपूर्वकं मार्ग-दर्शनं च सन्दर्शनम् । सुकृच्छ्रेण सर्वथा सोढुमशक्येनेति दुर्गन्धविशेषणम् । दुष्टो गन्धो दुर्गन्धः । दुर्गन्धेन पूति-गन्धिना पथा वा । चक्षुरन्धीकृत्याऽवृतेन प्रगाढेन तमसा च कण्टककर्दमादिना सुकृच्छ्रेण वर्त्मना वा । प्रावृतेन तमसा सुकृच्छ्रेण वा । तमसा प्रावृतेन वर्त्मना वा । चक्षुषोऽकिञ्चित्करत्वमावरणस्य प्रकर्षो नाम । **'तमसा संवृतं घोरं केश-शैवलशाद्वलम् । युक्तं पापकृतां गन्धैर्मांसशोणितकर्दमम् । दंशोत्पातकभल्लूकमक्षिकामशकावृतम् । इतश्चेतश्च कुणपैः**

---

१. '–पि ह्यनेन'

**गत्वैव कियतीं भूमिं तद्दुर्गन्धासहो नृपः ।**
**इच्छन् निवर्त्तनं तत्र स्वानां वाच इवाशृणोत् ॥ १०१ ॥**

**क्षणं तिष्ठ महाराज सन्निधानबलात् तव ।**
**वेदना नो न महतीत्येच्छ्रुत्वा युधिष्ठिरः ॥ १०२ ॥**

**के यूयमिति पप्रच्छ दीनध्वनिविशङ्कितः ।**
**भीमोऽहमर्ज्जुनः कर्ण्ण इत्याद्युक्तमिवाशृणोत् ॥ १०३ ॥**

**श्रुत्वा तत् कृपयाऽऽविष्टः शोकामर्षसमन्वितः ।**
**आह दूत[1] यथेष्टं त्वं गच्छ नाहमितो व्रजे ॥ १०४ ॥**

**नच स्वर्गेण मे कार्य्यं त्यक्त्वा स्वजनमीदृशम् ।**
**इत्युक्तः प्रययौ दूतस्तस्थावेव[2] युधिष्ठिरः ॥ १०५ ॥**

**ततोऽत्र देवाः पुरूहूतपूर्वकाः समाययुः स्नेहवशाद् युधिष्ठिरे ।**
**तेष्वागतेष्वेव न तत्र वाचो दीना न दुर्ग्गन्धतमोऽप्यपश्यत् ॥ १०६ ॥**

---

**समन्तात् परिवारितम् । अस्थिकेशसमाकीर्णं कृमिकीटसमाकुलम्'** [२.१७–९] इत्यादि ॥ ९९–१०० ॥ वाच इव । देवमायैवेयम्, न वास्तवमितीवेनाऽऽह ॥ १०१ ॥ इतीव श्रुत्वा ॥ १०२ ॥ भीमादीनां ध्वनिरिव श्रूयते । अथापि नेदं सम्भावितम् । ममैवायं भ्रम इति विशङ्कितः । **'कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो । नकुलः सहदेवोऽहं धृष्टद्युम्नोऽहमित्युत । द्रौपदी द्रौपदेयाश्च इत्येवं ते विचुक्रुशुः'** [२.४०–१] इति च ॥ १०३ ॥ भीमादिषु कृपया । आत्मनि शोकेन । देवेष्वमर्षेण च समन्वितः । **'दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः । क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृपः'** [२.४९–५०] इति च । आह दूतम् । किमिति? **'दूत यथेष्टं त्वं गच्छ'** इत्यादि । स्वाभिमतोऽयं निर्धार इत्यात्मनेभाषा 'व्रजे' इति ॥ १०४–५ ॥ दुर्गन्धयुक्तं तमः । **'स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिरे । आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः'** [३.१] इति, **'तेषु भासुरदेहेषु पुण्याभिजनकर्मसु । समागतेषु देवेषु व्यगमत् तत् तमो नृप'** [३] इति च । न वाचोऽशृणोत् । न दुर्गन्धमजिघ्रत् । न तमोऽप्यपश्यत् । अपश्यदन्वभवदित्यर्थः । अनेन विशिष्य

---

१. **'दूतं यथेष्टम्'** २. **'तस्थावत्र युधि–'**

स्वर्गोत्तमं देशमपश्यदेतमभ्रान्तचेताः[1] स युधिष्ठिरस्तदा ।
आहात्र धर्म्मः [2]पुनरात्मसद्यशः प्रकाशयन् पाण्डुसुताभिधं स्वम् ॥ १०७ ॥

धर्म्माद् विशिष्टा हि सदाऽनृशंसता दृष्टा च सा त्वय्यधिका त्रिशो मया ।
शक्रोऽप्युवाचैनमिदं मृषा ते प्रदर्शितं द्रोणकृते मृषागिरः ॥ १०८ ॥

कृच्छ्रादिदं ते कथितं नचातिविस्रम्भ आसीत् तव कृष्णवाक्ये ।
नह्याज्ञया वासुदेवस्य किञ्चित् पापं भवेत् सर्वविधर्म्मिणोऽपि ॥ १०९ ॥

**(तदा देवानामागमनेऽपि ) अभ्रान्तचेताः सः युधिष्ठिरः । एतत्, स्थानमिति शेषः । स्वर्गोत्तमं देशमपश्यत् । परं केवलम् । स्वमात्मानम् ॥ १०७ ॥ धर्मात् अनृशंसता कृपालुता । यक्षप्रश्नसमये 'यद्येकः स्यान्नकुलोऽस्तु' इति नकुले कृपालुता । 'नाऽरुहेयं विना श्वानम्' इत्यत्र शुनि कृपालुता । 'स्वानां वाच इवाशृणोत् । श्रुत्वा तत् कृपायाऽऽविष्टः' इत्यादौ स्वजनकृपालुतेति (त्रिशः) । द्रोणकृते द्रोणार्थम् । ब्रूहि सत्यमित्युक्तवतो द्रोणस्य अश्वत्थामवधनिश्चयार्थं 'सत्यमेव' इत्युक्त्वाऽपि असत्यभयात् उपांशु कुञ्जरो हत इति मृषागिरः व्यर्था गिरः । कुञ्जर इत्यनुक्तत्वेऽपि असत्यतादोषाभाव इत्यर्थः । असत्यभयजनितकृच्छ्रात् । इदं अश्वत्थामा हत इति वचनम्, श्रीकृष्णवचस्यविस्रम्भदोषात्, इदं दुःखसाधनं तमआदिकं प्रदर्शितमित्यर्थः ॥ १०८–९ ॥**

---

दृशोर्ग्रहणेन तमसश्चक्षुर्ग्राह्यद्रव्यत्वमाह ॥ १०६–७ ॥ अन्यस्मात् सर्वधर्माद् विशिष्टः अनृशंसता नाम धर्मः । त्रिशो दृष्टा । **'एषा तृतीया जिज्ञासा तव राजन् कृता मया । न शक्यसे चालयितुं स्वभावात् पार्थ हेतुतः । पूर्वं परीक्षितो हि त्वं प्रश्नाद् द्वैतवने मया । अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि । सोदर्येषु विनष्टेषु द्रौपद्या सह भारत । श्वरूपधारिणा तत्र पुनस्त्वं मे परीक्षितः । इदं तृतीयं भ्रातॄणामर्थे यत् स्थातुमिच्छसि । विशुद्धोऽसि महाभाग सुखी विगतकल्मषः । न च ते भ्रातरः पार्थ नरकार्हा विशाम्पते । मायैषा देवराजेन महेन्द्रेण प्रयोजिता'** [३.३३–७] इति च । द्रोणकृते मृषागिरस्तेऽस्माभिरपीदं मृषा प्रदर्शितम् । **'व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति । व्याजेनैव ततो राजन् दर्शितो नरकस्तव'** [३.१७] इति च । तदा त्वममृषागीरभविष्यो यदि कृष्णनिदेशानुसारेण **'अश्वत्थामा हतः'** इति निःशङ्कमवक्ष्यः । न तथाऽत्थ । किन्तु मृषावचनशङ्कितः **'कुञ्जरः'** इत्युपांशुवचनव्याजेन मृषागीरेव बभूविथ । कृष्णवचनेऽप्यविश्वासश्चाधिकः । सर्वेऽपि विधर्मा धर्मविरुद्धा अधर्मा अस्येति ॥ १०८–९ ॥

---

१. **'–तदभ्रान्त–'** । वे.ती. पाठोऽपि तथा । २. **'परमात्म–'** इति वे.ती. पाठ इति भाति ।

**ब्रह्मापरोक्ष्येऽपि[1] विकर्म्म सूचकं प्रारब्धपापस्य विषाशनं यथा ।**
**पश्यात्र भीमप्रमुखान् सुखस्थान्[2] सम्पूज्यमानांस्त्रिदशैः सुरूपान्[3] ॥ ११० ॥**

**कुतः परब्रह्मदृशां सुशुद्धसत्कर्म्मणां [4]कृष्णपरायणानाम् ।**
**परेण योगेन विसृष्टतन्वां दुःखं भवेद् देववराधिपानाम् ॥ १११ ॥**

**एते हि देवप्रवराः पृथिव्यां जाता भुवो भारजिहीर्षुमीशम् ।**
**प्रतोष्य तद्भावितबुद्धिकर्म्मभिः पुनश्च तेनैव सहाऽपिरे दिवम् ॥ ११२ ॥**

**न ते नृपाद्यापि हि मानुषो गतो भावस्ततो द्वेष्टि सुयोधनादीन् ।**
**निमज्ज्य तद् विष्णुपदोदकेऽत्र विसृज्य देहं भज देवभावम् ॥ ११३ ॥**

**अपरोक्षज्ञानोत्तरं कृतपुण्यपापा(नामले)पात् परमात्मनोऽपरोक्षज्ञा(ने)न (पूर्वतन)कर्म(नाशे) जातेऽपि अपरोक्षज्ञानिनो युधिष्ठिरस्य इदानीन्तनदोषलेपः कथमित्यत आह– ब्रह्मेति । ब्रह्मापरोक्ष्येऽपि ब्रह्मण आपरोक्ष्येऽपि अपरोक्षज्ञाने जातेऽपि विकर्म अपरोक्षज्ञानानन्तरं कृतं पापकर्म प्रारब्धपापस्य ब्रह्मापरोक्षसमये प्रारब्धस्य भोक्तुमुपक्रान्तस्य पापस्य सूचकम्, भवतीति शेषः । तस्मादिदं तमआदिदर्शननिमित्तदुःखं पूर्वप्रारब्धपापफलमेव । न कृष्णवाक्याविस्रम्भदोषफलम् । किन्त्वयं दोषस्तस्य सूचक एवेत्यर्थः । तत्र दृष्टान्तमाह–विषाशनमिति । प्रारब्धस्य पाप(स्य) फलभावात् म्रियमाणस्य विषादनं विषभक्षणम्, उपलक्षणमेतत्, विषभक्षणादि यथा प्रारब्धकर्मफलस्य सूचकं भवति तद्वदस्यापीत्यर्थः ॥ ११०–१ ॥ तद्भावितबुद्धिकर्मभिः ईशं प्रतोष्य ॥ ११२ ॥ तत् तस्मात् । देवभावं देवस्वभावम् ॥ ११३ ॥**

---

ननु जातापरोक्षस्य कथं पापलेपः? उत्तराघस्याश्लेषश्रवणात् । न पापलेपः । किन्तु प्रारब्धस्यानुवृत्तिरेव । इदानीं कृतं विकर्म तस्य केवलं सूचकम् । तद् यथा प्रारब्धपापेनैव मृतिः । विषाशनं प्रारब्धसूचकम् । इदानीं देवमायां निस्तीर्य अभ्रान्तचेताः पश्य । सभक्तिश्रद्धं पूज्यमानान् । भीमं सर्वैस्त्रिदशैः । अन्यान् यथायोग्यम् ॥ ११० ॥ विहितं कर्म सत्कर्म । अफलापेक्षया शुद्धम् । भगवत्पूजात्वेन कृतत्वात् सुशुद्धम् । परेण भगवति मनोयोगेन । अन्यतश्चित्तवृत्ति-निरोधेन च । विसृष्टतनूनाम् । तनुपदात् षष्ठीबहुवचनप्रत्यये आमि, तनु+आम्= तन्वामिति रूपम्, नकारलोपेन ॥ १११ ॥ तस्मिन् भावितया अर्पितया बुद्ध्या, भावितैः कर्मभिश्च । आपिरे आपुः । महानात्मलाभोऽयं तेषामित्या-त्मनेभाषा ॥ ११२ ॥ ततस्ते मानुषो भावः सुयोधनादीन् द्वेष्टि । न स्वभावतो द्वेष्षि । भावमूलोऽयं द्वेषो न स्वभाव-

---

१. **'ब्रह्मापरोक्षेऽपि'** २ **'सुखस्थितान्'** इति क्वचित् ।
३. **'सरूपान्'** इति क्वचित् । ४. **'–र्मणां विष्णुपरा–'**

सुयोधनाद्या यदिमे सुपापा [1]आरब्धकर्म्मक्षयमाप्य नित्ये ।
निःशेषसौख्योज्झितनित्यदुःखेऽवशाः पतिष्यन्त्यपुनर्न्निवृत्ताः ॥ ११४ ॥

देवांशजा ये तु समस्तशस्ते स्वमूलरूपं समवाप्य काले ।
स्वतारतम्यानुसृतां विमुक्तिं प्राप्स्यन्ति नात्रापि विचार्य्यमस्ति ॥ ११५ ॥

इत्युक्त आश्वेव निमज्ज्य गङ्गां धर्म्मात्मजस्तं प्रविसृज्य[2] देहम् ।
सद्यो बभौ दैवमवाप्य[3] कायं विसृष्टरोषादिसमस्तदोषः ॥ ११६ ॥

स तु प्रपश्यन् स्वजनं समस्तं स्वमूलरूपातिसमीपसंस्थम् ।
ददर्श भीमं च मरुत्समीपे मद्ध्ये ज्वलन्तं मरुतां गणस्य ॥ ११७ ॥

ददर्श कृष्णामपि तत्समीपे श्रिया ज्वलन्तीं समतीत्य चान्याः ।
स्प्रष्टुं च संस्कारवशादियेष निषिद्ध्य तं प्राह सुराधिराजः ॥ ११८ ॥

**अपुनर्निवृत्ताः पुनर्निवृत्तिरहिताः ॥ ११४–२२ ॥**

---

मूल इत्येतत् । विष्णुपदोदके । विष्णुपादोद्भवे उदके । **'अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति'** [३.३०] इति च ॥ ११३ ॥ न विद्यते पुनर्निवृत्तं निवर्तनं येषां ते । पुनर्निवृत्ता न भवन्ति ये त इति वा ॥ ११४ ॥ समस्तशः सर्वे । सामस्त्येन वा ॥ ११५ ॥ निमज्ज्य गङ्गाम् । **'गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुताम् । अवगाह्य ततो राजा तनुं तत्याज मानुषीम् । ततो दिव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः । निर्वैरो गतसन्तापो जले तस्मिन् समाप्लुतः'** [३.४२–३] इति च । तं मानुषं देहम् । मानुषं शरीरमुपचीयतेऽपचीयते चेति देहमित्याह । दिह उपचये । प्रविसृज्य । अभिमानत्यागो विसर्जने प्रकर्षः । दैवं दिव्यं शरीरम् । कायति भगवन्तं कीयते च वेदवैदिकैरिति कायमित्याह । कै शब्दे ॥ ११६ ॥ प्रपश्यन् पूर्वरूपेणैव प्रकटं पश्यन् । स्वस्वमूलरूपातिसमीपसंस्थम् । ददर्श भीमं च मरुत्समीपे । **'अथापरस्मिन्नुद्देशे मरुद्गणयुतं प्रभुम् । भीमसेनमथापश्यत् तेनैव वपुषाऽन्वितम् । वायोर्मूर्तिमतः पार्श्वे दिव्यमूर्तिसमन्वितम् । श्रिया परमया युक्तं सिद्धिं परमिकां गतम्'** [४–८] इत्यत्र श्रियेति पदेन सूचितं पुनः स्फुटमुक्तम्– **'तथा ददर्श पाञ्चालीं कमलोत्पलमालिनीम् । वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्चसम्'** [४.१०] इति । तद्वचनाशयमाह– ददर्श कृष्णामपि । स्प्रष्टुं च । **'तत्रैनां सहसा राजा स्प्रष्टुमैच्छद् युधिष्ठिरः । ततोऽस्य भगवानिन्द्रः कथयामास देवराट्'** [४.११] इति च ॥ ११७–८ ॥

---

१. 'आरब्धपुण्यक्षय–' । 'प्रारब्धपुण्य–' इति क्वचित् । २. '–त्मजस्तत्र विसृज्य' ३. 'दैवतमाप्य'

**एषा हि साक्षाज्जगतां प्रियस्य प्राणात्मनो जीववरेश्वरस्य ।**
**प्राणप्रिया श्रीरिति नाम यस्याः शमात्मकेऽस्मिन् रमते यदेषा[1] ॥ ११९ ॥**

**युष्मच्चतुर्देहगतस्य वायोर्वायुप्रिया भीमतनोस्तथैव ।**
**भोगाय सृष्टा पुरुषोत्तमेन युष्मत्प्रियार्थं भवतां च दारैः ॥ १२० ॥**

**प्रीतिस्ततो ह्यभ्यधिका बभूव भीमस्य चास्यास्तदनु स्म पार्थे ।**
**ततो भवत्स्वेव यथाक्रमेण गुणानुसारेण समीरणस्य ॥ १२१ ॥**

**इदा[2] हि सा शुद्धतनुः प्रजाता शच्यादियोगापगताग्र्यदेहा ।**
**यूयं च सर्वे मरुतो विशेषसंयोगहीनाः स्वशरीरसंस्थाः ॥ १२२ ॥**

---

जीववराणां रुद्रादीनामपीश्वरस्य । शंरूपे रमत इति श्रीः । **'श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता'** [४.१२] इति च ॥ ११९ ॥ **'रत्यर्थं भवतां ह्येषा निर्मिता शूलपाणिना । द्रुपदस्य कुले जाता भवद्भिश्चोपजीविता'** [४.१३] इत्यस्याऽशयं स्फुटयति– युष्मच्चतुर्देहगतस्य । युष्माकं चतुर्षु देहेषु गतस्य वायोः । स्वयं भीमस्य च रत्यर्थम् । शूलपाणिना रुद्रान्तर्गतेन पुरुषोत्तमेन सृष्टा । तथा भवतां भवद्दारैः सह भोगार्थं भवतां दारैश्च सहिता सृष्टेति भारतवचनार्थः । श्रयन्ति स्वभर्तॄनिति ता अपि श्रिय उक्ताः ॥ १२० ॥ भीमस्य अस्याम् । अस्याश्च भीमे, तदनु पार्थेऽर्जुने । स्मेति सर्वशास्त्रसिद्धमेतदित्याह । गुणसन्निधानानुसारेण । अधिकगुणसन्निधानवत्यधिका प्रीतिरेवमेऽवमेति । एतेन द्रौपदीस्वेच्छापतने यद् युधिष्ठिरोक्तम्– **'पक्षपातो महानस्या विशेषेण धनञ्जये । तस्यैतत् फलमद्यैषा भुङ्क्ते पुरुषसत्तम'** [महाप्र.प.२.६] इति तद् दत्तोत्तरम् ॥ १२१ ॥ इदा इदानीम् । तदा तदानीमितिवत् । **'सर्वैकान्यकिंयत्तदः काले दा'** [अ.सू.५.३.१५] इत्यत्र **'इदमश्च'** इत्युपस्कर्तव्यम् । वस्तुतस्तु वैयाकरणानां सूत्रपाठ एवासङ्गत इव भाति । तथाहि साम्प्रतिकः पाठः– **'इदमो र्हिल् । अधुना । दानीं च । तदो दा च'** [५.३.१६–९] इति । अत्र चरमं सूत्रं व्यर्थम् । पञ्चदशेनैव सूत्रेण तदो दाप्रत्ययविधानात् । काशिकाकृदप्याह–**'तदो दावचनमनर्थकम्, विहितत्वात्'** इति । नहि पाणिनिरनर्थकं सूत्रं प्रणिनायेति साम्प्रतं वक्तुम् । अयं तु सम्भावितः प्रतनः सूत्रपाठः–**'इदमो र्हिल् । अधुना । दानीं च । दा च'** इति । इदमः काले वर्तमानात् सप्तम्यन्तात् चत्वारि रूपाणि भवन्ति । र्हिल् प्रत्यये– अस्मिन् काले एतर्हि । इदमोऽश्भावे धुनाप्रत्यये च–अस्मिन् काले अधुना । दानीम्प्रत्यये अस्मिन् काल इदानीम् । तथा दाप्रत्यये अस्मिन् काल इदेति । किंयत्तदादिभिः सहापठित्वा पृथक्सूत्रप्रणयनं तु तस्य काचित्कत्वज्ञापनाय । **'तव स्वादिष्ठाऽग्ने सन्दृष्टिरिदा चिदह्न**

---

१. **'रमते सदैका ।'**

२. **'इयं हि'** । **'एषा हि'** इति क्वचित् ।

स्पर्शेऽपि नास्याः पवमानपत्न्याः सुपूतताऽलं भवतामिदानीम् ।
नचोत्तरत्रापि भवेत् कथञ्चिद् दिवौकसां मानुषदेहिनो[१] यथा ॥ १२३ ॥

इतीरितं तं प्रतिसन्निवृत्तं विनाशयन् मानुषवासनां स्वयम् ।
समाश्लिषच्छुद्धतनुः स्तनोत्थो धर्म्मो हरेः सोऽभवदाशु तत्समः ॥ १२४ ॥

ततस्तु पार्त्था अखिलाः स्वमूलरूपैः सहैवाऽविविशुर्म्मुदाऽन्विताः ।
स्वीयानि धामानि[२] ततोऽप्यनूनभोगाः सदा सन्न्यवसंश्च[३] तत्र ॥ १२५ ॥

तत्रापि कृष्णेन समागमोऽभूत् पुरेव तेषामतितत्पराणाम्[४] ।
चिक्रीड एभिः सहितस्तथैव कृष्णोऽपि तद्वत् सरथोऽर्ज्जुनेन ॥ १२६ ॥

**मानुषजन्मनः दिवौकसां स्पर्शे सुपूतता यथा नालम् ॥ १२३–५ ॥ पुरेव स्वर्गारोहणात् प्रागिव, पाण्डवादिभिः यथा तद्वत् ॥ १२६ ॥**

**इदा चिदक्तोः'**[ऋ.सं.४.१०.५], **'इदा हि ते वेविषतः पुराजाः'** [६.२१.५] इत्यादिश्रुतिप्रयोगात् । शच्या-दीनां योगस्यापगमात् शुद्धतनुः । परशुक्लान्तर्गतत्वात् । मरुतः सामान्यसंयोगस्य जीवमात्रे नियतत्वात् विशेष-संयोगहीना इत्याह । केवलं स्वरूपेणैव स्वशरीरसंस्थाः । अथच स्वं यन्मानुषं शरीरं तस्य संस्था नाशो येषां ते । **'संस्था सादृश्यनाशयोः'** ॥ १२२ ॥ यद्यपि मानुषदेहापगमात् भवन्तः सुपूताः । अथापि भवतामियं सुपूतता पवमान-पत्न्याः स्पर्शेऽपि नालम् । इदानीमुत्तरत्रापि कदाचित् कथञ्चित् । दिवौकसां स्पर्शे मानुषदेहिनः मनुष्यलोकस्था मनुष्यजीवाः यथा नालम् तथा । मानुषदेहिनः मनुष्यजीवस्य सुपूतता दिवौकसां स्पर्शे यथा नालं तथेति वा ॥ १२३ ॥ इति सुराधिराजेनेरितं तं धर्मराजम् । प्रतीत्य विज्ञाय द्रौपदीस्पर्शात् सन्निवृत्तम् । हरेः स्तनोत्थः । तत्समः शुद्धतनुरभवत् ॥ १२४ ॥ स्वीयानि धामान्याविविशुः । ततोऽपि पूर्वस्मादपि । 'सदा+आसन्+न्यवसन्' इति प्रतृण्णम् । सदा आसन् । तत्रैव च न्यवसन् । संन्यवसन् भगवन्मनसः भगवता सह न्यवसन्निति वा । न मूलरूपेणैक्यमापुः । किन्तु मूलरूपेण सहैव न्यवसन् भीमादिरूपेणापि । ननु देवा भुवि प्रजाता अन्ते प्रविशन्ति मूलरूपम् । किमिति नात्र तथा? अयि संशयग्रस्त, शृणु वास्तवम् । नावसितमवतारकार्यम् । अवतारस्यावतारान्तरमस्ति । तद् यथा–भीमः सन्नेव पुनर्भूमावागत्य मध्वो भवति । तदन्ते मूलरूपप्रवेशः । एवमर्जुनादीनामपि । वक्ष्यति हि–**'जातः पुनर्विप्रतनुः स भीमः'**[१३१] इति ॥ १२५ ॥ तदेवाऽह– तत्रापि । तत्परान् सर्वानन्यानतिगतानाम् । अतिशयेन तत्पराणाम् ।

१. **'मानुषजन्मनो–'** इति वे.ती. पाठः स्यात् ।
२. **'स्वीयानि सद्मानि'** । **'स्वकीयधामानि'** इति क्वचित् ।
३. **'सदारा न्यवसंश्च'**
४. **'तेषामपि तत्पराणाम् ।'**

अन्ये तु देवांशभवाः समस्ताः स्वमूलरूपैक्यमवापुराशु ।
कर्म्मक्षयादेव सुरेतरास्तु पुण्यक्षयं प्राप्य भुवि प्रजाताः ॥ १२७ ॥

चतुःसहस्रं त्रिशतोत्तरं ते संवत्सराणामनुभूय दिव्यान् ।
भोगान् नरत्वेऽपि सदेश्वरोऽहमसज्जगच्चेति धियाऽऽप्नुवंस्तमः ॥ १२८ ॥

दुःखेऽपि तेषामिह तारतम्यं कलेः परं दुःखमिहाखिलाच्च ।
यथा विरिञ्चस्य सुखं परं स्यान्मुक्तौ हरिद्वेषकृतो विशेषः ॥ १२९ ॥

केचित् पिशाचासुरराक्षसत्वमवाप्य विष्णोरपि तत्पराणाम् ।
द्वेषात् तमोऽन्धं त्वरया समाप्नुयुर्देवाः स्वकाले निजयोग्यमुक्तिम् ॥ १३० ॥

**कर्मक्षयादेव स्वमूलरूपैक्यमापुः ॥ १२७ ॥ पुण्यक्षयावधिमाह– चतुःसहस्रमिति ॥ १२८ ॥ (वि)शेषः अयं दुःखविशेषः हरिद्वेषकृतः हरिद्वेषतारतम्यकृतः ॥ १२९ ॥ अवरत्वे सर्वेषामवरत्वप्राप्तिशङ्कां निराकरोति**

---

अत एव रूपद्वयेन क्रीडाभाग्यम् । चिक्रीडे । देवस्यैषः स्वभावोऽयमित्यात्मनेभाषा । **'क्रीडतेऽस्माभिरच्युतः'** इति-वत् । यद्वा चिक्रीड एभिरित्यसंहिततया प्रयोगोऽसङ्गत्वज्ञापनाय । यथा पूर्वं भीमादिरूपैस्तथैव । तद्वत् पूर्ववदेव सरथः अर्जुनेन चिक्रीड ॥ १२६ ॥ विशिष्य पाण्डवानामियं व्यवस्था । अन्ये तु देवाः स्वमूलरूपं विविशुरित्याह– अन्ये तु । **'त्यक्त्वा देहं जितः स्वर्गः पुण्यवाग्बुद्धिकर्मभिः'** [स्व.प. ४.२२] इति च । अवताररूपेण भोक्तव्यस्य सुखदुःखात्मकस्य प्रारब्धकर्मणः क्षयादेव पाण्डवेभ्योऽन्ये देवांशभवा आशु स्वमूलरूपेणैक्यमवापुः । पाण्डवानामव-ताररूपेण भोक्तव्यस्य सुखप्रारब्धस्यावशिष्टतया नैक्यमापुरित्यर्थः । सुरेतरा असुरास्तु । तुना स्वयं तामसत्वेऽपि महतां भीष्मद्रोणादीनामुपसेवनेन लब्धपुण्यविशेषा इत्येतमर्थमाह । स्वर्गे सुखमनुभूय पुण्यक्षयं प्राप्य पुनर्भुवि प्रजाताः ॥ १२७ ॥ कदा? चतुःसहस्रं त्रिशतोत्तरं संवत्सराणाम् । पाण्डवनिर्गमनानन्तरं पुनः संवत्सराणां त्रिशतोत्तरं चतुः-सहस्रम् । चत्वारि सहस्राणि, त्रीणि शतानि, षट् त्रिंशच्च शरद इत्यर्थः । तावन्तं कालं दिव्यान् भोगाननुभूय, महदनुग्रह-प्राप्तपुण्यक्षयं प्राप्य, प्रकर्षेण आप्य, यथा न पुनः पुण्यलेशस्यापि सम्भवः, अथ मध्वावतारसमये पुनर्भुवि प्रजाताः । प्रकृष्टे विप्रादिकुले जाता इत्यर्थः । पुनर्नरत्वेऽपि विप्रादिकुले प्रजन्यापि मध्वं दिद्विषन्तः दुराग्रहेण यथाकथाचाभिदामेवोपा-समाना ईश्वरोऽहमिति धिया तम आप्नुवन् । अथ केचित् त्रिशतोत्तरचतुःसहस्रसंवत्सरपरिमिते काले कियन्तश्चित् कालं दिव्यान् भोगाननुभूय स्वर्गभोगयोग्यपुण्यक्षयं प्राप्य, अथावशिष्टेन पुण्यशेषेण भुवि प्रजाताः, प्रजाय नरत्वेऽपि मनुष्य-जन्मन्यपि मानुषान् भोगाननुभूय कियन्तश्चित् कालं यावन्मध्वावतारं मानुषान् भोगाननुभूय, तत्रापि ईश्वरोऽहमिति धिया तम आप्नुवन् यदा मध्वो भुव्यवततार ॥ १२८ ॥ विरिञ्चस्य यथा मुक्तौ परं सुखम् । कथं दुःखे तारतम्यम्? हरिद्वेषतारतम्य-कृतो विशेषस्तारतम्यम् । हरिद्वेषाधिक्ये दुःखमप्यधिकम् ॥ १२९ ॥ तेष्वपि केचित् ये महदुपासनलब्धपुण्यविधुराः,

**चतुःसहस्रे त्रिशतोत्तरे गते संवत्सराणां तु कलौ पृथिव्याम् ।**
**जातः पुनर्विप्रतनुः स भीमो दैत्यैर्न्निगूढं हरितत्वमाह ॥ १३१ ॥**

**तदैव कृष्णाऽपि भुवि प्रजाता प्रीत्यै हरेरन्धतमस्यपातयत् ।**
**महासुरान् विष्णुपरार्ज्जुनाद्याः कृते प्रजाता हरितोषणाय ।**
**पुनश्च ते स्थानमवाप्य सर्वे स्वीयं[1] परान्ते तु विमुक्तिमाप्नुयुः ॥ १३२ ॥**

**वायुत्वमाप्तः सहनूमदंशो ब्राह्मं पदं प्राप्य वृकोदरश्च ।**
**वागीश्वरित्वं[2] गतयैव कृष्णया सहैव मुक्तिं गमिताऽखिलोत्तमाम् ॥ १३३ ॥**

**भुवि द्युलोके च विरिञ्चतायां मुक्तौ च ताभ्यामधिकं समस्तात् ।**
**सन्तोष्यते पूर्णगुणो रमेशः सदैव नित्योर्जिततद्रतिभ्याम् ॥ १३४ ॥**

**– केचिदिति ॥ १३० ॥ दैत्यैः मायिभिः निगूढं निर्गुणत्ववाचोयुक्त्या ॥ १३१–२ ॥ (स)हनूमदंशः हनूमदाख्यांशयुतः । हनुमतैकीकृत (इति) यावत् ॥ १३३ ॥ भुवि भूलोके हनुमदाद्यवतारदशायामित्यर्थः । द्युलोके यत्र भार(ती) ॥ १३४–७ ॥**

---

पिशाचासुरराक्षसेषु जन्मरूपामवाग्गतिमाप्य तत्र विष्णोः तद्भक्तानां च द्वेषं कृत्वा । तस्मादन्धं तमस्त्वरया सम्भूयाऽप्नुयुः ॥ १३० ॥ ये पुनर्मर्त्यलोके बभूवुस्तेषां तमोगतिप्रकारमाह– चतुःसहस्रे । पाण्डवनिर्गमनानन्तरमेव चतुः-सहस्रे त्रिशतोत्तरे । एतेन **'त्रिशतोत्तरचतुःसहस्राब्देभ्य उत्तरे । एकोनचत्वारिंशाब्दे विलम्बिपरिवत्सरे । जातो मध्याह्नवेलायाम्–'** इत्यादिवचनं सुसङ्गतम् । एकोनचत्वारिंशाब्दे भूमावाविर्भावः । परुत्, अष्टत्रिंशेऽब्दे गर्भे प्रवेशः । परारि, सप्तत्रिंशेऽब्दे देवैरवतारार्थं प्रार्थना । ये पूर्वं भुवि प्रजातास्तैर्दैत्यैर्निगूढम् । हरिरेव स्वतन्त्रं तत्वमित्याह । हरेः सम्मतं तत्वमाह । **'स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमुच्यते'** इति । हरेः तत्वं स्वरूपं गुणपूर्णमाह । कथं तत्वम्? तननवत् तत्वं भवति । तननं ज्ञानतो व्याप्तिः । तद्वत्त्वात् तत्वम् । तथाहि **'केशाद् वोऽन्यतरस्याम्'** [अ.सू.५.२.१०९] इत्यत्र वार्तिकम्– **'वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम्'** इति । हरिरेव ततो ज्ञानरूपश्चेति तत्वम् ॥१३१॥ तदैव कृष्णाऽपि । तामेतां चन्द्रामाहुः । **'काळी चन्द्रेति चोच्यते'** इति चोक्तम् । महासुरानन्धतमस्यपातयत् । विष्णुपरा अर्जुनाद्याश्च हरितोषणाय कृते, षष्ठ्यर्थे चतुर्थी, हरितोषणस्य कृते पुनः प्रजाताः, तदैव प्रायः, यदा भीमो मध्वो बभूव । ततः परं च केचित् । मध्वोक्तस्य हरितत्वस्य तामसैर्विरोधे तन्निरासार्थम् । **'कृते विकुक्षित्वादिना प्रजाताः'** इति केचित् ॥१३२॥ **'वागीश्वरित्वं'** इति प्राचीनादर्शे । सञ्ज्ञात्वाद् ह्रस्वः । तद् यथा **'देवकिनन्दन'** इति । गमिता गमिष्यति ॥ १३३ ॥ समस्ताज्जीवजातादधिकं यथा स्यात् । नित्यमूर्जिता उद्रिक्ता परिवृद्धा भगवद्रतिर्ययोः ॥१३४॥

---

१. **'स्वीयाम्'**

२. **'वागीश्वरत्वम्'** । **'वागीश्वरीत्वम्'** इति क्वचित् ।

**'भूषन् न योऽधि बभ्रूषु नम्नते', 'बळित्था तद् वपुषे धायि दर्शतम्' ।**
**'तां सु ते कीर्त्तिं मघवन् महित्वा' इत्यादिसूक्तानि च तत्प्रमाणम् ॥ १३५ ॥**

---

तत्र तावच्छ्रुतिं प्रमाणयति– भूषन् । आदिना पवमानमण्डलगतानि सूक्तानि । तत्प्रमाणम् । भीमस्य वायुत्वे, भीमस्यैव मध्वत्वे च प्रमाणम् । **'भूषन्–'** इति **'बळित्था–'** इति च सूक्तद्वयं प्राणाग्निदेवत्यं दीर्घतमस आर्षम् । **'तां सु ते–'** इति इन्द्रनाम्नः प्राणस्य सूक्तं बृहदुक्थदृष्टम् । तथाहि **'वेदिषदे प्रियधामाय'** [ऋ.सं.१.१४०] इति सूक्तं त्रयोदशर्चम् । तत्र त्रयो वर्गाः । प्रथममृक्पञ्चकं प्रथमो वर्गः । उत्तरपञ्चकं द्वितीयः । तत ऋक्त्रयं तृतीयः । **'भूषन् न योऽधि–'** इति द्वितीयवर्गस्य प्रथमो मन्त्रः [१.१४०.६] । **'बळित्था–'** इति तत उत्तरं सूक्तम् [१४१] । तदपि त्रयोदशर्चम् । पूर्वसूक्तवदेव त्रयो वर्गाः । व्याख्याय्यस्माभिरेषु केचन मन्त्राः श्रीमध्वविजयटीकायाम् । तत्र मध्वपरतया विवृतमत्र भीमपरतया किञ्चिद् विव्रियते । प्रथमसूक्ते द्वितीयवर्गस्येदमर्थानुसन्धानं भवति । तत्रायं प्रथमो मन्त्रः–

**भूषन्नयोधिबभ्रूषुनम्नतेवृषेवपत्नीरभ्येतिरोरुवत् ।**
**ओजायमानस्तन्वश्चशुम्भतेभीमोनशृङ्गादविधावदुर्गृभिः ॥ ६ ॥**

**भूषन् । न । यः । अधि । बभ्रूषु । नम्नते । वृषाऽइव । पत्नीः । अभि । एति । रोरुवत् ॥**
**ओजायमानः । तन्वः । च । शुम्भते । भीमः । न । शृङ्गा । दविधाव । दुःऽगृभिः ॥ ६ ॥**

भूषन्न भूषयन्निव आत्मानं भगवद्भक्त्यादिभिः । यो भीमः बभ्रूषु भगवद्रूपेषु अधिकं नम्नते नतो भवति । बिभर्ति भरति वा तेजः, सर्वं जगदिति वा बभ्रुर्विष्णुः । **'पिङ्गलो नकुलश्चैव खलतिर्विष्णुरेव च । चतुर्ष्वर्थेषु मेधाविन् बभ्रुशब्दः प्रयुज्यते'** इत्यभिदधति । **'रुद्रो बहुशिरा बभ्रुः'** इति विष्णसहस्रनामसु । भार्गवः पाराशर्यो वासुदेव इति त्रीणि विष्णुरूपाणि विशिष्य भीमोपास्यानि । एवमन्तरङ्गे भगवत्प्रणतो भीमः व्यवहारदृष्ट्या वृषेव पत्नीः द्रौपदीकाळ्याद्या अभ्येति हर्षेण मुहुर्मुहुर्नदन् । अथच तमःपतनशीलाः शत्रुसेना अभ्येति सिंहनादं नदन् । न केवलं भीमः स्वयमोजायमानः परेषामभिभावकः सन् शुम्भते शोभते । **'शुभ शुम्भ शोभार्थौ'** । किन्तु युधिष्ठिरादीनां तनूश्च स्वसन्निधानेन वर्धितौजसः शोभयति । पराभिभवशक्तिरोजः । **'उब्जेर्बले बलोपश्च'**[९.५२] इति दशपादिका । उब्जेर्धातोरसुन् प्रत्ययो भवति बले गम्यमाने बलोपश्च । उब्ज आर्जवे । उब्जतीत्योजः । भीमो न भीमो मृगः सिंह इव । **'मृगं न भीमम्'** इति श्रुतेर्नरसिंह इव वा । भीम इवायं भीमः शत्रुभिर्दुर्गृभिः अनिग्राह्यः । शृङ्गाणि दुष्टराजन्यानां प्रभुत्वानि विधूनयामास । **'शृङ्गं प्रभुत्वे'** इत्यभिधानम् ॥ ✲ ॥

द्वितीयो मन्त्रः–

**ससंस्तिरोविष्टिरस्सङ्गृभायतिजानन्नेवजानतीर्नित्यआशये ।**
**पुनर्वर्धन्तेअपियन्तिदेव्यमन्यद्वर्पःपित्रोःकृण्वतेसचा ॥**

**सः । सम्ऽस्तिरः । विऽस्तिरः । सम् । गृभायति । जानन् । एव । जानतीः । नित्यः । आ । शये ॥**
**पुनः । वर्धन्ते । अपि । यन्ति । देव्यम् । अन्यत् । वर्पः । पित्रोः । कृण्वते । सचा ॥ ७ ॥**

स स्वयं संसारादुत्तीर्णः । अथापि जीवकलामानित्वाद् विस्तिरः जगति विस्तृतः सन् सं गृभायति भगवत्स्वरूपं ग्राहयति । भीमश्च धर्मजादिषु आत्मानं विस्तीर्य तान् सम्यग् ग्राहयति । स्वयं जानन्नेव पञ्चदेवीनां शापादिकम्, ताः स्वस्वरूपं जानतीरेकदेहाः पञ्चदेवीरा शये । तास्वरमतेत्यर्थः । शच्याद्याः एकैकाः प्रतिपञ्चवर्षं पुनःपुनः सन्निधान-वृद्धिं प्राप्नुवन्ति । देवनयोग्यं स्वस्वपतिं यन्ति । देव्यं स्तुत्यं वायुमपि यन्ति । पित्रोर्लक्ष्मीनारायणयोः अन्यद् विलक्षणं वर्पः गुणजातं भीमेन सचा सहाविष्कुर्वते ॥ ✻ ॥

तृतीयो मन्त्रः–

**तमग्रुवःकेशिनीस्संहिरेभिरऊर्ध्वास्तस्थुर्मम्रुषीःप्रायवेपुनः ।**

**तासाञ्जराम्प्रमुञ्चन्नेतिनानदद्सुम्परञ्जनयन्जीवमस्तृतम् ॥ ८ ॥**

**तम् । अग्रुवः । केशिनीः । सम् । हि । रेभिरे । ऊर्ध्वाः । तस्थुः । मम्रुषीः । प्र । आयवे । पुनरिति ॥**
**तासाम् । जराम् । प्रऽमुञ्चन् । एति । नानदत् । असुम् । परम् । जनयन् । जीवम् । अस्तृतम् ॥ ८ ॥**

स्त्रीणामग्रुवः अग्रगाः केशिन्यः सुन्दरकेशवत्यः देव्यः । केशी वायुस्तद्भार्या वा । तं सं हि रेभिरे परिरेभिरे । तच्छत्रूणां भार्याः पुनर्मम्रुषीः मृतिमिच्छन्त्यः आयवे युद्धार्थमागच्छते भीमाय, तं निवारयितुं ऊर्ध्वमुखाः प्रतस्थुः । तासां जरां जरणं निन्दावचनं प्रमुञ्चन् तिरस्कुर्वन् एति सिंहनादं नदन् । परं परकीयं शात्रवं असुं प्राणशक्तिं जीवं तद्धारणशक्तिं च अस्तृतमविस्तृतमदीर्घमल्पकालीनं कुर्वन् ॥ ✻ ॥

चतुर्थो मन्त्रः–

**अधीवासम्परिमातूरिहन्नहतुविग्रेभिस्सत्वभिर्यातिविज्रयः ।**

**वयोदधत्पद्वतेरेरिहत्सदानुश्येनीसचतेवर्तनीरह ॥ ९ ॥**

**अधीवासम् । परि । मातुः । रिहन् । अह । तुविऽग्रेभिः । सत्वऽभिः । याति । वि । ज्रयः ॥**
**वयः । दधत् । पत्ऽवते । रेरिहत् । सदा । अनु । श्येनी । सचते । वर्तनिः । अह ॥ ९ ॥**

मातुर्वेदविद्याया अधिवासं नृसिंहात्मानं भगवन्तं रिहन् स्वदमानः मनसा स्मरन् तुविग्रेभिः वेगेन शत्रून् ग्रसद्भिर्धावद्भिः सत्वभिः प्राणिभिः गजैः सह योद्धुं वियाति ज्रयः अभिभवन् शत्रून् । ज्रयतीति ज्रयः । ज्रि अभिभवे । अयमेव पद्वते प्राणिमात्राय वय आयुर्दधाति । अन्ते च रेरिहत् संहरन् । रिह हिंसायाम् । श्येनो गरुडोऽस्य वाहनमिति श्येनी नारायणः कृष्णः । स सदा एनं भीममनुवर्तनिः सन् सचते सङ्गतो भवति । अहेत्यास्वादे । **'वर्तनिः । अह'** इति प्रतृण्णम् । संहितायामतिशयार्थो दीर्घः । भीमस्य कुञ्जरकदनकौशलं कृष्णानुग्रहं च विपुलं स्वादयितुं द्विरहेत्याह ॥ ✻ ॥

पञ्चमो मन्त्रः–

**अस्माकमग्नेमघवत्सुदीदिह्यधश्वसीवान्वृषभोदमूनाः ।**
**अवास्याशिशुमतीरदीदेर्वर्मेवयुत्सुपरिजर्भुराणः ॥ १० ॥**

**अस्माकम् । अग्ने । मघवत्ऽसु । दीदिहि । अध । श्वसीवान् । वृषभः । दमूनाः ॥**
**अवऽअस्य । शिशुऽमतीः । अदीदेः । वर्मऽइव । युत्ऽसु । परिऽ+जर्भुराणः ॥ १० ॥**

अत्रापि **'अवास्य'** इति प्रतृण्णम् । अग्ने शत्रुतापक, अस्माकं मघवत्सु ज्ञानधनवत्सु विद्वत्सु दीदिहि दीप्यस्व । तत्र दीप्तोऽस्माकं ज्ञानं प्रकाशय । श्वसीवान् अस्मान् प्राणयन्, युद्धेषु स्वपक्षीयान् प्राणयन्, वीरवृषभः शत्रुदमनाद् दमूनाः । **'दमेरूनसिः'** [९.९५] इति दशपादिका । दाम्यति दमयति वा दमूनाः । शिशुर्बालः, अथापि श्यति तनूकरोति शत्रूनिति शिशुरभिमन्युः । **'शः कित् सन्वच्च'** [१.१०५] इति दशपादिका । शोधातोरुः प्रत्ययः । सन्वच्च कार्य-मिति । तं परित आवृत्य स्थिताः शिशुमतीः कौरवसेनाः अवास्य अपहाय पद्मव्यूहाद् बहिरेव अदीदेः दीप्तोऽभवः । अथापि युत्सु युद्धेषु स्वानां वर्मेव रक्षाकवचमिव परिजर्भुराणः शत्रुबाधां परितः परिहरन् सञ्चरसि ॥ ✻ ॥

**'बळित्था–'**[१.१४१] इति सूक्तस्य प्रथमवर्गीयपञ्चमन्त्रेषु चत्वारो द्वितीयाध्याये व्याख्याताः । समग्रसूक्तार्थोऽ-स्मत्कृते प्राणाग्निसूक्तभाष्ये द्रष्टव्यः । प्रथमसूक्ते भीमं संस्तूय तस्यैवावतारत्रयमुत्तरसूक्तेन तुष्टाव ॥

**'तां सु ते कीर्तिम्–'** इति दशममण्डले [१०.५४] षळृचं सूक्तं बृहदुक्थस्यार्षं त्रैष्टुभमैन्द्रमित्युक्तम् । एवमाद्यन्तयोर्मण्डल-योर्ग्रहणेन उपक्रमोपसंहाराभ्यां मध्यस्यापि मध्यमप्राणपरता ज्ञातव्येत्याह ।

तत्र प्रथमो मन्त्रः–

**तांसुतेकीर्तिम्मघवन्महित्वायत्त्वाभीतेरोदसीअह्वयेताम् ।**
**प्रावोदेवाँआतिरोदासमोजःप्रजायैत्वस्यैयदशिक्षइन्द्र ॥ १ ॥**

**ताम् । सु । ते । कीर्तिम् । मघऽवन् । महिऽत्वा । यत् । त्वा । भीतेइति । रोदसीइति । अह्वयेताम् ॥**
**प्र । आवः । देवान् । आ । अतिरः । दासम् । ओजः । प्रऽजायै । त्वस्यै । यत् । अशिक्षः । इन्द्र ॥**
॥ ✻ ॥

हे मघवन्, युद्धाख्याध्वरवन्, इन्द्र, शत्रुदमनसमर्थ भीम, तां कौरवपृतनाक्षपणरूपां ते कीर्तिं तानि च ते महित्वानि महिमविशेषान् सु सम्यक् स्तौमीति शेषः । रोदसी द्यावापृथिव्यौ, द्युस्थं देववृन्दं भुवि च सज्जनवृंदं युद्धाद् भीते त्वां यत् यस्माद् अह्वयेतां आहूय रक्षेति प्रार्थयेतां तस्मात् देवान् तत्पक्षीयांश्च प्रावः अरक्षः । दासं लोकोपक्षयकारिणं दस्युजनमतिरः व्यनाशयः । तेन त्वस्यै कस्यैचन प्रजायै धर्मराजाय, सात्विकजनाय वा, ओजः पराभिभवशक्तिमशिक्षः अशिक्षयः, प्रायच्छ इत्येतत् । तत् तां ते कीर्तिं सुष्ठु स्तौमि । 'सु' इति प्रकृतिमात्रनिर्देशो वा । तादृशीं कीर्तिं सु सुषुविथ, जनयामासिथेत्यर्थः ॥ ✻ ॥

द्वितीयो मन्त्रः–

**यदचरस्तन्वावावृधानोबलानीन्द्रप्रब्रुवाणोजनेषु ।**
**मायेत्सातेयानियुद्धान्याहुर्नाद्यशत्रुंननुपुराविवित्से ॥ २ ॥**

**यत् । अचरः । तन्वा । ववृधानः । बलानि । इन्द्र । प्रऽब्रुवाणः । जनेषु ॥**
**माया । इत् । सा । ते । यानि । युद्धानि । आहुः । न । अद्य । शत्रुम् । ननु । पुरा । विवित्से ॥**
**॥ ※ ॥**

वावृधानः नित्यवृद्धबलः यत् मानुषतन्वा भीमरूपेण यदचरः रणाजिरे, **'अन्धस्य नृपतेः पुत्राः मया परिघबाहुना । नीता लोकममुं सर्वे नानाशस्त्रास्त्रयोधिनः । इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ । ययोरन्तरमासाद्य धार्तराष्ट्राः क्षयं गताः । ताविमौ चन्दनेनाक्तौ चन्दनार्हौ च मे भुजौ । याभ्यां दुर्योधनो यातः क्षयं ससुतबान्धवः'** इत्यादिना ते बलानि स्वजनेषु धृतराष्ट्रादिषु शृण्वत्सु प्रब्रुवाणः । सा ते मायेत् । मोहजननी प्रवृत्तिः । रोषेण भीमो युयुधे, द्वेषेण भीमो जगादेति । वस्तुतस्तु भगवत्पूजेत्ययुध्यथाः । धृतराष्ट्रे वैराग्यजननाय कृपयाऽब्रूथाः । यानि च ते युद्धान्याहुः जरासन्धादिभिः साऽपि ते मायेत् । केवललीला । यतः नाद्य शत्रुं विवित्से लभसे, न पुराऽलभथा इति ॥ ※ ॥

तृतीयो मन्त्रः–

**कउनुतेमहिमनस्समस्यास्मत्पूर्वऋषयोन्तमापुः ।**
**यन्मातरञ्चपितरञ्चसाकमजनयथास्तन्वः स्वायाः ॥ ३ ॥**

**के । ऊँइति । नु । ते । महिमनः । समस्य । अस्मत् । पूर्वे । ऋषयः । अन्तम् । आपुः ॥**
**यत् । मातरम् । च । पितरम् । च । साकम् । अजनयथाः । तन्वः । स्वायाः ॥ ※ ॥**

अस्मत्पूर्वेऽपि ऋषयः के नु ते समस्तस्य महिम्नोऽन्तमापुः । यत् मातरं पितरं च द्यावापृथिव्यौ, तद्गतान् देवांश्च मनुष्यांश्च स्वमूलरूपादेवाजनयथाः ॥ ※ ॥

चतुर्थो मन्त्रः–

**चत्वारितेअसुर्याणिनामादाभ्यानिमहिषस्यसन्ति ।**
**त्वमङ्गतानिविश्वानिवित्सेयेभिःकर्माणिमघवञ्चकर्थ ॥ ४ ॥**

**चत्वारि । ते । असुर्याणि । नाम । अदाभ्यानि । महिषस्य । सन्ति ॥**
**त्वम् । अङ्ग । तानि । विश्वानि । वित्से । येभिः । कर्माणि । मघऽवन् । चकर्थ ॥ ※ ॥**

असुरान् अभियान्तीति असुर्याणि असुरैरदभ्यानि अहिंस्यानि यानि चत्वारि नाम नामानि रूपाणि वा युधिष्ठिरोऽर्जुनो नकुलः सहदेव इति । तानि महनीयस्य तवैव । तेषु त्वमेव सन्निहितस्तत्तन्नामेत्यर्थः । त्वमेव तान् सर्वान् वेत्सि । येभिरुपकरणभूतैस्त्वमेव सर्वाणि कर्माणि चकर्थ ॥ ※ ॥

**अन्यानि वाक्यानि च वैदिकानि [१]सपञ्चरात्रोक्तिपुराणकानि ।**
**पृष्टश्च भीष्मोऽत्र युधिष्ठिरेणै[२]तन्मोक्षधर्म्मेष्वपि किञ्चिदाह ॥ १३६ ॥**

**एवं प्रयातेषु सकेशवेषु स्वानेव लोकान् यदुपाण्डवेषु ।**
**परीक्षिदाद्यास्तु तदन्वयोत्था व्यासानुशिष्टाः पृथिवीमरक्षन् ॥ १३७ ॥**

---

पञ्चमो मन्त्रः–

**त्वंविश्वादधिषेकेवलानियान्याविर्याचगुहावसूनि ।**
**काममिन्मेमघवन्माविताारीस्त्वमाज्ञातात्वमिन्द्रासिदाता ॥ ५ ॥**

**त्वम् । विश्वा । दधिषे । केवलानि । यानि । आविः । या । च । गुहा । वसूनि ॥**
**कामम् । इत् । मे । मघऽवन् । मा । वि । तारीः । त्वम् । आऽज्ञाता । त्वम् । इन्द्र । असि । दाता॥**
**॥ ※ ॥**

त्वं विश्वानि वसूनि दधिषे धत्से । ज्ञानानि वित्तानि च । केवलानि केवलं भगवत्पूजार्थानि । यान्याविः प्रकटानि यानि च गुहा गुह्यानि । मे कामितं मा विनाशीः । त्वमेव सर्वस्य ज्ञाता दाता च ॥ ※ ॥

षष्ठो मन्त्रः–

**योअदधाज्ज्योतिषिज्योतिरन्तर्योअसृजन्मधुनासम्मधूनि ।**
**अधप्रियंशूषमिन्द्रायमन्मब्रह्मकृतोबृहदुक्थादवाचि ॥ ६ ॥**

**यः । अदधात् । ज्योतिषि । ज्योतिः । अन्तः । यः । असृजत् । मधुना । सम् । मधूनि ॥**
**अध । प्रियम् । शूषम् । इन्द्राय । मन्म । ब्रह्मऽकृतः । बृहत्ऽउक्थात् । अवाचि ॥ ※ ॥**

यः प्राणः सूर्यादिज्योतिषि अन्तर्ज्योतिरदधात् । सूर्यादिषु स्थित्वा तेषां भासकः स एवायं भीमः । यश्च मधुराणि मधुरेण रसेन समयोजयत् । अथ तस्मादिदं स्तोत्रमिन्द्राय मन्त्रकृतः बृहदुक्थाद्दषेरवाचि । कीदृशं स्तोत्रम् । प्रियं प्राणस्य भीमस्य च । शूषं बलकरं स्तोतॄणाम् । मन्म मननीयं सर्वेषां सतामिति ॥ ※ ॥ १३५ ॥

अन्यानि वाक्यानि वैदिकानि वेदगदितानि । वेदानुसारिग्रन्थगदितानि च । पञ्चरात्रोक्तयः, पञ्चरात्रोक्तिभिः सहितानि पुराणानि । पुराणेषु कथितानि वाक्यानीति । **'तृतीयोऽतिशये'** इति पुराणगानि वा पुराणकानि । यथा गुरूनिति ध्वनयन् गीतायामाह– **'पार्थ पश्यैतान् समवेतान् कुरून्'** इति । अथच अज्ञानाज्जनैर्विस्मृतप्रायाणीति अज्ञातार्थे कः प्रत्ययः [अ.सू.५.३.७३] । अत्र स्वेषां भाविगतिविषये युधिष्ठिरेण पृष्टः–**'वयं तु भृशमापन्नाः रक्ताः कष्टाः सुखेऽसुखे । कां**

---

१. **'सपञ्चरात्रोक्तपु–'** इति क्वचित् ।
२. **'–ष्ठिरेण तन्मोक्ष–'**

तैः क्षेमकान्तैरिह भारतादिशास्त्राणि शृण्वद्भिरशेषविद्भिः ।
व्यासप्रभावाच्च कलौ च धर्म्मो ज्ञानं च सुत्रातमगान्न नाशम् ॥ १३८ ॥

संवत्सराणां तु[१] सहस्रके गते प्राप्तेषु[२] च द्यामखिलेषु सत्सु ।
दग्धाः पुरा ये त्रिपुरं घ्नतैव रुद्रेण जाताः पृथिवीतळे[३] ते ॥ १३९ ॥

२ अदर्शनं सर्वमुनीन्द्रवृन्दैः सहैव सज्ज्ञानमहानिदाने[४] ।
व्यासे प्रयातेऽपि सुतत्वविद्या तत्सम्प्रदायादपि तैरवाप्ता ॥ १४० ॥

उत्सादितत्वात्तु दुरागमानां तत्सम्प्रदायस्य च नाशितत्वात् ।
प्रसारितत्वाच्च सदागमानां पापा अपि ज्ञानमवापुरेतत् ॥ १४१ ॥

शुना पुरोडाशमिवावलीढं वेदश्रुतिं [५]वाऽन्त्यजनैरवाप्ताम् ।
अनन्तदुःखाप्तिसुयोग्यदैत्यैर्विद्यामवाप्तां तु न सेहिरे सुराः ॥ १४२ ॥

**धर्मः पूर्वं पाण्डवैः पालितो धर्मः ॥ १३८ ॥ गते, कलियुग इति शेषः ॥ १३९–४० ॥ तत्सम्प्रदायस्य दुरागमसम्प्रदायस्य ॥ १४१ ॥ वेदश्रुतिं वेदश्रवणम् ॥ १४२ ॥**

---

**गतिं प्रतिपत्स्यामो नीलां कृष्णां समामथ'** [शा.प.२८६.६८] इति । एतत् तेषां मनुष्यलोके पुनर्जननम्, तावन्तमनेहसमनेनैव रूपेण देवलोके विहरणं च । मोक्षधर्मेष्वपि किञ्चिदाह । तथाहि मोक्षधर्मे भीष्मवचनम्– **'शुद्धाभिजनसम्पन्नाः पाण्डवाः संशितव्रताः । विहृत्य देवलोकेषु पुनर्मानुष्यमेष्यथ'** [६९] इति ॥ १३६–७ ॥ क्षेमकान्तैः । **'क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ'** [९.१९.४५] इति भागवते । धर्मः सुत्रातः । ज्ञानं च सुत्रातं सन्न नाशमगात् ॥ १३८ ॥ संवत्सराणां तु । अज्ञातकलिप्रभावानामिति तुनाऽऽह । गते पाण्डवनिर्गमनानन्तरम् ॥ १३९ ॥ अदर्शनं प्रयाते, ततः संवत्सराणां सहस्रके च गते । सत् निर्दुष्टं परिशुद्धं ज्ञानम् । सतः ब्रह्मणो वा ज्ञानम् । सतां सात्विकानां वा ज्ञानम् । तस्य निदानं मुख्यकारणं वायुः । महानिदानं परममुख्यकारणं भगवान् । व्यासेऽपि प्रयाते । अथ व्यासे प्रयातेऽपि तत्सम्प्रदायात् तैरसुरैरप्यवाप्ता सुराणां तत्वविद्या ॥ १४० ॥ तत्सम्प्रदायस्य दुरागमसम्प्रदायस्य । एतत् सदागमजन्यं यथार्थज्ञानम् ॥ १४१ ॥ **'पुरोडाशो हविर्भेदे चमस्यां पिष्टकेऽपिच । रसे**

---

१. **'–णां च सह–'** २. **'प्राप्तेषु विद्या–'** ३. **'–तले'**
४. **'–निधाने'** ५. **'श्रुतिं चान्त्य–'**

नावाग्गतिः क्वापि सुवेदिनां भवेत् प्राप्यं सुखं नित्यमवश्यमेभिः ।
प्राप्यं तमोऽन्धं त्वसुरैर्न्न मुक्तिः कदाचिदाप्या[1] तदचिन्तयन् सुराः ॥ १४३ ॥

ज्ञानप्रदानाय सतां तदन्यज्ञानप्रणाशाय च विष्णुनैते ।
क्लृप्तास्ततस्ते सविरिञ्चशर्वा विज्ञापयामासुरुपेत्य विष्णुम् ॥ १४४ ॥

क्षीरोदधेरुत्तरतीरविष्ठितै[2]रभिष्टुतः सुष्टुतिभिः पुरुष्टुतः ।
प्रदाय तेषामभयं रमापतिः क्षणादभूच्चारुतमाकृतिः[3] शिशुः ॥ १४५ ॥

यस्त्रैपुराणां प्रथमोऽत्र जातः शुद्धोदनेत्येव जिनेति चोक्तः ।
क्षेत्रे गयाख्येऽस्य शिशुं प्रजातं सम्प्रास्य दूरेऽत्र बभूव विष्णुः ॥ १४६ ॥

अजानमानाः स्वशिशुं गतं तं शिशुं हरिं वीक्ष्य निजं स्म मेनिरे ।
तेषां तदा वैदिककर्म्म वीक्ष्य सम्प्राहसत् तद्वपुषैव केशवः ॥ १४७ ॥

**तत् तस्मात् ॥ १४३–४ ॥ पुरुभिः ब्रह्मादिभिः स्तुतत्वात् पुरुष्टुतनामा रमापतिः ॥ १४५ ॥ गयाख्ये क्षेत्रे, गयायाम् ॥ १४६ ॥ शिशुं (हरिं निजं शिशुं) मेनिरे ॥ १४७ ॥**

---

**सोमलतायाश्च हुतशेषे च कीर्तितः'** इत्यभिधानम् । पुरः प्रथमं दाश्यते दीयते इति पुरोडाशो व्रीहिमयः पिष्टको हविर्भेदः । अवलीढमास्वादितम् । अवद्याय अशुचित्वाय अलेडिति अवलीढम् । वेदश्रुतिं वा वेदश्रवणमिव । वर्णेष्वन्त्यो जनः शूद्रोऽप्यन्त्यजन उच्यते । वर्णबाह्योऽप्यन्त्यजनः। अन्त्योऽधमइतिअधमजनोऽप्यन्त्यजनः । तन्मात्रयोग्याः सुयोग्याः ॥१४२–४॥ पुरुभिर्देवैः पुरुभिर्वेदैः पुरुभिर्नामभिः स्तुतः । यत्सन्निधानेनेन्द्रोऽपि पुरुष्टुत इत्याहूयते । श्यति तनूकरोति मातुः स्तनं पीत्वेति शिशुः स्तनन्धयः ॥१४५॥ शुद्धोदनेत्येव । **'शुद्धोदनसुतो बुद्धो मोहयिष्यामि मानवान्'** [शां.प. ३४८.४३] इति भारते । ननु तर्हि **'बुद्धो नाम्ना जिनसुतः'** इति भागवतविरोध इत्यत आह–जिनेति चोक्तः । शुद्धोदन एव जैनधर्मप्रवर्तकः प्रथममासेति जिन इति चोक्तः । एतेन ऐतिहासिकः शुद्धोदनसुतो बुद्धोऽन्यः, भगवदवतारभूतो बुद्धोऽन्य इति वदन्तः परास्ताः । न केवलं बुद्धः, अयं शुद्धोदनोऽप्यन्य इति त्वद्भुतमितिहासकौशलम् । सम्प्रास्य, यथा प्रासनानन्तरं तं शिशुं कोऽपि न पुनः पश्येत् ॥ १४६ ॥ स्वशिशुं गतमजानमानाः । शिशुरूपं

---

१. '–दप्येतदचिन्त–' । 'कदाचिदाप्येति च चिन्तयन्' इति क्वचित् ।

२. **'–तीरनिष्ठितै–'**

३. **'–तराकृतिः'** इति क्वचित् ।

तं जातमात्रं प्रहसन्तमीक्ष्य सुविस्मितैः पृष्ट उवाच विष्णुः ।
बुद्धोऽहमित्येव [१]सुनित्यबोधाज्जगाद चैषामथ बुद्धदर्शनम् ॥ १४८ ॥

तथाऽप्यविश्वासमवेक्ष्य तेषां सस्मार देवानखिलान् जनार्द्दनः ।
विज्ञाय ते तस्य मनोगतं निजान् प्रचिक्षिपुर्हेतिगणानमुष्मिन् ॥ १४९ ॥

स जातमात्रः शिवपूर्वकाणां शूलादिहेतीरखिला निगीर्य्य ।
दैत्यातिमोहाय निजं च चक्रं स्वमुक्तमाश्वेव वशी समग्रहीत् ॥ १५० ॥

तदासनत्वेन विधाय तस्मिन् समास्थितं देवगणाः प्रणम्य ।
जग्मुः[२] स्वधामानि वचांसि चास्य[३] स्वीचक्रुराश्वेव जिनादिदैत्याः ॥ १५१ ॥

ते ज्ञानधर्म्मावपहाय पापा विमोहिता देववरेण सर्वे ।
जग्मुस्तमोऽन्धं क्षणिकं समस्तं ज्ञानं नसच्चेति दृढं स्मरन्तः ॥ १५२ ॥

नारायणोऽप्याप्य[४] सुरेन्द्रवृन्दं वृत्तं च तेषामखिलं[५] निगद्य ।
पृष्टश्च तैराह निजं हृदिस्थं बौद्धागमार्त्थं सृतिबन्धमोचनम् ॥ १५३ ॥

क्षणादयं[६] क्षणिकास्तद्विशेषा यतः प्रयान्त्येव निसर्ग्गतोऽखिलाः ।
ततः स्थिरत्वेऽपि विशेषसंश्रयादुक्तं क्षणस्थायि मया समस्तम् ॥ १५४ ॥

**पृष्टः कस्त्वं किमर्थं हससीति पृष्टः । अहं बुद्ध इति वदतो भगवतोऽभिप्रायमाह– सुनित्यबोधादिति ॥ १४८–९ ॥ दैत्यातिमोहाय विष्णोरप्यधिकोऽयमिति दैत्यादीनामतिमोहमुत्पादयितुम् ॥ १५०–३ ॥ समस्तं क्षणिकं क्षणविनाशि ज्ञानं (न सच्च) इत्याद्यात्मोक्तशब्दार्थमाह– क्षणा(दय) इत्यादिना । क्षणादयः**

---

हरिमेव निजं शिशुं मेनिरे । सम्प्राहसत् तदिदं प्रहसनं च परिहसनं च यथा स्यात् तथाऽहसत् ॥ १४७–९ ॥ स्वेनैव मुक्तं क्षिप्तं स्वयमेवाग्रहीत् ॥१५०॥ तच्चक्रमासनत्वेन विधाय । समास्थितं समाधिस्थितमिव नळिनासनासीनम्। एतद्दर्शनेन जातविस्रम्भाश्चास्य वचांसि स्वीचक्रुः ॥ १५१ ॥ क्षणिकं पूर्वापरकलाविकलक्षणस्थायीति । मानसं ज्ञानमेव बहिर्घटाद्याकारेण परिणतमित्यपरे बौद्धाः । कालत्रयेऽप्यभावादसदनिर्वचनीयं चेत्यन्ये ॥ १५२–३ ॥

---

१. **'–त्येव स नित्यबोधाज्जगाद'** इति क्वचित् । २. **'ययुः स्व–'** इति क्वचित् । ३ **'वचांसि तस्य'**
४. **'–यणः प्राप्य'** ५. **'तेषां निखिलम्'** इति क्वचित् । ६. **'क्षणादयः'** । वे.ती. पाठोऽपि तथा ।

तद्वान् विशेषश्च यतो न भिन्नौ सदा स्वनिर्वाहकशक्तियुक्तौ ।
अतः क्षणस्थायि समस्तमेतत् स्थिरात्मकं चेति हि नास्ति भेदः ॥ १५५ ॥

**क्षणलवनिमेषमुहूर्तादयः तद्विशेषाः । कालस्य साक्षिसिद्धत्वेन नित्यसन्निहितत्वेन प्रकृतत्वात् तदिति परामर्शः । क्षणिकाः(आशुविनाशिनः, निसर्गतः) स्वभावतः प्रयान्त्येव यतः ततः क्षणादिकालविशेषस्याऽशुविनाशित्वात्, स्थिरत्वेऽपि सकलपदार्थजातस्य स्थायित्वेऽपि, क्षणिकत्वाभावेऽपीत्यर्थः, विशेषसंश्रयात्, आशुतरविनाशिकालसम्बन्ध(रूपविशेषबलात् क्षण)स्थायीति शते पञ्चाशन्न्यायेन क्षणेऽपि तिष्ठतीति क्षणस्थायीत्यभिप्रायेण क्षणिकमित्युक्तमिति योजना ॥ १५४ ॥ ननु क्षणस्थायित्वविशेषस्य क्षणस्थायिनो विशेषात् परम्परयाऽनवस्था (स्यादित्यत आह– तद्वा)निति । तद्वान् विशेषवान् विशेषश्च न भिन्नौ परस्परभेदरहितौ यतः, अतः नानवस्थेति वाक्यशेषः । ननु तर्हि विशेषो विशेषवानिति शब्दयोः पर्यायत्वं स्यादित्यत आह– सदेति । सदा सर्वकालं स्वनिर्वाहकशक्तियुक्तौ । अभेदनिमित्तापर्यायत्वादिव्यवहारनिर्वाहकत्वाख्यविशेषसहितौ । सदेत्यनेन विशेषस्य वस्तुतः स्वरूपत्वमुक्तं भवति । अतः क्षणिककालविशेषस्य सम्बन्धात् एतत् सर्वं क्षणस्थायि क्षणिकमपि स्थिरात्मकमिति भेदः विरोधः नास्ति हि यस्मात् तस्मात् स्थाय्यपि समस्तं जगत् क्षणिकमिति मयोक्तमिति भावः ॥ १५५ ॥**

---

अयं सर्वोऽपि प्रपञ्चः क्षणाद् भवति क्षणावच्छेदेनावतिष्ठते । ततस्तद्विशेषाः क्षणविशेषाः घटिकामुहूर्तदिनपक्षमासवत्सरादयः प्रपञ्चविशेषाः घटपटादश्च क्षणिकाः क्षणस्थायिन एव । यतः प्रतिक्षणं निसर्गतः स्वभावत एवाखिलाः पदार्थाः प्रयान्ति व्यत्यस्यन्ति । प्रळयाभिमुखा यान्ति । **'मरणान्तं तु जीवितम्'** इति स्मरणात् । अतः स्थिरत्वेऽपि क्षणादधिककालस्थायित्वेऽपि समस्तं क्षणस्थायीति मयोक्तम् । कथम्? क्षणशब्दस्याल्पकालाख्यार्थविशेषसंश्रयात् । व्यवहरन्ति हि लोकेऽपि–'सोऽयं क्षणमात्रेण कार्यं निर्वर्त्य प्रत्यावृत्तः' इति । अपिच यस्य चत्वारि युगसहस्राणि दिनमात्रं तस्य चतुर्मुखस्यापि विवक्षया, मानुषमानेन यल्लक्षं वर्षाणाम्, तत् क्षणलेशमात्रम् । किमुत भगवतः । तदेतदविज्ञाय अज्ञातपरमार्था बौद्धाः **'पूर्वापरकलाविकलः कालः क्षणः'** इति मुधा बभ्रमुः । ननु तत्ववादिन्, भवानपि अज्ञातपरमार्थ एव । तथाहि क्षणोऽपि क्षणस्थायीत्यवोचः किल । कस्मिन् क्षणे क्षणस्तिष्ठति । नहि पूर्वस्मिन् परस्मिन् वा क्षणे वर्तमानः क्षणस्तिष्ठति । ततः स्वस्मिन्नेव क्षणे स्वयं तिष्ठतीति वक्तव्यम् । नहि कोऽपि स्वशिरसि स्वयं नृत्यति । तत् तत्ववादभ्रमेणातत्वं वदन्नात्माश्रयग्रस्तोऽसि । अहो महोन्माद तथागतवृथाच्छात्र, अवधत्स्व त्वमपि । तवैवायमात्माश्रयः । पूर्वापरकालविकलः, कुत्र तिष्ठतीति पृष्टः किं जल्पसि । अनुत्तरमुत्तरं ते । न मम । कुतः? विशेषसंश्रयात् । अभेदेऽपि भेदकार्यकारिणो विशेषस्य स्वीकारात् ॥१५४॥ तदेव स्फुटमाहोत्तरश्लोकेन । तद्वान् विशेषवान् विशेषश्च न भिन्नौ । ननु मा भूत् स्वशिरसि नर्तनम् । किन्त्वनन्ते रङ्गस्थळेऽनन्तमिदं नर्तनम् । विशेषस्य विशेषिणश्चाभेदेऽपि भेदकार्यनिर्वाहायापरो विशेषः । तस्याप्यपरस्तस्यापर इति विशेषपरम्परयाऽनवस्था दुरवस्था तु दुष्परिहरैव । एतां प्रतिवादिनां दुराशामपाकरोति–स्वनिर्वाहकशक्तियुक्तौ । स्वयमेव सर्वं भेदकार्यं निर्वहन्तौ नाऽत्माश्रयस्य नाप्यनवस्थाया नाप्यन्योन्याश्रयस्य वाऽवसरं दत्त इति सर्वं सुन्दरम् ॥ १५५ ॥

ज्ञोऽहं सदैकः परमो मयैतत् सदाऽननीयं हि[1] यतोऽस्वतन्त्रम् ।
ज्ञानात्मकं विश्वमतो मयोक्तं जडस्वरूपं च किमु स्म चेतनम् ॥ १५६ ॥

शंशीलकोऽहं यत एव चोच्चः शूनामकस्तद्धि मया निधेयम् ।
शून्याभिधं दोषविरुद्धरूपो दोषोज्झितोऽन्यस्त्वखिलादनामा ॥ १५७ ॥

एनैव साद्यं त्वसदेव नामतस्त्वभाव एनैव भवेद् यतस्तत्[2] ।
इत्यादि बोद्धव्यमिदं समस्तं मयोदितं क्वापि न हेयमस्ति ॥ १५८ ॥

**अहमेव ज्ञः ज्ञानस्वरूपत्वात् ज्ञ इत्युक्तः । परमः उत्तमः । स्वामीति यावत् । एतत् चेतनाचेतनात्मकं अस्वतन्त्रम् । अतः सदा मया ज्ञनाम्ना अननीयं चेष्टनीयं हि यस्मात् अतः ज्ञेन मया अननीयत्वात् जडस्वरूपं विश्वं ज्ञानात्मकमित्युक्तम् । ज्ञेन अन्यते चेष्टयते रूपमस्येति ज्ञानात्मकमित्युक्तमिति भावः । चेतनं चेतनात्मकं जगत् ज्ञानात्मकिति किमु वक्तव्यम् । चेतनस्य ज्ञानात्मकत्वं प्रसिद्धमिति भावः ॥१५६॥ अहं शंशीलको यतः अतः शुः शुनामा । उच्चः उत्तमश्च यतः अत एव उश्च । उत्तमत्वादुरित्यर्थः । शुश्चासावुश्चेति शूनामकः । शु उ इत्येतयोः सवर्णदीर्घे कृते शू इति(पदं) अस्य नामेति शूनामकः । तद् विश्वं मया शूनाम्ना निधेयं स्थापनीयं (हि) यस्मात् तस्मात् विश्वं शून्याभिधं शून्यनामकम्, मयोक्तमिति शेषः । शूना नीयत इति शून्यमित्यर्थमभिप्रेत्ये(त्य)र्थः । अनामा, अ इति नाम यस्यासावनामेत्यर्थः । कुतः? अशब्दस्य तदभावतदन्यतद्विरुद्धवाचकत्वात् । अहं (अः) विरुद्धः । तत्र गुणविरुद्धत्वाङ्गीकारे सर्वप्रमाणविरोधात् दोषविरुद्धरूप इत्याह । तदभावविवक्षायां दोषाभावोऽर्थः । अन्यत्वविवक्षायामखिलादन्यत्वमित्यर्थः । दोषविरुद्धगुणरूपत्वात्, अखिलजगतोऽन्यत्वादनामेत्यर्थः ॥ १५७ ॥ एन भवेत् उत्पद्यते यतः तस्मात् अभावः । आद् भवतीति विश्वमभाव इत्युच्यत इत्यर्थः । इदं समस्तं विश्वं शून्यम्, विश्वमभावः, विश्वमसत्, विश्वं विज्ञानमित्यादि मयोदितं वाक्यं इत्यादि एवमुक्तार्थविशिष्टं बोद्धव्यम् ।**

---

ज्ञेन सर्वज्ञेन भगवताऽन्यते प्रेर्यत इति जडस्वरूपमपि विश्वं ज्ञानात्मकमुक्तम् । चेतनं तु द्वेधाऽपि, ज्ञेनान्यत्वात् ज्ञानरूपत्वाच्च ॥ १५६ ॥ शुः आनन्दशीलः । ताच्छील्यार्थ उः । तत उच्चत्वादुः । शुश्च उश्च शूः । नायमूकारान्त इति भ्रमितव्यम् । किन्तु उकारान्त एव । यथा परमाशब्दोऽकारान्तः परमश्चासावश्चेति । **'शूः शू शवः'** इत्येव रूपम् । तेनाऽङि शूनेति रूपम् । शूना नीयत इति शून्यम् । निधेयं तत्तद्योग्येषु तत्तन्निधाय रक्षणीयम् । दोषविरुद्धगुणरूपत्वादः । दोषोज्झितत्वाच्च अः । अखिलादन्यत्वाच्च अः । ऐन अकारवाच्येन निर्दोषगुणपूर्णेन सर्वविलक्षणेन भगवता साद्यते नाश्यत इत्यसत् । एन भवति जायत इत्यभावः ॥ १५७–९ ॥

---

१. **'–नीयं च यतो–'** २. **'यतस्तथा ।'** इति क्वचित् ।

इत्यादि देवान् प्रतिबोधयंश्च देवैः सहोवास[१] स बुद्धदेवः ।
गत्वा स्वधामाप्यपरेण रूपेणाऽस्ते पृथक् चैकतनुर्य्यथेष्टम् ॥ १५९ ॥

ततस्तु बुद्धोदितपक्षसंस्थो जिनोऽपि चक्रे मतमन्यदेव ।
बौद्धेन जैनेन मतेन चैव[२] दैत्यांशकाः प्रीतिमगुः[३] समस्ताः ॥ १६० ॥

प्रशान्तविद्येत्यभिधं तथाऽन्यद् बुद्धोक्तशास्त्रं त्रिदशा अवाप्य ।
तोषं ययुर्वेदसमस्तसारं [४]यामास्थितानामचिरेण मुक्तिः ॥ १६१ ॥

अन्ये मनुष्या अपि भारताद्यं सत्सम्प्रदायं परिगृह्य[५] विष्णुम् ।
यजन्त आपुः परमां गतिं तन्न सेहिरे क्रोधवशादिदैत्याः ॥ १६२ ॥

शैवं तपस्ते विपुलं विधाय जगद्विमोहोर्ज्जितशक्तिमस्मात् ।
प्राप्य प्रजाता भुवि मोहनं च चक्रुः कुतर्कैरभिदां वदन्तः ॥ १६३ ॥

तेषां प्रपाताय सतां च मुक्त्यै[६] जन्माऽस भीमस्य यदुक्तमत्र ।
दुर्ग्गा पुनर्विप्रकुलेऽवतीर्ण्णा हनिष्यति व्रातमथासुराणाम् ॥ १६४ ॥

**न प्रतीतार्थमिति भावः । मयोदितं हेयं विरुद्धत्वधियाऽनुपादेयं नास्ति ॥ १५८–५९ ॥ अन्यत् भगवन्मतात् । प्रतीतार्थपरमिति भावः ॥ १६० ॥ अन्यद् बुद्धोक्तशास्त्रम् । बुद्धोक्तं च तच्छास्त्रं चेति बुद्धोक्तशास्त्रम् । बुद्धोक्तशास्त्रमन्यत् । भगवदभिप्रेतार्थविरुद्धतया असुरप्रतीतमन्यदित्यर्थः । यां भगवदुक्तप्रशान्तविद्याम् ॥ १६१–२ ॥ अभिदां (भे)दा(भावम्) ॥ १६३ ॥ प्रपाताय, तमसीति शेषः ।**

---

जिनोऽपि शुद्धोदनोऽपि ॥ १६०–२ ॥ जगद्विमोहाय ऊर्जितां शक्तिमस्मात् तपसः, तपसा तोषिताद्वा शिवात् प्राप्य । मोहनं शास्त्रंचक्रुः । तत्राभिदां जीवानां जीवब्रह्मणोश्चाभेदं प्रतिपादयन्तः । एतेन **'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि कलौ ब्राह्मणरूपिणा'** [पा.पु.उ.खं.२३६.७] इति शङ्करवचनं गदितार्थम् । वरदानसाफल्याय क्रोधवशादिदैत्येषु सन्निहितेन मयैवेत्यर्थः । **'अपार्थं श्रुतिवाक्यानां दर्शयन् लोकगर्हितम् ।....परेशजीवयोरैक्यं मया तु प्रतिपाद्यते'** [८–९] इति च ॥ १६३ ॥ मध्वाख्यं जन्माऽस । हरितत्वमाहेति यदुक्तमत्र । दुर्गा

---

१. **'सहैवाऽस'** इति क्वचित् । २. **'चैवम्'** ३. **'प्रीतिमापुः'** इति क्वचित् । ४. **'यामाश्रिताना–'**
५. **'–ताद्यं तत्सम्प्रदायात् प्रतिगृह्य'** इति क्वचित् । **'सत्सम्प्रदायं प्रतिगृह्य'** इति च । ६. **'सतां विमुक्त्यै'**

ततः कलेरन्तमवाप्य धर्म्मज्ञानादिकल्याणगुणप्रहीने ।
लोके विरिञ्चत्रिपुरघ्नशक्रपूर्वाः पयोब्धिं त्रिदशाः प्र जग्मुः ॥ १६५ ॥

नारायणस्तैः स्तुतिपूर्वमर्त्थितो भवाय लोकस्य स शम्भळाख्ये[1] ।
ग्रामे मुनेर्विष्णुयशोऽभिधस्य गृहे बभूवाऽविरचिन्त्यशक्तिः ॥ १६६ ॥

कलेस्तु कात्कारत एष[2] कल्की ज्ञानं कलं कं सुखमेव तद्वान् ।
कल्कीति वा तेन समस्तदस्युविनाशनं तेन दिनाद् व्यधायि ॥ १६७ ॥

अधर्म्मवृत्तं विमुखं हरेश्च निहत्य निःशेषजनं तुरङ्गी ।
संस्थापयामास स धर्म्मसेतुं[3] ज्ञानं स्वभक्तिं[4] च निजप्रजासु ॥ १६८ ॥

इत्याद्यनन्तानि हरेरुदारकर्म्माणि रूपाणि च सद्गुणाश्च ।
नित्यव्यपेताखिलदोषकस्य ब्रह्मेत्यनन्तेति च नाम येन[5] ॥ १६९ ॥

**अत्र अस्मिन् ग्रन्थे 'जातः पुनर्विप्रतनुः स भीमो दैत्यैर्निगूढं हरितत्वमाह'(३२–१३१) इति यदुक्तं तत् जन्माऽसेत्यर्थः ॥ १६४–६ ॥ ज्ञानं कलं कलशब्दवाच्यम् । सुखं कं कशब्दवाच्यम् । तद्वान् (कल्कीति वा) इति सम्बन्धः । (कलं ज्ञानं कं चास्यास्तीति ) कल्कीति निरुक्तिः ॥ १६७–८ ॥ 'आनन्दतीर्थवर-नामवती तृतीया भौमी तनुर्मरुत आह कथाः परस्य' इति प्रतिज्ञातभगवदवतारकथा उक्त्वोपसंहरति– इत्यादीति । इत्यादीनि च तानि अनन्तानि च । येन कारणेन अनन्तकर्मरूपगुणवत्त्वेन ब्रह्मेति अनन्तेति च नाम ॥ १६९ ॥**

---

पुनः । उक्तं च पण्डिताचार्यैः–**'स भाविनीमस्मरदत्र चण्डिकाम्'** [म.वि.५.३५] इति । **'अस्मरदत्र पयस्विनीतटे'** इति भावप्रकाशिका ॥ १६४ ॥ त्रिपुरघ्नः शिवः । अत्र द्वन्द्वे अभ्यर्हितं पूर्वमिति तारतम्यक्रमेण निर्देशः । प्रकृष्टं नारायणं प्रार्थयितुं जग्मुः ॥ १६५ ॥ **'शम्भळग्राममुख्यस्य ब्राह्मणस्य महात्मनः । भवने विष्णुयशसः कल्की प्रादुर्भविष्यति'** [१२.२.१८] इति श्रीभागवते । शं भरतीति शम्भळम् । आविर्बभूव ॥ १६६ ॥ कलिं कात्करोतीति कल्की कल्किर्वा । कलं ज्ञानं कं सुखं चास्य स्त इति तेन वा कारणेन कल्की । तेन कल्किना व्यधायि विधास्यते । यथापूर्वमकल्पयदिति व्यधायीत्याह ॥ १६७ ॥ धर्मस्य सेतुमविच्छेदं दृढं स्थापयामास । सेतुर्हि विच्छिन्ने पूर्वापरे तीरे सिनोति । स्वयमेवान्यत्राऽह– **'दुष्टकुलान्तक कल्किस्वरूप । धर्मविवर्धन मूलयुगादे'** इति ॥ १६८ ॥ सद्गुणाश्च

---

१. **'शम्फलाख्ये'** २. **'एव कल्की'** ३. **'धर्मकेतुम्'**

४. **'ज्ञानं सुभक्तिम्'** इति क्वचित् । **'ज्ञानं च भक्तिम्'** इति च । ५. **'यस्य ।'** इति क्वचित् ।

**आनन्दतीर्थाख्यमुनिः[१] सुपूर्ण्णप्रज्ञाभिधो ग्रन्थमिमं चकार ।**
**नारायणेनाभिहितो बदर्य्यां तस्यैव शिष्यो[२] जगदेकभर्त्तुः ॥ १७० ॥**

**[३]यस्तत्प्रसादादखिलांश्च वेदान् सपञ्चरात्रान् सरहस्यसङ्ग्रहान् ।**
**वेदेतिहासांश्च पुराणयुक्तान् यथावदन्या अपि सर्वविद्याः ॥ १७१ ॥**

**समस्तशास्त्रार्थविनिर्ण्णयोऽयं विशेषतो भारतवर्त्मचारी ।**
**ग्रन्थः कृतोऽयं जगतां जनित्रं हरिं गुरुं प्रीणयताऽमुनैव ॥ १७२ ॥**

**अस्य ग्रन्थस्य स्वोक्ततत्वज्ञापनार्थं च ग्रन्थकर्तुः स्वस्य रूपमाह– आनन्दतीर्थेत्यादिना ॥ १७० ॥ सरहस्य-सङ्ग्रहान् उपनिषत्सङ्ग्रहसहितान् ॥ १७१ ॥ (आत्म)गामिप्रयोजनमाह– समस्तेति । (अमुनैव) आनन्दतीर्थ-पूर्णप्रज्ञाचार्यनाम्नैव ॥ १७२ ॥**

---

अनन्ताः । येन गुणकर्मणां रूपाणां चानन्तत्वेन हेतुना ॥ १६९ ॥ पूर्णप्रज्ञ इति तीर्थरहितमाश्रमनाम । यथाऽऽच्युत-प्रज्ञ इति, हृषीकेश इति, पद्मनाभ इति, नरहरिरिति । वेदान्तसाम्राज्येऽभिषेकसमये सतीर्थं नाम क्रियते। तदा भगवत्पाद आनन्दतीर्थ इति नाम्ना पर्यभूष्यत । यथाऽच्युतप्रज्ञः पुरुषोत्तमतीर्थ इति । पद्मनाभादयश्च तैरेव नामभिस्तीर्थान्तैः– हृषीकेषतीर्थः, पद्मनाभतीर्थो नरहरितीर्थ इत्यादि । तदुक्तं विष्णुतीर्थीये–‘**श्रुतग्रन्थमृजुं सौम्यं प्रवीणं निष्क्रियं यतिम् । योगपट्टेन नाम्ना वै युक्तं कुर्याद् गुरुर्महान् । शुभे दिने प्रातरेव व्यासरूपं हरिं यजेत् । पूर्वोक्तेन विधानेन नैवेद्यं पायसादिकम् । दत्वा पूज्य पुनर्मन्त्री शिष्यं चात्र हरेरुप । स्नातं यथावदाचान्तं प्राङ्मुखं चोपवेश्य च । शङ्खोदेनैव सम्प्रोक्ष्य कृत्वा चाथाभिषेकिणम् । पाराशर्यस्य मनुना व्यासं तद्धृदये यजेत् । यथापूर्वं ततस्तस्य तीर्थयुक्तं भवेदथ । सर्वशुद्धिकरत्वात्तु तीर्थाख्यो विष्णुरुच्यते । तत्तन्नामाख्यतीर्थेन हरिणा संयुतस्त्विति । अनेन हरिणा चायं तीर्थभूत इतीरितः । अर्थस्तथाऽन्यनाम्नोऽपि तत्तज्ज्ञानीति वा भवेत्**’ [सं.प.३.२२०–६] इति। यद्यपि पूर्णत्वं साव-धिकम् । अथापि जीवगणेषु सर्वाधिकमिति सुपूर्णेत्याह । पूर्णप्रज्ञ इति न डित्थादिवन्नाममात्रम्, अन्वर्थं चेति सूचनाय च सुपूर्णप्रज्ञाभिध इत्याह, श्रीपूर्णप्रज्ञाभिध इत्यर्थः । अनयैव नामभ्रान्त्या केचिदविचक्षणाः श्रीमध्वविजयं सुमध्वविजय-माहुः । तस्य नारायणस्यैव शिष्यः । एवकारेण साक्षाच्छिष्यतामाह । तस्यैव केवलं शिष्यः नान्यस्य कस्यचनेति च ॥ १७० ॥ सरहस्यसङ्ग्रहान् इतिहासांश्च वेद । रहस्यान्युपनिषदः । वेदार्थसङ्ग्रहरूपाणि ऋक्संहितास्वाध्यायादीनि सङ्ग्रहः । मूलरामायणं भारतं चेति द्वौ मुख्यावितिहासौ । वाल्मीकिरामायणादीनृमुनिप्रणीतानन्यांश्चेतिहासान् ॥१७१॥ ग्रन्थोऽयं समस्तशास्त्रार्थं विशिष्येदमित्थमिति निर्णयतीति तादृशः । विशेषतो भारतवर्त्मचारी चायम् । अपिच हरिं

---

१. ‘**–तीर्थेतिमुनिः**’ इति क्वचित् । २. ‘**तस्यैकशिष्यो–**’ इति क्वचित् । ३. ‘**यस्य प्रसादा–**’ इति क्वचित् ।

विनिर्ण्णयो नास्त्यमुना विना यद् विप्रस्थितानामिव[1] सर्ववाचाम् ।
तद् ब्रह्मसूत्राणि चकार कृष्णो [2]व्याख्याऽथ तेषामयथाकृताऽन्यैः ॥ १७३ ॥

निगूहितं यत् पुरुषोत्तमत्वं सूत्रोक्तमप्यत्र महासुरेन्द्रैः ।
जीवेश्वरैक्यं प्रवदद्भिरुग्रैर्व्याख्याय सूत्राणि चकार चाऽविः ॥ १७४ ॥

व्यासाज्ञया भाष्यवरं विधाय पृथक्पृथक् चोपनिषत्सुभाष्यम् ।
कृत्वाऽखिलान्यं पुरुषोत्तमं च हरिं वदन्तीति समर्थयित्वा ॥ १७५ ॥

तनुस्तृतीया पवनस्य सेयं सद्भारतार्त्थप्रतिदीपनाय[3] ।
ग्रन्थं चकारेममुदीर्ण्णविद्या यस्मिन् रमन्ते हरिपादभक्ताः ॥ १७६ ॥

**वेदपञ्चरात्रादिषु विप्रस्थितानां कुत्रचिदन्योन्यविरुद्धत्वेनेव स्थितानामत एव संशयहेतूनां सर्ववाचां अमुना ग्रन्थेन विना विनिर्णयः मुख्यनिर्णयः नास्ति यत् (तत्) तस्मात् इमं ग्रन्थं चकारेति योजना । ननु ब्रह्मसूत्रैरेव सर्वनिर्णयसम्भवात् किमर्थमेतन्निर्माणमित्यत आह—ब्रह्मसूत्राणीति । सत्यं सर्वनिर्ण(याय कृष्णः ब्रह्मसूत्राणि चका)रेति । तथाऽपि अन्यैः मायावाद्यादिभिः तेषां ब्रह्मसूत्राणां व्याख्या अयथा व्याससिद्धान्तविरुद्धा कृता । तस्मादमुना विना निर्णयो नास्तीति सम्बन्धः ॥ १७३ ॥ तर्हि ब्रह्मसूत्राणि न व्याख्या(तानि किमित्यत आह—) निगूहितमिति । पुरुषोत्तमत्वम्, भगवत इति शेषः ॥ १७४ ॥ व्याख्याय सूत्राणि चकार चाऽविरित्युक्तं विवृण्वन्नाह— व्यासाज्ञयेत्यादिना । उपनिषत्सुभाष्यम् । जातावेकवचनम् । उपनिषदां भाष्याणीत्यर्थः । भाष्यवरं सुभाष्यमित्युक्त्या अन्यानि दुर्वादिकृतानि दुर्भाष्याणीत्युक्तं भवति । हरिं अखिलान्यं सर्वस्माद् भिन्नं पुरुषोत्तमं वदन्तीति साधयित्वा ॥ १७५ ॥ अनन्तरं**

---

गुरुं प्रीणयतैव, नान्यफलाकाङ्क्षया, अमुना आनन्दतीर्थाख्यमुनिना कृतोऽयमितीदम्पदावृत्त्या एकैकमपि विशेषणमवधारयति ॥ १७२ ॥ विभिन्नमार्गेषु क्वचिद् विरुद्धमार्गेषु प्रस्थितानामिव । वस्तुतो न विप्रस्थिताः । किन्तु विप्रस्थिता इवाज्ञानां प्रतीयमानाः । यत् विनिर्णयो नास्ति तत् तस्मात् ग्रन्थोऽयं कृतः । तत् तस्मादेव विनिर्णयार्थात् कारणात् । यद्यपि निर्णयार्थमेव ब्रह्मसूत्राणि चकार कृष्णः । अथाप्यन्यैः तेषां व्याख्या अयथाकृता यथा सूत्रार्थः व्यासाभिमतः ततोऽन्यथा कृता ॥ १७३ ॥ असुरेष्वपि महान्तः महापातकमानिनः । तेषामपीन्द्राः कल्यादयः । अतः सूत्राणि यथावद् व्याख्याय निगूहितं सूत्रार्थमाविश्चकार ॥ १७४ ॥ एवं व्यासाज्ञया सूत्राणां भाष्यवरं विधाय दशोपनिषदां च पृथक्पृथक् सुभाष्यं कृत्वा । उपनिषत्सु भाष्यमिति भिन्ने वा पदे । उपनिषदः हरिं वदन्तीति समर्थयित्वा॥ १७५॥ सतः निर्दुष्टस्य भारतस्य

---

१. **‘–तानामिह सर्व–’** २. **‘व्याख्या तथैषामयथा’** । **‘व्याख्या तथैषामकृता तथाऽन्यैः’** इति क्वचित् ।
३. **‘–प्रतिपादनाय’** । वे.ती. पाठोऽपि तथा ।

'तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ।
'निर्य्यदीं बुध्नान्महिषस्य वर्प्पस ईशानासः शवसा क्रन्त सूरयः ॥ १७७ ॥

'यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति' ।
इत्यादिवाक्योक्तमिदं समस्तं तथा पुराणेषु च पञ्चरात्रे ॥ १७८ ॥

अत्रोदिता याश्च कथाः समस्ता[१] वेदेतिहासादिविनिर्ण्णयोक्ताः ।
तस्मादयं[२] ग्रन्थवरोऽखिलो[३]रुधर्म्मादिमोक्षान्तपुमर्त्थहेतुः ।
किं [४]वोदितैरस्य गुणैस्ततोऽन्यै[५]र्न्नारायणः प्रीतिमुपैत्यतोऽलम्[६] ॥ १७९ ॥

**सद्भारतार्थप्रतिपादनाय, प्राधान्येनेति शेषः । भारतार्थ(प्रतिपादनद्वारा) सर्वशास्त्रनिर्णयाय चेत्यर्थः । इमं ग्रन्थं चकार । (यस्मिन् ग्रन्थे) उदीर्ण(विद्या हरि)पाद(भक्ता रमन्ते तादृशम्) । इयं तृतीया तनुरिति सम्बन्धः ॥ १७६–७ ॥ इदं समस्तम् । वायोस्त्रयोऽवताराः तत्तृतीयो मध्व इत्यादीदं समस्तम् ॥ १७८ ॥ अतः अस्माद् ग्रन्थात्, श्रवणादिनाऽऽवर्तितादिति शेषः । अयं नारायणः प्रीतिमुपैति । यतस्ततः तस्मात् अन्यैः उदितैः अन्यगुणैः किम्? उदितेभ्योऽन्यैः अस्यागण्यगुणैरुदितैः किं प्रयोजनम्? मन्दमतिभिर्दुरवबोधत्वादिति भावः । उदितानुदिताशेषगुणानां फलं ग्रन्थस्य (नारायणप्रीतिविषयत्वम्) । सद्गुणानां**

---

सन् निर्दुष्टो व्याससम्मतो योऽर्थः । तस्य प्रतिदीपनाय । युक्तिपूर्वकं प्रतिष्ठाप्यदीपनंप्रतिदीपनम्।उदीर्णविद्या हरिपादभक्ता अत्र प्रतिदीपिताभ्यां भक्तिज्ञानाभ्याममृतोदधिमवगाढा इवान्तः स्वान्ते रमन्ते निरन्तरम् । अन्ये पुनरन्धया भक्त्या केवलं कपोलं तण्डन्ते ॥ १७६ ॥ तृतीयमस्येत्यादिर्मन्त्रभागः द्वितीयाध्याये व्याख्यातः ॥ १७७–८॥ वेदेतिहासादिषु उक्ताः, अथापि सम्मुग्धतया, अत्र तु ता एव विमृश्य विमथ्य निर्णयेनोक्ताः । वेदैरितिहासैः, आदिना पुराणैस्तर्कैश्च सहकारिभिः, तेषां सहकारेणेत्येतत्, सन्दिग्धा विरुद्धा इव प्रतीयमाना अपि विरोधस्य विशयस्य च प्रहाणेन निर्णयेनोक्ताः । मोक्षपर्यन्तत्वात् तदविरोधित्वाच्च उरवो धर्मार्थकामाः । उरूणां देवानामपि पुमर्थहेतुः । अतो ग्रन्थवरान्नारायणः प्रीतिमुपैतीति पर्याप्तम् । किमतोऽधिकं किमपि वक्तव्यमवशिष्यते ॥ १७९ ॥ भगवत्पादः

---

१. **'समस्तवेदेति–'** इति क्वचित् । २. **'यस्मादयम्'** इति क्वचित् । ३. **'ग्रन्थवरोऽखिलानां धर्मादि–'**
४. **'किञ्चोदितै–'** ५. **'–स्तथाऽन्यै–'** इति क्वचित् ।
६. **'–मुपैत्यतोऽयम्'** इति वे.ती. सम्मतः पाठः स्यात् । इतः परं प्र. पाठे पद्यमिदमधिकं पठ्यते–

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलम् । बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ॥
वायो रामवचनोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

यः सर्वगुणसम्पूर्ण्णः सर्वदोषविवर्ज्जितः ।
प्रीयतां प्रीत एवालं विष्णुर्म्मे परमः सुहृत्[1] ॥ १८० ॥

**इति श्रीमदानन्दतीर्त्थभगवत्पादविरचिते**
**श्रीमहाभारततात्पर्य्यनिर्ण्णये[2]**
**द्वात्रिंशोऽध्यायः[3]**

—०—

[आदितः श्लोकाः– **५०००+१८०=५१८०**]

**समाप्तोऽयं ग्रन्थः**

**नारायणप्रीत्येकफलत्वादिति सर्वमतिमङ्गलम् ॥ १७९–८० ॥**

**महाभारततात्पर्यनिर्णयार्थः सुरैरपि ।**
**न सुज्ञेयः कथं चाहं जानीयामल्पचेतनः ॥**

**तथाऽप्यस्य महार्थस्य टीकानिर्माणसम्भवम् ।**
**ममापराधं क्षाम्यन्तु सन्तः सद्गुणभूषणाः ॥**

इति श्रीमहाभारततात्पर्यनिर्णयटीकायां श्रीवेदाङ्गतीर्थभट्टारकविरचितायां
तात्पर्यदीपिकायां द्वात्रिंशोऽध्यायः

—०—

---

पुनरन्तेऽपि भगवत्स्मरणेनैव ग्रन्थमुपसंहरति–

'यः सर्वगुणसम्पूर्णः सर्वदोषविवर्जितः ।
'प्रीयतां प्रीत एवालं विष्णुर्मे परमः सुहृत्' इति ।

सर्वदोषैर्विरहितो यः पूर्णः सर्वसद्गुणैः ।
नित्यप्रीतः प्रीयतां स विष्णुर्मध्वमहासुहृत् ॥

इत्यशेषमतिमङ्गलम् ॥ १८० ॥

---

१. क्वचित्तु इतः परं **'यस्य त्रीणि–'** इत्यादिपद्यं पठ्यते ।

२. एतदध्यायनाम च मूलकोशेषु न निर्दिष्टम् । **'पाण्डवस्वर्गारोहणं नाम'** इति प्रचलितं नाम ।

३. इतः परं मूलादर्शे–**'हृषीकेशतीर्थेन लिखितोऽयं ग्रन्थः । श्रीवेदव्यासाय नमः ॐ'** इत्यस्ति ।

आचार्यगोविन्दकृते
श्रीमद्भारततात्पर्यनिर्णयस्य ।
निर्णिक्ते व्याख्याने निर्णयभावचन्द्रिकाख्याने
गतं द्वात्रिंशाध्यायविवरणं विदुषां हृदयाभरणम् ॥ ✻ ॥

निरणेनिक्तां यं गुरुकरुणाभस्त्रासरस्वतीमूषे ।
पटुरचनं तद्वचनं जिह्वादाहाय दुर्जनो लेढि ॥ ✻ ॥

भेकाः क्वचन च काका नाऽकाशं पूरयन्ति किमु रावैः ।
दूरे किल सहकारे कोकिल रे गाय नायकीभूय ॥ ✻ ॥

शास्त्राणि सर्वाणि विमथ्य तेषां व्याख्यानजातानि पुरातनानि ।
नवानि चाऽलोक्य तथा पुराणजातं च वेदांश्च विमृश्य गाढम् ॥ ✻ ॥

आनन्दतीर्थवचनानि यथामतीह वेदेतिहासवचनैः समयोजयाम ।
यन्निर्णयाय भगवान् प्रणिनाय दिव्यं ग्रन्थं महार्थमिममद्भुतमच्युतेष्टम् ॥ ✻ ॥

इतः किञ्चित् ततः किञ्चिद् विक्षिप्तं प्राह वेदराट् ।
एकत्र सङ्गमय्यैतन्मध्वो वक्तुं यदि क्षमः ॥ ✻ ॥

अत्रैकमाह तत्रैकं विरुद्धमिव वेदराट् ।
सर्वशास्त्रविदाचार्यः समन्वेतुं यदि क्षमः ॥ ✻ ॥

न प्राणेष्यदिमं ग्रन्थं यदि मध्वो महामतिः ।
अभविष्यन्नपार्थानि पुराणान्यल्पदृश्वनाम् ॥ ✻ ॥

मध्वप्रियस्यास्य महाग्रन्थस्य गहनार्थताम् ।
स्फुटयन्ती किञ्चिदिव भवत्वेषा सतां मुदे ॥ ✻ ॥

प्रत्यक्षरमनेकार्थमपूर्वं विश्वविस्मयम् ।
विलासं मध्ववचसामाविष्कर्तुमयं श्रमः ॥ ✻ ॥

साधु प्रयतनेनाद्य कृतेनानेन शक्तितः ।
प्रीयतां प्रीत एवालं पूर्णप्रज्ञः सुहृन्मम ॥ ✻ ॥

असूयया वा द्वेषाद् वा निन्दितुं दोषसञ्चयम् ।
विचेतुमथवा ज्ञातुं पठतेमं सकृज्जनाः ॥ ✻ ॥

अज्ञानामप्यभिज्ञानामसूयामुष्टचक्षुषाम् ।
भवभूतिवचांस्येव भवेयुर्मद्वचांसि च ॥ * ॥

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
'जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
'उत्पत्स्यते मम तु कोऽपि समानधर्मा
'कालो ह्ययं निरवधिर्विपुला च पृथ्वी' ॥ * ॥

श्रीमध्वानुग्रहजुषां विदुषां गुणशालिनाम् ।
अत्रास्ति तत्रभवतां तत्वामृतरसायनम् ॥ * ॥

वेदवेद्याय हरये वेदव्यासाय ते नमः ।
वेदार्थमवते मध्व भवते च नमोनमः ॥ * ॥

आत्मानन्दाय कृतं मध्वप्रीत्यै च माधवप्रीत्यै ।
व्याख्यानं गुरुकृपया विज्ञेयं केवलं विदुषाम् ॥ * ॥

इममनुपमं प्रबन्धं यो मध्वेन प्रबन्धयामास ।
यश्चेमं प्रबबन्ध प्रणतोऽस्मि हि तं च तं चापि ॥ * ॥

इत्याचार्यगोविन्दस्य कृतिषु
महाभारततात्पर्यनिर्णयपञ्चिकायां
निर्णयभावचन्द्रिकायां
द्वात्रिंशोऽध्यायः

—०—

॥ समाप्तोऽयं ग्रन्थः ॥

२२-१०-१२

# परिशिष्टानि





# प्रत्नप्रयोगमीमांसा

**ॐ ॥ अथातः प्रत्नानां पदरूपाणामनुशासनम् ॥ १ ॥**

ॐ ॥ **नत्वा नारायणं देवं कृत्वा च गुरुवन्दनम् ।**
**प्रत्नप्रयोगमीमांसावृत्तिरेषा वितन्यते ॥**

अथशब्दो मङ्गल्यः । माङ्गलिकं चेदं शास्त्रमधिक्रियत इत्यारम्भार्थश्च । पठन्ति हि– **'भद्रैषां लक्ष्मीर्निहिताऽधि वाचि'** इति । अथेत्यधीतपाणिनिनया अत्राधिक्रियन्त इत्यानन्तर्यार्थश्च । अतःशब्दोऽपि मङ्गल्यः सन् ग्रन्थस्यास्य सप्रयोजनतामभिधत्ते । वैदिकानां पदरूपाणां परिज्ञानेन महद्धि फलमिति । **'एकः शब्दः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति'** इति ह्यधीयते । यानि प्रत्नानि पदरूपाणि वेदेषु वैदिकेषु च पठितानि, न विहितानि च पाणिन्यादिभिः, तेषामिदमनुशासनं भवति । प्रयोगानुगुणं चेदं शासनं भवति । न स्वच्छन्दम् । प्रयोगशरणा हि वैयाकरणाः । न वैयाकरणशरणाः प्रयोगाः ॥

**स्वराः षोडश विसर्गान्ताः ॥ २ ॥**

अकाराद्या विसर्गान्ताः स्वराः । केचिदाचक्षते द्वादशैव स्वरा इति । तथाहि बह्वृचप्रातिशाख्यम्–**'अष्टौ समानाक्षराण्यादितः । ततश्चत्वारि सन्ध्यक्षराण्युत्तराणि । एते स्वराः'** इति । 'अ आ ऋ ॠ इ ई उ ऊ इत्यष्टौ समानाक्षराणि । ततश्चत्वारि ए ओ ऐ औ इति सन्ध्यक्षराणि । त एते द्वादशैव स्वराः' इत्यर्थः । एतन्निरासायाऽह–

षोडश स्वरा इति । **'अ आ आ३ इ ई ई३ उ ऊ ऊ३ ऌ ऌ२[1] ए ऐ ओ औ इति षोडश स्वराः'** इति तैत्तिरीय-प्रातिशाख्यम् । एतन्निरासायाह– विसर्गान्ता इति । **'अनुस्वारो व्यञ्जनं वा स्वरो वा । विसर्गस्तु व्यञ्जनमेव'** इति बाहृच्यम् । 'उभयोरपि व्यञ्जनत्वम्' इति तैत्तिरीयप्रातिशाख्यम् । तदुभयमप्यनेन दत्तोत्तरम् ॥

## आद्या दश समानस्वराः ॥ ३ ॥

आद्या दश अ आ इ ई उ ऊ ऋ ॠ ऌ ऌ२ इत्येते दश समानस्वराः । ह्रस्वदीर्घोभयात्मकत्वं सामान्यम् । प्लुतोऽपि दीर्घ एवेति न तस्य पृथग् गणना । नह्यदीर्घः क्वापि प्लुतो भवति । ननु ऌकारस्य दीर्घाभावं वदन्ति पाणिनीयाः? सत्यं ते वदन्ति । न वयं संवदामहे । किं कारणम्? मन्त्रात्मका हि वर्णाः । मातृकामन्त्रेषु च ऌ२-कारः पठितः । ऌ२जिरिति भगवद्रूपोपासनं च यथा सम्पन्नं स्यात् । तान्त्रिकाश्च ऌ२कारस्य कान्तिं कलां स्मरन्ति–

**अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।**
**शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।**
**पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः ॥**

सूक्ष्मां नामापरां कलामप्याहुः–

**निवृत्तिः सप्रतिष्ठा स्याद् विद्या शान्तिरनन्तरम् ।**
**इन्धिका दीपिका चैव रेचिका मोचिका परा ॥**

**सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायनी तथा ।**
**व्यापिनी व्योमरूपा स्युरनन्ता स्वरसंयुताः ॥**

हराख्यां रुद्रमूर्तिं च ऌ२कारमानिनीं देवतामुशन्ति–

**श्रीकण्ठानन्तसूक्ष्माश्च त्रिमूर्तिरमरेश्वरः ।**
**अर्घीशो भारभूतीशस्तिथीशः स्थाणुको हरः ॥**

**भिण्डीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ।**
**अक्रूरश्च महासेनः षोडश स्वरमूर्तयः ॥**

कुण्डोदरीं नाम शैवीं शक्तिं च–

१. एतदक्षरं सम्प्रति ॡ इति लिखित्वा तथैव पठन्ति । असङ्गतमिदम् । तदात्वे तस्याकारयोगे 'ऌर' (ऌ) इति रूपं स्यात् । अतः 'ऌ२' इतिवदुच्चारणमेव साधु ।

**पूर्णोदरी स्याद् विरजा शाल्मली तदनन्तरम् ।**
**लोलाक्षी वर्तुलाक्षी च दीर्घघोणा समीरिताः ॥**

**सुदीर्घमुखिगोमुख्यौ दीर्घजिह्वा तथैवच ।**
**कुण्डोदर्यूर्ध्वकेशी च तथा विकृतमुख्यपि ॥**

**ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः ।**
**सुश्रीमुखी च विद्यामुख्येताः स्युः स्वरशक्तयः ॥**

वैष्णवतान्त्रिका ऌजिमिव हृषीकेशमपि ऌकारदेवतामाहुः–

**केशवनारायणमाधवगोविन्दविष्णवः।**
**मधुसूदनसञ्ज्ञोऽन्यः स्यात् त्रिविक्रमवामनौ ॥**

**श्रीधरश्च हृषीकेशः पद्मनाभस्ततः परम् ।**
**दामोदरो वासुदेवः सङ्कर्षण इतीरिताः ।**
**प्रद्युम्नश्चानिरुद्धश्च स्वराणां मूर्तयः क्रमात् ॥**

सहर्षा च वैष्णवीं शक्तिम्–

**कीर्तिः कान्तिस्तुष्टिपुष्टी धृतिः शान्तिः क्रिया दया ।**
**मेधा सहर्षा श्रद्धा च लज्जा लक्ष्मीः सरस्वती ।**
**प्रीती रतिरिमाः प्रोक्ताः क्रमेण स्वरशक्तयः ॥**

एवं सर्वतान्त्रिकसम्मतोऽयं ऌकारः। अङ्गीकुर्वन्ति वैयाकरणा अपि काशकृत्स्नादयः। तथाहि धातुपाठं पठति काशकृत्स्नः– **'उङ् ऊङ् ऋङ् ॠङ् ऌङ् ॡङ् एङ् ऐङ् ओङ् औङ् शब्दे'** इति। यस्मिन्नर्थे स शब्द्यते स तस्यार्थ इत्यर्थः। ॡङ् सहने इति व्याख्यातारः। अलते सहत इति ॡः सोढेत्यर्थः। **'ॡकारो देवनार्यां स्यान्नार्यात्मन्यपि मातरि'** इति च मेदिनी। तेन ॡकारो वर्णान्तरमिति स्थितम् ॥

## तत्रान्त्यचतुष्कं नपुंसकम् ॥ ४ ॥

दशस्वन्त्यचतुष्कं ऋ ॠ ऌ ॡ – इति। ऋ ऌ इत्येतावकारयोगेन रेफलकारावेव भवत इति व्यञ्जन-सधर्माणौ। ॠ ॡ' इति दीर्घाक्षरावपि भवत इति स्वरसधर्माणौ। तदिदमुभयधर्मत्वमेव नपुंसकत्वम्। पोटेव स्त्रीपुंसलक्षणा ॥

## ततश्चत्वारः संयुक्ताः ॥ ५ ॥

ए ऐ ओ आविति सयुंक्ताक्षराः । ननु पाणिनिः **'एओङ् ऐऔच्'** इति पठति । ऋग्वेदप्रातिशाख्ये चैवम् । युक्तश्चायं पाठक्रमः । तथाहि– अकार इकारेण संयुक्त एकारो भवति । उकारेण ओकारः । ततोऽकार एकारेण ऐकारः । ओकारेण औकारः । तत ए ओ ऐ आवित्येव पठनीयम् । सत्यं तथा पठनीयम् । अथाप्येवं पाठे किमप्यान्तरं कारणमस्ति । अयमत्र स्वरक्रमः । लघुः पूर्वः । गुरुः परः । ह्रस्वः पूर्वः । दीर्घः परः । विषमो ह्रस्वः । समो दीर्घः । एवं गते एकारस्य च ओकारस्य च पारिभाषिकं ह्रस्वत्वं लघुत्वं चास्तीति तयोर्विषमतया निर्देशः– एकादश एकारस्त्रयोदश ओकार इति । ननु किमिदं व्यर्थं पारिभाषिकं लघुत्वं नाम? न व्यर्थम् । लघुतयोच्चार-दर्शनात् न्यूङ्खेषु गानेषु च । तथाहि न्यूङ्खे ह्रस्वमोकारं पठन्ति वेदज्ञाः, यथा भाषायाम्, 'ಒ' इति । तमेतम-र्धमोकारमाचक्षते । स यथा– ಅಮೊ೯३ ಒ ಒ ಒ ಒ ಒ ಓ३ ? इत्यादिः । गीतेषु चाऽचार्यप्रयोगः–**'अतिमत-तमोगिरि(**ತಮೊಗಿರಿ**)समितिविभेदन'** इत्यत्र ह्रस्वोऽर्ध ओकारः । **'जगदेक(**ಜಗದೇಕ**)कारण रमरम रमणा'** इत्यत्र ह्रस्वोऽर्ध एकारः । चतुर्मात्रा हि तत्र गतिः ॥

## द्वौ चतुर्दशभाजौ ॥ ६ ॥

अन्त्यौ द्वावनुस्वारविसर्जनीयौ । पूर्वतनैश्चतुर्दशभिरपि स्वरैः सङ्गतौ स्वरूपं लभेते । अम्, आम्, इम्, ईम्, अः, आः, इः, ईः, इत्यादि । नन्वेतयोर्व्यञ्जनत्वं मन्यन्ते प्रातिशाख्यकाराः । ते कथमपि मन्यन्ताम् । वयं तु स्वरत्वं मन्यामहे । व्यञ्जननिरपेक्षा च स्वरत्वं गमयति ॥

## कादयो मावसानाः स्पर्शाः पञ्चपञ्च वर्गाः ॥ ७ ॥

कखगघङ इति कवर्गः । चछजझञ इति चवर्गः । टठडढण इति टवर्गः । तथदधन इति तवर्गः । पफबभम इति पवर्गः । अकार उच्चारसौष्ठवार्थः । कुचुटुतुपु इति सङ्केतयन्ति पाणिनीयाः । त एते स्पर्शाः पञ्चविंशतिर-क्षराणि । पञ्चभूतसम्बन्धात् पञ्चको वर्गः । कचटतपा वायव्याः । खछठथफा आग्नेयाः । गजडदबा भौमाः । घझढधभा आप्याः । ङञणनमा नभस्याः । एवं कादयो मान्ताश्चतुर्विंशतितत्वात्मानः । पञ्चविंशः पुरुषो मकारः । एवं कं खं गं घं इति चत्वार्यनुनासिकानि यमाक्षराण्यधिकानि प्रातिशाख्ये पठ्यन्ते । तानि किमिति नात्र पठ्यन्ते? स्थानभेद एवायं नाक्षरभेद इति न पृथक् पठनीयानीति । अन्यथा चं जं इत्यादेरपि ग्रहणं प्रस-ज्येत । मुमुच्महे, परिज्मानम् इत्यादिप्रयोगदर्शनात् ॥

## यादयो दश व्यापकाः ॥ ८ ॥

यादयो हान्ता अष्टावेवेति पाणिनिः । अत आह– यादयः क्षान्ता दश व्यापका इति । यरलवाः शषसहा ळक्षौ च । कथं व्यापकाः । स्पर्शेषु व्याप्य तिष्ठन्तीति । शक्यम्, शुक्रम्, शुक्लम्, पक्वमित्यादि ॥

## चतस्रोऽन्तस्थाः क्षैप्राः ॥ ९ ॥

चतस्रोऽन्तस्थाः । यरलवाः । स्वरद्वययोगेऽपि भवन्ति, व्यञ्जनयोगेऽपीत्यन्तस्थासञ्ज्ञा । स्पर्शोष्मणामन्तर्मध्ये तिष्ठन्तीति च । व्यञ्जनान्येवैतानि स्त्रीलिङ्गानि निर्दिश्यन्ते । ननु यवरला इति पाणिनिः पठति–**'हयवरट् । लण्'** इति । युक्तश्चायं पाठक्रमः । इ उ ऋ ऌ इति स्वरक्रमानुगुण्यात् । तथाहि इ+अ=यकारो भवति । उ+अ=वकारो भवति । ऋ+अ=रेफो भवति । ऌ+अ= लकारः । सत्यम्, स्वरानुगुण्याय यवरला इति पठितव्यम् । अथाप्यक्षरविद्याविशारदा यरलवेत्येव पठन्ति । किं कारणम्? देवताक्रमानुगुण्यात् । मन्त्रवर्णा एते देवतानुसन्धानप्रधानाः । अचां स्पर्शानां च यः क्रमः स एवात्र देवताक्रमः । कखगघङाः क्रमेण वाय्वग्निभूजलाकाशात्मानः । एवं चुटुतुपुष्वपि । अत्रापि यमिति वायुः । रमित्यग्निः । लमिति भूः । वमिति जलम् । शमित्याकाशः । स्वरेष्वपि तथा– अआ इति वायुः । इई इत्यग्निः । उऊ इति भूः । ऋॠ– इति जलम् । ऌ ॡ इत्याकाशः । ए इति वायुः । ऐ इत्यग्निः । ओ इति भूः । औ इति जलम् । अमित्याकाशम् । अः इति ब्रह्म । यथा स्पर्शेषु मकारः पुरुषः । ते चैते यरलवाः क्षैप्रा इत्युच्यन्ते छन्दःशास्त्रेषु । किं क्षैप्राः? संयुक्ताः क्षिप्रं पठ्यन्ते । अक्लेशपठनाय श्रवणसुभगत्वाय छन्दआनुगुण्याय च विश्लिष्य पठ्यन्त इति । यथा त्र्यम्बकम्, त्रियम्बकम् । स्फुटमेतदुत्तरत्र **'क्षैप्रसंयोगा व्यूह्यन्ते–'** इति सूत्रे । क्षैप्राः क्वचिदनुनासिका अपि भवन्ति । तँय्यज्ञम् । पुँल्लिङ्गः । जिँह्वा ॥

## परे चत्वार ऊष्माणः ॥ १० ॥

शषसहाः ॥

## अघोषास्त्रयः ॥ ११ ॥

शषसाः । हकारो घोषवान् ।

## लवळः ॥ १२ ॥

लकारवत् ळकारोऽपि दन्त्यः । डं लं ळमिति भूदेवत्यानि । अज्मध्यस्थडकारादेशरूपादप्यन्यो ळकारः पठ्यते । पाणिन्यादयः नैतं वर्णं पठन्ति । न शीक्षाशास्त्रकृतः । नापि प्रातिशाख्यकृतः । अथाप्यवश्यमङ्गीकर्तव्यमक्षरान्तरम् । पृथग्देवताश्रवणात् । लक्ष्मीपतिर्ळस्य देवता । ळाळुको ळस्य ॥

## संयुक्तमन्त्यम् ॥ १३ ॥

एवमसंयुक्तानि पठितानि । अन्त्यं व्यञ्जनं संयुक्तम्, क्षकारः । एवं तर्हि ज्ञादयः किमिति न पठ्यन्ते । यतो न तेषां देवतान्तरं पठ्यते । क्षस्य पृथग्देवता पठ्यते–**'नृसिंहः क्षस्य देवता'** इति । संयुक्तः क्षकारः । संयुक्तरूपो नृसिहः । कषणात् क्षपणाच्च क्षो नृसिंहः । अयमत्र क्रमः– प्रथममूष्माणश्चत्वारः तत्राप्यघोषास्त्रयः पूर्वम् । ततः सघोषो हकारः । सघोषश्च ळकारः । सर्वान्ते च संयुक्तमक्षरमिति । अत्र देवताक्रममस्तु किञ्चिदिवान्यादृशो भवति । षमिति वायुः । क्षमित्यग्निः । ळमिति भूः । समिति जलम् । हमित्याकाशः । ननु तर्हि षक्षळसहा इति पठनीयम् । न पठनीयम् । अस्ति ह्यत्र क्रमान्तरविवक्षा । संयुक्ताक्षरस्यान्ते पठनाय क्रमभेदः । तेनाऽद्यन्तयोर्वाय्वग्नी गतौ । अग्नेर्भूस्थानत्वाद् भूबीजस्य ळकारस्य तेन सह पाठः । शषसा अघोषा इति सह पाठः । ततो घोषवान् हकार इति क्रमः ॥

## इत्येकपञ्चाशदेकपञ्चाशत् ॥ १४ ॥

इतीति वर्णसमाम्नायः समाप्त इत्याह । एकपञ्चाशदिति वर्णानामियत्तामवधारयति– एकपञ्चाशदेव वर्णा नाधिका न न्यूना इति । एतेनान्यथाऽन्यथा वर्णसङ्ख्यानं न तत्ववादसम्मतमित्याह । तथाहि पाणिनीयशिक्षायाम्–

**त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः ।**
**प्राकृते संस्कृते चापि स्वयम्प्रोक्ताः स्वयम्भुवा ॥**

**स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।**
**यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥**

**अनुस्वारो विसर्गश्च ≍क≍पौ चापि पराश्रयौ ।**
**दुःस्पृष्टश्चेति विज्ञेयो लृ३कारः प्लुत एवच ॥**

अयमर्थः– अइउऋ इत्येते चत्वारो वर्णाः प्रत्येकं ह्रस्वदीर्घप्लुतभेदेन त्रिधेति संहत्य द्वादश । लृकारो ह्रस्व एकः । ए ऐ ओ औ इत्येते दीर्घप्लुतभेदेन द्विधेत्यष्टौ । एवमेकविंशतिः स्वराः । कादयो मावसानाः पञ्चविंशतिः स्पर्शाः । ततोऽन्तस्था यरलवाः । ततः शषसहा ऊष्माण इत्यष्टौ व्यापकाः । संहत्य (२१+२५+८=५४) चतुःपञ्चाशत् । ततश्चत्वारो यमाः कं खं गं घमिति । ततोऽनुस्वारः, विसर्गः, जिह्वामूलीय ≍कः उपध्मानीय ≍पः इति चत्वारः । ततो दुःस्पृष्टः, 'अग्निमीळे' इत्यादिषु दृष्टो डकारस्थानीयो ळकारः । एवं (५४+४+४+१=६३) त्रिषष्टिर्वर्णाः । यदा लृ३कारः प्लुतोऽप्युपसङ्गृह्यते तदा चतुःषष्टिरिति । प्रायोऽन्येऽपि शीक्षाकारा एतमेव

पन्थानमनुसस्रुः। प्लुतस्य दीर्घ एवान्तर्भाव इत्युक्तम्। देवतान्तरास्मरणाच्चैवम्। दीर्घदेवतैव हि प्लुत-देवता। ऌकारस्य दीर्घोऽप्यस्तीत्युक्तम्। अर्थविशेषाद्देवताविशेषाच्च। अनुस्वारविसर्गौ च स्वरान्तर्गताविति समर्थितम्। जिह्वामूलीय उपध्मानीयश्च विसर्गभेद एव। स्थानभेदेऽपि देवतैक्यात्। अर्धगर्भ एव हि तयोरपि देवता। तेन षोडशैव स्वरा इति स्थितम्। स्पर्शानां पञ्चविंशतिरिति समानम्। कं खं गं घमिति यमाश्च कखगघेष्वेवान्तर्भूताः। देवतैक्यादेव। न केवलं डस्थानीयः, स्वतन्त्रश्च ळकारः। अन्ते क्षकारश्चेति दशैव व्यापकाः। तेनैकपञ्चाशदेव वर्णा इति स्थितम्। नन्वथापि व्याहन्यते– यदष्टाक्षर ओङ्कार इति, एकपञ्चाशद् वर्णा इति। अन्येऽपि वर्णा ओङ्कारे वर्णिताः श्रूयन्ते नाद इति बिन्दुरिति कलेति शान्त इत्यतिशान्त इति। न भोः। श्रावणानामेव वर्णानामत्र ग्रहणम्। बिन्दुकलाशान्तातिशान्ता मध्यमापश्यन्तीपरात्मानोऽन्तर्नादभेदा इति न श्रावणाः। मा भूत् तेषां वर्णत्वम्। नादस्य तु स्यात्। श्रावणो हि नादः। सत्यम्, श्रावणो नादः। अथापि स सर्ववर्णेषु समान इति न पृथग् ग्रहणम्। ध्वनीनां नादानां च पृथग् वर्णत्वविवक्षायामनन्ता एव वर्णाः। न हि तेषां सङ्ख्यानेन किमपि कृत्यम्। द्विरुक्त्या पादसमाप्तिमाह॥

**इति प्रत्नप्रयोगमीमांसायां वर्णसमाम्नायो नाम प्रथमः पादः॥**

—०—

ळकारः स्वतन्त्रो वर्ण इत्युक्तम्। इदानीं तत्प्रयोगविशेषानाह–

## राल्लो ळः समानपदे॥ १॥

रेफात् परस्य लकारस्य ळकार आदेशो भवति। विरळम्। सरळम्। कराळम्। मुरळी। मराळः। रेफात् परस्य किम्? विपुलः। चञ्चलः। देहली। कुशलम्। केवलम्। समानपदे किम्? सारलेशः। तरुलता॥

## नेद्व्यवाये॥ २॥

ईकारव्यवधाने न भवति। श्रीलः। करीलः। इल स्वप्नक्षेपणयोः। इळधातुश्चेत् करीळ इत्येव॥

## बहोश्चाति॥ ३॥

बहोरन्त्यस्योकारस्यादादेशे च लस्य ळो भवति। बहळम्। अतीति किम्? बहुलः पक्षः॥

## होहिभ्यां च॥ ४॥

होकारात्, हिकारात् परस्य च लस्य ळः। कहोळः। महिळा॥

## तापरश्च लोकवचनः ॥ ५ ॥

ताकारात् परोऽपि लकारो ळकारतामापद्यते यदि तत्पदं लोकवाचकम् । लोक इति लोकश्च लोकी च । पाताळम् । वेताळः । लोकवचन इति किम्? तालो वृक्षः । हिन्तालः । तालवृन्तम् । **'उत्तालतालभेत्ता च'** । ताल-वाद्यम् । तालवाद्यकारास्तलवकाराः ॥

## तळयुगळयमळयामळं च ॥ ६ ॥

तळादयः स्वभावत एव ळान्ताः । तळम् । भूतळम् । रसातळम् । **'तळप्रहारचूर्णिताः'** । गोयुगळम् । युगादल इति केचित् । कलचूप्रत्यय इत्यन्ये । प्रत्ययगतस्य लस्य ळः । यमळौ भ्रातरौ । विष्णुयामळम्, ब्रह्मयामळम्, रुद्रयामळं तन्त्रम् । चकारेणाऽकृतिगणोऽयमित्याह । ते च यथाप्रयोगं द्रष्टव्याः ॥

## कलतेः कालः ॥ ७ ॥

कल्यत इति कालः समयः । कलयत्यायुर्वा, कालयति सर्वं वा । कल सङ्ख्याने । एवं कला; कलरवः ॥

## कडतेः काळः ॥ ८ ॥

कडतीति काळः कृष्णवर्णः । काळाष्टमी । काळी । कड मदे । 'घसने' इत्यन्ये । कळत्रम् । एवं कळा कान्तिः । डस्य ळः ॥

## कलेर्वर्णे वा ळः ॥ ९ ॥

अथवा कलयतेर्वर्णे वाच्ये लस्य ळकार आदिश्यते । काळाष्टमी ॥

## अलतेः कमलम् ॥ १० ॥

कं जलमलतीति कमलम् । अल भूषणे ॥

## अडतेः कमळम् ॥ ११ ॥

कं मनोऽडतीति कमळम् । अड उद्यम इति पठन्ति । व्यथने चेति वक्तव्यम् । अत एव व्याडतीति व्याळो दुष्टमृग उच्यते ॥

## कमेर्वा कळच् ॥ १२ ॥

तेन कमनीयं कमळम्, कमनीया कमळा भवति । **'जयत्यब्जभवेशेन्द्रवन्दितः कमळापतिः'** ॥

## कमेरत उच्च मार्दवे ॥ १३ ॥

कमेरकारात् परमुकारो भवति मार्दवे वाच्ये। काम्यत इति कोमळं कोमलं वा ॥

## संयोगे मेलनमिलितयोः ॥ १४ ॥

सम्मेळने सम्मिळिता जनाः ॥

## शात् स्त्रीसञ्ज्ञायाम् ॥ १५ ॥

दुष्टं शलति दुःशळा। शल गतौ। श्यामळा। स्त्रीसञ्ज्ञायामिति किम्? भूरिर्भूरिश्रवाः शलः। दुष्टा शाला दुःशाला ॥

## सालस्य ळो ग्रामे ॥ १६ ॥

साळग्रामाख्यं क्षेत्रम्। साळग्रामशिला ॥

## तुलाया ह्रस्वश्च ॥ १७ ॥

सञ्ज्ञायां तुलाया ह्रस्वः, लस्य ळश्च। तुलां स्यतीति तुळसी ॥

## बाहोः सलौ षळौ पुरुषकारे णिनिश्च ताच्छील्ये ॥ १८ ॥

बाहुभ्यां सलत्यभिगच्छति शत्रूनिति बाहुषाळी। पुरुषकारे वाच्ये ताच्छील्ये णिनिः। सल गतौ। षल गतावित्यन्ये। षळ गतावित्येव वा धातुपाठः। बाहुशालीत्यपपाठः ॥

## अचोऽचि डस्य ळः प्रायो लोकेऽपि लोकेऽपि ॥ १९ ॥

बिलमडतीति बिलाळः। अड उद्यमे। चूळामणिः। गुळोदनम्। अच इति किम्? दण्डः। अचीति किम्? खड्गः। खळ्ग इति पठन्तश्चिन्त्याः ॥

**इति प्रत्नमीमांसायां ळकारसमाम्नायो नाम**
**द्वितीयः पादः ॥**

—०—

## धातोः सर्वस्मादुभयं पदं यथोपदिष्टम् ॥ १ ॥

यानि प्रतनैरुपदिष्टानि पठितानि वेदेषु वैदिकेषु च तत्रोभयं पदमिष्यते । भवति भवते– **'भवते नातिवादी'** । भवेत् भवेत– **'यदि नाम परो न भवेत हरिः'** । पश्यति पश्यते–**'यदा पश्यः पश्यते रुग्मवर्णम्'** । स्मरेत् स्मरेत– **'स्मरेत यामिनीनाथसहस्रामितकान्तिमत्'** । चरति चरते–**'स एषोऽन्तश्चरते भ्राजमानः'** । यतते यतति–**'कश्चिद् यतति सिद्धये'** । **'यततामपि सिद्धानाम्'** । यतेत यतेत्–**'आत्मनाशाय को यतेत्'** । यतिष्यते यतिष्यति– **'यतिष्यति भवान् काले'** । सृजति सृजते–**'यथोर्णनाभिः सृजते'** । स्रक्ष्यामि स्रक्ष्ये–**'स्रक्ष्ये हि चेतनगणान्'** । विशति विशते–**'विशते ब्रह्मधाम'** । मुच्यन्ते मुच्यन्ति–**'परामृतात् परिमुच्यन्ति सर्वे'** । लीयते लीयति–**'प्रविलीयन्ति कामाः'** । ऐक्षत ऐक्षत्–**'मनुजांस्तथैक्षत्'** । एवं यथाप्रयोगं द्रष्टव्यम् । एवमन्यत्रापि । अन्येषु लकारेष्वपि । फलस्याऽत्मपरगामितयाऽर्थविशेषश्च सर्वत्रान्वेष्टव्यो भवति ॥

## अडभावश्चाल्पाख्यायां लङि ॥ २ ॥

**'स ईक्षतेमान् लोकान्नु सृजा इति'** । अल्पेनेक्षणमात्रेण सर्वे लोका बभूवुरित्यर्थः । एवमन्यत्रापि ॥

## क्षैप्रान्तोपसृष्टाद् धातोरभ्यस्तबकारस्यानेकाचो वा क्षैप्रता ॥ ३ ॥

क्षैप्रान्तो रेफान्तो य उपसर्गः प्रेति तद्युक्तादनेकाचो धातोरभ्यस्तबकारस्य वा वकारादेशः । प्रबिभेद प्रविभेद । प्रबभाण प्रवभाण । प्रबभूव प्रवभूव । अनेकाच इति किम्? प्रबभौ ॥

## नोदन्तस्य ॥ ४ ॥

उदन्तस्य बकारस्य न भवति क्षैप्रादेशः । प्रबुभुजे । प्रबुभूषुः । प्रबुभुत्सुः ॥

## तुमर्थे तोसुन्ननुपपदेऽपि ॥ ५ ॥

**चरितोस्तदाज्ञाम्** । चरितुं तदाज्ञामित्यर्थः । तेनेश्वरे उपपदे सत्येव तोसुन्प्रत्यय इति नानुमतम् ॥

## हन्तेरलुग् वा शपो लटि लङि ॥ ६ ॥

यथोपदिष्टमिति वर्तते । लटि लङि, तदपि प्रायः प्रथमपुरुषे चैकवचने च । हनति । अहनत् ॥

## रुधादेः परस्मैपदे लङि शविकरणवद्वा रूपं यथोपदिष्टम् ॥ ७ ॥

अरुणत् अरुन्धां अरुन्धन्। अरुन्धत् अरुन्धतां अरुन्धन्। अयुनक् अयुङ्क्तां अयुञ्जन्। अयुञ्जत् अयुञ्जतां अयुञ्जन्। अबिभः अबिभृतां अबिभरुः। अबिभ्रत् अबिभ्रतां अबिभ्रन्। **'न्ययुञ्जदब्धौ'**। **'अबिभ्रदर्यमा दण्डम्'** ॥

## बध्नातेस्तुमुनि वा नलोपः ॥ ८ ॥

बन्द्धुम्। बद्धुम् ॥

## आतो ह्वेञो वा लिट्याम् ॥ ९ ॥

आङः परस्य ह्वेञ्धातोः लिटि परत आम्प्रत्ययो भवति। आह्वयामास। न वा भवति– आजुहाव, आजुहुवे॥

## शल इगुपधादनिटः क्सः स्थावरकर्मणि ॥ १० ॥

शलिति शषसहानां समाहार इति पाणिनिनये स्थितम्। इगुपधो यः शलन्तो धातुरनिटस्तस्मात् च्लेः क्सादेशः स्यात्। नियतोऽयं स्थावरकर्मणि। वृक्षोऽरुक्षत्। लता वृक्षमारुक्षत् ॥

## विभाषाऽन्यत्र ॥ ११ ॥

वृक्षमारुहद् देवदत्तः। वृक्षमारुक्षद् देवदत्तः। **'समीरोऽरुहदन्तरिक्षम्'**। **'यत् सानोः सानुमारुहत्'**। युवा युवतीमाश्लिक्षत्। युवा युवतीमाश्लिषत् ॥

## श्लिषेरानन्दातिशये च ॥ १२ ॥

आनन्दातिशये च विशिष्य क्सः स्यात्। जननी शिशुकमाश्लिक्षत्। युवा प्रियतमामाश्लिक्षत्। अन्यत्र– भगवान् भक्तमाश्लिषत्। **'समाश्लिषदमुं परमाभितुष्टः'** ॥

## वा शतरि यलोपः ॥ १३ ॥

श्लिषेरिति वर्तते। **'भुजेन चाऽश्लिषन्'** इति भागवते [४.१०.३] ॥

## उपसर्गाणामैकपद्यमनियतम् ॥ १४ ॥

शत्रून् विजयते। वि शत्रून् जयते। **'धियो यो नः प्रचोदयात्'**। **'आ मा यन्तु ब्रह्मचारिणः स्वाहा। वि मा यन्तु ब्रह्मचारिणः स्वाहा'**। **'अति हि नामावलिप्यसे जामदग्न्य'** ॥

## एतेरदन्तोपसर्गाद् वृद्धिर्लोटि ॥ १५ ॥

उप इहि उपैहि । अव इहि अवैहि । उप इतम् उपैतम् । अदन्तोपसर्गादिति किम्? अपि इहि अपीहि । वि इहि वीहि । अनुपसर्गेऽपि न भवति – अन्यथा इहि अन्यथेहि । सह इहि सहेहि ॥

## वहतेरादेर्वा दीर्घता ल्यपि ॥ १६ ॥

उदुह्य उदूह्य । **'युप्लवोर्दीर्घश्छन्दसि'** [६.४.५८] इति पाणिनीयाः । वहतेरपीति वक्तव्यम् ॥

## समो दधातेर्हिस्ति किति विभाषा ॥१७ ॥

दधातेरङ्गस्य हि इत्ययमादेशो भवति तकारादौ किति प्रत्यये परत इति पाणिनिनये स्थितम् । स च प्रत्ययः समित्युपसर्गात् परस्य धातोर्विभाष्यत इत्यत्रोच्यते । व्यवस्थितश्चायं विकल्पः । यत्र पदानां सन्धानमुच्यते सा संहितैव । अथच विशेषणतया प्रयोगे हित्वं विभाष्यते– संधितानि पदानि । संहितानि पदानि । पत्राणि सन्धितवान् मैत्रः । पत्राणि संहितवान् मैत्रः ॥

## ग्रहेर्वा गुणस्तुमुनि ॥ १८ ॥

ग्रहीतुमिति वक्तव्ये गृहीतुमित्याचक्षते प्रतनाः । तेन ग्रहणे मृदुता नामाकाठिन्यं ध्वन्यते ॥

## काममनसोरपि ॥ १९ ॥

गृहीतुकामः । गृहीतुमनाः । कन्यायाः पाणिं गृहीतुकामः । शत्रुनिग्रहायाऽयुधं ग्रहीतुकामः ॥

## सृजेरिष्णुजि ॥ २० ॥

प्रयुञ्जते **'विष्णु सृजिष्णु ग्रसिष्णु विवन्दे'** इति ॥

## हनो वा वधः क्यपि ॥ २१ ॥

वधादेशे वध्या । अन्यथा हत्या ॥

## लृटि वा ॥ २२ ॥

हनिष्यति वधिष्यति । **'शकुनिं त्वक्षकितवं सहदेवो वधिष्यति'** । वस्तुतस्तु प्राचीनधातुपाठानुसारेण वधधातुरेव रूपं निष्पादयति । तं धातुपाठमनभ्युपगच्छतां तुष्ट्यर्थमिदम् ॥

## सेडनिड् वा ॥ २३ ॥

नद्धुम् नहितुम् । **'नहि नहुषोऽलं नहितुम्'** । विषहितुम् । एवं यथोपदिष्टमवगन्तव्यम् ॥

## भजादेश्च स्ये वेट् ॥ २४ ॥

भक्ष्यति भजिष्यति । वक्ष्यति वहिष्यति । यथोपदिष्टमित्युक्तम् ॥

## वदो वचिर्वा ॥ २५ ॥

वदतेर्वचिरादेशो वा भवत्यार्धधातुकविषये । उवाद उवाच । उद्यात् उच्यात् । वक्ता वदिता । वक्ष्यति वदिष्यति । वक्ष्ये वदिष्ये । वक्तुम् वदितुम् । वक्तव्यं वदितव्यम् । अयमर्थः– ब्रुवो वचिरेव । तेनानिट्त्वमेव । वदतिस्तु सेड् भवत्यनादेशे । वच्यादेशे पुनरनिडिति । **'तथा वक्ष्ये तदीक्षया'** । प्रयुञ्जते हि लोकेऽपि–'वक्तव्यमिति वदति', 'यः कोऽपि वदतु । नाहं वक्तुमुत्सहे' इति । वदधातुमेव वदन् वक्तव्यमित्याह न वदितव्यमिति । वक्तुमित्याह न वदितुमिति ॥

## अभेरस्यतेः शतरि यलोपो वा ॥ २६ ॥

अभ्यस्यन्, अभ्यसन् वा ॥

## विद्रवतेर्णौ वस्य पः स्वराव्यवधाने स्वराव्यवधाने ॥ २७ ॥

विद्राप्यते । विद्राप्य । विद्राप्यमाणम् । स्वरव्यवधाने तु न भवति– विद्रावयति ॥

**इति प्रत्नप्रयोगमीमांसायां क्रियासमाम्नायो नाम तृतीयः पादः ॥**

—०—

## क्षैप्रसंयोगे व्यूहश्छन्दआनुगुण्याय ॥ १ ॥

यरलवाः क्षैप्रा इत्युक्तम् । संयुक्ते वर्णे यत्र पूर्वः परो वा वर्णः क्षैप्रः, स क्षैप्रसंयोगः । छन्द इति वृत्तवचनम् । **'शिरस्यरूहणं परिगृह्य'** । **'तर्हि वालिवधे समर्थः'** । **'सहस्रशीर्षं देवम्'** । **'तत्सवितुर्वरेणियम्'** । त एते समूह्य लिख्यन्ते, व्यूह्य पठ्यन्ते । अपि क्वचिद् व्यूह्यैव लिख्यन्ते– **'त्रियम्बकं यजामहे'** । **'त्रियम्बकं संयमिनं ददर्श'** ॥

## पञ्चन्सप्तनोर्वा दीर्घो दशनि सङ्ख्यायाम् ॥ २ ॥

**'पश्चादशाङ्गुलो नाभेः'** । **'सप्तादशाङ्गुलं तूर्ध्वम्'** । दशनीति किम्? पञ्चशती । सप्तशती । सङ्ख्यायामिति किम्? पञ्चदशः स्तोमः । सप्तदशः स्तोमः । कथं पञ्चाशत्? तत्र दशति परे पञ्चनो दीर्घः, दशतः शद्भावश्च– पञ्च दशतः परिमाणमस्येति ॥

## वो बो रेफे ॥ ३ ॥

रेफे परे वकारो बकारतामापद्यते–ब्रीहिः । क्वचिन्न भवति– व्रजः । व्रजति । व्रियते । व्रीळा ॥

## सपूर्वस्य ॥ ४ ॥

**'अकायमब्रणम्'** । अनुब्रजनम् । सम्ब्रीळितः । क्वचिन्न भवति–प्रव्रजनम् । प्रव्रज्या ॥

## जङ्घाया मूले वा ह्रस्वः ॥ ५ ॥

जङ्घमूलम् ॥

## मडेरपः ॥ ६ ॥

मण्डयति मण्ड्यते वा । मण्डपः मण्डपं वा ॥

## तडेराकागौ ॥ ७ ॥

ताडयतीति तडाकस्तडागो वा ॥

## आस्रवणादास्रम् ॥ ८ ॥

आस्रवतीत्यास्रमश्रु । पाश्चात्या आस्रमस्रमाहुः ॥

## पश्चिमस्यापि वा सर्वनामता ॥ ९ ॥

**'पश्चिमस्यां प्रपूजयेत्'** ॥

## उदमुदकम् ॥ ११ ॥

उदकमित्यर्थे केवलमुदमिति पदमिष्यते । **'उदः सञ्ज्ञायाम्'** [अ.सू.६.३.५७] इति नियमवचनम् ॥

## शरनेत्रधूमपद्मानां दैर्घ्यं स्त्रीसञ्ज्ञायाम् ॥ १२ ॥

शरावती नदी। नेत्रावती नदी। धूमावती क्षुद्रदेवता। पद्मावती देवी। स्त्रीसञ्ज्ञायामिति किम्? शरवणम्। शरधिः। इषुधिः शरवती। सर्वं नेत्रवतां स्फुटम्। चारुनेत्रवती कन्या। धूमवान् पर्वतः। धूमवती पाकशाला। पद्मवती सरसी॥

## विभाषा सत्रादीनाम्॥ १३॥

स्त्रीसञ्ज्ञायामिति गतम्। केवलं सञ्ज्ञावचनमिदम्। सत्रजित् सत्राजित्। द्वारवती द्वारावती। एवं यथाप्रयोगं द्रष्टव्यम्॥

## यज्ञपर्वताभ्यां छणपि॥ १४॥

याज्ञीयमन्त्रोपनिषत्। **'पार्वतीयकनृपाः समाययुः'**॥

## पर्वताड् ढगपि॥ १५॥

**'त्रैगर्ताः पार्वतेयाश्च'**॥

## द्वयोर्दशतोर्विन् शतिश्च शच्छं वा॥ १६॥

द्वौ दशतौ परिमाणमस्येति विंशतिः। विंशत्। विंशं वा। **'अक्षोहिणीगणितमस्य बलं च विंशदासीत्'**। **'विंशगुणाधिकाः'**॥

## त्रयाणां त्रिन् शच्च शं शतिः शतं वा॥ १७॥

त्रयाणां दशतां त्रिन्भावः, शच्च प्रत्ययः। त्रिंशत्। शं शति शतं वा प्रत्ययः। तेन त्रिंशं त्रिंशतिः त्रिंशतं वा। **'प्रत्येकशस्त्रिंशतदासदासिकान्'**॥

## आधिक्ये वृद्धिरधिकं वा॥ १८॥

वृद्धिर्यथा– अनौपमम्। सर्वथाऽनुपममित्यर्थः। अधिकं यथा– गमितुम्। एतेन सर्वत्रानिटां सेट्त्वं च व्याख्यातम्। यथा वा त्रिंशदिति वक्तव्ये त्रिंशतिरिति, त्रिंशतमिति॥

## केवलादपि क्विप्॥ १९॥

द्वेष्टीति द्विट् शत्रुः। वेत्तीति वित् विद्वान्। **'विदां मुदे'**॥

## यश्च सेनापतेः ॥ २० ॥

चकाराद् यक् च । सेनापत्यम् । सैनापत्यम् ॥

## ईयसुनीयसिर्वा ॥ २१ ॥

कनीयान् कनीयांसौ कनीयांसः । कनीयाः कनीयसौ कनीयसः ॥

## ओकारे वा पररूपम् ॥ २२ ॥

उत्तमोजाः, उत्तमौजाः । सञ्ज्ञायामुत्तमोजा एव । अन्यत्रोभयथाऽपि । **'ओतत्ववाची ह्योङ्कारो वत्त्यसौ तद्गुणोतताम्'** ॥

## अतसि पुरः पुर् ॥ २३ ॥

पुरस्तात् पुरतः ॥

## णत्वे निर्भिण्णस्योपसङ्ख्यानम् ॥ २४ ॥

**'निर्भिण्णवक्षाः'** । **'मुखतस्तालु निर्भिण्णम्'** ॥

## सुषुम्नायामणत्वं च ॥ २५ ॥

सुषुम्नेत्येव प्रयुञ्जते, न सुषुम्णेति ॥

## गृधेर्निन् वा ॥ २६ ॥

गृध्नातीति गृध्नी गृध्नुः ॥

## आत्मन आदेर्लोपो ह्रस्वो वा ॥ २७ ॥

क्वचिल्लोपः–**'त्मना देवेभ्यः'** । **'मन्यते त्मनः'** । **'दृश्यन्ते त्मह्नोऽपि हि'** । क्वचिद्ध्रस्वः–**'गूढोऽत्मा न प्रकाशते'** । **'सोऽत्मानं विविधात्मना'** ॥

## इदिनौ व्यत्यस्तौ वा ॥ २८ ॥

इत् इन् इत्येतदन्तौ व्यत्यस्य वा भवेताम् । नृकेसरिणम् । नृकेसरिम् । इत्यादीनाम् । इत्यादिनाम् । गळिः । गळी । **'सुखं स्वपिति गौर्गळिः'** । केशिः । केशी । **'अथ हतयोर्गळिकेश्योः'** । रुग्मी रुग्मिः ।**'–वैदर्भं रुग्मिमेव**

**च’** [भाग.१०.५५.२४]। वेति व्यवस्थितविकल्पे। क्वचिन्न भवति। हरिः न हरी। करी न करिः। मानी न मानिः। सन्धिः न सन्धी। मणिः। न मणी ॥

## पत्युः समासे ॥ २९ ॥

पतिशब्दस्य समासे इनिर्वा भवति। **‘मातुलस्याश्वपतिनः’** इति वाल्मीकिः। विः पक्षी पतिर्यस्याः सा **‘विपतिनी’**। नवा भवति– अश्वपतिः। विपतिः विपत्नी ॥

## असमासेऽपि पतिना पतौ ॥ ३० ॥

## अषष्ठीयोगेऽपि ॥ ३१ ॥

**‘अथो अहल्यां पतिनाऽभिशप्ताम्’**। **‘क्लीबे च पतिते पतौ’** ॥

## पुंयोगादाख्यायां ङीषि वृद्धिश्चाऽदेः प्रवहस्य ॥ ३२ ॥

पुंसा योगः पुंयोगः। पुंयोगाद्धेतोर्यत् प्रातिपदिकं स्त्रियां वर्तते पुंस आख्याभूतम्, तस्मात् ङीष् भवति। गणकस्य स्त्री गणकी। पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात् पुंशब्दा एते। तद्योगात् स्त्रियां वर्तन्त इति स्थितम्। तत्रायं विशेष आख्यायते– वृद्धिश्चाऽदेः प्रवहस्येति। प्रवहस्य स्त्री प्रावही। न प्रवही। कथं तर्हि सौपर्णी? अपशब्दोऽयम्। सुपर्णीत्येव प्रतनं रूपम्। **‘सुपर्णीं प्रयजेदपि’**। **‘देवीं वन्दे सुपर्णीम्’**। अन्ये यथाकथाच योजयन्ति– सुपर्णस्येयमिति सम्बन्धसामान्यविवक्षयाऽणिति। नहि पतिपत्नीभावं प्रहाय सम्बन्धसामान्यं वक्तुं युक्तम् ॥

## समासे स्वयम्भुवो ह्रस्वता ॥ ३३ ॥

तथाहि प्रयोगः–**‘स्वयम्भुशर्वशक्राद्याः’**। **‘स्वयम्भुब्रह्मणे नमः’**। **‘स्वयम्भुप्राणात्मशेषगरुडेशमुखान्’**। अयोगव्यवच्छेद एवायम् ॥

## बहुव्रीहौ वा महिम्नोऽदन्तता ॥ ३४ ॥

**‘पूर्तेरचिन्त्यमहिमः’**। **‘अगम्यमहिमा लोके’** ॥

## अर्णसश्च ॥ ३५ ॥

‘बहुव्रीहावदन्तता’ इति वर्तते। गुणगणार्णः ॥

## मत्वर्थे च वे ॥ ३६ ॥

बहुव्रीहाविति गतम् । मत्वर्थे यो वः प्रत्ययस्तस्मिन् परेऽर्णसोऽदन्तता स्यात् । अर्णांस्यत्र सन्तीत्यर्णवः । गुणगणार्णवः ॥

## वर्णे च वाच्ये ॥ ३७ ॥

वर्णेऽर्थे च वाच्ये स्याददन्तता । **'एकपञ्चाशदर्णानाम्'** । **'वर्णोऽक्षरं रश्मिरर्णः'** इत्यभिधानम् ॥

## आदिलोपो वा वर्णशरणयोः ॥ ३८ ॥

वर्णो वकारलोपेन वाऽर्णो भवति । शरणमादिलोपेनारणं भवति । **'श्रुत्वा हरिस्तमरणार्थिनमप्रमेयः'** ॥

## पर्वभाराभ्यां मत्वर्थे तः सञ्ज्ञायाम् ॥ ३९ ॥

पर्वाण्यस्य सन्तीति पर्वतः । **'पर्वभिः पर्वताः प्रोक्ताः'** इति स्मरन्ति । **'महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते'** । सञ्ज्ञायाम् किम्? पर्ववानिक्षुदण्डः । भारवानयं शिलाखण्डः ॥

## सत्वाच्च ॥ ४० ॥

सञ्ज्ञायां मत्वर्थे तः । सत्वतो नाम यदुवंशीयो राजा । यतः सात्वताः क्षत्रियाः । सञ्ज्ञायामिति किम्? सत्ववान् पुरुषः । सात्विकः पुरुषः ॥

## सात्वते नलोपः षष्ठीबहुवचने ॥ ४१ ॥

सञ्ज्ञायामिति वर्तते । सात्वतानां पतिर्नलोपेन सात्वतां पतिर्भवति यदि भगवद्वचनः ॥

## तनोतेर्वः ॥ ४२ ॥

मत्वर्थ इत्येव । तननं तत् । सम्पदादित्वात् क्विप् । मत्वर्थे वः । तननवत् तत्वं भवति । तकारान्तं शब्दरूपं मत्वर्थे प्रत्यये परे भसञ्ज्ञं भवति । भत्वाज्जश्त्वं न भवति । तेन तत्+वं=तत्वम् । मत्वर्थे किम्? तस्य भावस्तत्त्वम् । धर्मिवचने द्वौ तकारौ । धर्मवचने त्रयस्तकाराः । ततं वं ज्ञानमस्येति वा तत्वम् ॥

## सीदतेश्च ॥ ४३ ॥

सदिति साधुभाव उच्यते। साधुभाववत् सत्वं नाम गुणः। सत् निर्दुष्टं वं ज्ञानमनेनेति वा। अन्यत्र सतो भावः सत्त्वम् ॥

## रुजेर्मक् ॥ ४४ ॥

पाणिनीया रुचेर्मक्प्रत्यय इत्याहुः। **'युजिरुचितिजां कुश्च'** इति चोणादिसूत्रं पठन्ति। प्रायः पाठभ्रान्तिरेवेयम्। प्रायपाठेन **'युजिरुजितिजाम्'** इत्येव साधुः पाठः। अत आह– **'रुजेर्मक्'** इति। तेन रुग्मम्, रुग्मीत्येव प्रतनं रूपम्। **'यदा पश्यः पश्यते रुग्मवर्णम्'**। युक्तं च निर्वचनम्। रुजति भिनत्ति बन्धूनां मनांसीति। रुजो भङ्गे ॥

## केकयस्य यादेरियो विभाषा ॥ ४५ ॥

केकयस्यापत्यं कैकेयः कैकयः। कैकेयी कैकयी ॥

## सोरसेरृन् ॥ ४६ ॥

विभाषेति वर्तते। सु इत्येतस्मादुपसर्गादसतेरस्यतेर्वा विभाषा ऋन् प्रत्ययो भवति। **'पितृष्वसामनुज्ञाप्य'** [भाग.१०.६१.१४]। व्यवस्थितश्चायं विकल्पः। एकवचन एव वैकल्पिकं रूपद्वयम्– स्वसारम्, स्वसाम्। स्वस्रा, स्वसया। स्वस्रे, स्वसायै। स्वसुः, स्वसायाः। स्वसरि, स्वसायाम् ॥

## सपूर्वस्य नाम्नोऽन्त्यलोप इनिश्च प्रशंसायाम् ॥ ४७ ॥

दशरथ इति प्रशस्तं नामास्येति दशरथनामी। सुनामी। प्रशंसा चात्र प्रत्ययार्थः। किं सपूर्वस्य? पित्रा नामवानयम् ॥

## इकश्च निन्दायाम् ॥ ४८ ॥

कलिनामिकः। न विद्यते प्रशस्तं नामास्या इति अनामिका ॥

## महापूरुषादिकः प्रसादने ॥ ४९ ॥

महापूरुषो भगवान् प्रसादित एभिरिति महापूरुषिकाः ॥

## समुदाये ग्रामजनबन्धुसहायगजदुःखदेवेभ्यस्तल् ॥ ५० ॥

**'नोत दुःखताम्'** । देवतान्तकः देवसमूहान्तक इत्यर्थः ॥

## दुःखदेवयोः स्वार्थे वा ॥ ५१ ॥

दुःखमेव दुःखता । देव एव देवता ॥

## तद एकवचने वा विसर्गलोपः सपयोः सान्तस्थयोः ॥ ५२ ॥

अन्तस्थया संयुक्तयोः सकारपकारयोः परयोः तच्छब्दस्यैकवचने यो विसर्गः पठ्यते 'सः' इति तस्य लोपो वा स्यात्– 'स स्वयम्, सः स्वयम् । स प्रीतः, सः प्रीतः । स प्राप्नोतु, सः प्राप्नोतु ॥

## सपूर्वयोस्तुप्वोर्वा ॥ ५३ ॥

सकारपूर्वयोस्तवर्गपवर्गयोः परयोः पूर्वपदान्त्यस्य विसर्गस्य वा लोपः स्यात् । **'नित्यः सर्वगत स्थाणुः'** । **'शिव स्फटिकसप्रभः'** ॥

## हस्तिनः पुरे ॥ ५४ ॥

वेति निवृत्तम् । हस्तिनः इति विसर्गो लुप्यते । हस्तिनः पुरं हस्तिनपुरम् । हस्तिनापुरमित्यर्वाचीनम् ॥

## वीप्सायामैकपद्यं विभक्त्यलोपश्च ॥ ५५ ॥

**'उप त्वाऽग्ने दिवेदिवे'** । योयो धूमवान् सस वह्निमान् । वृक्षंवृक्षं सिञ्चति । गृहेगृहे आरामाः । विभक्त्यलोपश्चात्र नियतः । **'यंयं वाऽपि स्मरन् भावम् । तन्तमेवैति कौन्तेय'** । कथं तर्हि **'सन्तु मे जन्मजन्मनि'**? अपपाठोऽ-यम् । **'सन्तु जन्मनिजन्मनि'** इत्येव साधुः पाठः ॥

## वा सङ्ख्यावचनेऽनेकाचि चतुरुत्तरम् ॥ ५६ ॥

वा विभक्त्यलोपः । चतुर्भिश्चतुर्भिः । **'चतुश्चतुर्भिः'** । पञ्चसुपञ्चसु । पञ्चपञ्चसु । अनेकाचीति किम्? षट्ष-ण्णामिति मा भूत् । चतुरुत्तरमिति किम्? त्रित्रिभिरिति द्विद्वाभ्यामिति मा भूत् ॥

## एकाद्वा ॥ ५७ ॥

एकैकम् । एकमेकम् ॥

## उरसष्टेरम् गमौ ॥ ५८ ॥

गमिधातौ परतः उरस् इत्यत्रास् इत्यस्य अम् इत्यादेशो भवति । उरङ्गमः ॥

## गमेर्डो वा ॥ ५९ ॥

गमेर्डप्रत्यये उरङ्गः ॥

## नञो दुः सोत्तरेऽन्ते ॥ ६० ॥

सोत्तरेऽन्तपदे परे नञो दुरित्ययमादेशः स्यात् । न विद्यतेऽन्तोऽस्य महिम्न इति दुरन्तमहिमा । सोत्तरे इति किम्? न विद्यतेऽन्तोऽस्येत्यनन्तः । अयोगव्यवच्छेदोऽयम् । तेनानन्तमहिमेति भवत्येव ॥

## अन्यत्रापि दृश्यते ॥ ६१ ॥

दुर्जयः, दुराधर्ष इत्यादि विष्णुसहस्रनामसु । इतरत्र तु दुःखेन जयन्त्येनमित्येव । दुर्योधन इतिवत् ॥

## सुमनस् अप्सरोवत् ॥ ६२ ॥

उभावपि सान्तौ बहुलं भूम्नि प्रयुज्येते । क्वचित् त्रिष्वपि वचनेषु । सुमनाः सुमनसौ सुमनसः । अप्सरा अप्सरसौ अप्सरसः । क्वचिदाबन्तः । सुमना अप्सरा । एकवचन एव चास्य बहुलं प्रयोगः । **'सुमनायाश्च गन्धेन'** ॥

## जुटो दीर्घ उपधायाः शिखावचने ॥ ६३ ॥

जुट बन्धन इति धातोरुपधाया दीर्घः स्यात् शिखायां वाच्यायाम् । जुट्यत इति जूटः, जूटं वा । अन्यत्र गुण एव जोटनम् ॥

## वा पुरुषायुषम् ॥ ६४ ॥

**'अचतुरविचतुर–'** [अ.सू.५.४.७७] इत्यादिना पुरुषस्याऽयुरित्यर्थे अच्प्रत्ययान्तः पुरुषायुषशब्दो निपात्यत इति पाणिनीयाः । नायं नियतो निपात इत्याह– वा पुरुषायुषमिति । पुरुषस्याऽयुः पुरुषायुः पुरुषायुषं वा ॥

## वृद्धादनेकाचोऽसुनि च ङीबन्यतरस्याम् ॥ ६५ ॥

अनागाः अनागसी । अयुग्मवासाः । अयुग्मवाससी । कृतागाः कृतागसी । वृद्धादिति किम्? अमनाः । अनेकाच इति किम्? अभाः, विभाः, सुभाः ॥

## कृत्याया नियमने देवतायां ष्फः ॥ ६६ ॥

वैयाकरणाः कात्यायनशब्दं पठन्ति । कतस्यापत्यं पुमान् कात्यायन इति च निर्वदन्ति । कतस्यापत्यं स्त्री कात्यायनीति च । कत्ययनस्यापत्यं कात्यायन इति च वेदवादिनो वदन्ति । कार्त्यायनीति च भागवतादिषु पठ्यते **'कार्त्यायनि महामाये महायोगिन्यधीश्वरि'** [१०.२०.४] इत्यादि । तस्य निर्वचनमाह– कृत्यायाः । कृत्यादेवता तथोच्यत इति स्फुटम् । तेन लोहितादिभ्यो विहितः ष्फः अत्रानुमन्यते । नापत्यार्थे, किन्तु नियमनार्थे । कृत्याया नियमनी देवता कार्त्यायनी । **'कार्त्यायनि महामाये'** । **'कार्त्यायनीव्रतपराः'** । कृत्यानां समुदायो वा कार्त्यम् । तस्येयमयनं भवतीति वा कार्त्यायनी । टित्त्वात् स्त्रियां ङीप् ॥

## पौंस्यं पुरुषकारे ॥ ६७ ॥

पुरुषकारेऽर्थे पुंस इदं पौंस्यम् । पौंस्नं वा ॥

## गिरिशगिरीशयोः स्त्रियां टाप् ॥ ६८ ॥

गिरिशस्य गिरीशस्य वा स्त्री गिरिशा गिरीशा । **'गिरिशावरदानतः'** ॥

## समोऽपि सध्रिः ॥ ६९ ॥

सहेत्येतस्य सध्रिरित्यादेश इति पाणिनिराह– **'सहस्य सध्रिः'** [अ.सू.६.३.९५] इति । एवं स्थिते समित्येतस्यापि भवतीति पुनर्विधीयते– सहाञ्चति सम्यगञ्चतीति वा सध्र्यक् सध्र्यङ् वा । सध्रीचीनः समीचीनः ॥

## छन्दसि विभाषा ह्रस्वदीर्घत्वे ॥ ७० ॥

## एदोतोरर्धत्वं च ॥ ७१ ॥

छन्दसि ह्रस्वमक्षरं दीर्घं भवति । दीर्घमक्षरं ह्रस्वम् । **'अत्रा सखायः सख्यानि जानते'** । **'अथा ते'** । **'इन्द्रावरुण नू नु वाम्'** **'कुर्वाणा चीरमात्मनः'** । छन्दसीति वृत्तवचनं च । लोके च गीतिकाव्येषु ह्रस्वदीर्घत्वे व्यत्ययेन भवतः । **'सगिरिवरधरतळवह'** । **'रमरम रमणा'** । **'इन्द्रसुतावकनन्दकहस्ता'** । **'पालया कमलालया'** । एवमेदेतोरर्धत्वं च वेदेषु वैदिकेषु च । यथा भाषायां 'ಒ' इति । न्यूङ्खेषु प्रसिद्धोऽयमर्ध ओकारः । गीतिकाव्येषु यथा–**'अतिमततमोगिरिसमितिविभेदन'** । **जगदेककारण'** ॥

नचैवं प्रबन्धुरपाटवं शङ्कनीयम्–

## अर्थविशेषादेव ॥ ७२ ॥

महतां प्रयोगेषु सर्वत्र मृग्यश्चार्थविशेषः। अत्रा अत्रैव। **'दैर्घ्यं प्लुतं च हिङ्कारो बिन्दुरप्यवधारणे'**। अथा अनन्त-रमेव। **'इन्द्रावरुण'** इत्येकार्थकरत्वमैकमत्यम्। चीरमतिचिरं निरन्तरमित्यर्थः। **'धरतळवह'** इति धरातळ-मत्यल्पमस्येत्याह। **'रमरम रमणा'** इति, **'नन्दकहस्ता'** इति चाऽह्वाने दैर्घ्यमादरातिशयमाह। त्वमेव मे शरण-मतस्त्वामेव वन्दे नान्यमिति। राम रमारमण इति च प्रतृण्णम्। रम इत्ययत्नमस्य रमणमाह। रमाणां मुक्तानामपि रमण इत्यर्थान्तरं च द्योतयन् रमरमण इत्याह। तेन रमा पुंवच्छक्तिमतीति चाऽह। **'पुंवच्छक्तिमती नारी पुंशब्देनैव भण्यते'** इति चाऽचक्षते। अक्षरपुरुष इति तामाहुः। 'तमोगिरि' इति तमःसमितेः क्षुद्रत्वमाह। 'जगदेक' इति चानायासमाह। पालया कमलालयेत्यावर्जनम्॥

## लिङ्गव्यत्ययो वा श्रुतिसाम्ये ॥ ७३ ॥

लिङ्गव्यत्ययो वा स्याद् यत्र रूपसाम्येन श्रवणसुभगता। अमूभिर्मनुभिः। **'अमूभिर्जेष्यामि भीमममुमेकमयात-यामैः'**। **'विश्वासिता विदुरपूर्ववचोभिरेव दाशोतादिभिः'**॥

नच व्यर्थोऽयम्–

## अर्थविशेषात् ॥ ७४ ॥

अर्थविशेषमपेक्ष्यैव चैतादृशाः प्रयोगा भवन्ति। मृग्याश्चार्थविशेषा महतां प्रयोगेषु। नहि महान्तो व्यर्थां वाचं व्याहरन्ति॥

## इदमो दानीं दा च ॥ ७५ ॥

इदानीम्। इदा॥

## विभक्तिव्यत्ययो वा ॥ ७६ ॥

पञ्चम्यर्थे तृतीया– **'तेनैव हेतोः'**। षष्ठ्यर्थे चतुर्थी– **'वीणायै वाद्यमानायै'**॥

नचात्रापि व्यर्थता शङ्क्या–

## अर्थविशेषश्च ॥ ७७ ॥

हेतुव्यपदेशे सर्वविभक्तीनामैकार्थ्यद्योतनाय महान्त एवं विभक्तिं व्यत्यस्य पठन्ति। तथाहि– किं कारणम्, केन कारणेन, कस्मै कारणाय, कस्मात् कारणात्, कस्य कारणस्य, कस्मिन् कारणे। तेनैवेति तृतीयया कारणत्वमाह। पञ्चम्याऽवधित्वम्। **'वीणायै वाद्यमानायै'** इति चतुर्थ्या इतरेभ्यो ध्वनिभ्योऽतिशायितमानन्ददानमित्याह॥

## साम्ये समानस्य सो दृशेरश्च ॥ ७८ ॥

समानो दृश्यत इति सदृशः। स इव दृश्यत इति तादृशः। य इव दृश्यत इति यादृशः॥

## किमिदमोः की ई ॥ ७९ ॥

क इव दृश्यत इति कीदृशः। अयमिव दृश्यत इतीदृशः। तेन स्त्रियां न ङीष्। **'उद्यच्छतार्कसदृशां परमाङ्कसंस्थाम्'**। पाणिनिनये तु दृशेः कञ्। तेन ङीपि सदृशी तादृशी इत्याद्येव। वयं तूभयवादिनः। अप्रत्यये सदृशा। कञि सदृशी॥

## एवं सर्वे प्रत्ना एवं सर्वे प्रत्नाः ॥ ८० ॥

**इति प्रत्नप्रयोगमीमांसायां शिष्टसमाम्नायो नाम चतुर्थः पादः॥**

—०—

अत्रोक्ताश्चानुक्ताश्च, अन्यैरपि वैयाकरणैर्निरूपिताश्चानिरूपिताश्च सर्वे प्रतनैराचार्यैः प्रयुक्ताः पदविशेषा अनेनैव पथा यथायथं साधवो मन्तव्याः। ग्रन्थगौरवभयादेवोपरम्यते, नतु वक्तव्यमवसितमितीति शम्। अभ्यासो ग्रन्थसमाप्तिवचनः॥

**पाणिनीयनये प्रायो ये शब्दा न निरूपिताः।**
**प्रत्नास्तेषां तु निष्पत्तिप्रक्रियाऽत्र प्रदर्शिता॥**

**प्राचां प्रयोगे साधुत्वसाधनायायमुद्यमः।**
**प्रयोक्तव्यं नवा नूत्नैर्नात्रास्माकं भरो महान्॥**

प्रयोगशरणा वैयाकरणा इति जानताम् ।
भवेदेवाऽदरो ह्यस्मिन्नन्धानां दर्पणेन किम् ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
प्रत्नप्रयोगमीमांसां चक्रे वृत्तिसमन्विताम् ॥

**इत्याचार्यगोविन्दस्य कृतिषु प्रत्नप्रयोगमीमांसा सवृत्तिः समाप्ता ।**

—०—

# अवतारमीमांसा

(महाभारततात्पर्यनिर्णयोदाहृतानां
देवासुराद्यवताराणामनुक्रमणी)

ॐ ॥ नत्वा नारायणं मध्वं विध्वंसितदुरागमम्[1] ।
वक्ष्यामि वर्णक्रमतो देवावतरणं[2] भुवि ॥ १ ॥

**अक्रूरो** (१३.७५)[3] देवगन्धर्वः किशोर इति विश्रुतः ।
आवेशयुग् विरिञ्चस्य स्वायम्भुवमनोरपि ॥ २ ॥

**अङ्गदो** (३.७०) वानरश्चन्द्र इन्द्राविष्टो (८०) बलाधिकः ।

**अनिरुद्धः** (२१.२५-६) कृष्णनप्ताऽनिरुद्धः कामनन्दनः ॥ ३ ॥
अनिरुद्धाख्यभगवद्रूपावेशविशेषितः ।

**अभिमन्युर्बुधो** (२०.२३१) जातश्चन्द्रांशेन समन्वितः ॥ ४ ॥
विष्णुवायुयमेन्द्राणामश्विनोः सन्निधानयुक् ।

**अम्बा**(११.२६) वराङ्गी द्युवसोर्भार्या सैव शिखण्ड्यपि ॥ ५ ॥

**अर्जुनः** (१२.९८-९) श्रीहरिप्राणनराविष्टः पुरन्दरः ।
**अश्वत्थामा** (१०४) पशुपतिः संहाराङ्गं रमापतेः ॥ ६ ॥

---

१. नारायणश्च व्यासात्मना विध्वंसितदुरागमः ।

२. देवावतरणं प्राधान्येन । अदेवावतरणं च तदङ्गतया ।

३. महाभारततात्पर्यनिर्णयस्याध्यायसङ्ख्या श्लोकसङ्ख्या च । एवमुत्तरत्रापि । यत्रोत्तरवचनेऽपि पूर्वाध्याय एवानुवर्तते तत्र केवलं श्लोकसङ्ख्या निर्दिष्टा ।

**इन्द्रसेना** (१८.१२१) नळसुता पञ्चदेवीस्वरूपिणी ।
पूर्वं सा विप्रकन्याऽऽसीत् कृष्णा चन्द्रा ततोऽभवत् ॥ ७ ॥

**इरावान्** (२०.१५६) वरुणाविष्टः कुजः पार्थसमुद्भवः ।
**उग्रसेन**श्चोग्रसेननामा (११.१९९) गन्धर्वगायनः ॥ ८ ॥

**उत्तमोजाः** (१८.७२-३) स गन्धर्वोऽर्यमाविष्टः परावसुः ।
**उद्धवः** (१२.१००) पवनाविष्टः कृष्णसेवी बृहस्पतिः ॥ ९ ॥

**उल्मुक**स्त्वंशनामाऽयमादित्यो (१७.१७५) बलभद्रजः ।
**उषा**ऽनिरुद्धभार्योषा (२२.२४९) मूलरूपेऽपि सा स्मृता ॥ १० ॥

**कत्थनो** (८.७२) वानरः प्रोक्तः कुबेरांशसमुद्भवः ।

**कर्णो** (११.१५५) विवस्वानजनि श्रीहरेः सन्निधानयुक् (१५८) ॥ ११ ॥
सहस्रवर्मणाऽऽविष्टो (१५६) नरकेणासुरेण च (२२.४२९) ।

**काळिन्दी** (२०.४५) कृष्णभार्या या काळिन्दी सा नदी स्मृता ॥ १२ ॥

**काळी** (१२-३) काशिसुता भीमभार्या सा भारती स्वयम् ।
**कुन्तिभोजः** (११.१४९) कूर्मनामा मरुत्सु परिकीर्तितः ॥ १३ ॥

**कुन्ती** (१४८) पृथा पाण्डुभार्या मूलरूपेऽपि सा स्मृता ।
**कुमुदः** (८.१७) कपिराख्यातो जयन्तो वासवात्मजः ॥ १४ ॥

**कुशः** (९.१७) श्रीरामतनयः सम्बभूव पुरन्दरः ।

**कृतवर्मा** (११.२३४-५) शुक्लपक्षमानी स हृदिकात्मजः ॥ १५ ॥
पाञ्चजन्यस्यांशयुतो मरुत्सु प्रवहस्य च ।

**कृपः** (५८) शारद्वतो रुद्रो विष्कम्भाख्यः प्रकीर्तितः ॥ १६ ॥

**कृपी** (५८) बृहस्पतेर्जाया तारा द्रोणप्रियाऽभवत् ।
**कृष्णभार्या** (२०.११२) विनाऽष्टाभिरग्निपुत्राः स्त्रियोऽभवन् ॥ १७ ॥

**कृष्णवप्ता**[1] (१३.१००) माधुरस्तु वैकुण्ठे विष्णुसेवकः ।
**केकयाः पञ्च** (२०.५०) पञ्चैव विश्वेदेवाः प्रकीर्तिताः ॥ १८ ॥

**केसरी** (८.१०६) त्वञ्जनाभर्ता मरुत्सु प्रवरः स्मृतः ।
**कैशिको** (१४.९१) भीष्मकभ्राता पावकः शुन्ध्युनामकः ॥ १९ ॥

**क्रथस्तदग्रजः** (९१) प्रोक्तः पवमानाह्वयोऽग्निजः ।
**गजो नाम** (८.७२) कपिः प्राणमरुत् स धनदात्मजः ॥ २० ॥

**गदः** (१७.२५१-२) कृष्णानुजश्चण्डनामा श्रीहरिपार्षदः ।
**गन्धमादः** (८.७२) कपिर्जातः समानो धनदात्मजः ॥ २१ ॥

**गवयो** (७२) धनदाज्जातो वानरो व्यान उच्यते ।
**गवाक्षो** (७२) वानरोऽपानमरुद् धनदसम्भवः ॥ २२ ॥

**गाधी** (४.४) राजा सहस्राक्षो विश्वामित्रपिताऽजनि ।
**गोपाः** (११.२३५) सुरांशजाः सर्वे कृष्णसेवार्थमागताः ॥ २३ ॥

**गोपाङ्गना** (१३.५०) अप्सरसः कृष्णसङ्गमलालसाः ।
**घटोत्कचः** (१९.६३) शिवाविष्टो निरृतिः परिकीर्तितः ॥ २४ ॥

**चन्द्रा** (३२.१२९) च भारती प्रोक्ता पार्वत्यादियुता च सा ।
**चारुदेष्णः** (२०.१४२) कृष्णपुत्रो रुद्रपुत्रो विनायकः ॥ २५ ॥

**चित्राङ्गदा** (१६१) शची प्रोक्ता वालिभार्यैव साऽऽगता ।
**चेकितानो** (१२.१०३) मरुदसौ प्रतिभाख्यो यदुष्वभूत् ॥ २६ ॥

**जनमेजयो** (१८.७५) हि गन्धर्वो योऽसौ चित्ररथाभिधः ।
त्वष्टुरावेशसंयुक्तोऽजनिष्ट द्रुपदात्मजः ॥ २७ ॥

**जराव्याधो** (३२.२२) भृगुर्नाम मुनिप्रवर उच्यते ।
**जाम्बवान्** (३.६८) ब्रह्मणाऽविष्टो धर्मो नाम तदात्मजः ॥ २८ ॥

१. मधुरायां कृष्णस्य केशवपनकृत् नापितः ।

**तारो** (७०) नाम प्लवङ्गोऽयं बृहस्पतिरितीरितः ।
**तारा** (७०) तारानुजा वालिजायाऽजनि पुलोमजा ॥ २९ ॥

**तृणावहस्य पुत्रास्तु** (२१.३३) नन्दाद्या विष्णुपार्षदाः ।
**दमघोषो** (१६.३०) दनुर्नाम गन्धर्वः परिकीर्तितः ॥ ३० ॥

**दुर्मुखो** (८.१०६) वानरो योऽसौ निरृतिः परिकीर्तितः ।
**दुर्वासाः** (९.४९) शङ्करस्यांशश्चण्डकोपो मुनिः स्मृतः ॥ ३१ ॥

**देवको** (१२.१०) देवको नाम गन्धर्वमुनिरीरितः ।
**देवकी** (११.२२५) तत्सुता कृष्णप्रसूरदितिरीरिता ॥ ३२ ॥

**देवकी** (२०.११) शिशुपालस्य सुताऽन्या श्यामळा स्मृता ।
**देवकीजा** (१२.१२-४) हताः षट् च मरीचितनया मताः ॥ ३३ ॥

**देवी** (३०.११) भीमप्रिया राका रौहिणेयी प्रकीर्तिता ।
**द्रुपदस्त्वाहवाविष्टो** (११.६२) हहू द्रुहिणगायनः ॥ ३४ ॥

**द्रोणश्चतुर्मुखाविष्टो** (६५) बृहस्पतिरुदीरितः ।

**द्रौपदी** (१८.१०४-५) भारती गौर्या शच्या श्यामळयोषसा ॥ ३५ ॥
संयुक्ता सर्वकार्येषु पञ्चदेवीतनुः स्मृता ।

**द्रौपदीतनयाः पञ्च** (२०.२११) विश्वेदेवाः प्रकीर्तिताः ॥ ३६ ॥
आविष्टाः पञ्चगन्धर्वैः क्रमाच्चित्ररथेन च ।
अभिताम्रकिशोराभ्यां गोपालेन बलेन च ॥ ३७ ॥

**धृतराष्ट्रस्तु** (११.१३१) तन्नामा गन्धर्वः पवनांशयुक् ।
**धृष्टकेतुरनुह्लादः** (२०.११) सवितुश्चांशसंयुतः ॥ ३८ ॥

**धृष्टद्युम्नो** (१९.१२०) जातवेदा वेदिमध्यात् समुत्थितः ।
**नकुलस्त्वश्विनोरेको** (१२.१२५) वाय्वाविष्टो मनोहरः (१३१) ॥ ३९ ॥

**नन्दो** (११.२२६) हि वसुदेवस्यानुजो द्रोणाभिधो वसुः ।
**नन्दात्मजा** (१२.६७) तु श्रीरेव दुर्गारूपाऽन्वजायत ॥ ४० ॥

**नरकप्रसूः** (२०.१०५) प्रकृत्या चाऽविष्टा भूतावरा धरा ।
**नळो** (८.१४) नाम कपिः प्रोक्तो विश्वकर्मा हि भौवनः ॥ ४१ ॥

**निष्टयो** (२६.२४२) घटोत्कचसुतोऽञ्जनवर्मा प्रकीर्तितः[1] ।
**नीलनामा** (३.७४)वानरोऽसौ वैश्वानर उदीरितः ॥ ४२ ॥

**पनसाख्यः** (८.१०६) प्लवङ्गश्च वसुष्वेकः प्रकीर्तितः ।
**पाण्डुः** (११.१३४) परावहो नाम वाय्वावेशसमेधितः ॥ ४३ ॥

**पार्वती** (२२.५७) नकुलस्यान्या जाया जाता तिलोत्तमा ।

**प्रद्युम्नः** (३.७४) कृष्णतनयः स्वयं प्रद्युम्न एव सः ॥ ४४ ॥
प्रद्युम्नाख्यस्य भगवद्रूपस्याऽवेशयुक् तथा ।
स एव स्कन्दतामाप हरिचक्राभिमानवान् ॥ ४५ ॥

**बभ्रुवाहन** (२०.१६२) इत्युक्तो जयन्तः कामसंयुतः ।
**बलभद्रः** (१२.५७) शेष एष शुक्लकेशयुतो हरेः ॥ ४६ ॥

**बाह्लीको** (११.८) वायुनाऽऽविष्टः प्रह्लादो भगवत्प्रियः ।

**भगदत्तस्तु** (११.२३१) धनदोऽप्यसुरावेशसंयुतः(२३२) ॥ ४७ ॥
अथापि गिरिशावेशाद् बलवानस्त्रवानपि ।

**भरतो** (३.७८) राघवभ्राता प्रद्युम्नश्च सुदर्शनः ॥ ४८ ॥
प्रद्युम्नाख्यस्य भगवद्रूपस्याऽवेशयुक् तथा ।

**भानुः** (२०.१४१) सत्यातनूजोऽसावादित्यः सविता स्वयम् ॥ ४९ ॥

**भीमो** (१२.५४) नरोत्तमो वायुर्भारतीरमणोऽभवत् ।
**भीष्मो** (११.२२) वसोर्द्युनाम्नोंऽशो ब्रह्माविष्टः पितामहः ॥ ५० ॥

---

१. भारते अञ्जनवर्मा घटोत्कचसुत इति पठ्यते । तेन निष्टय इति तस्य पूर्वरूपस्य नामेत्यपि वदन्ति ।

**भीष्मको** (१४.९१) रुग्मिणीतातो मित्रांशो राहुणाऽऽवृतः ।
**भूरिनामा** (११.११) सोमदत्ततनयोऽयमजैकपात् ॥ ५१ ॥

**भूरिश्रवा** (११) अहिर्बुध्नी रुद्रैः सर्वैश्च संयुतः (१२) ।
**मध्वो** (३२.१२८) पुनर्विप्रतनुर्जातो भीमो महामतिः ॥ ५२ ॥

**महाभिषगिति** (११.१६) ख्यातो राजा तु वरुणः स्मृतः ।
**मागधी** (२१.१७०) सहदेवस्य पत्नी चोषाः प्रकीर्तिता ॥ ५३ ॥

**माद्री** (११.१६६) पाण्डुप्रिया याऽसौ मूलरूपेऽपि तद्वधूः ।
**माद्री** (२१.१७०) शल्यात्मजा चान्या नकुलस्य वधूरुषाः ॥ ५४ ॥

**मैन्दः** (३.१२) प्रोक्तोऽश्विनोरेकोऽप्यसुरावेशसंयुतः ।
**यशोदा** (११.२२७) नन्दजाया या जाया द्रोणवसोर्धरा ॥ ५५ ॥

**यादवाः** (२३५) सर्व एवापि सुरांशाः परिकीर्तिताः ।
**युधामन्युर्धातुरंशयुतो**[१] (१८.७३) विश्वावसुः स्मृतः ॥ ५६ ॥

**युधिष्ठिरो** (१२.३३) यमः प्रोक्तो वाय्वावेशोपबृंहितः (१२९) ।
**युयुत्सुर्निरृथो** (४८) नामाऽविष्टो नासिक्यवायुना ॥ ५७ ॥

**रुग्मिपुत्री** (२१.२५) रुग्मवती प्रद्युम्नस्य वधू रतिः ।
**रुग्मिणी** (१७.१) कृष्णदयिता श्रीरूपा सत्वमानिनी ॥ ५८ ॥

**रैवती** (१६८) बलभद्रस्य भार्या सा वारुणी स्मृता ।
**रोहिणी** (११.२२५) सुरभिः प्रोक्ता माता सङ्कर्षणस्य या ॥ ५९ ॥

**लवः** (९.१७) श्रीरामतनयो वैश्वानर उदीरितः ।
**लक्षणा** (२२.२३८) रतिरित्युक्ता यासा दुर्योधनात्मजा ॥ ६० ॥

---

१. **'धाता विधाता वरुणः'** इत्युक्तस्य धातृनामकस्याऽदित्यस्यांशेन युक्त इत्यर्थः । ननु **'युधामन्युः पार्षतस्तु ब्रह्मावेशयुतोऽजनि'** इत्यंशावतारोक्तरीत्या ब्रह्माविष्टः । असङ्गतं तद्वचनम् ।

**लक्ष्मणः** (३.७८) शेष एवासौ बभूव भरताग्रजः ।
सङ्कर्षणाख्यभगवद्रूपावेशविशेषितः ॥ ६१ ॥

**वसुदेवः** (११.२२३) काश्यपस्तु **वाली** (३.६७) सङ्क्रन्दनः स्मृतः ।

**वासुदेव्यो** (३०.१२) भीमभार्या विंशतिर्या उदीरिताः ॥ ६२ ॥
ककुभामभिमानिन्यस्ता अपामपि कीर्तिताः ।

**विदुरो** (११.७२) यम उद्दिष्टः शापाच्छूद्रत्वमागतः ॥ ६३ ॥

**विपृथुः** (२०.१९३) सौम्यनामाऽसौ मरुदित्यभिविश्रुतः ।
**विप्रकन्या** (१८.११७) पूर्वमुक्ता पञ्चदेवीतनुर्हि सा ॥ ६४ ॥

**विराटो** (११.७२) विवहाविष्टो हहेति विधिगायनः ।
**विराधस्तुम्बुरुरपि** (५.२०) शापादासुरभावयुक् ॥ ६५ ॥

**विविद**श्चाश्विनोरेक (३.७२–३) इन्द्राविष्टोऽसुरान्वितः (२२.२३४) ।
**वीरसेन**स्त्वष्टुरंशो (२०.१६१) यमस्याऽवेशयुक् तथा ॥ ६६ ॥

**वृषो** नाम (८.७२) कपिर्योऽसावुदानो धनदात्मजः ।
**शक्रदेवो** (१६.३२) माणिभद्रः सृगालतनयः शुभः ॥ ६७ ॥

**शठो** (१७.१७५) नामार्यमांशोऽयमीरितो बलभद्रजः ।
**शतवल्यभिधः** (८.१०६) कीशो वसुष्वेकः प्रकीर्तितः ॥ ६८ ॥

**शत्रुघ्न** (३.७८) एवानिरुद्धः पाञ्चजन्याभिमानवान् ।
अनिरुद्धाख्यभगवद्रूपावेशविशेषितः ॥ ६९ ॥

**शन्तनु**र्वरुणः (११.२१) पूर्वं य एवाऽस महाभिषक् ।
**शबरी** (५.४५) च शचीशापाज्जाता भूमौ वराप्सराः ॥ ७० ॥

**शर्वत्रातो** (२०.२८) भीमजातो यः समानो मरुत् स्मृतः ।
**शलो** (११.११) विरूपाक्षनामा रुद्रोऽयं सोमदत्तजः ॥ ७१ ॥

**शल्यस्तु** (१६४) वायुनाऽऽविष्टः सह्लाद इति कीर्तितः ।
**शिखण्डी** (१०४) मूलतश्चाम्बा पुंस्त्वं तुम्बुरुयोगतः(११०) ॥ ७२ ॥

**शुको** (१०.७१) हि वायुनाऽविष्टो व्यासपुत्रस्त्रियम्बकः ।
**शैब्यो** (२०.५०)नाम पिता पश्चकेकयानामृभुः स्मृतः ॥ ७३ ॥

**श्वेतो** (८.१०६) नाम कपिर्योऽसौ मरुद्गणवरो मतः ।
**सञ्जयस्तुम्बुरुः** सोऽयमुद्वहावेशसंयुतः (११.१४५) ॥ ७४ ॥

**सत्यजित्** (२०.२१८) पार्षतश्चित्रसेनो मित्रांशसंयुतः ।
**सत्यभामा** (१७.२१८) रमा सैव भूनामा सत्रजित्सुता ॥ ७५ ॥

**सत्यवत्युदिता** (११.७३) काळी साऽच्छोदा पितृपुत्रिका ।
**सम्पातिनामा** (८.१०६) प्लवगो मरुद्गणवरः स्मृतः ॥ ७६ ॥

**सर्वोत्तुङ्गो** (३०.११) भीमसूनुरहम्प्राणाभिधो मरुत् ।
**सहदेवोऽश्विनोरेको** (१२.१२५) वाय्वाविष्टः सुनीतिमान् (१३१) ॥ ७७ ॥

**सहदेवो** (२१.१५१) मागधोऽन्यः पत्रतापांश ईरितः ।

**सात्यकिर्युयुधानाख्यः** (११.२३३) कृष्णपक्षस्य देवता ॥ ७८ ॥
संवहस्यांशयुक्तश्च चक्रस्य गरुडस्य च ।

**साम्बस्तु** (१७.२२०) ब्रह्मणाऽऽविष्टः षण्मुखः परिकीर्तितः ॥ ७९ ॥

**सीता** (३.८२) रामप्रिया लोकमाता जनकजा मता ।
**सुग्रीवः**(६८) कपिराट् सूर्यो विरिञ्चावेशसंयुतः ॥ ८० ॥

**सुदामा** (१३.१००) पुष्पमालाकृत् तन्नामा विष्णुपार्षदः ।
**सुभद्रा** (२०.३७) त्रिजटा पूर्वं पार्वत्यावेशसंयुता ॥ ८१ ॥

**सुषेणो** (३.७२) वानरो वैद्यो वरुणांशसमुद्भवः ।
**सुहोत्रो** (२०.१२) यश्चित्रगुप्तो युधिष्ठिरसुतोऽभवत् ॥ ८२ ॥

**सोमदत्तस्तु** (११.१०) रुद्रेषु पत्रतापाख्य ईरितः ।
**हनूमान्** (३.६७) प्रथमो वायोरवतारः प्रकीर्तितः ॥ ८३ ॥

**हिडिम्बा या हिडिम्बी** (१९.४९) वा भारत्यावेशसंयुता (५०) ।
अप्सराः शक्रदयिता स्वर्गश्रीमानिनी च सा ॥ ८४ ॥

हूतः सर्वैः पदैरेतैर्भगवान् हरिरेव हि ।
हृषीकेशोऽथ होताऽयं सर्वेषां च पुरोहितः ॥ ८५ ॥

* * *

अनुकूलानि चोक्तानि भगवत्कार्यसाधने ।
प्रतिकूलानि चोच्यन्ते नीचयोनिगतान्यपि ॥ ८६ ॥

**अजगर** (१४.१०७) एको नन्दं कश्चिद् विद्याधरो हि जग्रास ।
**आजगराकृतिरन्यो** (२२.३४०) भीमं जग्राह यो नहुषः ॥ ८७ ॥

**एकलव्यस्तु** (१४.४०) मणिमान् क्रोधतन्त्रगणाधिपः ।
**कबन्धो** (५.४३) दनुनामाऽयं गन्धर्वः परिकीर्तितः ॥ ८८ ॥

**कीचको** (११.२१८) बाणमाविश्य स्थितो बाणाभिधोऽसुरः ।
**कीटः** (१५.५२) कर्णोरुभिद् हेती राक्षसेन्द्रो महेन्द्रयुक् ॥ ८९ ॥

**कुम्भकर्णो** (३.४०) हिरण्याक्षो विजयेन समन्वितः ।
**कैकेयी** (९.९७) तु निकृत्याख्यराक्षसीमोहितान्तरा ॥ ९०॥

**कंसो** (११.१९९) जातः कालनेमिर्वायुना (१३.१३१) भृगुणा[१] युतः ।
**ग्रहाः** (२०.१६३) पञ्चार्जुनग्राहाः पञ्चैवाप्सरसः स्मृताः ॥ ९१ ॥

---

१. '**कंसाविष्टः स्वयं भृगुः**' (७.१.३१) इति भागवततात्पर्यनिर्णये ब्रह्मतर्कवचनम् ।

**चित्रसेनो** (१२.४३-४) धार्तराष्ट्रः पूर्वं योऽसौ खरासुरः ।
**जयद्रथः** (४७) कालकेयगणाविष्टो हि दानवः ॥ ९२ ॥

**जरासन्धो** (११.२०३) विप्रचित्तिर्मगधेशो बभूव सः ।
**दन्तवक्रो** (१४.८९) हिरण्याक्षो विजयेन समन्वितः ॥ ९३ ॥

**दुर्योधनः** (१२.३८) कलिर्जातो वायुसन्निधिबृंहितः ।

**दुर्योधनस्य महिषी** (२०.२०१) काशिराजसुता च या ॥ ९४ ॥
साक्षादलक्ष्मीः सा जाता गिरिजावेशसंयुता ।

**दुःशला** (१२.४५-६) तु मृषामानिन्यासुर्यपि कुहूयुता ॥ ९५ ॥

**दुःशासनः** (४२-३) पुरा योऽयमिन्द्रजित् परिकीर्तितः ।
**दुःशासनात्मजः** (१९.२०३) पूर्वं रावणिर्हि सुरान्तकः ॥ ९६ ॥

**नकुलः** (३०.१५८) क्रोधनामा यस्त्वसुरो यज्ञदूषकः ।
**पुरोचनः** (१९.३२-३) प्रहस्तोऽयं सचिवो रावणस्य यः ॥ ९७ ॥

**पूतना** (१२.८७) ताटका पूर्वमूर्वश्यावेशसंयुता ।
**पौण्ड्रको** (८) वासुदेवस्तु वेनो नामासुरोऽभवत् ॥ ९८ ॥

**पौण्ड्रकस्य प्रसूः** (७) काशिराजकन्या दितिः स्मृता ।
**मन्थरा** (५.१) या त्वलक्ष्मीः सा तपसा किञ्चिदप्सराः ॥ ९९ ॥

**रावणस्तु** (३.४०) जयाविष्टो हिरण्यकशिपुः स्मृतः ।
**रुग्मी** (१४.९०-१) य इल्वलः पूर्वं शुचिना वह्निना युतः ॥ १०० ॥

**लक्ष्मणश्च** (१९.२०१) पुरा योऽक्षकुमारः परिकीर्तितः ।
**वायसश्च** (५.९) जयन्तोऽयं कुरङ्गाख्यासुरान्वितः ॥ १०१ ॥

**विकर्णो** (१२.४३) धार्तराष्ट्रो यः सोऽतिकायः पुराऽभवत् ।
**शकुनिः** (२१.२९४) सौबलश्चायं द्वापरांशोऽतिपापकृत् ॥ १०२ ॥

**शतधन्वा** (१९.१०३) यादवोऽपि दैत्योऽसौ पूर्वजन्मनि ।
**शम्बूकस्तापसः** (९.२०) शूद्रो जङ्घनामाऽसुरः स्मृतः ॥ १०३ ॥

**शिशुपालो** (१४.८८) जयाविष्टो हिरण्यकशिपुः पुरा ।
बभूव रावणः पश्चाद् राघवेण निसूदितः ॥ १०४ ॥

**सप्त सालाः** (६.८) सप्त दैत्या ब्राह्मं पदमभीप्सवः ।
**साल्वोऽसुरो** (११.२१३) बलिरिति मोहयामास यो बलिम् ॥ १०५ ॥

**सुनीथः** (१३.१०९)कंससोदर्यो वृको नामासुरोऽभवत् ।
**सृगालवासुदेवस्तु** (१२.९)धुन्धुनामाऽसुरः स्मृतः ॥ १०६ ॥

**सृगालवासुदेवस्य माता** (७) दनुरिति स्मृता ।
**हंसो डिभक** इत्येतौ (११.२०५) भ्रातरौ मधुकैटभौ ॥ १०७ ॥

एतैः सर्वैः पदैर्वाच्यो मधुकैटभसूदनः ।
निर्दोषस्तत्पदज्ञेयगुणसर्वस्वबृंहितः ॥ १०८ ॥

'पौण्ड्रके नरके चैव साल्वे कंसे च रुग्मिणि ।
आविष्टास्तु हरेर्भक्तास्तद्भक्त्या हरिमीयिरे' ॥ १०९ ॥

श्रीभागवततात्पर्यनिर्णये यद् वचस्त्विदम् ।
तदप्यत्रानुसन्धेयमिति नात्रोदितं पुनः ॥ ११० ॥

पूर्णप्रज्ञेन मुनिना विक्षिप्य कथितं तु यत् ।
सङ्गृहीतं तदेकत्र कुसुमेभ्यो मरन्दवत् ॥ १११ ॥

इमामाचार्यगोविन्दः प्रमृष्टां शब्दतोऽर्थतः ।
चक्रेऽवतारमीमांसां विनेयजनवाञ्छया ॥ ११२ ॥

**इत्याचार्यगोविन्दस्य कृतिषु**
**अवतारमीमांसा समाप्ता**

—०—

# तारतम्यमीमांसा

**नत्वा नारायणं देवं मध्वं मूलगुरुं तथा ।**
**प्रणीयते तारतम्यमीमांसा हरितुष्टये ॥**

विष्णोः सर्वोत्तमत्वं वायोश्च जीवोत्तमत्वं न सम्यगवगम्यते विना तारतम्यमीमांसाम्। विष्णुभक्तिश्च सर्वाधिका न देवतासु परिवारभूतासु तारतम्यपरिज्ञप्तिं विना शक्यमनुसन्धातुम् । तत इयं तारतम्यमीमांसा प्रस्तूयते–

१. परमपुरुषो नारायणः । गुणतो देशतः कालतः शक्तितश्चानन्तः ।

**[मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः।**
**कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः ॥**

**पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा ।**
**यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः ॥**

**नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च ।**
**एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः ॥]**

२. परा प्रकृतिर्लक्ष्मीः । नारायणादनन्तांशावरा ।

**[श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा ।**
**सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता ॥]**

३.हिरण्यगर्भः । मुख्यप्राणश्च । लक्ष्म्याः कोटिगुणावरौ ।

**[प्राणः सूत्रं महान् ब्रह्मा चित्तं वायुर्बलं धृतिः ।**
**स्थितिर्योगश्च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ॥**

**मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः ।**
**ऋजुः सुमानो विज्ञाता महाध्याता महागुरुः ॥**

**हनूमान् भीम आनन्द इत्यादिबहुरूपिणः ।**
**हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते ॥]**

४. हिरण्यगर्भपत्नी सरस्वती । मुख्यप्राणपत्नी भारती च । ब्रह्मवायुभ्यां शतगुणावरे ।

**[सरस्वती च गायत्री श्रद्धाऽऽद्या प्रीतिरेव च ।**
**सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ॥**

**गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।**
**शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।**
**चन्द्रेत्यादिस्वरूपा यास्तेभ्यः शतगुणावराः ॥]**

५. गरुडः । शेषः । रुद्रश्च [एकादशरुद्रेषु यः प्रधानः] । सरस्वतीभारतीभ्यां शतगुणावराः ।

**[शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च ।**
**नरोऽवटो लक्ष्मणश्च रौहिणेयः शुकस्तथा ॥**

**सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि ।**
**दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकः ॥]**

६. विष्णोः कृष्णावतारे षण्महिष्यो नीला,भद्रा, मित्रविन्दा, कालिन्दी, लक्षणा, जाम्बवती च । [आसु जाम्बवती प्रधाना । लक्ष्म्या विशेषावेशदशायां शेषतुल्या ।] गरुडशेषरुद्रेभ्यः पञ्चगुणावराः ।

७. गरुडपत्नी सुपर्णी । शेषपत्नी वारुणी । रुद्रपत्नी पार्वती च । गरुडशेषरुद्रेभ्यो दशगुणावराः ।

८. पुरन्दरः । कामश्च । सुपर्णीवारुणीपार्वतीभ्यो दशगुणावराः ।

**[वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः ।**
**सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च ।**
**सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ॥]**

९. शरीरमानी अहम्प्राणः [४९मरुत्सु प्रधानः]। पुरन्दरकामाभ्यां दशगुणावरः ।

१०. पुरन्दरपत्नी शची । कामपत्नी रतिः । कामपुत्रोऽनिरुद्धः । बृहस्पतिः । स्वायम्भुवमनुः । दक्षप्रजापतिश्च । अहम्प्राणाद् दशगुणावराः ।

११. स्पर्शमानी प्रवहः [४९ मरुत्सु द्वितीयः] । अनिरुद्धादिभिः पञ्चगुणावरः ।

१२. चन्द्रः । सूर्यः । सूर्यपुत्रो यमः । स्वायम्भुवमनुपत्नी शतरूपा च । [द्वादशस्वादित्येषु सूर्यस्तृतीयः । तत्र प्रथमो विष्णुर्वामनोऽदित्यां जातः । इन्द्रानुजतया जात इति तमुपेन्द्रमाचक्षते । द्वितीयोऽष्टमकक्ष्यागतः पुरन्दराख्य इन्द्रोऽदित्यां पूर्वजातः ।] एते प्रवहाद् द्विगुणावराः । अनिरुद्धादिभ्यो दशगुणावराः ।

१३. वरुणः [द्वादशस्वादित्येषु चतुर्थः] ।

१४. नारदः ।

१५. अग्निः [अष्टवसुषु प्रधानः] । वरुणपुत्रो भृगुमुनिः । दक्षप्रजापतिपत्नी स्वायम्भुवमनुपुत्री प्रसूतिश्च । एते चन्द्रादिभ्यो दशगुणावराः ।

१६. वैवस्वतमनुः । विश्वामित्रः । महर्षयः सप्त पूर्वे– मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चेति ।

१७. मित्रः [द्वादशस्वादित्येषु पञ्चमः] । निरृतिः । बृहस्पतिपत्नी तारा । प्रवहवायुपत्नी प्रावही च ।

१८. विघ्नाधिपतिर्गणपतिर्भूताकाशमानी । धनपतिः कुबेरः । वायुजो विष्वक्सेनः । सूर्यजावश्विनौ नासत्यदस्रौ नाम । प्रधानवसुमग्निमृते सप्तान्ये वसवः– द्रोणः, प्राणः, ध्रुवः, अर्कः, दोषः, वस्तुः, विभावसुश्चेति । [वसूनामपि नामान्तराणि पठ्यन्ते । वस्तुरेव द्युवसुः, यो भीष्मो बभूव ।] उक्तान् पञ्च वक्ष्यमाणं चैकं विहाय षडादित्याः– अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता चेति । [आदित्यानामपि बहुधा नामानि पठ्यन्तेऽन्यान्यग्रन्थेषु । बहुनामानो हि देवाः ।] दश विश्वेदेवाः– क्रतुः, दक्षः,सवः, सत्यः,कामः, कालः, धुरिः, लोचनः, पुरूरवः, आर्द्रवश्चेति । एकादशसु रुद्रेषु प्रधानं विहायान्ये दश– रैवतः, ओजः, भवः, भीमः, वामः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुध्निः, विरूपाक्षश्चेति । [रुद्राणामपि नामान्तराण्यन्यत्र पठ्यन्ते ।] एकोनपञ्चाशन्मरुत्सु अहम्प्राणं प्रवहं च विहायावशिष्टाः ४७ मरुतः–प्राणः,अपानः,व्यानः,उदानः, समानः, नागः,कूर्मः, कृकळः, देवदत्तः, धनञ्जयः, आवहः, उद्वहः, परावहः, विवहः, संवहः, शम्भुः,

शङ्कुः, कलः, श्वासः, अनलः, अनिलः, प्रतिभः, कुमुदः, कान्तः, शुचिः, श्वेतः, अजितः, गुरुः, सञ्ज्ञः, प्रवर्तकः, कालः, दक्षः, सोम्यः, कपिः, जडः, मण्डूकः, सन्ततः, सिद्धः, रक्तः, कृष्णः, पिकः, शुकः, यतिः, भीमः, हनुः, पिङ्गः, कम्पनश्चेति । [मरुतां बहुविधानि नामानि पठ्यन्ते । नैकत्राप्येकरूपता । तत्रायमेकः प्रकारः प्रतनैरुद्धृतः] । पितृपतिष्वेकः कव्यवाहनामाऽग्निः । [त्रिषु प्रधानपितृपतिषु द्वौ यमसोमौ द्वादशकक्ष्यायां गतौ] । ऋभवस्त्रयः– ऋभुः, विभ्वा, वाजश्चेति । द्यावापृथिवीमानिन्यौ च दैव्यौ ।

१९. प्रधानवायुपुत्रो भूतवायुमानी मरीचिः[१] । प्रधानाग्निपुत्रो भूताग्निमानी पावकः । पादमानिनाविन्द्रपुत्रौ यज्ञनामा जयन्तः, शम्भुश्च । दैत्यगुरुः शुक्रः । तत्सोदरश्च्यवनः । बृहस्पतिसोदर उचथ्यः । उक्तं सनत्कुमारं विहायान्ये त्रयो ब्रह्मणो मानसपुत्रा ऋषयः– सनकः, सनन्दनः, सनातनश्च । सप्त चान्य ऊर्ध्व-रेतसः । एतान् दश, पूर्वोक्तान् सनत्कुमारादींश्च दश विहायान्ये काश्यपाद्या अशीतिर्गृहस्था ऋषयः । भाविमन्वन्तराणामिन्द्राः सप्त– बलिः, अद्भुतः, शम्भुः, विधृतिः, ऋतधामा, दिवस्पतिः, शुचिश्च । [अतीतेषु मन्वन्तरेषु प्रथमे स्वायम्भुवेऽन्तरे यज्ञनामा विष्णुरेवेन्द्रः । द्वितीये स्वारोचिषे रोचननामा वायुः । तृतीये चौत्तमे सत्यजिन्नामा यम इन्द्रः । चतुर्थे तापसे पञ्चमे च रैवते त्रिशिखविभुनामानौ नासत्यदस्रावश्विनाविन्द्रौ । षष्ठे चाक्षुषे मन्द्रद्युम्नः, स एव च सप्तमे वैवस्वतेऽन्तरे पुरन्दरनामेन्द्रः । तमेतमष्टमकक्ष्यागतमिन्द्रमाचक्षते ।] त्रीनुक्तान् विहायावशिष्टा एकादश मनवः– स्वारोचिषः, उत्तमः, रैवतः, चाक्षुषः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, देवसावर्णिः, इन्द्रसावर्णिश्चेति । [प्रथमः स्वायम्भुवो मनुर्दशमकक्ष्यायां गतः । चतुर्थस्तापसो मनुः स्वयं विष्णुरेव । सप्तमो वैवस्वतः षोडश्यां कक्ष्यायां गतः । अपरे त्वेकादशात्र ।] दशसु पितृपतिषु पूर्वोक्तान् यमसोमकव्य-वाहान् विहायान्ये सप्त । अष्टौ विष्णोर्द्वारपालकाः– जयः, विजयः, चण्डः, प्रचण्डः, नन्दः, सुनन्दः, कुमुदः, कुमुदेक्षणश्चेति । अष्टौ प्रधानगन्धर्वाः । अष्टौ प्रधानाप्सरसः । विश्वकर्मा । चित्रगुप्तः । सूर्यसारथि-ररुणः । नन्दी । ऐरावतः । सुरभिः । कल्पवृक्षादिदेवताः । अहोरात्रदेवते । पूर्णिमामावास्यादेवते । अभिजिद्विषुवद्देवते । ओषधिवनस्पत्यभिमानिनः । हविःकपालाद्यभिमानिनश्च । कर्मणा देवत्वं गताः शतं राजर्षयश्च– पृथुः, कार्तवीर्यः, शशबिन्दुः, प्रियव्रतः, उत्तानपादः, मान्धाता, गयः, ककुत्स्थः, नहुषः, अम्बरीषः, आर्षभो भरतः, दौःषन्तिर्भरतः, मरुत्तः, हरिश्चन्द्रः, प्रह्लादः, परीक्षिदाद्याश्च । त एतेऽग्रेः

१. मरीचिं पूर्वे विद्वांस एकान्नविंश्यां कक्ष्यायां पठन्ति । अयं भूतवायुमानीति गीतातात्पर्ये स्थितम् । आकाशमानी भूतवायुमानी च समानाविति चैतरेयभाष्यादवगम्यते । तेन मरीचिरेकान्नविंश्यां पठितेषु प्रधानः, अष्टादश्यां कक्ष्यायां पठिताद् गणपतेः किञ्चिन्न्यूनः । प्रायस्तत्समान इति ज्ञायते ।

शतगुणावराः ।

२०. द्वादशादित्येषु चरमः पर्जन्यः । अनिरुद्धभार्या उषा विराडाख्या । चन्द्रभार्या रोहिणी । सूर्यभार्या सञ्ज्ञा । यमभार्या श्यामळा । वरुणभार्या च गङ्गा । एकान्नविंशकक्ष्यापठितेभ्यो मरीच्यादिभ्यो द्विगुणावराः ।

२१. उक्तवक्ष्यमाणेभ्योऽन्ये अनाख्याताः देवाः । [केचिन्नैतां कक्ष्यां परिगणयन्ति] ।

२२. अग्निभार्या वाङ्मानिनी स्वाहा । एकान्नविंशकक्ष्यापठितेभ्यः पञ्चगुणावरा ।

२३. जलमानी बुधः । स्वाहातो द्विगुणावरः ।

२४. अश्विभार्या नाममानिनी उषाः । स्वाहातो दशगुणावरा ।

२५. कुजः[१] ।

२६. पृथिवीमानी सूर्यतनयः शनिः ।

२७. कर्ममानी वरुणपुत्रः पुष्करः ।

२८. काश्यपभार्याऽदितिः, या देवकी बभूव । द्रोणाख्यवसुभार्या धरा, या यशोदा बभूव ।

२९. कृष्णपत्नीत्वेन जाता अग्निपुत्राः १६,१०० सङ्ख्याकाः । आसु त्वष्टृपुत्री कशेरुः किञ्चिदधिका ।

३०. अनाख्याता आजानजा देवाः । शतं गन्धर्वाः । शतमप्सरसः । [शतं कोटीनामृषयः सन्ति । तत्र पूर्वोक्तमृषीणां शतकं विहायावशिष्टाः] ९९,९९,९९,९०० ऋषयः । एकान्नविंशकक्ष्यापठितेभ्यः कर्मदेवेभ्यः शतगुणावराः ।

३१. पूर्वोक्तानां सप्तानां पितृपतीनां सन्ततिभूताश्चिरपितरः । आजानदेवेभ्यः शतगुणावराः ।

३२. पूर्वोक्तं गन्धर्वाणामप्सरसां च शतमष्टोत्तरं विहायावशिष्टा गन्धर्वा अप्सरसश्च । चिरपितृभ्यः शतगुणावराः ।

३३. मनुष्यगन्धर्वाः । गन्धर्वेभ्यः शतगुणावराः ।

३४. चक्रवर्तिनः । मनुष्यगन्धर्वेभ्यः शतगुणावराः ।

---

१. अयमप्येकोनविंश्यां कक्ष्यायां पठनीय इत्येके ।

३५. नरोत्तमाश्चतुर्वर्णगताः । चक्रवर्तिभ्यः शतगुणावराः ।

✻ ✻ ✻

एतेषु च विशिष्योपनिषदुक्ता नामादिमारुतान्ता यथा–

१. नाममानिनी उषाः [२४]

२. वाङ्मानिनी स्वाहा [२२]

३. मनोमानी पर्जन्यः [२०]

४. सङ्कल्पमानी मित्रः [१७]

५. चित्तमानी अग्निः [१५]

६. ध्यानमानी वरुणः [१३]

७. विज्ञानमानी चन्द्रः [१२]

८. बलमानी प्रवहः [११]

९. अन्नमानी अनिरुद्धः [१०]

१०. अम्मानी अहम्प्राणः [९]

११. तेजोमानी पुरन्दरः [८]

१२. आकाशमानिनी उमा [७]

१३. स्थिरस्मृतिमानी शिवः [५]

१४. आशामानिनी भारती [४]

१५. जीवमानी मुख्यप्राणः [३]

[बलमिति ज्ञानबलं देहबलं च । तदुभयमानी भूतवायुः । अन्नमिति ज्ञानरतिरूपं ज्ञानान्नं बाह्यमन्नं च । तदुभयमानी अनिरुद्धः । आप इति ज्ञानतृप्तिर्बाह्यजलं च । तदुभयमानी अहम्प्राणः । तेज इति मानसं प्रतिभानं बाह्यं च । तदुभयमानी पुरन्दरः । आकाश इति स्थिरा प्रतिभा भूताकाशश्च । तदुभयमानिन्युमा । ततः स्थिरस्मृतिमानी शिवः । तत आशाया अपरोक्षानन्दस्य मानिन्यौ सरस्वतीभारत्यौ । ततश्च जीवकलामानी मोक्षानन्दमानी च प्राणात्मा हिरण्यगर्भ इति ।]

तथाहि श्रुतिः– **'अथातः सम्भूतिः । परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धि-र्बुद्धेरिन्द्र इन्द्रात् तैजसप्राणस्तैजसप्राणादनिरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते'** इति ।

**इमामाचार्यगोविन्दश्चक्रे चक्रायुधप्रियाम् ।**
**तारतम्यस्य मीमांसां विनेयजनवाञ्छया ॥**

**इत्याचार्यगोविन्दस्य कृतिषु**
**तारतम्यमीमांसा समाप्ता**

—०—

**उत्तरोत्तरं ब्रह्मान्तः शतगुणाधिकक्रमः**

| | |
|---|---|
| १. नरोत्तमः | १ |
| २. चक्रवर्तिनः | १०० |
| ३. मनुष्यगन्धर्वाः | १००,०० |
| ४. देवगन्धर्वाः | १००,००,०० |
| ५. चिरपितरः | १००,००,००,०० |
| ६. आजानदेवाः | १००,००,००,००,०० |
| ७. कर्मदेवाः | १००,००,००,००,००.०० |
| ८. अग्निः | १००,००,००,००,००.००,०० |
| ९. अनिरुद्धः | १००,००,००,००,००.००,००,०० |
| १०. पुरन्दरः | १००,००,००,००,००.००,००,००,०० |
| ११. गरुडशेषरुद्राः | १००,००,००,००,००.००,००,००,००,०० |
| १२. सरस्वतीभारत्यौ | १००,००,००,००,००.००,००,००,००,००,०० |
| १३. ब्रह्म-वायू | १००,००,००,००,००.००,००,००,००,००,००,०० |

ततः कोटिगुणा रमा । अनन्तगुणो नारायण इति

इमामाचार्यगोविन्दश्चक्रे चक्रायुधप्रियाम् ।
तारतम्यस्य मीमांसां विनेयजनवाञ्छया ।।

इत्याचार्यगोविन्दस्य कृतिषु तारतम्यमीमांसा समाप्ता

—०—

# नाममीमांसा-१

**(मध्वरामायणगतानां पात्राणां नामानुक्रमणी)**

**अकम्पनः** । रुद्रवरगुप्तः रावणभृत्यो राक्षसः ।

**अगस्त्यः** । दक्षिणापथवासी मुनिः । (कुम्भसम्भवः, कुम्भोद्भवः[१]) ।

**अङ्गदः** । वालिना तारायां जातः कपिः । चन्द्रावतारभूतः । (इन्द्रसुतात्मजः, वालितनयः, वालिपुत्रः, वालिसुतः, वालिसूनुः, शक्रसुतात्मजः, सुरेन्द्रसुतसूनुः) ।

**अतिकायः** । रावणात् गन्धर्विकायां जातः । कुम्भकर्ण इति नामान्तरमस्य । लक्ष्मणेन हतः ।

**अतुलः** । ब्रह्मशिववरबलोऽसुरः । तपोमयः । रामेण हतः ।

**अहल्या** । गौतमपत्नी । इन्द्रप्रधर्षिता । रामदर्शनात् पूता पुनर्गौतमेन संससार ।

**अक्षः** । रावणस्य तनयः । इन्द्रजिदनुजः । (मण्डमध्यकासुतः, रावणात्मजः) ।

**इन्द्रजित्** । मेघनाद इति नामान्तरमस्य । रावणस्य प्रथमपुत्रः । (इन्द्रशत्रुः, त्रिदशेशशत्रुः, रावणात्मजः, शक्रजित्, सुरेन्द्रशत्रुः) ।

**कत्थनः** । कुबेरावतारः कपिः ।

**कवन्धः** । त्रिजटासुतः । दनुनामा गन्धर्वः । सुरेन्द्रमुक्तेन वज्रेण भुग्नकायो जातः ।

**किङ्कराः** । रावणभृत्या राक्षसाः ।

**कुमुदः** । जयन्तावतारः कपिः ।

**कुमुदिनः** । अब्जजवाक्यरक्षा असुराः । रामेण हताः ।

**कुम्भकर्णः** । हरेः द्वारपालकेन विजयेनाऽविष्टो हिरण्याक्षः पुनर्जातः । (कुम्भश्रुतिः, निशाचरः, रजनिचरवरः) ।

**कुम्भः** । कुम्भकर्णसुतः । सुग्रीवहतः ।

**कुरङ्गः** । वायसनेत्रावासो राक्षसः । रामेण हतश्च ।

---

१. अस्मिन् ग्रन्थे प्रयुक्तानि नामान्तराणि () एतच्चिह्नान्तर्गतान्यत्र निर्दिष्टानि । एवमुत्तरत्रापि ।

**कुशः** । रामसुतः । इन्द्रावतारभूतः ।

**केसरी** । मरुत्सु प्रवरो हनुमत्पिता कपिः ।

**कैकेयी** । दशरथपत्नी । भरतजननी । (कैकयी) ।

**कौसल्या** । दशरथपत्नी । रामप्रसूः ।

**खरः** । रावणानुजो भृत्यः । दण्डके रावण-प्रतिनिधिः ।

**गजः** । प्राणात्मा कपिः । कुबेरजः ।

**गन्धमादनः** । समानवायोरंशः कपिः । कुबेरजः ।

**गवयः** । व्यानात्मा कपिः । कुबेरजः ।

**गवाक्षः** । अपानात्मा कपिः । कुबेरजः ।

**गाधी** । चन्द्रवंशीयो राजा । इन्द्रावतारः । विश्वा-मित्रस्य जनकः ।

**गुहः** । रामभक्तो व्याधः ।

**गौतमः** । अहल्याभर्त्ता मुनिः । शतानन्दपिता ।

**जङ्घः** । शम्बूकनामा शूद्रतापसो जातः । पार्वती-वरदर्पितः । रामहतः ।

**जटायुः** । सूर्यसूतस्यारुणस्य तनयः । दशरथसखा । रावणेन सीतारक्षणे हतः ।

**जयन्तः** । इन्द्रसुतः । वायसरूपी कुरङ्गेणासुरेणा-विष्टः । रामेण निगृहीतो नष्टासुरावेशः ।

**जाम्बवान्** । ब्रह्मण आस्यसमुद्भवः । ऋक्षः । रोहिणीपिता । धर्मावतारः । (धातुःसुतः, ब्रह्मसुतः, ब्रह्मात्मजः, विधातृजः) ।

**ताटका** । सुन्दोपसन्दयोर्भार्या राक्षसी राम-निहता ।

**तारः** । ताराभ्राता कपिः । बृहस्पतेरवतारभूतः ।

**तारा** । वालिपत्नी । शच्या अवतारभूता ।

**तुम्बुरुः** । स्थूणाकर्णापरनामा गन्धर्वः ।

**त्रिशिराः** । खरसहचरः । रामेण हतः ।

**त्रिशिराः** । ब्रह्मवरगुप्तो राक्षसः । रावणतनयः । हनुमता हतः ।

**दशरथः** । सूर्यवंशजो राजा । रामस्य पिता । स्वायम्भुवमनोरंशः । (दशदिग्रथः, दशस्यन्दन-नामा)।

**दुर्मुखः** । निरृतेरवतारभूतः कपिः ।

**दुर्वासाः** । रुद्रावतारभूतो मुनिः ।

**दूषणः** । खरसहचरो राक्षसः । रामेण हतः ।

**देवतापनः** । ब्रह्मवरदृप्तो रावणसचिवः । रामेण हतः ।

**देवान्तकः** । नरान्तकभ्राता । रावणपुत्रः । गन्धर्वकन्यायां जातः । हनुमता हतः ।

**धूम्रनेत्रः** । रुद्रवरादवध्यो रावणभृत्यः । हनुमता हतः ।

**नरान्तकः** । रावणतनयः । गन्धर्वकन्यायां जातः । अङ्गदेन हतः ।

**नळः** । विश्वकर्मावतारः । सेतुनिर्माता कपिः ।

**निकुम्भः** । कुम्भकर्णतनयः । हनुमता हतः ।

**निकृतिः** । कैकेयीं प्रविष्टा राक्षसी ।

**नीलः** । अग्नेरवतारभूतः कपिः ।

**परशुरामः** । जमदग्निपुत्रतयाऽवतीर्णो विष्णुः । क्षत्रकुलान्तकः । कौरवकुलगुरोर्द्रोणस्य गुरुः । कर्णभीष्मादीनां च गुरुः । (जामदग्न्यः, भार्गवः, भृगोः कुलोत्थः, भृगुवर्यः, भृगूणां पतिः, भृगूत्तमः, भृगूद्वहः, रामः) ।

**पनसः** । वस्वंशभूतः कपिः ।

**प्रमाथी** । ब्रह्मवरगुप्तो रावणसचिवो राक्षसः । रामेण हतः ।

**प्रहस्तः** । रावणमन्त्री । कृष्णावतारे दुर्योधन-सचिवः पुरोचनो बभूव ।

**बलिः** । प्रह्लादजस्य विरोचनस्य पुत्रः । भावि-मन्वन्तरस्येन्द्रः ।

**भरतः** । कैकेयीपुत्रः । लक्ष्मणानुजः । प्रद्युम्न-रूपिहरिणाऽऽविष्टः । चक्रमानी ।

**मकराक्षः** । खरासुरस्य पुत्रः । रामेण हतः ।

**मण्डोदरी** । मयसुता । रावणभार्या (मण्डमध्यका)।

**मत्तः** । रावणस्य मातृष्वस्रीयः । पार्वतीवरदर्पितः । हनुमता हतः ।

**मन्थरा** । अलक्ष्मीः कलिभार्या । ब्रह्मनिदेशाद् भूमौ जाता ।

**मयः** । दानवशिल्पी ।

**महापार्श्वः** । रावणमन्त्री । सुग्रीवहतः ।

**महोदरः** । रावणमन्त्री । सुग्रीवहतः ।

**मारीचः** । ताटकायाः सुन्देन जातः पुत्रः । रावणेरितो मृगरूपधारी रामेण हतः ।

**मैनाकः** । पक्षवान् पर्वतः । मेनातनयः । गिरि-जायाः सोदरः । वायुरक्षितः ।

**मैन्दविविदौ** । कपी अश्विनौ । कृष्णावतारे स्वं धाम गतौ । विविदः इन्द्रावेशी ।

**यज्ञकोपः** । ब्रह्मलब्धवरो रावणानुगो राक्षसः । माल्यवतस्तनयः । रामहतः ।

**युद्धोन्मत्तः** । पार्वतीवरदर्पितो राणवस्य मातृष्व-स्रीयः । हनुमता हतः ।

**यूपनेत्रः** । रावणमन्त्री । सुग्रीवहतः ।

**रामः** । दशरथकौसल्याभ्यां जातः । नारायणस्य साक्षादवतारः । सीतापतिः । (अभिरामः, आदिपूरुषः, इन्दिरेशः, उत्तमपूरुषः, जगदेकभर्ता, जगदेकनाथः, जनार्दनः, देवतमः, देवदेवः, नरराजपुत्रः, परमः पुमान्, पुरुषोत्तमः, पुष्करेक्षणः, भगवान्, भवशत्रुः, रघुपः,रघुपतिः,रघुवरः, रघुवर्यः, रघुवंशनाथः, रघुप्रवीरः, रघुवीरः, रघूणां प्रवरः, रघूत्तमः, रमेशः, रामदेवः, लक्ष्मणाग्रजः, विश्वनायकः) ।

**रावणः** । वैकुण्ठपालेन जयेनाऽविष्टो हिरण्य-कशिपुर्द्वितीयजन्मनि रावणो बभूव । (दशकन्धरः, दशाननः, दशास्यः, निशाचरेशः, निशाचरेश्वरः, पिशिताशनेश्वरः, रजनीचरनाथः, रजनीचरलोक-नाथः, रजनीचरेन्द्रः, रजनीचरेशिता, रक्षःपतिः,

रक्षसामधिपः, राक्षसपतिः, राक्षसाधिपः, रक्षोऽधिपतिः, सर्वनिशाचरेश्वरः) ।

**लवः** । रामसुतः । अग्न्यवतारभूतः ।

**लवणः** । मधुपुत्रोऽसुरः । शत्रुघ्नहतः ।

**लक्ष्मणः** । दाशरथिः । सुमित्रातनयः । भरताग्रजः । ऊर्मिळापतिः । शेषावतारभूतः । सङ्कर्षणस्य हरेरावेशवान् । (देवतमस्यानुजः, रामावरजः, सौमित्रिः) ।

**वज्रदंष्ट्रः** । रावणसेनापतिः । अङ्गदेन हतः ।

**वसिष्ठः** । सूर्यवंशस्य कुलगुरुः । वेदव्यासस्य प्रपितामहः । शक्तेः पिता ।

**वाली** । इन्द्रावतारभूतः । तारापतिः । सुग्रीवाग्रजः । रामहतः । (इन्द्रसुतः,इन्द्रसूनुः, इन्द्रात्मजः, पुरुहूतसुतः, शक्रपुत्रः) ।

**विभीषणः** । धार्मिको रावणसोदरः । कल्पान्तजीवी ।

**विदेहः** । सीताया जनकः सीरध्वजनामा विदेहभूपतिः । (मैथिलः, विदेहराजः) ।

**विद्युज्जिह्वः** । रावणसचिवो राक्षसः । ब्रह्मवरदृप्तः । रामहतः ।

**विराधः** । तुम्बुरुः शापेन विराधत्वेन जातः ।

**विरूपनेत्रः** । रावणमन्त्री । सुग्रीवहतः ।

**विश्वकर्मा** । देवशिल्पी । लङ्काद्वारकादिनिर्माता ।

**विश्वामित्रः** । कुशिकपौत्रः । गाधेः पुत्रः । तपसा ब्राह्मण्यं गतः । (गाधिसुतः, विश्वस्य मित्रम्) ।

**वृषः** । उदानात्मा कपिः । कुबेरजः ।

**शकुनिः** । रावणस्य सचिवः । ब्रह्मवरदृप्तः । रामेण हतः ।

**शतवलिः** । वस्वंशभूतः कपिः ।

**शत्रुघ्नः** । दशरथसूनुः । भरतानुजः । मधुरापुरीशासकः । पाञ्चजन्यशङ्खमानी । अनिरुद्धरूपिणा हरिणाऽविष्टः ।

**शबरी** । शच्या शप्ता अप्सराः ।

**शरभङ्गः** । हरिभक्तो दण्डकारण्यवासी मुनिः । रामपुरतस्तनुं त्यक्त्वा मुक्तिमाप ।

**शुकः** । रावणस्य स्पशः । ब्रह्मवरदृप्तः । रामेण हतः ।

**शूर्पणखा** । रावणभगिनी । कालकेयस्य विद्युज्जिह्वाख्यस्य प्रमादवशाद्धतस्य भार्या । अत एव विधवा द्वितीयपतिमार्गणतत्परा ।

**श्वेतः** । मरुत्स्वन्यतमः कपिः ।

**श्वेतः** । अनन्नयज्ञकृत् कश्चिद् वैदर्भो राजा । रामानुग्रहेण स्वार्तिमतिक्रान्तः ।

**समुद्रः** । वरुणः । महाभिषक् । शन्तनुश्च । ब्रह्मणा शप्तः । गङ्गापतिः । पश्चिमदिगीशः ।

**सम्पातिः** । जटायोरग्रजः पतगः । अरुणस्य पुत्रः ।

**सम्पाती** । मरुत्स्वन्यतमात्मा कपिः ।

**सारणः** । रावणस्य स्पशः । ब्रह्मवरदृप्तः । रामेण हतः ।

**सिंहिका** । छायाग्रहा राक्षसी । राहोर्माता ।

**सीता** । अयोनिजा । जनकपालिता । रामपत्नी । (जनकात्मजा, जनकासुता, जानकी, देवी, मैथिलस्य तनया, मैथिली) ।

**सुग्रीवः** । सूर्यावतारः कपिराजः । वालिसोदरः । (इनात्मजः, कपीशः, कपीश्वरः, तापनिः, तिग्मांशुतनयः, दिनेशात्मजः, प्लवङ्गमेशः, भास्करात्मजः, भास्करिः, रविजः, रविसुतः, रवेःसुतः, वानरेशिता, सूर्यजः, सूर्यात्मजः, हरिराजः,हरिराट्, हरीन्द्रः) ।

**सुपार्श्वः** । सम्पातिसुतः पतगः ।

**सुप्तघ्नः** । माल्यवतस्तनयः । ब्रह्मवरदृप्तः । रामेण हतः ।

**सुबाहुः** । उपसुन्दतनयः । रामेण हतः ।

**सुमित्रा** । दशरथभार्या । लक्ष्मणशत्रुघ्नयोर्जननी ।

**सुरसा** । नागमाता । काश्यपजाया ।

**सुराणकाः** । सीतापवादहेतवो राक्षसाः । ब्रह्मवर-गुप्ताः ।

**सुषेणः** । वरुणावतारः कपिः ।

**हनुमान्** । अञ्जनातनयः । वायोः प्रथमावतारः । (कपीन्द्रः, पवनजः, पवनस्य पुत्रः, पवनस्य सूनुः, पवनात्मजः, प्रधानमारुतात्मजः, प्रभञ्जनात्मजः, प्राणस्य सूनुः, प्राणवरात्मजः, बलदेवसूनुः, मरुत्सुतः, मारुतसुतः, मारुतसूनुः मारुतात्मजः, मारुतिः, मारुती तनुः, वानरोत्तमः, वायुनन्दनः, वायुसुतः, वायुसूनुः, वायोःसुतः, समीरस्य तनुः, सुरान्तरात्मनोऽङ्गजः, हरिः) ।



# नाममीमांसा—२

**(तात्पर्यनिर्णयोदितानां महाभारतहरिवंशादिगतानां पात्राणां नामानुक्रमणी)**

**अक्रूरः** । किशोरनाम्नो गन्धर्वस्यावतारः । स्वायम्भुवमनोरंशः । ब्रह्मावेशयुक्तः । श्वफल्कस्य पुत्रः । (दानपतिः, दानेश्वरः, श्वफल्कजः, श्वाफल्किः)।

**अङ्गारवर्णः** । गन्धर्वराजश्चित्ररथः । सुरेशभृत्यः ।

**अच्युतायुः** । दुर्योधनपक्षगो नृपः ।

**अजैकपात्** । एकादशरुद्रेष्वन्यतमः ।

**अदितिः** । काश्यपपत्नी । यस्यां जाता देवा द्वादशाऽदित्या इत्युदिताः ।

**अधिरथः** । सूतः । कर्णस्य पोषकः पिता ।

**अनिरुद्धः** । कृष्णस्य पौत्रः । प्रद्युम्नाद् रुग्मवत्यां जातः । अनिरुद्धावतारः । अनिरुद्धनाम्नो हरेर्विशेषावेशी ।

**अभिमन्युः** । बुधांशः । चन्द्रांशयुक्तः । अर्जुनात् सुभद्रायां जातः । धर्मवायुमहेन्द्राश्विकृष्णानां सन्निधानोपेतः । (पार्थपुत्रः, वासुदेवभागिनेयः, सौभद्रः) ।

**अम्बा** । मूलरूपे वराङ्गी द्युवसुभार्या । ब्रह्मशापेन जाता काशिराजतनया ।

**अम्बालिका** । नियोगाद् पाण्डुप्रसवित्री । काशिराजात्मजा ।

**अम्बिका** । नियोगाद् धृतराष्ट्रप्रसवित्री । काशिराजात्मजा ।

**अरिष्टः** । रुद्रवरगुप्तः वृषभाकृतिर्दैत्यः । कंसभृत्यः ।

**अर्जुनः** । कुन्त्यामिन्द्राज्जातस्तृतीयः पाण्डवः । नरांशयुक्तः । (इन्द्रसुतः, इन्द्रसूनुः, कपिप्रवरकेतनः, किरीटमाली, कुरुप्रवीरः, कौन्तेयः, गाण्डीवधन्वा, गुडाकेशः, जिष्णुः, धनञ्जयः, पाकशासनिः, पाण्डवः, पाण्डवेयः, पाण्डुनन्दनः, पार्थः, पुरन्दरात्मजः, पुरुहूतनन्दनः, पुरुहूतसुतः, पुरुहूतसूनुः, फल्गुनः, बीभत्सुः, भीमानुजः, वज्रधरात्मजः, वज्रपाणितनूजः, वासविः, विजयः, शक्रतनयः, शक्रसूनुः, शक्रात्मजः, शतमन्युनन्दनः, शतमन्युसुतः, सुरराजसूनुः सुरेन्द्रसूनुः, सव्यसाची, सुरेन्द्रनन्दनः, सुरेन्द्रपुत्रः, सुरेशसूनुः) ।

**अलम्बलः** । दुर्योधनपक्षगो राक्षसः ।

**अलम्बुसः** । दुर्योधनपक्षगो राक्षसः ।

**अलायुधः** । दुर्योधनपक्षगो राक्षसः ।

**अश्वत्थामा** । द्रोणपुत्रः । रुद्रावतारभूतः ।

**अश्वसेनः** । तक्षकपुत्रः ।

**असुराप्सराः** । गर्गात् कालयवनं सुषाव ।

**अस्तिप्रास्ती** । कंसपत्न्यौ । जरासन्धतनये ।

**अहिर्बुध्निः** । एकादशरुद्रेष्वेकः ।

**आरुणी** । विदुरभार्या । शूरात् शूद्र्यां भुजिष्यायां जाता । कुन्त्या भगिनी ।

**आहुकः** । यादवः । देवकस्योग्रसेनस्य च पिता । यस्य देवकी पौत्री दत्तपुत्री च ।

**इरावान्** । मङ्गळांशः । वरुणावेशयुक्तः । अर्जुनादुलूप्यां जातः । (आर्जुनिः, पार्थपुत्रः) ।

**उग्रः** । ब्रह्मवरादवध्यो तरुरूपदैत्यः ।

**उग्रसेनः** । उग्रसेनाख्यगन्धर्वावतारभूतः । कंसपिता ।

**उत्तमोजाः** । द्रुपदपुत्रः । परावस्वाख्यगन्धर्वावतारः । अर्यमाख्येनाऽदित्येनाऽविष्टः ।

**उत्तरः** । विराटपुत्रः ।

**उत्तरा** । विराटपुत्री । अभिमन्युपत्नी । परीक्षिज्जननी ।

**उदङ्कः** । कृष्णभक्तः कश्चन ऋषिः ।

**उद्धवः** । उपगवपुत्रः । बृहस्पतेरवतारः । पवनावेशी ।

**उर्वशी** । अप्सराः । नारायणाज्जाता ।

**उलूपी** । नागस्त्री । अर्जुनपत्नी । (भुजगनन्दिनी) ।

**उल्मुकः** । बलभद्रपुत्रः । अंशनामाऽऽदित्यः ।

**उषा** । बाणासुरपुत्री । कृष्णपौत्रस्यानिरुद्धस्य भार्या । मूलरूपेऽप्यनिरुद्धभार्या ।

**ऋतायनः** । मद्रराजः । शल्यमाद्र्योः पिता ।

**एकलव्यः** । क्रोधवशानामसुराणां नायकस्य मणिमतोंऽशः । कृष्णेन हतः ।

**कंसः** । उग्रसेनभार्यायां द्रमिळाज्जातः । कालनेमेरवतारभूतः । जरासुतस्य जामाता ।

**कणिङ्कः** । असुरांशः द्विजः । नास्तिक्ये शकुनेर्गुरुः । शुक्रशिष्यः ।

**करवीरराजपुत्री** । वसुदेवपत्नी । दनोरवतारः । सृगालवासुदेवमाता ।

**कर्णः** । वसुषेणनामा सूर्यावतारभूतः । कुन्त्याः कन्यावस्थायां सूर्याज्जातः । ( रविसुतः, रविजः, विकर्तनात्मजः, वैकर्तनः, सूतजः, सूतपुत्रः, सूतसूनुः, सूर्यजः, सूर्यसूनुः, सूतनन्दनः, सूर्यसुतः, सूर्यात्मजः) ।

**कर्णः** । कृष्णभक्तः कश्चित् पिशाचः ।

**कलिः** । जीवाधमः । विषाभिमानी, कलियुगस्य मिथ्याज्ञानस्य च मानी दैत्यः ।

**कशेरुः** । त्वष्टृपुत्री । कृष्णपत्नीत्वकाम्यया तपसा स्त्रीत्वं प्राप्तानां षोडशसहस्रस्त्रीणां प्रधानभूता ।

**कान्तिः** । चन्द्रस्यान्या भार्या । अपरा बलरामभार्या ।

**कार्तवीर्यार्जुनः** । यदुकुले ख्यातो महान् राजा । सहस्रबाहुः । दत्तेनानुगृहीतः ।

**कलिङ्गः** । कलिङ्गदेशीयो राजा ।

**कालनेमिः** । कामाभिमानी दैत्यः । देवासुरयुद्धे नारायणेन हतः ।

**कालयवनः** । शिवप्रसादतोऽकृष्णत्वाय जातः गर्गतनयः । मुचुकुन्देन दग्धः ।

**काशितनया** । दुर्योधनमहिषी । अलक्ष्मीः । पार्वत्याविष्टा ।

**काशिराजः** । काळीपिता । भीमश्वशुरः ।

**काशिराजकुमारी** । वसुदेवपत्नी । पौण्ड्रकमाता । मूलरूपे दितिः ।

**काश्यपः** । मरीचिपुत्रः । सर्वेषां देवदानव-मनुज-पश्वादीनां जनकः । (कश्यपः) ।

**कालिन्दी** । यमुनायाः स्वसा । कृष्णपत्नी ।

**काळी** । काशिराजकन्या । भारती भीमपत्नी ।

**काळ्यः** । यमुनाह्रदस्थः काळीयो नाम नागः । यस्य फणेषु कृष्णो ननर्त ।

**किर्मीरः** । बकानुजो नरभक्षकः गिरीशवरगुप्तः ।

**कीचकः** । सुदेष्णावरजः । भीमसेनेन हतः । मूलरूपे बाणो नामासुरः ।

**कीटः** । प्रारब्धवशात् कीटजन्माऽपि व्यासानुग्रहेण राजा भूत्वा मुक्तिमाप ।

**कुन्तिभोजः** । कुन्तिदेशस्य राजा । कूर्मो नाम मरुत् । कुन्ती तस्य दत्तपुत्री ।

**कुण्डधारी** । शिवदासभूतो भूतकः ।

**कुन्ती** । शूरपुत्री । वसुदेवसोदरी । कुन्तिभोजदत्तपुत्री पाण्डुपत्नी । धर्मराजादीनां माता ।

**कुम्भकः** । यशोदाभ्राता । नीलापिता ।

**कुरुः** । भरतवंशे ख्यातो राजा । कुरुक्षेत्रस्य निर्माता । येन भरतवंशः कुरुवंश इति पप्रथे ।

**कुवलयापीडः** । गजरूपः रुद्रवररक्षितो दैत्यः ।

**कूटः** । कंसभृत्यो मल्लः ।

**कृतवर्मा** । भोजवंशीयो यादवः । पाञ्चजन्यांशयुतः । प्रवहमरुदंशयुक्तः । शुक्लपक्षमानी ।

**कृपः** । विष्कम्भकरुद्रांशः । भीष्मसखा । व्यासशिष्यः । पाण्डवानामाचार्यः सेनानीश्च । भावी सप्तर्षिः ।

**कृपी** । कृपस्वसा । बृहस्पतिजायायास्ताराया अंशजाता । द्रोणपत्नी ।

**कृष्णः** । साक्षान्नारायणः । वसुदेवाद् देवक्याम-वतीर्णः । (अगण्यगुणार्णवः, अखिललोकनाथः, अच्युतः, अजः, अनन्तः, अनन्तविग्रहः, अप्रमेयः, अब्जनाभः, अमलः, अक्षयः, अरविन्ददलायताक्षः, अरिधरः, आदिदेवः, इन्दिरापतिः, ईशः, ईशिता, ईश्वरः, ईश्वरतमः, उरुक्रमः, उरुगायः, कञ्जनाभः, केशवः, गरुडध्वजः, गोविन्दः, चक्रधरः, चक्रायुधः, जगत्पतिः, जगद्गुरुः, जगद्गुरुतमः, जगदीशिता, जगदेकगुरुः, जगदेकसुन्दरः, जगन्नाथः,

जगन्निवासः, जनार्दनः, दुर्धरबलः, देवः, देवकीनन्दनः, देवपतिः, देवाधिपतिः, दैवतपतिः, नन्दजः, नन्दसूनुः, नारायणः, पद्मलोचनः, पयोब्धिमन्दिरः, परः, परमात्मा, परेशः, परमेशः, परमेश्वरः, पक्षिवाहनः, पुरुषोत्तमः, प्रभुः, भगवान्, माधवः, मुकुन्दः, मुरवैरी, यदुपतिः, यदुप्रवीरः, यदूत्तमः, यदूनामृषभः, यादवेशः, रथाङ्गी, रमेशः, रमाधिपतिः, रमापतिः, रमेशिता, राजीवसमाननेत्रः, वरचक्रधरः, वायुवाहनः, वासुदेवः, विश्वेशः, विष्णुः, शार्ङ्गी, श्रियःपतिः, श्रीपतिः, शौरिः, सर्वजगदादिगुरुः, सात्वतेशः, सुरपतिः, हरिः) ।

**केकयाः पञ्च** । कुन्तीस्वसुः पृथुकीर्तेस्तनयाः । पञ्च विश्वेदेवाः । कृष्णेऽत्यन्तं भक्ताः ।

**केतुमान्** । दुर्योधनपक्षगः कलिङ्गदेशीयो राजा ।

**केशी** । अश्वरूपी कंसभृत्यः । गिरिजावरगुप्तो राक्षसः ।

**कैटभः** । नारायणकर्णाज्जातोऽसुरः । नारायणेन हतः ।

**कैशिकः** । पावकाग्नेरवतारभूतः । भीष्मकानुजः ।

**कोटिकाश्यः** । कश्चिद् राजा । जयद्रथस्य मित्रम् ।

**कोसलः** । कंसभृत्यो मल्लः ।

**कौशिकः** । कश्चिद् ब्राह्मणः । धर्मव्याधेनोपदिष्टः ।

**क्रथः** । भीष्मकानुजः । पवमानाह्वयाग्नेरवतारभूतः ।

**गङ्गा** । वरुणपत्नी । शन्तनुपत्नी । भीष्मजननी ।

**गदः** । कृष्णानुजः । रोहिणीतनयः । चण्डकनाम-हरिसेवकस्यावतारभूतः ।

**गर्गः** । यादवानां पुरोहितः । कालयवनपिता ।

**गवल्गणः** । सूतः । सञ्जयस्य पिता ।

**गान्धारी** । गान्धारराजस्य सुबलस्य पुत्री । धृतराष्ट्रपत्नी । शकुनिभगिनी । दुर्योदनादीनां माता ।

**गोपिकाः** । व्रतैर्भगवन्तं प्राप्य नारायणाख्यपुत्राणां मातरोऽप्सरसः ।

**घटोत्कचः** । निरृतेरवतारः । शिवावेशयुतः । भीमपुत्रः । (भैमसेनिः, हैडिम्बिः) ।

**घण्टाकर्णः** । स्वरूपतः कृष्णभक्तः पिशाचः ।

**घृताची** । शुकाचार्यस्यावतारहेतुभूता अप्सराः ।

**चाणूरः** । कंसभृत्यो मल्लः ।

**चारुदेष्णः** । कृष्णाद् रुग्मिण्यां जातः । विघ्नेशावतारः ।

**चार्वाकः** । दुर्योधनसखा । यतिरूपो राक्षसः ।

**चित्रः** । द्रुपदपुत्रः ।

**चित्रकेतुः** । द्रुपदपुत्रः ।

**चित्ररथः** । गन्धर्वराजः ।

**चित्रलेखा** । बाणात्मजाया उषायाः सखी ।

**चित्रसेनः** । धृतराष्ट्रपुत्रः । रामावतारे खरासुरः ।

**चित्रसेनः** । गन्धर्वः । अर्जुनस्य गान्धर्वविद्या-शिक्षकः ।

**चित्राङ्गदः** । कश्चिद्गन्धर्वः ।

**चित्राङ्गदा** । पाण्डच्यपुत्री । अर्जुनपत्नी । बभ्रुवाहन-माता । शच्यात्मिका ।

**चुमुः** । शिववरयुक्तो दैत्यः । कृष्णभग्नेऽर्जुनवृक्षे स्थितः ।

**चेकितानः** । यादवः । प्रतिभाख्यमरुदवतारः ।

**जटासुरः** । ब्राह्मणवेषधारी राक्षसः ।

**जयत्सेनः** । दुर्योधनपक्षीयो मगधराजः । जरासन्ध-तनयः । सहदेवानुजः ।

**जनार्दनः** । हंसडिभकयोर्दूतः । कृष्णभक्तो विप्रः ।

**जयः** । दुर्योधनामात्यः ।

**जयन्तः** । इन्द्रसुतः ।

**जरा** । नारायणे विहितापराधेन व्याधतां गतो भृगुमुनिः ।

**जाम्बवान्** । ऋक्षराजः । कृष्णाय स्वतनयां रोहिणीं (जाम्बवतीं) ददौ ।

**जरा** । जरासन्धमाता । नरभक्षकी राक्षसी ।

**ज्वरः** । विष्णुभृत्यः ।

**ज्वरः** । शिवभृत्यः ।

**जैमिनिः** । व्यासशिष्यः । सामवेदप्रवर्तकः । कर्ममीमांसाकर्ता ।

**डिभकः** । साल्वराजस्य ब्रह्मदत्तस्य पुत्रः । हंसा-नुजः ।

**तिलोत्तमा** । अप्सराः ।

**त्रिवक्रा** । कंससैरन्ध्री । पूर्वजन्मनि पिङ्गळा नाम वेश्या बभूव । सम्प्रति कुब्जा कृष्णेन सुन्दरी भूत्वा विशोकं नाम तनयं कृष्णाल्लेभे ।

**दण्डधारः** । दुर्योधनपक्षीयो योद्धा ।

**दन्तवक्रः** । करूशनृपः । कुन्तीस्वसरि पृथुदेवायां जातः । विडूरथाग्रजः । पूर्वजन्मनि हिरण्याक्षः ।

**दमघोषः** । शिशुपालपिता । दनुगन्धर्वावतारः ।

**दशार्णाधिपतिः** । शिखण्डिश्वशुरः । हिरण्यवर्म-नामा ।

**दारुकः** । विष्णुधामगो नारायणभृत्यः । कृष्ण-सारथिः ।

**दाल्भ्यः** । कृष्णभक्तो मुनिः ।

**दाशराजः** । सत्यवत्याः पालकः पिता ।

**दुर्गा** । नन्दाद् यशोदायां जाता । अचिरं तिरो-हिता । ततोऽज्ञाता कंसस्य, एकानङ्गेति नाम्ना गोकुले ववृधे ।

**दुर्मर्षणः** । दुर्योधनानुजेष्वेकः ।

**दुर्मुखः** । दुर्योधनानुजेष्वेकः ।

**दुःशळा** । दुर्योधनादीनां शतभ्रातॄणामवरजा । मृषाभिमानिनी । कुहूमानिन्या देवतयाऽविष्टा ।

**दुःशासनः** । सुयोधनानुजः । पूर्वजन्मनि इन्द्रजित् । (दुःखशासनः, पापपूरुषोत्तमः, सुयोधनानुजः, दुर्योधनानन्तरजः) ।

**देवकः** । गन्धर्वमुनेरवतारभूतः । आहुकपुत्रः । देवकीजनकः ।

**देवकी** । देवकस्य पुत्री । आहुकदत्तपुत्री । कृष्ण-जननी ।

**देवकी** । शिशुपालपुत्री । धर्मराजपत्नी ।

**देवयानी** । शुक्रतनया । ययातिपत्नी ।

**देवापिः** । प्रतीपतनयः । शन्तनुभ्राता । त्वग्दोष-युक्तः ।

**देवी** । वसुदेवाद् रोहिण्यां जाता भीमसेनपत्नी । राकामानिनी देवता ।

**दौःशासनिः** । दुःशासनतनयः । रामावतारे रावणतनयः सुरान्तकः ।

**द्यौः** । वसुष्वष्टमः । प्रभास इति यस्य नामान्तरम् । वस्तुरिति च । ब्रह्मशापाद् भूमौ जातः ।

**द्रमिळः** । गन्धर्वजः असुरः । यद्वीर्येणोग्रसेनभार्यायां कंसो जातः ।

**द्रुपदः** । हहूगन्धर्वावतारभूतः । आवहमरुताऽऽ-विष्टः । पाञ्चालानां राजा । द्रौपदीजनकः । (पाञ्चालः, पाञ्चालभूपतिः, पाञ्चालराजः, पार्षतः, सोमकानां राजा) ।

**द्रोणः** । बृहस्पतेरवतारभूतः । कृपीभर्ता । अश्वत्थाम्नः पिता । (गुरुः, पृथिवीपतीनामाचार्यः, भरद्वाज-तनयः, भारद्वाजः, विप्रवरः, सुरपूज्यपौत्रः) ।

**द्रोणः** । अष्टवसुषु प्रथमः । नारायणं तपसाऽऽराध्य पितृत्वं वरं वव्रे । तेन नन्दगोपो बभूव ।

**द्रौपदी** । पार्वत्या शच्या श्यामळयोषसा च युता भारती । द्रुपदतनया । पाण्डवानां भार्या । (कृष्णा, द्रुपदात्मजा, पाञ्चालराजसुता, पाञ्चाली, पार्षतात्मजा, पार्षती, पृषतात्मजपुत्रिका, वेदिभवा, सोमकात्मजा) ।

**धरा** । द्रोणवसोर्भार्या । या यशोदा बभूव ।

**धर्मराजः** । युधिष्ठिरापरनामा । यमात्मा । पूर्वेन्द्रः । पाण्डवेषु ज्येष्ठः । यमात् कुन्त्यां जातः । (कौन्तेयः, धर्मजः, धर्मतनयः, धर्मनन्दनः, धर्मसुतः, धर्मसूनुः, धर्मात्मजः, धार्मः, यमसूनुः, युधिष्ठिरः, वृषस्य सुतः) ।

**धुनिः** । शिववरयुक्तो दैत्यः । कृष्णभग्नेऽर्जुनवृक्षे स्थितः ।

**धुन्धुः** । मधुदैत्यपुत्रः । कुवलाश्वगेन हरिणा हतः ।

**धृतराष्ट्रः** । धृतराष्ट्रनामकगन्धर्वावतारः । व्यासा-दम्बिकायां जातः । (आम्बिकेयः, विचित्र-वीर्यजः, विचित्रवीर्यपुत्रः, विचित्रवीर्यसुतः, वैचित्रवीर्यः) ।

**धृष्टकेतुः** । शिशुपालतनयः । देवक्या अग्रजः । अनुह्लादात्मा । सवितृदेवांशयुक्तः ।

**धृष्टद्युम्नः** । अग्नेरवतारभूतः । द्रुपदपुत्रः । पाण्डव-सेनानीः । (द्रुपदात्मजः, द्रौपदिः, पाञ्चाल्यः, पारावताश्वः, पार्षतः, वाहिनीपतिः, सेनापतिः, हुताशनांशः) ।

**धेनुकः** । गर्दभरूपी गणेशवरगुप्तो दैत्यः ।

**धौम्यः** । पाण्डवानां पुरोहितः ।

**ध्रुवः** । कर्णानुजः ।

**नकुलः** । नासत्याख्याश्विदेवान्माद्र्यां जातः । वायुनाऽविष्टः ।

**नग्नजित्** । कृष्णस्य षण्महिषीष्वेकाया नीळायाः पिता राजा ।

**नन्दः** । द्रोणवसोरवतारभूतः । शूराद् वैश्यायां जातः ।

**नरकासुरः** । वराहाद् भूमिदेव्यां जातः । प्राग्ज्योतिषस्य राजा ।

**नळकूबर-मणिग्रीवौ** । कुबेरपुत्रौ नारदशप्तौ मुकुन्दमुक्तौ ।

**नहुषः** । आयोः पुत्रः । इन्द्रपदवीमधिष्ठाय मुनिशापादजगरो बभूव ।

**नारदः** । ब्रह्मपुत्रः देवमुनिः ।

**नारायणाः गोपाः** । देवगणावताराः कृष्णतनयाः ।

**निवातकवचाः** । कोटित्रयसङ्ख्या दैत्याः । ब्रह्मवरेणाऽवध्याः ।

**निषादी** । पुरोचनभगिनी । या जतुगृहे स्वपुत्रैः सह दग्धा ।

**निसुम्भः** । नरकासुरामात्येष्वेकः ।

**नीला** । कृष्णस्य प्रथमभार्या कुम्भकतनया । द्वितीयरूपेण नग्नजित्तनया ।

**पराशरः** । वसिष्ठपौत्रः । शक्तेस्तनयः । वेदव्यासपिता ।

**पक्षिणः** । जरितर्यादयश्चत्वारः पक्षिरूपा ऋषयो मन्त्रद्रष्टारः ।

**पाण्डुः** । परावहमरुदात्मा ।

**पारीक्षितः** । परीक्षित्तनयो जनमेजयः ।

**पार्वती** । नकुलभार्या । पूर्वं तिलोत्तमा ।

**पीठः** । नरकासुरामात्येष्वेकः ।

**पुरुजित्** । कुन्तिभोजतनयः । कुन्तीभ्राता ।

**पुरुमित्रः** । दुर्योधनामात्यः ।

**पुरूरवाः** । चन्द्राज्जातस्य बुधस्य पुत्रः । चन्द्रवंशप्रवर्तकः प्रथमो राजा ।

**पुरोचनः** । दुर्योधनमन्त्री । रामावतारे प्रहस्तः ।

**पूतना** । पूर्वं ताटका । ऊर्वश्यधिष्ठिता ।

**पृषतः** । पाञ्चालराजः । द्रुपदपिता ।

**पैलः** । व्यासशिष्यः । ऋग्वेदप्रवर्तकः । देवमीमांसाया रचियिता । शेषाविष्टः ।

**पौण्ड्रकः** । काशिराजकुमार्यां वसुदेवाज्जातः । मूलरूपे वेनासुरः ।

**प्रतिविन्ध्यः** । युधिष्ठिराद् द्रौपद्यां जातः । विश्वेदेवेष्वन्यतमः । चित्ररथगन्धर्वेणाविष्टः ।

**प्रतीपः** । कुरूणां राजा । शन्तनुपिता ।

**प्रद्युम्नः** । कृष्णपुत्रः । रुग्मिण्यां जातः । शम्बरान्तकः । (कार्ष्णिः) ।

**प्रलम्बः** । कंसभृत्यः दैत्यः । स्कन्दवरगुप्तः ।

**प्रसेनः** । सत्रजितोऽवरजो यादवः ।

**बकः** । रामावतारकालेऽपि स्थितः कश्चन दैत्यः । रामभीत्या पलायित एकचक्रानगरे आसीत् ।

**बकः** । बकरूपी कंसभृत्यो दैत्यः ।

**बभ्रुवाहनः** । अर्जुनाच्चित्राङ्गदायां जातः । जयन्तात्मा । कामदेवांशयुक्तः ।

**बलरामः** । शेषावतारभूतः । सङ्कर्षणाख्येन भगवद्रूपेणाऽविष्टः । वसुदेवाद् रोहिण्यां जातः । (बलः, बलदेवः, बलभद्रः, मुसलायुधः, रामः, रोहिणीसुतः, रौहिणेयः, सङ्कर्षणः, हलायुधः, हली) ।

**बलिः** । बलिनामा राक्षसः । यस्यावेशाद् विष्णुभक्तोऽपि बलिर्विष्णुप्रतीपो जातः ।

**बाणः** । असुरः । यस्याऽवेशादुषाजनको बाणः विष्णुप्रतीपो जातः ।

**बाह्लीकः** । प्रह्लादात्मा । वाय्वाविष्टः । प्रतीपतनयः । शन्तनुभ्राता ।

**बुधः** । चन्द्रपुत्रः ।

**बृहद्बलः** । शकुनिभ्राता ।

**ब्रह्मदत्तः** । सौभसाल्वपिता । अम्बयाऽभिकामितः । युयुधानेन हतः ।

**भगदत्तः** । कुबेरावतारभूतः । नरकासुरपुत्रः । अर्जुनेन हतः ।

**भद्रा** । कृष्णस्य षण्महिषीष्वेका ।

**भरतः** । पूरुवंशीयो राजा । दुष्यन्ततनयश्चक्रवर्ती । येन पूरुवंशो भरतवंश इति ख्यातो बभूव ।

**भरद्वाजः** । बृहस्पतिसुतः । द्रोणतातः ।

**भानुः** । कृष्णात् सत्यभामायामुत्पन्नः । सवितुरवतारः ।

**भीमसेनः** । कुन्त्यां वायोर्जातः । वायोरवतारभूतः पाण्डुतनयः । (अनिलस्य सुतः, कुरुप्रवीरः, जगदीरणात्मजः, पवनजः, पवनात्मजः, पवमानजातः, पवमानसुतः, पवमानसूनुः, प्रधानमारुतात्मजः, भीमः, मरुत्सुतः, मरुदात्मजः, मारुतः, मारुतसूनुः, मारुतात्मजः, मारुतिः, राजावरजः वायुजः, वायुतनयः, वायुसुतः, वायुसूनुः, वृकोदरः) ।

**भीष्मः** । शन्तनुगङ्गातनयः । द्युवसोरवतारः । (आपगासुतः, गाङ्गेयः, देवव्रतः, द्युसरित्सुतः, नदीजः, नदीसुतः, सरिदात्मजः, सुरापगासुतः) ।

**भीष्मकः** । मित्रावतारः । राह्वंशयुतः । रुग्मिणीजनकः ।

**भूः** । पञ्चभूतावरा भूमिः । तस्यां भूरूपायाः श्रिय आवेशः । नरकासुरस्य माता ।

**भूरिः** । अजैकपदोऽवतारः । सोमदत्तस्य तनयः । भूरिश्रवसोऽग्रजः ।

**भूरिश्रवाः** । अहिर्बुध्निः । रुद्रावेशविशेषवान् । भूरेरनुजः सोमदत्ततनयः ।

**भृगुः** । कर्मयोगप्रवर्तकः । ब्रह्मणः पुत्रः महर्षिः ।

**भौवनः** । विश्वकर्मा देवशिल्पी ।

**मणिमान्** । रुद्रवरगुप्तः दैत्यः । कुबेरभृत्यः । क्रोधवशदैत्यानां नेता ।

**मत्स्यराजः** । वसोस्सुतः । मत्स्यदेशपतिर्विराटः ।

**मधुः** । नारायणकर्णजातोऽसुरः । हयग्रीवरूपेण हरिणा हतः ।

**मरुत्तः** । राजर्षिरश्वमेधयष्टा ।

**मल्लकः** । जीमूतनामा मल्लः । शिववरादवध्यः । भीमेन हतः ।

**महाभिषक्** । वरुणांशसम्भवो राजा । योऽनन्तर-जन्मनि शन्तनुर्बभूव ।

**महोदरः** । शिवभृत्यः भूतकः ।

**मातलिः** । इन्द्रसारथिः ।

**माद्री** । पाण्डोर्द्वितीया भार्या । यमयोः सवित्री । मद्रराजस्यर्तायनस्य तनया । शल्यानुजा ।

**मार्कण्डेयः** । कल्पान्तरजीवी ऋषिः । पाण्डवानां पुराणकथावादी ।

**माळवराजः** । इन्द्रवर्मा । दुर्योधनपक्षीयो राजा ।

**माषः** । कश्चिन्नरभक्षको राक्षसः । यन्नाळेन जरासन्धो भेरीः कारयामास ।

**मित्रविन्दा** । विन्दानुविन्दयोर्भगिनी । कृष्ण-पत्नी । वसुदेवभगिन्याः राजाधिदेव्याः सुता ।

**मुचुकुन्दः** । यवनाश्वपुत्रः । देवदत्तवरेण लब्ध-निद्रः । कालयवनहन्ता ।

**मुरः** । नरकासुरामात्येष्वेकः ।

**मुष्टिकः** । कंसभृत्यो मल्लः ।

**मूकः** । वराहरूपो दैत्यः । अर्जुनतपोभङ्गायाऽ-गतः । तद्बाणनिहतश्च ।

**मैत्रेयः** । मुनिः । दुर्योधनस्य शापदाता ।

**यमुना** । सूर्यसुता । नद्यभिमानिनी । यमस्वसा ।

**ययातिः** । नहुषतनयः । यदुप्रमुखानां पञ्चानां पिता ।

**यशोदा** । वसुपत्न्या धराया अवतारः । नन्दस्य गृहिणी ।

**याजोपयाजौ** । तपस्विनौ भ्रातरौ । अनयोर्याजकत्वे द्रौपदी वेदिमध्यादुद्गता ।

**यावनः** । कालयवनस्य पोषकः राजा ।

**युधामन्युः** । द्रुपदपुत्रः । धातृनामकेनाऽदित्येना-ऽविष्टः ।

**युयुत्सुः** । निरृथनामकदेवावतारः । नासिक्यवायो-रावेशयुक्तः । धृतराष्ट्राद् वैश्यकन्यकासम्भूतः ।

**युयुधानः** । कृष्णपक्षमानिदेवस्यावतारभूतः । गरुडस्य संवहनाम्नो मरुतः चक्रस्य च आवेशयुक्तः ।

**रजकः** । कंसभृत्योऽसुरः ।

**राधा** । अधिरथपत्नी । कर्णस्य धात्री ।

**राहुः** । सिंहिकापुत्रः । अमृतमथने भगवता कृत्तशिरा ग्रहत्वमाप ।

**रुग्मवती** । रुग्मिपुत्री । प्रद्युम्नस्य भार्या । अनिरुद्धस्य माता । मूलरूपेऽपि प्रद्युम्नजाया रतिः ।

**रुग्मी** । भीष्मकपुत्रः । रुग्मिण्यग्रजः । शुचि-नाम्नोऽग्नेरंशयुक्तः । इल्वलदैत्यात्मा ।

**रुग्मिणी** । श्रियोऽवतारः । भैष्मी । कृष्णपत्नी ।

**रैवतः** । बलभद्रश्वशुरः । कृतयुगस्थो राजा ।

**रैवती** । बलभद्रपत्नी । वारुण्या अवतारः ।

**रोमहर्षणः** । व्यासशिष्यः । कामदेवाविष्टः । पञ्चरात्रपुराणादिप्रवर्तकः ।

**रोहिणी** । जाम्बवतः पुत्री । कृष्णस्य षण्महिषीष्वन्यतमा मुख्या च । साम्बमाता ।

**रोहिणी** । वसुदेवपत्नी । बाह्लीकपुत्री । बलभद्रमाता ।

**लक्षणः** । दुर्योधनपुत्रः । पूर्वजन्मनि रावणतनयोऽक्षनामा ।

**लक्षणा** । कृष्णपत्नी । मद्रराजसुता ।

**लक्षणा** । दुर्योधनपुत्री । साम्बस्य भार्या । षण्मुखपत्न्या अवतारः ।

**लोमशः** । पाण्डवानां तीर्थाटने सहायको मुनिः ।

**वक्रः** । ब्रह्मवरगुप्तः दैत्यः ।

**वज्रः** । अनिरुद्धसुतः ।

**वत्सासुरः** । वत्सरूपी दैत्यः । कृष्णेन हतः ।

**वराङ्गी** । द्युवसोः पत्नी । याऽम्बा बभूव ।

**वराङ्गी** । द्युवसुवल्लभायाः मानुषी सखी । सुविन्दपत्नी ।

**वसुः** । उपरिचरवसुः । तत्तनया मत्स्यगर्भजा सत्यवती ।

**वसुदेवः** । शौरिः । काश्यपात्मा । गोधनाढ्यः । कृष्णबलरामयोः पिता ।

**वारुणी** । शेषपत्नी ।

**वासुकिः** । काद्रवेयो नागः । काश्यपजः ।

**वासुदेव्यः** । विंशतिर्वसुदेवपुत्र्यः । भीमपत्न्यः ।

**विकर्णः** । धृतराष्ट्रतनयः । पूर्वजन्मनि रावणपुत्रोऽतिकायः ।

**विचक्रः** । ब्रह्मवरगुप्तः हंसभृत्यो राक्षसः ।

**विडूरथः** । दन्तवक्रानुजोऽसुरः । कृष्णेन हतः ।

**विदुरः** । व्यासनियोगतो दास्यां जातः । यमावतारः । माण्डव्यशापाच्छूद्रत्वेन सम्भूतः ।

**विन्दानुविन्दौ** । जरासन्धानुचरौ राजपुत्रौ । वसुदेवानुजाया राजाधिदेव्यास्तनयौ ।

**विपृथुः** । द्वारकानगररक्षकः । सौम्यनामकमरुदंशः ।

**विप्रचित्तिः** । ब्रह्मवरादजेयो दैत्यः । मुख्यप्राणेन हतः । यो जरासन्धो बभूव ।

**विराटः** । हहागन्धर्वावतारभूतः । विवहमरुतोंऽशंयुक्तः ।

**विरूपाक्षः** । रुद्रगणेष्वेकः ।

**विशोकः** । कृष्णसैरन्ध्र्योर्जातः । नारदशिष्यः । भीमस्य सारथिः । पञ्चरात्रवेत्ता ।

**वीरसेनः** । पाण्ड्यराजः । चित्राङ्गदापिता । त्वष्टुरंशः । यमावेशवान् ।

**वृषकः** । शकुनेरनुजः ।

**वृषपर्वा** । दानवः । शर्मिष्ठायाः पिता । ययातिश्वशुरः ।

**वृषभः** । इन्द्रसुतः । जयन्तानुजः ।

**वृषभासुराः** । सप्तसङ्ख्याका ब्रह्मवरबला वृषरूपा दैत्याः ।

**वेदव्यासः** । पराशरतनयः । भगवदवतारः । वेद-विभागकृत् । पुराणब्रह्मसूत्रमहाभारतकर्ता ।

**वैशम्पायनः** । ब्रह्माविष्टः । व्यासशिष्यः । यजुषां प्रवर्तकेष्वन्यतमः । मानुषेषु भारतप्रवर्तकः ।

**व्योमः** । मयपुत्रः । ब्रह्मवरगुप्तः दैत्यः ।

**शकटासुरः** । शकटरूपी कंसभृत्यो दैत्यः । शिववरगुप्तः ।

**शकुनिः** । द्वापरात्मा । दुर्योधनमातुलः ।

**शक्रदेवः** । सृगालवासुदेवपुत्रः । मणिभद्राख्यकुबेर-भृत्यात्मा ।

**शङ्खः** । विराटस्य सुतः ।

**शठः** । बलभद्रपुत्रः । अर्यमांशः ।

**शतधन्वा** । स्वरूपतो दैत्यः । सत्यभामापितु-र्हन्ता । यादवः ।

**शतानीकः** । नकुलात् द्रौपद्यां जातः । विश्वे-देवेष्वन्यतमः । गोपालाख्यगन्धर्वेणाविष्टः ।

**शन्तनुः** । वरुणांशः । ब्रह्मशापाद् भूमौ जातः । भीष्म-चित्राङ्गद-विचित्रवीर्यजनकः ।

**शम्बरः** । दैत्यः । प्रद्युम्नशत्रुः ।

**शरद्वान्** । कृपस्य जनकः । ऋषिः ।

**शर्मिष्ठा** । वृषपर्वतनया । ययातिपत्नी । पूरोर्माता ।

**शर्वत्रातः** । काळ्यां भीमाज्जातः । समान-वाय्वात्मा ।

**शलः** । रुद्रेषु विरूपक्षस्यांशः । सोमदत्ततनयः । भूरिश्रवसोऽनुजः ।

**शल्यः** । सह्लादावतारभूतः । माद्रीभ्राता ।

**शिखण्डिनी** । अम्बैव द्रुपदपुत्रीत्वेन जाता । तदनन्तरं तुम्बुरुसमाविष्टा शिखिण्डिव्यप-देशभाग्बभूव ।

**शिनिः** । सत्यकस्य पिता । सात्यकेः पितामहः ।

**शिशुपालः** । कुन्तीसोदर्याः पृथुश्रवसस्तनयः । कृष्णेऽत्यन्तं द्वेषी । जरासन्धप्रियः । धर्मराज-श्वशुरः । दमघोषसुतः ।

**शुकः** । रुद्रात्मा व्यासपुत्रः । वायुना समाविष्टः । गन्धर्वादिषु भारतप्रवर्तकः ।

**शुक्रः** । ग्रहाधिपः । दैत्यगुरुः ।

**शुद्धोदनः** । जिनापरनामा । त्रैपुराणां प्रथमः ।

**शैव्यः** । ऋभोरंशजः । पञ्चकेकयानां पिता । धृष्ट-केतुरिति चास्य नामान्तरम् ।

**श्रुतकीर्तिः** । द्रौपद्यामर्जुनेन जातः । विश्वेदे-वेष्वेकः । किशोरगन्धर्वेणाविष्टः ।

**श्रुतायुः** । दुर्योधनपक्षगो नृपः ।

**षण्मारीचाः** । पूर्वं मरीचितनयाः । देवकशापेन कालनेमिप्रसूताः । ततो देवक्यां जाताः कंसेन हताः ।

**सञ्जयः** । तुम्बुरोरवतारभूतः । उद्वहनामकमरुदा-वेशी । व्यासशिष्यः गवद्गणततनयो धृतराष्ट्र-सूतः ।

**सत्यकः** । शिनेः पुत्रः । युयुधानपिता ।

**सत्यजित्** । चित्रसेनावतारः । मित्रांशयुतः द्रुपद-पुत्रः ।

**सत्यभामा** । श्रियो द्वितीयं रूपम् ।

**सत्यवती** । वासवी । मत्स्यराजसोदरी । अच्छोदा नाम पितृपुत्रिका ।

**सत्यव्रतः** । दुर्योधनामात्यः ।

**सत्यसेनः** । कर्णपुत्रः ।

**सत्राजित्** । यादवः स्यमन्तकमणिमान् । सत्यभामा-पिता ।

**सनत्कुमारः** । कामावतारः । योगप्रवर्तकः ।

**सर्वोत्तुङ्गः** । भीमसेनपुत्रः । (अहं)प्राणवायोरव-तारः । भीमात् देव्यां जातः ।

**सहदेवः** । दस्राख्याश्विदेवान्माद्र्यां जातः । वायुनाऽविष्टः ।

**सहदेवः** । जरासन्धसुतः । कृष्णभक्तः ।

**सहदेवभगिनी** । जरासन्धतनया । माद्रेयस्य सहदेवस्य पत्नी ।

**सान्दीपनिः** । अवन्तिदेशजो विप्रः । कृष्णस्य गुरुः । गुरुदक्षिणाव्याजेन कृष्णेन मृतं पुत्रं लेभे ।

**साम्बः** । कृष्णतनयः । जाम्बवत्यां जातः । चतुर्मुखांशयुतः षण्मुखः ।

**साल्वः** । ब्रह्मदत्तस्य पुत्रः । यः पूर्वं बलिनामा असुरः । सौभविमानाधिपः । जरासन्धानुचरः । कृष्णेन हतः । परशुरामजितः ।

**सुतसोमः** । द्रौपद्यां भीमाज्जातः । विश्वेदेवेष्वन्य-तमः । अभिताम्रगन्धर्वेणाविष्टः ।

**सुदामा** । मालाकारः । विष्णुधाम्न्यपि माला-कारः ।

**सुदेष्णा** । कीचकभगिनी । विराटपत्नी ।

**सुनन्दादयः** । विष्णुपार्षदाः तृणावहविप्रस्य तनयत्वेन जाताः ।

**सुनीथः** । कंसानुजः दैत्यः ।

**सुन्दोपसुन्दौ** । दैत्यौ । ताटकाभर्तारौ । मारीचस्य सुबाहोश्च जनकौ ।

**सुभद्रा** । वसुदेवदेवक्योः पुत्री । रोहिण्या पालिता । रामायणे त्रिजटा । उमावेशवती ।

**सुमन्तुः** । व्यासशिष्यः । वरुणपुत्रः । गरुडा-विष्टः । अथर्ववेदप्रवर्तकः ।

**सुयोधनः** । ज्येष्ठः धृतराष्ट्रतनयः । कलेरवतारः । (दुर्योधनः, धृतराष्ट्रजः, धृतराष्ट्रपुत्रः, धृतराष्ट्रसूनुः, धार्तराष्ट्रः) ।

**सुरभिः** । काश्यपपत्नी ।

**सुविन्दः** । कलिङ्गराजः ।

**सुशर्मा** । त्रिगर्तराजः । संशप्तकानां नेता । कौरवपक्षगः ।

**सुषेणः** । कर्णपुत्रः ।

**सुहोत्रः** । युधिष्ठिराद् देवक्यां जातः । चित्रगुप्तात्मा ।

**सूर्यः** । दिनानामधिपः । यजुषां प्रवर्तकः ।

**सृगालः** । वसुदेवस्य पुत्रः करवीराधिपः । पूर्वजन्मनि धुन्धुः ।

**सैन्धवः** । जयद्रथः । कालकेयदानवावतारः ।

**सोमदत्तः** । बाह्लीकपुत्रः । रुद्रेष्वन्यतमस्य पत्रतापस्यावतारभूतः । भूरिश्रवसः पिता ।

**हयग्रीवः** । नरकासुरामात्येष्वेकः ।

**हरिश्चन्द्रः** । चक्रवर्ती । सत्यनिष्ठतया ख्यातः ।

**हस्तिपकः** । रुद्रवरदृप्तः असुरः । कुवलयापीडस्याऽधोरणः ।

**हिडिम्बः** । शिववरगुप्तः नरभक्षको राक्षसः । भीमेन हतः ।

**हिडिम्बा** । हिडिम्बस्वसा । भीमभार्या । घटोत्कचजननी । अप्सराः काचिच्छचीशापादेवं जाता । भारत्यावेशसंयुता । (हिडिम्बी) ।

**हेतिः** । राक्षसयोनिरपि सात्विकः । सूर्यरथचक्ररक्षः । वाय्वाविष्टः कीचकं पातयामास ।

**हंसः** । ब्रह्मदत्तपुत्रः । डिभकभ्राता ।

**क्षेमधूर्तिः** । दुर्योधनपक्षीयो राजा ।

—०—

# नाममीमांसा–३

**(तात्पर्यनिर्णयोदाहृतानां क्षेत्रनदीपर्वतानामनुक्रमणी)**

**अङ्गाः** । अङ्गराजनिर्मितो देशः । सम्प्रति 'भागल्पुर' इति प्रथितो देशभाग इति वदन्ति । (अङ्गराज्यम्)।

**अयोध्या** । सरयूतीरगता कोसलराजधानी । श्रीरामजन्मभूमिः ।

**आनर्तराष्ट्रम्** । यादवानां वासभूमिः । सम्प्रति 'गुजराथ्' इति व्यपदिश्यमानो गुर्जरदेशः ।

**इन्द्रकीलकः** । कश्चित्पर्वतः । यत्रार्जुनः शिवं प्रति तपश्चक्रे ।

**उपप्लाव्यम्** । विराटराजधान्या उपनगरम् ।

**ऋश्यमूकः** । पर्वतभेदः । यत्र वालिभयात् सुग्रीव उवास । तुङ्गभद्रातीरे 'आनेगुन्दी' समीपे वर्तमानोऽयं गिरिरिति वदन्ति ।

**एकचक्रा** । एका पुरी यत्र बको वसतिं चक्रे ।

**कन्यातीर्थम्** । दक्षिणसमुद्रतीरस्थं क्षेत्रम् । सम्प्रति 'कन्याकुमारी' इति प्रथितम् ।

**कपिराज्यम्** । किष्किन्धा । कर्णाटके तुङ्गभद्रातीरे 'हम्पि' इति प्रथितं क्षेत्रमेतदिति वदन्ति ।

**करवीराख्यम्** । महालक्ष्मीसन्निधानपात्रं क्षेत्रम् । सम्प्रति 'कोल्लापुर' इति प्रथितम् ।

**कलिङ्गदेशः** । दुर्योधनश्वशुरस्य सुवज्रस्य राजधानी । आन्ध्रप्रान्तस्य राजमन्द्री, विशाखपट्टनम्, गञ्जाम्, तथा 'ओडिस्सा' प्रान्ते कश्चन भागश्चेति वदन्ति ।

**किम्पुरुषाः** । हिमालयादुत्तरस्यां दिशि वर्तमानः भूखण्डः । यत्र हनुमान् राज्यं चकार ।

**कुण्डिनं पुरम्** । विदर्भदेशस्य राजधानी । यत्र रुग्मिणीपिता भीष्मको राज्यं चकार ।

**कुरवः** । कुरूणां जनपदः । यस्य राजधानी हस्तिनपुरम् ।

**कुरुक्षेत्रम्** । कुरुनाम्ना राज्ञा निर्मितम् । सरस्वती-दृषद्वत्योर्मध्यगो भूभागः । यत्र प्रवृत्तं महाभारत-युद्धम् ।

**कुशस्थली** । द्वारकायाः प्रतनं नाम । समुद्रमध्ये कृष्ण-निर्मितं पुरम् । अधिकं द्वारकाशब्दे द्रष्टव्यम् ।

**कृष्णा** । यमुना नदी । विशेषांशः यमुनाशब्दे ।

**केदारः** । हिमालये प्रसिद्धं शिवस्थानम् । अत्र स्वदर्शनाय वेदविद्भिर्नाऽगन्तव्यमिति शिवशाप-ग्रस्तं क्षेत्रम् ।

**कैलासः** । हिमालये रुद्रस्याऽवासभूतो गिरिः ।

**खाण्डवम्** । कुरुक्षेत्रसमीपे विद्यमानं वनम् । यदर्जुनो ददाह ।

**गङ्गा** । श्रुतिप्रथिता स्वर्गाद् गां गता नदी । हरिपादोदकमिति शिरसि धृता । (विष्णुपदी । हरेः पदाम्भोजसुपावितं जलम् ।)

**गन्धमादनः** । हिमालयस्य भागभूतः पर्वतः, बदरीत ऐशानीं दिशमभि वर्तमानः ।

**गयाख्यं क्षेत्रम्** । प्रसिद्धं क्षेत्रम् ।

**गोकुलम्** । कृष्णस्य बाल्यविहारस्थानम् । नन्दादि-गोपानामावासः । (गोष्ठम्, गोष्ठमण्डलम्, वृन्दा-वनम्, व्रजः, व्रजभूः, व्रजोद्देशः)

**गोमती** । अयोध्यापरिसरे प्रवहन्ती प्रसिद्धा नदी ।

**गोमन्तः** । गोवाप्रदेशे विद्यमानः सह्याद्रिभागः ।

**चित्रकूटः** । प्रयागसमीपस्थः पर्वतः । मन्दाकिनीनदी यत्समीपे प्रवहति । सम्प्रति प्रयागं 'अल्लहाबाद्' इति कथयन्ति ।

**चेदिविषयः** । शिशुपालाधिष्ठितो जनपदः । सम्प्रति 'बुन्देलखण्ड'स्य दक्षिणभागः, 'जबलपुर'स्य उत्तरभागश्च संहत्य चेदिविषयो भवति ।

**त्रिकूटः** । लङ्काप्राकाररूपो गिरिः ।

**दण्डकवनम्** । दण्डकाख्यस्य राज्ञो राज्यं शुक्रशापे-नारण्यमासीदिति तेनैव नाम्ना प्रथितमासीत् । दक्षिणभारते महान् भागो रामायणकालेऽरण्य-मेवाऽस । सम्प्रत्यपि दाक्षिणात्या विप्राः सन्ध्यां वन्दमानाः 'दण्डकारण्ये' इत्येव सङ्कल्पयन्ति ।

**द्वारका** । समुद्रमध्ये कृष्णनिर्मिता नगरी । (कुशस्थली, द्वारकापुरी, द्वारवती, द्वार्वती, यदुपुरी) ।

**धरित्र्याः श्रवणम्** । गोकर्णक्षेत्रम् । उत्तरकर्णाटके प्रथितं शिवक्षेत्रम् । दक्षिणोत्तरकर्णाटकयोः प्रथितेषु सप्तक्षेत्रेष्वेकम् ।

**नन्दिग्रामः** । अयोध्यानगरोपकण्ठे कश्चन ग्रामः । रामवनवासकाले यत्र भरत उवास ।

**निकुम्भिला** । लङ्काया रहस्यस्थानमुपवनम् ।

**निषधः** । हिमालयोत्तरभागस्थः कश्चन पर्वतः ।

**पाञ्चालनगरम्** । इन्द्रप्रस्थादपि पूर्वतः पाञ्चाला नाम जनपदः । तत्र द्रोणेनाऽहृतो भाग उत्तर-पञ्चालः । दक्षिणभागे द्रुपदस्य राजधानी । काम्पिल्यम् । तदेवात्र पाञ्चालनगरमित्युक्तम् । (पाञ्चालकं पुरम्) ।

**पाण्ड्याः** । द्रमिळानां जनपदः । 'तिरुनेल्वेलि' इति 'मदुरै' इति च प्रथितं नगरद्वयमत्रान्त-र्भूतम् । सम्प्रति 'तमिळुनाडु' इति व्याह्रियते ॥

**पिण्डोद्धारम्** । द्वारकोपकण्ठे विद्यमानं तीर्थ-क्षेत्रम् । यत् पिण्डारकमिति च प्रथितम् ।

**पुष्करम्** । पुण्यक्षेत्रम् । अजमीढपुरस्य (अजमीर) अभ्यर्णे विद्यमानं तीर्थस्थलम् । सम्प्रति 'पोख्रा' इति कथयन्ति । 'तोताद्रिः पुष्करं चैव नरनारायणाश्रमम्' इति विष्णोः स्वयंव्यक्तं क्षेत्रमिति प्रथितम् ।

**प्रभासः** । गुर्जर(गुजराथ्)प्रान्ते प्रसिद्धं सोमनाथक्षेत्रम् ।

**प्राग्ज्योतिषम्** । 'असाम्' इति प्रथितस्य राज्यस्य राजधानी । यत्र राजा नरकासुर आस । सम्प्रति कामरूपमिति व्यवह्रियते ।

**बदरिकाश्रमम्** । हैमवते तटान्तरे विद्यमानं मुनिभिर्जुष्टमाश्रमम् । मनुष्यागम्ये यत्र भगवान् व्यासो वसति । इयं केवलं बदरीति चोच्यते ।

**बदरी** । अलकनन्दातीरे बदरीनाथक्षेत्रम् । इदमपि बदर्याश्रममिति कथ्यते ।

**बाणस्य पुरम्** । बलिपुत्रस्य बाणासुरस्य राजधानी ।

**बाह्लीकाः** । केकयदेशादैशान्यां विद्यमानो जनपदः । विपाशा(ब्यास्)- शतद्रू-(सतूलेज्)नदीभ्यां परिवृतो देशभागः । सम्प्रति 'पञ्जाब्' इति कथ्यते ।

**बृहद्वनम्** । मधुरानिकटे यमुनातीरगो वनोद्देशः । यत्र कञ्चित् कालं नन्द उवास । यतो वृन्दावनं ययौ ।

**भोजाः** । जनपदः । यादवानां वासस्थानम् । यं कंसः शशास । मधुरा यस्य राजधानी ।

**मणलूरम्** । अर्जुनश्वशुरस्य पाण्ड्यराजस्य वीरसेनस्य राजधानी । अत्रैवार्जुनस्य बभ्रुवाहनेन सह युद्धमासीत् । प्राय इदानीन्तनं 'मदुरै' पत्तनम् । 'मणिपुरम्' इति भ्रान्तिमूल औत्तरः पाठः ।

**मद्राः** । जनपदः । इदानीन्तनस्य 'पञ्जाब्' प्रान्तस्य पश्चिमो भागः । यतः पूर्वस्यां दिशि केकयाः । पश्चिमायां बाह्लीकाः ।

**मधुरा** । भोजानां राजधानी । पुरा शत्रुघ्नेन मधुनामानमसुरं हत्वा निर्मितं पुरम् । कृष्णावतारकाले यत्र कंसः शशास । श्रीकृष्णजन्मभूमिः ।

**मन्दरः** । समुद्रमथने मन्थानभूतः पर्वतः ।

**महेन्द्राद्रिः** । कुलपर्वतः । यतो हनुमान् लङ्कां पपात । 'गञ्जाम् जिल्ला' विभागगतोऽयं पूर्वघट्ट इत्याहुः ।

**मागधाः** । जनपदः । मगधा इति च । यं जरासन्धः शशास । अधुना 'बिहार्' इति प्रथितं राज्यम् ॥

**मानसोत्तरशैलाः** । मानससरोवरादप्युत्तरस्यां दिशि हिमालयस्य देवगम्यो भागविशेषः ।

**मेरुः** । सुवर्णाद्रिः । प्रायो हिमालयस्यैवापरो भागः । यत्र भगवतो व्यासस्याऽश्रमान्तरम् ।

**यमुना** । श्रुतिप्रसिद्धा नदी । यस्याः कूले विजहार कृष्णो गोपैर्गोपीभिश्च सह । यमसोदरी सूर्यपुत्रीति पुराणप्रथिता । अस्या द्वीप एव भगवान् द्वैपायनोऽवततार । (मार्ताण्डसुता, यमसोदरवारि, यमस्य भगिनी, यमस्वसा) ।

**रैवतकः** । द्वारकासमीपस्थः पर्वतः । यादवानां विहारभूमिः । सोमनाथक्षेत्रादुत्तरस्यां दिशि सम्प्रति 'गिर्नार्' इति ख्यातो गिरिः । यत्र मैन्दविविदौ जघान बलरामः । (रैवतपर्वतः) ।

**लङ्का** । रावणराज्यम् । कृष्णावतारकाले विभीषणेनाधिष्ठिता । अधुना 'सिलोन्' इति ख्यातो देश एवेयं लङ्केति वदन्ति । सन्दिग्धमेतत् प्रमेयम् । विभीषणाधिष्ठिताऽदृश्यभूमिरिति प्रतनाः ।

**वारणवतम्** । हस्तिनपुरनिकटगतं नगरम् । इदानीं 'मेरठ्' नगरात् पश्चिमायां दिशि 'बर्नाव' इति व्यवह्रियमाणम् । वारणावतमिति बहुलः प्रयोगः । यत्र दुर्योधनेन पाण्डवान् दग्धुं जतुगृहं निरमायि ।

**वारणसी** । काशीति प्रथितं विश्वनाथक्षेत्रम् ।

**विदर्भकाः** । जनपदः । यं रुग्मिणीजनको भीष्मकः शशास । विन्ध्यस्य दक्षिणतः सौराष्ट्रस्य पूर्वतः स्थितो देशभागः । यस्य दक्षिणकूले गोदावरी प्रवहति ।

**विदेहाः** । सीताजनकस्य सीरध्वजस्य राज्यम् । पूर्वतः कौशिकी नदी, पश्चिमतो गण्डकी, दक्षिणतो गङ्गा, उत्तरतो हिमालयश्च सीमानः । मध्ये विदेहराज्यम् । यत्र सम्प्रत्यपि जनकपुरीति नगरी पठ्यते ।

**विन्ध्यगिरिः** । भारतस्य दक्षिणोत्तरभागयोर्विभाजकः कुलपर्वतः ।

**व्याघ्रेश्वरम्** । हस्तिनपुरस्य सविधे विद्यमानं शिवक्षेत्रम् ।

**शक्रप्रस्थम्** । इन्द्रप्रस्थमिति पुराणप्रथितं धर्मराजनिर्मितं नगरम् । यमुनातीरे सम्प्रति 'दिल्ली' इति प्रथितं नगरम् । (इन्द्रवासम्, पुरन्दरकृतस्थलम्, पुरुहूतपुरी, शक्रपुरम्, शक्रसनामकम्)।

**शतशृङ्गपर्वतः** । बालभावे कुन्तीहस्तात् च्युतस्य भीमस्य पतनेन शतधा शीर्णं हिमालयस्यैकं शृङ्गम् । प्रायः पाण्डुकेश्वरे विद्यमानम् ।

**शार्दूललिङ्गम्** । गोमतीतीरगतं शिवक्षेत्रम् ।

**समन्तपञ्चकम्** । कुरुक्षेत्रस्य पुरातनं नाम । यत्र परशुरामेण समन्तात् पञ्च ह्रदा निर्मिताः ।

**सारस्वतं जलम्** । सरस्वती नदी ।

**सिद्धाश्रमम्** । मुनीनां तपोभूमिः । वामनावतारस्थानम् ।

**सुवर्णकूटः** । हेमकूटो नाम पर्वतः ।

**सौगन्धिकवनम्** । कुबेररक्षितं पुष्पोद्यानम् । प्रायः साम्प्रतिकं 'व्यालि आफ् फ्लवर्स्' इति प्रथितं हैमवतं तटान्तरम् ।

**हस्तिनपुरम्** । कुरूणां राजधानी । अर्वाचीनाः हस्तिनापुरमिति व्याहरन्ति । हस्तिनाम्ना राज्ञा निर्मितं पुरम् । 'मेरठ्'नगरादैशान्यां दिशि गङ्गातीरे स्थितम्, सम्प्रति गङ्गायां निमग्नम् । (नागाह्वयम् । गजाह्वयम् । गजनामपुरम् । नागपुरम् । गजसाह्वयम् ) ॥

**हिमाचलः** । देवतात्मा हिमालयो नाम पर्वतः । (शर्वश्वशुरः, शैशिरो गिरिः)

**हैमो गिरिः** । मैनाकपर्वतः । वायुना समुद्रे क्षिप्तः । हनुमत्सत्कारार्थं समुद्रादुद्गतः ॥

—०—




प्राचीनभारतस्य देशनामानि



भारतदेशगतानां नदीपर्वतानां पौराणानि नामानि

# श्लोकार्द्धानुक्रमणिका

[अत्र तन्त्रशास्त्रोदितो वर्णानुक्रमोऽनुसृतः । अतोऽत्र क्षकारोऽन्ते पठ्यते ।]

### अ

**आ**

ऐ



ओ



औ



क

**ख**



**ग**

छ



ज

## त

### ध

**फ**



**ब**

### ल

क्ष



—०—